— श्रीः —

महाकविश्रीहर्षविरचितम्

# नैषधचरितम् ।



( पूर्वार्धम् )

कलिकातास्थ-संस्कृतपाठशालाध्यापकवर वैकुण्ठवासी

प्रेमचन्द्रतर्कवागीश-भट्टाचार्यविरचितया

अन्वयबोधिकाटीकयासहितम् ।

---

एल० सि० इ० उपाधिधारिणा टीकाकर्तुः भ्रातुष्पुत्रेण

श्रीभवदेव चट्टोपाध्यायेन

प्रकाशितम् ।

---

वर्धमाननगरस्थ-विजयचतुष्पाठीविद्यालयस्य दर्शनशास्त्राध्यापकेन

श्रीरमेश चन्द्र काव्य-व्याकरण-सांख्य-वेदान्ततीर्थ महोदयेन

संकलितया टीप्पन्या सहितम् ।

( चतुर्थसंस्करणम् )

कलिकाता महानगरे २८नं वैठकखाना रोडस्थ भवने

श्रील श्रीयुक्त सुशील कुमार दास गुप्तेन

"सुलेखा"ख्य मुद्रण यन्त्रालये मुद्रितम् ।

शकः १८५३, १९३१ खृः अः ।

मूल्यं सार्द्धराजतमुद्रात्रयम्

# भूमिका ।

विदितमेतत् समेषां विदुषां,—परमपूजनीयमदीयज्येष्ठतातपादाः स्वर्गतश्रीमत्प्रेमचन्द्रतर्कवागीशमहोदयाः अन्वयबोधिकासमाख्यया टीकयान्वितं नैषधचरितस्य पूर्वार्द्धं १८३६ खी० वर्षे संमुद्राप्य प्रकाशमनैषुरिति । तदानीम् एतद्व्यतिरिक्तमुद्रितनैषधचरितस्याभावात् प्रथमसंस्करणमिदम् अल्पीयसैवानेऽसा निःशेषतामगमत् । ततश्च तदीयमध्यमपुत्रः अधुना परलोकगतः प्राणकृष्ण चट्टोपाध्यायमहोदयः अग्रजाधिकस्य कविवरहरिश्चन्द्रकविरत्नमहोदयस्य साहाय्येन द्वितीयवारं मुद्रापितमेतत् । तस्मिन्नपि संस्करणे निरवशेषतां गते सभवान् प्राणकृष्ण चट्टोपाध्यायमहोदयः तृतीयवारं संस्कर्त्तुमेतदुपक्रममाणः स्वस्य च राजपुरुषतया कर्मवशतो राजाज्ञया स्थानान्तरं गच्छन् उपक्रान्तमुद्रापणकार्यशेषं मयि न्यस्थत् । तस्यापि संस्करणस्य निरवशेषव्ययात् संस्कृताध्येतॄणाम् आग्रहातिशयदर्शनाच्चाहं चतुर्थसंस्करणस्य मुद्रापणाय प्रवृत्तोऽभवम् । ऊनविंश ६.मौख्यसमपुटकादारभ्य वर्धमानराजकीयविजयचतुष्पाठीविद्यालयस्य दर्शनशास्त्राध्यापकस्य विद्याभूषणविद्यावाचस्पतिशिरोमणिविरुदभूषितस्य श्रीमतो रमेशचन्द्रकाव्य-व्याकरण-सांख्य-वेदान्ततीर्थ-महोदयस्य साहाय्यलाभात् कार्यमिदं सुकरमभवत् । इतः कलिकाता नगरीतः दूरस्थेनापि तेन पण्डितप्रवरेण टीप्पन्याम् अलङ्कारादिविचारं सन्निवेश्य संशोध्य च लघीयसैव समयेन ग्रन्थस्यास्य मुद्रणकार्यसमाप्तिरनीयत ।

अधुना प्राकाश्यमासेभ्यो विविधटीकासनाथेभ्यः लिचतुरेभ्यो नैषधीयचरितेभ्यः अंशतः सारं समादाय क्वचित्क्वचित् अत्र मदीयज्येष्ठतातपादीयटीकायाः अधस्तात् संन्यवेशयम् । अतस्ते तत्तद्ग्रन्थप्रकाशकाः मे धन्यवादार्हाः खलु ।

कविकुलवरणीयस्य सकलतन्त्रस्वतन्त्रमतेः श्रीमतः श्रीहर्षस्याविर्भावकालस्य स्वजन्मना महितमहीभागस्य च निर्णयेऽस्ति बहुधा विप्रतिपत्तिः, अत्र मीमांसाकामेन मया अनुरुद्धा महामहोपाध्यायाः प्रत्नतत्त्वविदः श्रीमन्तोऽजवर हरप्रसाद शास्त्रि महोदयाः तदीयाविर्भावकालादीन् युक्त्या समुपपाद्य ग्रन्थस्यास्य मुखबन्धमेकं विरचय्या मामनुगृहीतवन्तः ।

अतीयुः कतिपये वत्सरा मया मदीयज्येष्ठतातपादप्रणीतटीकया सहितं राघवपाण्डवीयं मुद्रापितम्. अधुना तदीयटीकासहितं नैषधचरितमपि मुद्रापयित्वा प्राचीकशम् । अस्ति च मे महती इच्छा तदीयटीकयान्वितं काव्यादर्शमपि प्रकाशं नेष्यामीति । पुनरेषापि वर्त्तते मे मनसि महीयसी कामना,—यदेतेषां ग्रन्थानां विक्रयलब्धार्थतो ज्येष्ठतातपादीयस्मृतिरक्षायै प्रेमचन्द्रस्मृतिभाण्डारनामधेयः कश्चित् कोषः स्थाप्येत, तत्परिचालकाश्च तदर्थव्ययेन तदीयस्मृतिं रक्षेयुरितिशम् ।

विनीतः

श्रीभवदेव चट्टोपाध्यायः ।

वैकुण्ठवासी महामहोपाध्याय प्रेमचन्द्र-तर्कवागीश भट्टाचार्य विरचितम्

# गङ्गास्तोत्रम् ।

नमस्ते स्याद्गङ्गे द्रुहिणहरिरुद्रप्रभृतिभिर्नुते मातर्दीने मयि शरणहीने कुरु कृपाम् ।
शरण्ये विश्वेषां तव चरणपङ्केरुहमहं प्रपन्नः पाहीमं कृपणमतिभीमाद्भवदवात् ॥१

स्पृहाशून्या धन्या मखजफलभोगे त्रिपथगे कृताशेषक्लेशाः श्रवणमननादावविरतम् ।
लभन्ते यां सन्तस्तव तु सलिले मज्जनवतां करस्था सा मुक्तिः कलुषकलितानामपि नृणाम् ॥२

विधानं यज्ञानामभिदधति केचिच्छुभकरं परे निस्त्रैगुण्ये महसि परिणामं च मनसः ।
अहं त्वेकं मन्ये सकलजनसाधारणतया निदानं ते नीरं परमपुरुषार्थस्य न परम् ॥३

पतन्ती स्वर्लोकान्नयसि पतितानुच्चपदवीं जलध्यन्तर्यान्ती भवजलधिभीतिं शमयसि ।
गङ्गात्मापि व्यक्तं कलुषजड़तां नाशयसि तत् त्रिचिलं ते कृत्यं जननि जनमध्ये विजयते ॥४

किमापः किं तापत्रयशमनसिद्धौषधमिदं किमाधारो मुक्तेः किमु परमधाम्नः परिणतिः ।
विकल्पान् यानेव त्वयि जननि लोका विदधते समस्ताः सत्यास्ते तव महिमसीमा न सुगमा ॥५

विदूरेऽस्तु स्नानं न च सलिलपानं न यजनं नवा वासस्तीरे जननि सुरलोकादपि वरे ।
तथापि तन्नाम प्रसरति यदीयश्रुतिपथं स सद्यः शुद्धात्मा यमनृपतिधानीं न विशति ॥६

भवारण्ये मन्ये नहि भवति तेषां निवसतिनेव । भीतिर्भीमाकृतिकुपितकालोल्वणमुखात् ।
त्वमम्ब प्रोद्दामाखिलदुरितदाम्नां निरसने निशातासिर्यासि क्षणमपि यदीयेक्षणपथम् ॥७

सपर्यासम्भारैः सततमनुगानैर्मनुजपैरभीष्टं भक्तानां फलति सुचिरेणामरगणः ।
निमग्नाङ्गो गङ्गे सकृदपि तरङ्गे तव पुनर्भवेत् सद्यो धन्यो भवविलयवर्त्मन्यपि जनः ॥८

शिवाभिः संश्लिष्टानमरललनाश्लेषरसिकाः मिलद्धाङ्क्षोद्‌घोषान् स्फुरदमरवन्दिस्तुतिगिरः ।
विमाने राजन्तः पयसि तरतस्ते तत इतः स्वदेहान् पश्यन्तस्त्रिदशनगरीं यान्ति कृतिनः ॥९

विपज्ज्वालालीढान् निरवधिगतायातविधुरान् अतिश्रान्तान् शश्वत्परिचितकृतान्तान् कलुषितान् ।
जनान् दृष्ट्वा नूनं सवपथिकविश्रामपदवी विधाता कारुण्याज्जननि जगति त्वं प्रकटिता ॥१०

त्वदीयं पानीयं त्रिदशनदि तापत्रयहरं त्रिलोकीवस्तुभ्यः परमतममेकं विलसति ।
नचेदेवं देवः कृतचरणसेवः सुरनरैः कथं धत्ते मस्ते गुणगरिमलुब्धोऽन्धकरिपुः ॥११

न गङ्गेति प्रोक्तं नच जननि पीतं तव जलं नवा तत्र स्नातं सकृदपि मया पूर्वजनुषि ।
नचेदित्थं तथ्यं कथमवनिदावे निपतितो भ्रमाम्याशाखाशाशतजनितदुःखान्यनुभवन् ॥१२

सुरधुनि धनदारापत्यभृत्यादिसम्पत् क्षितिपरिवृढता वा त्वत्पदान्नार्थनीया ।
भगवति सति काले तीरनीरान्तराले वपुरपगममेकं याचते प्रेमचन्द्रः ॥१३

इति महामहोपाध्याय-प्रेमचन्द्रतर्कवागीशविरचितं गङ्गास्तोत्रं समाप्तम् ।

सि, आइ, इ विरुदविभूषितमहामनीषाविमण्डितधिषणधी-
धीश्वर श्रीमन्महामहोपाध्याय हरप्रसाद्शास्त्रि
महोदयलिखित मुखबन्धः ।

# मुखबन्धः ।

संस्कृतभाषायां प्रथितेषु पटसु महाकाव्येषु नैषधचरितमन्यतमम् । दैवीं वाणीं विद्वत्सु भट्टाचार्यमहाशयेषु नैषधचरितस्य बहुमानातिरेको वरीवर्त्ति, ते रघुवंशं काव्यतयैवाङ्गीकर्त्तुं नोत्सहन्ते, आहुश्च,—"रघुरपि काव्य तदपि च पाठ्यम्"इति । परन्तु नैषधचरितनामश्रवणेनैव तेषां रसना सरसायते, अभिदधति च ते "उपमा कालिदासस्य भारवेरर्थगौरवम् । नैषधे-पदलालित्यं माघे सन्ति त्रयोगुणाः" ॥ इति । तेषां नैषधचरितस्य पदलालित्येऽस्ति एतावती लालसा यत् ते यदृच्छया गोष्ठीषु गृहेषु वा नैषधश्लोकान् आम्रेडयन्ति, तथासामर्थ्ये आत्मनः कृतार्थान् च मन्यन्ते ।

"नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः ।
दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥" १।८५
"स्फुटं च पर्वैः करपत्रमूर्त्तिभिर्वियोगिहृद्दारुणि दारुणायसे ।" १।८०
"मनोरथेन स्वपतीकृतंनलं निशि क सा न स्वपती स्म पश्यति ।
अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम् ॥" १।३९

किं बहुना, बहव इउरोपजनपदवासिनोऽपि नैषधचरितस्य पदलालित्यदर्शनेन चमत्कृता अभवन् । उत्तरार्धनैषधसम्पादक Roer महोदयोऽवदत् "The language is highly elaborate bearing the mirror's polish. It never becomes common-place and bears throughout a sustained tone of sprightliness and elevation."

परन्तु विद्यते नैषधचरिते एकस्य वस्तुनोऽभावः, यदत्र प्राञ्जलता नास्त्येवेति वक्तुं शक्यते । अयञ्च प्राञ्जलताया अभावः कवेरस्य स्वेच्छाविहितः, उक्तं ह्यनेन कविवर्य्येण काव्यस्यास्य द्वाविंश-सर्गावसाने, —

"ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमनाः हठेन पठिती मास्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय
त्वेतत् काव्यरसोर्म्मिमज्जनसुखव्यासज्जनं सज्जनः ॥" २२।१५४

मा नाम पण्डितम्मन्याः खला मदीयेऽस्मिन् काव्ये हठेन पठिते खेलतु, इति यत्नान्मया क्वचित् क्वचित् अत्र ग्रन्थे दुर्बोधशब्दार्थसन्निवेशेन ग्रन्थग्रन्थिर्विहितः, भक्त्या गुरून् आराध्य तेन ग्रन्थीन् अशिथिलीकृत्य केनापि नास्य रसो ग्रहीतुं शक्यते । अतो ग्रन्थग्रन्थिरयमतितरां दुरुह इत्यत्र नास्ति सन्देहावकाशः ।

"मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः ।
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥" २२।१५२ ;

मदीया काव्यवाणी चेत् विदुषां चेतसि सुधेव आनन्दं ददाति तदैव सफलो मे यत्नः, अरसपुरुषाणामनादरे को नाम स्यादस्या स्तिरस्कारः। तेन च अन्येषां कवीनां काव्य गिरिनद्या तुलितम्।। अपि चोक्तं, –"क्षीरोदन्वान्यदीयमुदीयते मथितुरमृतं खेदच्छेदि प्रमोदन-मोदनम्" २२।१५३ क्षीरोदमन्थनादेव अमृतस्य उद्भवः, तेनैव च कवेः प्रयत्नोऽपि सफलः विदुषां च प्रमोदनं भवतीति। एतैरुद्धृतैः वाक्यैरेतदेव स्फुटीभूतं यत् श्रीहर्षेण स्वयमेवाज्ञायत तस्य ग्रन्थोऽयं दुर्बोधः सञ्जातः, गुरूपदेशमन्तरा अस्य भावग्रहणमशक्यमेवेति।

काव्यमिदं द्वाविंशतिसंख्यैः सर्गैः समाप्तिमाप, तथापि नलोपाख्यानं पूर्णतां नागमत्। नलः स्वयंवरे दमयन्तीमलभत, देवा दमयन्तीं वशीकर्त्तुं बहुधा यततोऽपि असमर्था अभवन्। स्वपक्षात् नलं दौत्ये नियुज्य दमयन्त्यै प्रेषितवन्त, ततोऽपि न किमपि फलं जातम्। दमयन्त्या नले वृते देवाः दम्पती आशीर्वचसा वरदानेन च सम्बर्द्ध्य स्वस्थानं प्रस्थिताः, नलोऽपि दमयन्तीं परिणीय स्वराजधानीं प्रत्यावृत्य दाम्पत्यं प्रेम उपबुभुजे विवाहानन्तरं कलिः तं यथा निगृहीतवान् तद्वृत्तान्तस्य क्वापि वार्त्ता अत्र नास्ति। कलेरेकैव वार्त्ता वर्त्तते, स्वयंवरसभातः निवर्त्तमाना देवाः चार्वाकेण सह आगच्छन्तं कलिमवदन्, अधुना ते गमनेनालम्, यतः स्वयंवरः सम्वृत्त इति। ततः कलिः प्रतिजज्ञे निग्रहीष्येऽहं नलमिति। अत्र चार्व्वाकसनाथेन कलिना देवानां वितर्कः विदुषां भट्टाचार्य्यमहोदयानामतिप्रियः।

अथेदानीं वक्तव्यतामायाति कुत्र जनपदे आसीत् निवासः श्रीमतः श्रीहर्षस्य, कदा वा जन्मनालंचकार स तं जनपदमिति। तस्य काश्मीरदेशे निवास आसीदिति केचिदाहुः। तत्तु न कथमपि युज्यते। यतः, कविरयं काश्मीरजनपदं गत्वा तत्रत्यानां पण्डितानां सभासु स्वकीयं काव्यं परीक्ष्य प्रचारयामास। केचित्तु वङ्गदेशेऽस्य निवास आसीदित्यवदन्। यतः विवाहकाले स्त्रियः हुलुध्वनिमकुर्वन्, हुलुध्वनिश्च नान्यत्र भवतीति तैरुच्यते। एतत्तु नैव सत्यं, भारते अन्यत्रापि गुर्जरादिषु बहुषु देशेषु स्त्रीणां हुलुध्वनिः प्रचरति। आदिशूरस्य राजत्वकाले वङ्गेषु ये पञ्च ब्राह्मणा आगच्छन् तेषु कश्चित् श्रीहर्षनामा आसीत्। वङ्गेषु मुखोपाध्यायमहोदयाः मन्यन्ते अयं श्रीहर्ष एव तेषां पूर्वपुरुषः, अयमेव नैषधकर्त्ता चेति, अत्रापि नैव युज्यते आस्था, यतः वङ्गेषु "वेदवाणाङ्गशाके (६५४ शके, ७३२ खीष्टीये वर्षे) पञ्च ब्राह्मणा आगच्छन्। न कोऽपि श्रीहर्षकविं तथा प्राचीनं वक्तुमुत्सहते। भोजराजः १०००तमवर्षतः १०५०तमवर्ष मध्ये राजत्वमकरोत्, विद्यते तस्य कश्चिदलङ्कारग्रन्थः सरस्वतीकण्ठाभरणं नाम। अत्र च नैव कोऽपि नैषधश्लोकः समुद्धृतः, अतो ज्ञायते भोजराजसमये नाभवत् नैषधचरितस्य प्रादुर्भावः।

महामहोपाध्यायः शिवदत्तशास्त्री (अपरश्च कश्चित् वोम्बे प्रदेशस्य नैषधसम्पादकः) 'श्रीहर्षः कान्यकुब्जराजजयचन्द्रसमयवर्त्ती तदीयसभासदासीद्' इत्याह। अनेनैव जयचन्द्रेण पृथ्वीराजस्य युद्धमभवत्, अस्यैव साहाबुद्दिनघोरिनाम्ना यवनेन संग्रामोऽजनि। इत्थञ्च श्रीहर्षः अनयो राज्ञोः तुल्यकालीनः। परन्तु पृथ्वीराजस्य चारणः चन्द्रकविः तदीये 'पृथ्वीराजरासो' नामके महाकाव्ये श्रीहर्षस्य नाम प्राचीनकवितया उल्लिलेख, अतः शिवदत्तशास्त्रिणा वाणी नात्र

संवदति। तर्हि किं श्रीहर्षः कदा कस्मिन् देशे आविरभूदित्यस्य न भवितुमर्हति काचित् मीमांसा ? बाढम्, अस्त्येवात्र उपायः।

श्रीहर्षस्य पिता 'कविराजराजिमुकुटालङ्कारहीरः' हीरकविः आसीत् महान् कविः। तेनचाभवत् श्रीमदुदयनाचार्य्यस्य विचारः, तत्र च हीरः पराजितोऽभवत्। स च 'यथोदयनं जेतुं शक्नुयाः तथा यतितव्यम' इति पुत्रमादिश्य लोकान्तरमाप। ज्ञायते च उदयनस्याविर्भावकालः, स लक्षणावलीग्रन्थं ९०६ शाकवर्षे खृष्टीय ९८४ वत्सरे रचितवान्। नैषधकारश्च उदयनमतं खण्डयित्वा खण्डनखण्डखाद्यग्रन्थं प्राणैषीत्। तस्य च ग्रन्थस्य नैषधचरिते उल्लेखमकरोत्, अतः कविरयं एकादशशतके आसीदिति नास्ति सन्देहः। कान्यकुब्जस्य कस्यचिद्राज्ञः आदेशेन कश्चित् पण्डितः ९७२ शाके खृष्टीय १०५० वर्षे नैषधचरितस्य टीकामेकां लिलेख। अतः खृष्टीय-९८४ वर्षतः १०५० वर्ष मध्ये श्रीहर्षस्य आविर्भावकालः वक्तुं शक्यते।

नैषधकाव्यं द्वाविंशत्या सर्गैः समाप्तिमगमत्, सर्गाश्च ते अतिदीर्घाः, प्रतिसर्गं शताधिकं श्लोकानां वर्त्तते। प्रतिसर्गावसाने श्रीहर्षः पितुः मातुः स्वस्य च नाम उल्लिलेख। बहुषु सर्गावसानश्लोकेषु स्वकीयजीवनस्य कस्यचित् कार्यस्य उल्लेखमकरोत्. प्रथमे सर्गेऽवोचत् स चिन्तामणिमन्त्रसिद्ध आसीदिति, ४र्थे सर्गे बौद्धानां क्षणिकवादं निरस्य ब्राह्मणानां स्थिरवादमस्थापयदिति, ५मे विजयप्रशस्तिं नाम ग्रन्थमलिखदिति, ६ष्ठे खण्डनखण्डखाद्यस्योल्लेखमकरोत्, ७मे स गौड़ोर्वीशकुलप्रशस्तिमरचयदिति, ९मे वात्याविक्षुब्धसमुद्रवर्णनमकार्षीदिति, १०मे तर्कशास्त्रशिक्षायामसमं श्रमं व्यधादिति, १२शे स अतितरां मातृभक्त आसीदिति, १६शे स महता यत्नेन काश्मीरदेशे ग्रन्थप्रचारमकुरुतेति, १७शे स छन्दप्रशस्तिपुस्तकस्य कथामुल्लिलेख। १८शे स शिवशक्तिकथामकथयत्, २२शे च नवसाहसाङ्कराजस्य चम्पूमरचयदित्यवोचत्। अत्रैवापरमेतदप्युक्तवान् कान्यकुब्जराजसभायां यदा स उपतिष्ठत तदैव राजसकाशात् ताम्बूलद्वयमासनञ्चालभत। सर्गावसाने तस्य या वार्त्ता लभ्यन्ते ततो न वहिर्गन्तव्यम् मया, आभिरेव

**प्रमास्यते स कान्यकुब्जदेशवासी खृष्टीयैकादशशतके च एतान् ग्रन्थान् व्यरचयदिति। परिमलापरनामा कविः पद्मगुप्तः पण्डितः नवसाहसाङ्कचरितं नाम कश्चित् ग्रन्थं जग्रन्थ। नवसाहसाङ्कस्यापरंनाम सिन्धुराजः, स च परमारवंशीयराजा, तस्य राजधानी उज्जयिनी। भोजस्य अव्यवहितपूर्ववर्ती। श्रीहर्षस्तु कियत्परवर्ती भवितुमर्हति, यतः पद्मगुप्तेन स्वस्य राज्ञः काव्यमलिख्यत श्रीहर्षेणतु**

अपरदेशीयराजार्थो चम्पूर्विरचिता। श्रीहर्षः बौद्धमतनिरासाय स्थिरवादमसाधयत्, यतः अस्मिन् समये एव बौद्धाः प्रवलतराः, भोटप्रभृतिदेशेषु धर्मप्रचारतः यशस्विनश्चाभवन्। उदयनस्तु बौद्धानां महान् शत्रुः, स बौद्धधिक्कारापराभिधेयम् आत्मतत्त्वविवेकग्रन्थमलिखत्। तेनापि स्थिरवादसाधनाय महान् प्रयासः अङ्गीकृतः। तस्य कुसुमाञ्जलौ अपि तस्य वादस्याधिक्यं वर्त्तते। श्रीहर्षस्तन्मतं निरस्य अनिर्व्वाच्यतावादमस्थापयत्।

गौड़ोर्वीशकुलप्रशस्तिनामग्रन्थं श्रीहर्षो रचितवान्, अतो बहुभिर्मन्यते श्रीहर्षः वङ्गीय इति किन्तु तदानीं वङ्गदेशे बौद्धा एव राजानः आसन्, श्रीहर्षः तु स्वयं बौद्धविद्वेषी। सर्वकिं पाल-

वंशीयस्य कस्यचित् प्रशस्तिं लिखितुमर्हति। नैतत् मनोरञ्जयति, अपितु एकादशशताब्दी-प्रथमभागे गौड़ोपकूलप्रदेशे कश्चिद् महान् राजा आसीत्, स ब्राह्मण्यधर्मनिष्ठः, भवदेवभट्टः तस्य प्रधानामात्यः। अस्मात् भवदेवादेव वङ्गेषु ब्राह्मण्यव्यवस्थाः प्रचारिता अभवन्। वङ्गेष ब्राह्मणेषु एवं कोऽस्ति यो भवदेवस्य नाम न जानाति। स यस्य राज्ञ आश्रये स्थित्वा विविधान् ग्रन्थान् प्राणैषीत् तस्य नाम हरिवर्मदेवः। भुवनेश्वरात् फरिदपुरं यावत् तस्य शासनमासीदिति ज्ञायते *। मन्ये श्रीहर्षेण तस्यैव कुलप्रशस्तिर्लिखिता। स च हरिवर्मदेवः न केवलं समुद्रोपकूले एव राज्यमकरोत् अपितु तस्य राजत्वं गौड़े राढ़े वङ्गेष्वपि विस्तृतमासीत्। अपरतोऽपि ज्ञायते अस्मिन् समये श्रीहर्षः वङ्गदेशे समागतवान्, यतः गौड़ोर्वीशकुलप्रशस्ति-रचनात् परमेव स संक्षुब्धपारावारग्रन्थमलिखत्। श्रीहर्षः कुत्र संक्षुब्धपारावारमपश्यत्, न काश्मीरे न वा कान्यकुब्जे। अतो मन्ये स हरिवर्मसभायां समागतवान्। तस्य कान्यकुब्ज-वासित्वे प्रमाणं कान्यकुब्जपतिरुपस्थिताय तस्मै "ताम्बूलद्वयमासनञ्च" ददाति इति। तस्मिन् अगृहीतासने राजा नोपाविशत्। २२श सर्गावसाने लिखितमभवत् "ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्"। अत्र लभते इत्यस्यार्थः सदैवालभत, यदा यदा अगच्छत् प्रतिवार-मेव अलभत इति। तदानींतना राजानः पण्डितश्रेष्ठान एवमेव सममन्यन्त। संक्षिप्तसार-टीकाकृत् गोयीचन्द्रोऽपि प्रायेण एतत्समसामयिकः, स आस्थानिक आसीत्, तस्मिन् राजसभां गते राजा आसनादुदतिष्ठत्। उपविष्टे च तस्मिन् उपविवेश। इदानीमपि राजपुतनाख्यदेशे राजानः ताजिमाख्यं सम्मानं ददति। तादृशसम्मानार्हे कस्मिन्नपि सभ्ये समागते राजा आसनादुत्तिष्ठति। तस्मै प्रदत्ते चासने उपविशति। कान्यकुब्जपतिः श्रीहर्षमेवं सममन्यत। स्वकीयसभासदं विना नान्य एवं सम्मानं लभते। एभिः प्रमाणैरित्थं निश्चीयते श्रीहर्षः कान्यकुब्जवासी एकादश-शतकस्य प्रथमार्द्धे स्वप्रभावं विस्तारयामास। श्रीहर्षस्य कान्यकुब्जवासी टीकाकारोऽपि राजा-देशेन टीकामकरोत्। यदा सभां कृत्वा अभिनवग्रन्थः पठितोऽभवत् तदा सर्वेषां सभासदां अनुमतौ सत्यां तस्य प्रचारोऽभवत्। एवं सभा बहुस्थानेऽभवत्। मङ्खक यदा श्रीकण्ठचरितम-लिखत् तदा पञ्चविंशतिसंख्यकाः पण्डिताः तस्य विचारमकुर्वन्, ततश्च तस्य ग्रन्थस्य प्रचारोऽभूत्। मन्ये श्रीहर्षोऽपि इत्थम्भूते कस्मिंश्चित् सदसि स्वपुस्तकम् अर्पयामास। अस्माकं देशेऽपि चिर-ञ्जीवशर्मा नवद्वीपपण्डितसभायां स्वकीयां माधवचम्पूं प्रचारितवान्।

महामहोपाध्यायशिवदत्तशास्त्री मन्यते, विजयप्रशस्तिः खलु कान्यकुब्जाधिपतेः विजयचन्द्रस्य प्रशस्तिः। किन्तु चन्द्रकविः श्रीहर्षं प्राचीनमवदत्, विजयचन्द्रः चन्द्रकवेः, समानकालीनः। अतः शास्त्रिवर्यस्य मतस्यास्य नास्ति मूल्यातिरेकः। कान्यकुब्जे इदानीमपि बहूनां रमणीनां नाम मामल्लदेवी मामला देवीति वा प्रचरति। एतदपि श्रीहर्षस्य कान्यकुब्जदेशीयत्वे प्रमाणम्।

* मागुरामण्डले व्याजनदीपर्यन्तमस्य राजत्वमासीत्।

राय वाहादुरः कान्तिचन्द्र मुखोपाध्याय महोदयः जयपुरे ताजिमाख्यं सम्मानमलभत।

# नैषधचरितम्

—:॥:—

## प्रथमः सर्गः

—०—

निपीय यस्य क्षितिरक्षिणः कथां तथाद्रियन्ते न बुधाः सुधामपि ।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः ॥ १ ॥

याकाङ्क्षितामलपदा नियतं जनानां शक्तार्थसञ्चयसमन्वयने च योग्या ।
व्यक्तीकरोति निखिलं हृदि भावजातं वाग्देवतामभिमतामहमाश्रये ताम् ॥
अन्यासु भावबहुलासु सदर्थिकासु टीकासु चेदिह भवेद्विफलः प्रयत्नः ।
सद्भिस्तथापि मृदुबोधविबोधनार्थं जातोद्यमोऽहमिह सम्प्रति नावबुध्ये ॥

अस्य ग्रन्थस्य महाकाव्यतया वर्णनीयप्रसिद्धनायकत्वेन सहृदयानां झटिति साभिनिवेशशुश्रूषाप्रवर्तकतया च प्रथमं सन्नायकनामकीर्तनरूपं वस्तु निर्दिशति । निपीयेति । बुधाः पण्डिताः यस्य क्षितिरक्षिणः क्षितिं पृथिवीं साधु रक्षितवानिति तस्य न्यायेन पृथिवीपालयितुरित्यर्थः, कथां गुणानुवादं निपीय सादरं श्रुत्वा सुधामपि अमृतमपि तथा कथावत् न आद्रियन्ते न बहु मन्यन्ते सुधातोऽपि तत्कथाया अतीवाह्लादकत्वात् स नलो नलनामा आसीत् स्थितः । किम्भूतः सितच्छत्रितं श्वेतातपत्रीकृतं कीर्तिमण्डलं यशःस्तोमो येन तादृशः । एतेन तस्य सकलधरामण्डलैकाधिपतेः कीर्तिमण्डलं भूमण्डलमापूर्य उपरि स्वर्गादौ गतं सत् श्वेतातपत्रमिव जातमिति प्रतिपादितम् । तथा महसां तेजसां राशिः पुञ्जः अतितेजस्वीत्यर्थः । तथा महान् कायाशययोर्गुरुश्चासावुज्ज्वल उद्दीप्तश्चेति महोज्ज्वलः । यद्वा क्षितिरक्षिण इति क्षितिः क्षयः क्षतमिति यावत् तस्मात् रक्षितुं त्रातुं शीलं यस्य तादृशस्य क्षत्त्रस्येत्यर्थः । देवक्षत्त्रयोरन्यतरएव महाकाव्ये नायको भवति । यदुक्तं—'सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः । सद्वंशः क्षत्त्रियो वापि

अत्र नले महसां राशिरिति, कीर्तिमण्डले च सितच्छत्रत्वस्यारोपात् रूपकमलंकारः, सुधापेक्षया कथायाश्च उत्कर्षात् व्यतिरेकालंकारश्चानयोः संसृष्टिः, तथा क्षितिरक्षिण इति मह मह इति च व्यञ्जनसङ्घस्य सकृदनेकधा साम्यात् छेकानुप्रासः, थकारस्य धकारस्य च सकृत् साम्यात् वृत्त्यनुप्रासश्चानयोरपि संसृष्टिः । 'कीर्तिः प्रतापयशसोर्विस्तारे कर्दमेऽपि च' इति विश्वः । 'महस्तूत्सवतेजसोः' इति, 'शृङ्गारः शुचिरुज्ज्वलः' इति चामरः ॥ १ ॥

रसैः कथा यस्य सुधावधीरिणी नलः स भूजानिरभूद्गुणाद्भुतः ।
सुवर्णदण्डैकसितातपत्रितज्वलत्प्रतापावलिकीर्त्तिमण्डलः ॥ २ ॥
पवित्रमत्रातनुते जगद् युगे श्रुता रसक्षालनयेव यत्कथा ।
कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति ॥ ३ ॥

धीरोदात्तगुणान्वित इति । महोज्ज्वल इति महः उत्सवान्वितः उज्ज्वलः शृङ्गाररसो यस्य तादृशः, एतेन शृङ्गारी नायकोऽस्मिन् वर्ण्यते इति ग्रन्थकृता सूचितम् । महाकाव्यस्य शृङ्गारवीरशान्त-रसानामन्यतमप्रधानकत्वमावश्यकम् । तदुक्तं महाकाव्यलक्षणमधिकृत्य 'शृङ्गारवीरशान्ताना-मेकोऽङ्गी रस इष्यत' इति ॥ १ ॥

तस्य गुणाद्भुतत्वं प्रतिपादयितुम् उक्तप्रायमेवार्थं पुनराह । रसैरिति । यस्य नलस्य कथा चरितं रसैः शृङ्गारादिभिः सुधाममृतम् अवधीरयितुमवज्ञातुं शीलं यस्यास्तादृशी अमृततिरस्का-रिणीत्यर्थः । यस्य कथा एः कामस्य रसा भूमिरित्यपि कश्चित् । भूजानिर्भूस्वामी स नलः गुणाद्भुतो गुणैः अविकत्थनत्वादिभिर्धीरोदात्तनायकगुणैः शोभाविलासादिभिः पौरुषगुणैः सन्ध्यादिभिर्नृप-गुणैर्वा प्रभावादिभिरित्यपरे अद्भुतो लोकातीतोऽभूत् । किम्भूतः सुवर्णदण्डः एकमद्वितीयं सिता-तपत्रं श्वेतच्छत्रं स च तच्च ते ज्वलंती दीप्यमाना प्रतापानां कोपदण्डजतेजसाम् आवलिः श्रेणी कीर्तिमण्डलं यशःसमूहः सा च तच्च ते सुवर्णदण्डैकसितातपत्रीकृते ज्वलत्प्रतापावलिकीर्त्ति-मण्डले येन स तथोक्तः । अत्रान्वयः क्रमिको बोध्यः ॥ २ ॥

निजौद्धत्यपरिहारद्वारा तत्कथायाः पुण्यजनकत्वं प्रतिपादयन्नाह । पवित्रमिति । यत्कथा या कथा नलचरितं श्रुता श्रवणविषयीकृता सती अत्र कलौ युगे जगत् विश्वं रसक्षालनया रसैः शृङ्गारादिभिः अथ च जलैर्या क्षालना शुद्धिः आह्लादकतेत्यर्थः पक्षे मार्जना च तयेव पवित्रम् आतनुते करोति, अन्यदप्यशुद्धं वस्तु जलक्षालनया शोध्यते इत्युत्प्रेक्षा । सा कथा आविलामपि श्रुतिकट्वादिदोषैः कलुषामपि मद्गिरं मम वाणीं कथं न पवित्रयिष्यति न स्वच्छां करिष्यति अपितु

गुणा यथा—'प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमादिश्च गुणाः सम्पत्ति-हेतवः' इति । अस्मिन्नपि श्लोके रूपकव्यतिरेकयथासंख्यवृत्त्यनुप्रासालंकाराणां संसृष्टिः । 'सुधा स्त्री लेपने मूर्व्यां स्नुही गङ्गेष्टकामृते' इति मेदिनी । इ खेदेच रुषोक्तौ च कामदेवे त्वनव्ययम्' इति विश्वः ॥ २ ॥

'पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिरः । पुण्यश्लोका च वैदेही पुण्यश्लोको जनार्दनः' इति, 'नलस्य चरितं श्रुत्वा नरः पापाद् विमुच्यते' इतिच, 'वैण्यं पृथुम्' इत्यादिस्मृतेश्च नलकथायाः पवित्रीकरणता प्रसिद्धा । या च श्रवणमात्रेण पावनी, सा कीर्त्तनात् किमुत इति कैमुतिक-न्यायेनार्थान्तरापत्त्या अर्थापत्तिरलंकारः, शृङ्गारादिजलयोः परस्परभेदेऽपि रसशब्दश्लेषेणाभेदाध्यव-सायादतिशयोक्तिः, पवित्रीकरणं प्रति स्वसेविनीपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम्,

अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥४॥
अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥ ५ ॥

पवित्रयिष्यत्येव । किम्भूतां यतः स्वसेविनीमेव आत्मोपासिकामेव एवकारस्य स्वायोगव्यवच्छेद-करत्वात् सदैव सेवमानामित्यर्थः । एतेन निर्दोषयैव वाचा नलचरितं वक्ष्यत इति सूचितम् ॥ ३ ॥

पूर्वं नलस्य गुणाद्भुतत्वमुक्तं तच्चानवद्यां विद्यां विना न सम्भवत्यतस्तामेव वर्णयति । अधीतीति । अयं नलः चतुर्दशसु विद्यासु शिक्षाकल्पादिषु अधीतिबोधाचरणप्रचारणैः अध्ययन-मधीतिः अर्धग्रन्थस्यार्थावगमो बोधः अस्मिन् सति तदनुष्ठानमाचरणं शिष्येभ्यः प्रतिपादनं प्रचारणं तैश्चतुर्भिरुपाधिभिः करणैः चतस्रो दशा अवस्थाः प्रणयन् प्रतिपादयन् कुतः कस्माद्धेतोः चतुर्दशत्वं स्वयमात्मना कृतवानित्यहं न वेद्मि न जानामि । अत्र चतुर्दशत्वमित्यस्य चतुर्दशसंख्यायोगित्व-मित्यर्थकत्वाद्विरोधाभासः चतुर्भिरुपाधिभिः प्रत्येकं चतुर्दशसु विद्यासु दशाचतुष्टयप्रणयनेन षट्पञ्चा-शत्त्वसम्भवात्, विरोधभंजनन्तु चतुर्दशत्वं चतुरवस्थत्वमित्यर्थकतयैव । चतुर्दशविद्या यथा— 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणंच विद्या ह्येताश्चतुर्दश' ॥ अङ्गानि च —'शिक्षाकल्पौ व्याकरणं निरुक्तं ज्योतिषां गणः । छन्दसां विचितिश्चैव षड़ङ्गो वेद-उच्यत' इति ॥ ४ ॥

न केवलमसौ चतुर्दशविद्या एव ज्ञातवान् किन्त्वन्या अपीति प्रतिपादयन्नाह । अमुष्येति । अमुष्य नलस्य रसनाग्रनर्तकी जिह्वाग्रे सदा स्फुरन्ती लासिकास्वरूपा वा विद्या नवद्वयद्वीपेषु अष्टादशद्वीपेषु याः पृथग्जयश्रियः पृथक् पृथक् जयलक्ष्म्यस्तासां जिगीषया जेतुमिच्छयेव विद्यासु जिगीषाया अध्यवसितत्वात् प्रतीयमानोत्प्रेक्षा । सरस्वतीरूपाया विद्यायाः सपत्नीत्वाल्लक्ष्मीजिगी-षोचितेति भावः । एतेनाष्टादश द्वीपा नलेन जिता इति सूचितम् । त्रयीव त्रिवेदीव अङ्गगुणेन प्रति-भादिना विस्तरं नीता प्रपञ्चं प्रापिता सती यथा त्रयी अङ्गगुणेन शिक्षाकल्पादिना विस्तारिता तथेत्यर्थः । अष्टादशताम् अष्टादशसंख्याम् अगाहत गता । यद्यपि सप्तद्वीपा पृथिवी प्रसिद्धा तथा-

रसक्षालनयेवेति क्रियोत्प्रेक्षा छेकानुप्रासः श्रुत्यनुप्रासश्च इत्येतेषां संकरः ॥ ३ ॥

एकस्य धकारस्य सकृत् साम्यात् वृत्त्यनुप्रासः, रण रण इति व्यञ्जनसंघस्यानेकधा साम्यात् छेकानुप्रासश्च, 'स्वयं स्वयम्' इत्यन्तयमकालंकारश्चेति संसृष्टिः ।

'उपाधिर्धर्मचिन्तायां कैतवेऽपि विशेषणे' इति विश्वः, 'दशावस्था नेकविधापि' इत्यमरः ॥ ४ ॥

जिगीषयेत्यत्राध्यवसायस्य सिद्धत्वादतिशयोक्तिरलंकारः, । पूर्णोपमालंकारः, व्यञ्जकाप्रयोगात् प्रतीयमानोत्प्रेक्षा छेकानुप्रासालंकारश्चेति संसृष्टिः । 'स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः ॥ ५ ॥

दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥ ६ ॥
पदैश्चतुर्भिः सुकृते स्थिरीकृते कृतेऽमुना के न तपः प्रपेदिरे ।
भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन् दधावधर्मोऽपि कृशस्तपस्विताम् ॥ ७ ॥

ष्युपद्वीपैरष्टादशद्वीपा भवति । अष्टादश विद्या यथा --सषड्ङ्गा चतुर्वेदी मीमांसा न्यायविस्तृतिः । आयुर्वेदो धनुर्वेदो गान्धर्वमर्थशासनम् । पुराणं धर्मशास्त्रञ्च विद्या अष्टादश स्मृता' इति ॥५॥

अस्य शिवावतारत्वं शास्त्रानुसारित्वञ्चाह दिगीशेति । दिगीशानां दिक्पालानाम् इन्द्रादीनां वृन्दस्य समूहस्यांशैर्भागैर्विभूतिर्जन्म यस्य सः अतएव दिशां पूर्वादीनाम् ईशिता ईश्वरः राजा हि दिक्पालानामंशैर्जायते सः नलः निजत्रिनेत्रावतरत्वबोधिकां स्वस्य शिवावतारताज्ञापिकां द्वयाधिकां गोलकाधिष्ठातृनयनद्वयातिरिक्तां शास्त्राणि धर्मशास्त्रादिस्वरूपां दृशं चक्षुर्बभार दधौ शास्त्रोक्तमेवानुष्ठितवानित्यर्थः । किम्भूतां दृशं कामप्रसरस्य यथेष्टाचरणस्य अवरोधिनीं प्रतिबन्धिकाम् । शिवोऽपि दिगीशवृन्दांशविभूतिः दिगीशवृन्दस्यांशे शिरसीत्यर्थः विभूतिश्चरणभस्म यस्य सः । तथा सर्वदेवमयत्वात् दिशाम् ईशिता, कामप्रसरावरोधिनीं कन्दर्पवेगस्य क्षोभिकां तद्देहदाहकत्वात् द्वयाधिकां तृतीयां दृशं बिभर्त्ति ॥ ६ ॥

तस्य धर्मसंस्थापकत्वमधर्मनिवारकत्वञ्चाह । पदैरिति । अमुना नलेन चतुर्भिः पदैर्ध्यानयज्ञतपोदानरूपैश्चरणैः सुकृते वृषरूपे धर्मे स्थिरीकृते स्थिरतां प्रापिते सति अतएव कृते त्रेतायामपि सत्ययुगे सति के जनाः तपो न प्रपेदिरे नाचरितवन्तः अपितु सर्वएव । कुतः सर्वेषां तपःकरणमित्याह यत् यस्मात् अधर्मोऽपि एकाङ्घ्रिकनिष्ठया एकस्यासहायस्याङ्घ्रेश्चरणस्य कनिष्ठया दुर्बलाङ्गुल्या भुवं पृथिवीं स्पृशन् कृशः क्षीणप्रभावः सन् तपस्विताम् वराकताम् अथच तपस्यावत्तां दधौ धृतवान् । यत्राधर्मस्तपस्वी तत्रान्येषां कैमुतिकन्यायेन तपस्वित्वं सुतरां सिद्धमिति भावः । यद्वा कृते इति कृतशब्दस्य सामान्ययुगवाचकत्वात् सामान्यशब्दस्य विशेषपरत्वमौत्सर्गिकमिति युक्त्या कृते त्रेतायुगे इत्ययमर्थोऽपि सम्यक् ॥ ७ ॥

नलस्य विभूतिभेदेऽप्यभेदोक्तेरतिशयोक्तिः, शास्त्राणि दृशमिति व्यस्तरूपकम्, त्रिनेत्रात्मकत्वेन हेतुना शिवावतारतारूपलाभ्यस्य ज्ञानात् अनुमानम्, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । दिशामीशितेति बहुवचनेन इन्द्रादीनामेकैकदिगीशत्वम्, नलस्य तु सर्वदिगीशितृत्वमिति व्यतिरेकालंकारो व्यज्यत इति वस्तुनालंकारध्वनिः । 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः' इति मनुः । 'स्यादंशः कायभागयोः' इति बलः ॥ ६ ॥

नलस्य शासनात् अधर्मोऽपि धर्मपरायणोऽभूत् किमुत अन्य इति कैमुतिकन्यायेनार्थान्तरापत्त्या अर्थापत्तिरलंकारः, अधर्मोऽपि तपस्वितां दधौ इति विरोधाभासः, समेन कार्येण अधर्मे कस्यचित्तपस्विनो व्यवहारारोपणात् समासोक्तिः, वराकतातपस्ययोर्भेदेऽपि श्लेषेणाभेदप्रतिपादनात्

यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम ।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ ॥ ८ ॥
स्फुरद्धनुर्निस्वनतद्घनाशुग-प्रगल्भवृष्टिव्ययितस्य सङ्गरे ।
निजस्य तेजःशिखिनः परःशता वितेनुरङ्गारमिवायशः परे ॥ ९ ॥
अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद् भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः ॥ १० ॥

अस्य शत्रून् प्रति प्रयाणं वर्णयति । यदस्येति । अस्य नलस्य यात्रासु रिपून् प्रति प्रयाणेषु स्फुरन् दीप्यमानो यः प्रतापरूपोऽनलस्तस्य धूमस्येव मञ्जिमा मनोज्ञत्वं यस्य तथाभूतं यत् बलोद्धतं सैन्यैरुत्थापितं रजोधूलिस्तदेव रजएव गत्वा उड्डीय सुधाम्बुधौ अमृतार्णवे पतितं मग्नं सत् पङ्कीभवत् अपङ्कमपि पङ्कतां कर्दमतां प्राप्नुवत् विधौ चन्द्रे अङ्कतां कलङ्कतां दधाति धारयति कलङ्करूपेण तत्र तिष्ठतीत्यर्थः । विधोः सुधाम्बुधिजत्वेन तत्र स्थितत्वाद्रजोलग्नतासम्भवः ॥ ८ ॥

न केवलं तेन शत्रून् प्रति प्रयाणं कृतं, किन्तु विग्रहेण तेषां पराभवोऽपि कृत इत्याह । स्फुरदिति । परःशताः शतात्परे शताधिका इत्यर्थः । परे शत्रवः सङ्गरे समरे स्फुरन्तौ धनुर्निस्वनौ चापसिंहनादौ यत्र तादृशस्य तस्य नलस्य ये घनाः सान्द्रा आशुगा बाणा स्तेषां प्रगल्भया महत्या वृष्ट्या व्ययितस्य निर्वापितस्य यद्वा स्फुरन्तौ धनुर्निस्वनौ चापसिंहनादौ अथच इन्द्रायुधगर्जिते यस्य स चासौ स नलो घनो मेघ इव तद्घनश्चेति स तथोक्तस्तस्याशुगानां बाणानां प्रगल्भया वृष्ट्या पतनेन अथच आशुगेन वायुना प्रगल्भया प्रबलया वृष्ट्या वर्षणेन व्ययितस्य निर्वापितस्य निजस्य स्वकीयस्य तेजःशिखिनः प्रतापाग्नेरङ्गारमिव निर्वाणालातमिव अयशोऽकीर्तिं वितेनुर्विस्तारयामासुः । यशसः शुभ्रत्वस्य कविप्रसिद्धत्वेन तद्विरुद्धस्यायशसः कृष्णवर्णत्वम् अतोऽङ्गारसादृश्यम् ॥ ९ ॥

अस्य प्रयाणं विग्रहञ्चोक्त्वा दिग्विजयं वर्णयति । अनल्पेति । राज्ञः प्रत्यर्थिनो हतवानिति राजघो राजश्रेष्ठो वा स नलः अनल्पानां बहूनां दग्धानाम् अनल्पं यथा तथा दग्धानां वा अरि-

अतिशयोक्तिः, बृत्त्यनुप्रासश्चेति सङ्करः । 'तापसे च वराके च तपस्वी कथितो बुधैः, इति, 'कनिष्ठा दुर्बलाङ्गुली' इति च विश्वः, "कृतं पर्याप्तयुगयोर्विहिते हिंसिते फले" इति हेमचन्द्रः ॥ ७ ॥

अत्र असम्बन्धे सम्बन्धरूपातिशयोक्तिः, प्रतीयमानोत्प्रेक्षा, तथा द्वितीयचरणे 'स्फुरत्प्रतापानलधूममञ्जिम' इति रूपकम्, लुप्तोपमा च, बृत्त्यनुप्रासः, चतुर्थचरणे छेकानुप्रासश्च तेषामङ्गाङ्गिभावरूपः सङ्करः ॥ ८ ॥

'तेजःशिखिनः' इत्यत्र रूपकम्, अङ्गारमिवेत्युपमा, अनयोः संकरः । 'आशुगौ वायुविशिखौ' इति, 'परःशताद्यास्ते येषां परा संख्या शतादिकात्' इति चामरः ॥ ९ ॥

निवारितास्तेन महीतलेऽखिले निरीतिभावं गमितेऽतिवृष्टयः ।
न तत्यजुर्नूनमनन्यविश्रमाः प्रतीपभूपालमृगीदृशां दृशः ॥ ११ ॥
सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहु ।
दिगङ्गनाङ्गाभरणं रणाङ्गने यशःपटं तद्भटचातुरी तुरी ॥ १२ ॥

पुराणां रिपुनगराणामनलेन वह्निना उज्ज्वलैरधिकं स्फुरद्भिर्निजप्रतापैः स्वतेजोभिरग्निस्वरूपैरित्यर्थः ज्वलत् दीप्यमानं भुवो वलयं पृथिवीमण्डलं प्रदक्षिणीकृत्य जयाय जयार्थं सृष्टया निर्मितया नीराजनया निर्मञ्छनया रराज शुशुभे । अन्येषामपि राज्ञां दिग्विजये अनल्पदग्धानाम् अरीणां शत्रुसदृशानां पुराणां गुग्गुलूनामनलेन प्रदक्षिणीकृत्य नीराजना क्रियत इति व्यवहारः ॥ १० ॥

ईतीनां प्रजापीडकत्वात्तन्निवारकत्वमपि तस्यासीदित्याह । निवारिता इति । तेन नलेन निरीतिभावम् ईतिशून्यत्वं गमिते प्रापिते अखिले समस्ते महीतले निवारिताः काकाक्षिगोलकन्यायादत्रापि तेनेत्यस्यानुषङ्गः तेन दूरीकृताः अतिवृष्टयः अनवरतबहुवर्षणरूपा ईतिविशेषाः विश्रम्यतेऽत्रेति विश्रमो विश्रामस्थानं नास्ति अन्यो विश्रमो यासां तथाभूताः सत्यः नूनमुत्प्रेक्षे प्रतीपाः शत्रवो ये भूपाला राजानस्तेषां मृगीदृशां स्त्रीणां दृशो नयनानि न तत्यजुर्न त्यक्तवत्यः तत्रैव विश्रामं प्राप्ता इत्यर्थः । पतिविरहेण तासां सर्वदैव रोदनादित्यभिप्रायः । ईतयो यथा—'अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृता' इति ॥ ११ ॥

अस्य दिग्विजयमुक्त्वा यशो वर्णयति सितांश्विति । तद्भटचातुरी तुरी स नलश्चासौ भटो वीरश्चेति तस्य या चातुरी निपुणता सैव तुरी तन्तुवायोपकरणविशेषः 'माकु' इति यस्या नीचोक्तिः । महासिर्महाखड्ग एव वेमा तन्तुवायोपकरणविशेषस्तस्य सहकृत्वरी सहकारिणी सती रणाङ्गने समरचत्वरे सितांशुवर्णैश्चन्द्रवर्णैः शुभ्रैरित्यर्थः तद्गुणैस्तस्य नलस्य गुणाः शौर्यगाम्भीर्यादयस्त एव गुणाः सूत्राणि श्लिष्टपरम्परितरूपकं तैः करणैः दिश एवाङ्गनास्तासामङ्गस्याभरणमलङ्कारं बहु अनेकं यश एव पटं सुचेलकन्तद् वयति स्म उतवती ॥ १२ ॥

---

अत्र प्रतापो वह्नित्वेन रूपित इति रूपकम्, निजप्रतापकर्तृकनीराजनाकृतेरसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, लुप्तोपमा, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'कौशिको गुग्गुलुः पुरः' इत्यमरः । 'राजघो राजघाती स्याद् राजश्चेष्टोऽपि राजघः' इति बलः ॥ १० ॥

उत्प्रेक्षालंकारः, अतिवृष्टीनां नयनजलानाञ्च भेदेऽप्यभेदाध्यवसायादतिशयोक्तिः, मृगीदृशां नयनजलपतनरूपकार्येण तासां स्वामिमरणरूप-कारणावगमात् पर्यायोक्तञ्चेति संकरः ॥ ११ ॥

तन्तुवायतुर्याः सकाशादियं तुरी चान्यादृशी सा प्रत्येकमावरकमनेकपटं वयति इयन्तु तद्विपरीतेति व्यतिरेकः । 'सितांशुवर्णैः' इति लुप्तोपमा, तृतीयपादे वृत्त्यनुप्रासच्छेकानुप्रासौ, अन्त्यपादे यमकञ्चेति संकरः' । 'पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः' इत्यमरः ।

प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता ।
अमित्रजिन्मित्रजिदोजसा स यद् विचारदृक् चारदृगप्यवर्तत ॥ १३ ॥
तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा ।
तनोति भानोः परिवेशकैतवात्तदा विधिः कुण्डलनां विधोरपि ॥ १४ ॥
अयन्दरिद्रो भवितेति वैधसीं लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
मृषा न चक्रेऽल्पितकल्पपादपः प्रणीय दारिद्र्यदरिद्रतां नृपः ॥१५॥

अस्य तेजस्वित्वं नीतिज्ञत्वञ्चाह । प्रतीपेति । ततो भिया नलाद्भयेन विरुद्धधर्मैरपि का कथान्येषां परस्परासमानाधिकरणैरपि वस्तुभिः प्रतीपभूपैरिव प्रतिकूलभूपालैर्यथा भेत्तृता उपजाप उज्झिता तथा तैः किं भेत्तृता स्वाश्रयभेदजनकत्वम् उज्झिता त्यक्ता । कुत इत्याह यत् यस्मात् स राजा ओजसा तेजसा मित्रजित् सन्नपि अमित्रजित् तथा चारदृक् सन्नपि विचारदृक् अवर्तत । अत्र विशब्दो नञर्थकः । मित्रजित्वामित्रजित्वयोश्चारदृक्त्वविचारदृक्त्वयोश्च परस्परमैकाधिकरण्याभावाद्विरुद्धत्वं विरोधाभासोऽयम् । विरोधशमनन्तु अमित्रजित् शत्रुजित् स नलः ओजसा तेजसा मित्रजित् सूर्यजित् सूर्यसदृश इत्यर्थः, तथा विचारदृक् सदसद्विवेकदृष्टिश्चारदृक् चारचक्षुः 'राजानश्चारचक्षुष' इत्युक्तेः ॥ १३ ॥

अस्य तेजोयशसी युगपद्वर्णयन् सूर्याचन्द्रमसोः परिधिमुत्प्रेक्षते । तदोजस इति । विधिर्विधाता तदोजसस्तस्य नलस्य ओजसस्तेजसस्तथा तद्यशसस्तस्य यशसः कीर्त्याः स्थितौ विद्यमानतायाम् इमौ सूर्याचन्द्रमसौ वृथा निष्फलौ इति यदा यदा यस्मिन् यस्मिन् काले चित्ते मनसि कुरुते, तदा तस्मिन् तस्मिन् काले परिवेशकैतवात् परिधिच्छलात् भानोः सूर्यस्य विधोरपि चन्द्रस्यापि कुण्डलनां निष्फलत्वबोधकवलयाकृतिचिह्नं तनोति विस्तारयति । भानुविधुकार्यम् एतदोजोयशोभ्यामेव कृतमतस्तयोः सृष्टिरशुद्धैव पुनर्लिखितैव वा मया कृता इति विमृश्य कुण्डलनां करोतीत्यर्थः । अशुद्धलिखिते द्विर्लिखिते च कुण्डलना क्रियत इति लेखकानां व्यवहारः ॥१४॥

श्लोकद्वयेनास्य दातृत्वं वर्णयति । अयमिति । नृपो नलः दारिद्र्यस्य निर्द्धनत्वरूपस्य दरिद्रतां बहुतरधनदानेन अभावं प्रणीय विधाय अर्थिजनस्य याचकजनस्य ललाटे जाग्रतीं तिष्ठन्तीम् अयं जनो दरिद्रो भविता भविष्यति इति वैधसीं विधातृसम्बन्धिनीं लिपिं लिखिताक्षरपङ्क्तिं मृषा मिथ्या न चक्रे सत्यां कृतवानित्यर्थः । किम्भूतो नृपः अल्पितो न्यूनीकृतः कल्पपादपः कल्पवृक्षो

प्रतीपभूपैरिवेति उपमा, किमित्युत्प्रेक्षा, यमकालंकारश्चेति संकरः ॥ १३ ॥

अत्र विधौ (विधातरि) कार्येण लेखकस्य व्यवहारारोपणात् समासोक्तिः, कुण्डलनाकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेः असम्बन्धे सम्बन्धरूपातिशयोक्तिः, प्रसिद्धोपमानयोः सूर्याचन्द्रमसोर्वृथात्वाभिधानात् प्रतीपम्, प्रकृतस्य परिवेशस्य निषेधेन अन्यस्याप्रकृतस्य कुण्डलनस्य स्थापनादपह्नुतिरलंकारश्चेति संसृष्टि । उत्प्रेक्षालंकार इति भरतः ॥ १४ ॥

विभज्य मेरुर्न यदर्थिसात् कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः।
अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्॥ १६॥
अजस्रमभ्यासमुपेयुषा समं सदैव देवः कविना बुधेन च।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने॥ १७॥

येन सः। कल्पपादपादप्यस्य दातृत्वाधिक्यात्। कल्पपादपोहि वाञ्छितमेवार्थं ददाति, नलस्तु वाञ्छितादप्यधिकमित्यल्पीकरणबीजम्। अत्र दरिद्रशब्दस्य यत्किञ्चित्सम्बन्धिविरहरूपदरिद्रता-विशिष्टोऽर्थः। तथाहि वेधसा धनादिसम्बन्धमननुसन्धायैव दरिद्रो भविनेति सामान्यतो लिखितं नलेन पुनः प्रचुर-धनवितरणद्वारा कृतेऽपि सधनत्वे धनदारिद्र्यरूपस्य सम्बन्धिनोऽन्यथाकरणान्न तन्मृषा कृतम्। न च धनमात्राभावो दरिद्रता, 'निद्रादरिद्रीकृत' इत्यादौ निद्राद्यभाववत्यपि दरिद्र-शब्दप्रयोगात्॥ १५॥

विभज्येति। मेरुर्हेमाद्रिः विभज्य खण्डशः कृत्वा यत् अर्थिसात् न कृतः याचकेभ्यो न दत्तः, तथा उत्सर्गजलव्ययैः उत्सर्गे दाने ये जलव्ययास्तैः करणैः सिन्धुः समुद्रो यन्मरुर्जलशून्यो न कृतः, तेन नलेन द्विफालेन द्विगुच्छेन बद्धाः संयताश्चिकुराः केशाः तत् मेरुवितरणसिन्धुमरूकरणाभावरूपं शिरःस्थितं मस्तकन्यस्तं निजायशोयुगं स्वकीयाकीर्तिद्वयम् अमानि मन्यते स्म अप्रतिकार्यत्वात्। अत्र स्वदेशव्यवहार्यतया शिरसि निहितानां द्विफालबद्धकेशानामयशोयुगत्वेन सम्भावितत्वात् प्रतीयमानोत्प्रेक्षा॥ १६॥

संसर्गजाः खलु दोषगुणा इति तस्य सत्संसर्गित्वं वर्णयति। अजस्रमिति। पटीयान् अतिशयेन पटुर्दक्षोऽयं देवो राजा नलः सदैव सर्वस्मिन्नेव काले अजस्रमनवरतमभ्यासं कवित्वानुशीलनं शास्त्रानुशीलनञ्च उपेयुषा प्राप्तवता कविना काव्यवर्णयित्रा बुधेन पण्डितेन च समं सह समयं

'अल्पितकल्पपादप' इत्यत्र व्यतिरेकश्छेकानुप्रासश्चेति संकरः। ॥ १५॥

शिरःस्थितमिति लोकोक्त्या प्रयुक्तम्। 'अनपनेयेऽयशसि लोके हि ममैतन्मस्तके स्थितम्' इत्युक्तिः क्रियते। यत्र तु प्रकृतिविकृतिभावविवक्षा, तत्र प्रकृतेरेव वचनं गृह्यते। यथा—'एको वृक्षः पंच नौका भवति'। यत्र च गुणप्रधानभावविवक्षा, तत्र प्रधानस्यैव वचनम्। यथा—'द्वौ द्वौ माघादि-मासौ स्यादृतुः' इत्यमरः। अत्र अयशोयुगस्यैव साध्यत्वेन प्राधान्यविवक्षया 'अमानि' इत्येक-वचनम्। चिकुरा अयशोयुगमिति व्यस्तरूपकम् इति भरतः। अत्र भिन्नलिङ्गवचनत्वेऽपि न दोषोऽनुद्वेजकत्वात्। तथाच दण्डी—'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा। उपमा दूषणायालं यत्रोद्वेगो न धीमताम्' इति। अप्रस्तुतयोर्मेरुमरुरूपयोः पदार्थयोः 'कृत' इत्येकया क्रिययाभि-सम्बन्धात् तुल्ययोगितालंकारश्चेति संसृष्टिः। द्विफालबद्धान् केशान्न बिभर्ति किन्तु शिरःस्थित-मयशोयुगमेतदित्यपह्नुतिरलंकार इति सां॥ १६॥

अधोविधानात् कमलप्रबालयोः शिरःसु दानादखिलक्षमाभुजाम् ।
पुरेदमूर्द्ध्वं भवतीति वेधसा पदं किमस्याङ्कितमूर्द्ध्वरेखया ॥ १८ ॥
जगज्जयं तेन च कोषमक्षयं प्रणीतवान् शैशवशेषवानयम् ।
सखा रतीशस्य ऋतुर्यथा वनं वपुस्तथालिङ्गदथास्य यौवनम् ॥ १९ ॥

कालं नयन् क्षेपयन् सन् दिने दिने प्रतिदिनम् उदयं समुन्नतिं दधौ धृतवान् । किम्भूतः दिनेश्वरस्य सूर्यस्येव श्रीः तेजस्वितादिसम्पत्तिर्यस्य सः । दिनेश्वरोऽपि देवो देवता पटीयान् स्वकर्मणि दक्षतमः सदैव अजस्रम् अभ्यासं सान्निध्यमुपेयुषा कविना शुक्रेण बुधेन सोमात्मजेन च समं सह समयं नयन् अहोरात्रत्वेन व्यवस्थापयन् दिने दिने उदयम् ऊर्ध्वगतिं दधातीति शब्दश्लेषमूला लुप्तोपमेयम् । 'बुधो दैत्यगुरुश्चैव रवेः सन्निहितः सदा' इति ज्योतिषम् ॥ १७ ॥

अस्योत्तमपुरुषलक्षणाक्रान्तत्वाच्चरणे ऊर्ध्वरेखा स्थिता तत्रोत्प्रेक्षते । अधोविधानादिति । वेधसा विधात्रा अस्य नलस्य पदं चरणम् इति हेतोः किम् ऊर्ध्वरेखया ऊर्ध्वगतया लेखया अङ्कितम् चिह्नितम् । इतिपदोपस्थाप्यहेतुमाह कमलप्रबालयोः पद्मनवीनपल्लवयोरधोविधानात् ततोऽप्युत्कृष्टतया न्यक्करणात् तथा अखिलक्षमाभुजां सकलराजानां शिरःसु मस्तकेषु दानात् प्रणतसमस्तराजतया निधानात् पुरा पश्चात् इदं पदम् ऊर्ध्वं भवति भविष्यति । पुरायोगे भविष्यति लट् ॥ १८ ॥

अस्य वयःसन्धौ दिग्विजयादिकं वर्णयित्वा यौवनं वर्णयितुमारभते । जगदिति । शैशवस्य बाल्यावस्थायाः शेषश्चरमांशस्तद्वान् शैशवयौवनयोः सन्धौ वर्त्तमान इत्यर्थः अयं नलः जगतां जयम् अष्टादशद्वीपानां विजयं प्रणीतवान् कृतवान्, तेन जगज्जयेन कोषं धनागारम् अक्षयं पूर्णञ्च प्रणीतवान् शत्रूणां धनलुण्ठनात् । अथ अनन्तरं यौवनं कर्तृ अस्य राज्ञो वपुः शरीरं तथा आलिङ्गत् आश्लिष्टवत्, यथा रतीशस्य कन्दर्पस्य सखा ऋतुर्वसन्तो वनम् आलिङ्गति । रमणीयमपि वनं यथा वसन्तसमागमेऽत्यर्थं रमणीयं भवति, तथा यौवनसमागमेऽस्य वपूरमणीयतरं जातमिति भावः ॥ १९ ॥

उपमाश्लेषसहोक्त्यच्छेकानुप्रासश्चेति संसृष्टिः इति सां । निदर्शनाश्लेषयोः सङ्कर इति जीवातुः । श्लिष्टोपमा इति भरतः । 'बुधशुक्रौ सदा पूर्वोत्तरराशिस्थौ' इति ज्योतिर्विदः । 'अभ्यासो-व्यसनेऽन्तिके' इति विश्वः । 'देवः सुरे राजनि नीरदे च' इति बलः ॥ १७ ॥

'ऊर्ध्वरेखा करे यस्य स यशस्वी सुखी सुधीः । चरणे च भवेद् राजा तद्विशेषे फलान्तरम्' इति सामुद्रिकाः । क्रियोत्प्रेक्षालंकारः ॥ १८ ॥

कोशस्याक्षयत्वमपरिमितत्वेनैव, नतु कृपणभावेन । उपमालंकारः, अप्रस्तुतयोर्जगज्जयाक्षययोरेकधर्माभिसम्बन्धात् तुल्ययोगिता, 'वनं वनम्' इति यमकञ्चेति संसृष्टिः ॥ १९ ॥

अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्व्वणसर्व्वरीश्वरः ॥ २० ॥
किमस्य लोम्नां कपटेन कोटिभिर्विधिर्न लेखाभिरजीगणद् गुणान् ।
न रोमकूपौघमिषाज्जगत्कृता कृताश्च किं दूषणशून्यविन्दवः ॥ २१ ॥

यौवने सति तस्याङ्गानां सौष्ठवाधिक्यं वर्णयन्नाह । अधारीति । तस्य राज्ञोऽङ्घ्रिणा चरणेन पद्मेषु कमलेषु घृणा जुगुप्सा अधारि धृता ततोऽप्युत्कृष्टत्वात् । तथा तस्य राज्ञः शयस्य पाणेश्छाया कान्तिः तच्छयच्छायं, षष्ठीतत्पुरुषे छायायाः क्लीवत्वं, तस्य लवोऽपि लेशोऽपि पल्लवे किशलये क्व अपि तु न कुत्राप्यस्ति । एवं शारदः शरत्कालीनः पार्व्वणसर्व्वरीश्वरः पौर्णमास्युदितचन्द्रः पूर्णचन्द्रइत्यर्थः तस्य राज्ञः आस्यस्य मुखस्य दास्ये दासत्वेऽप्यधिकारितां योग्यतां न गतः न प्राप्तः ॥ २० ॥

अस्य असङ्ख्यगुणवत्त्वमसङ्ख्यदोषशून्यत्वञ्च प्रतिपादयति । किमस्येति । विधिर्विधाता लोम्नां कपटेन छलेन कोटिभिः कोटिसङ्ख्याभीरेखाभिर्मसीदण्डिकाभिः करणैरस्य राज्ञः किं गुणान् न अजीगणत् न संख्यातवान् अपितु अजीगणदेव । तथा जगत्कृता विश्वसृजा विधात्रा रोमकूपाणां यः ओघः समूहः स एव मिषं छलं तस्मात् दूषणशून्ये दोषरहिते ये विन्दवः अनुस्वाराकारास्ते च दोषरहितत्वव्यञ्जकविन्दव इत्यर्थः किं न कृताः अपितु कृता एव । नलस्य शरीरे यानि रोमाणि स्थितानि तानि न रोमाणि किन्तु गुणगणनरेखाः, ये च रोमकूपास्ते न रोमकूपाः किन्तु दूषणशून्यविन्दवः इत्यपह्नुत्यलङ्कारोऽयम् ॥ २१ ॥

अत्र उपमानभूतेभ्यः पद्मपल्लवशारदचन्द्रेभ्य उपमेयभूतानामङ्घ्रिशयास्यानामाधिक्यवर्णनात् त्रयो व्यतिरेकालंकाराः, अर्थापत्तिश्छेकानुप्रासश्चेति संसृष्टिः । अङ्घ्रिप्रभृतीनां पद्मप्रभृतिषु घृणाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलंकार इति जीवातुः । उपमा इति भरतः । परिकर इति सां । 'सस्ये क्लीवं शरज्जातनूतनाप्रतिभे त्रिषु' इति मेदिनी । 'पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति, 'जुगुप्सा करुणा घृणा' इति, 'पञ्चशाखः शयः पाणिः' इति, 'छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इति, 'लवलेशकणा लवाः' इति चामरः ॥ २० ॥

अत्र रोम्णां रोमकूपाणां च कपटमिषशब्दाभ्यां ताद्रूप्यापह्नवेन गुणगणनारेखात्व-दूषणशून्य-विन्दुत्वयोरुत्प्रेक्षणात् सापह्नवोत्प्रेक्षयोः संसृष्टिः । आद्ये चरणे वृत्त्यनुप्रासः, द्वितीये छेकानुप्रासः, 'कृता कृता' इति यमकञ्चेति संसृष्टिः । 'तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे' इति, तावन्तः कूपा इति 'रोमैकैकं कूपके पार्थिवानाम्' इति सामुद्रिकलक्षणं सूच्यते । 'मिषं व्याजे मिषं स्पर्धे' इति धरणिः । 'ओघो वृन्देऽम्भसां रये' इत्यमरः ॥ २१ ॥

अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता ।
उरःश्रिया तत्र च गोपुरस्फुरत्-कवाटदुर्द्धर्षतिरःप्रसारिता ॥ २२ ॥
स्वकेलिलेशस्मितनिन्दितेन्दुनो निजांशदृक्तर्जितपद्मसम्पदः ।
अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे ॥ २३ ॥
सरोरुहं तस्य दृशैव तर्ज्जितं जिताःस्मितेनैव विधोरपि श्रियः ।
कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता ॥ २४ ॥

अस्य महाभुजत्वं व्यूढोरस्कत्वञ्च दर्शयति । अमुष्येति । अमुष्य राज्ञो दोर्भ्यां बाहुभ्याम् अरिदुर्गलुण्ठने शत्रुकर्तृकपरिखादिकृतदुर्गमस्थानस्थद्रव्यापहरणे ध्रुवमुतप्रेक्षे अर्गलदीर्घपीनता अर्गलस्य कवाटविष्कम्भकदण्डस्य दीर्घता आयतत्वं पीनता स्थूलत्वञ्च गृहीता धृता,तथा उरःश्रिया वक्षःसम्पत्त्या च तत्र अरिदुर्गलुण्ठने गोपुरे पुरद्वारे स्फुरत् शोभमानं यत् कवाटं तस्य दुर्द्धर्षतिरः-प्रसारिता दुर्द्धर्षता दृढ़त्वं तिरःप्रसारिता तिर्य्यग्विस्तृतत्वञ्च गृहीता ॥ २२ ॥

अस्य मुखसौष्ठवं वर्णयति । स्वकेलीति । चराचरे स्थावरजङ्गमात्मके जगति तन्मुखस्य प्रतिमा सादृश्यं नासीत् । ननु चन्द्रपद्मयोः प्रसिद्धोपमानतया कथं सादृश्यासम्भव इति मुखस्य हेतुगर्भ-विशेषणद्वयमाह स्वकेलीति । स्वस्य केलेः क्रीड़ाया लेश एकदेशो यत् स्मितमीषद्धसनं तेन निन्दित-इन्दुर्येन तस्य तथा निजः स्वः अंश एकदेशो या दृक् चक्षुस्तया तर्जिता भर्त्सिता पद्मानां सम्पत् सौन्दर्य्यादिसम्पत्तिर्येन तादृशस्य । ननु माभूत् चन्द्रपद्माभ्यामौपम्यम् अन्यदप्युपमानं वस्तु दर्पणादिकमस्तीत्याशंसायां चराचरं विशिनष्टि अतद्द्वयीति सा चन्द्रपद्मरूपा द्वयी द्वितयं तद्द्वयी तस्या जित्वरं जयनशीलं नास्ति तद्द्वयीजित्वरं सुन्दरान्तरं तन्मुखातिरिक्तसुन्दरं यत्र तादृशे । न तन्मुखस्य प्रतिमा चराचरे इत्यत्र शृङ्गं शशीयं वृत्तिः प्रतिमा तन्मुखसम्बन्धिनी नेत्यर्थः पर्य्यव-सितः, तेन तादृशप्रतिमाभावस्य न प्रतियोग्यप्रसिद्धिः । अतद्द्वयीत्यत्र तु तद्द्वयीजित्वरस्वरूप-प्रतियोगिनस्तन्मुखे सत्त्वान्न तच्छङ्कापि ॥ २३ ॥

उक्तमेवार्थं भङ्ग्यन्तरेण पुनराह । सरोरुहमिति । तस्य नलमुखस्य नलस्य वा दृशैव चक्षुषैव नत्वन्यावयवैः सरोरुहं पद्मं तर्जितं तिरस्कृतम्, तथा तस्य स्मितेनैव ईषद्धसनेनैव विधोरपि

---

अत्र ध्रुवशब्दस्य उत्प्रेक्षाव्यञ्जकत्वादुपमासकीर्णमुत्प्रेक्षाद्वयम् , द्वयोः पदार्थयोः 'गृहीत' त्येकक्रिययाभिसम्बन्धात्तुल्ययोगिता चेत्येषां संसृष्टिः । 'तद्विष्कम्भोऽर्गलं न ना' इति, 'पुरद्वारन्तु गोपुरम्' इति चामरः ॥ २२ ॥

अत्र उपमानभूताभ्यां चन्द्रपद्माभ्यामुपमेयभूतस्य मुखस्योत्कर्षवर्णनात् व्यतिरेकः । प्रतीपमिति सां । इन्दुपद्मजयस्य विशेषणगतया मुखस्याप्रतिमत्वप्रतिपादनात्पदार्थहेतुक काव्यलिंगमलंकारः, वृत्त्यनुप्रासच्छेकानुप्रासालंकारौ चेत्येतेषां संसृष्टिः । 'चराचरं निगदितं भुवने गतिमत्यपि' इति धरणिः ॥ २३ ॥

स्वबालभारस्य तदुत्तमाङ्गजैः समञ्चमर्य्येव तुलाभिलाषिणः ।
अनागसे शंसति बालचापलं पुनःपुनः पुच्छविलोलनच्छलात् ॥ २५ ॥
महीभृतस्तस्य च मन्मथश्रिया निजस्य चित्तस्य च तं प्रतीच्छया ।
द्विधा नृपे तत्र जगत्त्रयीभुवां नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥ २६ ॥

अन्यस्य का कथा चन्द्रस्यापि श्रियः शोभा जिताः पराभूताः । परं पद्मचन्द्राभ्यामन्यत् भव्यमुपमानभूतं मनोरमं वस्तु कुतः अपितु न कुतोऽपि । अतएव अहो आश्चर्य्यं तदाननस्य नलमुखस्य उपमितौ उपमायां महीयसी अतिशयेन महती दरिद्रता उपमानवस्त्वभावः ॥ २४ ॥

अस्य केशोत्कर्षं भङ्ग्या वर्णयति । स्वबालेति । चमरी तदुत्तमाङ्गजैर्नलकेशैः समं सह तुलाभिलाषिणः सादृश्याकाङ्क्षिणः स्वबालभारस्य निजकेशसमूहस्य अनागसे अनपराधाय पुनः पुनर्वारंवारं यत् पुच्छविलोलनं लाङ्गूलचालनं तदेव छलं व्याजस्तस्मात् बालचापलं बालस्य केशस्य चापलं चाञ्चल्यं शंसति कथयति, अथ च बालस्य शिशोश्चापलं, बालोऽयं शिशुरज्ञश्चपलः अतोऽस्यापराधोन धर्त्तव्य इति ध्वनिः । अपराधस्तु नलकेशैः सह सादृश्याभिलापः, चमरीणां पुच्छविलोलनन्तु स्वाभाविकम्, तदपह्नुत्य बालचापलशंसनस्य स्थापनादियमपह्नुतिः ॥ २५ ॥

इदानीं श्लोकत्रयेण त्रिभुवनवनितानामनुरागं वर्णयन्नस्य सौन्दर्य्याधिक्यं प्रस्तौति । महीभृतइति । तस्य महीभृतो राज्ञो मन्मथश्रिया मन्मथस्य कन्दर्पस्येव या श्रीः शोभा तया, तथा निजस्य चित्तस्य मनसस्तं महीभृतं प्रति इच्छया च असौ मत्प्रियो भवतु इत्याकाङ्क्षया च तत्र तस्मिन् नृपे राजनि नले जगत्त्रयीभुवां त्रिभुवनजातानां नतभ्रुवां स्त्रीणां द्विधा द्विप्रकारो मन्मथविभ्रमो मन्मथस्य कामस्य विभ्रमो मन्मथोऽयमिति विशिष्टा भ्रान्तिः मन्मथजनितविकारविशेषश्चाभवत् ॥ २६ ॥

व्यतिरेकालंकारः, वाक्यार्थहेतुकं काव्यलिङ्गञ्चानयोः संसृष्टिः इति जीवातुः । विभावनेति सां ॥ २४ ॥

अत्र बालभारस्येति द्वयोरभेदेन, बालशब्दश्लेषेण केशबालकयोरभेदाध्यवसायाद् भेदेऽप्यभेदरूपातिशयोक्तिः, प्रतीयमानोत्प्रेक्षा इति सां । प्रकृतपुच्छविलोलनप्रतिषेधेनाप्रकृतबालचापलस्य स्थापनादपह्नुतिरलंकारः, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः । 'आगोऽपराधो मन्तुश्च' इत्यमरः ॥ २५ ॥

अत्र जगत्त्रयीभुवां नृपे द्विधा मन्मथविभ्रमस्यासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः मन्मथश्रिया इत्युपमा, मन्मथविभ्रम इति श्लेषालंकारः इति सां । श्लेषो यथासंख्यमलंकारश्चेत्यनयोः संकरः इति जीवातुः । 'विभ्रमोभ्रान्तिहावयोः' इति विश्वः ॥ २६ ॥

निमीलनभ्रंशजुषा दृशा भृशं निपीय तं यस्त्रिदशीभिरर्जितः ।
अमूस्तमभ्यासभरं विवृण्वते निमेषनिःस्वैरधुनापि लोचनैः ॥ २७ ॥
अदस्तदाकर्णि फलाढ्यजीवितं दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
इति स्म चक्षुःश्रवसां प्रिया नले स्तुवन्ति निन्दन्ति हृदा तदात्मनः ॥ २८ ॥
विलोकयन्तीभिरजस्रभावना- बलादमुं नेत्रनिमीलनेष्वपि ।
अलम्भि मर्त्याभिरमुष्य दर्शने न विघ्नलेशोऽपि निमेषनिर्मितः ॥ २९ ॥

तत्र प्रथमं स्वर्गस्त्रीणामनुरागमाह । निमीलनेति । त्रिदशीभिर्देवीभिर्निमीलनभ्रंशजुषा निमेषाभावभाजा दृशा चक्षुषा तं राजानं भृशमतिशयं निपीय सोत्कण्ठं निरीक्ष्य योऽभ्यासभरोऽर्जित-उत्पादितः, अधुनापि इदानीमपि अमूस्त्रिदश्यः निमेषे निःस्वैर्दरिद्रैर्निर्निमेषैरित्यर्थः लोचनैर्नयनैस्तमभ्यासभरं पुनःपुनरनुशीलनातिशयं विवृण्वते प्रकाशयन्ति । अद्भुतं खलु वस्तु निमेषशून्यचक्षुषा दृश्यतेऽतः स्वाभाविकस्यापि त्रिदशीनां नयननिमेषाभावस्य तदभ्यासजन्यत्वेन सम्भाव्यमानत्वादियं प्रतीयमानोत्प्रेक्षा ॥ २७ ॥

पातालस्त्रीणामनुरागमाह । अद इति । नोऽस्माकम् अदो दृशोश्चक्षुषोर्द्वयं तदाकर्णि नलगुण-श्रोतृ अतएव फलाढ्यजीवितं सफलजीवनम् एवं तदवीक्षि नलादर्शि अतएव अफलञ्च निष्फलञ्च इत्युक्तप्रकारेण चक्षुःश्रवसां चक्षुरेव श्रवः कर्णो येषां तेषां सर्पाणां प्रियाः स्त्रियः नले नलश्रवणदर्शन-विषये आत्मनः स्वस्य तत् दृशोर्द्वयं हृदा मनसा पतिभयान्नतु वचसा स्तुवन्ति स्म निन्दन्ति स्म च । चक्षुःश्रवसामिति साभिप्रायकं पदम्, तथाहि सर्पाणां कर्णाभावेन चक्षुषैव दर्शनश्रवणोभयकार्य्य-करणादुचिते एव नलश्रवणादर्शनकारिणश्चक्षुषः स्तुतिनिन्दे । आकर्णीति –'आत्मा वारे श्रोतव्यः' इत्यत्र श्रुधातोरिव इह कर्णिधातोरपि शाब्दबोधवाचित्वम् । प्रमितिकरणस्य चक्षुषः श्रवणदर्शन-कर्तृत्वन्तूपचारात् ॥ २८ ॥

मानुषीणामनुरागमाह । विलोकयन्तीभिरिति । अजस्रमनवरतं या भावना ध्यानं पर्य्यालोचना वा तस्या बलात् सामर्थ्यात् नेत्रनिमीलनेष्वपि चक्षुर्मुद्रणदशायामपि अमुं नलं विलोकयन्तीभि-र्ज्ञानविषयीकुर्वतीभिर्मर्त्याभिर्मानुषीभिरमुष्य नलस्य दर्शने ज्ञाने निमेषेण निर्मितो जनितो विघ्नस्य लेशोऽपि कणोऽपि न अलम्भि न प्राप्तः । विलोकयन्तीभिः पश्यन्तीभिरिति केचित् तन्न दर्शनस्य चाक्षुषरूपत्वान्नेत्रनिमीलनेषु तदसम्भवात् ॥ २९ ॥

---

अत्र त्रिदशीनामभ्यासप्रकटनासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'भरोऽतिशयभारयोः' इति विश्वः ॥ २७ ॥

अत्र स्तुतिनिन्दयोरसम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, यथासंख्यम्, काव्य-लिङ्गञ्च एतेषां संसृष्टिः । गुणक्रियाविरोधालंकारः इति सा । 'कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी' इत्यमरः ॥ २८ ॥

न का निशि स्वप्नगतं ददर्श तं जगाद गोत्रस्खलिते च का न तम् ।
तदात्मताध्यातधवा रते च का चकार वा न स्वमनोभवोद्भवम् ॥ ३० ॥
श्रियास्य योग्याहमिति स्वमीक्षितुं करे तमालोक्य सुरूपया धृतः ।
विहाय भैमीमपदर्पया कया न दर्पणः श्वासमलीमसः कृतः ॥ ३१ ॥
यथोह्यमानः खलु भोगभोजिना प्रसह्य वैरोचनिजस्य पत्तनम् ।
विदर्भजाया मदनस्तथा मनो नलावरुद्धं वयसैव वेशितः ॥ ३२ ॥

इदानीं सर्व्वासामनुरागं युगपदाह । न का निशीति । का स्त्री निशि रात्रौ स्वप्नगतं स्वप्नप्राप्तं तं नलं न ददर्श अपितु सर्वैव दृष्टवती । तथा गोत्रस्खलिते नामप्रमादे च का स्त्री तं नलं न जगाद नोक्तवती अपि तु सर्वैव । स्वप्रियनाम विवक्षुः स्त्री अनवरतचिन्तया स्वभ्यस्तत्वात् नलनामोच्चचारेत्यर्थः । तथा रते च निधुवनसमये च का वा स्त्री तदात्मतया नलस्वरूपतया ध्यातो नलएवायमिति चिन्तितो धवः प्रियो यया तादृशी सती स्वमनोभवोद्भवं निजकामोत्पत्तिं न चकार न कृतवती अपि तु सर्वैव ॥ ३० ॥

काव्यनायिकाभूतां दमयन्तीं प्रस्तौति । श्रियेति । भैमीं दमयन्तीं विहाय वर्जयित्वा त्रिभुवनरमणीनां मध्ये अपदर्पया कया सुरूपया सुन्दर्य्या स्त्रिया तं नलम् आलोक्य दृष्ट्वा श्रिया शोभया अस्य नलस्य अहं योग्या अनुरूपा किं भवामीति शेषः इति पूर्व्वोक्तेन सन्दिह्येति शेषः स्वमात्मानमीक्षितुं द्रष्टुं करे हस्ते धृतो दर्पण आदर्शः श्वासेन निश्वासवायुना मलीमसो मलिनो न कृतः अपितु सर्वाभिरेव कृतः । निश्वासवायुना दर्पणस्य मालिन्यं भवत्येव । विहाय भैमीमित्यत्र स्थितयेत्यध्याहार्यम् , अन्यथा क्रिययोरेककर्त्तृकत्वाभावात् क्त्वा न स्यात् । केचित्तु विहायेति ओ हा ङ् गतावित्यस्य रूपं गत्यर्थधातूनां ज्ञानार्थकत्वात् विज्ञायेत्यर्थस्तथाच यत्र दमयन्ती वर्त्तते तत्र किमिति वराक्या मया तद्योग्यता प्राप्यत इति विमृश्य तथा कृतमित्यभिप्राय इति वदन्ति ॥ ३१ ॥

नलगतं दमयन्त्या मनोऽनुरागं वर्णयति । यथोह्यमान इति । खलूत्प्रेक्षे विदर्भजाया दम-

---

अतिशयोक्तिः, काव्यलिङ्गम्; विशेषोक्त्यलङ्कारश्चेत्येतेषां संसृष्टिः । 'भावना लेपने ध्याने' इति विश्वः ॥ २९ ॥

अत्र दर्शनाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः; अर्थापत्तिः, वृत्त्यनुप्रासश्छेकानुप्रासः यमकञ्चेत्येतेषां संसृष्टिः । 'स्वप्नः स्वप्नस्य विज्ञाने स्वप्न स्वापे निदर्शने' इति विश्वः ॥ ३० ॥

अर्थापत्तिः; तदुत्थापिता च सर्वासामेवंविधव्यापारासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, दमयन्ती एव नलयोग्या अन्याश्च तदयोग्या इति गम्यार्थस्य स्पष्टतया प्रकाशनात् पर्यायोक्तञ्चेत्येतेषामङ्गाङ्गिभावरूपः सङ्करः । भावशान्तिरिति सर्वं । 'प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः' इति, 'मलीमसन्तु मलिनं कच्चरं मलदूषितम्' इति चामरः ॥ ३१ ॥

नृपेऽनुरूपे निजरूपसम्पदां दिदेश तस्मिन् बहुशः श्रुतिं गते।
विशिष्य सा भीमनरेन्द्रनन्दना मनोभवाज्ञैकवशंवदं मनः ॥ ३३ ॥
उपासनामेत्य पितुः स्म सृज्यते दिने दिने सावसरेषु बन्दिनाम्।
पठत्सु तेषु प्रतिभूपतीनलं विनिद्ररोमाजनि शृण्वती नलम् ॥ ३४ ॥

यन्तरा नलावरुद्धं नलेन राज्ञा अवरुद्धम् आवृतं पूर्वं तद्गुणावलीश्रवणात् मनः कर्मभूतं भुज्यतेऽसाविति भोगः सुखं तद्भोजिना सुखोपभोगशीलेन वयसैव यौवनेनैव ऊह्यमानोऽस्फुटत्वात् सखीभिस्तर्क्यमाणो मदनः कन्दर्पः प्रसह्य हठात् तथा वेशितः प्रवेशितः यथा अनलेन वह्निना अवरुद्धं चतुर्दिक्षु वेष्टितं वैरोचनिजस्य वाणासुरस्य पत्तनं शोणितपुरं कर्म भोगभोजिना सर्पशरीरभक्षकेण वयसा पक्षिणा गरुडेन उह्यमान ऊर्ध्वं प्राप्यमाणो मदनः प्रद्युम्नः प्रसह्य वेशितः। पुरा किल स्वप्ने अनिरुद्धं दृष्ट्वा तदर्थमुत्सुकाया वाणसुताया उषायाः सखी चित्ररेखा विद्याबलात्तमनिरुद्धमानीय तस्यै ददौ ततोऽनिरुद्धस्तया सह गूढं विहरन् वाणेन ज्ञात्वा धृतो बद्धश्च। तदनन्तरं नारदमुखाद् वृत्तान्तं श्रुत्वा प्रद्युम्नो बलदेवकृष्णाभ्यां सह गरुडमारुह्य शोणितपुरं प्रविवेशेति पौराणिकी वार्त्ता। उत्प्रेक्षाश्लिष्टोपमयोः संकरोऽयम् ॥ ३२ ॥

मनसि प्रविष्टे मदने नलं प्रत्यस्या अत्यासङ्गमाह। नृप इति। भीमनरेन्द्रनन्दना भीमनृपसुता सा दमयन्ती निजरूपसम्पदां निजस्यात्मनो रूपस्य सौन्दर्यस्य सम्पदां सम्पत्तीनां यद्वा निजरूपस्य सम्पदामतिशयस्यानुरूपे योग्ये बहुशो बहुवारं श्रुतिं गते चारवन्द्यादिभ्यः श्रवणात् श्रवणं प्रविष्टे श्रवणेन्द्रियजन्यज्ञानविषयतां प्राप्तइति यावत् तस्मिन् नृपे राजनि नले विशिष्य अन्यापेक्षया आधिक्येन मनोभवस्य कामस्य या आज्ञा शासनं तस्य एकं मुख्यं वशंवदम् आयत्तं मनो दिदेश दत्तवती प्रस्थापितवतीत्यर्थः ॥ ३३ ॥

'श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखात्' इति पूर्वरागस्य दूतमुखादिभ्यः श्रवणाङ्गत्वादिह वन्दिमुखान्नायकश्रवणमाह। उपासनामिति। सा दमयन्ती वन्दिनां स्तुतिपाठकानाम् अवसरेषु स्तवपाठसमयेषु एत्यागत्य पितुरुपासनां समीपेऽवस्थानं सृज्यते स्म कृतवती। अथ तेषु वन्दिषु प्रतिभूपतीन् सकलभूपालान् पठत्सु असावीदृशोऽयमीदृश इति वदत्सु सत्सु नलं शृण्वती सती दमयन्ती अलमत्यर्थं विनिद्ररोमा रोमाञ्चिताङ्गी अजनि जाता ॥ ३४ ॥

---

अत्र यथोह्यमानः इति मनो नलावरुद्धम्' इति च शब्दश्लेषः, अन्यत्रार्थश्लेषः, तेनानुप्राणितोपमा, साच 'वयसा' इति श्लेषेण वयसोरभेदाध्यवसायमूलातिशयोक्त्यानुप्राणितेति सकरः। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणाकाययोः' इति, 'पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम्' इति चामरः। 'वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके' इति विश्वः ॥ ३२ ॥

छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः ॥ ३३ ॥

भावोदयालंकारः; औत्सुक्यस्य वर्णितत्वात् तेन भावशबलताच यमकञ्चेति संसृष्टिः ॥ ३४ ॥

कथाप्रसङ्गेषु मिथः सखीमुखात् तृणेऽपि तन्व्या नलनामनि श्रुते ।
द्रुतं विधूयान्यदभूयतानया मुदा तदाकर्णनसज्ज्ञकर्णया ॥ ३५ ॥
स्मरात्परासोरनिमेषलोचनाद्बिभेमि तद्भिन्नमुदाहरेति सा ।
जनेन यूनः स्तुवता तदास्पदे निदर्शनं नैषधमभ्यषेचयत् ॥ ३६ ॥
नलस्य पृष्टा निषधागता गुणान् मिषेण दूतद्विजवन्दिचारणाः ।
निपीय तत्कीर्त्तिकथामथानया चिराय तस्थे विमनायमानया ॥ ३७ ॥

अस्या गाढानुरागं व्यञ्जयति । कथेति । तन्व्या क्षीणाङ्ग्या अनया दमयन्त्या मिथः परस्परं कथाप्रसङ्गेषु आनुषङ्गिकवार्त्ताप्रस्तावेषु सखीमुखात् तृणेऽपि तृणविशेषेऽपि नलनामनि नलाभिधाने श्रुते सति तृणविशेषप्रतिपादके नलेतिशब्दे श्रुते सतीत्यर्थः द्रुतं शीघ्रम् अन्यत् कार्य्यान्तरं विधूय परित्यज्य किमेताभिर्मत्प्रियतमस्य वार्त्ता उच्यतइति सन्दिह्येति शेषः मुदा हर्षेण तदाकर्णनसज्जकर्णया तस्य नलपदघटितवाक्यस्य आकर्णने श्रवणे सज्जौ सावधानौ कर्णौ यस्यास्तथाभूतया अभूयत भूतम् । ईदृगनुरागस्य गाढता जाता यथा अर्थमननुसन्धायैव शब्दमात्रश्रवणेऽपि प्रवर्त्तत इति भावः ॥ ३५ ॥

अस्या नलोत्कर्षशुश्रूषामाह । स्मरादिति । परासोः प्राणशून्यात् मृतादित्यर्थः अनिमेषलोचनात् निमेषरहितनयनात् स्मरात् मदनाद् बिभेमि भीता भवामि अतस्तद्भिन्नं स्मरादन्यम् उदाहर कथय इत्युक्तप्रकारेण सा दमयन्ती यूनस्तरुणान् स्तुवता प्रशंसता जनेन सखीजनेन तदास्पदे स्मरस्थाने निदर्शनं श्रेष्ठत्वाद् दृष्टान्तभूतं नैषधम् अभ्यषेचयत् अभिषिक्तं कारयामास । स्मरस्य परासुत्वं हरनयनाग्निदग्धत्वात् अनिमेषलोचनत्वञ्च देवत्वात् तादृशाद्भयमुचितमेव । अत्रायमभिप्रायः नलासक्तमनसा दमयन्त्या व्याजेन नलशुश्रूषार्थं कः खलु युवसमूहेषु साधीयान् युवा तं कथय किन्तु परासुमनिमेषलोचनं भयजनकं स्मरं विनेति सखीजनः पृष्टस्ततस्तेन सखीजनेन नलस्यैव स्तुतिः कृतेति ॥ ३६ ॥

अस्या नलगुणश्रवणं श्रुत्वा उत्कण्ठाञ्च युगपदाह । नलस्येति । अनया दमयन्त्या निषधागता निषधदेशादायाता दूतद्विजवन्दिचारणाः दूताः सन्देशहराः द्विजा ब्राह्मणाः वन्दिनः स्तुतिपाठकाः चारणा नटविशेषाश्च युष्माकं देशे को राजा कीदृशा वा तस्य गुणा इति मिषेण व्याजेन नलस्य गुणान्

---

अत्र 'हर्षौत्सुक्ययोर्भावयोर्नलविषयकरतिभावस्याङ्गत्वात् भावशवलतालंकारः, अन्त्यानुप्रासवृत्त्यनुप्रासालंकारौचेति संसृष्टिः । तन्व्या इति विरहव्यथया कृशत्वम् । 'कपिभेदे नलः प्रोक्तः तृणभेदेऽपि राजनि' इति विश्वः ॥ ३५ ॥

अत्र नलस्योपमानतया ख्यापनेन प्रसिद्धोपमानस्य कामस्य उपमेयत्वकल्पनेन च प्रतीपालंकारः । नैषधमिति निषधानामयमिति सम्बन्धमात्रे अण्; प्रकरणादिना स्वस्वामिभावाधिगतिः । 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः । मृतप्रमीतौ त्रिष्वेते' इत्यमरः । ॥ ३६ ॥

प्रियं प्रियाञ्च त्रिजगज्जयिश्रियौ लिखाधिलीलागृहभित्ति कावपि ।
इति स्म सा कारुवरेण लेखितं नलस्य च स्वस्य च सख्यमीक्षते ॥ ३८ ॥
मनोरथेन स्वपतीकृतं नलं निशि क सा न स्वपती स्म पश्यति ।
अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिर्जनदर्शनातिथिम् ॥ ३९ ॥

सौन्दर्य्यगाम्भीर्य्यादीन् पृष्टाः । अथ अनन्तरं तत्कीर्त्तिकथां नलयशोवार्त्तां निपीय सादरं श्रुत्वा दूतादिभ्य इति शेषः चिराय बहुकालं व्याप्य विमनायमानया उत्कण्ठितचित्तीभवन्त्या तस्थे स्थितम् ॥ ३७ ॥

अस्याश्चित्रदर्शनेन स्वयोग्यतानिर्णयमाह । प्रियमिति । लीलागृहं क्रीड़ागारन्तस्य भित्तिः कुड्यं तामधिकृत्येत्यधिलीलागृहभित्ति प्रियं वल्लभं प्रियां वल्लभाञ्च कावपि कौचन त्रिजगज्जयिनी त्रिभुवनजयनशीला श्रीः शोभा ययोस्तादृशौ लिख चित्रय इत्यमुना प्रकारेण चित्रकरश्रेष्ठेन लेखितं चित्रितं नलस्य च स्वस्य च आत्मनश्च सख्यं सादृश्यं सा दमयन्ती ईक्षते स्म दृष्टवती । अत्र त्रिभुवनातीतशोभौ कावपि लिखेति व्याजेन दमयन्त्या आदिष्टेन चित्रकरेण अन्येषु तादृशशोभानवलोकनात् सुतरां तस्या नलस्य च प्रतिमूर्त्तौ लिखिते, अनन्तरं सा तद्दर्शनेन स्वयोग्यतां निश्चिकायेत्यभिप्रायः ॥ ३८ ॥

पूर्व्वरागेऽभीष्टस्य श्रवणं दर्शनञ्च भवति । तत्र श्रवणं वर्णितमधुना दर्शने वर्णयितव्ये तत्र 'इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम्' इति चतुर्विधेषु दर्शनेषु स्वप्नदर्शनं वर्णयति । मनोरथेनेति । स्वपती शयाना सा दमयन्ती स्वस्यात्मनः पतिः प्रियः स्वपतिः मनोरथेनाभिलाषेण अस्वपतिः स्वपतिः कृत इति तं नलं क निशि कस्यां रात्रौ न पश्यति स्म प्रत्यक्षयामास अपितु सर्व्वस्यां निशि पश्यति स्म । नन्वलौकिकप्रत्यक्षरूपस्य स्वप्नस्य स्मृतिजन्यत्वेन संस्कारप्रयोज्यत्वात्तस्य च पूर्व्वानुभवकारणकत्वात् पूर्व्वानुभवं विना कथं तथाभूदित्याशंक्योपपादयति—सुप्तिः स्वप्नो मेध्यामनःसंयोग इत्यर्थः अदृष्टमपि अस्मिन् जन्मनि चाक्षुषाविषयमपि अर्थं वस्तु अदृष्टस्य प्राक्तनशुभाशुभकर्मणो वैभवात् बलात् अदृष्टवैभवोद्बुद्धजन्मान्तरीयसंस्कारादिति यावत् जनानां दर्शनस्य मानसज्ञानस्य अतिथिं विषयं करोति । यद्यपि दूतादिभ्यः श्रवणादिना अस्मिन्नेव जन्मन्युत्-

अत्र चिन्ताख्यव्यभिचारिभावस्योदयाद्भावोदयनामालंकारः, वृत्त्यनुप्रासः, अन्तययमकञ्चेति संसृष्टिः । 'सन्देशहरो दूतः' इति, 'वन्दिनः स्तुतिपाठका' इति, 'चारणास्तु कुशीलवाः' इति, 'दुर्मना विमना अन्तर्मनाः स्यात्' इति चामरः ॥ ३७ ॥

पूर्व्वत्र च शब्दः समुच्चयमात्रे, शेषे चद्वयमुभयप्राधान्यद्योतने च । 'भित्तिः स्त्री कुड्यम्' इति, 'कारुः शिल्पी' इति चामरः ॥ ३८ ॥

तथाच—'तस्योषा नाम दुहिता स्वप्ने प्राद्युम्निना रतिम् । कन्यालभत कान्तेन प्रागदृष्टा-

निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
अदर्शि सङ्गोप्य कदाप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः ॥ ४० ॥
अहो अहोभिर्महिमा हिमागमेऽप्यतिप्रपेदे प्रति तां स्मरार्दिताम् ।
तपर्त्तुपूर्त्तावपि मेदसां भरा विभावरीभिर्बिभराम्बभूविरे ॥ ४१ ॥

पन्नात् संस्कारादत्र स्वप्नः सम्भवति, तथापि दमयन्त्यास्तथाविधस्वप्नदर्शनस्य वास्तवप्राक्तन-संस्कारजन्यत्वात्तथोक्तम् ॥ ३९ ॥

स्वप्नदर्शनमेव विशिष्याह । निमीलितादिति । निद्रया कदापि कस्मिन्नपि समये अवीक्षितोऽदृष्टो महत् रहस्यम् अतिगोपनीयं वस्तु स महीपतिर्नलः अस्या दमयन्त्या अदर्शि दर्शितः । किं कृत्वा निमीलितात् मुद्रितात् अक्षियुगात् नयनद्वयात् सङ्गोप्य सम्यक् गोपयित्वा । ननु त्वगादिकमपीन्द्रियं वर्त्तते ततः किं न कृतं गोपनमित्याह—बाह्यस्य वहिर्भूतार्थग्राहकस्य इन्द्रियस्य त्वगादेर्यत् मौनं स्वस्वविषयाग्राहकत्वं तेन मुद्रितात् तत्तदिन्द्रियजन्यज्ञानसम्पादकताशून्यात् हृदोऽपि मनसोऽपि मनोयुक्तबाह्येन्द्रियादपीति यावत् सङ्गोप्य अतिरहस्यवस्तुनो'हि गोपनमुचितमेव । बाह्येन्द्रियस्य मौनं मुद्रितं यत्रेति एवंविशिष्टान्मनसः सङ्गोप्येति केचित् । निद्रायाम् अन्येभ्यः संगोप्य अतिरहस्यभूतं नायकं दर्शयन्त्याः सख्या व्यवहारारोपात् समासोक्त्यलंकारोऽयम् ॥ ४० ॥

स्वप्नदर्शनानन्तरमस्याः कामावस्थामाह । अहो इति आश्चर्य्यं हिमागमेऽपि हेमन्तेऽपि अहोभिर्दिवसैः स्मरार्दितां कामपीड़ितां तां दमयन्तीं प्रति महिमा महत्त्वम् अति अतिशयं प्रपेदे प्राप्तः । तथा तपर्त्तुपूर्त्तावपि ग्रीष्मपूरणेऽपि विभावरीभीरात्रिभिर्मेदसां भराः स्थौल्याधिक्यानि बिभराम्बभूविरे धृताः । कामपीड़िताया अस्याः दुःखितचित्ततया दिवारात्र्योः क्षपणं दुष्करं भूतमिति भावः । हेमन्ते दिवसस्य ग्रीष्मे रात्रेश्चातिक्षुद्रत्वेऽपि महत्त्वादाश्चर्य्यम् । मेदसां भरा इति गौणप्रयोगः ॥ ४१ ॥

श्च तेन स.' इति श्रीमद्भागवतम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः इति जीवातुः । अर्थापत्तिः, यमकञ्चेति संसृष्टिः ॥ ३९ ॥

अत्र निद्रायां सख्या व्यवहारारोपणेन समासोक्तिः, पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः । अथच अन्यया वृत्या सर्वलोकात् सङ्गोप्य नायिकायाः सम्बन्धे रहस्यभूतो-नायको दर्श्यते इत्यलंकारेण वस्तुध्वनिः इति भरतः ॥ ४० ॥

अत्र हिमागमे कारणे सत्यपि दिनानां लघुत्वं कार्यं नोक्तम्; तथा ग्रीष्मे कारणे सत्यपि रात्रीणां लघुता नोक्ता इति विशेषोक्तिरलंकारः । दिनरात्रिमहत्त्वे स्मरार्दितत्वं कारणमस्ति तेन विभावना, छेकानुप्रासवृत्त्यनुप्रासालंकारौ चेति संसृष्टिः इति सां । विरोधाभासालंकारद्वयमिति केचित् ॥ ४१ ॥

स्वकान्तिकीर्त्तिव्रजमौक्तिकस्रजः श्रयन्तमन्तर्घटनागुणश्रियम् ।
कदाचिदस्या बुधधैर्य्यलोपिनं नलोऽपि लोकादशृणोद्गुणोत्करम् ॥ ४२ ॥
तमेव लब्ध्वावसरं ततः स्मरः शरीरशोभाजयजातमत्सरः ।
अमोघशक्त्या निजयेव मूर्त्तया तया विनिर्जेतुमियेष नैषधम् ॥ ४३ ॥
अकारि तेन श्रवणातिथिर्गुणः क्षमाभुजा भीमनृपात्मजालयः ।
तदुच्चधैर्य्यव्ययसंहितेषुणा स्मरेण च स्वात्मशरासनाश्रयः ॥ ४४ ॥

अन्योऽन्यानुरागाय नलस्य दमयन्तीज्ञानमाह । स्वकान्तीति । नलोऽपि कदाचित् कस्मिन्नपि काले बुधधैर्य्यलोपिनं का कथान्येषां बुधानां पण्डितानामपि धैर्य्यमवश्यं लुम्पतीति तादृशम् । युवधैर्य्यलोपिनमित्यपि क्वचित् पाठः तरुणानां धैर्य्यविलोपकमित्यर्थः । अस्या दमयन्त्या गुणोत्करं सौन्दर्य्यादिगुणसमूहं लोकात् दूतादेः अशृणोत् श्रुतवान् । किम्भूतं स्वकान्तेर्निजसौन्दर्य्यस्य यः कीर्त्तिव्रजो यशःसमूहः स एव मौक्तिकस्रक् मुक्तामाला तस्या योऽन्तर्घटनाया अन्तर्ग्रन्थनाया गुणः सूत्रं तस्य श्रियं शोभां श्रयन्तं भजमानं स्वयोग्यमित्यर्थः । सदृशेन हि सूत्रेण मुक्ता-ग्रथ्यन्ते ॥ ४२ ॥

तस्याः श्रवणेन नलस्यापि स्मरदशावर्णनार्थं सम्प्रति कामकर्तृकजयमाह । तमेवेति । शरीरस्य या शोभा सौन्दर्यं तस्या जयेन जातो मत्सरो द्वेषो यस्य सः । नलशरीरशोभायाः कामशरीर-शोभातोऽप्युत्कृष्टत्वात् । स्मरः कामस्ततस्तद्गुणश्रवणानन्तरं तमेव अवसरं जयसमयं लब्ध्वा प्राप्य मूर्त्तया मूर्त्तिमत्या निजया आत्मीयया अमोघशक्त्या इवोत्प्रेक्षे अन्वर्थाख्यविशेषणेव तया दमयन्त्या करणभूतया नैषधं नलं विनिर्जेतुं पराभवितुम् इयेष इच्छति स्म ॥ ४३ ॥

जयेच्छानन्तरं कामेन किं कृतमित्याह । अकारीति । क्षमाभुजा राज्ञा तेन नलेन भीम-नरेन्द्रजा दमयन्ती आलय आश्रयो यस्य स गुणः सौन्दर्य्यादिः श्रवणातिथिः श्रवणविषयोऽकारि कृतः, तथा तस्य नलस्य यत् उच्चं महत् धैर्य्यं व्यवसायादचलनं तस्य व्ययाय विनाशाय संहितो-

अत्र कीर्तिव्रजगुणोत्करयोर्मुक्ताहारगुम्फनसूत्रत्वरूपणात् रूपकालंकारः इति जीवातुः । गुणश्रियमिति अन्यस्य श्रियं कथमन्यः श्रयतीति वस्तुसम्बन्धोऽसम्भवन् श्रियमिव श्रियमिति सादृश्याक्षेपात् निदर्शना, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः । 'उत्करः कूटमस्त्रियाम्' इत्यमरः ॥ ४२ ॥

गुणोत्प्रेक्षा, पदार्थहेतुकं काव्यलिङ्गम्, अन्त्यानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'मत्सरोऽन्यशुभद्वेषे तद्वत् कृपणयोस्त्रिषु' इति, 'कासूसामर्थ्ययोः शक्तिर्मूर्तिः काठिन्यकाययोः' इति चामरः ॥ ४३ ॥

अत्र उत्तरवाक्यार्धस्य पूर्ववाक्यहेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् इति जीवातुः । प्रस्तुतयो-

अमुष्य धीरस्य जयाय साहसी तदा खलु ज्यां विशिखैः सनाथयन् ।
निमज्जयामास यशांसि संशये स्मरस्त्रिलोकीविजयार्जितान्यपि ॥ ४५ ॥
अनेन भैमीं घटयिष्यतस्तथा विधेरबन्ध्येच्छतया व्यलासि तत् ।
अभेदि तत्तादृगनङ्गमार्गणैर्यदस्य पौष्पैरपि धैर्यकञ्चुकम् ॥ ४६ ॥

लक्ष्योन्मुखीकृत इषुर्येन तादृशेन स्मरेण च कन्दर्पेण च सुशोभनं यत् आत्मनः स्वस्य शरासनं धनुस्तदेव आश्रयो यस्य तथाभूतो गुणो मौर्वी श्रवणातिथिः कर्णसमीपवर्त्ती अकारि आकर्णमाकृष्ट इत्यर्थः ॥ ४४ ॥

न पुनरस्य जयः कामेन सुकर इत्याह । अमुष्येति । तदा तस्मिन् काले शरीरानपेक्षं कर्म साहसं तदस्यास्तीति साहसी । श्लोकावसानस्थस्यापेरत्रैवानुषङ्गः । साहस्यपि स्मरः साहसित्वं हरतपोभङ्गादौ सुव्यक्तम् । धीरस्य व्यवसायादचञ्चलस्यामुष्य नलस्य जयाय ज्यां मौर्वीं विशिखैर्बाणैः सनाथयन् संयोजयन् सन् खलूत्प्रेक्षे त्रिलोकीविजयेन त्रिभुवनानां विशेषेण जयेन अर्जितानि जनितानि यशांसि कामो महाधन्वीत्यनुरागान् संशये स्थास्यन्ति न वेति सन्देहे निमज्जयामास चिक्षेप । एतेन नलस्य जितेन्द्रियत्वं सूचितम् ॥ ४५ ॥

तथाविधो धीरः कथं कन्दर्पेण जित इत्याह । अनेनेति । पौष्पैरपि पुष्पमयैरपि अनङ्गमार्गणैः कामबाणैः अस्य राज्ञः तत्तादृक् अनिर्वचनीयमभेद्यं धैर्यमेव कञ्चुकं कवचं धैर्यकञ्चुकं यत् अभेदि भिन्नं तदनेन राज्ञा सह भैमीं दमयन्तीं तथा तेन प्रकारेणान्योऽन्यानुरागेण घटयिष्यतो योजयिष्यतो विधेर्विधातुरबन्ध्येच्छतया अमोघाभिलाषेण व्यलासि विलसितम् । पुष्पमयो बाणो भेत्ता अनङ्गः भेद्यञ्च तादृक् धैर्यकञ्चुकमिति यद्यपि भेदस्य सर्वथाऽसम्भवस्तथापि यद्भिन्नं तत् फलावश्यम्भाविकाया विधीच्छाया एव क्रीडितमिति भावः । 'कञ्चुको वारबाणोऽस्त्री' इति त्रिकाण्डे । अस्त्रीत्यस्य कञ्चुक इत्यनेनाप्यन्वयादत्र कञ्चुकशब्दस्य क्लीबत्वम् ॥ ४६ ॥

नलकामयोः 'अकारि' इत्येकक्रियया सह कर्तृत्वेनान्वयात् तुल्ययोगिता, 'स्वात्म' इति पुनरुक्तवदाभासोऽलंकारश्चेति संसृष्टिः इति सा० ॥ ४४ ॥

अत्र स्मरस्योक्तसंशयनिमज्जनस्यासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, वृत्त्यनुप्रासः अर्थापत्त्यलंकारश्चेति संसृष्टिः ॥ ४५ ॥

पुष्पमयबाणैरपि कञ्चुकं भिन्नमिति विरोधः, तस्य विधिविलासेनाभासीकरणाद् विरोधाभासोऽलंकारः, स च धैर्यकञ्चुकमितिरूपकोत्थापित इति तयोरङ्गाङ्गिभावेन संकरः इति जीवातुः । अत्रानुमानविरोधौ इति सा० ॥ ४६ ॥

किमन्यदद्यापि यदस्त्रतापितः पितामहो वारिजमाश्रयत्यहो ।
स्मरन्तनुच्छायतया तमात्मनः शशाक शङ्के स न लङ्घितुं नलः ॥ ४७ ॥
उरोभुवा कुम्भयुगेन जृम्भितं नवोपहारेण वयस्कृतेन किम् ।
त्रपासरिद्दुर्गमपि प्रतीर्य्य सा नलस्य तन्वी हृदयं विवेश यत् ॥ ४८ ॥

दुर्निवार्य्याः खलु कामवाणा इत्याह । किमन्यदिति । अहो आश्चर्यम् अन्यत् किं वक्तव्यं पितामहो ब्रह्मा यस्य कामस्य अस्त्रेण तापितः सन् अद्यापि वारिजं पद्मं आश्रयति भजते शङ्के इत्यहमुत्प्रेक्षे तं स्मरं लङ्घितुम् अतिक्रमितुं स नलः आत्मनः स्वस्मात् तन्वी अल्पा छाया-शोभा यस्य तस्य भावस्तया तनुच्छायतया अल्पच्छायोऽसावित्यनास्थयेवेत्यर्थ इत्युत्प्रेक्षा । अथ च आत्मनः स्वस्य तनोः शरीरस्य छाया प्रतिविम्वं तनुच्छायं तस्य भावस्तया । आत्मशरीरच्छाया हि केनापि लङ्घितुं न शक्यते यथा यथा हि तल्लङ्घने प्रयत्नः क्रियते तथा तथा सा वर्द्धते इति भावः । न शशाक न शक्तो बभूव । पितामह इति प्राचीनत्वप्रकटनाय । प्राचीनस्याप्येतादृशी दशा, का कथा यूनामिति ध्वनिः । वारिजमिति च शैत्यप्रकटनाय ॥ ४७ ॥

भङ्ग्या नलस्य दमयन्तीचिन्तां वर्णयति । तन्वी क्षीणाङ्गी सा दमयन्ती त्रपा लज्जारूपा या सरित् नदी सैव दुर्गं दुर्गमस्थानं तदपि प्रतीर्य सन्तीर्य नलस्य हृदयं यत् विवेश प्रविष्टवती तत् किं वयस्कृतेन वयसा यौवनेन पक्षे कुलालेन कृतेन जनितेन नवोपहारेण नवानां यूनामुपहारेण उपढौकनेन पक्षे नवं नवीनञ्च तत् उप समीपे हारो मुक्तावली यस्य तच्चेति तेन उरोभुवा स्तनरूपेण अथ च वक्षःस्थितेन कुम्भयुगेन कलशद्वयेन जृम्भितं विलसितम् । अन्या अपि स्त्रियो-वक्षःस्थापितकुम्भद्वयेन नदीसन्तरणं कृत्वा सङ्केतस्थानं प्रविशन्तीति वाच्योत्प्रेक्षेयम्, किंशब्दस्य उत्प्रेक्षावाचकत्वात् । रूपकमप्येकदेशस्थम् ॥ ४८ ॥

कामलङ्घने पितामहोऽप्यशक्तः किमुत नलइत्यर्थापत्तिरलंकारः, तनोश्छायेव च्छाया इत्युपमा, छाययोरभेदाध्यवसायादतिशयोक्तिः, अलङ्घ्यत्वे तनुच्छायतायाः हेतुत्वोत्प्रेक्षणाद् हेतूत्प्रेक्षा, सा च 'शंके' इति व्यञ्जकप्रयोगाद् वाच्या, वृत्त्यनुप्रासश्चेति संसृष्टिः इति जीवातुः । अत्र छाया शब्दस्य षष्ठ्यन्तपरत्वान्नपुंसकत्वम् । 'षष्ठ्यन्तप्राक्पदाः सेनाच्छायाशालासुरानिशाः' इति स्त्री-नपुंसकसंग्रहे अमरः । 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इति चामरः ॥ ४७ ॥

अत्र स्तनरूपविषयनिगरणेनाभेदाध्यवसायादतिशयोक्तिः, जृम्भणं किमिति तन्मूलोत्प्रेक्षा, इति जीवातुः । दमयन्त्यां तादृशाभिसारिकाया व्यवहारारोपणात् समासोक्तिः, रूपकम्, छेकानुप्रासश्चेति संसृष्टिः । 'उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः । 'वयः पक्षिणि बाल्यादौ वयो-यौवनमात्रके' इति विश्वः । 'बाल्यादिके वयः क्लीवं पुमान् पक्षिकुलालयोः' इति नाममाला ॥ ४८ ॥

अपह्नुवानस्य जनाय यन्निजामधीरतामस्य कृतं मनोभुवा ।
अबोधि तज्जागरदुःखसाक्षिणी निशा च शय्या च शशाङ्ककोमला ॥ ४९ ॥
स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत ।
त्यजन्त्यसून् शर्म्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम् ॥ ५० ॥
मृषाविषादाभिनयादयं क्वचिज् जुगोप निश्वासततिं वियोगजाम् ।
विलेपनस्याधिकचन्द्रभागता-विभावनाच्चापललाप पाण्डुताम् ॥ ५१ ॥

हृदयप्रविष्टायां दमयन्त्यामस्यावस्थाविशेषमाह । अपह्नुवानस्येति । जनाय लोकाय निजामधीरतामधैर्य्यम् अपह्नुवानस्य गोपयतोऽस्य राज्ञो मनोभुवा कामेन यत् कृतं तत् कामकरणं जागरे निद्राच्छेदे यद्दुःखं तस्य साक्षिणी प्रमाणभूता निशा च शय्या च अबोधि अनुभूतवती । किम्भूता निशा शशाङ्केन चन्द्रेण कोमला मृद्वी शीतलेत्यर्थः ज्योत्स्नीति यावत् । किम्भूता शय्या—शशस्य शशकनाम्नो मृगविशेषस्य अङ्कवत् कोमला मृदुला । दिवसे कथञ्चिद्विकारं गोपयतस्तस्य रात्रावतिसन्तापोऽभूदित्यभिप्रायः ॥ ४९ ॥

नन्वेवञ्चेत् तत्पितरं कथं तां न याचितवानित्याह । स्मर इति । स प्रभुः स्वामी नलः भृशमतिशयं स्मरोपतप्तोऽपि कामपीड़ितोऽपि विदर्भराजं भीमं तनयां पुत्रीं दमयन्तीं न अयाचत न प्रार्थयामास । कुत इत्याह—यतो मानिनो जना वरम् असून् प्राणान् शर्म्म च सुखञ्च त्यजन्ति तु पुनः एकं केवलमयाचितव्रतम् अप्रार्थनारूपं नियमं न त्यजन्ति । अर्थान्तरन्यासोऽयम् ॥ ५० ॥

अस्य च्छलेन कामविकारगोपनमाह । मृषेति । अयं नलः क्वचित् स्थाने मृषा मिथ्या यो विषादः शोचनं तस्याभिनयात् प्रकाशात् वियोगजां दमयन्तीविरहजनितां निश्वासानां ततिं विस्तारं जुगोप संगोपितवान् । तथा विलेपनस्य अङ्गरागस्य अधिकचन्द्रभागतायाश्चन्द्रस्य कर्पूरस्य भागोऽंशश्चन्द्रभागः अधिकश्चन्द्रभागो यत्र तस्य भावस्तादृश्याः विभावनाच्च ख्यापनाच्च पाण्डुताम्

---

अत्र निशाशय्ययोरबोधीत्येकया क्रियया सह कर्त्तृतयान्वयात् तुल्ययोगिता, दुःखसाक्षिणीति पदार्थस्य बोधं प्रति हेतुत्वेन काव्यलिङ्गम्, शशाङ्ककोमलेति श्लेष उपमा च । श्रुत्यनुप्रासवृत्त्यनुप्रासौचेति संसृष्टिः ॥ ४९ ॥

प्रभुपदेन ईश्वरत्वात् प्राप्तुमस्य योग्यताप्यस्तीति सूचितम् । अत्र असुशर्मणोः त्यजन्तीत्येकक्रियया सह कर्मतयान्वयात् तुल्ययोगिता, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारश्चेति संकरः । 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये' इत्यमरः । 'मनागिष्टे वरं क्लीबं केचिदाहुस्तदव्ययम्' इति मेदिनी । 'मानश्चित्तसमुन्नतिः' इत्यमरः । त्यजन्तीति द्विः प्रयुक्तमपि न दुष्टम् । 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इति प्रायिकत्वात् । 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च' इत्यादि प्रयोगदर्शनाच्च । अवधारणे पुनरुक्तस्य दोषावहत्वाभावाच्च ॥ ५० ॥

अत्र व्याजोक्तिरलंकारः । अङ्गगताभ्यां मृषाविषादचन्द्रभागपाण्डिमभ्यां तद्विरहपाण्डि-

शशाक निह्नोतुमनेन तत्प्रियामयं बभाषे यदलीकवीक्षिताम् ।
समाज एवालपितासु वैणिकैर्मुमूर्च्छ यत्पञ्चममूर्च्छनासु च ॥ ५२ ॥
अवाप सापत्रपतां स भूपतिर्जितेन्द्रियाणां धुरि कीर्त्तितस्थितिः ।
असम्वरे शम्बरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि ॥ ५३ ॥
अलं नलं रोद्धुममी किलाभवन् गुणा विवेकप्रमुखा न चापलम् ।
स्मरः स रत्यामनिरुद्धमेव यत् सृजत्ययं सर्गनिसर्ग ईदृशः ॥ ५४ ॥

अपललाप जुगोप ॥ ५१ ॥

अस्याङ्गिकविकारनिह्नवमुक्त्वा इदानीं वाचिकविकारनिह्नवमाह । शशाकेति । अयं नलः अलीकवीक्षितां भ्रान्त्या पुरोवर्त्तिनीकृत्य दृष्टां प्रियां दमयन्तीं यत् बभाषे एह्येहि प्रिये ते स्वागतमित्यादि यदुवाच तत् अनेन वक्ष्यमाणप्रकारेण निह्नोतुं सङ्गोपयितुं शशाक शक्तो बभूव । अनेन केनेत्याह—वैणिकैर्वीणावादकैः पञ्चममूर्च्छनासु च पञ्चमस्य कोकिलस्वरतुल्यस्वरविशेषस्य मूर्च्छनासु च रागेषु च आलपितासु गीतासु सतीषु समाजएव सामाजिकगणएव यत् मुमूर्च्छ मुमोह । अतिसुश्राव्यतया तासां मनोहरत्वात् । मूर्च्छनालक्षणमाह भरतः—'स्वरः संमूर्च्छितो-यत्र रागतां प्रतिपद्यते । मूर्च्छनामिति तामाहुः कवयो ग्रामसम्भवाम्' इति ॥ ५२ ॥

इतः परमस्य कामविकाराभिव्यक्तिं वर्णयति । अवापेति । तत्र दमयन्त्यनुरागोत्पन्ने शम्बरवैरिणः शम्बरनामकदानवरिपोः कामस्य विक्रमे पराक्रमे पराक्रमजनितगोत्रस्खलनादिविकार-इत्यर्थः क्रमेण स्फुटतां व्यक्तताम् उपेयुषि प्राप्तवति सति स भूपतिर्नलः सापत्रपताम् अन्येभ्यः सलज्जताम् अवाप प्राप्तवान् । ननु तथाविधो धीरः कथं कामविक्रममपि न सम्वृतवानिति तं विशिनष्टि—असम्वरे प्रबलतया असंगोप्ये । तर्हि भवतु तथाविधकामविक्रमस्य सार्व्वलौकिकस्य प्रकाशः कथमन्येभ्यो लज्जितवानिति नलस्यापि हेतुगर्भविशेषणमाह—जितानि वशीकृतानि इन्द्रियाणि यैस्तेषां धुरि अग्रगणनायां कीर्त्तिता प्रशंसिता स्थितिर्म्मर्य्यादा यस्य सः ॥ ५३ ॥

ननु सत्सु विवेकादिगुणेषु कथमयमीदृशीं कामवशतामापन्न इत्युपपादयति । अलमिति ।

---

मनोनिगूहनान्मीलितालंकार इति प्राञ्चः । 'अथ कर्पूरमस्त्रियाम्, घनसारश्चन्द्रसंज्ञः' इत्यमरः ॥ ५१ ॥

एतेन ह्रीत्यागोन्मादमूर्च्छावस्थाः सूचिताः । छेकानुप्रासः । 'वीणावादस्तु वैणिकः' इति, 'निषादर्षभगान्धारषड्जमध्यमधैवताः पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः' इति चामरः ॥ ५२ ॥

वृत्त्यनुप्रासान्त्यानुप्रासच्छेकानुप्रासालंकाराः । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' इत्यमरः ॥ ५३ ॥

यद्यपि रुक्मिकन्यायामेवानिरुद्धोत्पत्तिस्तथापि कल्पभेदेनेदं कथनम् । सामान्येनैव विशेष-

अनङ्गचिह्नं स विना शशाक नो यदासितुं संसदि यत्नवानपि ।
क्षणन्तदारामविहारकैतवान्निषेवितुं देशमियेष निर्जनम् ॥ ५५ ॥
अथ श्रिया भर्त्सितमीनकेतनः समं वयस्यैः स्वरहस्यवेदिभिः ।
पुरोपकण्ठं स वनङ्किलेक्षिता दिदेश यानाय निदेशकारिणः ॥ ५६ ॥
अमी ततस्तस्य विभूषितं सितं जवेऽपि मानेऽपि च पौरुषाधिकम् ।
उपाहरन्नश्वमजस्रचञ्चलैः खुराञ्चलैः क्षोभितमन्दुरोदरम् ॥ ५७ ॥

अमी विवेकप्रमुखाः सारासारविचारोविवेकस्तत्प्रमुखास्तदादयः । प्रमुखपदेन धैर्यादीनां ग्रहणम् । गुणाः किल निश्चितं नलं चापलं चाञ्चल्यं रोद्धुं न अलं न समर्था अभवन् । रुधेर्द्विकर्म्मकत्वात् चापलमिति गौणं कर्म्म । कथमेवमित्याह --ईदृशोऽयं सर्गनिसर्गः सृष्टिस्वभावः यत् स प्रसिद्ध-प्रभावः स्मरः रत्यामनुरागे सत्याम् अनिरुद्धमेव अनर्गलमेव अनिवार्यमेवेत्यर्थः पुरुषं सृजति करोति । अथ च स्मरो रत्यां स्वपत्न्याम् अनिरुद्धं नाम स्वपुत्रं सृजति जनयति अयं हि सृष्टिस्वभावः ॥ ५४ ॥

अत्यर्थं प्रकटिते कामविकारे तेन किं कृतमित्याह । अनङ्गेति । स नलः यत्नवानपि कामविकार-गोपने कृतप्रयासोऽपि संसदि सभायाम् अनङ्गचिह्नं कामलक्षणं विना क्षणमपि आसितुम् अवस्थातुं यदा नो शशाक तदा तस्मिन् समये आरामविहारकैतवात् उपवनविहरणच्छलात् निर्जनं देशं निषेवितुम् आश्रयितुम् इयेष इच्छति स्म । यत्नवानपीत्यत्रापेः क्षणमित्यनेनाप्यन्वयोबोध्यः ॥ ५५ ॥

इच्छानन्तरं प्रवृत्तौ तदुद्योगमाह । अथेति । अथानन्तरं श्रिया शोभया भर्त्सितस्तिरस्कृतो-मीनकेतनः कन्दर्पो येन तादृशः स नलः स्वरहस्यवेदिभिर्निजगोप्यविषयज्ञातृभिर्वयस्यैः स्निग्धैः समं सह पुरोपकण्ठं नगरसमीपं वनं किल व्याजेन ईक्षिता दर्शनशीलः सन् निदेशकारिण-आज्ञाकारिणो जनान् यानाय यानं वाहनमानेतुं दिदेश आज्ञापयामास ॥ ५६ ॥

यानानयनं वर्णयति । अमी इति । तत आदेशानन्तरं अमी निदेशकारिणस्तस्य राज्ञः निकट इति शेषः विभूषितम् अश्वालङ्कारैः कुथादिभिरलङ्कृतं सितं शुक्लं जवेऽपि वेगेऽपि मानेऽपि च परिमाणेऽपि च पौरुषेण पराक्रमेण ऊर्ध्वविस्तृतहस्तस्य पुरुषस्य यत् परिमाणं तेन च अधिकं

समर्थनरूपोऽर्थान्तरन्यासालंकारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः । 'रतिः स्मरप्रियायाञ्च रागे च रमणे रतिः' इति, 'अनिरुद्ध उषानाथे चरे वाऽनर्गलेऽनयवत्' इति च विश्वः ॥ ५४ ॥

वृत्त्यनुप्रासोऽलंकारः । अपह्नुतिरिति प्राञ्चः । 'अभावे नह्य नो नापि' इति, 'सभासमिति-संसदः' इति, 'कालविशेषोत्सवयोः क्षणः' इति, 'आरामः स्यादुपवनम्' इति चामरः ॥ ५५ ॥

अत्रोपमालंकारश्छेकानुप्रासेन संसृज्यते । सहोक्तिश्चेति प्राञ्चः । 'किल सम्भावनायां स्याद्व्याजनिश्चययोरपि' इति विश्वः । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्' इत्यमरः ॥ ५६ ॥

अथान्तरेणावटुगामिनाध्वना निशीथिनीनाथमहःसहोदरैः ।
निगालगाद्देवमणेरिवोत्थितै-र्विराजितं केशरकेशरश्मिभिः ॥ ५८ ॥
अजस्रभूमीतटकुट्टनोत्थितै-रुपास्यमानं चरणेषु रेणुभिः ।
रयप्रकर्षाध्ययनार्थमागतै-र्जनस्य चेतोभिरिवाणिमाङ्कितैः ॥ ५९ ॥

महान्तम् अश्वम् उपाहरन् उपनिन्युः । किम्भूतम् अजस्रचञ्चलैरनवरतचपलैः खुरस्य शफस्य अञ्चलैरेकदेशैः प्रान्तैरित्यर्थः क्षोभितं क्षुण्णं मन्दुराया अश्वशालाया उदरम् अभ्यन्तरं येन तादृशम् ॥ ५७ ॥

सप्तभिः श्लोकैरन्तरकुलकेनाश्वं विशिनष्टि । अथेति । अथाश्वानयनानन्तरं सः क्षितिपाकशासनः पृथिवीन्द्रो नलः हयमारुरोहेत्यग्रिमसप्तमश्लोकेनान्वयः । किम्भूतं हयं—निशीथिनीनाथमहःसहोदरैः शुभ्रत्वाच्चन्द्रकिरणतुल्यैः केशररूपा ये केशास्तेषां रश्मिभिः किरणैर्विराजितं शोभितम् । अत्रोत्प्रेक्षते किम्भूतैः आन्तरेण मध्यवर्त्तिना अवटुगामिना घाटापर्य्यन्तगतेन अध्वना पथा निगालगात् गलदेशनिष्ठात् देवमणेः रोमावर्त्तविशेषात् अथ च कौस्तुभात् उत्थितैरिव उद्गतैरिव कौस्तुभात्तेजांसीव वहिर्भूतानीत्युत्प्रेक्षा ॥ ५८ ॥

पुनः किम्भूतमित्याह । अजस्रेति । अजस्रम् अविरतं यत् भूमितटस्य कुट्टनं खननं तेन उद्गतैरुत्थितैः रेणुभिर्धूलिभिश्चरणेषु पादचतुष्टयावच्छेदेन उपास्यमानं सेव्यमानं युक्तमिति यावत् । अत्रोत्प्रेक्षते—रयप्रकर्षस्य वेगोत्कर्षस्य अध्ययनार्थं शिक्षार्थम् आगतैर्जनस्य चेतोभिर्मनोभिरुपास्यमानमिव । जनस्येति जात्याशयत्वादेकवचनं जनानामित्यर्थः, अन्यथा चेतसां बहुत्वानुपपत्तिः स्यात् । कथमेतानि चेतांसीति त्वया ज्ञातमिति चेतोविशेषणा-

वृत्त्यनुप्रासच्छेकानुप्रासालंकारौ । 'खुरैः खनन् यः पृथिवीमश्वो लोकोत्तरः स्मृतः' इति शालिहोत्रे । 'वाजिशाला तु मन्दुरा' इति, 'रंहस्तरसी तु रयः स्यदः जवः' इति, ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु' इति चामरः । 'स्यात् पौरुषं प्रतिष्ठायां नृमाने शुक्रविक्रमे' इति बलः । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तसमुन्नतिः' इति धरणिः ॥ ५७ ॥

'उत्थितैरिव स्थितैः' इति क्रियोत्प्रेक्षा, 'निशीथिनीनाथमहःसहोदरैः' इत्युपमा, 'केशरकेशरश्मिभिः' इति रूपकम्, वृत्त्यनुप्रासः, यमकञ्चेति संसृष्टिः । अन्त्यकुलकम्, अथशब्दप्रक्षेपात् । 'द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम् । कलापकं चतुर्भिः स्यात् कुलकं तदनन्तरम्' इति लक्षणम् । 'अवटुर्घाटा कृकाटिका' इति, 'निगालस्तु गलोद्देशः' इति चामरः । 'घाटाबद्धसमीपस्तु निगालः कथितो बुधैः । तस्मिन् देवमणिर्नाम रोमजः शुभकृन्मतः' इत्यश्वतन्त्रम् । 'देवमणिः शिवेऽश्वस्य कण्ठावर्ते च कौस्तुभे' इति विश्वः ॥ ५८ ॥

अत्र चेतःसु अध्ययनार्थिशिष्याणां व्यवहारारोपणात् समासोक्तिः इति केचित् । अजस्र-

चलाचलप्रोथतया महीभृते स्ववेगदर्पानिव वक्तुमुत्सुकम् ।
अलं गिरा वेद किलायमाशयं स्वयं हयस्येति च मौनमास्थितम् ॥ ६० ॥
महारथस्याध्वनि चक्रवर्त्तिनः परानपेक्ष्योद्वहनाद्यशःसितम् ।
रदावदातांशुमिषादनीदृशां हसन्तमन्तर्बलमर्व्वतां रवेः ॥ ६१ ॥

दुपपादयति- अणिमाङ्कितैः अणिम्ना सूक्ष्मत्वेनाङ्कितैश्चिह्नितैः अणुत्वलिङ्गकानुमितिविषयीभूतैरित्यर्थः न्यायमते चेतसामणुत्वात् । उत्प्रेक्षास्वभावोक्त्योः सङ्करोऽयम् । यस्मात् येनाधीयते स-तस्मादधिकविद्यो भवतीति चेतोभिरुपास्यमानमिवेति कविप्रौढोक्तिसिद्धे नोत्प्रेक्षालङ्कारेण चेतसां वेगादश्वस्य वेगोऽधिक इति व्यतिरेकालङ्कारश्च व्यज्यते ॥ ५९ ॥

पुनः किम्भूतमित्याह । चलाचलेति । प्रोथमश्वनासिका चलाचलप्रोथतया चञ्चलनासिकतया महीभृते राज्ञे नलाय स्वस्य आत्मनः वेगे ये दर्पा अहङ्कारास्तान् वक्तुं कथयितुम् उत्सुकमिव उद्युक्तमिव । तर्हि कथं नोक्तवानित्याह अयं राजा हयस्य अश्वस्य आशयमभिप्रायं स्वयमात्मनैव वेद जानाति अतोगिरा कथनेनालं वृथा इति हेतोः किलोत्प्रेक्षे मौनम् अभाषणम् आस्थितञ्च आश्रितञ्च । नलस्य अश्वाभिप्रायाभिज्ञत्वञ्च भारतादिषु प्रसिद्धम् । अत्रापि उत्प्रेक्षास्वभावोक्त्योः सङ्करः ॥ ६० ॥

पुनः किम्भूतमित्याह । महारथस्येति । महारथस्य रथिकविशेषस्य चक्रवर्त्तिनः सार्वभौमस्य नलस्य अध्वनि पथि परः स्वभिन्नोऽनपेक्ष्योऽनपेक्षणीयो यत्र तथाभूतादुद्वहनाद्देशान्तरप्रापणाद्धेतो-र्यशसा सितं शुक्लम् अतएव रदानां दन्तानां येऽवदाताः श्वेता अंशवः किरणास्तेषां मिषाच्छलात् अनीदृशा न एतत्सदृशास्तेषां कुत्सितानामित्यर्थः रवेः सूर्य्यस्य अर्वतां घोटकानां बलम् अन्तर्मनसि हसन्तम् । विभक्तिव्यत्ययेन श्लिष्टं पूर्वार्द्धमपि सूर्य्याश्वानां विशेषणं कवेरभिप्रेतं तथाहि अध्वनि आकाशगमनात् शब्दशून्यं यच्चक्रं तेन वर्त्तितुं शीलं यस्य तथाभूतस्य महारथस्य महतः स्यन्दनस्य परान् अन्यान् अपेक्ष्य सहायीकृत्य तस्य सप्ताश्ववाह्यत्वात् यत् उद्वहनं तेन हेतुना यशसि सितानां क्षीणानाम् । सोऽन्तकर्मणीत्यस्य रूपम् । श्लेषमूलव्यतिरेकापह्नुतिस्वभावोक्ती-नामङ्गाङ्गिभावः सङ्करोऽयम् । महारथस्य लक्षणं यथा –'रथेनैकेन यः शत्रून् साहङ्कारो-व्रजत्यलम् । महारथः स विज्ञेयो युद्धशास्त्रविशारदः' इति ॥ ६१ ॥

---

भूमितटकुट्टनमुत्तमाश्वजातिः ॥ ५९ ॥

किलेति वक्तुमुत्सुकमिवेति उत्प्रेक्षाद्वयम् वृत्त्यनुप्रासश्चेति संसृष्टिः । 'सापह्नवोत्प्रेक्षालंकारः' इति सां । 'घोणा तु प्रोथमस्त्रियाम्' इत्यमरः ॥ ६० ॥

अत्र मिषशब्देनांशूनामसत्यत्वमापाद्य हासत्वोत्प्रेक्षणात् सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा-लंकारः । 'चक्रवर्ती सार्वभौमः' इति, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इति, 'रदना दशना-दन्ता रदाः' इति चामरः ॥ ६१ ॥

सितत्विषश्चञ्चलतामुपेयुषो मिषेण पुच्छस्य च केशरस्य च ।
स्फुटं चलच्चामरयुग्मचिह्नकै-रनिह्नुवानं निजवाजिराजताम् ॥ ६२ ॥
अपि द्विजिह्वाभ्यवहारपौरुषे मुखानुषक्तायतवल्गुवल्गया ।
उपेयिवांसं प्रतिमल्लतां रय-समये जितस्य प्रसभं गरुत्मतः ॥ ६३ ॥
स सिन्धुजं शीतमहःसहोदरं हरन्तमुच्चैःश्रवसः श्रियं हयम् ।
जिताखिलक्ष्माभृदनल्पलोचन-स्तमारुरोह क्षितिपाकशासनः ॥ ६४ ॥

पुनः किम्भूतमित्याह । सितत्विष इति । सिता शुभ्रा त्विट् कान्तिर्यस्य तादृशस्य तथा चञ्चलतां चापल्यम् उपेयुष उपगतस्य पुच्छस्य लाङ्गूलस्य केशरस्य च ग्रीवास्थबालस्य च मिषेण छलेन स्फुटमुत्प्रेक्षे चलतोश्चामरयोर्यत् युग्मं द्वयं तदेव चिह्नानि चिह्नकरणानि तैर्निजवाजिराजतां स्वस्य अश्वराजताम् अनिह्नुवानं प्रकाशयन्तम् । अन्येषामपि राज्ञामुभयपार्श्वे चामरद्वयं तिष्ठतीत्युत्प्रेक्षा । चिह्नकैरिति बालानां बहुत्वाद्बहुवचनम् ॥ ६२ ॥

पुनः किम्भूतमित्याह । अपीति । मुखे अनुषक्ता युक्ता आयता दीर्घा वल्गुः शोभना या वल्गा दन्तालिकानामरज्जुविशेषस्तया करणेन रयसमये वेगदर्पे प्रसभं हठात् जितस्य पराभूतस्य गरुत्मतो गरुडस्य द्विजिह्वस्य सर्पस्य योऽभ्यवहारो भोजनं तद्रूपं यत् पौरुषं पुरुषकारस्तस्मिन्नपि प्रतिमल्लतां प्रतिपक्षवीरताम् उपेयिवांसम् उपगतम्, वल्गायाः सर्पतुल्यत्वात् ॥ ६३ ॥

पुनः किम्भूतमित्याह । स सिन्धुजमिति । सिन्धुजं सिन्धुदेशोद्भवं तथा शीतमहसश्चन्द्रस्य सहोदरं तुल्यं शुक्लत्वात् तथा उच्चैःश्रवस इन्द्रघोटकस्य श्रियं शोभां हरन्तं तत्सदृशमित्यर्थः । सिन्धुजमिति शीतमहःसहोदरमिति च विभक्तिविपरिणामादुच्चैःश्रवसोऽपि विशेषणं तथाहि सिन्धुजस्य समुद्रोत्पन्नस्य शीतमहःसहोदरस्य चन्द्रसहजस्य एकसमुद्रोदरस्थितत्वात् । स किम्भूतः जिता अखिला अशेषाः क्ष्माभृतो राजानो येन स तथा अनल्पे दीर्घे लोचने चक्षुषी यस्य सः । इन्द्रोऽपि जिताखिलक्ष्माभृत् पराजितसकलपर्व्वतोऽनल्पलोचनः सहस्रनयनः । कुलकं

अत्र सापह्नवा वाच्या क्रियोत्प्रेक्षा, वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः । 'पुच्छोऽस्त्री लूमलाङ्गूले' इत्यमरः । 'केशरोऽश्वस्कन्धबाले किञ्जल्के बकुलेऽपि च' इति बलः ॥ ६२ ॥

अत्र वेगदर्पे गरुत्मतः जयासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, आर्थी उपमा, छेकानुप्रासश्चेति संसृष्टिः । 'द्विजिह्वौ सर्पसूचकौ', 'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः' इति चामरः । 'स्मयो गर्वेऽद्भुते चैव' इति विश्वः ॥ ६३ ॥

सिन्धुजमित्यनेन अश्वशास्त्रोक्तचतुःपञ्चाशदुत्तमकुलमध्यजत्वं बलित्वं महाकायत्वंचसूचितम् । अत्र क्षितिपाकशासनः इत्यतिशयोक्तिः, सिन्धुजं शीतमहःसहोदरमिति श्लेषसङ्कीर्णा उपमा इति जीवातुः । अन्यस्य श्रियं कथमन्यो वहतु इति वस्तुसम्बन्धस्यासम्भवतया श्रियमिव

निजा मयूखा इव तीक्ष्णदीधितिं स्फुटारविन्दाङ्कितपाणिपल्लवम् ।
तमश्ववारा जवनाश्वयायिनं प्रकाशरूपा मनुजेशमन्वयुः ॥ ६५ ॥
चलन्नलंकृत्य महारयं हयं स वाहवाहोचितवेशपेशलः ।
प्रमोदनिष्पन्दतराक्षिपक्ष्मभि-र्व्यलोकि लोकैर्नगरालयैर्नलः ॥ ६६ ॥

समाप्तम् । यत् पुनः 'कलापकं चतुर्भिस्तु पञ्चभिः कुलकं मतम्' इति पञ्चभिः श्लोकैः कुलकत्व-मुक्तं तन्न्यूनसङ्ख्याव्यवच्छेदार्थम्, तेनात्र सप्तभिः श्लोकैरपि न कुलकत्वहानिः ॥ ६४ ॥

अश्वारोहणानन्तरं गमनं वर्णयति । निजा इति। मयूखा इव किरणा यथा तीक्ष्णदीधितिं खरकिरणं सूर्य्यम् अनुयान्ति तथा अश्ववारा अश्वारोहास्तं मनुजेशं राजानं नलम् अन्वयुः अनुगतवन्तः । किम्भूता अश्ववारा मयूखाश्च—निजा आत्मीयाः स्वरहस्यवेदिन इति यावत् पक्षे स्वकीयाः तथा प्रकाशरूपाः प्रकाशम् अगूढं ख्यातमिति यावत् रूपं सौन्दर्य्यं येषां ते । पक्षे प्रकाशयतीति प्रकाशं वस्तुव्यञ्जकं रूपं येषां ते । किम्भूतं मनुजेशं तीक्ष्णदीधितिञ्च स्फुटं सुव्यक्तं यथा तथा अरविन्देन रेखामयपद्मेन अङ्कितं चिह्नितं पाणिपङ्कजं करकमलं यस्य तम् । राज्ञां हि पाणौ पद्ममत्स्यादिरूपा रेखा भवतीति सामुद्रकम् । पक्षे स्फुटाभ्यामरविन्दाभ्यामङ्किते युक्ते पाणिपङ्कजे यस्य तम् । सूर्य्योहि हस्ताभ्यां पद्मयुग्मं धारयन् ध्यायते । 'रक्ताब्जयुग्माभयदानहस्तम्' इत्याद्यागमात् । तथा जवनाश्वयायिनं जवनेनाधिकवेगवता अश्वेन साधु याति गच्छतीति तम् । पक्षे जवनैरश्वैः सप्तभिर्यातुं शीलमस्येति तम् ॥ ६५ ॥

अश्वमारुह्य गच्छतस्तस्य पौराणां सानन्दं दर्शनमाह । चलन्निति । प्रमोदेनानन्देन निष्पन्दतराणि अतिशयेन स्पन्दरहितानि निर्निमेषाणीत्यर्थः अक्षिपक्ष्माणि नयनरोमाणि येषां तैः । नगरमेवालयोवासस्थलम् अथवा नगरे आलयो वासोयेषां तैर्लोकैर्जनैः महा-रयम् अतिवेगिनं हयमश्वम् अलङ्कृत्य आत्मना शोभयित्वा तस्यालङ्करणीभूयेत्यर्थः चलन् गच्छन् स नलः व्यलोकि दृष्टः । किम्भूतः वाहस्याश्वस्य यो वाहो वहनं देशान्तरप्रापणमित्यर्थः तत्र उचितो योग्यो यो वेशः कवचधारणादिस्तेन पेशलो मनोरमः ॥ ६६ ॥

श्रियमिति सादृश्याक्षेपात् निदर्शना अनुप्रासश्चेति संसृष्टिः । उपमापरिकरश्लेषालंकारा इति सां । 'इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः' इति, 'भूभृद् भूमिधरे नृपे' इति चामरः ॥ ६४ ॥

पूर्णोपमालंकारः, श्लेषश्चानयोः संसृष्टिः । 'प्रकाशोऽतिप्रसिद्धे स्यात् प्रहासातपयोः स्फुट' इति विश्वः । 'जवनस्तु जवाधिकः' इति, 'भानूरश्मिदिवाकरौ' इति चामरः ॥ ६५ ॥

वृत्त्यनुप्रासच्छेकानुप्रासालंकारौ । 'वाहस्तु मीनभेदे वृषे हये इति, 'पेशलः सुन्दरो दक्षः' इति च विश्वः । 'आकल्पवेशौ नेपथ्यम्' इति, 'मुत् प्रीतिःप्रमदो हर्षः प्रमोदामोदसम्मदाः' इति चामरः । 'पक्ष्माक्षिलोम्नि किञ्जल्के लोममात्रेऽपि दृश्यते' इति बलः ॥ ६६ ॥

क्षणादथैव क्षणदापतिप्रभः प्रभञ्जनाध्येयजवेन वाजिना ।
सहैव ताभिर्जनदृष्टिवृष्टिभि-र्बहिः पुरोऽभूत्पुरुहूतपौरुषः ॥ ६७ ॥
ततः प्रतीच्छप्रहरेतिभाषिणी परस्परोल्लासितशल्यपल्लवे ।
मृषामृधं सादिबले कुतूहला-न्नलस्य नासीरगते वितेनतुः ॥ ६८ ॥
प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम् ।
इतीव वाहैर्निजवेगदर्पितैः पयोधिरोधक्षममुद्धतं रजः ॥ ६९ ॥

अस्य नगराद्बहिर्गमं वर्णयति । क्षणादिति । अथानन्तरं क्षणदापतेश्चन्द्रस्येव प्रभा कान्तिर्यस्य स तथा पुरुहूतस्य इन्द्रस्येव पौरुषं पुरुषीयं कर्म तेजो वा यस्य तादृशः एष राजा ताभिः पूर्वश्लोकोक्ताभिर्जनदृष्टिवृष्टिभिः सहैव जनैर्दृश्यमान एवेत्यर्थः प्रभञ्जनेन वायुना अध्येयः शिक्षणीयो जवो वेगो यस्य तादृशेन वाजिना घोटकेन क्षणात् पुरो-नगराद्बहिरभूत् बहिर्बभूव ॥ ६७ ॥

नगराद्बहिर्गते तस्मिन् सैन्यानां क्रीडायुद्धमाह । ततइति । ततोबहिर्गमानन्तरं प्रतीच्छ गृहाण प्रहर ताडय इति भाषितुं शीलं ययोस्तादृशी तथा परस्परमन्योऽन्यम् उल्लासितम् उत्क्षिप्तं शल्यं पल्लवमिवेति तत् याभ्यां ते सादिबले अश्वारोहिसैन्यभागद्वयं नलस्य नासीरगते अग्रगामिणी सती कुतूहलात् कौतुकात् मृषामृधं मिथ्यायुद्धं वितेनतुः चक्रतुः । शल्यपल्लवे इति हिंस्रत्वाभावात् पल्लवसादृश्यम् । अथवा परस्परोल्लासितानां शल्यानां पल्लवो विस्तरो ययोस्तादृशे । 'पल्लवोऽस्त्री किशलये विटपे विस्तरे वने' इति मेदिनी ॥ ६८ ॥

अश्वानां गमनेन रज उत्थितं तत्रोत्प्रेक्षते । प्रयातुमिति । अस्माकं प्रयातुं विक्रमितुम् इयं धरा पृथिवी कियत्पदं किंपरिमाणं स्थानम् अत्यल्पमित्यर्थः तत्तस्मात् अम्भोधिरपि समुद्रोऽपि स्थलायतां स्थलीभवतु इवोत्प्रेक्षे इति विचिन्त्य निजवेगदर्पितैः स्ववेगाज्जातगर्वैर्वाहैर्घोटकैः पयोधेः समुद्रस्य रोधे आवरणे स्थलीकरण इत्यर्थः क्षमं समर्थं यावता समुद्ररोधो भवेत्तावदित्यर्थः रजो-धूलिरुद्धतम् उत्थापितम् ॥ ६९ ॥

---

अत्र क्षणदापतिप्रभ इति लुप्तोपमा, प्रभञ्जनेन जवस्याध्ययनाऽसम्बन्धेऽपि तत्सम्बन्धकथनादति-शयोक्तिः; सहोक्तिः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः' इति, 'पुरुहूतः पुरन्दरः' इति चामरः । 'पौरुषं पुरुषस्योक्तं भावे कर्मणि तेजसि' इति विश्वः ॥ ६७ ॥

अत्र 'शल्यपल्लवे' इति लुप्तोपमा, छेकानुप्रासवृत्त्यनुप्रासालंकारौ चेति संसृष्टिः । 'वा पुंसि शल्यं शङ्कुर्ना' इति, 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्, मृधमास्कन्दनं संख्यम्' इति 'अश्वारोहास्तु सादिनः' इति, 'सेनामुखंतु नासीरम्' इति चामरः ॥ ६८ ॥

क्रियोत्प्रेक्षा, वृत्त्यनुप्रासालंकारश्चेति संसृष्टिः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः ॥ ६९ ॥

हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भिः क्रमणेन तस्य नः।
त्रपा हरीणामिति नामिताननै-र्न्यवर्त्ति तैरर्द्धनभःकृतक्रमैः॥ ७० ॥
चमूचरास्तस्य नृपस्य सादिनो जिनोक्तिषु श्राद्धतयेव सैन्धवाः।
विहारदेशं तमवाप्य मण्डली-मकारयन् भूरि तुरङ्गमानपि॥ ७१ ॥
द्विषद्भिरेवास्य विलङ्घिता दिशो यशोभिरेवाब्धिरकारि गोष्पदम्।
इतीव धारामवधीर्य्य मण्डली-क्रियाश्रियामण्डि तुरङ्गमैः स्थली ॥ ७२ ॥

अश्वानां स्वाभाविकमूर्ध्वमाक्रम्य पुनर्निवर्तनं भङ्ग्या वर्णयति । हरेरिति। हरेस्त्रिविक्रमरूपस्य भगवत एककेनाद्वितीयेन पदा चरणेन यत् खमाकाशम् अक्रामि आक्रान्तं तस्य खस्य हरीणां घोटकानां नोऽस्माकं चतुर्भिः पदैश्चरणैः क्रमणेन आक्रान्त्या त्रपा लज्जा न तु पौरुषम् इति विचिन्त्येति शेषः नभसि आकाशे कृतो नभःकृतः, अर्धः पदद्वयोत्तोलनादसंपूर्णो नभःकृतः क्रमः पादविक्षेपोयेषां तथाभूतैस्तैर्घोटकैः नामितानि नम्रीकृतानि आननानि मुखानि यैस्तादृशैः सद्भिर्न्यवर्ति निवृत्तम्। एकस्य हरेरेककेन चरणेन यदाक्रान्तं तस्य हरीणां बहुभिश्चरणैराक्रमणे लज्जा समुचितैव। प्रतीयमानोत्प्रेक्षेयम्, इतिपदोत्तरमिवार्थस्य प्रतीयमानत्वात्। क्रमणेऽपीति क्वचित् पाठस्तत्र एवकारार्थोऽपिशब्दस्त्रपेत्यनेनान्वितः। केचित् अर्धनभःकृतक्रमैरित्यत्र नभसोऽर्धम् अर्धनभस्तत्र कृतः क्रमोयैरिति विग्रहं कुर्वन्ति तच्चिन्त्यं, नभसोऽपरिच्छिन्नपरिमाणवत्तया अर्धत्वासम्भवात्॥ ७० ॥

अस्य सैनिकाश्वानां मण्डलाकारगमनमाह। चमूचराइति। तस्य नृपस्य राज्ञः सैन्धवाः सिन्धुदेशजाः सादिनोऽश्वारोहाः चमूषु सेनासु चरन्तीति चमूचराः सैनिकाः तं पुराद्बहिःकल्पितं विहारदेशं भ्रमणभूमिम् अवाप्य प्राप्य जिनोक्तिषु बुद्धवचनेषु श्राद्धतयेव श्रद्धावत्तयेव भूरि बहुवारं यथा तथा तुरङ्गमानपि स्वयं चक्रुरेव घोटकानपि मण्डलीं मण्डलाकारगतिम् अकारयन् कारयामासुः। सिन्धुदेशजा हि स्वभावतोबुद्धभक्ताः अतः स्वर्गार्थिना विहारदेशमासाद्य प्रदक्षिणं कर्तव्यमिति बुद्धागमप्रतिपादितं श्रद्धाय मण्डलीं कुर्वन्ति अश्वानपि कारयन्तीत्युत्प्रेक्षा। विहारशब्देन बौद्धानामुपासनास्थानं चोच्यते। 'विहारोभ्रमणे स्कन्धे लीलायां सुगतालये' इति मेदिनी ॥ ७१ ॥

प्रकारान्तरेणोत्प्रेक्ष्य पुनस्तमर्थमेवाह। द्विषद्भिरिति। अस्य राज्ञो द्विषद्भिरेव शत्रुभिरेव

अत्र विष्णुतुरगयोर्भेदेऽपि हरिशब्दश्लेषेणाभेदाध्यवसायात् अतिशयोक्तिः, प्रतीयमाना क्रियोत्प्रेक्षालंकारश्चेति संसृष्टिः। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। 'हरिर्वातार्कचन्द्राश्वशुकभेकयमाहिषु। अजांशुकपिसिंहेषु वस्तुपिष्टपभेदयोः' इति धरणिः ॥ ७० ॥

अश्वानां वेगादिवत् मण्डलमपि उत्कर्षाय भवति। हेतूत्प्रेक्षालंकारः। 'मारजिल्लोकजिज्जिनः' इत्यमरः ॥ ७१ ॥

अत्र शत्रुभिर्दिग्लङ्घनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, कीर्तिभिः समुद्रस्य गोष्पदी-

अचीकरच्चारुहयेन या भ्रमीर्निजातपत्रस्य तलस्थले नलः।
मरुत् किमद्यापि न तासु शिक्षते वितत्य वात्यामयचक्रचङ्क्रमान् ॥ ७३ ॥
विवेश गत्वा स विलासकाननं ततः क्षणात् क्षौणिपतिर्धृतीच्छया।
प्रवालरागच्छुरितं सुषुप्सया हरिर्घनच्छायमिवाम्भसां निधिम् ॥ ७४ ॥

दिशः पूर्वादयोविलङ्घिता उत्तीर्णाः तेषां नलभयेन दिगन्तपर्यन्तपलायनात्। तथास्य यशोभिरेव कीर्तिभिरपि। एवकारोऽत्र अप्यर्थकः। अब्धिः समुद्रो गोष्पदं गोखुरगर्त्तवत् ज्ञानविषयः समुद्रमप्युल्लङ्घ्य गमनात् गतिविषयो वा अकारि कृतः, इतीव पिष्टपेषणवल्लङ्घितलङ्घनमस्माकमनुचितमिति विचिन्त्येव धाराम् आस्कन्दितादिगतिपञ्चकम् अवधीर्य्य अवज्ञाय परित्यज्येत्यर्थः मण्डलीक्रियाश्रिया मण्डलाकारगतिकरणशोभया तुरङ्गमैरश्वैः स्थली भूमिरमण्डि भूषिता। उत्प्रेक्षेयम्। 'गोष्पदं गोष्पदश्वभ्रे गवाञ्च गतिगोचरे' इति मेदिनी। 'आस्कन्दितं धौरितकं रेचितं वल्गितं प्लुतम्। गतयोऽमूः पञ्च धाराः' इत्यमरः ॥ ७२ ॥

अल्पस्थलेऽश्वस्य भ्रमणम् आरोढुर्नैपुण्यमावेदयति सा नलस्याप्यासीदित्याह। अचीकरदिति। नलोराजा चारुहयेन श्रेष्ठघोटकेन चारु यथा स्यात्तथा वा निजातपत्रस्य स्वीयच्छत्रस्य तलस्थले अधोभूमौ या भ्रमीर्मण्डलाकारगमनानि अचीकरत् कारयामास। मरुद्वायुः वात्यामया-वायुमण्डलिकारूपा ये चक्रवचङ्क्रमाः कुटिलगतयस्तान् वितत्य विधाय तासु भूमिषु अद्यापि किं न शिक्षते नाभ्यस्यति अपितु शिक्षतएव, शिक्षार्थमेव तादृशीर्भ्रमीः करोतीत्यर्थः। हयेनेति कृञः प्रयोगे प्रयोज्यस्य कर्मत्वविकल्पनात् कर्तरि तृतीया ॥ ७३ ॥

अस्य केलिवनप्रवेशमाह। विवेशेति। ततस्तदनन्तरं स क्षौणिपतिर्नलः धृतीच्छया धैर्यवाञ्छया क्षणात् झटिति गत्वा विलासकाननं क्रीड़ावनं विवेश प्रविष्टवान्। अत्रोपमिनोति हरिरिव नारायणो यथा सुषुप्सया शयनेच्छया अम्भसां निधिं समुद्रं प्रविशति तथा। किम्भूतं

करणासम्बन्धेऽपि तत्सम्बन्धकथनादपरातिशयोक्तिश्च, इतीवेति हेतूत्प्रेक्षा, निरङ्गरूपकञ्चेति संकरः। नलस्य विक्रमातिशयित्वं यशसाञ्च समुद्रपारगामित्वं वस्तु व्यज्यत इत्यतिशयोक्तिद्वयेन वस्तुध्वनिः ॥ ७२ ॥

अर्थापत्तिः; मरुतस्तादृशभ्रमिशिक्षाऽसम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः। वात्यावर्तं कुर्वन् वायुरपि भ्रमिज्ञाने शक्तो भवितुमिच्छती-वेत्युत्प्रेक्षेति नारायणः। एतेनाश्वस्य चलनक्रियादार्ढ्यं सत्त्ववत्त्वं चोक्तम्। सत्त्वरहितो न संवाह्य इति। 'तल्लक्षणगुणैः श्लाघ्यः किं सत्त्वेन विना हयः। पञ्चेन्द्रियसमेतोऽपि यथा कायो-विनात्मना' इति सारसिन्धौ ॥ ७३ ॥

पल्लवताम्रं जलस्थानभूतं निविड़च्छायं वनं सुषुप्सया हरिः सिंहो यथा विशति, तथेत्यर्थः।

वनान्तपर्य्यन्तमुपेत्य सस्पृहं क्रमेण तस्मिन्नथ तीर्णदृक्पथे।
न्यवर्त्ति दृष्टिप्रकरैः पुरौकसा-मनुव्रजद्बन्धुसमाजबन्धुभिः ॥ ७५॥
ततः प्रसूने च फले च मञ्जुले स सम्मुखस्थाङ्गुलिना जनाधिपः।
निवेद्यमानं वनपालपाणिना व्यलोकयत्काननकामनीयकम् ॥ ७६ ॥

वनं समुद्रश्च—प्रबालानां नवपल्लवानां पक्षे विद्रुमाणां रागेण लौहित्येन छुरितं मिश्रितं तथा घना सान्द्रा छाया आतपाभावोयत्र तथाभूतं पक्षे घनस्येव मेघस्येव घनैर्वा छाया कान्तिर्यस्य तादृशम्। 'प्रबालोवल्लकीदण्डे विद्रुमे नवपल्लवे' इति विश्वः। 'घनं स्यात् कांस्यतालादिवाद्य-मध्यमनृत्ययोः। ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लौहमुद्गरे। त्रिषु सान्द्रे दृढे च' इति, 'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः। पालनोत्कोचयोः कान्तिमच्छोभापंक्तिषु स्त्रियाम्' इति च मेदिनी ॥ ७४ ॥

पुरवासिनां दर्शननिवृत्तिमाह। वनान्तेति। पुरौकसां पुरवासिनां दृष्टिप्रकरैश्चक्षुःसमूहैः सस्पृहं साभिलाषं यथा तथा वनान्तपर्य्यन्तं काननान्तिकावधिम् अन्तशब्दोऽन्तिकवाची उपेत्य गत्वा अथानन्तरं तस्मिन् राजनि तीर्णदृक्पथे अतिक्रान्तनयनमार्गे सति न्यवर्ति निवृत्तम्। किम्भूतैः अनुव्रजन्तः पश्चाद्गच्छन्तो ये बन्धुसमाजा आत्मीयसमूहास्तेषां बन्धुभिस्तुल्यैः। बान्धवा हि 'ओदकान्तं प्रियमनुव्रजेद्' इति श्रुतेर्जलसमीपावधि प्रियजनमनुगम्य तस्मिन्नतीतदृक्पथे सति सस्पृहं निवर्तन्ते। बन्धुशब्दस्य तुल्यार्थकत्वादार्थीयमुपमा। 'आर्थी तुल्यसमानाद्या-स्तुल्यार्थी यत्र वा वतिः' इतिलक्षणात्। 'गहनं काननं वनम्' इति, 'जीवनं भुवनं वनम्' इति चामरः। 'अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु' इति मेदिनी ॥ ७५ ॥

इतः परमस्य काननरमणीयतादर्शनमाह। ततइति। ततोवनप्रवेशानन्तरं स जनाधिपो-नलः मञ्जुले मनोज्ञे प्रसूने पुष्पे च फले च सम्मुखस्था अभिमुखवर्तिनी अङ्गुलिर्यस्य तादृशेन वनपालपाणिना वनरक्षकहस्तेन निवेद्यमानं विनयेन कथ्यमानं काननस्य कामनीयकं रम्यतां व्यलोकयत् दृष्टवान् ॥ ७६ ॥

पूर्णोपमा, छेकानुप्रासश्चेति संसृष्टिः। श्लेषोक्तिरिति प्राञ्चः ॥ ७४ ॥

आर्थी उपमा, छेकानुप्रासश्चेति संसृष्टिः। सहोक्तिश्चेति प्राञ्चः। 'ओकः सद्माश्रयश्चौकाः' इत्यमरः। 'निवासे सलिले गेहे कानने वनमिष्यते' इति मेदिनी ॥ ७५ ॥

अत्र प्रसूनस्य फलस्य च मञ्जुलत्वरूपैकधर्मेण सहाभिसम्बन्धात् तुल्ययोगिता, वृत्त्यनुप्रासः, स्वभावोक्तिश्चेति संसृष्टिः। 'स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम्' इति, 'कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्' इति चामरः ॥ ७६ ॥

फलानि पुष्पाणि च पल्लवे करे वयोऽतिपातोद्गतवातवेपिते ।
स्थितैः समादाय महर्षिवार्द्धका-द्वने तदातिथ्यमशिक्षि शाखिभिः ॥ ७७ ॥
विनिद्रपत्त्रालिगतालिकैतवा-न्मृगाङ्कचूडामणिवर्जनार्जितम् ।
दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम् ॥ ७८ ॥
वियोगभाजां हृदि कण्टकैः कटु-र्निधीयसे कर्णिशरः स्मरेण यत् ।
ततो दुराकर्षतया तदन्तकृ-द्विगीयसे मन्मथदेहदाहिना ॥ ७९ ॥

वृक्षाणां करतुल्यपल्लवगतप्रभूतफलकुसुमतया आतिथ्यशिक्षामुत्प्रेक्षते । फलानीति । वयसां पक्षिणामतिपातेन मनुष्यदर्शनात् पलायनेन उद्गत उत्थितो यो वातो वायुस्तेन वेपिते चलिते पल्लवे करे किशलयरूपे हस्ते फलानि पुष्पाणि च समादाय गृहीत्वा वने स्थितैः शाखिभिर्वृक्षैर्महर्षीणां मुनिश्रेष्ठानां मध्ये यो वार्द्धको वृद्धस्तस्मात् तदातिथ्यं तस्य राज्ञ आतिथ्यम् अतिथिसत्कारः अशिक्षि शिक्षितम् । महर्षिवार्द्धकोऽपि वयसो यौवनस्य योऽतिपातो व्यपगमस्तेनोद्गत उत्पन्नो यो वातो वायुरोगस्तेन वेपिते कम्पिते करे फलकुसुमान्यादाय वने तिष्ठन्नातिथ्यं करोतीति प्रतीयमानोत्प्रेक्षेयम्, इवार्थस्य प्रतीयमानत्वात् । 'वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी। 'विषु स्याद्वार्द्धको वृद्धे क्लीबं तद्भावसङ्घयोः' इति बलः ॥ ७७ ॥

अस्य केतकीकुसुमदर्शनमाह । विनिद्रेति । स राजा कौतुकी हृष्टः सन् तत्र वने केतकं केतकीपुष्पं ददर्श दृष्टवान् । किम्भूतं केतकं विनिद्रा विकाशिनी या पत्त्रालिर्दलपङ्क्तिस्तत्र गता पतिता येऽलयो भ्रमरास्तेषां कैतवात् छलात् मृगाङ्कश्चन्द्रश्चूडामणिः शिरोरत्नं यस्य स मृगाङ्कचूडामणिः शिवस्तेन यद्वर्जनं परित्यागस्तेनार्जितं जनितम् आशासु दिक्षु चरिष्णु गमनशीलं दुर्यशोऽकीर्तिं दधानम् । पुरा खलु ब्रह्मणा सह विष्णोर्विवादे मिथ्याभाषणात् केतकी शिवेन परित्यक्तेति पौराणिकी वार्त्ता । अकीर्त्तेः कृष्णवर्णत्वस्य कविप्रसिद्धत्वेन सादृश्यहेतुकभ्रमरापह्नवनादियमपह्नुतिः ॥ ७८ ॥

केतकीपुष्पाणां कामोद्दीपकतया विरहिणां विद्विष्टत्वात्तद्दर्शने नलस्य भर्त्सनं त्रिभिः श्लोकैः सन्दानितकेन वर्णयति । वियोगेति । तेन नलेन क्रुधा कोपेन इत्यनेन पूर्वोक्तप्रकारेण केतकं केतकीकुसुमम् आक्रुश्यत भर्त्सितमिति वक्ष्यमाणतृतीयश्लोकेनान्वयः । इतिपदाकृष्टमाक्रोशप्रकारमाह यत् यस्मात् स्मरेण कामेन वियोगभाजां विरहिणां हृदि हृदये कर्णिशरोवेधनास्त्रविशेषस्तत्स्वरूपस्त्वं निर्धीयसे अपर्यसे ततस्तस्मात् मन्मथदेहदाहिना कामशरीरदाहकेन शिवेन

---

पल्लवे करे इति व्यस्तरूपकम्, वयोऽतिपातेति श्लेषः, प्रतीयमाना क्रियोत्प्रेक्षा चेति संसृष्टिः ॥७७॥
अलिकैतवादिति अलीनां प्रतिषेधेन दुर्यशसः स्थापनादपह्नुतिः, सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षेति केचित्। वृत्त्यनुप्रासच्छेकानुप्रासश्चेति संसृष्टिः ॥ ७८ ॥

त्वदग्रसूच्या सचिवेन कामिनो-र्मनोभवः सीव्यति दुर्यशःपटौ ।
स्फुटञ्च पत्रैः करपत्रमूर्त्तिभि-र्वियोगिहृद्दारुणि दारुणायसे ॥ ८० ॥

धनुर्मधुस्विन्नकरोऽपि भीमजा-परं परागैस्तव धूलिहस्तयन् ।
प्रसूनधन्वा शरसात्करोति मा-मिति क्रुधाक्रुश्यत तेन केतकम् ॥ ८१ ॥

विगीयसे निन्द्यसे पूजायामस्वीकारात् । योहि यच्छरीरदाहकस्तेन तस्यास्त्वं निन्दनीयं भवत्येव । कर्णिशरस्वरूपत्वे हेतुगर्भविशेषणद्वयमाह--कण्टकैस्तीक्ष्णाग्रावयवविशेषैः कटुर्दुःसहः । कर्णिशरस्यापि पार्श्वद्वये तादृशावयवास्तिष्ठन्ति । तथा दुराकर्षतया आकृष्टुमशक्यतया तेषां विरहिणाम् अन्तकृत् विनाशकृत् एतदपि कर्णिशरस्यान्तेऽव । रूपकमिदम् । यद्वा दुराकर्षतया ततो हृदयात् यत् निर्गच्छत् सत् अन्तकृद्विनाशकृत् । यदिति शत्रन्तं केतकविशेषणत्वान्नपुंसकम् । एवं-योजनायां यतो निधीयसेऽतोविगीयस इति पूर्वोत्तरवाक्ययोर्हेतुहेतुमद्भावात् रूपकोत्थापितः काव्यलिङ्गालङ्कारोऽयम् ॥ ७९ ॥

त्वदग्रेति । मनोभवः कन्दर्पः सचिवेन सहकारिण्या त्वदग्रमेव सूची सीवनसाधनं तया करणेन कामिनोः कामी च कामिनी च तयोर्विरहिणोरिति शेषः दुर्यशसी अकीर्त्ती एव पटौ वस्त्रे सीव्यति संश्लेषयति । दुर्यशश्च विरहिणोरुन्मादादिना । तथा त्वं करपत्रमूर्त्तिभिः क्रकचाकृतिभिः पत्रैः करणैः वियोगिनां विरहिणां हृत् मनो दार्विव काष्ठमिव तस्मिन् दारुणायसे भयङ्करीभवसि । स्फुटमित्युत्प्रेक्षावाचकं पूर्वत्राप्यन्वेति । यथा इतरजनेन करपत्रद्वारा दारु विदार्य्यते तथा किं तव पत्रद्वारा कामेन विरहिहृदयं विदार्य्यत इत्यर्थः । पूर्व्वत्र रूपकेण उत्तरत्रोपमया चोत्थापितोत्-प्रेक्षेयम् ॥ ८० ॥

धनुरिति । प्रसूनं पुष्पं धनुर्यस्य स कामः धनुर्मधुस्विन्नकरोऽपि धनुषः पुष्पमयत्वात् तन्निर्गतैर्मधुभिर्मकरन्दैः स्विन्नः स्वेदयुक्तः करो यस्य तादृशोऽपि तव परागैरजोभिः धूलियुक्तो हस्तो-धूलिहस्तस्तं कुर्वन् सन् भीमजापरं दमयन्त्यासक्तमानसं मां शरसात् शरायत्तं करोति । अन्ये हि धन्विनः स्विन्नहस्तं धूलियुक्तं कृत्वा शरान् मुञ्चन्ति । यदि तव परागा न स्युस्तदा स्विन्नकरतया कामः शरमोचनेऽसमर्थः स्यात् मुञ्चेद्वा यदि कथञ्चित्तदा प्रहारातिशयो न स्यादित्यभिप्रायः । अस्य वाक्यार्थस्यावास्तवत्वेन सम्भाव्यमानत्वादियं प्रतीयमानोत्प्रेक्षा । सन्दानितकं समाप्तं तच्च श्लोकद्वयात्मकम् । उक्तञ्च--'द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते' इति ॥ ८१ ॥

---

अत्रेश्वरकृतस्य केतकीविगर्हणस्य तद्गतवियोगिहिंस्रताहेतुत्वोत्प्रेक्षणात् प्रतीयमाना हेतूत्-प्रेक्षालंकारः इति जीवातुः ॥ ७९ ॥

'दुर्यशसी एव पटौ' इति रूपकमलङ्कारः । स्फुटमिति उत्प्रेक्षा, करपत्रमूर्त्तिभिरिति लुप्तोपमा, 'दारुणायसे' इत्युपमा, छेकानुप्रासश्चेति संसृष्टिः । 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । 'सूची च सीवनद्रव्यम्, इति विश्वः ॥ ८० ॥

अत्र धनुर्मधुस्विन्नकरत्वाद्यसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ।

विदर्भसुभ्रू स्तनतुङ्गताप्तये घटानिवापश्यदलं तपस्यतः ।
फलानि धूमस्य धयानधोमुखान् स दाडिमे दोहदधूपिनि द्रुमे ॥ ८२ ॥
वियोगिनीमैक्षत दाडिमीमसौ प्रियस्मृतेः स्पष्टमुदीतकण्टकाम् ।
फलस्तनस्थानविदीर्णरागिहृ-द्विशच्छुकास्यस्मरकिंशुकाशुगाम् ॥ ८३ ॥
स्मरार्द्धचन्द्रेपुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषाम्पलाशनात् ।
स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम् ॥ ८४ ॥

अस्य दाडिमफलदर्शनमाह । विदर्भेति । स राजा दोहदस्य फलवैलक्षण्यजनकधूपद्रव्य-विशेषस्य धूपिनि सन्तापवति दाडिमे द्रुमे वृक्षे फलानि अपश्यत् दृष्टवान् फलानामधोमुखतया दोहदधूमाभिमुखत्वादुतप्रेक्षते । विदर्भसुभ्रुवो दमयन्त्याः स्तनयोर्या तुङ्गता औन्नत्यं तस्या-आप्तये प्राप्तये अधोमुखान् धूमस्य धयान् धूमं पिवतः सतः अलमत्यर्थं तपस्यतस्तपस्यां कुर्वतो-घटानिव कलशानिव । अन्योऽपि तपस्वी तुङ्गपदाप्तये अधोमुखो भूत्वा धूमं पिवन् तपस्यती-त्युत्प्रेक्षा ॥ ८२ ॥

अस्य दाडिमीवृक्षदर्शनमाह । वियोगिनीमिति । असौ राजा वेः पक्षिणः शुकस्य योगः सम्बन्धो विद्यते यत्र तां वियोगिनीम् अथच विरहिणीं दाडिमीं वृक्षम् ऐक्षत दृष्टवान् । किम्भूतां स्पष्टमुत्प्रेक्षायां प्रियस्मृतेः कान्तस्मरणादिव उदीत उद्गतः कण्टकस्तीक्ष्णाग्रावयवविशेष एव कण्टको रोमाञ्चो यस्यास्ताम् । श्लिष्टरूपकम् । विरहिण्या अपि प्रियस्मरणेन सत्त्वोदयात् रोमाञ्चो-जायते । तथा फलमेव स्तनस्तत्र स्थाने विदीर्णं भिन्नं यत् रागि लौहित्यवत् हृत् हृदयम् अभ्य-न्तरस्थानविशेषस्तत्र विशन् शुकास्यं कीरमुखं स्मरस्य कामस्य किंशुकाशुग इव पलाशकुसुमरूप-वाण इवेति स यत्र तादृशीम् । अन्यापि विरहिणी फलमिव यत् स्तनस्थानं कुचप्रदेशस्तत्र विदीर्णे वियोगतापेन स्फुटिते रागिणि अनुरागवति हृदि विशन् शुकास्यमिव स्मरस्य किंशुकाशुगो यत्र तादृशी भवतीति कविसम्प्रदायः । 'विविष्किरपतत्रयः' इत्यमरः । 'कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे । नैयायिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः' इति मेदिनी ॥ ८३ ॥

अस्य पलाशकुसुमवृन्तदर्शनमाह । स्मरार्द्धेति । स राजा पलाशे पलाशपुष्पे अन्वितं

---

'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' इति, 'परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि' इति चामरः ॥ ८१ ॥

अत्र घटेषु कार्येण तपस्वित्वव्यवहारारोपात् समासोक्तिः इति केचित् । वाच्या जात्युत्प्रेक्षा, वृत्त्यनुप्रासश्चेति संसृष्टिः । दाडिमदोहदं यथा—'यस्त्रिफलाफलिनीमधुलिप्तो धूपित आर्य्य-फलत्रयगन्धैः । स्व-स्त्र-फलैरिह दाडिमशाखी तालफलानि विडम्बयति'' इति ॥ ८२ ॥

श्लिष्टमेकदेशविवर्तिरूपकमलंकारः, अनुप्रासश्चेति संसृष्टिः । लुप्तोत्प्रेक्षेति नारायणः ॥ ८३ ॥

व्यस्तरूपकम्, वाच्योत्प्रेक्षा, लुप्तोत्प्रेक्षा, उपमा, छेकानुप्रासश्चेति संसृष्टिः । दक्षिणपार्श्वस्थं

नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः।
दृशा नृपेण स्मितशोभिकुड्मला दरादराभ्यां दरकम्पिनी पपे ॥ ८५ ॥
विनिर्गतीः पान्थपतङ्गहिंसनै-रपुण्यकर्म्माण्यलिकज्जलच्छलात्।
व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिका इव ॥ ८६ ॥

सम्बद्धं वृन्तं प्रसवबन्धनम् आलोकत दृष्टवान्। किम्भूतं स्फुटमुत्प्रेक्षायां पलाशनात् मांस-भक्षणात् क्रशीयसाम् अतिशयेन कृशानाम् अध्वजुषां पथिकानां कालखण्डजं यकृज्जातं खण्डमिव भागमिव। ननु कथमीदृगुत्प्रेक्षासम्भवइति पलाशस्य विशेषणद्वयदानेनोपपादयति स्मरस्य कामस्य योऽर्द्धचन्द्रः पुरर्द्धचन्द्राकृतिबाणस्तद्वन्निभा सादृश्यं यस्य तस्मिन्, तथा वियोगिनां विरहिणां हृत्खण्डिनि हृदयविदारके तादृशे हि यकृत्खण्डसम्बन्धः सम्भवत्येव। नव्यास्तु स्फुटं पलाशनात् विरहिणां मांसभोजनादिव पलाशे पलाशेतियौगिकनामके पुष्पे अन्वितं सम्बद्धं क्रशीयसां पथिकानां कालखण्डजं खण्डं यकृद्भागस्वरूपं वृन्तमालोकतेत्यपि योजयन्ति ॥ ८४ ॥

अस्य लतादर्शनमाह। नवेति। दरादराभ्यां भयगौरववता नृपेण नलेन गन्ध-वहेन वायुना चुम्बिता संश्लिष्टा नवा नवीना लता वल्ली माधवीलता वा दृशा चक्षुषा करणेन पपे दृष्टा। किम्भूता मकरन्दशीकरैर्वायुसम्बन्धान्निःसृतैर्मधुविन्दुभिः करम्बितं व्याप्तमङ्गमवयवो यस्या-स्तादृशी। एतेन वायोः शैत्यं सौगन्ध्यञ्च सूचितम्। तथा स्मितमिव ईषद्धसनमिव शोभत इति तादृशः कुड्मलो मुकुलो यस्यास्तादृशी तथा दरकम्पिनी वायुसम्पर्कात् ईषच्चञ्चला। एतेन वायोर्मान्द्यं सूचितम्। दरादराभ्यामिति विशेषणे तृतीया, दरश्च स्वस्य विरहित्वात् आदरश्च लताया-रम्यत्वात्। अन्यापि गन्धवहेन सुगन्धद्रव्यवता केनचिन्नायकेन चुम्बिता कृतचुम्बना, अतएव सत्त्वोदयात् मकरन्दवद्बिन्दुभिः स्वेदजलकणैः करम्बिताङ्गी, स्मितेन शोभिनः कुड्मला दन्ता यस्या-स्तादृशी, दरकम्पिनी ईषत्कम्पवती नवा रम्या लता स्त्री दरादराभ्यां परस्त्रीदर्शनात् कामित्वाच्च भयगौरववता केनचित् विरहिणा दृश्यत इति वायौ नायकस्य लतायां नायिकायाश्च व्यवहारा-रोपात् श्लेषसमासोक्त्योरेकाश्रयानुप्रवेशः। 'लता स्यान्माधवीयोषिच्छाखावल्लीप्रियङ्गुषु' इति बलः। 'कुड्मलौ दन्तकोरकौ' इति धरणिः ॥ ८५ ॥

कृष्णं मांसं कालखण्डम्, तस्माज्जातं कालखण्डजम्, यकृज्जातो व्याधिविशेषः। 'स्नायुःस्त्रियां कालखण्डयकृती तु समे इमे इति, 'आमिषं पलम्' इति, 'वृन्तं प्रसवबन्धनम्' इति चामरः। 'निभोव्याजसदृक्षयोः' इति विश्वः ॥ ८४ ॥

अत्र समेन विशेषणेन प्रस्तुतायां लतायाम् अप्रस्तुताया नायिकायाः प्रतीतेः समासोक्तिरलंकार-श्छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः। 'दरोऽस्त्रियां भये श्वभ्रे मनागर्थे दराव्ययम्' इति बलः। 'गन्धो लेशे तथामोदे गन्धः सम्बन्धमात्रके' इति धरणिः। 'मकरन्दः पुष्परसः' इत्यमरः ॥ ८५ ॥

अमन्यतासौ कुसुमेषु गर्भगं परागमन्धङ्करणं वियोगिनाम् ।
स्मरेण मुक्तेषु पुरा पुरारये तदङ्गभस्मेव शरेषु सङ्गतम् ॥ ८७ ॥
पिकाद्वने शृण्वति भृङ्गहूकृतै र्दशामुदश्चत्करुणे वियोगिनाम् ।
अनास्थया सूनकरप्रसारिणीं ददर्श दूनः स्थलपद्मिनीं नलः ॥ ८८॥

अस्य चम्पककलिकादर्शनमाह । विचिन्वतीरिति । स राजा शम्बरारेः कामस्य बलिदीपिकाः पूजाप्रदीपस्वरूपाश्चम्पककोरकावलीश्चम्पककलिकाश्रेणीः व्यलोकयत् दृष्टवान् । किम्भूताः इवोत्प्रेक्षे अलयो भ्रमरा एव कज्जलानि अञ्जनानि तेषां छलात् व्याजात् पान्थाः पथिका एव पतङ्गाः शलभास्तेषां हिंसनैर्हेतुभिः अपुण्यकर्माणि अधर्मकार्य्याणि विचिन्वतीर्विस्तारयन्तीः । अपुण्यकर्मणां कृष्णवर्णत्वस्य कविसम्प्रदायप्रसिद्धत्वादुत्प्रेक्षा । चम्पककोरकाणां हि उद्दीपकतया पान्थानां हिंसा दीपिकानाञ्च उड्डीय पततां शलभानां हिंसेत्यपुण्यकर्माणीव बहुलीकृत्य दधाना इत्यर्थः ॥ ८६ ॥

अस्य पुष्परेणुदर्शनमाह । अमन्यतेति । असौ राजा कुसुमेषु पुष्पेषु गर्भगम् अन्तर्गतं परागं रजः पुरा पूर्वस्मिन् काले स्मरेण कामेन पुरारये शिवाय पुरारिमुद्दिश्येत्यर्थः मुक्तेषु त्यक्तेषु शरेषु पुष्पमयवाणेषु सङ्गतं संलग्नं तस्य पुरारेरङ्गभस्मेव अमन्यत ज्ञातवान् । किम्भूतम् वियोगिनां विरहिणामन्धङ्करणं अनन्धा अन्धाः क्रियन्तेऽनेनेति तादृशम्, अन्धङ्करणत्वादेव भस्मत्वोत्प्रेक्षा । भस्मापि नयनपतितं सत् अन्धं करोति ॥ ८७ ॥

अस्य स्थलपद्मिनीदर्शनमाह । पिकादिति । उदञ्चन्तो विकाशं प्राप्नुवन्तः करुणाः करुणसंज्ञकवृक्षा यत्र तादृशे अथ च उत्पन्नदये वने भृङ्गहूकृतैर्भ्रमराणां हूंकारध्वनिभिः वियोगिनां विरहिणां दशामवस्थां पिकात् कोकिलात् शृण्वति सति अनास्थया अलमलं दुःखिनां कथयेत्यनादरेण सूनमेव पुष्पमेव करोहस्तस्तं प्रसारयति निवारणार्थं विस्तृतं करोतीति तादृशीं स्थलपद्मिनीं नलो राजा दूनः सन् कोकिलादीनामुद्दीपकत्वात् सन्तप्तः सन् ददर्श दृष्टवान् । अन्यस्मिन्नपि दयावति कस्यचिद् दशां शृण्वति सति इतरो हस्तमुत्तोल्य निवारयति । यद्वा अनास्थया ईदृगसारोऽयं संसार इत्यनित्यताभावनया सूनकरप्रसारिणीम् अभिनयवशात् पुष्पहस्तविस्तारिणीम् । शृण्वतीत्यत्र अनास्थयेत्यत्र च इवार्थस्य प्रतीयमानत्वात् प्रतीयमानोत्प्रेक्षा । श्रोतृभिर्हि वक्तरि स्वाभिनिवेशज्ञापनार्थं हूंकारेण कथा गृह्यतइति भृङ्गहूंकृतैरित्युक्तम् ॥ ८८ ॥

---

'चम्पककोरकावलीः शम्बरारेर्बलिदीपिका' इति व्यस्तरूपकम् इति भरतः । पान्थपतङ्गेति अलिकज्जलानीति समस्तरूपकद्वयम् । अपुण्यकर्मणः कृष्णवर्णत्वस्य कविप्रसिद्धत्वेन अलिकज्जलापह्नवनादियमपह्नुतिः उपमालंकारश्चेति संकर इति सां । 'पान्थः पथिक' इति, 'पतङ्गौ सूर्य्यशलभौ' इति, 'कलिका कोरकः पुमान्' इति चामरः ॥ ८६ ॥

उत्प्रेक्षालंकारच्छेकानुप्रासश्चेति संसृष्टिः । ॥ ८७ ॥

सूनकरप्रसारिणीमित्यत्र रूपकम्, शृण्वतीत्यत्र अनास्थयेत्यत्र च प्रतीयमानोत्प्रेक्षाद्वयम्,

रसालसालः समदृश्यतामुना स्फुरद्द्विरेफारवरोषहूंकृतिः ।
समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्जनाभियम् ॥ ८९ ॥
दिने दिने त्वं तनुरेधि रेऽधिकं पुनः पुनर्मूर्च्छ च तापमृच्छ च ।
इतीव पान्थं शपतः पिकान् द्विजान् सखेदमैक्षिष्ट स लोहितेक्षणान् ॥ ९० ॥
अलिस्रजा कुट्मलमुच्चशेखरं निपीय चाम्पेयमधीरया दृशा ।
स धूमकेतुं विपदे वियोगिना-मुदीतमातङ्कितवानशङ्कत ॥ ९१ ॥

अस्याम्रवृक्षदर्शनमाह । रसालेति । अमुना नलेन रसालसालः आम्रवृक्षः समदृश्यत दृष्टः । उत्प्रेक्षणेन रसालं विशिनष्टि—स्फुरन्त इतस्ततो भ्रमन्तो ये द्विरेफा भ्रमरा स्तेषामारव एव शब्द एव रोषहूंकृतिः क्रोधहूंकारो यत्र तादृशः सन् समीरेण वायुना लोलैश्चञ्चलैर्मुकुलैः कुड्मलैः कराग्रैर्वियोगिने विरहिणे जनाय तर्जनाया भर्त्सनाया या भीर्भयं तां दित्सन्निव दातुमिच्छन्निव । आम्रवृक्षस्य विरहिणं प्रति कोपः कामपरिजनत्वात् । अन्योऽपि रोषवशेन वायुभागप्रबलतया चञ्चलैर्मुकुलतुल्याङ्गुल्यादिभिरपराधकारिणं तर्जयतीत्युत्प्रेक्षा ॥ ८९ ॥

अस्य कोकिलावलोकनमाह । दिने दिन इति । रे इत्याक्षेपसम्बोधने । अरे पान्थ ! त्वं दिने दिने प्रतिदिनम् अधिकं सातिशयं यथा तथा तनुः कृश एधि भव पुनः पुनर्मूर्च्छ च मूर्च्छां प्राप्नुहि तापञ्च विरहज्वरञ्च ऋच्छ लभस्व इति एवंप्रकारेण पान्थं शपत इव पथिकजनाय शापं ददत इव लोहितेक्षणान् स्वभावतो रक्तनयनान् अथच क्रोधात् द्विजान् पक्षिणोऽथच ब्राह्मणान् पिकान् कोकिलान् स राजा सखेदं विरहित्वात् सोद्वेगं यथा तथा ऐक्षिष्ट दृष्टवान् । कोकिलालापं श्रुत्वा पथिकानां कृशत्वं मूर्च्छा तापश्च भवत्येव । अन्योऽपि तादृशं शपतो रक्तनयनान् ब्राह्मणान् सखेदं पश्यति । 'तापस्तु विरहज्वरः' इति साहित्यदर्पणः ॥ ९० ॥

अस्य नागकेशरकुट्मलालोकनमाह । अलीति । स राजा आतङ्कितवान् सभयः सन् अलिस्रजा

---

उभयत्र इवार्थस्य गम्यमानत्वात् । स्थलपद्मिनीवनयोः कार्य्येण तथाविधनायकनायिका-व्यवहारसमारोपात् समासोक्तिश्चेति संसृष्टिः । 'कोकिलः पिकः' इत्यमरः । 'करुणास्तु रसे वृक्षे कृपायां करुणा मता' इति बलः ॥ ८८ ॥

द्विरेफाणामारावे रोषहूंकारस्यारोपणाद् रूपकमलंकारः । परिणाम इति केचित्, तेन चोत्थापिता क्रियोत्प्रेक्षानयोः संकरः । 'आम्रश्चूतो रसालोऽसौ' इति, 'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः' इति चामरः । 'स्यात् तर्जनी तर्जना च प्रदेशिन्याञ्च तर्जने' इति बलः ॥ ८९ ॥

क्रियोत्प्रेक्षा च्छेकानुप्रासश्चेति संसृष्टिः । उत्प्रेक्षया च द्विजानिति ब्राह्मणानिवेत्युपमाऽलंकारो-व्यज्यते इत्यलंकारेणालंकारध्वनिः इति केचित् । अन्योपि तादृशं शपतोरक्तनयनान् ब्राह्मणान् सखेदं पश्यतीति समासोक्तिः । 'दन्तविप्राण्डजा द्विजाः' इत्यमरः ॥ ९० ॥

गलत्परागं भ्रमिभङ्गिभिः पतत् प्रसक्तभृङ्गावलि नागकेशरम् ।
स मारनाराचनिघर्षणस्खल-ज्ज्वलत्कणं शाणमिव व्यलोकयत् ॥ ९२ ॥
तदङ्गमुद्दिश्य सुगन्धि पातुकाः शिलीमुखालीः कुसुमाद्गुणस्पृशः ।
स्वचापदुर्निर्गतमार्गणभ्रमात् स्मरः स्वनन्तीरवलोक्य लज्जितः ॥ ९३ ॥

भ्रमरपङ्क्त्या उच्चं शेखरमग्रं यस्य तादृशं चाम्पेयं नागकेशरसम्बन्धिनं कुड्मलं मुकुलम् अधीरया विरहित्वेन भीतत्वात् चञ्चलया दृशा चक्षुषा । धियेति क्वचित्पाठः अस्थिरया बुद्ध्या । निर्पाय आलोक्य वियोगिनां विरहिणां विपदे विपत्तये उदीतम् उत्थितं धूमकेतुम् उत्पातविशेषम् अशङ्कत तर्कितवान् । अन्योऽपि धूमकेतुः शुक्लवर्णः श्यामलाग्रभागो लोकानां विनाशाय आकाशे उदेति । धूमकेतुम् अग्निम् अथ च ग्रहविशेषमित्यपि केचित् । 'स्याद्धूमकेतुरुत्पातभेदे वैश्वानरे पुमान्' इति मेदिनी ॥ ९१ ॥

अस्य विकसितपतन्नागकेशरकुसुमालोकनमाह । गलदिति । स राजा प्रसक्ता संलग्ना भृङ्गाणां भ्रमराणामावलिः श्रेणी यत्र तादृशम् अतएव भ्रमिभङ्गिभिर्भ्रमणरचनाविशेषैः पतत् भ्रमरभरेण श्लथवृन्तत्वात् वृक्षान्निर्गच्छत् तथा गलन्तो भ्रश्यन्तः परागा रजांसि यस्मात् तादृशं नागकेशरं केशरकुसुमं मारस्य कामस्य नाराचनिघर्षणेन वाणसङ्घर्षणेन स्खलन्तो निर्गच्छन्तो-ज्ज्वलन्तो दीप्यमानाः कणाः स्फुलिङ्गा यत्र तादृशं शाणमिव अस्त्रनिकषणयन्त्रविशेषमिव व्यलोकयत् दृष्टवान्, नागकेशरकुसुमस्य चक्राकारतया स्फुलिङ्गनाराचादिमदृशपरागभ्रमरपंक्त्यादिमत्तया च तथाविधशाणत्वेन सम्भावनम् । 'शाणस्तु निकषः कषः' इत्यमरः ॥ ९२ ॥

अस्य वपुषः सौगन्ध्यात् पुष्पं विहाय भ्रमराणां तत्र पतनमाह । तदङ्गेति । सुगन्धि स्वभावतो गन्धद्रव्यादिना वा सुगन्धशालि तस्य नलस्याङ्गम् उद्दिश्य अभिलक्ष्य अथ च लक्ष्यीकृत्य कुसुमात् पुष्पसकाशात् अथ च कुसुमलक्षणकामधनुषः पातुकाः पतन्तीः गुणस्पृशः सौरभ्यग्राहिकाः अथ च ज्यासङ्गिनीः शिलीमुखालीर्भ्रमरपंक्तीः अथ च वाणसमूहान् स्वनन्तीः

---

निरङ्गरूपकम्, वाच्योत्प्रेक्षालंकारश्चेति संकरः । 'चाम्पेयः केशरो नागकेशरः काञ्चनाह्वयः' इत्यमरः ॥ ९१ ॥

वाच्योत्प्रेक्षालंकारः । स्वभावोक्तिरिति सा । कर्मकाराणां खड्गादिधारकरणार्थं चक्राकारं यदुपकरणं तत्शाणम् तेन नागकेशरकुसुमस्य मण्डलाकारतया साम्यम् । शाणे लोहघर्षणाद् ये अग्निकणा निर्गच्छन्ति तैः परागस्य साम्यम् । शाणभ्रम्या भ्रमिभङ्गिपतनस्य साम्यम् । नाराचेन भृङ्गावलेः साम्यम् । अन्यस्यापि मारणकर्त्तुर्वाणा शाणे भ्रियन्ते इति युक्तमेव । 'प्रक्ष्वेडनास्तु नाराचाः' इत्यमरः ॥ ९२ ॥

अत्र शिलीमुखेति श्लेषः, तदनुप्राणितश्च स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमात् भ्रान्तिमान्,

मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभम् ।
स वारनारीकुचसञ्चितोपमं ददर्श मालूरफलं पचेलिमम् ॥ ९४ ॥
युवद्वयीचित्तनिमज्जनोचित-प्रसूनशून्येतरगर्भगह्वरम् ।
स्मरेषुधीकृत्य धिया भियान्धया स पाटलायाः स्तवकं प्रकम्पितः ॥ ९५ ॥

शब्दायमाना अवलोक्य दृष्ट्वा स्मरः कामः स्वचापात आत्मधनुषो दुर्निर्गता असम्यङ्निःसृताये मार्गणा वाणास्तेषां भ्रमात् तादृप्येण ज्ञानात् लज्जितः लज्जां प्राप्त इवेति प्रतीयमानोत्प्रेक्षा। असम्यङ्निःसृते हि वाणे शब्दो भवत्येव । तथाविधवाणनिःसरणेन च लक्ष्यस्याप्रतीकारात् स्वस्य चानैपुण्यप्रकाशात् वाणक्षेप्तुर्लज्जा जायत एव । शिलीमुखता कुसुमादभिमुखपातुकता गुणस्पर्शिता च उभयोरविशिष्टाऽतो भ्रमसम्भवः । 'अलिवाणौ शिलीमुखौ' इत्यमरः ॥ ९३ ॥

अस्य विल्वफलदर्शनमाह । मरुदिति । स राजा पचेलिमं स्वयं पक्वं वारनार्या गणिकायाः कुचेन सञ्चिता अर्जिता उपमा साम्यं यस्य तादृशं वेश्यास्तनसदृशमित्यर्थः मालूरफलं विल्वफलं ददर्श दृष्टवान् । स्तनसादृश्यं विशेषणाभ्यामुपपादयति किम्भूतं मरुता वायुना ललन् चञ्चलीभवन् यः पल्लवः किसलयस्तत्र वर्त्तमानैः कण्टकैस्तीक्ष्णाग्रावयवविशेषैः करणैः क्षतं सव्रणीकृतं तथा समुच्चरत् सम्यगुद्गच्छत् चन्दनवत् सारं श्रेष्ठं सौरभं सौगन्ध्यं यस्य तादृशम् । वारनारीकुचोऽपि मरुदिव देव इव ललन् कामोद्रेकाच्चञ्चलो यः पल्लवः पिङ्गस्तस्य कण्टकैर्नखैः क्षतः खण्डितो भवति, तथा समुच्चरतः समुल्लसतश्चन्दनस्य सारं सौरभं यत्र तादृशोऽपि भवति । 'मरुतौ पवनामरौ' इत्यमरः । 'पल्लवः किशलये वने विटपे विस्तरेऽलक्तरागे शृङ्गारपिङ्गयोः' इति हेमचन्द्रः । 'कण्टकोऽस्त्री क्षुद्रशत्रौ रोमाञ्चे करजे द्रुमे' इति बलः ॥ ९४ ॥

अस्य पाटलागुच्छावलोकनमाह । युवद्वयीति । स राजा पाटलायाः पाटलिवृक्षस्य स्तवकं गुच्छं भिया भयेन अन्धया विचारमूढया धिया बुद्ध्या स्मरेषुधीकृत्य कामतूणीकृत्य कामतूणत्वेन स्थिरीकृत्य प्रकम्पितश्चकितवान् । किम्भूतं यूनोः स्त्रीपुंसयोर्द्वयी द्वयं तस्या ये चित्ते मनसी तत्र यन्निमज्जनं प्रवेशस्तत्रोचितानि योग्यानि यानि प्रसूनानि पुष्पाणि तैः शून्येतरं सम्पूर्णं गर्भगह्वरं मध्यविलं यस्य तादृशम् । पुष्पाणां कामवाणत्वात् युवचित्ते निमज्जनं तत्पूर्णत्वात् पाटलास्तवकस्य कामतूणत्वेनावधारणञ्चोचितमेव तद्दर्शनेन नलस्यापि विरहित्वात् कम्पो युज्यत एव । 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः ॥ ९५ ॥

---

कामस्य लज्जितत्वेनोत्प्रेक्षणात् क्रियोत्प्रेक्षालंकारश्चेति संकरः ॥ ९३ ॥

कुलस्त्रीकुचे नखक्षतादिप्राकट्योक्तेरनौचित्यमिति 'वार' इतिपदम् । श्लेषानुप्राणितोपमालंकारश्छेकानुप्रासवृत्त्यनुप्रासौ चेति संकरः । 'वारस्त्री गणिका वेश्या' इति, 'विल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलौ' इति चामरः ॥ ९४ ॥

मुनिद्रुमः कोरकितः शितिद्युति-र्वनेऽमुनामन्यत सिंहिकासुतः ।
तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन् ॥ ९६ ॥
पुरोहठाक्षिप्ततुषारपाण्डर-च्छदावृतेर्वीरुधि नद्धविभ्रमाः ।
मिलन्निमीलं ससृजुर्विलोकिता-नभस्वतस्तं कुसुमेषु केलयः ॥ ९७ ॥

अस्य वकवृक्षदर्शनमाह । मुनिद्रुम इति । अमुना राज्ञा वने कोरकितो जातकलिः शितिः श्यामला द्युतिश्छविर्यस्य तादृशो मुनिद्रुमो वकवृक्षः सिंहिकासुतो राहुः अमन्यत तर्कितः । किम्भूतः किलोत्प्रेक्षायां तमिस्रपक्षे या त्रुटिर्हानिः अर्थाच्चन्द्रकलानां तस्याः कूटेन छलेन भक्षितं कवलितं वैधवं विधुसम्बन्धिनं कलाकलापं भागसमूहं वमन् उद्गिरन्निव । तमिस्रपक्षे हि चन्द्र-य त्रुटिर्जायते चन्द्रकलानां भक्षणं वमनञ्च राहोः प्रसिद्धमेव वृक्षे च चन्द्रकलाकाराः कोरकाः सन्तीत्युत्प्रेक्षितम् । शितिद्युतिमत्त्वस्य चन्द्रकलावमनत्वेन सम्भाव्यमानतादृशकोरकावस्थानस्य च साधारणधर्मत्वात् सिंहिकासुतइति गौणप्रयोगः । 'मुनिद्रुमः पाशुपतो वकोऽगस्त्यो वसुर्मुनिः' इति वलः ॥ ९६ ॥

अस्य वायुचलितलतादर्शनमाह । पुरइति । नभस्वतो वायोः कुसुमेषु पुष्पेषु केलयः क्रीड़ाः चञ्चलीकरणादयः विलोकिताः अर्थान्नलेन दृष्टाः सत्यः तं नलं मिलन्ती जायमाना निमीला नेत्र-मुद्रणा यस्य तादृशं ससृजुः कृतवत्यः । तादृशकेलीनां कामोद्दीपकतया वियोगिनां दुष्प्रेक्ष्य-त्वात् । नभस्वतः किम्भूतस्य पुरः प्रथमं हठात् झटिति आक्षिप्ता अपसारिता तुषारेण हिमेन पाण्डरस्य पाण्डुवर्णस्य छदस्य पत्रस्य आवृतिः हिमजालावरणं येन तस्य । केलयः किम्भूताः वीरुधि लतायां नद्धः कृतो विभ्रमो विशिष्टभ्रमणं यासु तादृश्यः । अथ च पुरः प्रथमं हठेन बलात्कारेण आक्षिप्ता अपनीता तुषारवत् पाण्डरस्य शुभ्रस्य छदस्य वस्त्रस्यावृतिर्येन तादृशस्य नभस्वतः नभो वयो विद्यते यस्य तस्य प्रशस्तवयस्कस्येत्यर्थः तरुणस्येति यावत् । वीरुधि लता-जातीयस्त्रियां नद्धविभ्रमा बद्धविलासाः कुसुमेषुकेलयः कामक्रीड़ाः विलोकिताः सत्यः कमपि

अत्र रूपकम्, पाटलायाः स्तवके स्मरेषुधिभ्रमाद्भ्रान्तिमानलंकारः, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'पाटलिः पाटला मोघा' इति, 'स्याद् गुच्छः स्तवके स्तम्बे' इति मेदिनी ॥ ९५ ॥

अत्र त्रुटिकूटेति व्याजेन भक्षणारोपादपह्नुतिः तयाचानुप्राणिता 'अमन्यत किल' इत्युत्-प्रेक्षा, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संकरः । रूपकश्लेषावपीति प्राञ्चः । 'त्रुटिर्हानौ संशये च' इति वलः । 'शिती धवलमेचकौ' इति, 'मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' इत्यमरः ॥ ९६ ॥

'नेक्षेतार्कं न नग्नां स्त्रीं न च संसक्तमैथुनाम्' इति याज्ञवल्क्यनिषेधात् । अत्र प्रस्तुतनभस्वद्-विशेषणबलेनाप्रस्तुतस्य हठकामुकस्य व्यवहारप्रतीतेः समासोक्तिरलंकारश्छेकानुप्रासश्चेति संसृष्टिः ।

गता यदुत्सङ्गतले विशालतां द्रुमाः शिरोभिः फलगौरवेण ताम् ।
कथं न धात्रीमतिमात्रनामितैः स वन्दमानानभिनन्दति स्म तान् ॥ ९८ ॥
नृपाय तस्मै हिमितं वनानिलैः सुधीकृतं पुष्परसैरहर्महः ।
विनिर्मितं केतकरेणुभिः सितं वियोगिनेऽदत्त न कौमुदी मुदः ॥ ९९ ॥

साधुजनं मिलन्निमीलं मुद्रितचक्षुषं कुर्वन्ति । साधोर्हि परोपभुज्यमानस्त्रीदर्शने लज्जावशात् चक्षुर्मुद्रितं भवति । 'नभोऽन्तरीक्षे वयसि' इति, 'नभस्वान् तरुणे वाते' इति च मल्लः ॥ ९७ ॥

अस्य फलभरनम्रद्रुमदर्शनमाह । गता इति । द्रुमा वृक्षा यस्या धात्र्या उत्सङ्गतले उपरिभागे अथ च क्रोडदेशे विशालतां वृद्धिं गताः तां धात्रीं पृथिवीम् अथ च उपमातरं फलगौरवेण स्वोत्पन्नफलभरेण अथ च पुण्यातिशयार्थम् अतिमात्रनामितैरतिशयं नम्रीकृतैः शिरोभिरग्रभागैः अथ च मस्तकैः वन्दमानान् स्पृशतः अथ च नमस्कुर्वतस्तान् द्रुमान् स राजा कथं न अभिनन्दति स्म न प्रीत्यास्तौषीत् । फलभरेण नम्रा वृक्षा हि अभिनन्दनीया एव । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' इति मेदिनी ॥ ९८ ॥

नलं प्रति दिनतेजसोऽपि कामोद्दीपकतामाह । नृपायेति । अहर्महोदिनतेजःस्वरूपा कौमुदी ज्योत्स्ना वियोगिने विरहिणे तस्मै नृपाय नलाय मुदो हर्षान् न अदत्त न दत्तवती । दिनतेजसः कौमुदीस्वरूपत्वं विशेषणैरुपपादयति किम्भूतं वनानिलैर्वनवायुभिर्हिमितं शीतलीकृतं तथा पुष्परसैर्मकरन्दैः सुधीकृतम् अमृतीकृतम् तथा केतकरेणुभिः केतकपुष्पपरागैः सितं विर्निमितं श्वेतीकृतम् । कौमुद्यपि स्वभावतो हिमिता सुधामयी सिता च । अहर्महः कौमुदीति व्यस्तरूपकम् ॥ ९९ ॥

---

'छदः पत्रं वाससि स्यात्' इति मल्लः । 'नभस्वान् मननायिकः' इति कोषान्तरम् । 'लता प्रतानिनी वीरुत्' इत्यमरः ॥ ९७ ॥

अत्र विशेषणसामर्थ्यात् वृक्षेषु पुत्रव्यवहारारोपणात् समासोक्तिरलंकारश्छेकानुप्रासेन संसृज्यते इति जीवातुः । अन्येऽपि ये यदुत्सङ्गतले विशालतां गच्छन्ति, तां धात्रीम् उपमातरं पुण्यरूपफलप्राप्तआदरेणातिमात्रेण नामितैर्मूर्द्धभिः प्रणता स्तानभिनन्दयति इति श्लेषप्रतिभोत्थितः शब्दशक्तिमूलोवस्तुध्वनि-रिति प्राञ्चः ॥ ९८ ॥

'अहर्महः कौमुदी' इति व्यस्तरूपकम्, वनानिलैर्हिमितत्वाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेः रतिशयोक्तिः, कौमुदीमुदां दानाभावं प्रति वियोगिपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, वनानिलादिषु सुखकारणेषु सत्सु सुखकार्यानुत्पत्तेः विशेषोक्तिरिति सां, इत्येतेषामङ्गाङ्गिभावेन सङ्करः । 'चन्द्रिका कौमुदी ज्योत्स्ना' इति, 'मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः' इति चामरः ॥ ९९ ॥

वियोगभाजोऽपि नृपस्य पश्यता तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः कुहूरुताहूयत चन्द्रवैरिणी ॥ १०० ॥
अशोकमर्थान्वितनामताशया गतान् शरण्यं गृहशोचिनोऽध्वगान् ।
अमन्यतावन्तमिवैष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम् ॥ १०१ ॥
विलासवापीतटवीचिवादनात् पिकालिगीतेः शिखिलास्यलाघवात् ।
वनेऽपि तौर्यत्रिकमारराध तं क भोगमाप्नोति न भाग्यभाग्जनः ॥ १०२ ॥

अस्य कोकिलालापश्रवणमाह । वियोगेति । वियोगभाजोऽपि विरहिणोऽपि नृपस्य नलस्य तदेव न किञ्चिदन्यथाभूतम् आननं मुखं साक्षादबाधितत्वेन अमृतांशुं चन्द्रं पश्यता पिकेन कोकिलेन कुहूरिति स्वाभाविकशब्देन अथ च अमावस्यानामग्रहणेन रौतीति तादृशेन सता मुहुर्वारं-वारं चन्द्रवैरिणी अमावस्या आहूयत आकारिता । किम्भूतेन विरहिणां मुखेन म्लानेन भवितव्यं तव तु विरहिणस्तदधुनापि न म्लायतीति रोषेण कोपेन अरुणे रक्ते चक्षुषी यस्य तादृशेन । अत्रायं भावः कन्दर्पो विरहिणां शत्रुः कोकिलोऽपि कन्दर्पपरिवारत्वात्तेषां शत्रुरेव अतो विरहिणो-नलस्य मुखं साक्षाच्चन्द्रं दृष्ट्वा शत्रुणा कोकिलेन चन्द्रवैरिणी आहूतेति । वाक्यार्थस्य सम्भाव्य-मानत्वात् प्रतीयमानोत्प्रेक्षेयम् ॥ १०० ॥

अस्याशोकद्रुमदर्शनमाह । अशोकेति । एष राजा गृहान् स्त्रीः शोचितुम् शीलम् येषां तादृशान् अतएव अर्थान्वितं नास्ति शोको यस्मादित्यर्थयुक्तम् नाम यस्य तस्य भावस्तत्ता तस्या आशया विश्वासेन शरण्यम् रक्षकेषु साधुम् आगतान् प्राप्तान् अध्वगान् पान्थान् अवन्तमिव रक्षन्तमिव अशोकम् अशोकनामकवृक्षम् अमन्यत सम्भावितवान् । किम्भूतम् पल्लवैरग्रवर्तिभिः पत्रैः करणैः प्रतीष्टमङ्गीकृतम् कामस्य ज्वलदारक्तम् अस्त्रजालमस्त्रसमूहः अस्त्ररूपाणि जालकानि कुसुमकलिका वा येन तादृशम् । अत्र पल्लवस्य हस्तस्वरूपत्वमार्थम् । अन्योऽपि शरण्यो हस्तेन विपक्षास्त्रं गृहीत्वा शरणागतान् रक्षति । 'गृहं गृहाश्च पुंभूम्नि कलत्रेऽपि च सद्मनि' इति मेदिनी ॥ १०१ ॥

अस्य वनेऽपि वाद्यादिभिः सेव्यमानतामाह । विलासेति । तौर्यत्रिकं नृत्यगीतवाद्यरूपं

---

'पिकस्य नेत्रे स्वभावेनैव रक्ते शब्दश्च कुहूरिति तत्रैतत् सर्वमुत्प्रेक्षितम्' इति नारायणः । 'अमृतांशुमाननम्' इति व्यस्तरूपकम्, वियोगभाजोऽपीति विशेषोक्तिः, पिकरवामावस्यावाचक-कुहूशब्दयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिश्चेति संकरः । 'कुहूः स्यात् कोकिलालाप-नष्टेन्दुकलयोरपि' इति विश्वः ॥ १०० ॥

अत्र अशोकवृत्ते कार्येण शरणागतरक्षकव्यवहारसमारोपात् समासोक्तिरिति केचित् । वाच्या-क्रियोत्प्रेक्षालंकारः । 'शरणं वधरक्षित्रोः' 'शरणं रक्षणे गृहे' इति च विश्वः । 'क्षारको जालकं क्लीबे कलिका कोरकः पुमान्' इत्यमरः ॥ १०१ ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अर्थापत्तिवृत्त्यनुप्रासश्चेति संकरः । 'शिखावलः

तदर्थमध्याप्य जनेन तद्वने शुका विमुक्ताः पटवस्तमस्तुवन् ।
स्वरामृतेनोपजगुश्च शारिका-स्तथैव तत्पौरुषगायनीकृताः ॥ १०३ ॥
इतीष्टगन्धाढ्यमटन्नसौ वनं पिकोपगीतोऽपि शुकस्तुतोऽपि च ।
अविन्दतामोदभरं वहिश्चरं विदर्भसुभ्रूविरहेण नान्तरम् ॥ १०४ ॥
करेण मीनं निजकेतनं दधत् द्रुमालवालाम्बुनिवेशशङ्कया ।
व्यतर्कि सर्व्वत्तु घने वने मधुं स मित्रमत्रानुसरन्निव स्मरः ॥ १०५ ॥

कर्त्तृ वनेऽपि तं नलम् आरराध सेवते स्म । कस्मात् विलासवाप्याः क्रीडादीर्घिकायास्तटे तीरे यत् वीचीनां वादनं तरङ्गाणामाश्लेषशब्दस्तस्मात् तथा पिकानां कोकिलानामलीनां भ्रमराणां कोकिल-श्रेण्या वा गीतिर्गानात् तथा शिखिनां मयूराणां लास्ये नर्त्तने यत् लाघवं चातुर्य्यं तस्मात् । अला-र्थान्तरमप्युपन्यस्यति – भाग्यभाग्जनः शुभादृष्टयुक्तः पुरुषः क्व कुत्र भोगं सुखं सुखसाधनं वा न आप्नोति न लभते अपि तु सर्व्वत्रैव । 'तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यम्' इत्यमरः । 'भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणि' इति विश्वः ॥ १०२ ॥

अस्य शुकशारिकाभिरपि स्तूयमानतामाह । तदर्थमिति । जनेनोद्यानपालादिना तदर्थं नलस्तुत्यर्थम् अध्याप्य पाठयित्वा तद्वने नलोद्याने विमुक्तास्त्यक्ताः पटवः स्फुटवाचः शुकाः कीरास्तं नलम् अस्तुवन् स्तुतवन्तः । एवं तथैव शुकवदध्याप्य विमुक्ताः शारिकाः सूक्तानामपक्षिविशेषाः स्वरोऽमृतमिवेति तेन तम् उपजगुश्च तुष्टुवुश्च । किम्भूताः शुकाः शारिकाश्च तस्य नलस्य पौरुषं पराक्रमस्तस्य गायनीकृता गायनताम् प्रापिताः उभयोर्विशेषणमिदम् शारिकाणामेवेति केचित् । 'सूक्ता मदनशलाका चित्राक्षी शारिकावचण्डा च' इति त्रिकाण्डशेषः ॥ १०३ ॥

वनमागतस्याप्यस्य वनशोभावलोकनेन विरहाधिक्यमाह । इतीष्टेति । इति पूर्व्वोक्तप्रकारेण इष्टगन्धेनाढ्यं समृद्धिमद्वनम् अटन् परिभ्रमन् पिकैरुपगीतोऽपि गानेन प्रशंसितोऽपि शुकैः स्तुतोऽपि च असौ राजा वहिश्चरं वाह्यम् आमोदभरं गन्धातिशयम् अविन्दत अलभत किन्तु विदर्भ-सुभ्रुवो दमयन्त्या विरहेण आन्तरम् अन्तर्गतम् आमोदभरं हर्षातिशयं न अविन्दत । अत्रामोद-भरमिति श्लिष्टं पदम् । 'आमोदो हर्षगन्धयोः' इति विश्वः ॥ १०४ ॥

---

शिखी केकी' इति । 'लास्यं नृत्यञ्च नर्तने' इति चामरः । 'लघु क्षिप्रे चारुणि' इति बलः ॥ १०२ ॥

अत्र समुच्चयवृत्त्यनुप्रासच्छेकानुप्रासानां संसृष्टिः ॥ १०३ ॥

अत्र गन्धहर्षयोर्भेदेऽपि आमोदशब्दश्लेषेणाभेदाध्यवसायात् अतिशयोक्तिः, वनपरिभ्रमणादि-कारणसत्त्वेऽपि तत्कार्य्यहर्षातिशयलाभाभावात् विदर्भसुभ्रूविरहेणेति तन्निमित्तस्योक्तत्वादुक्त-निमित्ता विशेषोक्तिः, वृत्त्यनुप्रासोऽन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १०४ ॥

लतावलालास्यकलागुरुस्तरु-प्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः ॥ १०६ ॥
अथ स्वमादाय भयेन मन्थना-चिररत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपानिधि-र्वने तडागो ददृशेऽवनीभुजा ॥ १०७ ॥

एवं वने भ्रमत्यस्मिन् जनानां कन्दर्पसम्भावनामाह करेणेति । सर्वैः षड्भिर्ऋतुभि-र्वसन्तादिभिर्वने सङ्कुले अत्र वने मित्रं सुहृदं मधुं वसन्तम् अनुसरन् मृगयमाणः स्मरः काम इव स राजा व्यतर्कि सम्भावितः जनैरिति शेषः । स्मरत्वेन तर्कणे हेतुगर्भ-विशेषणमाह द्रुमाणां वृक्षाणां यदालवालं मूलेषु जलदानस्थानं तस्याम्बुनि जले यो निवेशः प्रवेशस्तस्य शङ्कया करेण हस्तेन निजस्य नलरूपस्य अथ च कन्दर्परूपस्य केतनं चिह्नविशेषं अथ च ध्वजं मीनं मत्स्यं दधत् धारयन् । 'स्यादालवालमावालमावापः' इत्यमरः ॥ १०५ ॥

अस्य वनवायुना सेव्यमानतामाह । लतेति । वनानिलो वनवायुः अमुं नलम् असेवत उपासितवान् । किम्भूतः लतारूपा या अबलाः स्त्रियस्तासां या लास्यकला नृत्यविद्या तत्र गुरुरध्या-पकस्तथा तरूणां वृक्षसम्बन्धीनि वृक्षस्थितानीत्यर्थः न तु पर्य्युषितत्वाद्भूमिष्ठानि यानि प्रसूनानि पुष्पाणि तेषां यो गन्धोत्करो गन्धसमूहस्तस्य पश्यतोहरश्चौरः तथा मधु पुष्परसएव गन्धवारि गन्धोदकं तत्र प्रणीतम् कृतं लीलाप्लवनं क्रीड़ास्नानं येन तादृशः । मधुगन्धाख्यं नलस्य सरइति केचित् । अत्र क्रमेण त्रिभिर्विशेषणैर्वायोर्मान्द्यसौगन्ध्यशैत्यानि सूचितानि । पश्यतोहर इति पश्यन्तं जनम् अनादृत्य हरतीत्यनादरे षष्ठी । 'वाग्दिक्पश्यताम्' इत्यादिना षष्ठ्या अलोपः ॥ १०६ ॥

अस्य वने सरोवरदर्शनमाह । अथेति । अथानन्तरम् अवनीभुजा राज्ञा नलेन वने तड़ागः पद्माकरः मन्थनाद्भयेन चिरात् बहुकालेन उच्चितं वृद्धिं प्रापितं चिररत्नैश्चिरन्तने-रत्नैरैरावतादिभिरधिकम् अधिकपूर्वं स्वं धनम् आदाय गृहीत्वा तस्मिन् वने निलीय तिरोहितीभूय निवसन् तिष्ठन्नपांनिधिः समुद्र इवेति प्रतीयमानोत्प्रेक्षा, स ददृशे दृष्टः । तस्मिन् वने सन् विद्यमानोऽपांनिधिरिवेतियोजनायां वाच्योत्प्रेक्षा । एतेन तड़ागस्य जलबाहुल्यं नलस्य च देवेभ्यस्त्रातृत्वं ध्वनितम् । अन्योऽपि कश्चिद्धनी राजोपद्रवाद्भयेन सर्वस्वमादाय देशान्तरे निलीय निवसति ॥ १०७ ॥

---

वाच्योत्प्रेक्षा वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते । 'केतनं सदने चिह्ने कृत्ये चोपनिमन्त्रणे' इति हेमचन्द्रः ॥ १०५ ॥

अत्र प्रस्तुते वनानिले कार्य्येण विशेषणसादृश्येन चाप्रस्तुतसेवकजनव्यवहारसमारोपात् समासोक्तिः, निरङ्गं रूपकञ्चेति संकरः । अन्योऽपि ईदृशः सेवकस्तत्सेवां करोतीति ध्वनिरिति भरतः ॥ १०६ ॥

अत्र अपां निधौ कार्येण राजोपद्रवभीतधनिजनव्यवहारारोपणात् समासोक्तिः, असम्बन्धे

पयोनिलीनाभ्रमुकामुकावली-रदाननन्तोरगपुच्छसच्छवीन् ।
जलार्द्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य मिषाद्बभार यः ॥ १०८ ॥
तटान्तविश्रान्ततुरङ्गमच्छटा-स्फुटानुविम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैःश्रवसामिव श्रयन् ॥ १०९ ॥

पयोधिलक्ष्मीमुपैति विशेषणस्य वक्ष्यमाणत्वात् समुद्रसादृश्यं प्रतिपादयितुं नवभिः श्लोकैस्तड़ागं विशिनष्टि । पयइति । यस्तड़ागो मृणालजालस्य विससमूहस्य मिषाच्छलात् अनन्तोरगस्य शेषनागस्य यत् पुच्छं लाङ्गूलं तस्येव सती शोभना छविर्दीप्तिर्येषां तादृशान् शुभ्रानित्यर्थः पयसि जले निलीना निमग्ना ये अभ्रमुकामुका ऐरावतास्तेषां या आवली समूहस्तस्या रदान् दन्तान् बभार धृतवान् । किम्भूतस्य मृणालजालस्य जलेनार्ध्वं रुद्धमावृतं यस्य तादृशस्य तथा तटस्य अन्तभुवं निकटभूमिं भिनत्तीति तादृशस्य तीरान्तिकभूमिं भित्त्वोत्थितस्येत्यर्थः । गजदन्ता अपि तीरान्तिकभूमिं भिन्दन्ति । पूर्वं समुद्र एक ऐरावतः स्थितः अधुना तु तस्य रत्नाकरत्वात् बहवो जाता इति भावः ॥ १०८ ॥

तटान्तेति । यस्तड़ागस्तटान्ते तीरप्रान्ते विश्रान्ता कृतविश्रमा या तुरङ्गमाणां नलाश्वानां छटा तया स्फुटो व्यक्तो योऽनुविम्बस्य प्रतिविम्बस्य उदय उद्गमस्तस्य चुम्बनेन सम्बन्धेन प्रतिविम्बच्छलेनेत्यर्थः उच्चैःश्रवसां सहस्रं श्रयन्निव धारयन्निव बभौ शोभितवान् । किम्भूतं वीचयस्तरङ्गा एव कशा अश्वताड़न्यस्तासामन्ता अग्रभागास्तैः शातनैस्ताड़नैश्चलत् चञ्चलीभवत् । प्रतिविम्बितं हि वस्तु तरङ्गवशाचलमिव प्रतिभातीति कशाताड़ितचलदश्वत्वेनोत्प्रेक्षा । 'अश्वादेस्ताड़नी कशा' इत्यमरः ॥ १०९ ॥

---

सम्बन्धरूपातिशयोक्तिरिति सा । छेकानुप्रासश्चेत्येतयोः संसृष्टिः । तथा उक्तरूपालंकारेण तड़ागस्य प्रचुररत्नादिमत्त्वं, विशालत्वं गभीरत्वञ्च व्यज्यत इति वस्तुध्वनिः । 'रत्नं स्वजातिश्रेष्ठेऽपि' इति, 'पद्माकरस्तड़ागोऽस्त्री कासारः सरसी सरः' इति चामरः ॥ १०७ ॥

'पुच्छसच्छवीन्' इति आर्थोपमा, मिषाद्व्याजादिति अपह्नुतिः, समुद्रे एक एव ऐरावत-आसीदत्र तु बहव इति व्यतिरेकालङ्कारश्चेत्येतेषां संकरः इति जीवातुः । छेकानुप्रासवृत्त्यनुप्रासौ, मुकामुकेति यमकञ्चेति संसृष्टिः । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः' इति, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी रेखाः' इति, 'शेषोऽनन्तो वासुकिः' इति, 'उरगः पन्नगो भोगी' इति, 'शोभा कान्तिद्युतिश्छविः' इति चामरः । 'रदो विलेखने दन्ते' इति, 'मिषं व्याजे स्पर्धने ना' इति च मेदिनी ॥ १०८ ॥

वीचयस्तरङ्गा एव कशा इति निरङ्गरूपकम्, श्रयन्निवेति वाच्योत्प्रेक्षा, अनुविम्बोदयचुम्बनेनेति अपह्नुतिः, उच्चैःश्रवसां सहस्रमिति समुद्रात्तड़ागस्याधिक्याद् व्यतिरेकश्चेति संकरः, छेकानुप्रासो-

सिताम्बुजानां निवहस्य यश्छलाद् बभावलिश्यामलितोदरश्रियाम् ।
तमःसमच्छायकलङ्कसङ्कुलं कुलं सुधांशोर्बहुलं वहन् बहु ॥ ११० ॥
रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवा-न्मृणालशेषाहिभुवान्वयायि यः ॥ १११ ॥

सितेति । यस्तडागः अलिभिर्भ्रमरैः श्यामलिता श्यामीकृता उदरश्रीरभ्यन्तरशोभा येषां तेषां सिताम्बुजानां धवलपद्मानां निवहस्य समूहस्य छलात् व्याजात् तमसा अन्धकारेण समा सदृशी छाया शोभा यस्य तादृशो यः कलङ्कस्तेन सङ्कुलं व्याप्तं सुधांशोश्चन्द्रस्य बहुलं विस्तृतं कुलं वृन्दं वहन् धारयन् सन् बहु अतिशयेन बभौ शोभते स्म। सिताम्बुजानां शुभ्रत्वाच्चन्द्रसाम्यम्, अलीनाञ्च श्यामत्वात् कलङ्कसाम्यम् ॥ ११० ॥

रथाङ्गेति । यस्तडागः सरोजिन्याः पद्मिन्याः स्तम्बकदम्बस्य गुच्छसमूहस्य कैतवात् छलात् पद्मिनीगुच्छसमूहरूपेणेत्यर्थः शार्ङ्गिणा कृष्णेन अन्वयायि अनुगतः सेवित इत्यर्थः कृष्णोहि समुद्रे निद्राति। कदम्बपदोपादानात् शार्ङ्गिणेति जातावेकवचनम् । पद्मिनीस्तम्बकदम्बस्य शार्ङ्गिस्वरूपत्वं शब्दश्लेषेणोपपादयति -किम्भूतेन शार्ङ्गिणा रथाङ्गं चक्रं सुदर्शनाख्यं भजत इति तादृशेन तथा कमलाया लक्ष्म्या अनुषङ्गः सम्बन्धः सोऽस्यास्तीति तादृशेन तथा शिलीमुखानां वाणानां स्तोमस्य समूहस्य सखा मित्रं तेन तत्सहितेनेत्यर्थः तथा मृणालमिव विसमिव यः शेषाहिरनन्तनागः सएव भूः शयनस्थानं यस्य तेन । सरोजिनीस्तम्बकदम्बमपि रथाङ्गं चक्रवाकपक्षिणं भजते कमलस्य जलस्य पद्मस्य वा अनुषङ्गि सम्बन्धि शिलीमुखस्तोमसखं भ्रमरसमूहसहितं मृणालं शेषाहिरिवेति सः भूरुत्पत्तिस्थानं यस्य तादृशमपि भवति। 'रथाङ्गं न द्वयोश्चक्रं ना चक्राह्वविहङ्गमे' इति मेदिनी । 'कमला श्रीर्हरिप्रिया' इति, 'कमलं जलम्' इति, 'सहस्रपत्रं कमलम्' इति, 'अलिवाणौ शिलीमुखौ' इति चामरः ॥ १११ ॥

---

वृत्त्यनुप्रासश्चेति संसृष्टिः । उत्प्रेक्षालंकारेण नलतुरङ्गाणामुच्चैःश्रवःसादृश्यं गम्यते इति वस्तुध्वनिः इति जीवातुः। 'अन्तःप्रान्तोऽन्तिके नाशे स्वरूपेऽतिमनोहरे' इति विश्वः ॥ १०९ ॥

अत्र तमःसमच्छायेति आर्थी समासगतोपमा, छलशब्देन विषयापह्नवेन पुण्डरीकेषु चन्द्रत्वस्थापनादपह्नुतिः, समुद्रे एकश्चन्द्रः, तडागे तु बहव एव चन्द्रा इति समुद्रात्तडागस्योत्कर्षाद्व्यतिरेकालंकारश्चेति, एतेषामङ्गाङ्गिभावेन संकरः। तथा छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः। 'व्याजोलक्षं निभं छलम्' इति बलः ॥ ११० ॥

अत्र स्तम्बकदम्बकैतवादिति कैतवशब्देन स्तम्बत्वनिषेधेन शार्ङ्गित्वस्थापनादपह्नुतिः, मृणालं शेषाहिरिवेति लुप्तोपमा, श्लेषः, अन्त्यानुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । उपमाश्लेषोऽयम् इति वंशीवदनः ॥ १११ ॥

तरङ्गिणीरङ्कजुषः स्ववल्लभा-स्तरङ्गलेखा बिभरांबभूव यः ।
दरोद्गतैः कोकनदौघकोरकै-र्धृतप्रवालाङ्कुरसञ्चयश्च यः ॥ ११२ ॥

महीयसः पङ्कजमण्डलस्य य-श्छलेन गौरस्य च मेचकस्य च ।
नलेन मेने सलिले निलीनयो-स्त्विषं विमुञ्चन् विधुकालकूटयोः ॥ ११३ ॥

चलीकृता यत्र तरङ्गरिङ्गणै-रवालशैवाललतापरम्पराः ।
ध्रुवं दधुर्वाडवहव्यवाडव-स्थितिप्ररोहत्तमभूमधूमताम् ॥ ११४ ॥

तरङ्गिणीरिति । यस्तडागः तरङ्गलेखास्तरङ्गश्रेणीस्वरूपा स्तरङ्गिणीर्नदीर्बिभरांबभूव धृतवान् । किम्भूताः अङ्कजुषः क्रोडसेविनीः अथच मध्यस्थाः तथा स्वस्यात्मनो वल्लभाः कान्ताः अथच प्रियाः नदीनां समुद्रकान्तिकत्वात् । एवं यश्च तडागः दरोद्गतैरीषदुत्थितैः कोकनदौघस्य रक्तोत्पल-समूहस्य कोरकैः कलिकाभिः तेषां छलेनेत्यर्थः धृतः प्रवालाङ्कुरसञ्चयो विद्रुमाङ्कुरसमूहो येन तादृशः अभूदिति शेषः । समुद्रे प्रवालाङ्कुराः सन्त्येव, अत्रापि तद्वत् कोरका इति साम्यम् ॥ ११२ ॥

महीयस इति । यस्तडागो महीयसो महत्तरस्य गौरस्य शुक्लस्य मेचकस्य च कृष्णस्य च पङ्कजमण्डलस्य पद्मसमूहस्य छलेन सलिले जले निलीनयोर्निमग्नयोर्विधुकालकूटयोश्चन्द्रविष-विशेषयोस्त्विषं कान्तिं विमुञ्चन्निव उद्गिरन्निव नलेन मेने तर्कितः प्रतीयमानोत्प्रेक्षेयम् । समुद्रे हि विधुकालकूटयोरुत्पत्तिः, अत्रापि निमज्ज्य वर्त्तमानयोस्तयोः कान्तिर्निर्गच्छतीत्युत्-प्रेक्षितम् ॥ ११३ ॥

चलीकृता इति । यत्र यस्मिन् तडागे तरङ्गाणां रिङ्गणैर्गमनैश्चलीकृताश्चालिता अराला वक्रा याः शैवाललताः परस्परमिलनेन दीर्घत्वात् लतासदृशा जलनील्यस्तासां परम्पराः समूहाः ध्रुवमुत्प्रेक्षे वाडवहव्यवाहो वाडवाग्नेरवस्थित्या प्ररोहत्तमोऽतिशयेन प्रादुर्भवन् भूमा प्राचुर्यं यस्य तादृशो यो-धूमस्तस्य भावस्तत्तां दधुर्धृतवत्यः । नैताः शैवाललतापरम्पराः किन्त्वस्मिन् समुद्रे वर्त्तमानस्य वाडवानलस्य धूमसमूह इत्युत्प्रेक्षा । 'जलनीली तु शैवालं शैवलः' इत्यमरः ॥ ११४ ॥

---

अत्र तरङ्गलेखानां तरङ्गिणीत्वेन रूपणात् तथा कोकनदकोरकाणां प्रवालाङ्कुरत्वेन रूपणाच्च रूपकालङ्कारद्वयम् , अपह्नुतिः, छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'पद्मञ्च कुमुदञ्चापि रक्तं कोकनदं विदुः' इति धरणिः, ॥ ११२ ॥

श्वेतपद्मस्य विधुदीधितितुल्यता, नीलपद्मस्य कालकूटप्रभासाम्यम् । अत्र छलेन विमुञ्चन्निव इति सापह्नवा क्रियोत्प्रेक्षा, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'अवदातः सितो गौरः' इति, 'कृष्णो नीलासितश्यामकालश्यामलमेचकाः' इति चामरः ॥ ११३ ॥

अत्र ध्रुवशब्दस्य उत्प्रेक्षावाचकत्वात् वाच्योत्प्रेक्षा, तथा आद्ये पादे छेकानुप्रासः; द्वितीये चतुर्थे च वृत्त्यनुप्रासः; वाडवा वाडेति यमकञ्चेति संसृष्टिः ॥ ११४ ॥

प्रकाममादित्यमवाप्य कण्टकैः करम्बितामोदभरं विवृण्वती ।
धृतस्फुटश्रीगृहविग्रहा दिवा सरोजिनी यत्प्रभवाप्सरायिता ॥ ११५ ॥
यदम्बुपूरप्रतिबिम्बितायति-र्मरुत्तरङ्गैस्तरलस्तटद्रुमः ।
निमज्ज्य मैनाकमहीभृतः सत-स्ततान पक्षान् धुवतः सपक्षताम् ॥ ११६ ॥
पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसुहंसीकलनादसादरम् ।
स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः ॥ ११७ ॥

प्रकाममिति । यस्मात् तड़ागात् प्रभव उत्पत्तिर्यस्यास्तादृशी सरोजिनी पद्मिनी दिवा दिवसे अप्सरायिता अप्सरा इवाचरति स्म । किम्भूता कण्टकैर्मृणालस्थसूक्ष्मावयवविशेषैः करम्बिता युक्ता तथा आदित्यं सूर्यम् अवाप्य प्रकाममतिशयं यथा तथा आमोदभरं सौगन्ध्यातिशयं-विवृण्वती प्रकाशयन्ती । सूर्योदये हि पद्मानां विकाशात् गन्धातिशयो दिक्षु निःसरति । तथा स्फुटानि प्रफुल्लानि श्रिया लक्ष्म्या गृहाणि आश्रया आयतनानीति यावत् लक्ष्म्याः पद्मासनत्वात् धृतस्तान्येव विग्रहो यया तादृशी । अप्सरा अपि प्रकामं प्रकृष्टमदनम् आदित्यम् अदितेरपत्यं देवम् अवाप्य आमोदभरं हर्षातिशयं विवृण्वती कण्टकैः रोमाञ्चैः करम्बिता च भवति तथा दिवौ स्वर्गेण धृतः स्फुटायाः प्रकाशमानायाः श्रियाः शोभायाः गृहं स्थानं विग्रहः शरीरं यस्या-स्तादृशी च भवति । समुद्रे अप्सरसस्तिष्ठन्ति अत्र तु सरोजिन्य एव ता इति भावः । 'आदित्यो-भास्करे देवे' इति मेदिनी । 'रोमाञ्चे क्षुद्रशत्रौ च द्रुमाङ्गे कण्टकोऽस्त्रियाम्' इति त्रिकाण्डशेषः । 'आमोदो हर्षगन्धयोः' इति हेमचन्द्रः ॥ ११५ ॥

यदम्बुपूरेति । यस्य तड़ागस्य अम्बुनो जलस्य पूरे समूहे प्रतिबिम्बिता आयतिर्दैर्घ्यं यस्य तादृशः प्रतिबिम्बिताकृतिरिति पाठे आकृतिः शरीरं यस्येति विग्रहः तटद्रुमः कूलस्थवृक्षः मरुतो-वातात् तज्जनितैरित्यर्थः तरङ्गैरूर्मिभिस्तरलश्चञ्चलः सन् निमज्ज्य निमग्नीभूय इन्द्रभयादिति शेषः सतो विद्यमानस्य पक्षान् गरुतो धुवतः कम्पयतो मैनाकमहीभृतो मेनाकपर्वतस्य सपक्षतां साम्यं ततान विस्तारयामास । पुरा खलु पर्वतानां पक्षांश्छेत्तुमुद्यतादिन्द्राद्भयेन मैनाकमहीधरः सपक्ष एव पलाय्य समुद्रं प्रविष्ट इति पौराणिकी वार्त्ता ॥ ११६ ॥

अथ तत्र सरसि नलस्य भविष्यद्दमयन्तीघटनामूलहंसदर्शनं युग्मकेनाह । पयोधीति । स नैषधो नलः पयोधेः समुद्रस्य लक्ष्मीं सम्पत्तिं पूर्वोक्तरीत्या मुष्णाति अपहरतीति तादृशे

---

अत्र पूर्णोपमालंकारः । उपमाश्लेषालंकारौ इति सां ॥ ११५ ॥
उपमा वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ११६ ॥
अत्र अन्यस्य लक्ष्मीम् कथमन्योमुष्णातीति वस्तुसम्बन्धोऽसम्भवन् लक्ष्मीमिव लक्ष्मीमिति सादृश्याक्षेपात् असम्भवद्वस्तु सम्बन्धरूपा निदर्शना, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ।

प्रियासु बालासु रतक्षमासु च द्विपत्रितं पल्लवितञ्च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं मिषेण चञ्च्वोश्चरणद्वयस्य च ॥ ११८ ॥

महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम् ।
प्रियावियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत् ॥ ११९ ॥

अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा ।
तृणेन वात्येव तयानुगम्यते जनस्य चित्तेन भृशावशात्मना ॥ १२० ॥

तत्र केलिपल्वले क्रीडासरसि अन्तिके समीपे विचरन्तं भ्रमन्तं मृणालादिकं भुञ्जानं वा । चर गतौ भक्षणे चेत्यस्य रूपम् । हिरण्मयम् अतएव चित्रं विस्मयजनकं कदाचिदपि तथाविधानवलोकनात् । हंसम् अबोधि दृष्टवान् । किम्भूतं हंसं रिरंसूरन्तुमिच्छुर्या हंसी तस्याः कलनादे अस्फुटमधुरध्वनौ सादरं साभिलाषम् । अथ च भूतावासत्वात् क्रोधद्वेषादिना भयानकत्वाच्च समुद्रसदृशे विनश्वरत्वाच्च पल्वलसदृशे शरीरे कश्चिद्योगी रिरंसुर्हंसी माया तस्याः कलनादसादरं चित्तं मायया विस्मापितं सर्व्वव्यापकत्वात् अन्तिके विचरन्तं 'हिरण्मयः पुरुष एक'- इति श्रुतेर्हिरण्मयं हंसं परमात्मानं पश्यति । 'पल्वलं स्यादल्पसरः सरोमात्रेऽपि पल्वलम्' इति बलः ॥ ११७ ॥

पुनः किम्भूतमित्याह । प्रियास्विति । स्मरेण कामेन अर्जितम् उत्पादितं रागमहीरुहस्य अनुरागरूपवृक्षस्य अङ्कुरम् अभिनवोद्भिदं बिभ्रतं धारयन्तमिव । प्रतीयमानोत्प्रेक्षेयम् । किम्भूतमङ्कुरं चञ्च्वोस्त्रोटम्मिषेण व्याजेन बालासु मुग्धासु प्रियासु कान्तासु द्विपत्रितं संजातद्विपत्रम् ईषद्विकसितमित्यर्थः हंसानां चञ्च्वोस्तद्रूपत्वात् । तथा चरणद्वयस्य च मिषेण रतक्षमासु प्रौढासु प्रियासु पल्लवितं संजातपल्लवं सम्यग्विकाशितमित्यर्थः तेषां चरणद्वयस्यापि पल्लवतुल्यत्वात् । यथासंख्यालङ्कारोऽयं 'यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत्' इति लक्षणात् ॥ ११८ ॥

अस्य हंसदर्शनेन हर्षं वर्णयति । महीमहेन्द्र इति । महीमहेन्द्रः पृथिवीन्द्रो नलः निर्भरमत्यर्थं प्रियाया दमयन्त्या वियोगात् विरहात् विधुरोऽपि व्याकुलः सन्नपि एकान्तेन नियमेन मनोऽन्तःकरणं विनोदयति प्रमोदयतीति तादृशं तं शकुन्तं पक्षिणं हंसम् अवेक्ष्य दृष्ट्वा क्षणमल्पकालं मनाक् किञ्चित् कुतूहलेन कौतुकेन आक्रान्तं व्याप्तं मनो यस्य तादृशोऽभूत् ॥ ११९ ॥

---

उपमा इति सां । अत्र शब्दशक्तिमूलो वस्तुध्वनिः ॥ ११७ ॥

अत्र रागमहीरुहाङ्कुरमितिरूपकम्, 'चञ्चुचरणद्वयमिषेण' इति अपह्नुत्यानुप्राणितम्, बहिरभ्यन्तरस्थरागयोर्भेदेऽपि अभेदलक्षणातिशयोक्तिश्चेति संकरः, तेन चोत्थापिता चञ्चुचरणद्वयमिषेणान्तरस्यैव बहिरङ्कुरितत्वोत्प्रेक्षा व्यज्यते इत्यलंकारेणालंकारध्वनिः इति जीवातुः । 'पल्लवोविस्तरे विड़गे किसले विटपे वने' इति त्रिकाण्डशेषः ॥ ११८ ॥

छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः । विशेषालंकार इति सां ॥ ११९ ॥

अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः।
स तिर्यगावर्त्तितकन्धरः शिरः पिधाय पक्षेण रतक्लमालसः॥ १२१ ॥
सनालमात्माननिर्जितप्रभं ह्रिया नतं काञ्चनमम्बुजन्म किम्।
अबुद्ध तं विद्रुमदण्डमण्डितं स पीतमम्भःप्रभुचामरञ्च किम्॥ १२२ ॥

कथं तथाविधो हंसस्तत्रागतः कथं वा तं दृष्ट्वा विरहित्वेऽपि नलस्य कौतुकं जातमित्यपेक्षायामर्थान्तरमुपन्यस्यति। अवश्येति। अवश्यभव्येषु नियमेन भाविषु शुभादिषु न विद्यतेऽवग्रहः प्रतिबन्धो यस्य तादृशो ग्रहो निर्बन्धो यस्यास्तादृशी अबाध्यमानप्रयत्नेत्यर्थः वेधसो ब्रह्मणः स्पृहा वाञ्छा यया दिशा येन मार्गेण धावति याति यद्विषयिणी भवतीत्यर्थः तया दिशा भृशमत्यर्थम् अवश आत्मा स्वरूपं यस्य तेन अतिपराधीनेनेत्यर्थः जनस्य लोकस्य चित्तेन मनसा अनुगम्यते अनुगता भवति वेधसः स्पृहेति शेषः। मनसा इष्टसाधनत्वादिना निश्चित्य तत्रैव जनः प्रवर्त्तत इत्यर्थः। अत्रोपमिनोति—तृणेन वात्येव। यथा अप्रतिबन्धा वात्या वातकुण्डलिका यया दिशा धावति तया दिशा निःसारत्वात् वात्याधीनेन तृणेन सानुगम्यते तथेत्यर्थः। अत्रावश्यम्भावी दमयन्त्या सह परिणयस्तदनुकूलया विधीच्छया प्रेरिते हंसे कौतुकं भवत्येवेति भावः। 'अवग्रहः प्रतिबन्धे स्याद्वृष्टिरोधे गजालिके' इति रन्तिदेवः। 'ग्रहोऽनुग्रहनिर्बन्धग्रहणेषु रणोद्यमे। सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः' इति मेदिनी॥ १२०॥

धारणानुकूलां हंसस्य निद्रां वर्णयति। अथेति। अथानन्तरं स खगो हंसः तदा तस्मिन् समये रतक्लमेन सुरतखेदेनालसः सन् उपपल्वलं सरःसमीपे एकपादिकाम् एकचरणम् अवलम्ब्य पक्षेण छदेन शिरो मस्तकं पिधाय आच्छाद्य तिर्यक् आवर्त्तिता संस्थापिता कन्धरा ग्रीवा येन तादृशः सन् क्षणं निदद्रौ निद्रितवान्। एकपादिकामिति एकपाद एवेत्येकपादिका स्वार्थे कः। स्वार्थिकाः प्रत्ययाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिक्रम्य वर्त्तन्त इति स्त्रीत्वम्। स्वभावोक्तिरियम्॥ १२१॥

अस्य निद्रितहंसं दृष्ट्वा वितर्कमाह। सनालेति। स नलः तं हंसम् इति अबुद्ध तर्कितवान्। इति किमित्याह—एतत् किं सनालं सदण्डम् आत्माननेन स्वमुखेन निर्जिता प्रभा शोभा यस्य तादृशम् अतएव ह्रिया लज्जया नतं नम्रीभूतं काञ्चनं सौवर्ण्यम् अम्बुजन्म पद्मं तथा चरणस्य लौहित्यात् विद्रुमदण्डेन प्रवालदण्डेन मण्डितम् भूषितम् अम्भःप्रभोर्व्वरुणस्य पीतं पीतवर्णं

अत्र तृणेन वात्येव इत्युपमाच्छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः। कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासोऽलकार इति नारायणः॥ १२०॥

अत्र वृत्त्यनुप्रासोऽलंकारः॥ १२१॥

अत्र ह्रियं प्रति निर्जितप्रभत्वपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वाच्योत्प्रेक्षा,

कृतावरोहस्य हयादुपानहौ ततः पदे रेजतुरस्य बिभ्रती ।
तयोः प्रवालैर्वनयोस्तथाम्बुजै-र्नियोद्धुकामे किमु बद्धवर्म्मणी ॥ १२३ ॥
विधाय मूर्त्तिं कपटेन वामनीं स्वयं बलिध्वंसिविडम्बिनीमयम् ।
उपेतपार्श्वश्चरणेन मौनिना नृपः पतङ्गं तमधत्त पाणिना ॥ १२४ ॥
तदात्तमात्मानमवेत्य सम्भ्रमात् पुनः पुनः प्रायसदुत्प्लवाय सः ।
गतो विरुत्योड्डयने निराशतां करौ निरोद्धुर्दशति स्म केवलम् ॥ १२५ ॥

चामरं किम् इति वितर्कः । अत्र एतत्पदमितिपदञ्च अध्याहर्त्तव्यम् । किमुत्प्रेक्षे । स नलस्तं हंसं काञ्चनमम्बुजन्म अबुद्ध सौवर्ण्यपद्मत्वेन निश्चितवानित्याद्यपि व्याचक्षते ॥ १२२ ॥

अस्य हंसजिघृक्षायामुद्योगमाह । कृतेति । ततो हयादश्वात् कृतोऽवरोहोऽवतरणं येन तादृशस्यास्य नलस्य उपानहौ पादुके बिभ्रती दधती पदे चरणे रेजतुः शुशुभाते । अत्रोत्प्रेक्षते-तयोर्वनयोः काननसलिलयोः प्रवालैर्नवपल्लवैस्तथा अम्बुजैः पद्मैः यथाक्रममन्वयः काननस्य प्रवालैः सलिलस्य चाम्बुजैः सह नियोद्धुं संग्रामयितुं कामोऽभिलाषो ययोस्तादृशे सती किमुत्प्रेक्षे बद्धं संनद्धं वर्म्म कवचं याभ्यां तथाभूते । 'वने सलिलकानने' इत्यमरः । 'नियुद्धं बाहुयुद्धे स्याद्युद्धमात्रेऽपि चेष्यते' इति बलः ॥ १२३ ॥

अस्य हंसधारणमाह । विधायेति । अयं नृपोनलः बलिध्वंसिनं वामनदेवं विडम्बयितुं सदृशीकर्त्तुं शीलं यस्यास्तादृशीं वामनीं ह्रस्वां मूर्त्तिं तनूं कपटेन छलेन विधाय कृत्वा मौनिना निःशब्देन चरणेन उपेतपार्श्वः पार्श्वसमीपगतः सन् पाणिना हस्तेन तं पतङ्गं पक्षिणं हंसं स्वयमात्मना अधत्त धृतवान् । वामनदेवोऽपि बलिच्छलनकपटेन वामनीं मूर्त्तिं विधाय तत्क्षणोत्पन्नचरणेनोपेतपार्श्वः सन् पाणिना पतङ्गं सूर्य्यं स्पृष्टवान् । 'पतङ्गौ पक्षिसूर्य्यौ च' इत्यमरः ॥ १२४ ॥

अनेन धृतस्य हंसस्य चेष्टामाह । तदात्तमिति । स हंसः तेन नलेन आत्तं गृहीतम् आत्मानम् अवेत्य ज्ञात्वा सम्भ्रमात् भयात् सम्भ्रमं प्राप्येत्यर्थः उत्प्लवाय उड्डयनाय पुनः पुनः प्रायसत प्रयत्नं कृतवान् । अथ उड्डयने निराशतां सम्भावनाशून्यतां गतः सन् विरुत्य विशेषेण

'अबुद्ध' इत्येकक्रियया सह अम्बुजन्मचामरयोः कर्मतयाभिसम्बन्धात् तुल्ययोगितालंकारश्चेत्येतेषां संकरः । अत्रानिश्चयःसन्देहोऽलकारः इति सा ॥ १२२ ॥

अत्र यथासंख्यम्, वाच्या गुणोत्प्रेक्षा, छेकानुप्रासश्चेति संसृष्टिः । 'तनुत्रं वर्म दंशनम्' इत्यमरः ॥ १२३ ॥

पक्षिधारणप्रकारोऽयमिति स्वभावोक्तिः, बलिध्वंसिविडम्बिनी मित्यार्थोपमा, वृत्त्यनुप्रासः, अन्त्यानुप्रासश्चेति संसृष्टिः ॥ १२४ ॥

ससम्भ्रमोत्पातिपतत्कुलाकुलं सरः प्रपद्योत्कतयानुकम्प्रताम् ।
तमूर्म्मिलोलैः पतगग्रहान्नृपं न्यवारयद्वारिरुहैः करैरिव ॥ १२६ ॥

पतत्त्रिणा तद्रुचिरेण वञ्चितं श्रियः प्रयान्त्याः प्रविहाय पल्वलम् ।
चलत्पदाम्भोरुहनूपुरोपमा चुकूज कूले कलहंसमण्डली ॥ १२७ ॥

शब्दं कृत्वा निरोद्धुर्ग्रहीतुर्नलस्य करौ हस्तौ केवलं दशति स्म दष्टवान् । पक्षिणोहि अन्येन धृताः सन्तः प्रथममुड्डयने यतन्ते, ततः शब्दं कुर्व्वन्ति, ततोधारकस्य हस्तौ दशन्तीति स्वभावोक्तिरियम् ॥ १२५ ॥

गृहीते तस्मिन् अन्यपक्षिणामुड्डयनात् सरःक्षोभं वर्णयति । ससम्भ्रमेति । ससम्भ्रमं सभयम् उत्पातिनाम् उद्गच्छताम् पततां पक्षिणां कुलैः समूहैराकुलं व्याप्तं सरस्तडागः उत्कतया उद्गतजलत्वेन अथच उत्सुकतया अनु पश्चात् कम्प्रतां कम्पनम् अथच कृपालुतां प्रपद्य प्राप्य ऊर्म्मिभिस्तरङ्गैः करगैर्लोलैश्चञ्चलैः वारिरुहैः पद्मलक्षणैः करैर्हस्तैः पतगग्रहात् पक्षिधारणात् तं नृपं नलं न्यवारयदिव निवारितवदिव । अन्योऽपि उत्सुकतया कृपालुतामेत्य चञ्चलकरेण एवं-व्यवसायिनं जनं निवारयतीत्युत्प्रेक्षा । 'पतत्रिपत्त्रिपतगपतत्पत्तरथाण्डजाः' इति, 'कं शिरोऽम्बु-नोः' इति चामरः ॥ १२६ ॥

हंसधारणात् कूलगतानामप्यन्यहंसानां रवमाह । पतत्त्रिणेति । तत् पल्वलं प्रविहाय त्यक्त्वा प्रयान्त्या गच्छन्त्याः श्रियो लक्ष्म्याश्चलन्ती स्पन्दमाने ये पदाम्भोरुहे चरणकमले तयोर्वर्त्तमानाभ्यां नूपुराभ्यामुपमा सादृश्यं यस्यास्तादृशी कलहंसानां राजहंसानां कादम्बानां वा मण्डली समूहः कूले तटे चुकूज रुराव । हंसानां कलध्वनिरूपसमानधर्म्मवत्त्वात् नूपुरसादृश्यम् । लक्ष्मी-परित्यागकारणमाह किम्भूतं सरः रुचिरेण मनोज्ञेन पतत्त्रिणा हंसेन वञ्चितं रहितम् । लक्ष्मीर्हि रुचिरवस्तुरहितं स्थानं परित्यजति । प्रयान्त्या इति वर्त्तमानप्रयोगात् अधुनैव श्रीः परित्यज्य गच्छतीति सूचितम् । 'कलहंसो राजहंसे कादम्बे नृपसत्तमे' इति हेमचन्द्रः ॥ १२७ ॥

---

छेकानुप्रासोऽलंकारः ॥ १२५ ॥

अत्र समेन कार्येण प्रकृते सरसि अप्रकृतस्य कृपालुजनस्य व्यवहारारोपणात् समासोक्तिरिति-केचित् । स्वभावोक्तिः, वारिरुहैः करैरिति रूपकम्, उत्कतया इति अनुकम्प्रतामित्यत्र च श्लेषः, क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावरूपः संकरः । छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १२६ ॥

अत्र श्रीशब्दश्लेषेण शोभालक्ष्म्योर्भेदेऽप्यभेदप्रतिपादनादतिशयोक्तिः, लुप्तोपमा, वृत्त्यनुप्रास-च्छेकानुप्रासौ चेति संकरः । 'यथा सुखप्रदेन प्रियेण त्यक्तं स्थानं विहाय गच्छन्त्याः प्रियायाश्चरणे नूपुरौ कूजत इति श्लेषः इति नारायणः । 'किंवा तत्सरस्तेन हंसेन सश्रीकमासीत् तद्विरहान्निः-श्रीकमभूदित्युत्प्रेक्षितम् । राजहंसरवो हि नूपुररवेणोपमीयत इति उपमा' इति भरतः ॥ १२७ ॥

न वासयोग्या वसुधेयमीदृशस्त्वमङ्ग यस्याः पतिरुज्झितस्थितिः ।
इति प्रहाय क्षितिमाश्रिता नभः खगास्तमाचुक्रुशुरारवैः खलु ॥ १२८ ॥
न जातरूपच्छदजातरूपता द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।
अवादि तेनाथ स मानसौकसा जनाधिनाथः करपञ्जरस्पृशा ॥ १२९ ॥
धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः ।
तवार्णवस्येव तुषारशीकरै-र्भवेदमीभिः कमलोदयः कियान् ॥ १३० ॥

ऊर्ध्वगतानामन्यपक्षिणामपि रवमाह । न वासेति । अङ्ग हे राजन् । त्वं यस्या- वसुधायाः उज्झितस्थितिस्त्यक्तमर्यादः ईदृशोऽनपराधप्राणिधारणरूपमधर्म्मं कुर्व्वाणः पतिः पालकः इयं वसुधा वसूनि रत्नानि दधातीति तादृशी सरत्नापीत्यर्थः न वासयोग्या अवस्थानोपयुक्ता न भवति वरं शून्यमेवाश्रयणीयं न तु भवत्पतिका रत्नपूर्णापि पृथिवीति भावः । इति एवंप्रकारं खलूत्प्रेक्षायां खगाः पक्षिणः क्षितिं पृथिवीं प्रहाय परित्यज्य नभोऽन्तरीक्षम् आश्रिता गताः सन्तः आरवैः शब्दैस्तं नलम् आचुक्रुशुः निनिन्दुरिव ॥ १२८ ॥

अथ तथाविधं रूपं दृष्ट्वा प्रशंसन्तं राजानं प्रति हंसस्योक्तिप्रवृत्तिं वर्णयति । न जातेति । अथानन्तरं द्विजस्य पक्षिण इयं जातरूपस्य सुवर्णस्य छदाभ्यां पक्षाभ्यां जातमुत्पन्नं रूपं सौन्दर्यं यस्य तस्य भावस्तत्ता न दृष्टा इत्येवं मुहुर्वारं वारं स्तुवन् प्रशंसन् स जनाधिनाथो राजा करपञ्जरं हस्तरूपं पञ्जरं पक्षिबन्धनयन्त्रं स्पृशति भजत इति तादृशेन तेन मानसौकसा हंसेन अवादि वक्ष्यमाणप्रकारेणोक्तः । 'चामीकरं जातरूपं महारजतकाञ्चने' इति, 'हंसास्तु श्वेतगरुतश्चक्राङ्ग-मानसौकसः' इति चामरः ॥ १२९ ॥

किमवादीत्याह । धिगस्त्विति । हे राजन् ! हेमजन्मनः स्वर्णसम्भवान् मम पक्षान् समीक्ष्य दृष्ट्वा तृष्णया लिप्सया तरलं चञ्चलं भवन्मनस्त्वदन्तःकरणं धिगस्तु त्वन्मनो निन्दितं भवत्वित्यर्थः स्वर्णलोभेनैव त्वया धृतोऽस्मीति भावः । स्वर्णं किं लक्ष्मीवर्द्धकं न भवतीति निरस्यति – अमीभिर्हेमजन्मपक्षैस्तव कियान् किंपरिमाणः कमलाया लक्ष्म्या उदयः आधिक्यं भवेत् अपि तु नाल्पोऽपीत्यर्थः । अत्रोपमिनोति –तुषारशीकरैर्हिमलवैः अर्णवस्येव कमलस्य जलस्य उदयः यथा

---

खगा इति यौगिकं पदम्, खे आकाशे गच्छन्तीति तस्य व्युत्पत्तिः इति भरतः । प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासश्चेति संकरः । अन्योऽपि सोपद्रवं देशं त्यजतीति ध्वनिरिति नारायणः ॥ १२८ ॥

पञ्जरपदेन करपुटस्य शैथिल्यात् पीडाभावः सूच्यते इति नारायणः । करपञ्जरमितिरूपकम्, 'जातरूप' 'जातरूप' इति यमकम् पराद्धे वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १२९ ॥

'कमलोदय' इति श्लेषः, तेन चानुप्राणिता 'अर्णवस्येव' इत्युपमा, द्वितीयार्धकारणेन प्रथमार्ध-

न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः ।
विगर्हितं धर्म्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि ॥ १३१ ॥
पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्य्यते ।
धिगीदृशन्ते नृपते कुविक्रमं कृपाश्रये यः कृपणे पतत्त्रिणि ॥ १३२ ॥
फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः ।
त्वयाद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी हृणीयते ॥ १३३ ॥

हिमलवैर्जलधेर्जलवृद्धि र्न भवेत्तथा मम पक्षैरखिलधरातलाधीश्वरस्य तवलक्ष्मीवृद्धिर्न भवेदित्यर्थः । कमलोदय इति श्लिष्टं पदम् । 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे । मृगभेदे तु कमलः कमला श्रीवरस्त्रियोः' इति मेदिनी ॥ १३० ॥

न केवलमिति । त्वदीक्षणात् पुण्यश्लोकस्य राज्ञस्तव विलोकनात् विश्वसितो विश्वासं प्राप्तोऽन्तरात्मा यस्य तादृशस्य मम वधः केवलं प्राणिवधो न जन्तुहिंसामात्रं न भवति किन्तु विश्वस्तवधोऽपीत्यर्थः । ननु कोविशेषो विश्वस्ताविश्वस्तवधयोरित्यपेक्षायामाह धर्म्म एव धनं येषां तैर्धार्म्मिकैर्म्मुनिभिः विश्वासजुषां विश्वासभाजां द्विषामपि वैरिणामपि निबर्हणं मारणं विशिष्य अन्यापेक्षया विशेषं कृत्वा विगर्हितं विशेषेण निन्दितम् । ये तु हिंसनीया एव तेषामपि विश्वस्तानां वधो विशेषेण निन्दितः, का कथा निरपराधानां तथाविधानां मादृशामिति भावः ॥ १३१ ॥

क्षत्त्रिया हि स्वभावतो हिंस्रा इत्याशङ्क्याह । पदे पदे स्थाने स्थाने रणे युद्धे उद्भटा दुर्म्मदा-भटा वीराः सन्ति विद्यन्ते तेषु भटेषु एष हिंसारसो मारणानुरागो न पूर्य्यते न पूर्णो भवति अपि तु तेष्वेव पूर्णः कर्त्तव्य इति काकुः । हे नृपते ! ते तव ईदृशं कुविक्रमं कुत्सितपौरुषं धिक् । निन्दनीयस्ते कुविक्रम इत्यर्थः । यः कुविक्रमः कृपणे दीने स्वभावतोदीने अतएव कृपाश्रये दयापात्रे पतत्त्रिणि पक्षिणि मयि वर्त्तत इति शेषः ॥ १३२ ॥

राज्ञां स्वविषयवासिनो दण्डनीया एव ननु तद्रूपणमावहतीत्याशङ्क्याह । फलेनेति । इत्थमे-

---

कार्यस्य समर्थनात् अर्थान्तरन्यासः इति, वृत्त्यनुप्रासच्छेकानुप्रासालंकारौ चेत्येतेषां संसृष्टिः ॥ १३० ॥

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः इति केचित्, काव्यलिङ्गमिति मे । अर्थापत्तिः, लाटानुप्रासच्छेकानुप्रासवृत्त्यनुप्रासालंकाराश्चेत्येषां संकरः । 'वधोनिबर्हणं घातो मारणं प्रति-घातनम्' इति बलः ॥ १३१ ॥

कुत्सितं विक्रमं प्रति चतुर्थपादवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् । अप्रस्तुत-प्रशंसा इति केचित् भटा भटा इति यमकं इति केचित् । छेकानुप्रासश्चेति संसृष्टिः । स्थाने स्थाने वीराःसन्ति, परमेष हिंसारसो नतेषुनन्त्रेषु मादृशेषु त्वया पूर्णःक्रियते इति शिरश्चालनेनायुक्तत्वमेव ध्वन्यते इति वस्तुना वस्तुध्वनिः ॥ १३२ ॥

इतीदृशैस्तं विरचय्य वाङ्मयः सचित्रवैलक्ष्यकृपं नृपं खगः ।
दयासमुद्रे स तदाशयेऽतिथी–चकार कारुण्यरसापगा गिरः ॥ १३४ ॥
मदेकपुत्त्रा जननी जरातुरा नवप्रसूतिर्व्वरटा तपस्विनी ।
गतिस्तयोरेष जनस्तमर्द्दय-न्नहो विधे त्वां करुणा रुणद्धि न ॥ १३५ ॥

वम्प्रकारं सर्वजनसमक्षमित्यर्थः वारि जलमेव भूरुत्पत्तिस्थानं तत्र रोहन्ति जायन्तइति तेषां वारिभूरुहां पद्मानां फलेन वराटकादिना मूलेन च शालूकादिना च मुनेरिव ऋषेरिव यस्य मम हंसस्य वृत्तयो जीविकाः तस्मिन्नपि मुनिवृत्तावपि मयि अद्य दण्डधारिणा शास्तिकारिणा पत्या स्वामिना त्वया धरणी पृथिवी कथं न ह्रिणीयते न लज्जते अपि तु लज्जतएवेत्यर्थः । अधर्म्मवर्त्तिनि स्वामिनि स्त्रियोलज्जा युज्यतएव ॥ १३३ ॥

हंसोक्त्या राज्ञः सदयत्वमाह । इतीति । खगो हंस इत्येवंप्रकारेण ईदृशैः पूर्वोक्तैस्तत्सदृशैरन्यैश्च वाङ्मयैर्वचनैः नृपं नलं सचित्रवैलक्ष्यकृपम् आश्चर्य्यलज्जादयाभियुक्तं विरचय्य विधाय दयासमुद्रे कृपासागरे तस्य राज्ञ आशये मनसि कारुण्यं करुणालक्षणो योरसश्चमत्कारः अथच जलं तस्य आपगा नदीस्वरूपा गिरोवचनानि अतिथीचकार प्रावेशयत् । करुणरसव्यञ्जकं वाक्यमुक्त्वा राज्ञ आशयं सदयं चकारेत्यर्थः । समुद्रे हि नद्यो गच्छन्तीति तथोक्तम् । हंसोऽप्येवं वदतीत्याश्चर्य्यम् असदृशकारिणं मां निन्दतीति लज्जा, हतएवास्मीति निश्चित्य दीनवद्विलपतीति कृपा । 'आत्मनश्चरिते सम्यग् ज्ञातेऽन्यैर्यस्य जायते । अपत्रपातिमहती सविलक्ष इति स्मृतः' इति । विलक्षस्य भावोवैलक्ष्यम् ॥ १३४ ॥

हतमेवात्मानं निश्चित्य विधिं प्रति हंसस्याक्षेपमाह । मदेकेति । जननी मम माता जरया वार्द्धक्येन आतुरा पीड़िता स्वतो जीवितुमसमर्थेत्यर्थः । तर्हि पुत्रान्तरेणैव तस्या जीविका भवेदिति निषेधति यतो मदेकपुत्रा अहमेव एकः पुत्रोयस्याः सा तथोक्ता अन्यपरिपोषकोनास्तीत्यर्थः । तथा वरटा हंसी मम स्त्री नवा नूतना प्रसूतिः प्रसवो यस्यास्तादृशी सापि स्वतोजीवितुमसमर्था । तर्हि पत्यन्तरेण तस्या जीविका भवेदित्यपि निषेधति —यतस्तपस्विनी पतिव्रता मम मरणानन्तरं पत्यन्तराश्रयणाभावात् तस्या जीवनं शिशूनां पोषणञ्च दुर्घटमेव भवेदिति भावः । एष मल्लक्षणो जनस्तयोर्जननीवरटयोर्गतिर्वृत्तिहेतुः, तं तथाविधं माम् अर्द्दयन् पीड़यन् मारयन्नित्यर्थः

---

अत्र श्रौतोपमा, यथासंख्यमिति सां । अर्थापत्तिः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १३३ ॥

अत्र तदाशये समुद्रत्वारोपः गीर्षु आपगात्वारोपे निमित्तम्, रसपदञ्च श्लिष्टमिति श्लिष्टपरम्परितरूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः । 'आशयः स्यादभिप्राये मानसाधारयोरपि' इति विश्वः । 'रसोजलं रसोहर्षः रसः शृङ्गारपूर्वकः । रसः स्यालङ्ग नियासः पारदोऽपिरसो विषम्' इत्यनेकार्थध्वनिमञ्जरी ॥ १३४ ॥

मुहूर्त्तमात्रं भवनिन्दया दया-सखाः सखायः स्रवदश्रवो मम ।
निवृत्तिमेष्यन्ति परं दुरुत्तर-स्त्वयैव मातः सुतशोकसागरः ॥ १३६ ॥
मदर्थसन्देशमृणालमन्थरः प्रियः कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदतोऽथ पक्षिणः प्रिये स कीदृग्भविता तव क्षणः ॥ १३७ ॥
कथं विधातर्म्मयि पाणिपङ्कजा-त्तव प्रियाशैत्यमृदुत्वशिल्पिनः ।
वियोक्ष्यसे वल्लभयेतिनिर्गता लिपिर्ललाटन्तपनिष्ठुराक्षरा ॥ १३८ ॥

हे विधे ! ब्रह्मन् दैव वा त्वां करुणा दया न रुणद्धि नावृणोति ईदृशात् कर्म्मणस्त्वां न निवारयतीत्यर्थः । एवंविधे जने करुणा कर्त्तव्यैव अतएव अहो आश्चर्य्यम् । तमर्द्दयन्निति सम्बोधनान्तं विधेर्विशेषणम् । 'हंसस्य योषिद्वरटा' इत्यमरः ॥ १३५ ॥

मातरं सम्बोध्य विलपति । मुहूर्तेति । मम दयासखाः कृपालवः सखायो बन्धवः मुहूर्त्तमात्रं भवस्य संसारस्य निन्दया असारोऽयं संसारइत्यादिप्रकारया स्रवन्ति गलन्ति अश्रूणि चक्षुर्जलानि येषां तादृशाः सन्तः निवृत्तिम् शोकस्य शान्तिम् एष्यन्ति प्राप्स्यन्ति, हे मातः ! परं केवलं सुतस्य शोक एव सागरः स त्वयैव दुरुत्तरो दुःखेनोत्तरणीयः मद्वियोगशोकस्तवैव चिरं स्थास्यतीत्यर्थः ॥ १३६ ॥

हंसीं सम्बोध्य विलपति । मदर्थेति । मदर्थैर्मन्निमित्तैर्मम प्रीतिजनकैरित्यर्थः सन्देशमृणालैः मदर्थं मृणालान्यानेयानीति सन्दिष्टविसैर्म्मन्थरो भारबाहुल्यान्मन्दगामी प्रियो मत्सहचरः कियद्दूरे आगच्छतीति शेषः कियद्दूरं यस्येति प्रियविशेषणं वा इति त्वया उदिते पृष्टे सति अथ जिज्ञासानन्तरं हे प्रिये ! रुदतो मम शोकात् क्रन्दतः पक्षिणो मत्सहचरान् विलोकयन्त्याः पश्यन्त्यास्तव स क्षणः समयः कीदृक् किंप्रकारो भविता भविष्यति । नितरामनिर्व्वचनीयो-भवितेति भावः । 'मन्दगामी तु मन्थरः' इत्यमरः ॥ १३७ ॥

पुनरपि विधातारं सम्बोध्याक्षिपति । कथमिति । हे विधातः ! प्रियाया मम वल्लभाया यत् शैत्यं शीतलत्वं मृदुत्वं कोमलत्वञ्च तयोः शिल्पिनो निर्म्माणवतः तव पाणिः करः पङ्कजमिवेति तस्मात् वल्लभया प्रियया वियोक्ष्यसे वियुक्तोभविष्यसीति ललाटन्तपानि ललाटतापकारीणि

---

अत्र विशेषणानां साभिप्रायत्वात् परिकरो नामालंकारः, अन्त्यपादे छेकानुप्रासश्चेति संसृष्टिः ॥ १३५ ॥

निरङ्गरूपकम्, छेकानुप्रासोऽन्त्यानुप्रासश्चेति संसृष्टिः ॥ १३६ ॥

अत्र हंसप्रियायाः शोकोदयेन भावोदयनामालंकारः ॥ १३७ ॥

'कारणगुणाः कार्यगुणानारभन्ते' इति न्यायात् करपङ्कजं शीतलं मृदु च तस्य दाहकाठिन्ययो-रुत्पादकत्वं विरुद्धमिति भावः । अत्र कोमलशीतलात् करकमलात् सन्तापदायकनिष्ठुराक्षर-

अयि स्वयूथ्यैरशनिक्षतोपमं ममाद्य वृत्तान्तमिमं वतोदिता ।
मुखानि लोलाक्षि दिशामसंशयं दशापि शून्यानि विलोकयिष्यसि ॥ १३९ ॥
ममैव शोकेन विदीर्णवक्षसा त्वयापि चित्राङ्गि विपद्यते यदि ।
तदस्मि दैवेन हतोऽपि हा हतः स्फुटं यतस्ते शिशवः परासवः ॥ १४० ॥
तवापि हाहा विरहात् क्षुधाकुलाः कुलायकूलेषु विलुठ्य तेषु ते ।
चिरेण लब्धा बहुभिर्मनोरथै-र्गताः क्षणेनास्फुटितेक्षणा मम ॥ १४१ ॥

निष्ठुराणि कठोराणि अक्षराणि यत्र तादृशी लिपिर्लिखिताक्षरसंस्थानं मयि कथं निर्गता निःसृता एतदयुक्तमेवेत्यर्थः । करस्य प्रियाशैत्यादिविशेषणेन यद्यपि अदृष्टानुसारेण विधिर्लिखति तथापि 'शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा' इत्यादिस्मृत्या आवयोः समानलेखैव युज्यत इति भावः । पाणिः पङ्कजमिवेति लुप्तोपमया च पङ्कजतुल्यशीतलात् पाणिपङ्कजादेतादृशनिष्ठुरलिपि-निःसरणं नोचितमिति ध्वन्यते । ललाटन्तपेति ललाटपूर्व्वात्तपधातोः 'द्विषतपरललाटात्तपः' इति खः । 'लिखिताक्षरसंस्थाने लिपिर्लिविरुभे स्त्रियाम्' इत्यमरः ॥ १३८ ॥

पुनरपि स्त्रियं सम्बोध्य विलपति । अयीति । अयि लोलाक्षि ! स्वभावतः शोकाद्वा चञ्चलनयने ! वत खेदे स्वयूथ्यैर्म्ममात्मीयहंसवर्गैः अशनिक्षतोपमं वज्राघातसदृशम् इमं मम वृत्तान्तं मरणवार्त्ताम् अद्य उदिता उक्ता सती त्वम् असंशयं निश्चितमेव दिशां दशापि मुखानि शून्यानि रिक्तानि विलोकयिष्यसि द्रक्ष्यसि । मां विना तव सर्व्वं शून्यमिव भविष्यतीति भावः । अयीति कातरसम्बोधने, अपीति पाठे अपि सम्भावनायाम् ॥ १३९ ॥

स्वशोकात् प्रियामरणं सम्भाव्य विलपति । ममैवेति । हे चित्राङ्गि ! रमणीयगात्रि ! ममैव शोकेन दुःखेन विदीर्णवक्षसा स्फुटितहृदयया सत्या त्वयापि यदि विपद्यते म्रियते तत् तदा दैवेन विधात्रा अहं हतोऽपि मारितोऽपि हा खेदे पुनर्हतोऽस्मि यतो यस्मात् स्फुटं निश्चितं तेऽचिरोत्पन्नाः शिशवो बालकाः परासवो गतप्राणा मृता इति यावत् भवेयुरिति शेषः । मम मरणेऽपि त्वत्तस्तेषां जीवनं भवेत् उभयोर्म्मरणे तु तेऽपि मरिष्यन्तीति पिष्टपेषणमेव विधिना कृतमिति भावः । पुत्रे जीवति सति मृतोऽपि पिता जीवत्येव स्वस्यैव पुत्रस्वरूपत्वात् । तथाच 'आत्मा वै जायते पुत्रः' इति श्रुतिः । मनुरपि 'पतिर्जायां सम्प्रविश्य गर्भो भूत्वेह जायते । जायायास्तद्धि जायात्वं यदस्यां जायते पुनः' इति ॥ १४० ॥

*निर्गमरूपकारणविरुद्धकार्योत्पत्तिवर्णनात् विषमालंकारः इति सा० । उद्दिष्टानां क्रमेणानूद्देशात् यथासंख्यमलंकारश्चेत्यं तेषां सङ्करः ॥ १३८ ॥

अत्र अशनिक्षतोपममिति आर्थोपमालंकारश्छेकानुप्रासश्चेति संसृष्टिः ॥ १३९ ॥

अत्र तृतीयपादार्थं प्रति चतुर्थपादवाक्यार्थो हेतुरिति काव्यलिङ्गालंकारः इति सा० । 'हा विषाद-शुगर्तिषु' अ० ॥ १४० ॥

सुताः कमाहूय चिराय चूङ्कृतै-र्विधाय कम्प्राणि मुखानि कं प्रति ।
कथासु शिष्यध्वमिति प्रमील्य स स्रुतस्य सेकाद्बुबुधे नृपाश्रुणः ॥ १४२ ॥
इत्थममुं विलपन्तममुञ्च-द्दीनदयालुतयावनिपालः ।
रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय ॥ १४३ ॥

प्रियामरणं निश्चित्य सुतान् विलपति । तवापीति । हाहा अतिकष्टं हे प्रिये ! तवापि अपिशब्दान्ममापि विरहात् वियोगात् क्षुधया बुभुक्षया आकुला विधुराः सन्तः तेषु कुलायस्य नीडस्य कूलेषु तटेषु समीपेष्वित्यर्थः विलुठ्य अतिशयं लुठित्वा चिरेण बहुकालेन बहुभिर्मनोरथै-रभिलाषैर्लब्धाः प्राप्ता मम ते शिशवः क्षणेन गता मृतप्राया इत्यर्थः यतोऽस्फुटितेक्षणा अप्रका-शितनयनाः नयनाप्रकाशात् स्वयमाहारादानेऽसमर्था इत्यर्थः । गता इति आशंसायां क्तः । 'कुलायो नीडमस्त्रियाम्' इत्यमरः ॥ १४१ ॥

सुतान् विलप्य मूर्च्छां गतस्यास्य नृपाश्रुसेकात् सञ्ज्ञामाह । सुता इति । हे सुताः ! आवयोर्मरणात् चूङ्कृतैः चूमितव्यक्तध्वनिभिश्चिराय बहुकालम् आहूय आकार्य कं प्रति मुखानि कम्प्राणि कम्पनशीलानि विधाय कृत्वा कथासु शिष्यध्वं कथावशेषा भविष्यथ युष्माकं कथामात्रं लोके स्थास्यतीत्यर्थः मरिष्यथेति यावत् । सुतानां भाविमरणस्य मरणादिशब्देन वक्तुमशक्यत्वा-देवमुक्तम् । इत्युक्त्वा स हंसः प्रमील्य मूर्च्छां प्राप्य स्रुतस्य कारुण्योदयात् गलितस्य नृपाश्रुणो-नलनयनजलस्य सेकात् बुबुधे संज्ञां प्राप्तवान् । अन्यस्यापि मूर्च्छा जलसेकादपगच्छति । प्रथम-श्लोकमारभ्य एतत्पर्यन्तं वंशस्थच्छन्दः 'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥ १४२ ॥

राज्ञो दयया हंसपरित्यागमाह । इत्थमिति । अवनिपालो राजा इत्थं पूर्वोक्तप्रकारेण विलपन्तं विलापं कुर्वन्तम् अमुं हंसं दीनदयालुतया दीनेषु सदयतया इत्यभिधाय इत्युक्त्वा अमुञ्चत् तत्याज । इति किं हे हंस ! यदर्थं यन्निमित्तं धृतोऽसि तत् रूपम् अदर्शि मया दृष्टम् अथ इतः परं यथेच्छम् इच्छामनतिक्रम्य तव यथेच्छा वर्तते तथेत्यर्थः गच्छ याहि । दोधकं छन्द इदम् । 'दोधकवृत्तमिदं भभभाद्गौ' इति लक्षणात् ॥ १४३ ॥

---

अत्र स्फुटितेक्षणत्वपदार्थस्य गतत्वं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, वृत्त्यनुप्रास-च्छेकानुप्रासाभ्यां संसृज्यते। हाहेति वीप्सायां द्वित्वम् । हाहेति समुदितमव्ययमप्यस्ति । तथात्र —'हाहा खेदे हूहू हर्षे गन्धर्वेऽभू त्वनव्यये' चिः ॥ १४१ ॥

चूङ्कृतैरिति पक्षिशिशूनामयं स्वभावएव यत् मातापित्रोः समीपे चूमितव्यक्तशब्दानुकारं कृत्वा चञ्चुं कम्पयति इति स्वभावोक्तिरलङ्कारः, भङ्ग्या गम्यार्थमरणस्याभिधानात् पर्यायोक्तम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १४२ ॥

'एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः । नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह' इत्युक्तेश्छन्दोऽन्तरेण सर्गभङ्गमारभते । 'यदर्थं धृतोऽसी' त्यादिना 'धिगस्तु तृष्णा—' (१।१३०) इत्यादि परिहृतम् । छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः ॥ १४३ ॥

आनन्दजाश्रुभिरनुस्रियमाणमार्गान् प्राक्शोकनिर्गलितनेत्रपयःप्रवाहान् ।
चक्रे स चक्रनिभचङ्क्रमणच्छलेन नीराजनां जनयतां निजबान्धवानाम् ॥१४४॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः ॥ १४५ ॥

अस्य परित्यागादन्यहंसानामानन्दमाह । आनन्देति । स हंसः चक्रनिभं चक्राकारं यच्चङ्क्रमणं मण्डलीभ्रमणं तस्य छलेन व्याजेन नीराजनां निर्म्मञ्छनां जनयतां कुर्वतां निजबान्धवानां स्वीयसहचरपक्षिणां प्राक् प्रथमं धारणकाले शोकेन निर्गलितानां क्षरितानां नेत्रपयसां चक्षुर्जलानां प्रवाहान् निर्झरान् आनन्दजाश्रुभिः गृहीत्वा पुनःपरित्यागात् हर्षजातनयनजलैः अनुस्रियमाणोऽनुगम्यमानोमार्गः पन्था येषां तादृशान् चक्रे कृतवान् बद्धमुक्तं पक्षिणं वेष्टयित्वा अन्ये पक्षिणो भ्रमन्तीति पक्षिस्वभावः । अन्यस्यापि कारादिबन्धनान्मुक्तस्य तद्बान्धवैर्नीराजना क्रियत इति नीराजनामित्याद्युक्तम् । वसन्ततिलकावृत्तमिदम् । 'उक्ता वसन्ततिलका तभजाजगौ गः' इति लक्षणात् ॥ १४४ ॥

सम्प्रति कविः स्वस्य मातापित्रोश्च नामोत्कीर्त्तयन् ग्रन्थस्य चोत्कर्षमाविष्कुर्व्वन् सर्गसमाप्तिमाह । श्रीहर्षमिति । कविराजानां कविश्रेष्ठानां या राजिः समूहस्तस्य मुकुटालङ्कारहीरः शिरोभूषणस्थहीरकमणिस्वरूपः कवीनामतिमान्य इत्यर्थः श्रीहीरः श्रीहीरनामा मामल्लदेवी च जितेन्द्रियचयं वशीकृतेन्द्रियवर्गं यं श्रीहर्षनामानं सुतं पुत्रं सुषुवे जनयामास तस्य श्रीहर्षस्य यत् चिन्तामणिमन्त्रस्य चिन्तामणिनामसारस्वतैकाक्षरमन्त्रस्य गायत्रादेर्वा चिन्तनं जपस्तस्य फले तज्जनयादृष्टपरिणामभूते शृङ्गारस्य भङ्ग्या परिपाट्या शृङ्गाररसप्रधानतयेत्यर्थः चारुणि मनोज्ञे नैषधीयचरिते नलचरित्रे महाकाव्ये अयम् आदिः प्रथमः सर्गो गतः समाप्तः । 'चिन्तामणिर्बुद्धमणीभिदोः । मन्त्रभेदे ब्रह्मणि च' इति शब्दाब्धिः । शार्दूलविक्रीडितमिदं वृत्तम् । 'सूर्य्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥ १४५ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायां नैषधीयटीकायामन्वयबोधिकासमाख्यायां
प्रथमः सर्गः समाप्तः ।

---

सर्व्वसर्गसमाप्तिश्लोकेषु आनन्दपदप्रयोगादानन्दांकमिदं काव्यम् तथाच अस्याध्ययनाध्यापनाभ्यामानन्दप्राप्तिरिति सूचितम् इति नारायणः । अत्र प्रस्तुतेषु विहगेषु कार्य्येणाप्रस्तुतमानवव्यवहारसमारोपात् समासोक्तिः इति केचित् । चंक्रमणं प्रतिषिध्य नीराजनास्थापनादपह्नुतिश्छेकानुप्रासवृत्त्यनुप्रासालंकारौ चेति संकरः ॥ १४४ ॥

निरङ्गं रूपकम्, छेकानुप्रासः, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । 'हीरा पिपीलिकालक्ष्म्योः पुंसि शक्रवज्रयोः' इति मेदिनी, 'इन्दिरा लोकमाता मा' इत्यमरः ॥ १४५ ॥

# द्वितीयः सर्गः

——:o:——

अधिगत्य जगत्यधीश्वरा-दथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥ १ ॥
अधुनीत खगः स नैकधा तनुमुत्फुल्लतनूरुहीकृताम् ।
करयन्त्रणदन्तुरान्तरे व्यलिखच्चञ्चुपुटेन पक्षती ॥ २ ॥

हंसमुखेन काव्यनायिकाभूताया दमयन्त्या वर्णनमारिप्सुः सम्प्रति पूर्वसर्गेण सहैकवाक्यतार्थं राज्ञा परित्यक्तस्य हंसस्य हर्षातिशयमाह । अधिगत्येति । अथानन्तरं स द्विजः पक्षी हंसः ततस्तस्मात् पुरुषेषूत्तमात् पुरुषश्रेष्ठात् जगत्याः पृथिव्या अधीश्वरात् प्रणताशेषसामन्तलक्षणनृपात् नलात् मुक्तिं मोचनम् अधिगत्य प्राप्य तम् आनन्दं लोकोत्तरं हर्षम् अविन्दत प्राप्तवान्, तं कं य-आनन्दो वचसामपि वाचामपि न गोचरः न विषयः वाक्यैरपि वक्तुमशक्य इत्यर्थः । अपिशब्दात् मनसापि निर्गन्तुमशक्यः । अथ च अन्योपि द्विजो ब्राह्मणो जगतीनां भुवनानाम् अधीश्वरात् पुरुषोत्तमात् नारायणात् तत्प्रसादादित्यर्थः मुक्तिम् आत्यन्तिकदुःखनिवृत्तिं मोक्षसाधनम् तत्त्वज्ञानं वा अधिगत्य प्राप्य वचसामगोचरम् आनन्दं नित्यनिरतिशयसुखलक्षणं ब्रह्म प्राप्नोति । 'यतो वाचो निवर्त्तन्ते' इति, 'नित्यं विज्ञानमानन्दं ब्रह्म,' इति 'आनन्दो ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्' इति च श्रुतिः । 'जगती जगति च्छन्दोविशेषेऽपि क्षितावपि' इति, 'राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः' इति, 'दन्तविप्राण्डजा द्विजा' इति चामरः । 'मुक्तिर्मोचनमोक्षयोः' इति हेमचन्द्रः। अस्मिन् सर्गे सुन्दरीच्छन्दः, 'अयुजोर्यदि सौ लगौ लगौ समयोः सभौ रलगाश्च सुन्दरी' इति लक्षणात् ॥ १ ॥

अस्य गात्रकम्पनादिकमप्याह । अधुनीतेति । स खगो हंसः नैकधा बहुवारम् उत्फुल्लानि विलसितानि तनूरुहाणि रोमाणि यस्यां सा अनुत्फुल्लतनूरुहा उत्फुल्लतनूरुहा कृता तां तनुं

---

पूर्वार्धे छेकानुप्रासः, तृतीयचरणे वृत्त्यनुप्रासश्च तयनुप्रासयोः संकरः, चतुर्थचरणे पुनश्छेकानुप्रासश्चेति संसृष्टिः । अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रणादुभयश्लेषानुपपत्तेर्भेदान्तरानवकाशालक्षणायाश्च मुख्यार्थबाधमन्तरेणासम्भवात् शब्दशक्तिमूलो वस्तुध्वनिरेव न श्लेष इति जीः । 'स्यादानन्दथुरानन्दः शर्मसातसुखानि च' अ० ॥ १ ॥

अयमेकतमेन पक्षते-रधिमध्योर्ध्वगजङ्घमङ्घ्रिणा ।
स्खलनक्षण एव शिश्रिये द्रुतकण्डूयितमौलिरालयम् ॥ ३ ॥
स गरुद्वनदुर्गदुर्ग्रहान् कटु कीटान् दशतः सतः क्वचित् ।
नुनुदे तनुकण्डु पण्डितः पटुचञ्चूपुटकोटिकुट्टनैः ॥ ४ ॥
अयमेत्य तडागनीडजै-र्लघु पर्य्यव्रियताथ शङ्कितैः ।
उदडीयत वैकृतात् कर-ग्रहजादस्य विकस्वरस्वरैः ॥ ५ ॥

शरीरमधुनीत कम्पयामास । तथा चञ्चुपुटेन पुटीकृतया कोट्या कराभ्यां नलस्य हस्ताभ्यां यत यन्त्रणं धारणे नियमनं तेन दन्तुरम् उन्नताननतम् अन्तरं मध्यं ययोस्तादृशे पक्षती पक्षमूले व्यलिखत् परिष्कृतवान् । पक्षमूलयोरुन्नताननतानि रोमाणि यथास्थानं न्यवेशयदित्यर्थः । पक्षिणो हि धृतमुक्ताः सन्तो गात्रकम्पनादिकं कुर्व्वन्तीति स्वभावोक्तिः । 'स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ' इत्यमरः ॥ २ ॥

अयमिति । अयं हंसः स्खलनक्षण एव मोचनसमय एव आलयं नीडं शिश्रिये आश्रितवान् । किम्भूतः पक्षतेः पक्षमूलस्य अधिमध्यं मध्यमधिकृत्य मध्ये इत्यर्थः ऊर्ध्वगा ऊर्ध्वगामिनी जङ्घा यत्र कर्म्मणि तद्यथा तथा एकतमेन एकेन अङ्घ्रिणा चरणेन द्रुतं शीघ्रं कण्डूयितो मौलिर्मस्तकं येन सः । अयमपि पक्षिस्वभावः । अधिमध्येति सप्तम्यर्थे अव्ययीभावः । एकतमेति स्वार्थे तमः ॥ ३ ॥

स इति । पण्डितः कण्डूयनप्रज्ञः स हंसः पटोर्नैपुणस्य चञ्चुपुटस्य या कोटि रग्रभागस्तया कुट्टनैश्छेदनैः खण्डखण्डीकरणैरित्यर्थः क्वचित् शरीरैकदेशे सतो वर्त्तमानान् कीटान् तन्वी अल्पा कण्डुः कण्डूयनं यत्र क्रियायां तद्यथा तथा नुनुदे अपनीतवान् । किम्भूतान् गरुद्वनं पक्षसमूहस्तदेव दुर्गं तत्र दुर्ग्रहान् धर्त्तुमशक्यान् तथा कटु तीक्ष्णं दुःखदं यथा तथा दशतः दंशनं कुर्व्वतः । अयमपि पक्षिस्वभावः । अन्योऽपि पर्वतादिदुर्गदुर्ग्रहान् शत्रून् नुदते । तनुकण्ड्विति क्रियाविशेषणतया क्लीबत्वाद्ध्रस्वः । केचित्तु तनोः शरीरस्य कण्ड्वां कण्डूयने पण्डितः कुशल इति विगृह्य 'ईदूतोर्व्वोत्तरपदे' इति ह्रस्वं वदन्ति ॥ ४ ॥

अयमिति । अयं हंसस्तडागस्य नीडजैः पक्षिभिर्लघु शीघ्रम् एत्य आगत्य पर्य्यव्रियत वेष्टितः । अथानन्तरं अस्य हंसस्य करग्रहजात् नलहस्तग्रहणजनितात् वैकृतात् विकारात् दन्तुरपक्षस्वरूपात्

---

स्वभावोक्तिरलंकारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥ २ ॥

स्वभावोक्तिश्छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ३ ॥

अत्र हंसे कार्येण दुर्गदुर्ग्रहोपद्रवकारक-शत्रुनोदक-राजव्यवहारारोपात् समासोक्तिः, स्वभावोक्तिः, निरङ्गं रूपकम्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः । 'गरुत्पक्षच्छदाः पत्रं पतत्रञ्च तनूरुहम्' अ० ॥ ४ ॥

वहतो बहुशैवलक्ष्मतां धृतरुद्राक्षमधुव्रतं खगः ।
स नलस्य ययौ करं पुनः सरसः कोकनदभ्रमादिव ॥ ६ ॥
पतगश्चिरकाललालना-दतिविश्रम्भमवापितो नु सः ।
अतुलं विदधे कुतूहलं भुजमेतस्य भजन्महीभुजः ॥ ७ ॥

शङ्कितैस्त्रस्तैः अतएव विकस्वराः अतिविसरणशीलाः स्वराः शब्दा येषां तादृशैः सद्भिः उच्चस्वरैरित्यर्थः पक्षिभिः उदडीयत उड्डीनम् । अयमपि पक्षिणां स्वभावः । अथ च कैश्चित् तीर्थादौ करग्रहणार्थमागम्य कश्चन परिवृतः अथ करग्रहजात् बलिग्रहणजाताद्वै कृतात् विवादादेः शङ्कितैः उच्चस्वरैः सद्भिस्तैर्गम्यते । 'नीडोद्भवा गरुत्मन्तः' इति, 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । विकस्वरैरिति कस गतावित्यस्य रूपम् ॥ ५ ॥

अथ स्वेच्छया हंसस्य नलहस्तगमनमाह । वहत इति । स खगो हंसः सरसः पल्वलस्य कोकनदभ्रमादिव रक्तोत्पलभ्रान्तेरिव नलस्य करं हस्तं पुनर्ययौ गतवान् नलकरस्य रक्तवर्णत्वादियं भ्रान्तिः । हंसा हि कोकनदप्रिया इत्युत्प्रेक्षा । किम्भूतस्य नलस्य सरसश्च बहूनि शैवानि शिवभक्तसम्बन्धीनि लक्ष्माणि त्रिपुण्ड्रादिचिह्नानि यस्य तस्य भावस्तत्ता तां वहतो धारयतः । बहूनि शैवानि मङ्गलसम्बन्धीनि मङ्गलसूचकानि लक्ष्माणि सामुद्रकोक्तपद्ममत्स्यादिचिह्नानि यस्येति वा । पक्षे बहवः शैवला यत्र तादृशी क्ष्मा भूमिर्यत्र तस्य भावं वहतः । शैवचिह्नधारित्वम् करविशेषणेनोपपादयति - किम्भूतं करं धृता रुद्राक्षा मधुव्रता इव भ्रमरा इवेति ते येन तम् कोकनदमपि रुद्राक्षसदृशभ्रमरैर्युक्तं भवति । यद्वा रुद्रं शिवं न क्षमन्त इति रुद्राक्षमाः शिवद्रोहिणस्तान् धुनाति कम्पयतीति रुद्राक्षमधु तच्च तत् व्रतं नियमश्चेति धृतं तद्येन तादृशं शिवद्रोहिणां विनाशकारिणमित्यर्थः । धृतरुतः सशब्दा राक्षाः रोऽग्निस्तद्वदक्षीणि येषां ते पिङ्गलनयना इत्यर्थः तादृशा मधुव्रता यत्र तादृशं कोकनदमित्यप्यन्ये । 'रक्तोत्पलं कोकनदम्' इत्यमरः । 'रः स्मृतः पावके तीक्ष्णे' इति मेदिनी ॥ ६ ॥

करं गते तस्मिन् राज्ञः कौतुकातिशयमाह । पतग इति । स पतगो हंसः एतस्य महीभुजो-

---

अत्र प्रस्तुतेषु पक्षिषु कार्येणाप्रस्तुततीर्थवासिकरग्राहिजनव्यवहारारोपात् समासोक्तिः, स्वभावोक्तिः, करग्रहजादिति श्लेषः, छेकानुप्रासवृत्त्यनुप्रासौचेति संसृष्टिः इति सां । 'कुलायोनीडमस्त्रियाम्' अ० ॥ ५ ॥

'तस्य शैवचिह्नेनैव विश्वासात् तत्करं ययौ । तत्रैव करज्ञानादेव न ययौ, किन्तु तडागस्य रक्तोत्पलभ्रान्तया ययौ । हंसः सरसः कोकनदं यातीति तद्भ्रम उत्प्रेक्षितः । श्लेषेण नलसरसोः साम्यमुक्तम्' इति भरतः । 'बहुशैवल' इत्यादौ सभङ्गश्लेषः, 'धृतरुद्राक्षमधुव्रतम्' इति लुप्तोपमा, भ्रमादिवेति हेतूत्प्रेक्षा तदनुप्राणितश्च भ्रान्तिमानलंकारो व्यज्यते इति केचित् । इत्येतेषामङ्गाङ्गिभावेन संकरः । 'पद्मं च कुमुदञ्चापि रक्तं कोकनदं विदुः'; बः ॥ ६ ॥

नृपमानसमिष्टमानसः स निमज्जत् कुतुकामृतोर्म्मिषु ।
अवलम्बितकर्णशस्कुली-कलसीकं रचयन्नवोचत ॥ ८ ॥
मृगया न न विगीयते नृपै-रपि धर्म्मागममर्म्मपारगैः ।
स्मरसुन्दर मां यदत्यज-स्तव धर्म्मः स दयोदयोज्ज्वलः ॥ ९ ॥

राज्ञो नलस्य भुजं हस्तं भजन् आश्रयन् सन् अनुलम् अनुपमं कुतूहलं विदधे जनयामास । स्वयं भजनाद्वितर्कयति नु वितर्के चिरकालं यत् लालनं पोषणं तस्मात् अतिविश्रम्भम् अत्यन्त-विश्वासम् अवापितः प्रापित इव । अन्योऽपि बहुकालपोषितः सन् स्वामिनं गुणेन सकौतुकं करोति । महीभुज इत्यस्य भुजमित्यनेन कुतूहलमित्यनेन चान्वयः । 'भुजो बाहौ च पाणौ च' इति विश्वः ॥ ७ ॥

अथ हंसोवक्तुमारभते । नृपेति । इष्टं मानसं मानसाख्यं सरो येन तादृशः स हंसः कुतुकं कुतूहलमेवामृतं सुधा तस्य ऊर्म्मिषु तरङ्गेषु निमज्जत् निमग्नीभवत् नृपमानसं नलान्तःकरणम् अवलम्बिते आश्रिते कर्णशस्कुल्यावेव कर्णविवरे एव कलस्यौ येन तादृशं रचयन् कुर्वन् सन् स्ववचनश्रवणोत्सुकं कुर्वन्नित्यर्थः अवोचत उक्तवान् । अन्योऽपि जलतरङ्गेषु निमज्जते जनाय अवलम्बनार्थं कलसीद्वयं ददाति । 'मानसं सरसि स्वान्ते' इति मेदिनी । 'अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते' इति विश्वः । कलसीकमिति के चेति ह्रस्वनिषेधः । अवोचतेति ब्रूञो लुङ् ॥ ८ ॥

किमवोचतेत्याह । मृगयेति । धर्म्मागमा धर्मशास्त्राणि स्मृत्यादीनि तेषां यत् मर्म्म रहस्यं तस्य पारगैः पारगामिभिरपि नृपै राजभिर्मृगया मृगादिमारणक्रिया न विगीयते न निन्द्यते प्रत्युत तैः क्रियत इत्यर्थः । हे स्मरसुन्दर ! कामवन्मनोहर ! हे सुन्दर त्वं स्मर विचारयेति वा मां यत् अत्यजः त्यक्तवानसि तव स त्यागः धर्मः न तु विधेयाननुष्ठानजन्यं पापम् । किम्भूतो धर्म्मः दयाया उदयेन उत्पत्त्या उज्ज्वलः शोभमानः ॥ ९ ॥

---

अन्योपि बहुकालं पोषितो विश्वासं प्राप्तः स्वामिनं स्वगुणेन कुतूहलिनं करोति इति नाः । क्रियोत्प्रेक्षा, कुतूहलविधानं प्रति भुजभजनस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रास-श्चेति संसृष्टिः ॥ ७ ॥

अत्र प्रस्तुते हंसे कार्येणाप्रस्तुततथाविधकलसीदातृजनस्य व्यवहारारोपात् समासोक्तिः, निरङ्गरूपकम्, 'मानस मानस' इति यमकम् इति केचित्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः । अन्योऽपि कौतुकेन जलोर्मिषु मज्जन् आश्रयाय कलसमेवावलम्बते इति ध्वनिः इति वंशी ॥ ८ ॥

अत्र 'दयोदयो' इति यमकमिति केचित् । वृत्त्यनुप्रासः, मृगयाया अनिन्द्यत्वरूपहेतावपि तत्फलाकरणात् विशेषोक्तिश्चेति संसृष्टिः । काव्यलिङ्गमलंकारः इति सां ॥ ९ ॥

अबलस्वकुलाशिनोझषा-न्निजनीडद्रुमपीडिनः खगान् ।
अनवद्यतृणार्दिनोमृगान् मृगयाघाय न भूभृतां घ्नताम् ॥ १० ॥
यदवादिषमप्रियन्तव प्रियमाधाय नुनुत्सुरस्मि तत् ।
कृतमातपसंज्वरं तरो-रभिवृष्यामृतमंशुमानिव ॥ ११ ॥
उपनम्रमयाचितं हितं परिहर्त्तुं न तवापि साम्प्रतम् ।
करकल्पजनान्तराद्विधेः शुचितः प्रापि स हि प्रतिग्रहः ॥ १२ ॥

मृगया कथं न विगीयत इत्याह। अबलेति। झषान् मत्स्यान् खगान् पक्षिणः मृगान् हरिणादीन् घ्नतां मारयतां भूभृतां राज्ञां मृगया अघाय पापाय न भवति। एतेषां मारणजन्यं पापं राज्ञां न भवतीत्यर्थः। कथं न भवतीति त्रयाणां विशेषणेनापराधमाह किम्भूतान् झषान् अबलम् असमर्थं यत् स्वकुलं निजवंशस्तत् अश्नन्ति भुञ्जत इत्येवंशीलान्। खगान् किम्भूतान् निजाः स्वीया ये नीडद्रुमा वासस्थानवृक्षास्तान् पीडयन्तीत्येवंशीलान्। मृगान् किम्भूतान् अनवद्यानि अनिन्दनीयानि अनपराधकारीणीत्यर्थः यानि तृणानि कुशादीनि तानर्द्दयन्ति पीडयन्तीत्येवंशीलान्। दुष्टनिग्रहोहि राज्ञां धर्मः अतोऽपराधकारिणामेतेषाम्मारणे राज्ञामधर्मं न भवतीति भावः। 'पृथुरोमा झषोमत्स्यः' अ ॥ १० ॥

धिगस्तु तृष्णेत्यादिना यदनुचितमुक्तं तदपहाराय वक्तुं प्रस्तौति। यदिति। हे राजन्! अहं तव यत् अप्रियं निन्दाम् अवादिषम् उक्तवानस्मि प्रियम् इष्टम् आधाय कृत्वा तत् अप्रियं नुनुत्सुरस्मि इदानीं निराकर्त्तुमिच्छुर्भवामि। अत्रोपमिनोति--अंशुमानिव सूर्यो यथा तरोर्वृक्षस्य कृतं स्वयमुत्पादितम् आतपेन संज्वरं सम्यक्पीडाम् अमृतं जलम् अभिवृष्य अभितो-वर्षयित्वा नुदति तथेत्यर्थः। अनेनोपमालङ्कारेण अतिशयितं तव प्रियं करिष्यामीति ध्वन्यते। 'आदित्याज्जायते वृष्टिः' मनुः। 'पयः कीलालममृतम्' अ ॥ ११ ॥

उपनम्रमिति। उपनम्रम् उपस्थितम् अयाचितम् अप्रार्थितं हितं प्रियं परिहर्तुम्

---

'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः,' इति स्मृतेस्तरुतृणादेरपि प्राणित्वात् तद्वधस्तु दोषाय, परं दुष्टनिग्रहो राज्ञां धर्म एव इति भावः, इति पूर्वश्लोके मृगयादोषाभावे स्मृतिं प्रमाणमुक्त्वा युक्तिमप्यवदत्' ना० । अत्राप्रस्तुतराजसामान्यकथनेन प्रस्तुतनलरूपराजविशेषप्रतीतेः अप्रस्तुतप्रशंसालंकारः' 'अघाय न' इति अघाभावं इति 'अबलस्वकुलाशिनः' इत्यादिविशेषणानां पदार्थगत्या हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, 'घ्नताम्' इत्येकक्रियया सहाप्रस्तुतप्रस्तुतयोरन्वयाद् दीपकम्, छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः। 'आरण्यकाः पशवो मृगाः' व ॥ १० ॥

अत्र उपमालंकारः परिवृत्तिश्च। बिम्बप्रतिबिम्बभावेन दृष्टान्तः इति सां। 'सन्तापः संज्वरः समौ' अ ॥ ११ ॥

अत्र उपनम्रेत्यादिविशेषणानां विशेषाभिप्रायेण प्रयुक्तत्वात् परिकरालंकारः, उपेक्षाया अयुक्तत्वं

पतगेन मया जगत्पते-रुपकृत्यै तव किं प्रभूयते ।
इति वेद्मि न तु त्यजन्ति मां तदपि प्रत्युपकर्त्तुमर्त्तयः ॥ १३ ॥
अचिरादुपकर्त्तुराचरे-दथवात्मौपयिकीमुपक्रियाम् ।
पृथुरित्थमथाणुरस्तु सा न विशेषे विदुषामिह ग्रहः ॥ १४ ॥
भविता न विचारचारु चे-त्तदपि श्रव्यमिदं मदीरितम् ।
खगवागियमित्यतोऽपि किं न मुदन्धास्यति कीरगीरिव ॥ १५ ॥

उपेक्षितुं तवापि सार्व्वभौमस्यापि न साम्प्रतं न युक्तम् । हि यतः करकल्पं हस्तादीषन्न्यूनं जनान्तरं मल्लक्षणोऽन्योजनो यस्य तादृशात् शुचितः शुद्धात् अनुकूलादित्यर्थः विधेर्दैवात् स-प्रतिग्रहः प्रापि त्वया प्राप्तः । सर्वं हि शुभाशुभं दैवात् प्राप्यते न तु इतरजनात् अतो मया यत् कर्त्तव्यं तत् विधिनैव कृतमिति ज्ञात्वा त्वया नोपेक्षणीयमिति भावः । प्रापीति भूतकाल-प्रत्ययात् स प्रतिग्रहः पूर्वमेव विधिना तुभ्यं दत्त इति सूचितम् ॥ १२ ॥

निजौद्धत्यं परिहरति । पतगेनेति । पतगेन पक्षिणा मया जगत्पतेर्भुवनेश्वरस्य तव उपकृत्यै उपकारं कर्त्तुं किं प्रभूयते किं समर्थेन भूयते अपि तु नैवेत्यर्थः इत्यहं वेद्मि जानामि तदपि तथापि प्रत्युपकर्त्तुं प्रत्युपकारार्थम् अर्त्तयः कथमस्योपकारिणः प्रत्युपकारो मया कर्त्तव्य इत्येवंरूपाः पीड़ा मां न तु नैव त्यजन्ति । पीड़ा एव मां प्रेरयन्तीत्यर्थः ॥ १३ ॥

तर्हि किं पक्षिणा त्वया राज्ञो मम प्रत्युपकारो न कर्त्तव्य इत्याशङ्क्याह । अचिरादिति । अथवा पक्षान्तरे उपकर्त्तुरुपकारकस्य आत्मौपयिकीम् आत्मोपायसाध्याम् उपक्रियां प्रत्युपकारम् अचिरात् शीघ्रमेव आचरेत् विदध्यात् जन इति शेषः । प्राणानां सत्वरगत्वरत्वादचिरादित्युक्तम् । एतेन प्रत्युपकारकरणस्यावश्यम्भावः सूचितः । इत्थम् एवं विधौ सति सा उपक्रिया पृथुर्महती अस्तु भवतु अथ अथवा अणुरल्पा अस्तु इह इति विशेषे महत्त्वाल्पत्वरूपे विदुषां पण्डितानां ग्रहो निर्बन्धो न नास्ति आत्मशक्त्यनुरूपो मया क्रियमाणः प्रत्युपकारस्त्वया अवश्यमेव स्वीक-र्त्तव्य इति भावः ॥ १४ ॥

---

प्रति उत्तरार्धवाक्यार्थो हेतुरिति काव्यलिङ्गञ्चानयोः संकरः । 'अयाचिताहृतं ग्राह्यमपि दुष्कृत-कर्मणः' याज्ञवल्क्य । अथ चान्यस्मादपि निर्दोषादीदृक् प्रतिग्रहो युज्यते इत्यलंकारेण वस्तुध्वनिः । 'युक्ते द्वे साम्प्रतं स्थाने' अ ॥ १२ ॥

विभावनाविशेषोक्त्योः संकरः । अर्थापत्तिरिति केचित् । वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ १३ ॥

उपकारस्य महत्त्वात् स्वौद्धत्यपरिहारएव तात्पर्यम् । छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः । अप्रस्तुतप्रशंसालंकारश्चेति सा । औपयिकशब्देन न्याय्यमुच्यते । 'युक्तमौपयिकं लभ्यं भजमाना-भिनीतवत् । न्याय्यञ्च त्रिषु षट्' अ ॥ १४ ॥

स जयत्यरिसार्थसार्थकी-कृतनामा किल भीमभूपतिः ।
यमवाप्य विदर्भभूः प्रभुं हसति द्यामपि शक्रभर्तृकाम् ॥ १६ ॥
दमनादमनाक् प्रसेदुष-स्तनयां तथ्यगिरस्तपोधनात् ।
वरमाप स दिष्टपिष्टप-त्रितयानन्यसदृग्गुणोदयाम् ॥ १७ ॥

निजवचसां श्रवणयोग्यतां प्रतिपादयन्नाह । भवितेति । मदीरितं मयोक्तं सत्यमहमुपकारं ते करिष्यामीत्येवंरूपं चेत् यदि विचारे मीमांसायां चारु मनोहरं मीमांसासहमित्यर्थः न भविता न भविष्यति तदपि तथापि इदमग्रे वक्ष्यमाणं मदीरितं श्रव्यं तव श्रवणार्हं भवत्येव । कथं विचारासहं वाक्यं श्रवणार्हमित्याशङ्कायामाह इयं खगवाक् पक्षिवचनम् अयं खगोऽपि मनुष्यवद्वक्तीत्यर्थः इत्यतोऽपि इत्यस्माद्धेतोरपि कीरगीरिव शुकवाक्यमिव मम वाक्यं किं मुदं तव हर्षं न धास्यति न जनयिष्यति अपि तु धास्यत्येव । इष्टसाधकत्वात् इष्टसाधनज्ञानजन्या हि जनानां प्रवृत्तिरतो हर्षलक्षणस्येष्टस्य जनकत्वात् मम वचसि तव श्रवणप्रवृत्तिर्भविष्यत्येवेति भावः ॥ १५ ॥

तदेवाह । स इति । किल प्रसिद्धौ अरिसार्थेषु शत्रुसमूहेषु सार्थकीकृतं बिभ्यत्यस्माच्छत्रव-इति अन्वर्थीकृतम् नाम संज्ञा यस्य तादृशः स भीमभूपतिर्भीमनामा भूपालः जयति सर्वोत्कर्षेण वर्त्तते । स कः विदर्भभूर्विदर्भभूमिः यं प्रभुं स्वामिनम् अवाप्य प्राप्य शक्रभर्तृकामपि इन्द्रपतिकामपि द्याम् अमरावतीं हसति तत्सदृशी भवतीत्यर्थः । शक्यते जेतुमिति शक्रस्तद्भर्तृका द्यौः अहन्तु भीमभर्तृकेत्युपहासबीजम् । शङ्कते तपस्विभ्योऽपीति शक्र इति प्राञ्चः । केचित्तु शक्नोति शत्रून् जेतुमिति व्युत्पन्नं शक्रेति इन्द्रस्य नाम न सार्थकं युद्धात् कदाचित् पलायनश्रवणादित्याहुः ॥ १६ ॥

दमनादिति । स भीमभूपतिः अमनाक् अत्यर्थं प्रसेदुषः प्रसन्नात् तथ्यगिरः सत्यवचनात् दमनात् दमननाम्नस्तपोधनात् मुनेः तनयां कन्यारूपां वरम् अभीष्टम् आप प्राप्तवान् । किम्भूतां तनयां दिष्टः कालः पिष्टपं जगत् अनयोस्त्रितये भूतभविष्यद्वर्त्तमानरूपे स्वर्गमर्त्यपातालरूपे च

---

अत्र विचारचारुत्वरूपकारणाभावेऽपि श्रव्यत्वरूपकार्योत्पत्तेः विभावनालंकारः, श्रव्यत्वं प्रति उत्तरार्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, इति केचित् । अर्थापत्तिः, उपमालंकारश्चेत्येतेषां सङ्करः, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १५ ॥

अत्र विदर्भदेशस्य स्वर्गोपहासासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः इति जीः, उपमेति सां । उपमानभूतात् स्वर्गात् उपमेयभूतस्य विदर्भदेशस्य उत्कर्षाद् व्यतिरेकालंकारोऽव्यङ्ग्यः, जयं प्रति अरिसार्थसार्थकीकृतनामेतिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासः वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १६ ॥

अत्र विशेषणानां सभिप्रायत्वात् परिकरालंकारः, व्यतिरेकः इति सां । 'दमना दमैना' इति

भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम् ।
उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ ॥ १८ ॥
श्रियमेव परं धराधिपाद्-गुणसिन्धोरुदितामवेहि ताम् ।
व्यवधावपि या विधोः कलां मृडचूडानिलयां न वेद कः ॥ १९ ॥

नास्ति अन्यः सदृक् समानो यस्य तादृक् गुणोदयो यस्यास्तादृशीम् । लोकत्रये च तादृशसौन्दर्य्यादि-गुणवती कापि नास्तीत्यर्थः । यद्वा दिष्टो दमनमुनिना आदिष्टो दत्त इति यावत् पिष्टपत्रितये लोकत्रये अनन्यसदृक् गुणोदयो यस्यै तादृशीम् । 'कालो दिष्टोऽप्यनेहापि' अ, 'पिष्टपं भुवनं जगत्' अ ॥ १७ ॥

किमाख्या सेत्याह । भुवनेति । असौ भीमतनया यतो यस्माद्धेतोः तनुश्रिया देहशोभया भुवनत्रये याः सुभ्रुवः सुन्दर्य्यस्तासां कमनीयतया सौन्दर्य्येण यो मदोऽहङ्कारस्तं दमयन्ती शमयन्ती सती उदियाय उत्पन्ना ततस्तस्मात् दमयन्तीति अभिधां यौगिकं नाम दधौ धृतवती । दमयन्ती किल रूपजं मदमिति क्वचित् पाठस्तत्र किलोत्प्रेक्षायां रूपजं सौन्दर्य-जातमित्यर्थः ॥ १८ ॥

नलं विलोभयन् भैमीमुत्कर्षयति । श्रियमेवेति । हे राजन् ! त्वं गुणसिन्धोर्गुणसमुद्रात् धराधिपात् पृथिवीपतेर्भीमात् उदिताम् उत्पन्नां तां दमयन्तीं श्रियमेव लक्ष्मीमेव परं निश्चितम् अवेहि जानीहि । अन्यापि श्रीः धराम् अधिपाति धारणेन रक्षतीति तस्मात् धराधिपात् मन्दरपर्व्वतात् सिन्धोरुत्पन्ना । परामिति पाठे पराम् अन्याम् श्रियोऽप्युत्कृष्टामित्यर्थः, श्रीः समुद्रादुत्पन्ना इयन्तु गुणसमुद्रादित्युत्कर्षः । त्वमपि तां जानासीत्याह व्यवधावपि व्यवधाने सत्यपि मृडः शिवस्तस्य या चूडा मौलिः सैव निलय आश्रयो यस्यास्तादृशीं विधोश्चन्द्रस्य कलां को वा जनो न वेद न जानाति अपि तु सर्व्व एव जानातीत्यर्थः । यथा शिवस्याप्रत्यक्षत्वेऽपि अतिप्रसिद्धत्वात् तन्मौलिस्थां चन्द्रकलां सर्व्वे जानन्ति, तथा सत्यपि व्यवधाने त्वमपि अतिप्रसिद्धां तां जानासीति भावः ॥ १९ ॥

---

यमकम्, दिष्टपिष्टपेति छेकानुप्रासश्चेति संसृष्टिः ॥ १७ ॥

भुवनत्रयसुभ्रुवां कमनीयतापेक्षया अस्याः कमनीयताया आधिक्यवर्णनाद् व्यतिरेकालंकारो-व्यज्यते उत्प्रेक्षेति सां यमकमितिकेचित्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १८ ॥

अत्र धराधिपे सिन्धुत्वारोपो दमयन्त्यां लक्ष्मीत्वारोपे कारणमिति परम्परितरूपकम् 'अवेहि,' 'वेद' इति एकैव क्रिया, तस्याः भिन्नपदेन निर्देशात् वाक्ययोर्गम्यसाम्यत्वाच्च प्रतिवस्तूपमा, अर्थापत्तिः, छेकानुप्रासः, वृत्त्यनुप्रासालंकारश्चेत्येतेषां संसृष्टिः । दृष्टान्तालंकार इति जीः । रूपकान्तरमिति सां । 'गिरीशो गिरिशो मृडः' अ ॥ १९ ॥

चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि सा बिभर्त्ति यान् ।
पशुनाप्यपुरस्कृतेन त-त्तुलनामिच्छतु चामरेण कः ॥ २० ॥
स्वदृशोर्ज्जनयन्ति सान्त्वनां खुरकण्डूयनकैतवान्मृगाः ।
जितयोरुदयत्प्रमीलयोस्तदखर्वेक्षणशोभया भयात् ॥ २१ ॥
अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि ।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते ॥ २२ ॥

इत्थं सामान्यतः स्तुत्वा प्रत्यङ्गमस्या वर्णयति । चिकुरेति । हे राजन् ! ते चिकुरप्रकराः केशसमूहा जयन्ति सर्वोत्कृष्टतया वर्त्तन्ते । के ते, यान् चिकुरप्रकरान् विदुषी पण्डिता सा दमयन्ती मूर्धनि शिरसि आबिभर्त्ति धारयति अथच आभरणं करोति । ननु चामरेण साम्ये सति कथमेषां सर्व्वोत्कृष्टत्वमतआह पशुनापि चमरीसंज्ञकमृगेणापि अथ च मूर्खेणापि अपुरस्कृतेन पश्चात्कृतेन अथच अपूजितेन चामरेण तत्तुलनां तेषां केशानां तुलनां साम्यं को जन इच्छतु अभिलषतु न कोऽपीत्यर्थः । अयं भावः -ये पण्डितया मस्तके आभरणीक्रियन्ते तेषां मूर्खेणापि अपूजितेन वस्तुना सह साम्यं कोऽभिलषतीति । एतेन चामरापेक्षयापि भैम्याः केशानां सौष्ठवाधिक्यं ध्वनितम् ॥ २० ॥

स्वदृशोरिति । हे राजन् ! मृगा हरिणाः खुरेण यत् कण्डूयनं तस्य कैतवात् छलात् तस्या- दमयन्त्या अखर्व्वे दीर्घे ये ईक्षणे नयने तयोः शोभया सौन्दर्य्येण जितयोः पराभूतयोः अतएव भयात् त्रासादिव उदयन्ती जायमाना प्रमीला मुद्रणं ययोस्तादृशयोः स्वदृशोर्निजचक्षुषोः सान्त्वनां समाश्वासं जनयन्ति कुर्व्वन्ति । भयादिवेति प्रतीयमानोत्प्रेक्षा । यो हि येन पराजीयते तस्य तस्माद्भयेन प्रमीला जायते । अन्योऽपि तथाविधं भीतं करेण सान्त्वयतीति तथोत्प्रेक्षितम् । एतेन मृगनयनापेक्षया तस्या नयने अतिसुन्दरे इति ध्वनितम् । 'खर्व्वो ह्रस्वश्च वामनः' अ ॥ २१ ॥

अपीति । हे धरापते ! महीपाल ! दमस्वसुर्दमयन्त्या लोकयुगमपि मातृकुल-पितृकुललक्षणमपि

अत्र तुलनानिषेधस्य अपुरस्कृतपदार्थहेतुकत्वात् काव्यलिङ्गमलंकारः, उपमानभूतात् चामरात् उपमेयभूतानां चिकुराणामुत्कर्षेणाधिक्यवर्णनात् व्यतिरेकालंकारो व्यज्यते, पशुमूर्खयोर्भेदेऽपि तदभेदाध्यवसायादतिशयोक्तिः, अर्थापत्तिश्छेकानुप्रासश्चेत्येतेषां संकरः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः' अ ॥ २० ॥

अत्र प्रस्तुतेषु मृगेषु अप्रस्तुततथाविधसान्त्वनाकारिजनानां व्यवहारसमारोपात् समासोक्तिः, तथा कैतवशब्देन प्रकृतकण्डूयनप्रतिषेधेन खुरकर्त्तृकसान्त्वनारोपणादपह्नुतिः, भयादिवेति लुप्तोत्- प्रेक्षा, मृगनयनात् तस्याः नयनस्योत्कर्षप्रतिपादनाद् व्यतिरेकोव्यज्यते । भयं प्रति जितपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, निमीलनमूर्च्छयोर्भेदेऽपि प्रमीलाशब्दश्लेषशक्त्या तदभेदाध्यवसायादति- शयोक्तिश्छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः 'तन्द्री प्रमीला' अ ॥ २१ ॥

नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे ।
अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्व्वदुर्व्विधम् ॥ २३ ॥
अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् ।
लभतेऽधरबिम्बइत्यदः पदमस्या रदनच्छदे वदत् ॥ २४ ॥

श्रुतिगामितया लोकाकर्णनविषयतया वेदार्थानुगन्तृतया वा सुतरामतितरां व्यतिभाते परस्परं शोभते तथा तस्या दृशावपि लोचने अपि श्रुतिगामितया कर्णान्तविश्रान्ततया सुतरां व्यतिभाते परस्परं शोभेते, एवं तस्याः श्रुतदृष्टा आदौ श्रुताः पश्चाद्दृष्टाश्च रमणीगुणा अपि सौन्दर्य्यादयः स्त्रीगुणा अपि श्रुताः पुराणादौ दृष्टाः कासुचित् सुन्दरीष्विति केचित् श्रुतिगामितया सर्व्वेषां श्रवणविषयतया सुतरां व्यतिभाते परस्परं शोभन्ते । व्यतिभाते इत्यत्र व्यतीहारे आत्मनेपदम् । ते आते अन्ते सर्व्वत्रैव समानरूपत्वाद्वचनश्लेषोऽयम् । अत्र नयनवर्णनस्य प्राकरणिकतया प्रस्तुतेन तेन सह अप्रस्तुतयोर्लोकयुगरमणीगुणयोरेकधर्म्माभिसम्बन्धाद्दीपकम् ॥ २२ ॥

नलिनमिति । हे राजन् ! नलिनं पद्मं मलिनं हीनप्रभं विवृण्वती कुर्व्वती तथा पृषतीं हरिणीम् अस्पृशती अगणयन्ती तदीक्षणे तस्या दमयन्त्या ईक्षणे चक्षुषी अञ्जनेन कज्जलेन अञ्चिते पूजिते सती साञ्जने इत्यर्थः खञ्जनमपि खञ्जरीटमपि रुचौ कान्त्यां यो गर्व्वः कज्जलरेखातुल्यरेखायोगादहङ्कारस्तेन दुर्व्विधं दरिद्रं रुचिगर्व्वाभाववन्तमित्यर्थः विदधाते कुर्व्वाते । रुचीति सप्तम्यन्तं पृथक् पदं वा । तदीक्षणाभ्यां कमलं हरिणीनयनञ्च अक्लेशेनैव जितं खञ्जनस्य तु कज्जलरेखातुल्यरेखावत्त्वात् तज्जयः साञ्जनाभ्यां सद्भ्यां कृत इति भावः । यद्वा विवृण्वती आत्मानं प्रकाशयन्ती पृषतीम् अञ्जनशलाकाम् अस्पृशती अप्राप्ते सती तदीक्षणे नलिनम् पद्मं मलिनं विदधाते खञ्जनमपि अञ्जनाञ्चिते सती रुचिगर्व्वदुर्व्विधं विदधाते इत्यन्वयः, एतत्पक्षे विवृण्वती इत्यनेन अवतंसीकृतं कमलं कटाक्षावलोकनेन प्रसृतया कान्त्या जितमिति भावः । 'खञ्जरीटस्तु खञ्जनः' अ, 'हरिण्यां पृषती प्रोक्ता शलाका कज्जलस्य च' रन्ति० ॥ २३ ॥

अधरमिति । हे राजन् ! खलूत्प्रेक्षायाम् अस्या दमयन्त्या रदनच्छदे दशनवाससी वदत् अभिदधत् अधरबिम्ब इति अदः पदम् एतत् पदम् इति भव्यं समीचीनम् अन्वयं सम्बन्धं लभते

---

अत्र प्रस्तुतस्य दृग्द्वयस्य अप्रस्तुतस्य लोकयुगस्य रमणीगुणस्य च 'व्यतिभाते' इत्येकया क्रियया सह कर्तृत्वेनाभिसम्बन्धात् दीपकमलंकारः, 'व्यतिभाते' इति वचनश्लेषश्चैतयनयोः संकरः । अत्र लोकयुगादीनां त्रयाणामपि प्रस्तुतत्वात् तुल्ययोगितालंकार इति जीः । 'श्रुतिः स्तोत्रे तथाम्नाये वार्त्तायां श्रोत्रकर्मणि' वि ॥ २२ ॥

अत्र ईक्षणयोर्नलिनादीनां मलिनीकरणाद्यसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, उपमानभूतात् नलिनात्, हरिणीनेत्रात्, खञ्जनाच्चोपमेयभूतस्य दमयन्तीक्षणस्याधिक्यवर्णनात् व्यतिरेकालंकारोव्यज्यते इति संकरः । अतिशयोक्त्या उपमा व्यज्यते इत्यलंकारेणालंकारध्वनिरिति जीः । "मलिनं दूषिते कृष्णे' वि ॥ २३ ॥

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा ।
कृतमध्यविलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥ २५ ॥
धृतलाञ्छनगोमयाञ्चलं विधुमालेपनपाण्डरं विधिः ।
भ्रमयत्युचितं विदर्भजा-नननीराजनवर्द्धमानकम् ॥ २६ ॥

प्राप्नोति। इति किं विम्बनामकफलम् आभ्यां रदनच्छदाभ्याम् अधरं हीनं विम्बापेक्षया एतयो-रतिरक्तत्वादमृतवदास्वाद्यत्वाच्च । तथाहि अधरं विम्बं याभ्यामिति पञ्चम्यन्यपदार्थो बहुव्रीहिर्न तु अधरो विम्बमिवेति व्याघ्रादौ स्तद्गुणस्तुल्यस्येत्यनेन कर्म्मधारयः । अधरविम्बेति विभक्तिरहितो-भाग इतिशब्देनाकृष्टः वृत्तिमत्त्वं पदत्वमिति मतेनास्य पदत्वं सन्ध्यभावस्तु एकपदादिभ्योऽन्यत्र सन्धेर्विभाषितत्वस्य सर्व्वसम्मतत्वे नेच्छाधीनत्वात् । यद्यपि 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरकोषादौ रदनच्छदशब्दस्य पुंस्त्वं दृश्यते तथापि लिङ्गमशास्यं लोकाश्रयत्वादित्यतः क्लीवत्वम् । वस्तुतस्तु अस्मादित्यत्र आभ्यामिति, अधरविम्बमित्यद इत्यत्र अधरविम्ब इत्यद इति, रदनच्छदमित्यत्र च रदनच्छदे इति पाठो लिपिकरप्रमादाज्जातः सङ्गतत्वात् तथाहि अधरोविम्ब-मिवेति कर्म्मधारये अधरं विम्बं यस्मादधरोष्ठादिति बहुव्रीहौ च समानमेव अधरविम्बमिति पदं-बहुव्रीहौ समाहृतस्याधरोष्ठस्य विशेषणतया कर्म्मधारयेऽन्तस्थपदलिङ्गतया च क्लीवत्वम् , अन्यथा लिङ्गवचनभेदेन पदभिन्नत्वात् कवेरभिप्रायो नोपपद्येतेति । 'अधरस्तु पुमानोष्ठे हीनेऽनूर्ध्वे च वाच्यवत्' मे ॥ २४ ॥

हृतेति। इन्दुमण्डलं चन्द्रविम्बं वेधसा विधात्रा दमयन्तीवदनाय भैमीमुखं निर्म्मातुं हृतः सारः श्रेष्ठभागो यस्य तादृशमिव अतएव कृतं विधात्रा जनितं मध्ये विलं गर्त्तो यस्य तादृशं विलोक्यते दृश्यते सम्भाव्यत इत्यर्थः। किम्भूतं धृतो गम्भीरखन्यां निम्नगर्त्ते खस्याकाशस्य नीलिमा श्यामत्वं येन तादृशं वृहद्गर्त्तो हि दूरतः श्यामवद्भाति चन्द्रमण्डले नायं कलङ्कः किन्तु गृहीतसार-त्वादुत्पन्ने गभीरगर्त्ते आकाशकालिमेति भावः। यद्यप्याकाशस्य नीलरूपत्वान्नीलिमा न सम्भवति तथापि गभीरगर्त्तस्यालोकसम्पर्काभावादालोकाभावलक्षणान्धकारपर्य्यवसन्ननीलत्वं तदवच्छि-न्नाकाशे उपचर्य्यते। 'मालिन्यं व्योम्नि पापे' इत्याद्युक्तेः कविसमयख्यातत्वाद्वा तथोक्तम् । वदनायेति तुङ्गर्भात् कर्म्मणि इति चतुर्थी ॥ २५ ॥

प्रकारान्तरेणापि दमयन्तीवदनस्य चन्द्राधिक्यमाह। धृतेति। विधिर्ब्रह्मा विदर्भजाया

---

अत्र उपमानभूतात् विम्बफलात् उपमेयभूतस्य दमयन्तया ओष्ठस्याधिक्यवर्णनाद् व्यतिरेका-लंकारो व्यज्यते वृत्त्यनुप्रासश्चेति संसृष्टिः । अतिशयोक्तिस्तया च उपमालंकारो व्यज्यत इत्य-लंकारेणालंकारध्वनिरिति जीः। उत्प्रेक्षेति सां। 'अधस्तादपि चाधरः' अ ॥ २४ ॥

अत्र कलंकापह्नवेन ख-नीलिमारोपात् अपह्नुतिः, तदनुप्राणितस्त मध्ये विलकरणं प्रति सार-हरणरूपपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, क्रियोत्प्रेक्षालंकारश्चेति संकरः। उत्प्रेक्षया च भैमीमुखं निष्कलंकचन्द्रतुल्यमित्युपमालंकारो व्यज्यते इत्यलंकारेणालंकारध्वनिः इति जीः ॥ २५ ॥

सुषमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात् ।
अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ २७ ॥
धनुषी रतिपञ्चबाणयो-रुदिते विश्वजयाय तद्भ्रुवौ ।
नलिके न तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः ॥ २८ ॥

दमयन्त्या आननस्य मुखस्य नीराजनं निर्म्मञ्छनासाधनं वर्द्धमानकं शरावमिव विधुं चन्द्रम् उचितं योग्यं यथा स्यात्तया भ्रमयति। किम्भूतं विधुं धृतं लाञ्छनमेव कलङ्क एव गोमयाञ्चलं गोमयांशो येन तादृशम्। गोमयाञ्चनमिति क्वचित् पाठः तत्र धृतं लाञ्छनं गोमयमिवेति तेन अञ्चनं पूजनं यस्येति विग्रहः। तथा आलेपनं पिष्टोदकम् आलिपना इति लोकप्रसिद्धं तेनेव पाण्डरं शुभ्रम् शरावमपि गोमययुक्तं पिष्टोदकेनालिप्तञ्च कृत्वा उपरि परिभ्राम्य दृष्टिदोषनिवारणार्थं नीराजना क्रियत इति लोकाचारः। अधमेनोत्तमस्य नीराजना क्रियत इत्यौचित्यम्। 'शरावो वर्द्धमानकः' अ ॥ २६ ॥

सुषमेति। स्फुटमुत्प्रेक्षे सुषमाविषये परमशोभाविषये अधिका शोभा पद्मानां दमयन्तीमुखस्य वेत्येवंरूपे परीक्षणे परीक्षायां दिव्येन शुद्धावित्यर्थः निखिलं समस्तं पद्मं तन्मुखात् भैमीमुखात् अभाजि स्वयमेव पराजितम्। कुत एवं त्वया ज्ञातमित्याह अधुनापि इदानीमपि भङ्गलक्षणं पराजयचिह्नं सलिलोन्मज्जनं जलादुत्थानं न उज्झति न त्यजति पद्ममित्यनुषज्यते। पद्मस्य स्वाभाविकमपि जलोन्मज्जनं भङ्गलक्षणत्वेनोत्प्रेक्षितम्। जलदिव्ये हि तोरणस्थपुरुषमुक्तं शरमादायान्यो वेगवान् जनस्तत्रागत्य यदि दिव्यकारिणं निमज्जन्तं पश्यति तदा तस्य शुद्धिर्भवति यद्युन्मज्जति तदा पराजयो भवति। यदाह याज्ञवल्क्यः—'समकालमिषुं मुक्तमानीयान्यो जवी नरः। गते तस्मिन्निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयाद्' इति। तन्मुखादिति पराजेः सोढुमशक्यमिति सूत्रे पराजयार्थकधातोर्ग्रहणादपादाने पञ्चमी। 'सुषमा परमा शोभा' अ ॥ २७ ॥

धनुषी इति। तद्भ्रुवौ दमयन्तीभ्रुवौ रतिपञ्चबाणयोः रतिकामदेवयोर्धनुषी विश्वजयाय त्रिभुवनजयार्थम् उदिते प्रादुर्भूते तद्भ्रुवौ दृष्ट्वा सर्वेऽपि कामवशा भवन्तीति भावः। तथा

अत्र साङ्गरूपकमलंकारः, इति जीः। विधेः तथाविधशरावरूपेण विभ्रमणासम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिश्चेत्येतेषां संकरः। उत्प्रेक्षालंकार इति भरतः। विधौ तादृशलोकव्यवहारसमारोपात् समासोक्तिः। सममलंकार इति सा॰। 'आतर्पणन्तु लौहित्ये विद्यादालेपनेऽपि च' वि ॥ २६ ॥

अत्र प्रस्तुते पद्मे कार्येणाप्रस्तुततथाविधजलदिव्यकारकजनव्यवहारसमारोपात् समासोक्तिः, मुखेन पद्मस्य पराजयप्राप्त्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, पराजयं प्रति उत्तरार्द्धवाक्यस्य हेतुत्वात् काव्यलिङ्गम्, रूपकञ्चेत्येतेषामङ्गाङ्गिभावेन संकरः। हेतूत्प्रेक्षेति सा॰ ॥ २७ ॥

सदृशी तव शूर सा परं जलदुर्गस्थमृणालजिद्भुजा।
अपि मित्रजुषां सरोरुहां स्पृहयालुः करलीलया श्रियः ॥ २९ ॥
वयसी शिशुता-तदुत्तरे सुदृशि स्वाभिविधिं विधित्सुनी।
विधिनापि न रोमरेखया कृतसीम्नि प्रविभज्य रज्यतः ॥ ३० ॥

तस्या भैम्या उच्चनासिके त्वयि नालीकस्य शरस्य विमुक्तौ परित्यागे कामोऽभिलाषो ययोस्तादृशयो-रतिपञ्चबाणयोर्नलिके न शराधारनलौ न अपि तु नलिके एवेति काकुः। त्वयि नालीकेत्यादिना सा तवैव प्रिया भविष्यतीति सूचितम्। नलिक इति नलावेव नलिके स्वार्थे कः क्वचित् स्वार्थिक-प्रत्ययान्ता लिङ्गवचनान्यतिक्रम्य वर्त्तन्त इति स्त्रीत्वम्। 'नालीकोऽङ्गे शरे शल्ये नालीकं पद्मबन्धने' ॥ २८ ॥

सदृशीति। हे शूर! हे वीर! सा दमयन्ती परं केवलं तव सदृशी योग्या अथच तुल्या। किम्भूता जलमेव दुर्गं दुर्गमस्थानं तत्र तिष्ठन्तीति तथाविधानि मृणालानि विसानि जयतइति तादृशौ भुजौ यस्यास्तादृशी मृणालादपि सरलौ कोमलौ च तस्या भुजावित्यर्थः तथा करलीलया हस्तविलासेन मित्रजुषां सूर्य्यप्रणयिनां सूर्य्योदयात् प्रफुल्लानामित्यर्थः सरोरुहां पद्मानां श्रियः शोभाः स्पृहयालुर्ग्रहीतुकामा। त्वमपि जलदुर्गस्थशत्रुजिद्भुजः मित्रजुषां सुहृत्सहायानामपि शत्रूणां करलीलया बलिक्रियया श्रियः सम्पत्तीः स्पृहयालुः शूरेति सम्बोधनात्। सापि ईदृशत्वात शूरा अतस्तवैव योग्येति भावः। 'मित्रन्तु सख्यौ मित्रो दिवाकरे' हे। 'बलिहस्तांशवः कराः' अ, 'लीला विलासक्रिययोः' अ ॥ २९ ॥

वयसी इति। विधिना विधात्रा रोमरेखया रोमावल्या प्रविभज्य समविभागं कृत्वा कृतसीम्नि कृतमर्य्यादायामपि सुदृशि सुलोचनायां दमयन्त्यां स्वाभिविधिं निजाभिव्याप्तिं विधित्सुनी कर्त्तुकामे शिशुता शैशवं तदुत्तरं यौवनं सा च तच्च ते द्वे वयसी न रज्यतः न तुष्यतः सीमाविवादं न त्यजत इत्यर्थः उभयोरपि तस्यामेकाकित्वेन स्थातुमभिलाषात्। अन्यावपि मध्यस्थेन

एतस्या भ्रूनासिकं दृष्ट्वा सर्वोऽपि कामाधीनोभवतीति भावः ना०। अत्र भ्रुवोः कार्मुकत्वेनरूपणाद् रूपकमलंकारः, प्रकृतनासिकाप्रतिषेधेनान्यस्याप्रकृतस्य नलिकद्वयस्य स्थापनादपह्नुतिश्चेत्यनयोः संसृष्टिः। नासिकाया नलिकत्वेन संभावनादुत्प्रेक्षेति सां ॥ २८ ॥

अत्र समेन कार्येण प्रस्तुतायां भैम्या मप्रस्तुतशूरव्यवहारसमारोपात् समासोक्तिरलंकार इति केचित्। श्लेषः, रूपकम्, नलदमयन्त्योरुभयोरेव सादृश्येन श्लाघाकथनात् समालंकारश्चेति संकरः। मृणालजिदिति व्यतिरेकालकारो व्यज्यते इति वस्तुनालंकारध्वनिः ॥ २९ ॥

बाल्यं वर्त्तते, रोमरेखोद्भवेन च तारुण्यं प्राप्तमित्युभे संवलिते एव तिष्ठतः, रम्यत्वात् बाल्यं त्यक्तुं न शक्नोति, तारुण्यं चागन्तुमिच्छतीति भावः। अत्र प्रस्तुतवयोविशेषसाम्यादप्रस्तुतविवाद-

अपि तद्वपुषि प्रसर्पतो-र्गमिते कान्तिझरैरगाधताम् ।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥ ३१ ॥
कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः ।
स तदुच्चकुचौ भवन् प्रभा-झरचक्रभ्रमिमातनोति यत् ॥ ३२ ॥

विभज्य सेत्वादिना कृतमर्य्यादायामपि भूमौ विवदेते । एतेन वयःसन्धौ वर्त्तमाना सा विवाह-योग्येति सूचितम् । अत्र विधिनापीत्यत्रापिशब्दः कृतसीम्नीत्यनेनान्वेति ॥ ३० ॥

अपीति । खलूत्प्रेक्षे कान्तयएव झराः प्रवाहास्तैरगाधताम् अतलस्पर्शतां गमितेऽपि प्रापितेऽपि तस्या दमयन्त्या वपुषि शरीरे प्रसर्पतोः सन्तरतोर्द्वयोरुभयोः स्मरयौवनयोः काम-तारुण्ययोः उभौ द्वौ कुचौ स्तनौ प्लवकुम्भौ सन्तरणघटौ उडुपरूपकुम्भौ वा भवतः । अत्रापिशब्दस्य गमित इत्यनेनान्वयः पूर्व्वापेक्षया समुच्चय इति केचित् । अगाधजले हि सन्तरणमनुचितं तत्रापि यदि क्रियते तदा कुम्भं गृहीत्वैवेति तथोत्प्रेक्षितम् । 'अगाधमतलस्पर्शम्' अ, 'प्रवाहो निर्झरो झरः' अ ॥ ३१ ॥

कलस इति । निजस्य स्वस्य हेतुर्निमित्तकारणं योदण्डस्तस्माज्जायत इति तादृशो यश्चक्र-भ्रमिकारितागुणः चक्रस्य कुम्भकारद्रव्यविशेषस्य भ्रमिकारिता भ्रमणजनकत्वरूपो धर्म्मः कलसे घटे किमु अस्तीति शेषः । ननु समवायिकारणगुणानामेव कार्यगुणारम्भकत्वं न तु निमित्तकारणगुणा-नामतोऽसम्भाव्यमेवैतदिति कथमेतादृग्वितर्क इत्याकाङ्क्षायां शब्दश्लेषेणोपपादयति यत् यस्मात् तस्या दमयन्त्या उच्चकुचौ उन्नतस्तनौ भवन् स कलसः प्रभाझरेण कान्तिसमूहेन चक्रभ्रमिं कुलालचक्रभ्रमणम् आतनोति जनयति अथ च चक्रस्य राष्ट्रस्य लोकसमूहस्य वा भ्रमिं भ्रान्तिं मोहमिति यावत् आतनोति । यद्वा प्रभाझरे कान्तिप्रवाहे चक्रभ्रमिं चक्रवाकभ्रान्तिम् आतनोति चक्रवाका हि प्रवाहे तिष्ठन्ति शब्दच्छलादेवायं वितर्कः । 'चक्रः कोके पुमान् क्लीवं व्रजे सैन्यरथा-ङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः' मे ॥ ३२ ॥

---

प्रतीतः समासोक्तिः जीः । विभागपूर्वकसीमाकरणरूपकारणे सत्यपि सन्तोषरूपतत्कार्यानुदयात् विशेषोक्तिः, सन्तोषाभावं प्रति 'स्वाभिविधिं विधित्सुनी' इति पदद्वयार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ३० ॥

यद्यपि द्विवचनेनैव 'द्वयोः' 'उभौ' इति च लभ्यते, तथापि सदासहवासित्व-परस्परमिलितत्व-प्रदर्शनार्थमुक्तमित्यवगन्तव्यम् । अत्र कुचयोः कुम्भत्वसम्भावनात् वाच्या जात्युत्प्रेक्षालंकारः । कुचयोः स्मरयौवनसन्तरणकुम्भत्वोत्प्रेक्षया तयोरौत्सुक्यं कुचयोश्चातिवृद्धिर्व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥ ३१ ।

सर्वोऽपि स्तनकान्तिदर्शनेन कामान्धोभवतीति भावः । तुङ्गत्वेन कान्तिमत्त्वेन च तत्कुचौ

भजते खलु षण्मुखं शिखी चिकुरैर्निर्मितबर्हगर्हणः ।
अपि जम्भरिपुं दमस्वसु-र्जितकुम्भः कुचशोभयेभराट् ॥ ३३ ॥
उदरं नतमध्यपृष्ठता-स्फुरदङ्गुष्ठपदेन मुष्टिना ।
चतुरङ्गुलमध्यनिर्गत-त्रिबलिभ्राजि कृतं दमस्वसुः ॥ ३४ ॥

भजत इति। खलूत्प्रेक्षे शिखी मयूरः दमस्वसुर्दमयन्त्याश्चिकुरैः केशैर्निर्म्मिता कृता बर्हाणां पिच्छानां गर्हणा तिरस्कारो यस्य तादृशः सन् षण्मुखं कार्त्तिकेयं भजते सेवते तथा इभराट् ऐरावतोऽपि दमस्वसुः कुचशोभया जितौ तिरस्कृतौ कुम्भौ यस्य तादृशः सन् जम्भरिपुम् इन्द्रं भजते। मयूरैरावतौ देवताराधनेन बर्हकुम्भयोर्भैमीकेशस्तनसाम्यलाभार्थं वैरनिर्यातनार्थं वा कार्त्तिकेयेन्द्रौ भजेते इति भावः। अन्योऽपि केनचित्पराजितो भूत्वा तस्य साम्यलाभार्थं प्रतीकारार्थं वा कञ्चित् देवं सेवते। अत्र कार्त्तिकेयस्य षण्मुखशब्देनाभिधानात् भयङ्करत्वम् इन्द्रस्य च जम्भरिपुशब्देन शत्रुनिवारकत्वं सूचितम् ॥ ३३ ॥

उदरमिति। दमस्वसुर्दमयन्त्या उदरं मुष्टिना कृतं विधिनेति शेषः। किम्भूतेन मुष्टिना नतं निम्नं मध्यं मध्यभागो यस्य तादृशं पृष्ठं यस्योदरस्य तस्य भावस्तत्ता तया स्फुरत् व्यक्तीभवत् अङ्गुष्ठपदम् अङ्गुष्ठाङ्गुलिनिवेशस्थानम् अङ्गुष्ठचिह्नं वा यस्य तादृशेन। उदरं कीदृशं चतसृणामङ्गुलीनां मध्येन निर्गता निःसृता यास्तिस्रो बलयस्ताभिर्भ्राजते शोभते इति तादृशं पृष्ठमध्यस्य निम्नत्वमङ्गुष्ठनिवेशात् उदरस्य च बलित्रयवत्त्वम् अङ्गुलिचतुष्टयपीडनात् चतसृणां त्रीण्येवान्तराणि भवन्ति। अन्यदपि कोमलं वस्तु ऊर्ध्वकृताङ्गुष्ठमुष्टिना गृहीतं सत् अङ्गुष्ठनिवेशेन मध्ये नम्रं चतुरङ्गुलमध्यनिर्गतबलित्रयवच्च भवति ॥ ३४ ॥

---

घट-चक्रताकतुल्यताविति भावः । अत्र अर्थापत्तिरलंकारोव्यङ्ग्य इति केचित् । 'स तदुच्चकुचौ भवन्' इति रूपकम्, कामिलोकसमूहस्य कामजनितमोहस्य च भेदेऽपि चक्रभ्रमिशब्दयोः श्लेषेण तदभेदाध्यवसायादतिशयोक्तिरिति संकरः । उत्प्रेक्षेति भरतः ॥ ३२ ॥

अत्र षडाननजम्भभेदिशब्दौ परिवृत्तिसहौ । अत्र 'भजते' इत्येकक्रियया सह शिखीभराजोरप्रस्तुतयोः कर्त्तृत्वेनान्वयात् तुल्ययोगितालंकारः, शिखिनः षण्मुखभजनं प्रति जितबर्हत्वरूपपदार्थस्य, तथा ऐरावतस्य जम्भारिभजनं प्रति जितकुम्भत्वरूपपदार्थस्य हेतुत्वात् काव्यलिङ्गद्वयम्, तथाविधहेतुना भजनद्वयस्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेति सकरः जीः । तथा व्यतिरेकालंकारो व्यज्यते इति वस्तुनालंकारध्वनिः । 'कार्तिकेयो महासेनः शरजन्मा षडाननः' अ, 'जम्भभेदी हरिहयः' अ ॥ ३३ ॥

अयमर्थः—तस्याः पृष्ठमध्ये या नम्रता, सा विधातुरङ्गुष्ठपदमिव, वलित्रयञ्च चतुरङ्गुलमध्यनिर्गत-मांसभाग इवेति । प्रतीयमाना क्रियोत्प्रेक्षालंकारश्छेकानुप्रासश्चेति संसृष्टिः जीः । काव्यलिङ्गरूपकाविति सा ॥ ३४ ॥

उदरं परिमाति मुष्टिना कुतुकी कोऽपि दमस्वसुः किमु ।
धृततच्चतुरङ्गुलीव यद्वलिभिर्भाति सहेमकाञ्चिभिः ॥ ३५ ॥
पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया ।
विधिरेकचक्रचारिणं किमु निर्म्मित्सति मान्मथं रथम् ॥ ३६ ॥
तरुमूरुयुगेण सुन्दरी किमु रम्भां परिणाहिना परम् ।
तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३७ ॥

प्रकारान्तरेणाप्युदरं वर्णयति । उदरमिति । किमु वितर्के कोऽपि कश्चिज्जनो ब्रह्मैव वा कुतुकी कौतूहलयुक्तः सन् मुष्टिना करणेन दमस्वसुर्दमयन्त्या उदरं परिमाति परिमितं करोति यद्यस्मात् सहेमकाञ्चिभिः सुवर्णमेखलासहिताभिर्वलिभिस्त्रिसृभिर्वलिभिः करणैर्धृतास्तस्य परिमातुर्मुष्टेर्वा चतस्रोऽङ्गुलयो येन तादृशमिव भाति शोभते उदरमित्यर्थात् तिस्रो बलयोहेमकाञ्ची च मुष्टेरङ्गुलिचतुष्टयमित्यर्थः। को ब्रह्मा । अपिरेवार्थे । 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः' अ । 'उदरावयवे दैत्ये बलिः पूजोपहारयोः' वि ॥ ३५ ॥

पृथ्विति । किमुत्प्रेक्षे विधिर्ब्रह्मा पृथुः स्थूलो वर्त्तुलो वृत्तो यस्तस्या दमयन्त्या नितम्बः कट्याः पश्चाद्भागस्तं करोतीति तादृशः सन् मिहिरस्यन्दनस्य सूर्य्यरथस्य यत् शिल्पं निर्म्माणं तस्य शिक्षया अभ्यासेन एककेनासहायेन चक्रेण चरतीत्येवंशीलं मान्मथं कन्दर्पसम्बन्धिनं रथं निर्म्मित्सति निर्म्मातुमिच्छति । विधिर्हि पूर्व्वमेकचक्रचारिणं सूर्य्यरथं कृतवान् तच्छिक्षया सम्प्रति किं दमयन्तीनितम्बरूपं तथाविधं कामरथं कर्त्तुमिच्छतीति तस्या नितम्बः कामरथत्वेनोत्प्रेक्षितः । एतेन भैम्या नितम्बोदर्शनमात्रेण काममाविर्भावयतीति सूचितम् । 'मिहिरारुणपूषणः' अ, 'पश्चान्नितम्बः स्त्रीकट्याः' अ ॥ ३६ ॥

तरुमिति । उ भो ! राजन् ! सुन्दरी दमयन्ती परिणाहिना विशालेन ऊरुयुगेण ऊरुद्वयेन परं केवलं तरुं वृक्षरूपां रम्भां कदलीमेव किं जिष्णुर्जैत्री अपि तु तरुणीमपि युवतीमपि तां रम्भां रम्भानाम्नीमप्सरसं जिष्णुः, किम्भूतां धनदापत्यस्य कुबेरपुत्रस्य नलकूवरस्य तपसः फलं स्तनौ यस्यास्तादृशीं तदुपभोग्यत्वात् । कदलीस्तम्भापेक्षया तस्या ऊरू सरलौ कोमलौ च रम्भाप्सरोऽपेक्षया च सा सुन्दरीति पर्य्यवसितोऽर्थः । अत्र जिष्णुरेवेत्येवकारस्य रम्भामित्यनेनान्वयः । 'परिणाहोविशालता' अ, 'रम्भा स्यादप्सरोभेदे कदलीव्रीहिभेदयोः' वलः ॥ ३७ ॥

अत्र हेतुहेतुमद्भूतयोरुत्प्रेक्षयोरङ्गाङ्गिभावेन संकरत्वात् क्रियोत्प्रेक्षालंकारद्वयम् जीः । उपमेति सां । 'काञ्ची स्यान्मेखलादाम्नि गुञ्जायां नीवृदन्तरे' वि ॥ ३५ ॥

एकचक्रसूर्यरथसदृशस्तन्निधिङ्नितम्ब इति पर्यवसितोऽर्थः । क्रियोत्प्रेक्षालंकारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ३६ ॥

जलजे रविसेवयेव ये पदमेतत्पदतामवापतुः ।
ध्रुवमेत्य रुतः सहंसकी-कुरुतस्ते विधिपत्रदम्पती ॥ ३८ ॥
श्रितपुण्यसरःसरित्कथं न समाधिक्षपिताखिलक्षपम् ।
जलजन्गतिमेतु मञ्जुलां दमयन्तीपदनाम्नि जन्मनि ॥ ३९ ॥

जलजे इति । ये जलजे पद्मे रविसेवयेव सूर्योपासनयेव एतत्पदतां दमयन्तीचरणत्वरूपं पदम् उत्तमस्थानम् आधिपत्यं वा अवापतुः प्रापतुः रुतः शब्दात् हंसरवतुल्यशिञ्जितात् ध्रुवमुत्प्रेक्षे शब्दादेवेत्यहमुत्प्रेक्षे इत्यर्थः ते जलजे कर्म्मभूते विधिपत्रदम्पती ब्रह्मवाहनहंसजायापती एत्य आगत्य सहंसकीकुरुतः हंससहिते कुरुतः अथ च पादकटकसहिते कुरुतः । हंसदम्पती एव पाद-कटकरूपेण परिणतावित्यर्थः । सूर्यसेवया पद्मयोर्दमयन्तीपदत्वलाभो विधिसेवया हंसयोश्च एत-च्चरणवलयत्वलाभो युक्त एव । अन्येऽपि कश्चिद्देवमाराध्य उत्तमपदं लभन्ते । रुत इति उत्-प्रेक्षाया हेतुः रुतः शब्दादित्यनुमीयते इत्यपरे रु शब्दे भावे क्विप् यद्वा यतो रुतः शब्दं कुरुतः अतो विधिपत्रदम्पती एव ते सहंसकीकुरुतः । ध्रुवं निश्चये । 'हंसकः पादकटकः' अ ॥ ३८ ॥

श्रितेति । जलजं पद्मं दमयन्त्याः पदमेव चरणमेव नाम यस्य तादृशे जन्मनि मञ्जुलां समीचीनां गतिं गमनम् अथ च दशां कथं न एतु प्राप्नोतु उचितैव तत्प्राप्तिरिति काकुः । किम्भूतं यतः श्रिता उपजीविता अथ च आश्रिताः पुण्याः श्रेयस्कारिण्यः अथ च पवित्राः सरः-सरितः सरसीनद्योयेन तादृशं तथा समाधिना ध्यानेन अथ च निद्रया मुद्रणेनेत्यर्थः क्षपिता अतिवाहिता अखिलाः समस्ताः क्षपा रात्रयो येन तादृशम् । अन्योऽपि पुण्यसरसीं पम्पादिकां पुण्यनदीं गङ्गादिकां वा उपजीव्य समाधिना निखिलरजनीरतिवाह्य च उत्तमां गतिं प्राप्नोति ।

---

स्वर्वेश्यातोऽपि सा सुन्दरीति श्लोकार्थः । अर्थापत्तिरलंकार इति केचित् । दमयन्तया ऊरुयुगलेन रम्भोरुद्वयस्य जयासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः श्लेषच्छेकानुप्रासोवृत्त्यनुप्रासश्चेत्यं तेषां यथायथं संसृष्टिः । कुबेरतनयो नलकूबरः कामपि सुन्दरीमभिलष्य तपश्चचार, तत्तपःफलमेव त्रिलोकैकसुन्दरी सुस्तनी तरुणी रम्भा' इति पुराणकथा ॥ ३७ ॥

रविसेवया पद्मयोर्भैमीपदत्वप्राप्तिः, विधिसेवया हंसानामेतच्चरणस्थानप्राप्तिरित्यर्थः । सूर्य-सेवया हि नैरुज्यं सौन्दर्यं च भवतीति स्मृतिः । वाच्या हेतूत्प्रेक्षा, क्रियोत्प्रेक्षा, हंसपादकटकयो-र्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, श्रुत्यनुप्रासच्छेकानुप्रासश्चेत्येतेषां संसृष्टिः । सुन्दरतरे सुकुमारे च तत्पदे सृजता ब्रह्मणा स्वीयहंसमिथुनमेव तद्भूषणत्वेन कल्पितम्, तादृशस्यान्यस्य भूषणस्याभावादिति च ध्वनिः । 'विधिपत्रम् ब्रह्मवाहनम्' । 'पत्रम् वाहनपक्षयोः' अ ॥ ३८ ॥

तथाविधगतिप्राप्तिं प्रति श्रितेत्यादिविशेषणपदद्वयस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, जलजस्य तथाविधगतिप्राप्त्यसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, अर्थापत्तिः, श्लिष्टविशेषण-

सरसीः परिशीलितुं मया गमिकर्म्मीकृतनैकनीवृता ।
अतिथित्वमनायि सा दृशोः सदसत्संशयगोचरोदरी ॥ ४० ॥
अवधृत्य दिवोऽपि यौवतै-र्न्न सहाधीतवतीमिमामहम् ।
कतमस्तु विधातुराशये पतिरस्या वसतीत्यचिन्तयम् ॥ ४१ ॥

अत्र सरःसरितोरुभयोरुपादानेन अखिलेति रात्रिविशेषणदानेन च पद्मं बहुषु जन्मसु बहुकालं तपस्यां कृत्वा भैमीपदनामजन्म प्राप्तं न त्वनायासेनेति सूचितम् । तस्याः पदमतीवमनोज्ञमिति पर्य्यवसितोऽर्थः । 'समाधिर्नियमे ध्याने निद्रायाञ्च समर्थने' वि । 'गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः' मे ॥ ३९ ॥

कथं भैमी एतादृशी त्वया ज्ञातेत्याह । सरसीरिति । सरसीः सरांसि बृहत्सरांसि वा परिशीलितुम् अवगाहितुं गमिकर्म्मीकृता गता नैका बहवो नीवृतो जनपदा येन तादृशेन मया सा दमयन्ती दृशोश्चक्षुषोरतिथित्वं गोचरत्वं चक्षुरिन्द्रियजन्यज्ञानविषयत्वमित्यर्थः अनायि प्रापिता दृष्टेत्यर्थः । किम्भूता सा सदसतोः संशयोविद्यमानाविद्यमानकोटिकः सन्देहः उदरमस्ति नास्ति वेत्येवंरूपस्तस्य गोचरो विषयः उदरं यस्यास्तादृशी अतिकृशोदरीत्यर्थः एतेन न क्वापि तादृशी दृष्टेति भावः । गमिकर्म्मीकृतेति गमिर्गमनम् अनुकूलतया उत्तरदेशसंयोगावच्छिन्नो व्यापारस्तस्य कर्म तन्निष्ठधात्वर्थतावच्छेदकरूपफलाधारः अतादृक् तादृक् कृत इति अभूततद्भावे च्विः । केचित्तु गमिर्गमधातुस्तस्य कर्म कारकविशेष इत्याहुस्तन्न वर्गविशेषात्मकस्य गमधातोः कारकसम्बन्धाभावात् । नच परम्परया तत्सम्बन्धोऽस्तीति वाच्यं तदपेक्षया गमनार्थकत्वकरणस्यैव सम्यक्त्वात् इङ्धातुकथने इति सूत्रे भावेऽर्थाङोविधानात् । 'सरसी स्यान्महत्सरः' बलः । 'कासारः सरसी सरः' अ, 'नीवृज्जनपदे' अ ॥ ४० ॥

श्लोकद्वयेन त्वमेव दमयन्तीयोग्यइति दर्शयति । अवधृत्येति । दिवोऽपि स्वर्गस्यापि यौवतैर्युवतिसमूहैर्न सहाधीतवतीं न सहाध्ययनकर्त्रीम् असदृशीमित्यर्थः इमां दमयन्तीम् अवधृत्य निश्चित्य तु पुनः विधातुः प्रजापतेराशये मनसि कतमः बहुषु मध्ये क उत्तमो जनोऽस्या दमयन्त्याः पतिः स्वामी वसति विद्यते इति अहमचिन्तयं चिन्तितवान् स्वर्गसुन्दरीभ्योऽप्यधिकसुन्दर्य्या-

---

द्वयस्य साम्येन जलजे उक्तप्रकारतीर्थसेवितपस्विजनस्य व्यवहारसमारोपात् समासोक्तिश्चेति संकरः । 'उत्प्रेक्षैव' इति भरतः ॥ ३९ ॥

कश्चिद् वदति अस्तीति, कश्चिद् वदति नास्तीति, अतएव संशयविषयत्वेनोत्प्रेक्षितमिति भरतः । अत्र अतिथित्वनयनं प्रति गमीत्यादिपदार्थस्य हेतुत्वात् काव्यलिङ्गम् , दमयन्त्या उदरस्य सदसत्संशयगोचरत्वासम्बन्धेपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेति संसृष्टिः । तयाचोदरस्यातीवकृशता व्यज्यते इति वस्तुध्वनिः ॥ ४० ॥

अनुरूपमिमं निरूपय-न्नथ सर्वेष्वपि पूर्व्वपक्षताम् ।
युवसु व्यपनेतुमक्षम-स्त्वयि सिद्धान्तधियं न्यवेशयम् ॥ ४२ ॥
अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे ।
चिरमप्यविलोकिताद्य सा स्मृतिमारूढ़वती शुचिस्मिता ॥ ४३ ॥
त्वयि वीर विराजते परं दमयन्तीकिलकिञ्चितङ्किल ।
तरुणीस्तन एव दीप्यते मणिहारावलिरामणीयकम् ॥ ४४ ॥

दमयन्त्या योग्यः पतिः कतमो विधिना निर्मित इति चिन्तितवानित्यर्थः। अत्र सहाध्ययनं सादृश्यसूचकम् ॥ ४१ ॥

अनुरूपेति। अनुरूपं रूपसदृशं योग्यमित्यर्थः इमं भैम्याः पतिं निरूपयन् अयमस्या योग्यो-वरोऽयं वेति विचारयन्नहं अथ पश्चात् सर्वेष्वपि युवसु तरुणेषु पूर्वपक्षताम् अयोग्यत्वरूपां व्यपनेतुं प्रत्याख्यातुम् अक्षमोऽसमर्थः सन् त्वयि सिद्धान्तधियं भैम्यायोग्यत्वबुद्धिं न्यवेशयं निवेशितवान् त्वमेव तस्या योग्य इति निश्चितवानित्यर्थः । भैमीरूपदर्शनेन तरुणत्वव्यापक-मयोग्यत्वमिति पूर्वपक्षे नैतद्वाच्यं नलनामनि तरुणे तत्सम्भवादिति सिद्धान्तः ॥ ४२ ॥

उभयोः साम्यप्रदर्शनया राज्ञोऽनुरागं वर्द्धयति। अनयेति। शुचिस्मिता शुद्धहास्या सा दमयन्ती चिरं बहुकालम् अवलोकितापि दृष्टापि अनया दृश्यमानया तव रूपसीमया सौन्दर्य्य-मर्य्यादया कृतं संस्कारस्य पूर्व्वानुभवजनितभावनाख्यसंस्कारविशेषस्य विबोधनम् उद्बोधो यस्य तथाविधस्य मे मम अद्य अधुना स्मृतिम् आरूढ़वती गतवती स्मरणविषयो बभूवेत्यर्थः। सदृश-वस्तुदर्शनेन हि संस्कारोद्बोधात् सदृशवस्त्वन्तरस्मृतिर्भवति ॥ ४३ ॥

एवमुभयोः साम्यं प्रतिपाद्य भैमी तवैव योग्येत्याह। त्वयीति। किल सम्भावनायां हे वीर ! हे शूर ! दमयन्त्याः किलकिञ्चितं कामचेष्टाविशेषः परं केवलं त्वयि विराजते विशेषेण शोभते। वीरप्रियाः खलु स्त्रिय इति सूचनार्थं वीरेति सम्बोधनम्। दृष्टान्तेनेदं द्रढयति—मणिहारावल्या रत्नमालापङ्क्तेः रामणीयकं सौन्दर्य्यं तरुणीस्तनएव युवत्या एव कुचे दीप्यते शोभते न तु

अत्र उपदानभूताभ्यः स्वर्गयुवतिभ्य उपमेयभूताया दमयन्त्याः सौन्दर्य्येणाधिक्यवर्णनाद् व्यति-कालङ्कारः। पूर्तीपमिति सां ॥ ४१ ॥

त्वमेवास्या योग्यः पतिरिति गम्यार्थस्य भङ्ग्याभिधानात् पर्यायोक्तम्, नलदमयन्त्यो रन्यो-न्यानुरूप्येण योग्यतया वर्णनात् सममलङ्कारश्छेकानुप्रासश्चे ति संसृष्टिः ॥ ४२ ॥

अत्र स्मरणालङ्कारः, स्मृत्यागमनं प्रति कृत संस्कारविबोधनपदार्थस्य हेतुत्वात् काव्यलिङ्गञ्चे त्यनयो सङ्करः ॥ ४३ ॥

अत्र एकस्यैव सामान्यधर्मस्य शोभनरूपस्य 'विराजते', 'दीप्यते' इति पदद्वयेन पृथङ्निर्देशात्

तव रूपमिदं तया विना विफलं पुष्पमिवावकेशिनः ।
इयमृद्धधना वृथावनी स्ववनी सम्प्रवदत्पिकापि का ॥ ४५ ॥
अनयामरकाम्यमानया सह योगः सुलभस्तु न त्वया ।
घनसंवृतयाम्बुदागमे कुमुदेनेव निशाकरत्विषा ॥ ४६ ॥
तदहं विदधे तथा तथा दमयन्त्याः सविधे तव स्तवम् ।
हृदये निहितस्तया भवा-नपि नेन्द्रेण यथापनीयते ॥ ४७ ॥

वृद्धस्त्रियाः । योग्यं योग्येन युज्यते न त्वयोग्येनेति भावः । 'स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् । साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्' साहित्य ॥ ४४ ॥

अत्यन्तमुत्कण्ठयति । इदं दृश्यमानं तव रूपं सौन्दर्यं तया दमयन्तया विना विफलं निरर्थकम् अवकेशिनो बन्ध्यवृक्षस्य पुष्पमिव । तदपि फलशून्यं भवति । तया विना न केवलं रूपं विफलं किन्तु ऋद्धधना प्रचुरधनापि इयमवनी पृथिवी वृथा व्यर्थैव । तथा सम्प्रवदत्पिकापि कूजत्कोकिलापि सुवनी क्रीडावनी का न कापि अकिञ्चित्करीत्यर्थः । तया विनेत्यस्य सर्वत्रैवानुषङ्गः । 'बन्ध्योऽफलोऽवकेशी च' अ ॥ ४५ ॥

यद्यहं तस्या योग्यो वरस्तर्ह्य सुलभा सा कथमित्याह । अनयेति । तु पुनः अमरकाम्यमानया देवैरपि प्रार्थ्यमानया अनया दमयन्तया सह योगः सम्बन्धः त्वया न सुलभः देवैरपि प्रार्थ्यमानत्वात् सा त्वया दुर्लभैवेत्यर्थः । उपमिनोति--अम्बुदागमे प्रावृट्काले घनसंवृतया मेघैराच्छादितया निशाकरत्विषा ज्योत्स्नया सह योगः कुमुदेनेव कैरवेणेव । यथा कुमुदेन ज्योत्स्नया सह योगो-दुःखेन लभ्यते तथेत्यर्थः । यथा कदाचित् कुमुदेनापि दैवात् चन्द्रिका प्राप्यते तथा मम साहाय्यात् त्वयापि सा प्राप्स्यत इति भावः ॥ ४६ ॥

पूर्वश्लोकेन व्यञ्जितमेवार्थं व्यक्तीकुर्वन् निजप्रयोजकतां दर्शयति । तदिति । तत्तस्मात् अहं तथा तथा तेन तेन प्रकारेण दमयन्तयाः सविधे समीपे तव स्तवं प्रशंसां विदधे करिष्यामि यथा

साम्यस्य च गम्यत्वात् प्रतिवस्तूपमालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः सां । दृष्टान्तालङ्कारः जीः ॥ ४४ ॥

अत्र पूर्वार्धे दमयन्तीं विना रूपादीनां सर्वेषां वैफल्याद् विनोक्तिरलङ्कारः, उत्तरार्धे च तथा विनोक्तिद्वयम्, पूर्णोपमा, अर्थापत्तिश्छेकानुप्रासश्चेत्येतेषां संकरः ॥ ४५ ॥

तत्र गत्वा त्वय्येव तस्या अनुरागमुत्पाद्य त्वामेव यथा भजेत्तथा करिष्यामीति भावः । यथा वर्षासु मेघानां प्रतिबन्धकतया कुमुदेन चन्द्रज्योत्स्ना दुष्प्रापापि वायुना दैवान्मेघनिराकरणे प्राप्यते, तथेत्यर्थः । अत्र उपमालङ्कारः, भैमीसहयोगस्य असुलभतां प्रति अमरकामनारूपपदार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारश्चेति संकरः ॥ ४६ ।

तव सम्मतिमत्र केवला-मधिगन्तुं धिगिदं निवेदितम्।
ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्॥ ४८॥
तदिदं विशदं वचोऽमृतं परिपीयाभ्युदितं द्विजाधिपात्।
अतितृप्ततया विनिर्म्ममे स तदुद्गारमिव स्मितं सितम्॥ ४९॥
परिमृज्य भुजाग्रजन्मना पतगङ्कोकनदेन नैषधः।
मृदु तस्य मुदेऽगिरद्गिरः प्रियवादामृतकूपकण्ठजाः॥ ५०॥

येन प्रकारेण तया दमयन्त्या हृदये चित्ते निहितो धृतोमनसा पतित्वेनाभिमत इत्यर्थः भवान् इन्द्रेणापि किं पुनर्मनुष्येण न अपनीयते न दूरीकर्त्तुं शक्यते। विदधे अपनीयते इति वर्त्तमान-सामीप्ये लट्॥ ४७॥

निजौद्धत्यं परिहरन्नाह। तवेति। अत्र दमयन्तीपरिणये केवलां तव सम्मतिम् अनुमतिम् अधिगन्तुं ज्ञातुम् अत्र तव सम्मतिरस्ति न वेति निश्चेतुमित्यर्थः इदं निवेदितं मम निवेदनं धिक् निन्दनीयमेवास्तु। हि यतः साधवो महान्तो निजोपयोगितां स्वोपकारित्वं फलेन फलनिष्पत्त्या ब्रुवते वदन्ति न तु कण्ठेन कण्ठरवेण ब्रुवते कण्ठरवेण न ज्ञापयन्तीत्यर्थः। 'कण्ठो गले गलध्वाने' व०॥ ४८॥

हंसवचनं श्रुत्वा राज्ञोहर्षातिशयमाह। तदिति। स राजा द्विजाधिपात् हंसात् अथच द्विजराजात् चन्द्रात् अभ्युदितम् उत्पन्नं विशदं व्यक्तं स्फुटार्थमित्यर्थः अथ च शुभ्रं तदिदं वचोवचनम् अत्याह्लादकत्वादमृतमिवेति तत्परिपीय श्रुत्वा अथ च पीत्वा अतितृप्ततया अति-हृष्टतया अथ च भोजनाधिक्येन तस्य परिपीतस्य वचोऽमृतस्य उद्गारमिव वमनमिव सितं शुभ्रं स्मितम् ईषद्धसनं विनिर्ममे चकार। अन्योऽपि कश्चिद्देवश्चन्द्रादुत्पन्नम् अमृतं पीत्वा भोजनाधि-क्यात् शुभ्रमुद्गारं करोति। स्मितस्य शुभ्रत्वञ्च 'यशसि धवलता वर्ण्यते हासकीर्त्त्योः' इति कविसमयोक्तेः, अमृतस्य स्वभावादेव। 'विशदः पाण्डरे व्यक्ते' हे॥ ४९॥

आश्वासपूर्वकं राजवचनारम्भं वर्णयति। परिमृज्येति। नैषधो नलः कोकनदेन रक्तोत्पल-स्वरूपेण भुजाग्रजन्मना करेण पतगं पक्षिणं हंसं परिमृज्य तस्य हंसस्य मुदे हर्षाय मृदु कोमलं

---

अत्र इन्द्रेणापि नापनीयते अन्येषु सुरेषु, मानवेषु च का कथा इत्यर्थान्तरापातात् अर्था-पत्तिरलंकारः, छेकानुप्रासश्चेति संसृष्टिः। अतिशयोक्तिः, सा॥ ४७॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः श्रुत्यनुप्रासश्चेति संसृष्टिः॥ ४८॥

'अतिहर्षादुद्गतस्मितमुद्गारत्वेन उत्प्रेक्षितम्' इति क्रियोत्प्रेक्षा, वचसि अमृतत्वारोपो हंसे चन्द्रत्वारोपे हेतुः, द्विजाधिपपदञ्च श्लिष्टमिति श्लिष्टपरम्परितरूपकम्, वृत्त्यनुप्रासालंकारश्चेति संसृष्टिः॥ ४९॥

अमृतशब्दोपादानेन तत्कण्ठस्य सुधाकूपत्वमपि सूचितम्। अत्र प्रियवादे अमृतत्वारोपः

न तुलाविषये तवाकृति-र्न वचोवर्त्मनि ते सुशीलता ।
त्वदुदाहरणाकृतौ गुणा इति सामुद्रकसारमुद्रणा ॥ ५१ ॥
न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा ।
न परं पथि पक्षपातिता-नवलम्बे किमु मादृशेऽपि सा ॥ ५२ ॥

यथा तथा गिरो वचनानि अगिरत् उच्चरितवान् । किम्भूताः गिरः प्रियवादो मिष्टवचनमेवामृतं जलं तस्य कूपस्तद्रूपोयः कण्ठस्तस्माज्जायन्त इति तादृशाः । मनोहरं सरसञ्च वचनमुवाचेति भावः । 'रक्तोत्पलं कोकनदम्' अ ॥ ५० ॥

गिरएवाह । न तुलेति । हे हंस ! तव आकृतिराकारोऽवयव इत्यर्थः तुलाविषये तुलाया-औपम्यप्रकारकज्ञानस्य विषयो गोचर उपमेय इत्यर्थः तस्मिन् तन्मध्ये न गण्यतइति शेषः असाधारणधर्मवत्त्वात् नान्यसदृशीत्यर्थः अन्यत्तु नायिकावदनादिकं वस्तु चन्द्राद्युपममिति तुलाविषयएव । तुल्यतेऽसाविति तुला उपमेयं तल्लक्षणे विषये न उपमानाभावात् किन्तूपमानमेवेति प्राञ्चः । तथा ते तव सुशीलता साधुस्वभावो वचोवर्त्मनि न वचनगोचरो न वर्णयितुम् न शक्यत इत्यर्थः अतएव आकृतौ गुणा इति 'यत्राकृतिस्तत्र गुणा वसन्ति'इति सामुद्रकस्य भद्राभद्र-लक्षणशास्त्रस्य सारो रहस्यं तस्य मुद्रणा नियमना त्वदुदाहरणा त्वमेव उदाहरणं दृष्टान्तो यस्याः सा अन्यथा सा निर्विषया स्यादिति भावः । आकृतौ गुणा इति यस्य यादृशी आकृतिस्तत्र तादृशा गुणास्तिष्ठन्तीत्यर्थः । तुलाविषयइति पृथक्करणे सप्तमी पृथक्करणधर्मस्तु मनोज्ञत्वा-दिकमूह्यम् ॥ ५१ ॥

पुनः स्तुवन्नाह । न सुवर्णमयीति । ननु सम्बोधने, ननु ! हे हंस ! परं केवलं तावकी तवेयं तनुः शरीरं न सुवर्णमयी न हेममयी किं किन्तु तावकी वागपि वाण्यपि तथा सुवर्णमयी शोभना-वर्णा अक्षराणि यस्यां तत्स्वरूपा । शरीरसौन्दर्य्यं वाक्पटुत्वञ्च उभयमेव तवास्तीत्यर्थः । तथा तव पक्षपातिता पक्षाभ्यां छदाभ्यां पतति उड्डयत इत्येवंशीलता परं केवलम् अनवलम्बे आलम्बनशून्ये पथि आकाशमार्गे न किमु किन्तु सा पक्षपातिता अनुकूलवर्त्तित्वं निरवलम्बे

---

कण्ठे कूपत्वारोपे हेतुरिति परम्परितरूपकम्, भुजाग्रजन्मना कोकनदेनेति विषयस्यानिगरणेन विषयिणः कोकनदस्यैवोपनिबन्धनादतिशयोक्तिः, जीः । छेकानुप्रासश्चेति संसृष्टिः ॥ ५० ॥

सामुद्रकशास्त्रं हि विस्तरमभिधाय 'यत्राकृतिस्तत्र गुणा वसन्ति' इति यत् सारकथनं तस्य त्व-मुदाहरणमित्यर्थः । अत्र आकृतेः सुशीलतायाश्च सादृश्यविषये, वचोवर्त्मनि च विद्यमानतासम्बन्धेऽपि तत्तदसम्बन्धप्रतिपादनात् अतिशयोक्तिः, उत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुकत्वात् काव्यलिङ्गम्, वृत्त्यनुप्रासच्छेकानुप्रासौ चैत्यैतेषां संसृष्टिः ॥ ५१ ॥

अत्र 'सुवर्णमयी' इति, 'पक्षपातिता' इति च उभयत्र पदश्लेषोऽलंकारः । तेन च तावकी तनुरिव वागपि सुवर्णमयी, पथि (आकाशे) पक्षपातितेव मय्यपि पक्षपातिता इति उपमाद्वयं व्यज्यते इत्यलंकारेणालंकारध्वनिः । 'पक्षः पतत्रेऽनुकूले मासाधद्वारभेदयोः' वि० ॥ ५२ ॥

भृशतापभृता मया भवान् मरुदासादि तुषारसारवान् ।
धनिनामितरः सतां पुन-र्गुणवत्सन्निधिरेव सन्निधिः ॥ ५३ ॥
शतशः श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्म्मम ।
अधुना तव शंसितेन तु स्वदृशैवाधिगतामवैमि ताम् ॥ ५४ ॥
अखिलं विदुषामनाविलं सुहृदा च स्वहृदा च पश्यताम् ।
सविधेऽपि न सूक्ष्मसाक्षिणी वदनालङ्कृतिमात्रमक्षिणी ॥ ५५ ॥

निराश्रये अनन्यगतिक इत्यर्थः मादृशेऽपि अस्तीति शेषः। दमयन्तीलाभे निरालम्बनस्य मम त्वमेवालम्बनमिति भावः ॥ ५२ ॥

भृशेति। हे हंस ! भृशतापम् अतिशयितविरहज्वरं बिभर्त्ति धारयतीति तादृशेन मया भवान् तुषारस्य हिमस्य सारः श्रेष्ठभागो यत्र तादृशोऽतिशीतल इत्यर्थः मरुदिव वायुरिव आसादि प्राप्तः। यथा ज्वरवतो जनस्य शीतलेन वायुना तापनाशस्तथा विरहज्वरवतो मम भवत्सङ्गमेनेत्यर्थः। इदमेवार्थान्तरेण समर्थयति धनिनां धनवतां कुवेरादीनाम् इतरः पद्मशङ्खादिरूपः सन्निधिः सम्यङ्निधिः सतां साधूनां पुनर्गुणवतां सन्निधिरेव समागमएव सन्निधिः सम्यक् निधिः न त्वितरः। यथा धनिनां निधिना हर्षो जायते तथा साधूनां गुणवत्समागमेनेत्यर्थः। सन्निति पृथक्पदं वा। 'तापस्तु विरहज्वरः' सा० द०॥ ५३ ॥

अतिमित्रतया विश्वासं व्यञ्जयन्नाह। शतश इति। त्रिजगतां त्रिभुवनानां मोहे मूर्च्छायां वशीकरणइत्यर्थः महौषधिः सम्मोहनी विद्येत्यर्थः सा दमयन्ती शतशोऽनेकवारं मम श्रुतिं श्रवणविषयताम् आगतैव प्राप्तैव न तु साक्षात्कृता तु पुनः अधुना इदानीं तव शंसितेन कथनेन स्वदृशैव आत्मचक्षुषैव अधिगतां दृष्टां तां दमयन्तीम् अवैमि जानामि। यद्यपि मया निजचक्षुषा सा न दृष्टा तथापि भवत्कर्तृकदर्शनेनैव मम दर्शनसिद्धिरित्यतिमित्रतया अतिशयोक्तिः। अधुनेत्यत्रामुनेति क्वचित् पाठः ॥ ५४ ॥

स्वनयनदर्शनादपि मित्रवचनस्याधिक्यमाह। अखिलमिति। सुहृदा च मित्रेण च

अत्र भवान् मरुदिति, सन्निधिः सन्निधिरिति च रूपकद्वयम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, सां। अन्तयानुप्रासः, यमकञ्चेति संसृष्टिः। दृष्टान्तालंकारः, जीः। 'इतरस्त्वन्यनीचयोः' अ, 'निधिर्ना शेवधिः' अ, 'सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्' अ ॥ ५३ ॥

अत्र अद्भुतस्य भाविनः दमयन्तीलाभस्य दृशैवाधिगतामित्यनेन प्रत्यक्षायमाणत्वरूपेण वर्णनाद् भाविकनामालंकारः, 'सा मोहमहौषधिः' इति, 'तव शंसितेन स्वदृशैव' इति च रूपकद्वयम्, छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः। प्रथमरूपकेण सा जगदेकसुन्दरीति वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥ ५४ ॥

मित्रस्य प्रथमग्रहणं हृदयार्पकतया प्राधान्यद्योतनार्थम्। अत्र अप्रकृतेन विद्वत्सामान्याभि-

अमितं मधु तत्कथा मम श्रवणप्राघुणिकीकृता जनैः ।
मदनानलबोधनेऽभवत् खग धाय्या धिगधैर्य्यधारिणः ॥ ५६ ॥
विषमो मलयाहिमण्डली-विषफूत्कारमयो मयोहितः ।
वत कालकलत्रदिग्भवः पवनस्तद्विरहानलैधसा ॥ ५७ ॥

स्वहृदा च स्वमनसा च अखिलं समस्तं वस्तु अनाविलमसन्दिग्धं यथा तथा पश्यतां शब्दानुमानाभ्यां जानतां विदुषां जनानाम् अक्षिणी चक्षुषी वदनालङ्कृतिमात्रम् मुखालङ्कार एव न त्वन्यत्र तयोः प्रयोजनं यतः सविधेऽपि समीपेऽपि किं पुनर्दूरे न सूक्ष्मसाक्षिणी न परमाण्वादिक्षुद्रवस्तुग्राहिके परमाण्वादिकम् हि चक्षुषा न गृह्यते किन्तु मित्रेण मनसा वा शब्दानुमानादिना ज्ञायते। एतेन स्वचक्षुषा दर्शनापेक्षया मित्रस्य तव वचनम् ममात्यन्तं विश्वासजनकमिति सूचितम्। अत्र चकारावुभयप्राधान्यार्थकौ ॥ ५५ ॥

तस्याः श्रवणेन स्वस्य पूर्वरागविप्रलम्भमपि किञ्चिदाह। अमितमिति। हे खग ! हे पक्षिन् ! हंस ! अमितं मधु अपरिमितमधुस्वरूपा तत्कथा तस्या दमयन्त्याः कथा जनैर्वन्द्यादिभिर्मम श्रवणप्राघुणिकीकृता श्रुतेरतिथीकृता सती श्राविता सतीत्यर्थः मदनानलबोधने अत्रापि ममेत्यस्यानुषङ्गः मम कामाग्निसन्दीपने धाय्या वह्निसमिन्धनमन्त्रोऽभवत्। कामतापजनिका भूतवतीत्यर्थः। मम किम्भूतस्य धिगधैर्य्यधारिणः निन्दिताधैर्य्यवतः। अधैर्य्यधारिणोऽस्मान् धिगिति वा। अन्योऽपि अपरिमितं मधु पीत्वा पश्चात् संतप्तो भवति। 'अतिथिः स्यात् प्राघुणिकः' व०। 'ऋक् सामिधेनी धाय्या च या स्यादग्निसमिन्धने' अ ॥ ५६ ॥

विषम इति। वत खेदे तस्या दमयन्त्या विरह एव अनलोऽतिमात्रदाहकत्वाद्वह्नि स्तस्य एधसा दाह्यत्वात् काष्ठभूतेन मया कालस्य यमस्य कलत्रम् अधीनत्वात् भार्य्या या दिक् दक्षिणा दिक् तद्भवस्तदुत्पन्नः पवनो वायुः मलये मलयाचले वर्त्तमाना या अहिमण्डली सर्पसमूहस्तस्याविषफूत्कारमयो विषवद्दाहकत्वात् विषयुक्तफूत्कारस्वरूपः ऊहितस्तर्कितः। विषफूत्कारमयत्वेन

---

धानेन प्रस्तुतस्य विद्वद्विशेषरूपस्यात्मनः प्रतीतया अप्रस्तुतप्रशंसा, वदनालंकृतिमात्रत्वासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, न सूक्ष्मसाक्षिणी इति पदार्थस्य वदनालंकृतिमात्रत्वं प्रति हेतुत्वात् काव्यलिङ्गञ्चेत्यं तेषां सङ्करः। 'मात्रं कार्त्स्न्येऽवधारणे' अ ॥ ५५ ॥

तत्कथा अमितं मधु इति रूपकम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, तत्कथायाधाय्यात्मना प्रकृतमदनाग्नीन्धनोपयोगात् परिणामालंकारश्चेति संसृष्टिः, जीः। अतिशयोक्तिः, सां। अन्यदपि अमितं मधु पीतं सन्तापाय भवतीति ध्वनिः ॥ ५६ ॥

तस्या दमयन्तया विरहाग्निकाष्ठेन मया इति रूपकम्, तेन च मलयमारुतस्य विषफूत्कारमयत्वेनोत्प्रेक्षा, जीः। काव्यलिङ्गम्, सां। छेकानुप्रासश्चेत्येतेषां संकरः। कालकलत्रदिग्भवत्वेन विनाशशङ्कापि स्यादिति वस्तुना वस्तुध्वनिः ॥ ५७ ॥

प्रतिमासमसौ निशापतिः खग सङ्गच्छति यद्दिनाधिपम् ।
किमु तीव्रतरैस्ततः करै-र्म्मम दाहाय स धैर्य्यतस्करैः ॥ ५८ ॥
कुसुमानि यदि स्मरेषवो न तु वज्रं विषवल्लिजानि तत् ।
हृदयं यदमूमुहन्नमू-र्म्मम यच्चातितमामतीतपन् ॥ ५६ ॥
तदिहानवधौ निमज्जतो मम कन्दर्पशराधिनीरधौ ।
भव पोतइवावलम्बनं विधिनाकस्मिकसृष्टसन्निधिः ॥ ६० ॥

संभावित इत्यर्थः । ईदृक्तर्के गे हेतुगर्भविशेषणमाह यतो विषमः दुःसहः । विषेण मा उपमा यस्य स विषोपम इत्यर्थः इति वा । यथा फूत्कारसंधुक्षितेन वह्निना काष्ठमतिमात्रं दह्यते तथा अहमपि सर्पाणां विषफूत्कारमयपवनसंधुक्षितविरहाग्निनाधिकं दह्ये इति भावः । कालकलत्रे-त्यनेन स्वस्य मरणशङ्कापि सूचिता ॥ ५७ ॥

प्रतिमासमिति । हे खग ! असौ निशापतिश्चन्द्रः प्रतिमासं मासि मासि दिनाधिपं सूर्य्यं यत्सङ्गच्छति प्राप्नोति समसूत्रपातन्यायेनोपर्य्यधोभावेन एकराशौ मिलतीत्यर्थः ततः सूर्य्यसङ्ग-माद्धेतोः स चन्द्रः तीव्रतरैरतितीक्ष्णैर्धैर्य्यतस्करैर्धैर्य्यविलोपकैरित्यर्थः करैः किरणैर्मम दाहाय किमु जात इति शेषः । अयं भावः चन्द्रो हिमकिरणो न दाहकः तथापि मां यद्दहति तन्न स्वैः किरणैः किन्तु सूर्य्यसङ्गमात् तदीयकरैरेवेति ॥ ५८ ॥

कुसुमेति । स्मरेषवः कामबाणा यदि कुसुमानि पुष्पाणि न तु वज्रं तर्हि तानि विष-वल्लिजानि विषलताजातानि कामबाणानाम् लोकप्रसिद्धया पुष्पत्वमेवास्तु माभूद्वज्रत्वं किन्तु विष-लतोत्पन्नत्वमपि तेषां मन्तव्यम् । कुत एवं वदसीत्याह यद्यस्मात् अमूः स्मरेषवो मम हृदयम् अमूमुहन् मोहयामासुः यच्च यस्माच्च अतितमाम् अतिशयेन अतीतपन् तापयामासुः । अयम्भावः - कुसुमानां न मोहजनकत्वं न वा तापकत्वम् वरं तापादिनिवारकत्वमस्ति तथापि यन्मोहयन्ति तापयन्ति च तत्र विषवल्लिजत्वमेव कारणमन्यथाऽसम्भवादिति । 'पत्री रोप इषुर्द्वयोः' अ । अमूमुहन्निति अतीतपन्निति च णिजन्ताभ्यां मुहतपाभ्यां लुङोऽन् । अकर्म्मकत्वात् याशिन्ने-त्यादिना हृदयमिति प्रयोज्यस्य कर्मत्वम् ॥ ५९ ॥

पूर्वोक्तैर्दमयन्त्यां स्वस्याप्यनुरागितां प्रकाश्य सम्प्रति तदर्थं प्रेरयति । तदिति । तत्तस्मात्

चन्द्रस्य स्वभावतो यद् विरहिदाहकत्वं तत्रेवमुत्प्रेक्षितमिति, अथवा दिनाधिपसङ्गमनस्य दाहार्थत्वेनोत्प्रेक्षणात् वाच्योत्प्रेक्षा, करैः करैरिति यमकञ्चेति संसृष्टिः ॥ ५८ ॥

अत्र वज्रस्याप्रकृतस्य निषेधेन प्रकृतकुसुमस्थापनान्निश्चयालंकारः, स्मरेषूणां विषवल्लिजातत्वा-सम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, वृत्त्यनुप्रासालंकारश्चेति संसृष्टिः । मोहस्य सन्तापस्य च विषकार्यत्वेन कामबाणानां विषवल्लिजातत्वमुत्प्रेक्षितमिति, तेन च दमयन्तीविरहस्य नितरां दुःसहत्वरूपं वस्तु व्यज्यत इत्यलंकारेण वस्तुध्वनिः, जीः । अनुमानम्, सा ॥ ५६ ॥

अथवा भवतः प्रवर्त्तना न कथं पिष्टमियं पिनष्टि नः ।
स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता ॥ ६१ ॥
तव वर्त्मनि वर्त्ततां शिवं पुनरस्तु त्वरितं समागमः ।
अपि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः ॥ ६२ ॥

अनवधौ सीमारहिते इह कन्दर्पशराधिनीरधौ कन्दर्पस्य कामस्य शरैर्बाणैर्यआधिर्म्मानसव्यथा तल्लक्षणे नीरधौ समुद्रे निमज्जतो निमग्नीभवतो मम त्वं पोतइव वहित्रमिव आलम्बनम् आश्रयो-भव त्वं किम्भूतः विधिना विधात्रा दैवेन वा आकस्मिकोऽकस्मात् सृष्टो विहितः सन्निधिः सान्निध्यं यस्य तादृशः । अन्यस्यापि अनवधौ समुद्रे निमज्जतो जनस्याकस्माद्विधिवशादुपस्थितपोत-आश्रयो भवति । 'पुंस्याधिर्मानसी व्यथा' अ । 'पोतः शिशौ वहित्रे च गृहस्थाने च वाससि' मे ॥ ६० ॥

स्ववचनस्य निष्फलतां प्रतिपादयन्नत्यन्तं प्रेरयति । अथवेति । अथवेति पूर्वानादरे नः इयं भवतः प्रवर्त्तना भवत्कर्म्मकप्रेरणा कथं पिष्टं न पिनष्टि अपितु पिनष्ट्येव यथा पिष्टस्य पेषणं विफलं तथेयं प्रवर्त्तना विफलेत्यर्थः । कुत इत्याह हि यस्मात् सतां साधूनां परार्थता परोप-कारित्वं स्वत एव स्वभावत एव भवतीति शेषः न तु प्रेरणामपेक्षते । यथा ग्रहणानां ज्ञानानां स्वतो यथार्थता प्रामाण्यम् । ज्ञानानां स्वतः प्रामाण्यं न तु परतः इति मीमांसकाः । यद्वा गृह्यन्ते ज्ञायन्ते अर्था एभिरिति ग्रहणानीन्द्रियाणि तेषां यथार्थता अर्थाननतिक्रम्य वर्त्तिता स्वस्वार्थ-ग्राहकतेत्यर्थः । यथा श्रवणादीन्द्रियाणि सन्निकृष्टं शब्दाद्यर्थमन्यमनपेक्ष्यैव प्रत्यक्षयन्ति तथा साधवः परस्य प्रेरणामनपेक्ष्यैव उपकुर्व्वन्तीति भावः । उक्तञ्च नीतिशतके -'एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये' इति ॥ ६१ ॥

आशीर्वादादिना हंसं सन्तोषयन् प्रस्थापयति । तवेति । वर्त्मनि पथि तव शिवं कल्याणं वर्त्ततां जायतां पुनः कृतकार्य्यस्य तव समागमः मया सह संमेलनं त्वरितं शीघ्रम् अस्तु भवतु । अपि किञ्च ईप्सितं दमयन्तीलाभरूपं ममाभीष्टं साधय साधय निष्पादय निष्पादय । हे वयः ! हे पक्षिन् ! हंस ! वयं समये प्रतिबन्धकोपस्थितिकाले स्मरणीयाः स्मर्त्तव्याः अनुग्राह्या इत्यर्थः । प्रतिबन्धकोपस्थितिश्चेन्ममार्लीकप्रशंसयापि कार्य्यं साधनीयमिति भावः । साधय साधयेति त्वरायां यावद्बोधमित्यनेन द्विरुक्तिः । केचित्तु साधय गच्छ साधय निष्पादयेति वदन्ति तन्न

'शराधिनीरधौ' इति रूपकम्, श्रौतोपमा च्छेकानुप्रासश्चेति संसृष्टिः ॥ ६० ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, असम्भवद्-वस्तुसम्बन्धरूपा निदर्शना, श्रौतोपमा, छेकानुप्रासोऽन्त्यानुप्रासयमकयोः संकरश्चेत्येतेषां संकरः । दृष्टान्तालंकारः, वंशी । अर्थापत्तिश्चेति केचित् ॥ ६१ ॥

'अत्र आशीर्नामालंकारः, सां, छेकानुप्रासश्चेति संसृष्टिः । साधिर्गमार्थोऽपि विद्यते । 'मारणे मृतसंस्कारे गतौ द्रव्येऽर्थदापने । निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' अ ॥ ६२ ॥

इति तं स विसृज्य धैर्य्यवान्नृपतिः सूनृतवाग्बृहस्पतिः ।
अविशद्वनवेश्म विस्मितः श्रुतिलग्नैः कलहंसशंसितैः ॥ ६३ ॥

अथ भीमसुतावलोकनैः सफलं कर्त्तुमहस्तदेव सः ।
क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजो ययौ ॥ ६४ ॥

प्रथमं पथि लोचनातिथिं पथिकप्रार्थितसिद्धिशंसिनम् ।
कलसं जलसंभृतं पुरः कलहंसः कलयाम्बभूव सः ॥ ६५ ॥

समीचीनं नाटकादावेव णिङन्तसाधेर्गमनार्थकतया प्रयोगात् । तथाच नाट्योक्तिमधिकृत्य—'प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते' सा० द० ॥ ६२ ॥

हंसे प्रस्थापिते राज्ञो व्यापारमाह । इतीति । सूनृतवाचि प्रियसत्यवचने बृहस्पतिरिवेति तादृशः स नृपतिर्नलः इति पूर्वोक्तप्रकारेण तं हंसं विसृज्य प्रस्थाप्य धैर्य्यवान् सन् आकस्मिकतादृशवृत्तान्तेन दमयन्तीलाभे कृतनिश्चयत्वाद्धैर्य्ययुक्तः सन् वनवेश्म उद्यानमध्यस्थक्रीडागृहम् अविशत् प्रविष्टवान् किम्भूतः श्रुतिलग्नैः श्रवणविषयैः श्रुतैरित्यर्थः कलहंसशंसितैः राजहंसभाषितैः कलैर्मधुरास्फुटैर्हंसशंसितैर्वा विस्मितः हंसोऽप्येवं वदतीति प्राप्तविस्मयः । स्मृतिलग्नैरिति पाठे स्मृतिविषयैरित्यर्थः । 'सूनृतं प्रिये सत्ये' अ, 'ध्वनौ तु मधुरास्फुटे कलः' अ । 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' मे ॥ ६३ ॥

हंसप्रस्थानमाह । अथेति । अथानन्तरं सोऽण्डजो हंसः भीमसुतावलोकनैर्दमयन्तीदर्शनैस्तदेवाहर्दिनं सफलं सार्थकं कर्तुं क्षितिमण्डलस्य मण्डनायितं रमणीयत्वात् दमयन्त्यधिष्ठितत्वाद्वा अलङ्कारभूतं कुण्डिनं नाम नगरं भीमपुरं ययौ प्रस्थितवान् । तदेवेत्यनेन नलनियोगानन्तरमेव गतो न तु विलम्बः कृत इति सूचितं तेन च अतिपरोपकारकत्वमस्येति ध्वनितम् । मण्डनायितमिति मण्डनमिवाचरतीति 'कर्त्तुः क्यङ्' इत्यादिना क्यङ्, ततः कर्त्तरि क्तः ॥ ६४ ॥

अथ हंसस्य यात्रायां मङ्गलसूचकवस्तुदर्शनं श्लोकत्रयेणाह । प्रथममिति । कलहंसः राजहंसः पथि मार्गे लोचनातिथिं नयनयोरागन्तुकं पथिकानां प्रार्थिता प्रार्थनीया या सिद्धिः कार्य्यनिष्पत्तिस्तां शंसितुं सूचयितुं शीलमस्य तादृशं जलसंभृतं जलपूर्णं कलसं पुरोऽग्रे प्रथमं कलयाम्बभूव ददर्श । अत्रातिथिशब्देनाकस्मात् तादृशकलसोपस्थितिः सूचिता । बुद्धिपूर्वस्थापितो हि न तथा फलदः यथा आकस्मिकः । कलसं लोचनातिथिं लोचनविषयं कलयाम्बभूव कृतवानिति वा ॥ ६५ ॥

अत्र 'सूनृतवाचि बृहस्पतिः' (इव) इति लुप्तोपमा, श्रुत्यनुप्रासश्छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः । दीपकमतिशयोक्तिश्चालंकारः, सा० ।६३।

अत्र मण्डनायितमिति क्यङ्क्तद्वयगतोपमा, छेकानुप्रासश्चेति संसृष्टिः ॥ ६४ ॥

अत्र पथि पथि इति यमकं वृत्त्यनुप्रासश्छेकानुप्रासालंकारश्चेति संसृष्टिः ॥ ६५ ॥

अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्य्यरसालसं गतम् ।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम् ॥ ६६ ॥
नभसः कलभैरुपासितं जलदैर्भूरितरक्षुपन्नगम् ।
स ददर्श पतङ्गपुङ्गवो विटपच्छन्नतरक्षुपन्नगम् ॥ ६७ ॥
स ययौ धुतपक्षतिः क्षणं क्षणमूर्ध्वायनदुर्विभावनः ।
विततीकृतनिश्चलच्छदः क्षणमालोककदत्तकौतुकः ॥ ६८॥
तनुदीधितिधारया रया-द्गतया लोकविलोकनामसौ ।
छदहेम कषन्निवालसत् कषपाषाणनिभे नभस्तले ६९ ॥

अवलम्बेति । स हंसः दिदृक्षया मार्गावलोकनेच्छया दमयन्तीदर्शनेच्छया वा अम्बरे आकाशे आश्चर्य्यरसेन उद्यानदर्शनजनितादद्भुतरसेन अलसं मन्दं गतं गमनं क्षणमल्पकालम् अवलम्ब्य आश्रित्य अवनीभृतो राज्ञो विलासवने क्रीडाकानने रसाले आम्रद्रुमे सङ्गतं सम्बद्धं फलम् ऐक्षिष्ट दृष्टवान्। यात्राकाले फलमात्रस्य दर्शनं कार्य्यसिद्धिसूचकं विशेषतस्तु आम्रस्येति भावः । 'आम्रश्चूतोरसालोऽसौ' अ ॥ ६६ ॥

नभस इति । स पतङ्गपुङ्गवः पक्षिश्रेष्ठो हंसः नगं पर्वतं ददर्श दृष्टवान् किम्भूतं नगं नभस-आकाशस्य कलभैः करिशावकस्वरूपैर्जलदैर्मेघैरुपासितम् आश्रितम् तथा भूरितराः प्रचुरतराः क्षुपा-ह्रस्वशाखाशिफा यस्मिन् तादृशं तथा विटपैः शाखाभिश्छन्नास्तिरोहितास्तरक्षवो व्याघ्रविशेषाः पन्नगाः सर्पाश्च यत्र तादृशम् । यात्रायां पर्वतस्य दर्शनमपि मङ्गलसूचकं करिशावकस्यापि तथेति मेघानां तद्रूपत्वमुक्तम् । तरक्षुपन्नगयोर्दर्शनन्तु अशुभसूचकमिति नयोर्विटपच्छन्नत्वमुक्तम् । 'कलभः करिशावकः' अ, 'ह्रस्वशाखाशिफः क्षुपः' अ, 'तरक्षुस्तु मृगादनः' अ ॥ ६७ ॥

अथ पञ्चभिः श्लोकैर्विशिष्य हंसस्य गमनमेव वर्णयति । स इति । स हंस एवम्भूतः सन् ययौ गतवान् । किम्भूतः क्षणं व्याप्य धुता कम्पिता पक्षतिः पक्षमूलं येन तादृशः तथा क्षणम् ऊर्ध्वाय-नेन उड्डयनेन दुर्विभावनः दुर्लक्षः एवं क्षणं विततीकृतौ विस्तारितौ निश्चलौ निष्कम्पौ छदौ पक्षौ येन तादृशः अतएव आलोककेभ्यः पश्यद्भ्यो दत्तं कौतुकं कुतूहलं येन तादृशः । 'स्त्री पक्षतिः पक्षमूलम्' अ, 'गरुत् पक्षच्छदाः पत्रम्' अ ॥ ६८ ॥

तन्विति । असौ हंसः रयात् शीघ्रं लोकानां विलोकनां दर्शनं दर्शनविषयतामित्यर्थः गतया

---

अत्र छेकानुप्रासोऽन्तययमकालंकारश्चेति संसृष्टिः ॥ ६६ ॥

अत्र अन्तययमकम्, छेकानुप्रासः, 'कलभैः जलदैः' इति निरङ्गं रूपकञ्चेत्येतेषां संसृष्टिः । अतिशयोक्तिः, सां ॥ ६७ ॥

अत्र दीपकस्वभावोक्ती, छेकानुप्रासवृत्त्यनुप्रासौचेति संसृष्टिः॥ ६८ ॥

अतिवेगात्तस्य या सूक्ष्मा तेजोरेखा बभूव, सा एवमुत्प्रेक्षिता इति क्रियोत्प्रेक्षा,

विनमद्भिरधःस्थितैः खगै-र्झटिति श्येननिपातशङ्किभिः ।
स निरैक्षि दृशैकयोपरि-स्यदसांकारिपतत्रपद्धतिः ॥ ७० ॥
ददृशे न जनेन यन्नसौ भुवि तच्छायमवेक्ष्य तत्क्षणात् ।
दिवि दिक्षु वितीर्णचक्षुषा पृथुवेगद्रुतमुक्तदृक्पथः ॥ ७१ ॥
न वनं पथि शिश्रियेऽमुना क्वचिदप्युच्चतरद्रुचारुतम् ।
न सगोत्रजमन्ववादि वा गतिवेगप्रसरद्रुचा रुतम् ॥ ७२ ॥

प्रासया तनुदीधितिधारया शरीरकान्तिपङ्क्त्या वेगात् सूक्ष्मभूतया कान्तिपङ्क्त्या वा कषपाषाणनिभे श्यामवद्भासमानत्वान्निकषप्रस्तरसदृशे नभस्तले गगनमण्डले छदहेम पक्षसुवर्णं कषन्निव उत्कृष्टमपकृष्टं वेति संशय्य परीक्षार्थं घर्षन्निव अलसत् रराज । अन्योऽपि उत्कर्षापकर्षसंशये स्वर्णं निकषप्रस्तरे कषतीति तथोत्प्रेक्षितम् ॥ ६९ ॥

विनमद्भिरिति । श्येनस्य हिंस्रपक्षिविशेषस्य निपाते पतने शङ्किभिः शङ्कायुक्तैरतएव झटिति शीघ्रं विनमद्भिर्नम्रीभूतैरधःस्थितैः स्वापेक्षया अधोवर्त्तिभिः खगैः पक्षिभिः एकया दृशा सभयत्वात् अद्वितीयया चक्षुषा स हंस उपरि ऊर्ध्वं निरैक्षि दृष्टः किम्भूतः स्यदेन वेगेन सांकारिणी साम् इति ध्वनिकारिणी पतत्राणां पक्षाणां पद्धतिः पङ्क्तिर्यस्य सः । त्रस्तपक्षिणां स्वभाववर्णनात् स्वभावोक्तिः । 'रंहस्तरसी तु रयः स्यदः' अ । 'पद्धतिः पथि पङ्क्तौ च' हे ॥ ७० ॥

ददृश इति । भुवि पृथिव्यां तच्छायं तस्य हंसस्य छायाम् अवेक्ष्य दृष्ट्वा तत्क्षणात् दिवि आकाशे दिक्षु च वितीर्णं दत्तं चक्षुर्येन तादृशेन सता जनेन यत् गच्छन् असौ हंसोन ददृशे न दृष्टः । किम्भूतः यतः पृथुवेगेन द्रुतं शीघ्रं मुक्तस्त्यक्तो दृक्पथो दृङ्मार्गो येन तादृशः । पृथिव्यां छायां दृष्ट्वा किमयं पक्षी उड्डयत इति दर्शनार्थं प्रसारितनयनेनापि जनेन अतित्वरगामित्वान्नासौ लक्षित इत्यर्थः । एतेन कार्य्यसाधने हंसस्य सत्वरत्वं सूचितम् । दिक्षु इत्यनन्तरं चकारोबोध्यः । विकीर्णचक्षुषेति क्वचित्पाठः विक्षिप्तचक्षुषेत्यर्थः । तच्छायमिति सेनासुराच्छायाशालानिशा-च्छाया वेति क्लीबत्वाद्ध्रस्वः । दृक्पथ इति ऋगावेरत्सर्वंत्रेत्यत्समासान्तः ॥ ७१ ॥

न वनमिति । गतिवेगेन गमनवेगेन प्रसरन्ती रुक् कान्तिर्यस्य तादृशेन अमुना हंसेन पथि मार्गे क्वचिदपि प्रदेशे उच्चतराणाम् अत्युच्चानां द्रूणां वृक्षाणां चारुता सौष्ठवं यत्र तथाविधं वनं न शिश्रिये नाश्रितं न वा सगोत्रजं सजातीयपक्षिजनितं रुतं शब्दः अन्ववादि अनूदितम् । पक्षिणां

उत्प्रेक्षा, आर्थोपमा चेति संकरः । 'कषपाषाणो निकषः' अ, 'कष्टिपाथर' इति ख्यातः ॥ ६९ ॥

अत्र काव्यलिङ्गम् , प्राञ्चः ॥ ७० ॥

अत्र अदर्शनं प्रति पृथुवेगेत्यादिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् , स्वभावोक्तिश्लेकानुप्रासश्चेति संसृष्टिः । पुनरुक्तवदाभासालङ्कारश्च, प्राञ्चः ॥ ७१ ॥

अथ भीमभुजेन पालिता नगरी मञ्जुरसौ धराजिता ।
पतगस्य जगाम दृक्पथं हरशैलोपमसौधराजिता ॥ ७३ ॥
दयितं प्रति यत्र सन्तता रतिहासा इव रेजिरे भुवः ।
स्फटिकोपलविग्रहा गृहाः शशभृद्भित्तनिरङ्कभित्तयः ॥ ७४ ॥
नृपनीलमणीगृहत्विषा-मुपधेर्यत्र भयेन भास्वतः ।
शरणाप्तमुवास वासरे-ऽप्यसदावृत्त्युदयत्तमं तमः ॥ ७५ ॥

हि गमनसमये पथिमध्यवर्त्तिनि उच्चवृक्षेऽवस्थानं सजातीयरवं श्रुत्वा तत्प्रतिरवकरणञ्च स्वभावः अनेन तु विलम्बभिया तदुभयमपि न कृतम्। एतेन हंसस्य परोपकारकरणे गाढ़ानुरागः सूचितः। सगोत्रेति समानो दृगादाविति समानस्य सः। 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' अ ॥७२॥

अथ हंसस्य कुण्डिनपुरदर्शनमाह। अथेति। भीमो शत्रूणां भयजनकौ भुजौ बाहू यस्य तादृशेन धराजिता पृथिवीजयिना राज्ञा भीमेन पालिता रक्षिता मञ्जुर्मनोज्ञा असौ नगरी कुण्डिनाख्यपुरी पतगस्य हंसस्य दृक्पथं दर्शनगोचरत्वं जगाम गता हंसेन दृष्टेत्यर्थः। किम्भूता हरशैलस्य कैलासस्येव उपमा सादृश्यं येषां तैः सौधैः सुधाधवलैः राजभवनैराजिता शोभिता। कैलासोऽपि भीमस्य शिवस्य भुजेन पालितः। अत्र द्वितीयचतुर्थपादान्तयोः सौधराजिते-त्युभयोः साम्याद्यमकेन असौधराजितेति विरोधाभासस्य सङ्करः। धराजितेति धरां जितवानिति क्विप्। सौधेति सुधया संस्कृतमिति टण्। 'भीमो वृकोदरे घोरे शङ्करेऽप्यम्लवेतसे' हे, 'सुधा गङ्गेष्टिकास्नुह्योर्मूर्वालेपामृतेषु च' हे। 'सौधोऽस्त्री राजसदनम्' अ ॥ ७३ ॥

अथ द्वात्रिंशत्श्लोकैर्नगरीमेव वर्णयति। दयितमिति। यत्र नगर्य्यां स्फटिकोपलः स्फटिकाख्यश्वेतप्रस्तरनिर्मितो विग्रहः शरीरं येषां तादृशाः अतएव शशभृतश्चन्द्रस्य भित्तं खण्डं तद्वत् निरङ्कानिष्कलङ्का भित्तयः कुड्यानि येषां तथाविधा गृहाः दयितं भूपतिं भीमं प्रति भुवः पृथिव्याः सन्तता निरन्तरा रतिहासाइव सुरतकालीनहासा इव रेजिरे शुशुभिरे। अन्यस्याअपि स्त्रिया नायकं प्रति सुरतकाले हासा भवन्ति। हासस्य शुभ्रत्वेन कविप्रसिद्धत्वादियमुत्प्रेक्षा। 'गृहाः पुंसि च भूम्न्येव' अ, 'भित्तं शकलखण्डे वा पुंसि' अ, 'भित्तिः स्त्री कुड्यमेडूकम्' अ ॥ ९४ ॥

नृपेति। यत्र नगर्य्यां नृपस्य राज्ञो नीलमणीगृहत्विषाम् इन्द्रनीलमणिनिर्म्मितगृहकान्ती-नाम् उपधेश्छलात् तमोऽन्धकारो भास्वतः सूर्य्याद्भयेन शरणाप्तं गृहप्रविष्टं सत् रक्षकप्राप्तम् वा वासरेऽपि दिवसेऽपि उवास वसति स्म। किम्भूतम् तमः असती अविद्यमाना आवृत्तिः पुनः-

अन्त्ययमकमलङ्कारः। 'पलाशी द्रु-द्रुमागमाः' अ, 'स्युः प्रभा रुग्रुचिस्त्विड्भाः' अ ॥७२॥
अत्र हरशैलोपमेति आर्थोपमा, अन्त्यानुप्रासः, केतित् ॥ ७३ ॥
अत्र वाच्या क्रियोत्प्रेक्षा, शशभृदित्यादौ लुप्तोपमा च्छेकानुप्रासश्चेति संसृष्टिः ॥ ९४ ॥

सितदीप्रमणिप्रकल्पिते यदगारे हसदङ्करोदसि ।
निखिलास्निशि पूर्णिमा तिथी-नुपतस्थेऽतिथिरेकिका तिथिः ॥ ७६ ॥
सुदतीजनमज्जनार्पितै-र्घुसृणैर्यत्र कषायिताशया ।
न निशाखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी ॥ ७७ ॥

पुनरुत्पत्तिर्यस्य तादृशम् अतएव उदयत्तमम् अतिशयेन उदयत् वर्द्धमानम् । अन्यत्र तमो-दिवसे नश्यति रात्रौ उदयति अत्र तु क्षयोदयाभावादतिगाढमित्यर्थः । असती आवृत्तिः प्रति-बन्धकम् सूर्य्योदयादिर्यस्य अतएवोदयत्तममित्यपि प्राञ्चः । एतेन सूर्य्यादपि भीमस्य बलवत्त्वं सूचितम् । अत्रापह्नवोत्थापिता भयेनेवेति प्रतीयमानोत्प्रेक्षा । उदयत्तममिति उत्पूर्वस्य इ गतावित्यस्य भौवादिकस्य शतृ ततोऽत्यर्थे तमः । 'शरणं गृहरक्षित्रोः' अ ॥ ७५ ॥

सितेति । यदगारे यस्या नगर्य्या अगारे गृहे निशि रात्रौ एकिका एकाकिनी पूर्णिमा तिथिः अतिथिर्याचिका भूत्वा निखिलान् सर्व्वान् तिथीन् प्रतिपदादीन् उपतस्थे प्राप्ता आगन्तुकरूपेण सङ्गतेत्यर्थः । पूर्णिमैव सर्व्वदा तत्रासीदिति भावः । किम्भूते सिताः शुभ्रा दीप्रा दीप्तिमन्तो-ये मणयः स्फाटिकास्तैः प्रकल्पिते निर्म्मिते तथा हसन्तौ प्रकाशमाने अङ्करोदसी समीपद्यावाभूमी यस्य तादृशे यद्वा हसन्नङ्कोमध्यं ययोस्तादृशे रोदसी द्यावाभूमी यस्य तादृशे । प्रतिरात्रि पूर्णिमा-सम्बन्धाभावेऽपि तत्कल्पनादतिशयोक्तिः, भ्रान्तिमानिति प्राञ्चः, तिथिरप्यतिथिरिति विरोधा-भासश्च । अगार इति जातावेकवचनम् । एकैवेत्येकिका स्वार्थे कः । 'रोदश्च रोदसीति च । दिवि भूमौ पृथक् च स्यात्' मे ॥ ७६ ॥

सुदतीति । यत्र नगर्य्यां वापिका क्रीड़ादीर्घिका सुदतीजनानां सुन्दरीजनानां मज्जनेन अवगाहनेन अर्पितैर्घुसृणैः कुङ्कुमैः कषायितो रक्तीकृत आशयोऽभ्यन्तरं यस्यास्तादृशी सती अखिलयापि सकलयापि निशा रात्र्या न प्रससाद न स्वच्छजला बभूव । एतेन नगर्य्यां बहु-सुन्दरीजनाधिष्ठितत्वं सूचितम् । उपमिनोति--ग्रहिला निर्बन्धवती मानिनीव मानवती नायिकेव सापि सुदतीजनेन सपत्नीजनेनार्पितैः गाढालिङ्गनादिना प्रियवक्षसि दत्तैर्घुसृणैः कषायिताशया

अत्र प्रकृतनीलमणी-कान्तीनां निषेधेनाप्रकृतस्य तमसः स्थापनादपह्नतिरलङ्कारः, सत्यपि तमसो नाशकारणे वासरे तत्कार्यानुदयात् विशेषोक्तिः, दिवसेऽपि तमः इति विरोधाभासः, इन्द्रनीलमणिनिर्मिता गृहास्तत्र सन्ति इति लोकातीतसमृद्धिवर्णनात् उदात्तम्, यमकम्, छेकानु-प्रासश्चेति संसृष्टिः । 'उपधिर्वगाजचक्रयोः' वि । 'रत्नं मणिर्द्वयोरश्मजातौ' अ ॥ ७५ ॥

अत्र तिथिषु अतिथिरूपलोकव्यवहारसमारोपात् समासोक्तिः, अलौकिकसमृद्धिवर्णनात् उदा-त्तम्, पूर्णिमाया अतिथिरूपत्वाद् रूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'अथ पक्षतिः । प्रतिपद्द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः' अ ॥ ७६ ॥

क्षणनीरवया यया निशि श्रितवप्रावलियोगपट्टया ।
मणिवेश्ममयं स्म निर्म्मलं किमपि ज्योतिरबाह्यमीक्ष्यते ॥ ७८ ॥
विललास जलाशयोदरे क्वचन द्यौरनुबिम्बितेव या ।
परिखाकपटस्फुटस्फुर-त्प्रतिबिम्बानवलम्बिताम्बुनि ॥ ७९ ॥

कलुषचित्ता सती नायकेन कृतप्रणामाद्युपायापि अखिलया निशा न प्रसीदति, घुसृणैः कलुषा अशया निद्रारहिता इति वा । 'सूर्य्यरक्तसंज्ञन्तु कुङ्कुमम् । जागुडं दीपनं घस्रं सौरभं घुसृणञ्च तत्' लि० शे० । 'आशयः स्यादभिप्राये मलिनेऽभ्यन्तरे हृदि' बलः । 'ग्रहोऽनुग्रहनिर्बन्धौ' वि ॥ ७७ ॥

क्षणेति । निशि रात्रौ क्षणमल्पकालं नीरवया निःशब्दया सत्या यया नगर्य्या मणिवेश्ममयं मणिनिर्म्मितगृहरूपं निर्म्मलम् उज्ज्वलं किमपि वक्तुमशक्यम् अबाह्यं प्राकारमध्यस्थं ज्योतिस्तेजईक्ष्यते स्म दृश्यते स्म । किम्भूतया श्रितो वप्रावलिरेव प्राकारपङ्क्तिरेव योगपट्टो यया तया । अन्ययापि योगिन्या क्षणनिःशब्दया क्षणो ब्रह्मसाक्षात्कारोत्सवः नीरमानन्दाश्रु ते वाति प्राप्नोतीति तादृशया वा श्रितयोगपट्टया च सत्या निर्म्मलम् अविद्यादोषरहितं किमप्यनिर्व्वचनीयम् अबाह्यम् आन्तरं ज्योतिः परमात्मरूपं रात्रौ ईक्ष्यते । 'या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी' इति भगवद्गीतोक्तेः । इज्यतइति पाठे इज्यते प्राप्यते प्राप्त्यर्थकोऽत्र यजधातुः । 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोः' धरणिः ॥ ७८ ॥

विललासेति । या नगरी क्वचन कस्मिंश्चित् जलाशयोदरे जलाधाराभ्यन्तरे अनुबिम्बिता प्रतिबिम्बिता द्यौरिव स्वर्गइव विललास शुशुभे । ननु यदि स्वर्गस्य जलाशयपतितप्रतिबिम्बस्वरूपेयं नगरी तदा कथं परिखाजलं दृश्यते जले जलस्य प्रतिबिम्बाभावादिति जलाशयोदरविशेषणेनोपपादयति --किम्भूते परिखाकपटेन खेयजलच्छलेन स्फुटस्फुरत् प्रतिबिम्बानवलम्बितं प्रतिबिम्बेनासम्बद्धम् अम्बु जलं यत्र तादृशे । अयम्भावः --जलाशयः स्वर्गापेक्षयाधिकविस्तारः अतस्तन्मध्यएव स्वर्गस्य प्रतिबिम्बं पतितम् उभयतस्तु यत् प्रतिबिम्बासम्बद्धं जलम् तत्परिखाजलमिति युज्यतएवोत्प्रेक्षा । स्वर्गसदृशीयं नगरीति पर्य्यवसितोऽर्थः । 'खेयन्तु परिखा' अ ॥७९॥

---

अत्र उदात्तम्, पूर्णोपमालङ्कारश्चेति संसृष्टिः । 'कषायो लोहिते क्वाथे गन्धके सलिले रसे' अ, 'काश्मीरजन्मा घुसृणः' अ, 'वापी तु दीर्घिका' अ ॥ ७७ ॥

अत्र उदात्तम्, वप्रावलिरेव योगपट्टः इति रूपकम्, समेन विशेषणेन प्रस्तुतायां नगर्य्याम् अप्रस्तुतायाः कस्याश्चिद् योगिन्या व्यवहारप्रतीतेः समासोक्तिश्चेति संसृष्टिः । एकदेशविवर्त्ति-रूपकमिति कश्चित् तच्चिन्त्यम् ॥ ७८ ॥

चतुर्दिक्षु परिखा मध्ये नगरी, तत्र जलमध्यस्थितं स्वर्गप्रतिबिम्बं नगरी । परिखा तु प्रतिबिम्बेनाक्रान्तं जलमित्यर्थः । एतेन स्वर्गादप्यस्या नगर्य्या महत्त्वं ध्वनितम् । इयं परिखा न भवति, किन्तु अम्बु इत्यपह्नवात् अपह्नुतिः, वाच्या द्रव्योत्प्रेक्षा, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥७९॥

व्रजते दिवि यद्गृहावली-चलचेलाञ्चलदण्डताड़नाः ।
व्यतरन्नरुणाय विश्रमं सृजते हेलिहयालिकालनाम् ॥ ८० ॥
क्षितिगर्भधराम्बरालयै-स्तलमध्योपरिपूरिणां पृथक् ।
जगतां खलु याखिलाद्भुता-जनि सारैर्निजचिह्नधारिभिः ॥ ८१ ॥
दधदम्बुदनीलकण्ठतां वहदत्यच्छसुधोज्ज्वलं वपुः ।
कथमृच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम् ॥ ८२ ॥

व्रजतइति। यद्गृहावली यस्यानगर्य्याः प्रासादश्रेणी तस्याश्चलानां चञ्चलानां चेलानां पताकावस्त्राणां यान्यञ्चलानि प्रान्तास्तान्येव दण्डाः प्रतोदास्तैस्ताड़नाः आघाताः कर्त्र्यः दिवि आकाशे व्रजते गच्छते हेलिहयालेः सूर्य्यघोटकश्रेण्याः कालनां प्रेरणां सृजते कुर्व्वते अरुणाय सूर्य्यसारथये विश्रमं प्रेरणायां विश्रान्तिं व्यतरन् ददुः। पताकाप्रान्तचाञ्चल्यम् अरुणप्रेरणं मत्वा सूर्य्याश्वास्त्वरितं गच्छन्ति अतोऽरुणस्य विश्रान्तिः। एतेन नगरीगृहाणाम् अत्युच्चता पताकायुक्तता च सूचिता। उदात्तोऽयम्। 'लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते' इति लक्षणात्। 'दिनमणिहरिहेलिब्रध्नभास्कोषभासूदरथिखगपतङ्गेनाद्रयः ससप्तिः' त्रि० शे० ॥ ८० ॥

क्षितिगर्भेति। स्वकृतप्रेक्षायां या नगरी तलं पातालं मध्यम् पृथिवीम् उपरि स्वर्गञ्च पूरयन्ति उपस्थाप्यतया व्याप्नुवन्तीत्येषां तलादिसंज्ञकानामित्यर्थः जगतां सारैः श्रेष्ठांशस्वरूपैः क्षितिगर्भ-धराम्बरालयैः क्षितिगर्भे पाताले धरायां पृथिव्याम् अम्बरे आकाशे ये आलया गृहाणि तैः करणैः अजनि निर्मिता किम्भूतैः पृथक् प्रत्येकं निजचिह्नधारिभिः स्वीयस्वीयचिह्नयुक्तैः पातालचिह्नं निध्यादिकम् मध्यचिह्नं धान्यादिकं स्वर्गचिह्नं स्रक्चन्दनपर्य्यङ्कदिव्याङ्गनादिकम्। किम्भूता जगत्त्रयसारैर्निर्मितत्वादखिलाद्भुता अखिलेभ्यः स्वर्गादिभ्योऽद्भुता आश्चर्य्यज्ञानविषया स्वर्गादौ हि केवलं स्वस्वचिह्नमात्रम् अत्र तु सर्वलोकचिह्नानि। एतेन नगर्य्यां यथोर्ध्वं कोष्ठत्रयवत्प्रासाद-युक्तता सूचिता ॥ ८१ ॥

दधदम्बुदेति। यत्र नगर्य्यां क्षितिभृन्मन्दिरं राजगृहम् इन्दुमौलिताम् अत्युच्चत्वात् चन्द्रलग्न-शिखरत्वम् अथ च शिवत्वं कथं नाम न ऋच्छतु न प्राप्नोतु अपितु ऋच्छत्वेव। किम्भूतम् अम्बुदेन

अत्र रूपकम्। हेलिहयालेः पताकाप्रान्तचाञ्चल्यदण्डताड़नाऽसम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिः, इति केचित् तदसत्। वृत्त्यनुप्रासश्चेति संसृष्टिः। 'हेलि रालिङ्गने रवौ' यादवः। 'चेलं गर्हितवस्त्रयोः' धरणिः ॥ ८० ॥

समस्तप्रशस्ततरवस्तूनि तत्र सन्तीत्यर्थः। क्षित्यादीनां तलादीनां तच्चिह्नानाञ्च यथाक्रमं सम्बन्धात् यथासंख्यमलङ्कारः। तेन च त्रिभुवनसम्पत्समाहाररूपं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। व्यतिरेकालङ्कार इति केचित्। 'अधः स्वरूपयोरस्त्री तलम्' अ ॥८१॥

बहुरूपकशालभञ्जिका-मुखचन्द्रेषु कलङ्करङ्कवः ।
यदनेककसौधकन्धरा-हरिभिः कुक्षिगतीकृता इव ॥ ८३ ॥
बलिसद्म दिवं स तथ्यवा-गुपरि स्माह दिवोऽपि नारदः ।
अधराथ कृता ययेव सा विपरीताजनि भूविभूषया ॥ ८४ ॥

मेघेन नीलः श्यामः कण्ठः शिखरसमीपभागो यस्य तस्य भावं दधत् धारयत् तथा अत्यच्छसुधया अतिशुभ्रलेपेन उज्ज्वलम् उद्दीप्तं वपुर्भित्तिरूपं शरीरं वहत् धारयत् । शिवोऽपि मेघवन्नीलगलताम् अतिनिर्मलामृतवच्छुभ्रं शरीरञ्च दधाति । एतेन राजगृहस्यात्यन्तमुच्चत्वं सूचितम् । 'कण्ठो-गलसमीपयोः' धरणिः । सुधालेपोऽमृतं स्नुही' अ ॥ ८२ ॥

बहुरूपेति । बहु रूपं सौन्दर्यं यासां तथाविधा याः शालभञ्जिका भित्तिषु निर्मिताः पुत्तलिका-स्तासां मुखान्येव चन्द्रास्तेषु तद्गताः कलङ्करङ्कवो लाञ्छनहरिणाः यस्या नगर्य्या अनेककानां बहुसंख्यकानां सौधानां प्रासादानाम् कन्धरासु शिरोधिषु शिखराधोभागेष्वित्यर्थः निर्मिताः ये हरयः सिंहास्तैः कुक्षिगतीकृताइव उदरगतीकृता इव भुक्ताइवेत्यर्थः अदृश्यमानत्वात् चन्द्रतुल्यान्यपि निष्कलङ्कानि तासां मुखानीत्यर्थः । एतेन प्रासादानाम् अतिमनोज्ञबहुकाष्ठादिपुत्तलिकावत्त्वं कृत्रिमानेकसिंहवत्त्वञ्च सूचितम् । 'शालभञ्जिका स्त्रियां वेश्यायां काष्ठादिपुत्रयाम्' शब्दाब्धिः ॥८३॥

बलिसद्मेति । स प्रसिद्धस्तथ्यवाक् सत्यवादी नारदः बलिसद्म दिवं पाताललक्षणं स्वर्गं दिवोऽपि स्वर्गादपि उपरि उत्कृष्टाम् अथ च ऊर्ध्ववर्त्तिनीम् आह स्म उक्तवान् । विष्णुपुराणे--'स्वर्ग-लोकादतिरम्याणि' इत्यादिना नारदेन यत् पातालस्य स्वर्गादप्युत्कृष्टत्वमुक्तं तत् स्वर्गोपरिवर्त्ति-तयैवेति भावः । यद्येवं स्यात्तर्हि कथं न तथाप्रसिद्धिरित्याह - अथ पश्चात् भुवः पृथिव्या-विभूषया अलङ्कारभूतया भुवो विभूषा शोभा यया तादृश्येति वा यया नगर्य्या अधरा अपकृष्टा अथ च अधोदेशवर्त्तिनी कृतेव विपरीता अन्यादृशी अजनि जाता । पूर्वं भुवः स्वर्गाच्चोर्ध्व-मासीदिदानीन्तु एतन्नगर्य्या अधःकृतेति वैपरीत्यम् । स्वर्गपातालाभ्यामप्युत्कृष्टेयं नगरीति पर्य्यवसितोऽर्थः । भूरिभूषयेति क्वचित्पाठः अर्थः सुगमः । 'बलिसद्म रसातलम्' अ ॥ ८४ ॥

---

अत्र क्षितिभृन्मन्दिरस्य इन्दुमौलित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, अर्थापत्तिरिति-केचित्, अनयोः सङ्करः । छेकानुप्रासश्चेति संसृष्टिः । तथा अप्राकरणिकस्य शिवरूपद्वितीयार्थस्य प्रतीतेः शब्दशक्तिमूल उपमाध्वनिश्च ॥ ८२ ॥

चन्द्रतुल्यानि तासां मुखानि, किन्तु निष्कलङ्कानि । अतएव चन्द्रस्य कलङ्को मृगोहरिभिर्भक्षित-इति वाच्या क्रियोत्प्रेक्षा, मुखचन्द्र इति रूपकम्, द्वितीये पादे छेकानुप्रासश्चेत्येतेषां संसृष्टिः ।८३।

अत्र बलिसद्मदिवमिति निरङ्गं रूपकम्, वाच्या क्रियोत्प्रेक्षा, विपरीतजननासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिशयोक्तिश्चेति सङ्करः ॥ ८४ ॥

प्रतिहट्टपथे घरट्टजात् पथिकाह्वानदशक्तुसौरभैः ।
कलहान्न घनान् यदुत्थिता-दधुनाप्युज्झति घर्घरस्वरः ॥ ८५ ॥
वरणः कनकस्य मानिनीं दिवमङ्कादमराद्रिरागताम् ।
घनरत्नकवाटपक्षतिः परिरभ्यानुनयन्नुवास याम् ॥ ८६ ॥
अनलैः परिवेशमेत्य या ज्वलदर्कोपलवप्रजन्मभिः ।
उदयं लयमन्तरा रवे रवहद्वाणपुरीपराद्ध्यताम् ॥ ८७ ॥

प्रतिहट्टेति । प्रतिहट्टपथे सर्वेषु क्रयविक्रयस्थानमार्गेषु पथिकानां पान्थानां यत् आह्वानम् आकारणा तद्ददतीति तथाविधैः शक्तूनां सौरभैः सौगन्धैः कृत्वा घरट्टो गोधूमादिपेषणपाषाणस्तज्जातात् यस्यानगर्य्यामुत्थितादुदितात् कलहात् विरोधाज्जातो घर्घरः स्वरोऽतिविवादेन स्वरभङ्गात् घर्घरेत्यव्यक्तोध्वनिरधुनापि अद्यापि घनान् मेघान् न उज्झति न त्यजति । पान्थाः शक्तुसौरभमाघ्राय भोजनलालसया नगरीं परित्यक्तुं न शक्नुवन्ति । मेघास्तु उद्दीपकत्वेन कामपरिवारत्वात् तान् स्वगृहान् गमयितुं त्वरयन्तीति शक्तुसौरभनिमित्तको मेघघरट्टयोः कलहः । योऽतिरोषेणोच्चैःस्वरैः कलहं करोति बहुकालपर्य्यन्तं घर्घरस्वरस्तं न मुञ्चति । एतेन मेघवद्गभीरस्वनबहुघरट्टवत्त्वं नगर्य्याः सूचितम् ॥ ८५ ॥

वरणइति । कनकस्य स्वर्णस्य वरणः प्राकारएव अमराद्रिः सुमेरुः मानिनीं प्रणयकोपवतीम् अतएव अङ्कात् क्रोडात् आगतां यां नगरीमेव दिवं परिरभ्य आलिङ्गय अनुनयन् प्रसादयन् उवास वसति स्म । कथमयं सुमेरुस्त्वया ज्ञातइति विशिनष्टि किम्भूतः घनानि निविडानि रत्नानि यत्र तादृशे ये कवाटे ते एव पक्षती पक्षमूले यस्य तादृशः तस्य सपक्षत्वात् । अन्योऽपि अन्यत्र गतां मानिनीं परिरभ्यानुनयन् तदनुरोधात्तत्रैव वसति । एतेन सुमेरुवदत्युच्चसौवर्णप्राकारवत्त्वं स्वर्गसाम्यञ्च नगर्य्याः सूचितम् । 'प्राकारो वरणः शालः' अ ॥ ८६ ॥

अनलैरिति । या नगरी उदयं लयम् अन्तरा उदयस्य लयस्य च मध्ये दिवसइत्यर्थः ज्वलन्तो-ये अर्कोपलवप्राः सूर्य्यकान्तमणिनिर्मितप्राकारास्तेभ्योजन्म येषां तादृशैरनलैर्वह्निभिः परिवेशं वेष्टनम्

---

अत्र घनानां घरट्टकलहासम्बन्धेऽपि तत्सम्बन्धाभिधानात् अतिशयोक्तिः, कलहघरट्टशब्दयोर्मेघशब्दसाम्यादियमुत्प्रेक्षा, सा च व्यञ्जकाप्रयोगाद् गम्या इति प्रतीयमानोत्प्रेक्षा च्छेकानुप्रासश्चेति संसृष्टिः ॥ ८५ ॥

स्वर्णप्राकारो मेरुतुल्यः, नगरी स्वर्गतुल्या, रत्नकवाटे हेमाद्रिपक्षतुल्ये, वरणोऽमराद्रिरिति, याम् अङ्कादागतां दिवमिति च व्यस्तरूपकम् । तेन चेयं नगरी कुतश्चित् कारणादागता द्यौरेव, वरणः स्वर्णाद्रिरेव इति उत्प्रेक्षालङ्कारो व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः । 'नायकनायिकाव्यवहारप्रतीतिस्तु रूपकादेव, तेन नात्र समासोक्तिः' सा ॥ ८६ ॥

अस्याश्चतुर्दिक्षु सूर्यकान्तमयप्राकारे सूर्यरश्मिसंसर्गात्तच्छिखा शुशुभ । वेष्टनेन तत् साम्यम ।

बहुकम्बुमणिर्व्वराटिका-गणनाटत्करकर्कटोत्करः ।
हिमबालुकयाच्छवालुकः पटु दध्वान यदापणार्णवः ॥ ८८ ॥
यदगारघटाट्टकुट्टिम-स्रवदिन्दूपलतुन्दिलापया ।
मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया ॥ ८९ ॥

गत्य प्राप्य वाणपुर्य्याः शोणितपुरस्य परार्द्ध्यतां श्रेष्ठतां सादृश्यमित्यर्थः अवहत् दधार वाणपुर्य्यपि शिवप्रसादाच्चतुर्द्दिक्षु वह्निवेष्टितासीदिति प्रसिद्धिः। उदयं लयमन्तरेति अन्तरायोगे हादियुक्तादिति द्वितीया। 'वप्रः प्राकाररोधसोः' वि ॥ ८७ ॥

वह्विति। यस्यानगर्य्या आपणोहट्टएव अर्णवः समुद्रः पटु अतिशयं यथा तथा दध्वान शब्दितवान्। किम्भूतः बहवः कम्बवः शङ्खा मणयोमौक्तिकादयश्च यत्र तादृशः। बणिग्भिर्विक्रयार्थं नानादेशादानीतत्वात्तत्र बहवः शङ्खामणयश्चासन्नित्यर्थः। समुद्रेऽपि शङ्खाविद्रुमादिमणयश्च तिष्ठन्ति। तथा वराटिकानां कपर्द्दानां या गणना संख्यानं तत्र अटन्तश्चलन्तो ये करा जनानां हस्तास्तएव कर्कटाः कुलीरास्तेषामुत्करः समूहोयत्र सः समुद्रेऽपि वराटकाः कर्कटाश्च विद्यन्ते। तथा हिमबालुकया कर्पूरेण अच्छाः शुभ्राबालुकाः सिकतायत्र तथाभूतः समुद्रेऽपि शुभ्रबालुकास्तिष्ठन्ति। पटुवित्यनेन जनसंमर्द्दः सूचितः। हिमबालुकयेति धान्येन धनवानितिवदभेदे तृतीया। 'शङ्खः स्यात् कम्बुरस्त्रियाम्' अ, 'स्यात् कुलीरः कर्कटकः' अ, 'अथ कर्पूरमस्त्रियाम्। घनसारश्चन्द्रसञ्ज्ञः सिताभ्रोहिमबालुका' अ ॥ ८८ ॥

यदगारेति। प्रतिचन्द्रोदयं चन्द्रोदये अभ्रगङ्गया आकाशगङ्गया मन्दाकिन्या यस्यानगर्य्या अगारघटानां गृहसमूहानां ये अट्टाउपरिगृहास्तेषां कुट्टिमेषु बद्धभूमिषु स्रवन्तः क्षरन्तो ये इन्दूपलाश्चन्द्रकान्तमणयस्तैस्तुन्दिलाबहुतरा आपोजलानि यस्यास्तथाभूतया सत्या पतिव्रतौचिती सतीत्वौचित्यं न मुमुचे न त्यक्ता। चन्द्रोदये हि समुद्रस्य जलवृद्धिर्भवति गङ्गापि तत्पत्नी अतश्चन्द्रोदये जलवृद्धिरूपः पत्युर्धर्मस्तस्याअपि चन्द्रकान्तक्षरितजलेन जात इति पातिव्रत्यौचित्यम्। पतिव्रतालक्षणमाह हारीतः—'आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता' इति। एतेन मन्दाकिन्याअपि अट्टकुट्टिमानामधोवर्त्तित्वं सूचितम्। नगर्य्यां गृहाः चन्द्रकान्तमणिनिर्मितकुट्टिमा अत्युच्चतराश्चेति पर्य्यवसितोऽर्थः। तुन्दिलापयेति ऋगादेरत्सर्वत्रेत्यत्समासान्तः। उदात्तोऽयम् ॥ ८९ ॥

---

अत्र लोकातीतसमृद्धिवर्णनादुदात्तालङ्कारः, अन्यस्य धर्मं कथमयोवहतु इति वस्तुसम्बन्धोऽसम्भवन् वाणपुरीपरार्द्ध्यतामिति तत्सादृश्याक्षेपान्निदर्शना, छेकानुप्रासश्चेति सङ्करः। 'परिवेशः परिवृत्तौ भानोः सविधमण्डले' धरणिः। महेश्वरभक्तस्य वाणराजस्य शोणिताख्या नगरी महादेवप्रसादेनानलमयप्राकारवेष्टिता आसीदिति हरिवंशकाहिनी ॥ ८७ ॥

अत्र साङ्गरूपकम्, यमकच्छेकानुप्रासश्चेति संसृष्टिः। आपणस्तु निषद्यायाम्' अ ॥ ८८ ॥

रुचयोऽस्तमितस्य भास्वतः स्खलिता यत्र निरालयाः खलु ।
अभिसायमभुर्विलेपना-पणकश्मीरजपण्यवीथयः ॥ ६० ॥
विततं वणिजापणेऽखिलं पणितुं यत्र जनेन वीक्ष्यते ।
मुनिनेव मृकण्डुसूनुना जगतां वस्तु पुरोदरे हरेः ॥ ६१ ॥
सममेणमदैर्यदापणे तुलयन् सौरभलोभनिश्चलम् ।
पणिता न जनारवैरवै-दपि गुञ्जन्तमलिं मलीमसम् ॥ ६२ ॥

रुचयइति । यत्र नगर्य्याम् अभिसायं सन्ध्यासमये विलेपनापणे गन्धद्रव्यविक्रयहट्टे कश्मीरजपण्यानां कुङ्कुमरूपविक्रेयद्रव्याणां वीथयोमार्गाः अभुः शोभन्ते स्म । उत्प्रेक्षते—खलूत्प्रेक्षायाम्, अस्तमितस्य अस्तंगतस्य भास्वतः सूर्य्यस्य स्खलिताश्च्युताः निरालया निराश्रयारुचयइव किरणाइव । अभुरिति भा दीप्तौ विदेरुस द्विपादन्ताद्वेति अनउस् । 'वीथी वर्त्मनि पङ्क्तौ च गृहाङ्गे नाट्यरूपके' हे ॥ ९० ॥

विततमिति । यत्र नगर्य्याम् आपणे हट्टे पणितुं विक्रेतुं वणिजा वणिग्जनेन विततं विस्तृतम् अखिलं सर्व्वं जगताम् वस्तु द्रव्यं जनेन क्रेतृजनेन पुरा पूर्वं वीक्ष्यते दृष्टम् । उपमिनोति -यथा मृकण्डुसूनुना मार्कण्डेयेन मुनिना हरेर्बालरूपस्य भगवतउदरे जठरे जगताम् वस्तु पुरा वीक्ष्यते तथा । पुरा किल एकार्णवे जगति न्यग्रोधशाखाधिरूढबालकाकृतिनारायणस्योदरं प्रविश्य मार्कण्डेयेन तत्र सर्वं जगत् दृष्टम् । वणिजेत्यत्र आपण इत्यत्र च एकवचनेन एकस्यापि वणिजएकस्मिन्नप्यापणे सर्वं वस्तु दृष्टमिति सूचितम । वीक्ष्यतइति स्मायुक्तपुरायोगइत्यादिना भूते लट ॥ ९१ ॥

सममिति । यस्या नगर्य्याआपणे हट्टे पणिता विक्रेता एणमदैः कस्तूरीभिः समं सह सौरभलोभनिश्चलं सौरभाभिलापेण निस्पन्दं मलीमसं श्यामलं गुञ्जन्तमपि शब्दायमानमपि अलिं भ्रमरं तुलयन्

अत्र प्रतिचन्द्रोदयं चन्द्रकान्तमणिक्षरितजलेनाभ्रगङ्गाया जलवृद्ध्यसम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिः, लोकातीतसमृद्धिवर्णनादुदात्तालङ्कारश्चेत्यनयोः सङ्करः । अतिशयोक्त्या च यदगाराणाम् अभ्रगङ्गाया अपि उपरिवर्तित्वं गम्यते इत्यलङ्कारेण वस्तुध्वनिः । तदुत्थापिता चाभ्रगङ्गायाः पातिव्रत्यधर्मपरित्यागोत्प्रेक्षा, सा च व्यञ्जकाभावाद् गम्या। प्रथमार्धे च्छेकानुप्रासश्चेति संसृष्टिः । 'अट्टं भक्ते चतुष्के ना क्षौमेऽत्यर्थे गृहान्तरे' मे । 'मन्दाकिनी वियद् गङ्गा' अ ॥ ८९ ॥

अत्र खलु इवार्थे इति वाच्योत्प्रेक्षा, रविरुचीनां निराश्रयत्वाभिधानात् विशेषालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः । 'विपणिः पण्यवीथिका' अ ॥ ९० ॥

अत्र उपमालङ्कारः, उदात्तम्, छेकानुप्रासः, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ।

रविकान्तमयेन सेतुना सकलाहज्र्वलनाहितोष्मणा।
शिशिरे निशि गच्छतां पुरा चरणौ यत्र दुनोति नो हिमम्॥ ९३॥
विधुदीधितिजेन यत्पथं पयसा नैषधशीलशीतलम्।
शशिकान्तमयं तपागमे कलितीव्रस्तपति स्म नातपः॥ ९४॥

परिमापयन् जनारवैर्लोकानां कोलाहलैर्न अवैत् न ज्ञातवान्। यद्यपि निश्चलत्वात् मलीमसत्वेन वर्णसाम्याच्च ज्ञातुं न शक्यते तथापि गुञ्जनादपि न ज्ञेयः जनारवैर्गुञ्जनस्यान्तर्हितत्वादिति भावः। मीलितमिदम्। 'मीलितं वस्तुनोगुप्तिः केनचित्तुल्यलक्ष्मणा' इति लक्षणात्। अवैदिति अवपूर्व्वादिण गतावित्यस्माल्लङोदुङ्। वृद्धिरजादेरिति वृद्धिः॥ ९२॥

रवीति। यत्र नगर्य्यां शिशिरे शीतकाले रविकान्तमयेन सूर्य्यकान्तमणिनिर्मितेन अतएव सकलाहः समस्तदिनं व्याप्य यत् ज्वलनं तेनाहितोऽर्पित उष्मा औष्ण्यं यत्र तादृशेन सेतुना निशि रात्रौ गच्छतां जनानां चरणौ हिमं कर्त्तृ पुरा नो दुनोति नो पीड़यति स्म। सकलाहरिति ते चानित्या इति समासान्तनिषेधः। प्राञ्चस्तु सकलाहज्वलनेत्यादि नीरेफमेव पाठं धृत्वा व्याख्यातवन्तः। यद्यपि जनानामिति बहुत्वबोधात् चरणावित्यत्र द्विवचनप्रयोगो न युज्यते तथापि प्रत्येकापेक्षया द्वित्वम् बोध्यम्। दुनोतीति स्मायुक्तेत्यादिना पुरायोगे भूते लट्॥ ९३॥

विधिवति। कलितीव्रः कलियुगवद्दुःसहआतपः शशिकान्तमयं चन्द्रकान्तमणिनिर्मितम् अतएव रात्रौ विधुदीधितिजेन चन्द्रकिरणसम्पर्कोजातेन पयसा जलेन नैषधशीलवन्नलस्वभाववत् शीतलं यत्पथं यस्या नगर्य्याः पन्थानं तपागमे ग्रीष्मसमयेऽपि न तपति स्म नोष्णीचकार। रात्रौ क्षरितचन्द्रकान्तजलेन सर्व्वं दिनं शीतलएव पन्थास्तिष्ठतीति भावः। यत्पथमिति ऋगादेरत् सर्व्वत्रेत्यत्समासान्तः॥ ९४॥

पुराकिल एकार्णवे जगति सप्तकल्पजीवी मार्कण्डेयस्तत्पयोधिसलिले प्लवमानो वटपत्रशायिनं बालकरूपधरं श्रीभगवन्तमवलोकयन् तं रक्षितुं तत्समीपं गच्छन् तेन भक्षित स्तदुदरमध्ये जगताभखिलमेव वस्तुजातमवलोकयामासेति श्रीमद्भागवतकाहिनी॥ ९१॥

अत्र वर्णसाम्येन भ्रमरस्य मृगमदाभेदप्रतीतेः मीलितालङ्कारः, सत्य प गुञ्जनरूपे कारणे भ्रमरस्य ज्ञानरूपकार्याभावाद् विशेषोक्तिः, ज्ञानाभावं प्रति जनारवाणां हेतुत्वात् काव्यलिङ्गम्, वृत्त्यनुप्रासः, 'रवैरवै' इति यमकं छेकानुप्रासश्चेति संसृष्टिः। मीलितालङ्कारेण भ्रान्तिमानलङ्कारो- व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः। 'मृगनाभिर्मृगमदः कस्तूरी च' अ॥ ९२॥

अत्र दिवा सेतोर्जनिततपनतापेणरात्रावुष्माऽसम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः, तुषार- रूपकारणसत्त्वेऽपि तत्कार्यपीड़ानुदयात् विशेषोक्तिः, उदात्तालङ्कारश्चेत्येतेषां सङ्करः। 'सेतुरालौ स्त्रियां पुमान्' अ॥ ९३॥

परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरः ।
फणिभाषितभाष्यफक्किका-विषमा कुण्डलनामवापिता ॥ ९५ ॥
मुखपाणिपदाक्षिपङ्कजै-रचिताङ्गेष्वपरेषु चम्पकैः ।
स्वयमादित यत्र भीमजा स्मरपूजाकुसुमस्रजः श्रियम् ॥ ९६ ॥

परिखेति । या नगरी परिखावलयच्छलेन परिखामण्डलव्याजेन कुण्डलनां वेष्टनम् अवापिता अर्थात् पराजितशत्रुभिः प्रापिता सती परेषाम् अन्येषां ग्रहणस्य आयत्तीकरणस्य न गोचरो न विषयः । अजय्यत्वचिह्नभूतां कुण्डलनां दृष्ट्वा शत्रवो दूरत एव तां परित्यज्य निवर्त्तन्तइति भावः । किम्भूता फणिना शेषनागेन भाषितं यद्भाष्यं तत्र या फक्किका पूर्व्वपक्षस्तद्वद्विषमा दुर्ग्राह्या । भाष्यफक्किकापि विषमा दुर्ज्ञेया अतएव ज्ञातुमशक्तैः कुण्डलनां प्रापिता सती अन्येषां ग्रहणस्य ज्ञानस्य गोचरो न भवति ॥ ९५ ॥

मुखेति । यत्र नगर्य्यां भीमजा दमयन्ती स्मरस्य कामस्य पूजायै या कुसुमस्रक् पुष्पमाला तस्याः श्रियं शोभां स्वयम् आदित गृहीतवती कामपूजापुष्पमालास्थानं सैव जातेत्यर्थः । किम्भूता मुखपाणिपदाक्षिपङ्कजैर्वदनकरचरणनयनरूपगौररक्तनीलोत्पलैः रचिता निर्मिता तथा अपरेषु अन्येषु अङ्गेषु अवयवेषु चम्पकैश्चम्पककुसुमैरचिता । मालापि नानाविधैः पुष्पैः क्रियते । तस्या-मुखाद्यङ्गानि पद्मतुल्यानि अन्यानि तु चम्पकसमानवर्णानीति भावः । आदितेति आङ्पूर्व्वाद्दाञो-लुङः सङ् स्थादाधाधेटदोदानदेङामात्मने सङीति इङ् सङ्लुगिणादेरिति सङ्लुङ् इड़ादावित्या-कारलुक् । निदर्शनेयम् ॥ ९६ ॥

अत्र आतपरूपकारणे सत्यपि पथ उष्णतारूप कार्याभावाद् उक्तनिमित्ता विशेषोक्तिः, कलि-तीव्र इति लुप्तोपमा, 'नैषधशीलशीतलम्' इति यथा—कलिस्तीव्रोऽपि नलशीलं न तपति स्म, न निर्मर्यादं करोति स्म, तथा आतपो यत्पथं न तपति स्म, नोष्णीचकार इति समासगता लुप्तोपमा । नगरपथस्य चन्द्रकान्तगलितजलेन शीतलत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिः, उदात्तम् , वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ९४ ॥

महाभाष्ये यन्न बुद्धं तत्र लालायितः फणीति कृत्वा कुण्डलनां प्रापितं पण्डितैरिति । भाष्यफक्किका वररुचिना कुण्डलितेति प्रसिद्धिः । शेष एव तदर्थं जानाति । 'फक्किका-विषमा' इति लुप्तोपमा, परिखावलयस्यापह्नवेन कुण्डलनायाः स्थापनादपह्नुतिः, तयानुप्राणिता अवापितेति प्रतीयमाना क्रियोत्प्रेक्षा चेत्येषां सङ्करः । 'ग्रहणं तूपलब्धौ स्यादादरे ग्रहणं करे । ग्रहोपराग स्वीकारवन्दिषु ग्रहणं मतम्' वि ॥ ९५ ॥

जघनस्तनभारगौरवा-द्वियदालम्ब्य विहर्त्तुमक्षमाः।
ध्रुवमप्सरसोऽवतीर्य्य यां शतमध्यासत तत्सखीजनः॥ ९७॥
स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्त्तु या।
स्वरभेदमुपैतु या कथं कलितानल्पमुखारवा न वा॥ ९८॥

जघनेति। ध्रुवमुत्प्रेक्षे शतमप्सरसः जघनस्तनयोर्नितम्बकुचयोर्भारेण स्थौल्येन यद्गौरवं गुरुत्वं तस्माद्धेतोः वियदाकाशमालम्ब्य आश्रित्य विहर्त्तुं क्रीड़ितुम् अक्षमाअशक्ताः सत्यः अवतीर्य्य आगत्य तत्सखीजनो दमयन्तीसखीजनो भूत्वा यां नगरीम् अध्यासत अधितिष्ठन्ति स्म। दमयन्त्याः सख्योऽप्सरस्तुल्या इत्यर्थः। यामिति यत्नार्थोऽधिष्ठादेरिति आधारस्य कर्मत्वम्॥ ९७॥

स्थितीति। या नगरी स्थित्या मर्य्यादया शालिनः शोभमानाः समस्तावर्णा ब्राह्मणादयोयत्र तस्या भावस्तत्तां कथं न बिभर्त्तु न धारयतु अपितु बिभर्त्त्वेवेत्यर्थः अतएव चित्रमयी आश्चर्य्यरूपा। अन्यत्र ब्राह्मणादयो न मर्य्यादावन्तोऽत्र तु सर्व्वेषां यथायथं मर्य्यादावत्त्वादाश्चर्य्यरूपत्वम्। स्थितिः सीमा वा अन्यत्र ब्राह्मणादीनां राजदत्तवास्तुसीमा नास्ति अत्र तु समस्तब्राह्मणादिवर्णेभ्यो राज्ञा सीमा दत्तेति आश्चर्य्यरूपत्वम्। अथ च या चित्रमयी आलेख्यप्रचुरा सा स्थितिशालिनः समस्त-वर्णाः शुक्लरक्तादयो यत्र तत्तामवश्यं दधाति। तथा वा समुच्चये कलिता धृता अनल्पानां बहूनां नरकरितुरगादीनां मुखारवा मुखशब्दा यया तादृशी या नगरी स्वरभेदं घर्घरादिनानाशब्दवत्त्वं कथं न उपैतु न प्राप्नोतु अपि तु उपैत्वेवेत्यर्थः। अथ च कलितोऽनल्पमुखस्य चतुर्मुखस्य ब्रह्मण-आरवो वेदध्वनिरूपो यत्र तादृशी या सा स्वरभेदम् उदात्तादिस्वरत्रयवत्त्वं कथं नोपैतु यद्वा कलिता अनल्पमुखा बहुमुखा ब्रह्मशिवकार्त्तिकाद्या अकारोविष्णुः रोवह्निः वोवरुणश्च यया तादृशी या सा स्वरभेदं स्वर्गादभेदं कथं नोपैतु। 'स्थितिः स्त्रियामवस्थाने मर्य्यादायाञ्च सीमनि' मे। 'वर्णोद्विजादौ शुक्लादौ स्तुतौ वर्णन्तु चाक्षरे' अ, 'आलेख्याश्चर्य्ययोश्चित्रम्' अ। 'अकारो-विष्णुरुद्दिष्टः' 'रस्तीक्ष्णदहने,' 'वः पश्चिमदिगीशे स्यात्' कोषान्तरम्॥ ९८॥

अत्र अन्यस्य धर्मं कथमन्यो वहतु इति श्रियमिव श्रियमिति सादृश्याक्षेपात् निदर्शना-लङ्कारः, भैमयङ्गानां पद्मादिभेदेऽपि अभेदप्रतिपादनादतिशयोक्तिश्चेत्यनयोः सङ्करः॥ ९६॥

अत्र ध्रुवमिति उत्प्रेक्षाव्यञ्जकत्वात्, भैमीसखीजनव्याजेनेत्यर्थावगमाच्च वाच्या सापह्नवोत्प्रेक्षा, भारगौरवपदयोः एकपर्य्यायत्वेनापाततः पौनरुक्त्यावभासनात् तथा गुरुत्वादिति भेदावगमाच्च पुनरुक्तवदाभासोऽलङ्कारश्चेत्यनयोः संसृष्टिः। उत्प्रेक्षालङ्कारेण 'दमयन्त्याः सख्योऽप्सरस्तुल्याः,' इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। अभ्यर्हितत्वाज्जघनस्य पूर्वनिपातः॥ ९७॥

स्वरुचारुणया पताकया दिनमर्केण समीयुषोत्तृषः ।
लिलिहुर्बहुधा सुधाकरं निशि माणिक्यमया यदालयाः ॥ ९९ ॥
लिलिहे स्वरुचा पताकया निशि जिह्वानिभया सुधाकरम् ।
स्थितमर्ककरैः पिपासु यन्नृपसद्मामलपद्मरागजम् ॥ १०० ॥
अमृतद्युतिलक्ष्म पीतया मिलितं यद्वडभीपताकया ।
वलयायितशेषशायिनः सखितामादित पीतवाससः ॥ १०१

स्वरुचेति । माणिक्यमया माणिक्याख्यरत्नविशेषनिर्मिता यदालया यस्या नगर्य्यागृहाः दिनं व्याप्य समीयुषा सङ्गतेन अर्केण सूर्य्येण हेतुना उत्तृपउत्तृष्णाः सन्तः निशि रात्रौ स्वरुचा निजकान्त्या अरुणया आरक्तया पताकया बहुधा बहुवारं सुधाकरं चन्द्रं लिलिहुः अस्पृशन् । पताकायां जिह्वात्वारोप आर्थः सापि आरक्ता । अन्येऽपि दिवसे सूर्य्यकिरणेनोत्तप्ताः सन्तो रात्रौ शीतलं वस्तु लिहन्ति । अत्र गृहा अत्युच्चा इति पर्यवसितोऽर्थः ॥ ९९ ॥

लिलिहइति । पूर्व्वोक्तएवार्थः प्रकारान्तरेण वर्णितः । अमलपद्मरागजं निर्मलपद्मरागमणिनिर्मितम् अर्ककरैर्हेतुभिः पिपासु पातुमिच्छुकमिव स्थितं यस्या नगर्य्या नृपसद्म राजमन्दिरं निशि रात्रौ स्वस्यैव रुक् कान्तिर्यस्यास्तादृश्या आरक्तयेत्यर्थः अतएव जिह्वानिभया जिह्वातुल्यया पताकया सुधाकरं चन्द्रं लिलिहे आस्वादयामास । लिलिह इति स्वरितेत्त्वात् कर्तृस्थक्रियाफलताविवक्षायामात्मनेपदम् ॥ १०० ॥

अमृतेति । पीतया गौरवर्णया यस्यानगर्य्या वडभीपताकया उपरिगृहविशेषवैजयन्त्या मिलितं सम्बद्धम् अमृतद्युतेश्चन्द्रस्य लक्ष्म लाञ्छनं कर्तृ वलयायितो मण्डलीभूतो यः शेषोऽनन्तनागस्तस्मिन् शेतइत्येवंशीलस्य पीतवाससः कृष्णस्य सखितां सादृश्यम् आदित जग्राह । कलङ्कमभितो वर्त्तमानस्य चन्द्रावयवस्य शेषसादृश्यं, कलङ्कस्य कृष्णसादृश्यं, पीतपताकायाः पीतवस्त्रसादृश्यम् । एतेनात्युच्चता गृहाणां सूचिता । पीतवासस इति तद्गुणसंविज्ञानबहुव्रीहिः ॥ १०१ ॥

अत्र अर्थापत्तिः, इति केचित् । शब्दश्लेषः ॥ ९८ ॥

अत्र आलयेषु कार्य्येण सूर्य्यतापतप्तजनव्यवहारसमारोपात् समासोक्तिः, माणिक्यमयेति उदात्तम्, स्वरुचारुणयेति पताकया स्वकीयगुणत्यागेन माणिक्यगतारुणगुणग्रहणात् तद्गुणः, प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषां सङ्करः । उत्प्रेक्षालङ्कारेण गृहाणामत्युच्चता व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः । 'तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः' इति तद्गुणलक्षणम् ॥ ९९ ॥

अत्रापि पूर्ववत्समासोक्तिः, 'पिपासु' इति प्रतीयमाना क्रियोत्प्रेक्षा, स्वरुचेति लुप्तोपमा तद्गुणश्च, 'जिह्वानिभया' इति आर्थोपमा, अमलपद्मरागजमिति उदात्तञ्चेत्येतेषामलङ्काराणां

अश्रान्तश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना ।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि ॥ १०२ ॥
यदतिविमलनीलवेश्मरश्मि-भ्रमरितभाः शुचिसौधवस्त्रवल्लिः ।
अलभत शमनस्वसुः शिशुत्वं दिवसकराङ्कतले चला लुठन्ती ॥ १०३ ॥

अश्रान्तेति । यस्यानगर्य्याः प्रासादानां राजभवनानां देवभवनानां वा दुकूलवल्लिर्दीर्घत्वात् लतारूपा श्वेतक्षौमपताका अनिलान्दोलैर्वायुचालनैर्दिवि आकाशे अखेलत् क्रीड़ति स्म । उत्प्रेक्षते—किम्भूता पूर्व्वं पुरा गाधिसुतेन विश्वामित्रेण सामिघटिता अर्द्धनिर्म्मिता अनु पश्चात् ब्रह्मणः स्तुत्या मुक्ता परित्यक्ता मन्दाकिनी स्वर्गङ्गेव प्रतीयमानोत्प्रेक्षा मन्दाकिनी नु मन्दाकिनीव । नुरिवार्थे वितर्के वेति केचित् । सामिघटितत्वे गाधिसुतस्य हेतुगर्भविशेषणमाह—किम्भूतेन अश्रान्तश्रुतिपाठेन निरन्तरवेदपाठेन पूताभ्यः पवित्राभ्यो रसनाभ्यो जिह्वाभ्य-आविर्भूतेषु जातेषु भूरिषु बहुषु स्तवेषु स्तुतिषु अजिह्मोऽनलसो यो ब्रह्मणोमुखौघोमुखचतुष्टयं तेन विघ्निता सविघ्नीकृता नवस्वर्गक्रियाकेलिः नवीनस्वर्गसृष्टिरूपक्रीड़ा यस्य तादृशेन । पुरा किल त्रिशङ्कोः स्वर्गगमने इन्द्रेण निवारिते कुपितो विश्वामित्रो नवीनस्वर्गादिसृष्टिमारभ्य ब्रह्मादिभिरर्थितोऽर्द्धकृतां सृष्टिं तत्याजेति पौराणिकी वार्त्ता । सामिघटितेति 'स्वयंसामि क्तेन' इति तत्पुरुषः । 'सङ्गार्थे च प्रहृष्टार्थे सामि निन्दार्द्धयोर्मतम्' मे । शार्दूलविक्रीड़ितमिदं वृत्तम् ॥१०२॥

यदतीति । यस्यानगर्य्यां अतिविमलानि निर्मलतराणि यानि नीलवेश्मानि नीलकान्तमणिनिर्मितगृहाणि तेषां रश्मिभिः किरणैः भ्रमरिता भ्रमरवदाचरिता श्यामीकृतेत्यर्थः भा दीप्तिर्यस्यास्तादृशी शुचिः शुभ्रा सौधानां वस्त्रवल्लिः पताकापंक्तिः दिवसकरस्य सूर्य्यस्य अङ्कतले समीपाधोभागे चला वातसम्बन्धाच्चञ्चला लुठन्ती क्रीड़न्ती सती शमनस्वसुर्यमुनायाः शिशुत्वं शैशवम् अलभत प्राप्ता । बालिका यमुनेव शोभते स्मेत्यर्थः । सापि श्यामा बाल्याच्चञ्चला सूर्य्यस्य अङ्कतले क्रोड़भागे क्रीड़ति स्म । पुष्पिताग्रावृत्तमिदम् । तल्लक्षणमाह केदारभट्टः 'अयुजि नयुगरेफतो-यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति ॥ १०३ ॥

---

सङ्करः । वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १०० ॥

अत्र वड़भीपताकया अमृतद्युतिलाञ्छनस्य मिलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, आर्थोपमा चेत्यनयोः सङ्करः । उत्प्रेक्षालङ्कारः, भरतः । 'वड़भी चन्द्रशालायां गृहे सौधोर्ध्ववेश्मनि' रभसः ॥ १०१ ॥

अत्र 'नु' इति वाच्योत्प्रेक्षा, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः । समासबाहुल्यादोजो-

स्वप्राणेश्वरनर्म्महर्म्यकटकातिथ्यग्रहायोत्सुकं
पाथोदं निजकेलिसौधशिखरादारुह्य यत्कामिनी ।
साक्षादप्सरसो विमानकलितव्योमान एवाभवद्-
यन्न प्राप निमेषमभ्रतरसा यान्ती रसादध्वनि ॥ १०४ ॥
वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः ।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशागताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥ १०५ ॥

स्वप्राणेश्वरेति । यस्या नगर्य्याः कामिनी स्त्रीविशेषः विमानेन व्योमयानेन कलितम् आश्रितं नर्म्मभूमीकृतमिति प्राञ्चः व्योम आकाशं याभिस्तथाविधाः साक्षात् प्रत्यक्षदृश्यमाना अप्सरस-एव स्ववेंश्या एव अभवत् । कथमित्याह -यत् यस्मात् स्वप्राणेश्वरो निजप्रियस्तस्य नर्महर्म्यं क्रीड़ागृहं तस्य कटके मध्यदेशे आतिथ्यग्रहाय उत्सुकम् उत्कण्ठितम् अर्थात्तदभिमुखगामिन-मित्यर्थः पाथोदं मेघं निजकेलिसौधशिखरात् स्वकीयक्रीड़ागृहोपरिभागात् आरुह्य अभ्रतरसा मेघवेगेन रसात् मेघवेगजनितप्रीतेः प्रियानुरागाद्वा अध्वनि पथि यान्ती गच्छन्ती सती निमेषं निमेषोपलक्षितमपि विलम्बम् अथ च नेत्रसङ्कोचं न प्राप न प्राप्ता । स्वाभाविकसौन्दर्य्येण विमान-सदृशमेघारोहणेन आकाशगमनेन निमेषाप्राप्त्या च अप्सरस्तुल्या जातेति भावः । कटकशिखर-पदाभ्यां हर्म्याणां पर्वतसाम्यं प्रतिपाद्य अत्युच्चत्वं सूचितम् । 'हर्म्यादि धनिनां वासः' अ, 'कटकोऽस्त्री नितम्बोऽद्रेः' अ, 'कूटोऽस्त्री शिखरं शृङ्गम्' अ, 'साक्षात् प्रत्यक्षतुल्ययोः' अ, 'स्त्रियां बहुष्वप्सरसः' अ, 'व्योमयानं विमानोऽस्त्री' अ । शार्दूलविक्रीड़ितमिदं वृत्तम् ॥ १०४ ॥

वैदर्भीति । वैदर्भ्या दमयन्त्याः केलिशैले नानामणिमयकृत्रिमक्रीड़ापर्व्वते मरकतशिखरात् मरकताख्यमणिनिर्मितशृङ्गात् उत्थितैरुद्गतैः अंशवः किरणा एव दर्भास्तृणाङ्कुरास्तैः करणैः यस्या-

गुणः, गौड़ी च रीतिः । 'नु वितर्कावमानयोः । विकल्पानुनयातीते प्रश्नहेत्वपदेशयोः' मे । 'जिह्मं तु कुटिलेऽलसे' अ ॥ १०२ ॥

अत्र यमुनायाः शैशवस्यान्यत्वासम्भवेन सादृश्याक्षेपान्निदर्शनालङ्कारः, शुचिवस्त्रवल्ल्या स्वगुण-त्यागेन नीलगुणग्रहणात् तद्गुणः, भ्रमरितभा इति क्यङ्गतोपमा, दिवसकरस्याङ्कतले लुण्ठना-सम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः, वस्त्रवल्लिरिति रूपकम्, नीलवेश्मेति लोकातीत-समृद्धिवर्णनादुदात्तम्, छेकानुप्रासश्चेत्येतेषां संसृष्टिः । 'यमुना शमनस्वसा' अ ॥ १०३ ॥

अत्र कुण्डिनकामिनी-स्वर्गाप्सरसोर्भेदेऽपि अभेदाध्यवसायादतिशयोक्तिरलङ्कारश्छेकानुप्रास-

विधुकरपरिरम्भादात्मनिष्यन्दपूर्णैः
शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् ।
विफलितजलसेकप्रक्रियागौरवेण
व्यरचि स हृतचित्तस्तत्र भैमीवनेन ॥ १०६ ॥

नगर्य्यांगोग्रासप्रदानरूपं यद्व्रतं दीर्घकालानुपालनीयसङ्कल्पविषयविशेषः तज्जन्यं सुकृतं पुण्यम् अविश्रान्तं निरन्तरम् उज्जृम्भते स्म वर्द्धते स्म। कथमंशूनां गोग्रासत्वमिति विशेषणद्वयेनोपपादयति—ब्रह्माण्ड ऊर्ध्वकटाहे य आघातोऽभिघाताख्यसंयोगविशेषस्तेन भग्नः संकुचितः स्यदजोवेगजातो मदो गर्व्वो येषां तेषां भावस्तत्ता तया ह्रिया लज्जयेव धृतं कृतम् अवाङ्मुखत्वम् अधोमुखत्वं यैस्तादृशैः अतएव दिवि स्वर्गे उत्तानगायाः उत्तानगामिन्याः कस्याः सुरसुरभेर्देवगव्या न आस्यदेशागताग्रैर्न मुखप्रदेशप्राप्ताग्रभागैः अपि तु सर्व्वस्याएव आस्यदेशागताग्रैः। अन्योऽपि भग्नगर्वो लज्जयाधोमुखोभवति। स्रग्धरावृत्तमिदं, तल्लक्षणं यथा—'म्रभ्नर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्'। नगरीवर्णनं समाप्तम्॥ १०५ ॥

अथ हंसस्य दमयन्तीवनदर्शनेन हर्षाधिक्यमाह। विधुकरेति। तत्र नगर्य्यां स हंसो-भैमीवनेन दमयन्त्याः क्रीड़ावनेन रमणीयत्वात् हृतचित्तः आकृष्टमना व्यरचि विरचितः। किम्भूतेन वनेन शशिदृषद्भिश्चन्द्रकान्तोपलैरुपक्लृप्तानि निर्म्मितानि तैः अतएव विधुकरपरिरम्भात् चन्द्रकिरणसम्बन्धात् य आत्मनः स्वस्य निष्यन्दः क्षरणं तेन पूर्णैस्तरूणां वृक्षाणाम् आलवालैर्विफलितम् व्यर्थीकृतम् जलसेकप्रक्रियागौरवं जलसेचनरूपव्यापारप्रयासो यस्मिन् तादृशेन। वृक्षाणामालवालपूरणम् चन्द्रकान्तैरेव क्रियते अतोऽत्र जलसेचनप्रयासो निष्फल इति भावः। इतः प्रभृति श्लोकचतुष्टयं मालिनीवृत्तं तल्लक्षणं यथा—'ननमयययुतेयं मालिनी भोगिलोकैः' इति ॥ १०६ ॥

---

श्लेत्यनयोः संसृष्टिः। कटकपदोपन्यासेन हर्म्यस्यापि पर्वतत्वं ध्वनितमिति शब्दशक्तिमूलोवस्तुध्वनिः। पुरस्यापि स्वर्गसाम्यम् अप्सरस्तुल्यकामिनीनिवासात्। अप्सरःशब्दस्य बहुवचनान्तत्वात् एकवचनेनापि सामानाधिकरण्यमविरुद्धम्। उद्देश्यविधेययोरुद्देश्यवचनत्वमाख्यातस्य' इति अभवदित्येकवचनम्। 'विशेषस्त्वङ्गनाभीरुः कामिनी वामलोचना' अ ॥ १०४ ॥

अत्र अंशुदर्भैरिति रूपकम्, अंशुदर्भाणां ब्रह्माण्डाघाताद्यसम्बन्धेऽपि तत्सम्बन्धाभिधानादतिशयोक्तिः, ब्रह्माण्डाघातेन स्यदजगर्वस्य भग्नत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरपरातिशयोक्तिश्च, ह्रीधृतावाङ्मुखत्वैरिति प्रतीयमाना क्रियोत्प्रेक्षा, मरकतशिखरादिति लोकातीतसमृद्धिवर्णनात् उदात्तम्, छेकानुप्रासालङ्कारश्चेति संसृष्टिः। 'उत्ताना वै देवगवा वहन्ति' इति श्रुतिः। 'मदोहर्षे च गर्वे च' बलः। 'सुरभिर्गवि च स्त्रियाम्' अ ॥ १०५ ॥

अथ कनकपतत्रस्तत्र तां राजपुत्रीं सदसि सदृशभासां विस्फुरन्तीं सखीनाम्।
उडुपरिषदि मध्यस्थायिशीतांशुरेखा-नुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥ १०७ ॥
भ्रमणरयविकीर्णस्वर्णभासा खगेन क्वचन पतनयोग्यं देशमन्विष्यताधः।
मुखविधुमदसीयं सेवितुं लम्बमानः शशिपरिधिरिवोर्ध्वं मण्डलस्तेन तेने ॥१०८॥

तस्मिन् वने हंसस्य दमयन्तीदर्शनमाह। अथेति। अथानन्तरं कनकपतत्रः स्वर्णच्छदो- हंसः तत्र क्रीड़ावने तां राजपुत्रीं दमयन्तीम् अक्षिलक्षीचकार चक्षुरिन्द्रियजन्यज्ञानविषयीकृतवान् दृष्टवानित्यर्थः। किम्भूतां सदृशभासां समानकान्तीनां सखीनां वयस्यानां सदसि सभायां विस्फुरन्तीं विशेषेण शोभमानाम्। पुनः किम्भूतां उडुपरिषदि नक्षत्रसभायां मध्यस्थायिनी मध्यवर्त्तिनी या शीतांशुरेखा चन्द्ररेखा तस्या अनुकरणे सदृशीकरणे पटुः समर्था लक्ष्मीः शोभा यस्यास्तादृशीम्। यथा नक्षत्राणां मध्ये चन्द्ररेखाधिकसौन्दर्य्या, तथा सखीनां दमयन्तीति भावः। सदृशभासामिति विशेषणं तत्सखीनामप्यन्यसुन्दरीभ्यो विशिष्टसौन्दर्य्यज्ञापनार्थम्। 'तारका- प्युडु वा स्त्रियाम्' अ॥ १०७॥

तत्रास्य पतनेच्छामाह। भ्रमणेति। भ्रमणरयेण भ्रमणवेगेन विकीर्णा विक्षिप्ताः स्वर्णभासः सुवर्णकान्तयो येन तादृशेन तथा क्वचन कुत्रापि अधःप्रदेशे पतनयोग्यम् अवतरणोचितं देशम् अन्विष्यता पर्य्यालोचयता तेन खगेन हंसेन ऊर्ध्वम् ऊर्ध्वप्रदेशे मण्डलो मण्डलाकारभ्रमणं तेने कृतः अत्रोत्प्रेक्षते अदसीयं दमयन्तीसम्बन्धिनं मुखविधुं मुखचन्द्रं सेवितुं परिवेष्टितुं लम्बमानः चन्द्रं परित्यज्य अधःप्रदेशमागतः शशिपरिधिरिव चन्द्रपरिवेश इव। एतेन चन्द्रापेक्षया दमयन्ती- मुखस्य मनोज्ञत्वं सूचितम्। 'परिवेशस्तु परिधिः' अ, 'विम्बोऽस्त्री मण्डलं त्रिषु' अ ॥ १०८ ॥

---

वृक्षे जलं दीयत इति प्रक्रियामात्रं वर्ण्यते, न तेन किञ्चित्प्रयोजनम् साधितम्, चन्द्रकान्त- स्रवेणैवालबालपरिपूरणादित्यर्थः। अत्र आलबालानां चन्द्रकान्तनिष्यन्देन परिपूरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, जीः। आलबालानां चन्द्रकान्तमणिमयत्वेन लोकातीतसमृद्धिवर्णनात् उदात्तालङ्कारश्चेत्यनयोः सङ्करः ॥ १०६ ॥

अत्र उपमालङ्कारश्छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां मिथोनिरपेक्षतया संसृष्टिः। लक्ष्मीमिति- समासान्तविधेरनित्यत्वात् कबभावः ॥ १०७ ॥

नासौ मण्डलवान् खगः, किन्तु परिधिः, वर्णसाम्यादेव परिधेस्तुल्यरूपता। मण्डला- कारभ्रमणं पक्षिस्वभावस्तेन स्वभावोक्तिः, मुखविधुमिति निरङ्गं रूपकम्, शशिपरिधिरिवेति उत्प्रेक्षालङ्कारश्चेत्येतेषामङ्गाङ्गिभावरूपः सङ्करः। आद्यन्तपादयोश्छेकानुप्रासश्चेति संसृष्टिः। स्वभावोक्त्या च चन्द्रं परित्यज्य दमयन्तीमुखसेवनेन चन्द्रापेक्षया दमयन्तीमुखस्य मनोज्ञत्व- मिति व्यतिरेकालङ्कारो व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ १०८ ॥

अनुभवति शचीत्थं सा घृताचीमुखाभि-
र्न सह सहचरीभिर्नन्दनानन्दमुच्चैः ।
इति मतिरुदयासीत्पक्षिणः प्रेक्ष्य भैमीं
विपिनभुवि सखीभिः सार्द्धमारब्धखेलाम् ॥ १०९ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
द्वैतीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गोनिसर्गोज्ज्वलः ॥ ११० ॥

अस्य दमयन्त्यां शच्या अप्याधिक्यबुद्धिमाह । अनुभवतीति । विपिनभुवि उपवनभूमौ सखीभिः सार्द्धं सह आरब्धा खेला क्रीड़ा यया तादृशीं भैमीं दमयन्तीं प्रेक्ष्य दृष्ट्वा पक्षिणो· हंसस्य इति एवम्प्रकारा मतिर्बुद्धिरुदयासीत् उदिता बभूव । इति किमित्याह - सा प्रसिद्धा शची इन्द्राणी घृताचीमुखाभिर्घृताचीप्रभृतिभिरप्सरोभिः सहचरीभिः सखीभिः सह इत्थमनेन प्रकारेण दमयन्ती यथा तथेत्यर्थः उच्चैरतिशयं यथा स्यात्तथा नन्दनानन्दं नन्दननामकोपवन-विहारजनितहर्षं न अनुभवति ततोऽपीयमधिकेत्यर्थः । अत्र दमयन्त्यास्तदुपवनस्य तत्सखीनाञ्च क्रमात् शचीनन्दनघृताच्यादिभ्य आधिक्यरूपोव्यतिरेकः । केचित्तु शचीत्थं नन्दनानन्दं न अनु-भवति अपितु अनुभवत्येवेति वितर्कपरतया व्याचक्षते । प्रेक्ष्येति एककर्तृकत्वाभावात् क्त्वा-प्रत्ययानुपपत्तौ स्थितस्येत्यध्याहार्य्यम् ॥ १०९ ॥

श्रीहर्षमिति । तस्य प्रबन्धे द्वैतीयीकतया द्वितीयतया मितो गणितो निसर्गोज्ज्वलः स्वभावेनोज्ज्वलोऽयं सर्गोऽगमत् समाप्तः । अन्यत् सर्व्वं पूर्ववत् ॥ ११० ॥

इतिश्रीप्रेमचन्द्रतर्कवागीशविरचितायां नैषधटीकायामन्वयबोधिकासमाख्यायां
द्वितीयः सर्गः समाप्तः ।

---

अत्र भ्रान्तिमानलङ्कारः, सा । पूर्वार्धादुपमानादुत्तरार्धस्योपमेयस्याधिक्यवर्णनाद्व्यतिरेका-ङ्कारश्छेकानु-प्रासवृत्त्यनुप्रासौचेत्येतेषां संसृष्टिः ॥ १०९ ॥

द्वयोः पूरणो द्वितीयः, द्वितीय एव द्वैतीयिकः, स्वार्थे ष्णीकः, तस्य भावस्तत्ता तया ॥ ११० ॥

# तृतीयः सर्गः ।



आकुञ्चिताभ्यामथ पक्षतिभ्यां नभोविभागात्तरसावतीर्य ।
निवेशदेशाततधूतपक्षः पपात भूमावुपभैमि हंसः ॥ १ ॥
आकस्मिकः पक्षपुटाहतायाः क्षितेस्तदा यः स्वन उच्चचार ।
द्रागन्यविन्यस्तदृशः स तस्याः सम्भ्रान्तमन्तःकरणं चकार ॥ २ ॥

अथ हंसमुखेन दमयन्त्याः पुरस्तान्नलगुणं वर्णयिष्यन् संप्रति क्वचन पतनयोग्यं स्थानमन्विष्यताधइत्यादि पूर्वसर्गान्तेन सहैकवाक्यतार्थं हंसस्याधोनमनं वर्णयति । आकुञ्चिताभ्यामिति । अथ मण्डलीकरणानन्तरं हंसः आकुञ्चिताभ्यां संकुचिताभ्यां पक्षतिभ्यां पक्षमूलाभ्यां नभोविभागादाकाशदेशात्तरसा वेगेन अवतीर्य उपनम्य उपभैमि दमयन्तीसमीपे भूमौ पपात उपविवेश । किम्भूतः निवेशदेशे पतनस्थाने आततौ प्रसारितौ धूतौ कम्पितौ च पक्षौ येन तादृशः । पक्षिस्वभावोऽयम् । 'स्त्री पक्षतिः पक्षमूलम्' अ, 'रंहस्तरसी तु रयः स्यदः' अ । उपभैमीत्यव्ययीभावनिष्पन्नम् । अस्मिन् सर्गे इन्द्रवज्रोपेन्द्रवज्रात्मकोपजातिश्छन्दः । यदाह केदारभट्टः 'स्यादिन्द्रवज्रा यदि तौ जगौ गः,' 'उपेन्द्रवज्रा जतजास्ततोगौ' । 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति ॥ १ ॥

दमयन्तीसम्भ्रममाह । आकस्मिक इति । तदा हंसस्य पतनकाले पक्षपुटेन पक्षद्वयेनाहतायाः कृताभिघातायाः क्षितेः पृथिव्याः सकाशात् य आकस्मिकोऽचिन्त्यनिमित्तकः स्वनः शब्द उच्चचार उद्गतः । स स्वनः द्राक् झटिति अन्यत्र विन्यस्ते विक्षिप्ते दृशौ चक्षुषी यया तथाभूतायास्तस्या दमयन्त्याअन्तःकरणं मनः सम्भ्रान्तं ससम्भ्रमं चकार । शब्दस्याकस्मिकत्वादेव सम्भ्रमजनकत्वम् ॥ २

अत्र स्वभावोक्तिरलङ्कारः, सा । वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः । अथ च हंसः सूर्योऽपि निवेशदेशे ब्रह्माण्डाभ्यन्तरे पक्षतिभ्यां प्रतिपद्भ्याम् आततौ परावृत्तिस्वभावतया धूतौ पक्षौ शुक्लकृष्णौ येन तादृशः, नभोविभागाद् भूमौ अस्तसमये पततीति ध्वनिः, भरतः ॥ १ ॥

'कुतोऽयं शब्द उत्पन्न इतीतस्ततो विलोकितवतीति भावः' ना । स्वभावोक्तिः, सा । छेकानुप्रासोऽलङ्कारश्चेति संसृष्टिः, केचित् ॥ २ ॥

नेत्राणि वैदर्भसुतासखीनां विमुक्ततत्तद्विषयग्रहाणि ।
प्रापुस्तमेकं निरुपाख्यरूपं ब्रह्मेव चेतांसि यतव्रतानाम् ॥ ३ ॥
हंसं तनौ सन्निहितं चरन्तं मुनेर्मनोवृत्तिरिव स्विकायाम् ।
ग्रहीतुकामा दरिणा शयेन यत्नादसौ निश्चलतां जगाहे ॥ ४ ॥
तामिङ्गितैरप्यनुमाय माया-मयं न भैम्या वियदुत्पपात ।
तत्पाणिमात्मोपरि पातुकन्तु मोघं वितेने प्लुतलाघवेन ॥ ५ ॥

भैमीसखीनामपि हंसदर्शनमाह । नेत्राणीति । वैदर्भसुतासखीनां दमयन्तीवयस्यानां नेत्राणि चक्षूंषि विमुक्तस्त्यक्तस्तेषु तेषु विषयेषु वनशोभादिषु ग्रहः सन्निकर्षो यैस्तादृशानि सन्ति निरुपाख्यम उपाख्यातुं वक्तुमशक्यं रूपं सौन्दर्य्यं यस्य तादृशम् एकं केवलं तं हंसं प्रापुः । उपमिनोति — ब्रह्मेवेति । यथा यतव्रतानां योगिनां चेतांसि विमुक्ततत्तद्विषयग्रहाणि परित्यक्तस्रक्-चन्दनवनितादिविषयस्वीकाराणि सन्ति निरुपाख्यरूपम् अनिर्वचनीयस्वरूपम् एकमद्वितीयं ब्रह्म परमात्मानं प्राप्नुवन्ति तथेत्यर्थः । गृह्यतेऽनेनेति ग्रहः सन्निकर्षः पक्षे ग्रहणं ग्रहः स्वीकारः ॥ ३ ॥

भैम्याहंसग्रहणोद्योगमाह । हंसमिति । असौ दमयन्ती दरिणा सभयेन सकम्पेन वा शयेन पाणिना हंसं ग्रहीतुकामा धर्त्तुकामा सती स्विकायां स्वीयायां तनौ शरीरे यत्नात् निश्चलतां निस्पन्दतां जगाहे प्राप्ता । किम्भूतं सन्निहितं निकटवर्त्तिनम् अथच सता नलेन निहितं प्रेरितं तथा चरन्तम् इतस्ततो गच्छन्तं किञ्चिद्भुञ्जानं वा । अत्रोपमिनोति - मुनेर्मनोवृत्तिरिवेति यथा मुनेर्योगिनोमनोवृत्तिर्ब्रह्माकारश्चित्तपरिणामः आदरिणा सत्त्वगुणोद्रेकान्निर्मलेन आशयेन चरन्तं सर्वव्यापकम् अतएव स्विकायां तनौ सन्निहितं हंसं परमात्मानं ग्रहीतुकामा साक्षात्कर्त्तुकामा सती निश्चलतां स्थिरतां गाहते तथेत्यर्थः । 'हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मनि भेषजे' विः ॥ ४ ॥

तज्ज्ञात्वा हंसस्यापि चेष्टामाह । तामिति । अयं हंसः भैम्यास्तां न्युब्जगमनरूपां मायां कपटम् इङ्गितैश्चेष्टाभिरनुमायापि अनुमानेन ज्ञात्वापि वियदाकाशं न उत्पपात नोड्डयते स्म इयं विजनदेशं नेतव्येत्यभिप्रेत्येत्यर्थः । किन्तु प्लुतलाघवेन प्लवनशीघ्रतया आत्मोपरि पातुकं पतन्तं तत्पाणिं तस्या-भैम्या हस्तं मोघं निष्फलम् वितेने चकार । यद्यहमाकाशमुत्पतेयं तदा धारणार्थं प्रयत्नमकृत्वैव

अत्र पूर्णोपमालङ्कारः, सां । भिन्नलिङ्गेऽपि निबध्यमानो न दोषमावहति । यदुक्तं दण्डयलङ्कारे— 'न लिङ्गवचने भिन्ने न हीनाधिकतापि वा । उपमा दूषणायालं यत्रोद्वेगो न धीमताम्' सां । तत्तदिति वीप्सायां द्विर्वचनादेकशेषाभावः, ना । 'आख्याह्वे चाभिधानञ्च' अ ॥ ३ ॥

अत्र उपमालङ्कारः, सां । श्लेषोपमा, जीः । 'दरोऽस्त्रियां भये श्वभ्रे' अ । 'पञ्चशाखः शयः पाणिः' अ ॥ ४ ॥

व्यर्थीकृतं पत्ररथेन तेन तथावसाय व्यवसायमस्याः।
परस्परामर्पितहस्ततालं तत्कालमालीभिरहस्यतालम्॥ ६॥

उच्चाटनीयः करतालिकानां दानादिदानीं भवतीभिरेषः।
यान्वेति मां द्रुह्यति मह्यमेव सात्रेत्युपालम्भि तयालिवर्गः॥ ७॥

धृताल्पकोपा हसिते सखीनां छायेव भास्वन्तमभिप्रयातुः।
श्यामाथ हंसस्य करानवाप्तेर्मन्दाक्षलक्ष्या लगति स्म पश्चात्॥ ८॥

गमिष्यति तेन च मम दौत्यासिद्धिर्भवेदित्यादि विचिन्त्य तथा कृतवानिति भावः॥ ५॥

तद्दृष्ट्वा सखीनां हासमाह। व्यर्थीकृतमिति। आलीभिः सखीभिः अस्या दमयन्त्या-व्यवसायं हंसधारणोद्योगं तेन पत्ररथेन पक्षिणा तथा तेन प्लुतलाघवप्रकारेण व्यर्थीकृतं विफलीकृतम् अवसाय ज्ञात्वा परस्परामन्योऽन्यस्या अर्पितो दत्तो हस्तेषु तालस्तालिका यत्र क्रियायां तद्यथा स्यात्तथा तत्कालं तस्मिन् काले अलम् अत्यर्थम् अहस्यत हसितम् सा हसिता वा। अत्र तालं तालमिति उत्तरार्द्धे यमकम्। परस्परामिति सर्वनाम कर्मव्यतिहार इति द्विरुक्तिः निपातनात् सुट् ततः सुपोऽपुंस्यां वेति पक्षे आम्। 'पतत्पत्ररथाण्डजाः' अ॥ ६॥

सखीः प्रति दमयन्त्याः सरोषं वचनमाह। उच्चाटनीय इति। तया दमयन्त्या आलिवर्गः सखीगण इति उपालम्भि सरोषमुक्तः। इति किं भवतीभिर्युष्माभिः करतालिकानां हस्ततालानां दानात् वादनात् इदानीम् एष हंसः उच्चाटनीयश्चञ्चलीकरणीयः मया एतद्ग्रहणे यत्नः क्रियते युष्माभिस्तु चञ्चलीक्रियते इत्यर्थः अतएव अत्रासु भवतीषु मध्ये या माम् अन्वेति अनुगमिष्यति सा मह्यमेव द्रुह्यति ममानिष्टमेव करिष्यति एवकारो भिन्नक्रमः। अन्वेति द्रुह्यतीति वर्त्तमान-सामीप्ये लट्। मह्यमिति 'क्रुधद्रुहेर्ष्यासूयार्थानाम् यत्रार्थः कोपः' इति सम्प्रदानसंज्ञायां चतुर्थी॥ ७॥

भैम्याहंसानुगमनमाह। धृताल्पकोपेति। अथानन्तरं सखीनां हसिते हास्यविषये धृतः अल्पः कोपो यया तादृशी श्यामा स्त्रीविशेषो दमयन्ती हंसस्य कर्मभूतस्य या करानवाप्तिः कराभ्यामग्रहणं तस्या हेतोः मन्दाक्षेण लज्जावत्त्वेन लक्ष्या दृश्या सती सलज्जा सतीत्यर्थः हंसस्य पश्चात् लगति स्म हंसमनुययावित्यर्थः। उपमिनोति—यथा भास्वन्तं सूर्य्यम् अभिप्रयातुरभिमुखीकृत्य गच्छतो जनस्य छाया तस्य पश्चात् लगति सापि हंसस्य सूर्य्यस्य करानवाप्तेः किरणाप्राप्तेः श्यामा कृष्णा मन्दाक्षेण मन्दचक्षुषापि जनेन लक्ष्या दृश्या च भवति सूर्य्यकिरण-

---

अत्र स्वभावोक्तिः, सा। वृत्त्यनुप्रासोऽलङ्कारश्चेति संसृष्टिः, ॥ ५॥
अत्र द्वितीये पादे मध्ययमकम्, केचित्। 'आली सखी वयस्या च' अ॥ ६॥
अत्र निदर्शनालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः, केचित् तच्चिन्त्यम्॥ ७॥

शस्ता न हंसाभिमुखी पुनस्ते यात्रेति ताभिश्छलहस्यमाना ।
साह स्म नैवाशकुनीभवेन्मे भाविप्रियावेदक एष हंसः ॥ ९ ॥
हंसोऽप्यसौ हंसगतेः सुदत्याः पुरः पुरश्चारु चलन् बभासे ।
वैलक्ष्यहेतोर्गतिमेतदीया-मग्रेऽनुकृत्योपहसन्निवोच्चैः ॥ १० ॥

सम्पर्कात् मन्दनयनजनानां दृष्ट्युपघातो भवति तदसम्पर्कात्तु तैर्द्रष्टुं शक्यत इति तथोक्तम् । श्यामालक्षणं यथा—'शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला । तप्तकाञ्चनवर्णाभा सा श्यामा परिकीर्त्तिता' ॥ 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' अ ॥ ८ ॥

अथ सर्वाभिर्दमयन्त्याः शब्दच्छलेनोक्तिप्रत्युक्ती । शस्तेति । हे दमयन्ति ! ते तव पुनः हंसाभिमुखी राजहंससंमुखी अथच सूर्य्यसंमुखी यात्रा गमनम् न शस्ता न प्रशस्ता अशकुनत्वेन शास्त्रनिषिद्धत्वात् इति ताभिः सर्वाभिः छलेन शब्दच्छलेन हस्यमाना सोपहासमुच्यमाना सा दमयन्ती इति आह स्म उवाच । इति किं हे सख्यः ! एष हंसः मे मम नैव अशकुनीभवेत् अशकुनरूपो न भवतु । प्रार्थनायां लिङ् । अथ च एष शकुनः पक्षी भवेत् भवति न तु सम्मुखसूर्य्यरूपमशकुनमित्यर्थः । किम्भूतः भाविनो भविष्यतः प्रियस्य हितस्य आवेदकः सूचकः अथ च भाविनो नलरूपस्य प्रियस्य कान्तस्य कथकः । 'शकुनस्तु पुमान् पक्षिमात्रपक्षि-विशेषयोः । शुभशंसिनिमित्ते च शकुनम् स्यान्नपुंसकम्' मे ।

धारणसम्भावकम् हंसस्य मन्दगमनमाह । हंसोऽपीति । न केवलं सख्यस्तामुपहसन्ति स्म किन्तु असौ हंसोऽपि हंसस्येव गतिर्गमनम् यस्यास्तथाविधायाः सुदत्याः शोभनदन्ताया-भैम्याः पुरः पुरोऽग्रे ऽग्रे चारु अव्याकुलं यथा तथा चलन् गच्छन् सन् वैलक्ष्यहेतोर्भैम्यालज्जोत्पा-दनार्थम् एतदीयां भैमीसम्बन्धिनीं गतिम् अग्रेऽनुकृत्य सदृशीकृत्य उच्चैरतिशयेन उपहसन्निव उपहासं कुर्वन्निव बभासे शुशुभे । अन्योऽपि अन्यस्याग्रे गत्वा तद्गमनादिकमनुकृत्योपहसतीति तथोत्प्रेक्षितम् ॥ १० ॥

अत्र श्रौतोपमा, भावशबलतालङ्कारः, सां । 'बलिहस्तांशवः कराः' अ । 'छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपः' अ ॥ ८ ॥

'राजहंसाभिमुखी यात्रा शकुनरूपैव, हंसदर्शनस्य तच्छब्दश्रवणस्य च वसन्तराजेन सर्वसिद्धि-करत्वोक्तेरिति भावः । 'प्रत्यादित्यं प्रतिबुधं न गन्तव्यं शुभार्थिना' इति यात्रानिषेधात्, नचायं सूर्य्यादिः किन्तु पक्ष्येव' ना । 'अत्रापह्नुतिर्वक्रोक्तिश्चालङ्कारौ' सां । अतिशयोक्तिरिति केचित् ॥ ९ ॥

'हंसोहंसगामिनीगमनमनुकरोतीत्युचितमेव' ना । हंसगतेरिति लुप्तोपमा, सां । प्रथमार्धे लाटानुप्रासः, केचित् ॥ १० ॥

पदे पदे भाविनि भाविनी तं यथा करप्राप्यमवैति नूनम्।
तथा सखेलं चलता लतासु प्रतार्य्य तेनाचकृषे कृशाङ्गी ॥ ११ ॥
रुषा निषिद्धालिजनां यदैनां छायाद्वितीयां कलयाञ्चकार।
तदा श्रमाम्भःकणभूषिताङ्गीं स कीरवन्मानुषवागवादीत् ॥ १२ ॥
अये कियद्यावदुपैषि दूरं व्यर्थं परिश्राम्यसि वा किमित्थम्।
उदेति ते भीरपि किन्नु बाले विलोकयन्त्या न घनावनालीः ॥ १३ ॥

विशिष्य हंसचेष्टामाह। पद इति। भावः पृथमकामविकारः हंसग्रहणानुसन्धानमिति प्राञ्चः सोऽस्याविद्यत इति तादृशी दमयन्ती भाविनि भविष्यति पदे पदे पृतिचरणक्षेपे तं हंसं यथा नूनं निश्चयेन करप्राप्यं हस्तेन ग्राह्यम् अवैति उत्तरस्मिन् पदेऽवश्यमेवैनं धारयिष्यामीति यथा जानाति तथा सखेलं सलीलं यथा तथा चलता गच्छता तेन हंसेन पृतार्य्य वञ्चयित्वा कृशाङ्गी सा दमयन्ती लतासु लतागहनसमीपे आचकृषे नीता। 'निर्व्विकारात्मके चित्ते भावः पृथमविक्रिया' सा०द० ।११।

अथ निर्जनस्थां भैमीं दृष्ट्वा हंसस्य वचनमाह। रुषेति। स हंसः रुषा कोपेन निषिद्धो-निवारित आलिजनः सखीजनो यया-तादृशीम् एनां दमयन्तीं यदा छायैव स्वपृतिबिम्बमेव द्वितीया सहचरी यस्यास्तादृशीम् एकाकिनीमित्यर्थः कलयाञ्चकार ज्ञातवान् तदा कीरवत् शुकपक्षीव मानुषी वाक् यस्य स मानुषस्येव वाक् यस्येति वा तादृशः सन् श्रमाम्भःकणैर्घर्म्मजलविन्दुभि-र्भूषितमङ्गं यस्यास्तां दमयन्तीम् अवादीदुक्तवान्। यद्वा छायया कान्त्या अद्वितीयाम् असदृशीम् एनां यदा रुषा निषिद्धालिजनां कलयाञ्चकार तदावादीदिति योजना। श्रमाम्भइत्यनेन श्रान्तेयमतो-दूरमगत्वैव निवर्त्तिष्यते तदत्रैव स्थित्वा वक्तव्यमिति सूचितम्। 'कीरशुकौ समौ' अ ॥ १२ ॥

किमवादीदित्याह। अयइति। अये! हे बाले! अल्पमतिके! दमयन्ति! कियद्दूरं यावत् उपैषि उपगमिष्यसि इत्थमनेन पृकारेण व्यर्थं निरर्थकं वा किं परिश्राम्यसि परिश्रान्ता भवसि व्यर्थं पक्ष्यर्थमिति च बहवः किमर्थमिति पाठे तु कष्टकल्पना। नु! भो! घना निविड़ा वनालीर्वनपङ्क्ती-र्विलोकयन्त्याः पश्यन्त्यास्ते तव भीरपि भयमपि न उदेति नोत्पद्यते। अये इति आक्षेपसम्बोधने, यावत् पर्य्यन्तार्थे वाक्यालङ्कारे वा, किमाक्षेपे। उपैषीति वर्त्तमानसामीप्ये भविष्यति लट् ॥ १३ ॥

---

कृशाङ्गीति विरहपीड़ा सूच्यते। यमकम्। स्वभावोक्तिश्छेकानुप्रासोऽलङ्कारश्चेति संसृष्टिः, सां।११।

छायाद्वितीयामित्यनेन दूत्यावसरः सूचितः। 'भूषितपदेन श्रमविन्दूनां मुक्तासाम्यं सूचितम्' ना। उपमा, रूपकम्, सां। वृत्त्यनुप्रासालङ्कारश्चेति केचिदिति संसृष्टिः ॥ १२ ॥

'बालाया हि घनवनपङ्क्तिदर्शनेन भयेनोदेतव्यम्, तदपि तव नोदेतीत्याश्चर्य्यम्' ना। 'बाले इति सम्बोधनेनाप्रौढ़तया दूरगमनायुक्तता, अल्पेन श्रान्तिभययोग्यता च सूचिता' भ। अत्र सत्यपि भयकारणे भयाभावाद् विशेषोक्तिरलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासौचेत्येतेषां संसृष्टिः ॥ १३ ॥

वृथार्पयन्तीमपथे पदं त्वां मरुल्लसत्पल्लवपाणिकम्पैः ।
आलीव पश्य प्रतिषेधतीयं कपोतहुङ्कारगिरा वनाली ॥ १४ ॥
धार्य्यः कथंकारमहं भवत्या वियद्विहारी वसुधैकगत्या ।
अहो शिशुत्वं तव खण्डितं न स्मरस्य सख्या वयसाप्यनेन ॥ १५

वृथेति । इयं वनाली वनश्रेणी आलीव सखीव मरुता वायुना लसन् पल्लवः पाणिः करइवेति तस्य कम्पैश्चालनैः तथा कपोतानां पारावतानां या हुङ्कारगीः हुमितिशब्दस्तया च अपथे मद्ग्रहणरूपेऽसद्विधेये अथ च अमार्गे वृथा निष्फलम् यथा तथा पदं व्यवसायम् अथ च चरणम् अर्पयन्तीं कुर्व्वतीं त्वां प्रतिषेधति एतादृग्व्यापारान्निवारयति इति पश्य विलोकय । सख्यपि एतादृशीं सखीं करकम्पनेन हुङ्कारेण च निवारयति । हुङ्कारकिरेति पाठे हुङ्कारं किरतीति कृविक्षेप इत्यस्मात् इगुपान्तप्रियादेरदित्यत् स्त्रियामात् । अपथेति नञः पथो-वेत्यत् । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' अ ॥ १४ ॥

नाहं व्यर्थं परिश्राम्यामि किन्तु तव धारणार्थमित्याशङ्क्याह । धार्य्यइति । वसुधैव पृथिव्येव एका केवला गतिर्गमनाधारो यस्यास्तादृश्या भवत्या वियति आकाशे साधु विहरतीति तादृशोऽहं कथंकारं कथमिव धार्य्यः धर्त्तुं शक्यः । अहो आश्चर्य्ये सम्बोधने वा स्मरस्य कामस्य सख्या मित्रेण अनेन प्रत्यक्षविषयेण वयसा यौवनेनापि तव शिशुत्वं बालत्वं न खण्डितं नापसारितम् अज्ञत्वसत्त्वात् कथमन्यथा स्वस्या केवलं पृथिवीगामित्वं मम चाकाशविहारित्वम-विचार्यैव मद्ग्रहणलालसा भवसीति भावः । विहारीत्यनेन ममाकाशगमनम् अक्लेशसाध्यतया विहाररूपमिति सूचितम् । अथ च स्मरस्य कन्दर्पसदृशस्य नलस्य सख्या उपकारकत्वान्मित्रेण वयसा पक्षिणा मया तव शिशुत्वं कन्यात्वं न खण्डितम् अपितु खण्डितप्रायमेव । तव नलेन सह परिणयनायागतोऽस्मीति भावः । धार्य इति शक्ते लिङ्कृत्याविति कृत्यः । कथंकारमिति गतार्थात् कथमित्थमेवमन्यथाभ्य इति कथंपूर्वकृञः क्त्वाणम् ॥ १५ ॥

अत्र वनाल्यालीवेति उपमा, जी । पल्लवे पाणित्वारोपस्य हुङ्कारे वाक्यत्वारोपस्य च प्रकृत-निषेधो पयोगित्वात् परिणामालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः । उत्प्रेक्षा, भ । पल्लवपाणीति रूपकम्, जी ॥ १४ ॥

'अहं भूमौ आकाशे च गच्छामि, त्वं केवलं भूमावेव गच्छसि, अतएव मां धर्त्तुं त्वम-योग्यासीत्यर्थः' भ । अत्र अधार्यत्वस्य वसुधागतिवियद्विहारपदार्थहेतुकत्वात् पदार्थहेतुकमेकं काव्यलिङ्गम्, शैशवाखण्डनस्य पूर्ववाक्यार्थहेतुकत्वादपरं वाक्यार्थहेतुकं काव्यलिङ्गम्, जी । सत्यपि शिशुत्वखण्डनहेतौ तदभावाद् विशेषोक्तिः, अर्थापत्तिरलङ्कारश्चेत्येतेषामङ्गाङ्गिभावरूपः सङ्करः, केचित्, तच्चिन्त्यम् । अन्त्यानुप्रासश्चेति संसृष्टिः । तथा स्मरस्य स्मरतुल्यसुन्दरस्य नलस्य सख्या मित्रेण वयसा पक्षिणा मया तव इदं शिशुत्वं बालत्वं न खण्डितम्, अपितु खण्डित प्रायमेव, शीघ्रमेव मच्चेष्टया नलमिलनसम्भवादिति शब्दशक्तिमूलो वस्तुध्वनिः ॥ १५ ॥

सहस्रपत्रासनपत्रहंस-वंशस्य पत्राणि पतत्रिणः स्मः।
अस्मादृशां चाटुरसामृतानि स्वर्लोकलोकेतरदुर्लभानि ॥ १६ ॥
स्वर्गापगाहेममृणालिनीनां नालामृणालाग्रभुजो भजामः।
अन्नानुरूपां तनुरूपऋद्धिं कार्य्यं निदानाद्धि गुणानधीते ॥ १७ ॥
धातुर्नियोगादिह नैषधीयं लीलासरः सेवितुमागतेषु।
हैमेषु हंसेष्वहमेक एव भ्रमामि भूलोकविलोकनोत्कः ॥ १८ ॥

स्वपरिचयदानेनात्यन्ताधार्य्यत्वं ख्यापयति। सहस्रेति। हे दमयन्ति! वयं सहस्रपत्रं कमलमासनं यस्य तस्य ब्रह्मणः पत्राणि वाहनानि ये हंसास्तेषां वंशस्य कुलस्य पत्राणि पर्णभूतानि प्रसूतानीत्यर्थः पतत्रिणः पक्षिणः स्मः भवामः। अन्यस्यापि वंशस्य वेणोः पर्णानि भवन्ति पत्राणि पक्षभूताः सहायभूता इति प्राञ्चः। किमेतेनेत्याह—अस्मादृशां चाटूनि प्रियवचनानि तेषु ये रसाः शृङ्गारादयस्तएव अमृतानि तानि स्वर्लोकस्य स्वर्गभुवनस्य ये लोकादेवास्तेभ्य-इतरैर्मनुष्यादिभिर्दुर्लभानि न सुलभानि अतस्त्वया मद्धारणाय यत्नेन कर्त्तव्य इति भावः। 'पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः' मे। 'पत्रं स्याद्वाहने पर्णे पक्षे च शरपक्षिणोः' वि। 'लोकस्तु भुवने जने' अ ॥ १६ ॥

भवतु भवान् स्वर्गीयो हंसः सुवर्णशरीरत्वं कथमित्याशङ्क्याह। स्वर्गेति। स्वर्गापगायाः स्वर्णद्या हेममृणालिनीनां सुवर्णकमलिनीनां नाला मृणालानि च नालासम्बन्धीनि मृणालानि वा तेषामग्राणि भुञ्जत इति तादृशा वयम् अन्नानुरूपां भक्षणीयवस्तुपरिणतवीर्य्ययोग्यां तनुरूपऋद्धिं शरीरसौन्दर्य्यसमृद्धिं भजामः प्राप्नुमः। कथमिदमित्याह—हि यतः कार्य्यं घटादि कर्तृ निदानात् आदिकारणात् कपालादेः समवायिकारणात् गुणान् शौक्लादीन् अधीते प्राप्नोति कारणगुणाः कार्य्यगुणमारभन्ते इति शास्त्रकृतः। अत्र कारणपदं समवायिकारणपरम् आरभन्ते जनयन्ति। प्रकृते तु सौवर्णमृणालादिभक्षणादस्माकं सुवर्णमयत्वम्। नाला पद्मदण्डः, मृणालं विसम्, अथ च वयं नालाः नलसम्बन्धिनइत्यप्युट्टङ्कितम्। तनुरूपऋद्धिमित्यत्र ऋदलतो-रको ह्रस्व इति पाक्षिकत्वात् सन्ध्यभावः ॥ १७ ॥

यदि भवान् ब्रह्मणो वाहनं तर्हि कथं पृथिव्यामागमनम् आगमने वा किं कारणमित्यत्राह।

अमृतमपि देवैरेवोपभुज्यते, नान्यैरित्युचितम्। देवोपभोग्यत्वादात्मन आदरातिशयः सूचितः, भ। अतोवयं न तवोपभोग्याः किन्त्वनग्नराणामेव, व। कुले वंशत्वारोपः पतत्रिणि तत्पर्णत्वारोपं प्रति निमित्तम्, वंशपदञ्च श्लिष्टम् इति श्लिष्टपरम्परितरूपकम्, चाटुरसामृतानीति निरङ्गं रूपकम्, द्वितीयार्धं प्रति प्रथमार्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्छेकानुप्रासालङ्कारश्चेत्येतेषां निरपेक्षतया संसृष्टिः ॥ १६ ॥

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्चेति संसृष्टिः, जी, सा ॥ १७ ॥

विधेः कदाचिद्भ्रमणीविलासे श्रमातुरेभ्यः स्वमहत्तरेभ्यः ।
स्कन्धस्य विश्रान्तिमदान्तदादि श्राम्यामि नाविश्रमविश्वगोऽपि ॥ १९ ॥
बन्धाय दिव्ये न तिरश्चि कश्चित् पाशादिरासादितपौरुषः स्यात् ।
एकं विना मादृशि तन्नरस्य स्वर्भोगभाग्यं विरलोदयस्य ॥ २० ॥

धातुरिति । धातुर्ब्रह्मणो नियोगादादेशात् इतः परं यूयं यत्र कुत्रचित् स्थिताः श्रममपनयतेत्येवंरूपात् इह भूलोके नैषधीयं नलराजसम्बन्धि लीलासरः क्रीडातडागं सेवितुम् आश्रयितुम् आगतेषु हैमेषु सौवर्णेषु हंसेषु मध्ये एकोऽहमेव भूलोकस्य विलोकने दर्शने उत्कः उत्कण्ठितः सन् भ्रमामि चरामि भूलोकं विलोकयन् प्रसङ्गादत्रागतोऽस्मीत्यर्थः । एकस्यैव मम ग्रहणार्थमीदृक्प्रयासं करोषि नलमरसि तु मादृशा बहवो हंसास्तिष्ठन्तीति सूचितम् ॥ १८ ॥

नन्वेवञ्चेत् भूलोकपर्यटनश्रान्तस्य तव धारणं सुकरमेव कथमुक्तं धार्य्यः कथङ्कारमित्यादीत्याशङ्कायामाह । विधेरिति । हे दमयन्ति ! कदाचित् कस्मिंश्चित् समये विधेर्ब्रह्मणो भ्रमणीविलासे भ्रमणलीलायां श्रमे आतुरेभ्यो व्याकुलेभ्यः स्वमहत्तरेभ्यः निजवंश्यप्रधानहंसेभ्यः स्कन्धस्य विश्रान्तिं विश्रामम् अदां यदवधि श्रान्तानां तेषां भारमहं गृहीतवानित्यर्थः तदादि तत्प्रभृति अविश्रमं क्वचित् विश्रान्तिमकृत्वैव विश्वगोऽपि सकलभुवनगाम्यपि न श्राम्यामि न श्रान्तो भवामि । अविश्रमम् अविरतं विश्वगोऽपीति केचित् । भ्रमणीति ङनटष्टित्वादल्पार्थत्वाद्वा स्त्रियामी ॥ १९ ॥

धारणोपायपाशादिनाप्यधार्य्यत्वप्रतिपादनपुरःसरं प्रकृतमनुसरन्नाह । बन्धायेति । दिव्ये स्वर्गीये तिरश्चि पक्षिविशेषे मादृशि मद्विधे जने कश्चित् पाशादिः पशुबन्धनोपायरज्ज्वादिः बन्धाय बन्धनाय आसादितं प्राप्तं पौरुषं सामर्थ्यं येन तादृशो न स्यात् दिव्यत्वान्मादृशं बन्धुमशक्त इत्यर्थः । किन्त्वयं विशेषः विरलोदयस्य विरलजन्मनः क्वाचित्कस्येत्यर्थः नरस्य मनुष्यस्य तत् प्रसिद्धम् एकमसाधारणं स्वर्भोगभाग्यं स्वर्गभोगजनकमदृष्टं विना । यो नरोऽपि भूम्यां स्वर्गभोगं करोति तस्यैव वयं वश्या इति भावः । एतेन मादृशदिव्यपक्षिदर्शनादिजन्यसुखानुभवः पुण्यातिशयसाध्य इति सूचितम् । एवंविधोजनः कश्चन न सर्व्व इत्यर्थः । अथ च विगतो रोरेफो-

---

सकलस्वर्गमर्त्यसत्पुरुषविज्ञातोऽहमित्यन्तर्गतम्, भ । यमकवृत्त्यनुप्रासयोः संसृष्टिः ॥ १८ ॥

तेषां कृपया, तत्सन्तुष्टविधिदत्तवरेण वा इत्यर्थादिति, भ । अत्र विधिदत्तवरः तेषां कृपा वा श्रमाभावं प्रति हेतुरिति काव्यलिङ्गम्, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः । 'स्वो-ज्ञातावात्मनि' अ ॥ १९ ॥

पाशः पक्षिधारणरज्जुः, 'फांद' इति ख्यातः । आदिना ससनल्यादिग्रहणम् । नरस्येति जातावेकत्वम्, निर्धारे षष्ठी, नराणां मध्ये इत्यर्थः । नलपक्षे सम्बन्धे षष्ठी, भ । विरलोदयस्येति

इष्टेन पूर्त्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्त्याः।
महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति ॥ २१ ॥
सुवर्णशैलादवतीर्य्य तूर्णं स्वर्वाहिणीवारिकणावकीर्णैः।
तं वीजयामः स्मरकेलिकाले पक्षैर्नृपं चामरबद्धसख्यैः ॥ २२ ॥

यत्र स विरः लस्य लकारस्य उदय आविर्भावो यत्र स लोदयः विरश्चासौ लोदयश्चेति कर्म्मधारयः तादृशस्य नरस्य नलस्येत्यर्थः। नलस्यैव तदेकं स्वर्भोगभाग्यमस्ति अतस्तस्यैव वयं वश्या इत्यर्थः। एतेन त्वं यदि नलपत्नी भवेस्तदैव तव धार्य्या भवेयं नान्यथेति ध्वनितम्। विगतो रो विरस्तस्य स्थाने लस्योदयो यत्रेति प्राञ्चः ॥ २० ॥

नलस्य स्वर्भोगभाग्यमेव कुत इत्याह। इष्टेनेति। अमर्त्त्या देवा इष्टेन यागादिना पूर्तेन खातादिना च वश्या नलं विना तथाविधेष्टादीनि न केनापि कृतानीति तस्यैव वशीभूताः सन्तः अत्रापि अस्यां भूम्यामपि अस्मिन् मानवजन्मन्यपि वा नलस्य स्वर्भोगं स्वर्गीयोपभोगं सृजन्ति जनयन्ति। ननु कथं मानुषस्य स्वर्गीयोपभोगसम्भव इत्याशंक्याह—यतः महीरुहा-अचेतना वृक्षाअपि दोहदसेकयोर्धूपविशेषजलसेचनयोः शक्तेः सामर्थ्यादाकालिकम् अन्यकाल-भवं कोरकं कलिकाम् उपलक्षणात् फलादिकञ्च उद्गिरन्ति कालान्तरेऽपि प्रकटयन्ति। स्वर्गीयो-द्याने हि युगपदृतुषट्कावस्थानात् सर्व्वदैव सर्व्वाणि फलपुष्पादीनि जायन्ते अत्रापि तथेत्यविशेषः। तथा वृक्षा अपि इष्टेन दोहदेन पूर्तेन खातेनालवालरूपेण नलाधीनाः सन्त आकालिकं कोरक-मुद्गिरन्तीत्यपि बोध्यम्। 'अथ क्रतुकर्मेष्टम्' अ, 'पूर्त्तं खातादिकर्म' अ ॥ २१ ॥

वयमपि स्वर्गीयजनमिव तं सेवामहे इत्याह। सुवर्णेति। वयं सुवर्णशैलात् सुमेरोस्तूर्णं शीघ्रम् अवतीर्य्य उपनम्य स्वर्व्वाहिण्या मन्दाकिन्या वारिकणैर्जललवैरवकीर्णाः सिक्तास्तैः पक्षैः करणैः स्मरकेलिकाले सुरतसमये तं नृपं नलं वीजयामः पक्षवातेन तस्य सुरतश्रममपनयाम-इत्यर्थः। किम्भूतैः पक्षैः चामरेण सह बद्धं कृतं सख्यं यैः तादृशैः स्वप्रभववायुद्वारा श्रमापनयनरूपसमानधर्मवत्त्वाच्चामरसदृशैरित्यर्थः। यद्यपीदं सर्वं मिथ्यैव तथाप्येतद्वक्तुर्हंसस्य

---

श्लेषः, दिव्यत्वमेवाबन्ध्यत्वे हेतुरिति काव्यलिङ्गम्, छेकानुप्रासालङ्कारश्चेति संसृष्टिः ॥ २० ॥

'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते। अन्तर्वेद्यां च यद्दानमिष्टं धीराः प्रचक्षते' भ। 'वापीकूपतडागादिदेवतायतनानि च। अन्नप्रदानमावापः पूर्तमार्य्याः प्रचक्षते' इति स्मृतिः, भ। अत्र सृजन्त्युद्गिरन्तीति क्रिययोरेकार्थत्वं स्पष्टमेव, तथाच भिन्नतया निर्देशात् प्रतिवस्तूपमा। अर्थान्तरन्यासोऽलङ्कारः, भ। दृष्टान्तालङ्कारः, जी, सा ॥ २१ ॥

चामरस्य शुक्लत्वेन सुवर्णपक्षैरसादृश्यं नाशङ्कनीयम्, पीतचामरस्य राजचिह्नत्वेन विवक्षितत्वात्, भ। तूर्णमित्यनेन सेवाधर्मः सूचितः, ना। अत्र तथाविधैः पक्षैर्वीजनस्यासम्बन्धेऽपि तत्सम्ब-

क्रियेत चेत्साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया।
या स्वौजसां साधयितुं विलासै-स्तावत् क्षमा नाम पदं बहु स्यात् ॥ २३ ॥

न कश्चिद्दोषः तदानीमस्य विवाहार्थमुद्यतत्वात्। उक्तञ्च महाभारते ;'न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्व्वधनापहारे पञ्चानृतान्याहुरपातकानि' इति, एवमन्यत्रापि ज्ञेयम् ॥ २२ ॥

अथ दमयन्तीं विलोभयितुमष्टादशभिः श्लोकैर्नलं प्रशंसन् सम्प्रति तस्य साधूनामग्रगण्यत्वमाह। क्रियेतेति। अत्र के के साधवः सन्तीति साधूनां विभक्त्या विभागेन चिन्ता विचारणा विभक्तेश्चिन्ता जिज्ञासा वा चेद्यदि क्रियेत जनैरिति शेषः तदा सा नलरूपा व्यक्तिर्जनः प्रथमाभिधेया आदावुल्लेख्या सर्व्वसाधुभ्योऽभ्यर्हितत्वात् साधुविचारणायां हि प्रथममुत्कृष्टतममुल्लिखन्ति पश्चादुत्कृष्टतरं तत-उत्कृष्टमेवं क्रमः। सा का या व्यक्तिः स्वौजसां निजतेजसां विलासैः प्रभावैः तावद्बहु समस्तं पदम् अर्थात् शत्रूणां स्थानं वस्तु वा साधयितुम् आयत्तीकर्त्तुं क्षमा समर्था स्यात् भवेत् नाम सम्भावनायाम्। यद्वा नमनं नामः स न विद्यते येषां ते अनामास्तेषाम् अप्रणतानां शत्रूणां बहु असंख्यातं पदं स्थानं तावत् साकल्येन साधयितुम् क्षमा भवेत् एतेन नले सामाख्यमुपायं विना उपायान्तरं नास्तीति सूचितम्। बहुरिति सविसर्गपाठे तु तावत् सकलं क्षमानामपदं पृथिवीसंज्ञकपदं साधयितुम् एकापि बहुरनेकधा स्यादित्यर्थः। अथ च साधुविभक्तीनां चिन्ता सप्तसु विभक्तिषु मध्ये का साध्वी विभक्तिरिति विचारणा चेद्यदि क्रियेत तदा सा व्यक्तिः प्रथमाभिधेया प्रथमेति अभिधेयं नाम यस्याः सा प्रथमा विभक्तिरेव साध्वीत्यर्थः। साधुत्व हेतुमाह--या प्रथमा विभक्तिः स्वौजसां स्वघटकीभूतानां सुऔजस् इति त्रयाणां विलासैः विसर्गादि-रूपेण परिणामैः तावद्बहु अनेकं नाम प्रातिपदिकं पदं सुबन्तं साधयितुं कर्त्तुं क्षमा समर्था स्यात्। संबुद्धौ सर्व्वस्मिन्नुक्तकारके सर्व्वस्मिन्नामनि च प्रथमाया एव विधानात् अन्यविभक्तिभ्यो-ऽस्याः सम्यक्त्वम्, यथा च सूत्रं—'सम्बुद्ध्युक्तात् सु औ जसः' इति। व्यक्तिरिति व्यज्यते द्योत्यते एकत्वादिप्रातिपदिकार्थोऽनयेति व्यक्तिः यदुक्तं 'प्रकृत्यर्थः प्रत्ययेनानूद्यते केवलाप्रयोगि-त्वात्' इति। अथवा यदि साधुविभक्तीनां चिन्ता विचारः क्रियेत तदा या व्यक्तिः स्वौजसां मध्ये प्रथमा सुलक्षणा विभक्तिः सैव अभिधेया सम्यक्तया वक्तव्या यतो विलासैः एकत्वादि-निमित्तमनपेक्ष्यापि सर्व्वत्र सद्भावैस्तावद्बहु नाम पदं साधयितुं क्षमा स्यात् औप्रभृतिविभक्त्योर्हि तत्तन्निमित्तीभूतमर्थं विना न विधीयन्ते सुस्तु पदत्वनिष्पादनार्थमपि क्रियते। उक्तञ्च— 'लिङ्गसंख्याविनिर्म्मुक्तात् सुः पदत्वार्थमव्ययात्' इति ॥ २३ ॥

---

न्धोक्तेरतिशयोक्तिः, चामरबद्धसख्यैरिति आर्थोपमालङ्कारश्चेत्यनयोः संसृष्टिः ॥ २२ ॥

अत्र नले श्लेषेण प्रथमाविभक्तेः व्यवहारारोपणात् समासोक्तिः, सा। प्रथमार्धगतवाक्यार्थं प्रति उत्तरार्धगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोः सङ्करः, केचित।

राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयैव राज्यम्।
भुङ्क्ते श्रितश्रोत्रियसात्कृतश्रीः पूर्व्वं त्वहो शेषमशेषमन्त्यम्॥ २४॥
दारिद्र्यदारिद्र्यविणौघवर्षैरमोघमेघव्रतमर्थिसार्थे।
सन्तुष्टमिष्टानि तमिष्टदेवं नाथन्ति के नाम न लोकनाथम्॥ २५॥

तस्य यागशीलत्वं सार्व्वभौमत्वञ्चाह। राजेति। श्रितश्रोत्रियसात् आश्रितच्छान्दसजनाधीनदेया कृता श्रीः सम्पत्तिर्येन तादृशः स यज्वा विधिनेष्टवान् राजा नलः अध्वरे यज्ञे यदाज्यं घृतं तस्योपमयैव साम्येनैव राज्यं विबुधव्रजत्रा कृत्वा विबुधानाम् पण्डितानाम् अथ च देवानां व्रजः समूहस्तदधीनं देयं सम्पाद्य भुङ्क्ते उपभुङ्क्ते। यथा घृतं यज्ञे देवेभ्यो दत्त्वा पश्चाद्भुङ्क्ते तथा राज्यमपि आदौ ब्राह्मणेभ्यो दत्त्वा भुङ्क्त इत्यर्थः। किन्त्वयं विशेषः पूर्व्वं श्लोकोक्तक्रमापेक्षया प्रथमम् आज्यं शेषं यागादवशिष्टं भुङ्क्ते अन्त्यं राज्यम् अशेषं सकलं भुङ्क्ते अतएव अहो आश्चर्य्यमिदम्। यदादौ भुज्यते तदशेषं शेषेतिसंज्ञकं न भवति यत्तु अन्ते भुज्यते तत् शेषमित्युच्यते लोकैः अत्र तु तद्विपरीतमित्याश्चर्य्यम्। 'यज्वा तु विधिनेष्टवान्' अ। 'विबुधः पण्डिते देवे' वि॥ २४॥

अस्य दातृत्वातिशयमाह। दारिद्र्येति। के नाम जनास्तं लोकनाथं राजानं नलम् इष्टानि ईप्सितानि धनादीनि न नाथन्ति न याचन्ते अपि तु सर्व्वएव। याच्ञायां कारणभूतानि विशेषणान्याह किम्भूतं दारिद्र्यदारी दरिद्रत्वविनाशको यो द्रविणौघो धनसमूहस्तस्य वर्षैस्त्यागैः करणैः अर्थिसार्थे याचकसमूहे अमोघं सफलं मेघस्येव व्रतं नियमः स्वभावो वा यस्य तादृशम् यथा मेघा जलवर्षैः सर्व्वान् जनान् सुखयन्ति तथा धनवर्षैरयमपि सर्व्वानर्थिनः सुखयति न तु विद्वत्त्वादिगुणविचारं करोति। तथा सन्तुष्टं सर्वदा सन्तोषयुक्तं न तु इतरवदान्यवदविरतयाचकयाचनेन विरक्तं तथा इष्टाः पूजिता देवा येन इष्टाः प्रिया देवा यस्येति वा तादृशम्। इष्टः प्रजानां हितो देवो राजा चेति वा। अथ च सन्तुष्टम् इष्टदेवं लोकनाथं

---

पाणिनीयादौ प्रथमैकवचनं सुरिति तद्दर्शनादयं श्लेषः, भ। अत्राभिधायाः प्रकृतार्थमात्रनियन्त्रितत्वाल्लक्षणायाश्चानुपपत्त्यभावेनाभावात् अप्रकृतार्थप्रतीतिर्ध्वनिरेव, जी॥ २३॥

'जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते' इति स्मृतिः, भ। अत्र अध्वराज्योपमयेति आर्थोपमा। साम्येऽपि विशेषात् व्यतिरेकालङ्कारः, तु शब्दो व्यतिरेकद्योतकः। अथ च यत्पूर्वं तत्कथं शेषं, यच्चान्त्यं तत् कथमशेषमिति विरोधाभासः, पाठक्रमेणैवात्र पूर्वान्त्यता, भ। उत्प्रेक्षा, सा। वृत्त्यनुप्रासश्छेकानुप्रासालङ्कारश्चेत्येतेषां संसृष्टिः॥ २४॥

अत्र मेघव्रतमिति लुप्तोपमा, सा। अर्थापत्तिः, केचित्। वृत्त्यनुप्रासश्छेकानुप्रासालङ्कारश्चेति

अस्मत् किल श्रोत्रसुधां विधाय रम्भा चिरम्भामतुलां नलस्य।
तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा ॥ २६ ॥
स्वर्लोकमस्माभिरितः प्रयातैः केलीषु तद्गानगुणान्निपीय।
हाहेति गायन् यदशोचि तेन नाम्नैव हाहा हरिगायनोऽभूत् ॥ २७ ॥

नारायणं के जना इष्टान् वरान् न याचन्ते। अत्र नाथेर्याचनार्थकत्वेन दुहादित्वाद्द्विकर्म्मकत्वम् ॥ २५ ॥

अस्य रूपवत्त्वातिशयमाह। अस्मदिति। सा प्रसिद्धा देवाङ्गनाविशेषो वा रम्भा नलस्य अतुलां लोकत्रयेऽप्यनुपमां भां कान्तिम् अस्मत्सकाशात् चिरं श्रोत्रसुधां विधाय कर्णामृतं कृत्वा बहुकालं सादरं श्रुत्वेत्यर्थः तत्र नले अनुरक्ता जातानुरागा सती तं नलम् अनाप्य किल अप्राप्येव तन्नामगन्धान्नलनामसम्बन्धात् नलकूबरं कुबेरपुत्रं भेजे प्राप। अन्योऽपि ईप्सितं वस्त्वप्राप्य किञ्चित्साधर्म्म्येण तत्सदृशमन्यदपि वस्तु अगत्या गृह्णाति। 'नारीषु रम्भा पुरुषेषु विष्णुः' इति सर्व्वयोषिद्भ्य उत्तमत्वेन रम्भा प्रसिद्धा। सापि नलं न प्राप्ता, अतो नलः कीदृक् सुन्दर इति विवेचनीयमिति भावः। अस्मदिति पञ्चमी बहुवचनान्तम्। 'रम्भा त्रिदशभामिन्यां कदल्याञ्च' हे। 'गन्धोगन्धक आमोदे लेशे सम्बन्धगर्वयोः' वि ॥ २६ ॥

अस्य गानलक्षणगुणवत्त्वमाह। स्वर्लोकमिति। केलीषु क्रीड़ासु तस्य नलस्य गानलक्षणान् गुणान् गानस्य गुणान् माधुर्य्यादीन् वा निपीय श्रुत्वा इतो मर्त्यलोकात् स्वर्लोकं प्रयातैर्गतैरस्माभिः कर्तृभिः गायन् गानं कुर्वन् हरिगायन इन्द्रस्य गायनो गन्धर्वविशेषो हाहेति यदशोचि हा कष्टमिति यन्निन्दितः तेनैव हेतुना स हरिगायनो नाम्ना हाहा अभूत् ततः प्रभृति हाहेति नाम्ना स जनैरुच्यत इत्यर्थः। 'हाहा हूहूश्चैवमाद्या गन्धर्व्वास्त्रिदिवौकसाम्' अ ॥ २ ॥

---

संसृष्टिः। अथ चाद्यापि भुवननाथमिष्टदेवं प्रसन्नमीप्सितानि याचत एवेति (नलस्य नारायणतुल्यता व्यज्यत इति) वस्तुना वस्तुध्वनिः, व ॥ २५ ॥

नामगन्ध एव भजने हेतुः, नत्वनुरागः। अस्मदिति वयमेतादृशा हंसा इति भावः, अतो-बहुवचनम्, भ। अत्र तथाविधभजनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, रूपकालङ्कारश्चानयोः सङ्करः। स च वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते, भ। यमकमिति वहवः। अनाप्येति आङ्पूर्वादाप्नोतेः क्त्वाचो यप् पश्चान्नञ्योगः, भ ॥ २६ ॥

अत्र तथाविधशोकनिमित्तासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तया च गन्धर्वगीतादपि नलस्य गीतमुत्कृष्टमिति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः, जी। प्रतीयमानोत्प्रेक्षा, इवार्थस्य गमग्रमाणत्वादिति, भ ॥ २७ ॥

शृण्वन् सदारस्तदुदारभावं हृष्यन्मुहुर्लोम पुलोमजायाः।
पुण्येन नालोकत लोकपालः प्रमोदबाष्पावृतनेत्रमालः॥ २८॥
सापीश्वरे शृण्वति तद्गुणौघान् प्रसह्य चेतोहरतोऽर्द्धशम्भुः।
अभूदपर्णाङ्गुलिरुद्धकर्णा कदा न कण्डूयनकैतवेन॥ २९॥

का कथा मर्त्ययोषितां देवीनामपि तद्गुणान् श्रुत्वा विकारो जायत इति श्लोकचतुष्टयेनाह। शृण्वन्निति। लोकपाल इन्द्रः सदारः सस्त्रीको भूत्वा तस्य नलस्य उदारभावम् औदार्य्यं शत्रुमित्रसमतारूपनायकगुणं शृण्वन् आकर्णयन् सन् पुलोमजायाः शच्याः मुहुर्वारं वारं हृष्यत् रोम पुण्येन अर्थात्तस्याः शुभादृष्टेन नालोकत न दृष्टवान्। अदर्शने हेतुगर्भविशेषणमाह – किम्भूतः प्रमोदवाष्पै रानन्दाश्रुभिरावृता परिपूर्णा नेत्राणां चक्षुषां माला समूहो यस्य सः। यदि परपुरुषगुणं श्रुत्वा शच्याजातं रोमाञ्चमिन्द्रोऽद्रक्ष्यत्तदा मानसिकव्यभिचारेणास्या असतीत्वात् परित्यागमकरिष्यत्। अतोयददर्शनं तत्र शच्या एव पुण्यं बलवदिति भावः। उदारभावं दातृत्वमिति बहवः, उदारभावं दाक्षिण्यमित्यपि केचित्। 'शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी। ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः' सां दं, 'औदार्य्यं शत्रुमित्रयोः समता' सां दं। 'उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत्' मे॥ २८॥

सापीति। ईश्वरे शिवे प्रसह्य बलात्कारेण चेतोहरतो मनोहारिणस्तस्य नलस्य गुणौघान् शोभाविलासादिमात्त्विकनायकगुणसमूहान् शृण्वति आकर्णयति सति सापि पातिव्रत्येन प्रसिद्धा अपर्णापि पार्व्वत्यपि कण्डूयनकैतवेन कण्डूतिव्याजेन अङ्गुल्या रुद्धः कर्णो यया तादृशी कदा न अभूत् अपितु सर्व्वदैव। तथाविधगुणश्रवणेन मानसव्यभिचारं सम्भाव्य पातिव्रत्यभङ्गभिया तदश्रवणार्थमङ्गुलिरुद्धकर्णा कदा नाभूदित्यर्थः। ननु नलगुणवर्णनप्रस्तावे कथमन्यत्र न गच्छतीत्याशङ्क्य हेतुगर्भविशेषणमाह किम्भूता अर्द्धं शरीरार्द्धं शम्भुर्यस्याः सा शम्भुं विहायान्यत्र गमनाभावात् सुतरां पातिव्रत्यरक्षणाय कर्णरोधमेव चकारेति भावः। अपर्णेति सार्थकं पदं यया शम्भुप्राप्त्यर्थं तपसि गलितपर्णभोजनमपि परित्यक्तं सापि एवं करोतीति। अथ च कर्णकण्डूयनरूपं मोट्टायितं चकार। 'तद्भावभाविते चित्ते वल्लभस्य कथादिषु। मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्' सां दं॥ २९॥

---

अदर्शने हेतुद्वयम् वाष्पैर्नेत्रनिमीलनत्वम्, तस्याः पुण्यञ्च, ना। अतोऽत्र अदर्शनं प्रति पुण्येनेति प्रमोदवाष्पेत्यादिपदयोरर्थस्य च हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, इन्द्राण्यारोमाञ्चासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिश्चेत्यनयोः सङ्करः। इन्द्राण्या भावोदयाद्भावोदयालङ्कारोयमकद्वयमन्त्यानुप्रासश्चेति समुदायसंसृष्टिः॥ २८॥

अत्रोत्पन्नाभिलाषस्य निगूहनाद्व्याजोक्तिः, सा। अङ्गुलिरुद्धकर्णत्वासम्बन्धेपि तत्सम्बन्धोक्तेः तिअशयोक्तिश्चेत्यनयोरेकाश्रयानुप्रवेशेन सङ्करः। अर्थापत्तिः केचित्, छेकानुप्रासश्चेति संसृष्टिः।२९।

अलं सजन् धर्म्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम् ।
तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडः स वक्राम् ॥ ३० ॥
श्रियस्तदालिङ्गनभूर्न्न भूता व्रतक्षतिः कापि पतिव्रतायाः ।
समस्तभूतात्मतया न भूतं तद्भर्त्तुरीर्ष्याकलुषाणुनापि ॥ ३१ ॥

अलमिति । विधाता ब्रह्मा धर्म्मविधौ समाध्यादिधर्मकर्मणि सजन् आसक्तः सन् मौनस्य मिषेण व्याजेन वाणीम् अलं व्यर्थं रुणद्धि आवृणोति । वाणी वहिर्गता सती पुरुषान्तरं भजेदित्याशङ्कया तस्या वहिर्गमननिवारणमेव मौनव्याजेन करोति तत्तु व्यर्थमेवेत्यर्थः । वैयर्थ्यमेवाह –वेदजड़ो वेदपाठेष्वेवाकुलीकृतहृदयः अथ च अनवरतवेदपाठेन वैषयिकव्यापारानभिज्ञः स विधिः तत्कण्ठं नलकण्ठम् आलिङ्ग्य आश्लिष्य रसस्य तृप्तां शृङ्गारादिरसेन पूर्णाम् अथ च शृङ्गारेण प्रीतां वक्रां वक्रोक्तिरूपाम् अथ च परनायकाश्रयणात् कुटिलां तां वाणीं न वेद न जानाति । निरुद्धापि कदा स्वकण्ठान्निर्गत्य नलकण्ठमालिङ्गितवतीति न ज्ञातवानिति भावः । नले उपनायकस्य विधातरि स्वनायकस्य वाण्याञ्च परगामिण्याव्यवहारारोपात् समासोक्तिरियम् । रसस्येति तृप्त्यर्थस्य चेति करणे षष्ठी ॥ ३० ॥

श्रियइति । पतिव्रतायाः मनोवाक्कायकर्म्मभिः पत्यव्यभिचारिण्याः श्रियो लक्ष्म्याः शोभाच्छलेन राज्यलक्ष्मीच्छलेन वा तदालिङ्गनात् नलालिङ्गनाद्भूरुत्पत्तिर्यस्यास्तादृशी कापि व्रतक्षतिः पातिव्रत्यहानिर्न भूता न जाता तथा तस्या लक्ष्म्या भर्त्तुर्विष्णोः ईर्ष्यया स्वपत्न्याः परनायकालिङ्गनदर्शनासहिष्णुत्वरूपया यत् कलुषं कालुष्यं तस्य अणुनापि लेशेनापि न भूतं न जातम् । उभयत्र हेतुमाह -समस्तभूतात्मतया विष्णोः सर्व्वभूतस्वरूपत्वेन नलोऽपि विष्णुरेव अतस्तदालिङ्गनेन लक्ष्म्याः पतिव्रतात्वभङ्गो विष्णोर्व्वा ईर्ष्याकालुष्यं नाभूदित्यर्थः । भूतेति

---

शृङ्गारादियुक्तां वक्रोक्तिं नल एव जानाति, नान्यः, ना । अत्र प्रस्तुतवाग्देवीकथनादप्रस्तुतवर्णात्मकवाणीवृत्तान्तप्रतीतेः प्रागुक्तरीत्या ध्वनिरेव, जी । प्रकृतधर्मात्मकमौनस्यापह्नवेनाप्रकृतवाणीरोधस्थापनादपह्नुतिः, पूर्वार्धं प्रति उत्तरार्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेत्येतेषां मिथोनिरपेक्षयाऽवस्थानात् संसृष्टिः । धर्मक्रियोचितमौनं वाण्यानलार्थवहिर्गमननिरोधकत्वेनोत्प्रेक्षितमिति, भ । अन्यापि वक्रा यज्ञधर्मशीलेन निरुद्धापि पुरुषान्तरेऽनुरक्ता भवति, न ज्ञायते' इति ध्वनिः, भ ॥ ३० ॥

'एक एव हि भूतात्मा भूते भूते व्यवस्थितः' इति श्रुतेः श्रीपतेर्भगवतो विश्वमूर्तित्वात् लक्ष्म्याः पतिव्रतात्वभङ्गोनाभूत् । तस्यापि ईर्ष्या नाभूदिति वाक्यार्थः, भ । नलः सदा कान्तिसम्पत्तियुक्त इति भावः, ना । अत्र व्रतक्षत्यभावं प्रति ईर्ष्याकालुष्यराहित्यं प्रति च समस्तभूतात्मतयेत्यस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गद्वयम्, मा । लाटानुप्रास इति केचित् । अतिशयोक्तिः,

धिक् तं विधेः पाणिमजातलज्जं निर्म्मीति यः पर्व्वणि पूर्णमिन्दुम् ।
मन्ये स विज्ञः स्मृततन्मुखश्रीः कृतार्द्धमौज्झद्भवमूर्ध्नि यस्तम् ॥ ३२ ॥
निलीयते ह्रीविधुरः स्वजैत्रं श्रुत्वा विधुस्तस्य मुखं मुखान्नः ।
सूरे समुद्रस्य कदापि पूरे कदाचिदभ्रभ्रमदभ्रगर्भे ॥ ३३ ॥

भौतिकाद्युपलक्षणं न तु वियदादिभूतपञ्चकमात्रपरं, तथाच—'सर्वं विष्णुमयं जगत्' इति श्रुतिः। यद्वा समस्तभूतानाम् आत्मा समस्तभूतात्मा तस्य भावस्तत्ता तया । तथा च श्रूयते—'एक एव हि भूतात्मा भूते भूते व्यवस्थितः' इति ॥ ३१ ॥

अथ नलस्य मुखादिवर्णनेन भैमीं विलोभयति । धिगिति । विधेर्ब्रह्मणो यः पाणिर्हस्तः स्मृता तस्य नलस्य मुखश्रीर्मुखशोभा येन तादृशः सन्नपि पर्वणि पूर्णिमायाम् इन्दुं चन्द्रं पूर्णं निर्म्मीति रचयति अतएव अजातलज्जं निर्लज्जं तं पाणिं धिक् नलानने सत्यपि यः पर्वणि चन्द्रं पूर्णं करोति स निर्लज्जत्वान्निन्द्य एवेत्यर्थः । स तु विधेः पाणिर्विज्ञः कर्त्तव्याकर्त्तव्यविवेचकः स कः यः स्मृततन्मुखश्रीः सन् कृतं निर्मितम् अर्द्धं यस्य तथाविधमपि तं चन्द्रं भवमूर्ध्नि हरमस्तके औज्झत् त्यक्तवान् इत्यहं मन्ये । यः प्रारब्धमपि तत उत्तमस्यान्यस्य स्मरणात् त्यजति स विज्ञ एवेति भावः । युक्तश्च हरमूर्द्धनि त्यागस्तस्य जटिलत्वेन पिधानयोग्यत्वात् । चन्द्रादप्यतिरमणीयं तस्य मुखमिति पर्य्यवसितोऽर्थः । अतथाकर्त्रोर्हस्तयोस्तथाकर्तृत्वेन सम्भाव्यमानत्वान्मन्ये इत्यस्य योगाच्च वाच्योत्प्रेक्षेयम् । स्मृततन्मुखश्रीरिति काकाक्षिगोलकन्यायेनोभयत्र सम्बध्यते ॥ ३२ ॥

निलीयत इति। विधुश्चन्द्रः नोऽस्माकं मुखात् तस्य नलस्य मुखं स्वजैत्रं स्वस्य जेतृ श्रुत्वा शाब्दबोधविषयीकृत्य ह्रीविधुरो लज्जया विकलः सन् कदाचित् अमावस्यायां सूरे

---

वृत्त्यनुप्रासः, इति संसृष्टिः। अत्र श्लोकचतुष्टये महादेवीनाम् सतीशिरोमणीनां शच्यादीनामितररमणीनामिव चित्तचाञ्चल्यवर्णनेन नलस्य सौन्दर्यातिशये तात्पर्यान्नानौचित्यदोषः, जी ॥ ३१ ॥

पूर्णकलमेककलं च चन्द्रं यद्यप्येक एव ब्रह्मणः पाणिर्निर्मीति, तथापि कार्यभेदान्मूर्खत्वं विज्ञत्वं च कालभेदादुपचर्य्यते, ना। अत्रापि पूर्वश्लोकवत् धिगिति पदं प्रति अजातलजमिति पदार्थः, उज्झनं प्रतिच स्मृतेत्यादि पदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गद्वयम्, द्वितीयपादार्थं प्रति च लज्जाभावस्य हेतुत्वकथनात् काव्यलिङ्गान्तरम्, नलमुखस्मरणेन चन्द्रत्यागासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेति सङ्करः । तेन सङ्करेण च पूर्णचन्द्रादप्यतिरमणीयं नलमुखमिति व्यतिरेकालङ्कारो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः, केचित्। अत्र प्रतीपप्रदीपावलङ्कारौ, सा ॥ ३२ ॥

अत्र विधौ लज्जाशीललोकव्यवहारारोपात् समासोक्तिः, एकस्य विधोः सूर्याद्यनेकस्थान-

संज्ञाप्य नः स्वध्वजभृत्यवर्गान् दैत्यारिरत्यब्जनलास्यनुत्यै।
तत्सङ्कुचन्नाभिसरोजपीता-द्धातुर्व्विलज्जं रमते रमायाम् ॥ ३४ ॥

सूर्य्ये कदापि अस्तसमये समुद्रस्य पूरे जलौघे कदाचित् प्रावृट्काले अभ्रे आकाशे भ्रमन्ति यानि अब्भ्राणि मेघास्तेषां गर्भे अभ्यन्तरे च निलीयते अन्तर्हितो भवति। अन्योऽपि स्वजेतारं श्रुत्वा लज्जाविकलः सन्निभृतस्थानेषु अन्तर्हितो भवति। कदाप्यदभ्रभ्रमदब्भ्रगर्भे इति पाठे तु अदभ्राणि बहुलानि यानि भ्रमदब्भ्राणि भ्रमणकर्तृमेघास्तेषां गर्भ-इत्यर्थः। 'पूरोजलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः' मे, 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने' मे। 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' अ ॥ ३३ ॥

संज्ञाप्येति। दैत्यारिर्विष्णुः स्वध्वजस्य निजवाहनस्य गरुडस्य भृत्यवर्गान् तस्य पक्षीन्द्रत्वाद्दासभूतान्नोऽस्मान् अत्यब्जस्य जितकमलस्य नलास्यस्य नलमुखस्य नुत्यै स्तोत्राय संज्ञाप्य यूयं नलवदनं स्तुतेत्यादिश्य धातुर्ब्रह्मणः सकाशाद्विलज्जम् अपगतलज्जं यथा तथा रमायां लक्ष्म्यां रमते क्रीड़ति। किम्भूताद्धातुः – तया नलास्यनुत्या संकुचत् मुकुलीभवद्यन्नाभिसरोजं नाभिपद्मं तेन पीतात् आच्छादितात्। ब्रह्मा हि नाभिसरोजे सर्व्वदा वसति सुतरां क्रीड़ायां लज्जा भवेत् अतोऽस्माभिः स्वजेतृनलवदनप्रशंसया सरोजे सङ्कोचिते तदाच्छन्नात् ब्रह्मणोऽपश्यतो विलज्जितो रमतइत्यर्थः। अन्यस्यापि स्वजैत्रनामश्रवणेन सङ्कोचो भवति। यद्वा अत्यब्जं चन्द्रसदृशं यन्नलास्यं तस्य नुत्यै चन्द्रसदृशप्रशंसया पद्मानां मुद्रणा युक्तैव चन्द्रस्य विरोधित्वेन तत्सदृशस्य विरोधित्वात्। 'अब्जोधन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मशङ्खयोः' हे। 'स्तवः स्तोत्रं नुतिः स्तुतिः' अ ॥ ३४ ॥

निलयनात् पर्यायः, तथा स्वाभाविकस्यापि विधोः सूर्याब्धिप्रवेशस्य परपराजयनिमित्तकलज्जानिलीनत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारश्च, स च गम्यः, व्यञ्जकाप्रयोगात्, जी। लाटानुप्रासोऽन्त्यानुप्रासश्छेकानुप्रासश्चेति संसृष्टिः। उत्प्रेक्षया च अतिचन्द्रं नलमुखमिति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। अन्योऽपि स्वजैत्रभयाद् दुर्गे आत्मानं सङ्गोप्य तिष्ठतीति ध्वनिः, भ ॥ ३३ ॥

पश्यतो वृद्धस्य समक्षं स्त्रीक्रीड़ा लज्जावहा, ना। पद्मसङ्कोचेन तद्दर्शनाभावाद् विलज्जता युक्तैव, भ। अत्र रमणं प्रति सङ्कुचितनाभिसरोजे ब्रह्मणोऽदर्शनस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अत्यब्जनलास्येति अब्जात् नलास्यस्य सौन्दर्याधिक्यवर्णनात् व्यतिरेकः, विष्णोः स्तुतिजनितनाभिसरोजसङ्कोचनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, जी। छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां मिथोनिरपेक्षतया संसृष्टिः। अन्यस्यापि स्वजैत्रनामश्रवणेन सङ्कोचो-भवतीति ध्वनिः, भ। प्रतीपमलङ्कारः, सा ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशता दन्तमयीभिरन्तः।
चतुर्दशाष्टादश चात्र विद्या द्वेधापि सन्तीति शशंस वेधाः॥ ३५॥
श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः।
वासेन सम्यक् क्षमयोश्च तस्मिन् बुद्धौ न दध्मः खलु शेषबुद्धौ॥ ३६॥

रेखाभिरिति। अत्र नले चतुर्दश च अष्टादश च द्वेधापि द्विप्रकारा अपि विद्याः सन्ति विद्यन्ते केचिद्विद्यानां चतुर्दशत्वं वदन्ति केचिच्चाष्टादशत्वं तदुभयरूपा अपि सन्तीत्यर्थः इति अस्य नलस्य अन्तरास्ये मुखमध्ये द्वात्रिंशता द्वात्रिंशत्संख्याभिर्दन्तमयीभिर्दन्तरूपाभीरेखाभिर्गणनात् संख्यानात् वेधाः शशंसेव कथयति स्मेव। दन्तानां रेखात्वोत्कीर्त्तनं सूक्ष्मत्वेन सामुद्रिकलक्षणवत्त्वद्योतनार्थम्। विद्यानां चतुर्दशत्वमष्टादशत्वञ्चोक्तं प्रथमसर्गे॥ ३५॥

श्रियाविति। तस्य नरेन्द्रस्य नलस्य श्रियौ कान्तिसम्पत्ती निरीक्ष्य दृष्ट्वा स्मरामरेन्द्रावपि का कथान्येषां कामेन्द्रावपि न स्मरामः न नलतुल्यत्वेन चिन्तयामः। कन्दर्पे कान्तिरेव इन्द्रे सम्पत्तिरेव नले तु द्वे अपीत्यस्य ताभ्यामाधिक्यम्। तथा तस्मिन्नले क्षमयोश्च पृथिवीक्षान्त्योश्च सम्यग्वासेन निरपायमवस्थित्या खलु निश्चयेन शेषबुद्धौ अनन्तसुगतावपि बुद्धौ मत्यां न दध्मः न धारयामः न स्मरणविषयीकुर्मइत्यर्थः। शेषे केवलं पृथिवी सुगते केवलं क्षान्तिः नले तु तदुभयमित्याधिक्यम्। उत्कृष्टप्रस्तावे ततोन्यूनस्यान्यस्य स्मरणं जुगुप्सितमिति तन्न कृतमस्माभिरिति भावः। श्रियाविति क्षमयोरिति च सरूपेषु यदिष्टमित्येकशेषः। 'श्रीः सम्पत्कान्तिलक्ष्मीषु' बलः। 'क्षितिक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु' अ॥ ३६॥

'विंशत्याद्याः सदैकत्वे' इति द्वात्रिंशच्छब्दो बहुवचनान्तविशेषणम्, ना। अत्र दन्तानामपह्नवेन रेखास्थापनादपह्नुतिः, क्रियोत्प्रेक्षाचेत्यनयोः सङ्करः, सा। वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां सोऽपि संसृज्यते। दन्तमयीभीरेखाभिरित्यनेन दन्तानां सूक्ष्मत्वेन सामुद्रिकशुभलक्षणवत्त्वं सूचितमित्यपह्नुत्यलङ्कारेण वस्तुध्वनिः, ना॥ ३५॥

अयम्भावः—सादृश्यदर्शनेन संस्कारोद्बोधात् सदृशस्मृतिर्भवति, अयं हि कान्त्या कामादधिकः, सम्पत्त्या इन्द्रादधिकः, अतएवासादृश्यादस्य श्रियोदर्शनात् तौ न स्मृतिविषयौ। एवं पृथ्वीधारणेनायं नागराजादप्यधिकः, तितिक्षया बौद्धरूपाद् भगवतोऽप्यधिकः, अतो तौ बुद्धिस्थौ न भवतः, भ। अत्र 'स्मरा' 'स्मरा' इति 'बुद्धौ' 'बुद्धौ' इति यमकद्वयम्। 'श्रियौ' 'क्षमयोः' इति पदश्लेषः, यथासंख्यम्, छेकानुप्रासश्चेति सङ्करः, तथा सौन्दर्यादिभिर्गुणैर्नलः स्मरादिभ्योऽप्यधिक इति व्यतिरेकालङ्कारोऽव्यज्यत इति वस्तुनालङ्कारध्वनिः, जी। कालान्तरीयबुद्धदेवस्याभिधानान्न कालविपर्ययदोषः अनन्तरकल्पीयबुद्धदेवस्याभिधानात् अनादित्वात् सृष्टेरेवं बहवः सत्यादयो युगा गताः॥ ३६॥

संज्ञाप्य नः स्वध्वजभृत्यवर्गान् दैत्यारिरत्यब्जनलास्यनुत्यै ।
तत्सङ्कुचन्नाभिसरोजपीता-द्धातुर्व्विलज्जं रमते रमायाम् ॥ ३४ ॥

सूर्य्ये कदापि अस्तसमये समुद्रस्य पूरे जलौघे कदाचित् प्रावृट्काले अभ्रे आकाशे भ्रमन्ति यानि अब्भ्राणि मेघास्तेषां गर्भे अभ्यन्तरे च निलीयते अन्तर्हितो भवति । अन्योऽपि स्वजेतारं श्रुत्वा लज्जाविकलः सन्निभृतस्थानेषु अन्तर्हितो भवति । कदाप्यदभ्रभ्रमदब्भ्रगर्भे इति पाठे तु अदभ्राणि बहुलानि यानि भ्रमदब्भ्राणि भ्रमणकर्तृमेघास्तेषां गर्भ-इत्यर्थः। 'पूरोजलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः' मे, 'अभ्रं मेघे च गगने धातुभेदे च काञ्चने' मे। 'प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु' अ ॥ ३३ ॥

संज्ञाप्येति । दैत्यारिर्विष्णुः स्वध्वजस्य निजवाहनस्य गरुडस्य भृत्यवर्गान् तस्य पक्षीन्द्रत्वाद्दासभूतान्नोऽस्मान् अत्यब्जस्य जितकमलस्य नलास्यस्य नलमुखस्य नुत्यै स्तोत्राय संज्ञाप्य यूयं नलवदनं स्तुतेत्यादिश्य धातुर्ब्रह्मणः सकाशाद्विलज्जम् अपगतलज्जं यथा तथा रमायां लक्ष्म्यां रमते क्रीडति। किम्भूताद्धातुः—तया नलास्यनुत्या संकुचत् मुकुलीभवद्यन्नाभिसरोजं नाभिपद्मं तेन पीतात् आच्छादितात् । ब्रह्मा हि नाभिसरोजे सर्व्वदा वसति सुतरां क्रीडायां लज्जा भवेत् अतोऽस्माभिः स्वजेतृनलवदनप्रशंसया सरोजे सङ्कोचिते तदाच्छन्नात् ब्रह्मणोऽपश्यतो विलज्जितो रमतइत्यर्थः । अन्यस्यापि स्वजैत्रनामश्रवणेन सङ्कोचो भवति । यद्वा अत्यब्जं चन्द्रसदृशं यन्नलास्यं तस्य नुत्यै चन्द्रसदृशप्रशंसया पद्मानां मुद्रणा युक्तैव चन्द्रस्य विरोधित्वेन तत्सदृशस्य विरोधित्वात्। 'अब्जोधन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मशङ्खयोः' हे। 'स्तवः स्तोत्रं नुतिः स्तुतिः' अ ॥ ३४ ॥

निलयनात् पर्यायः, तथा स्वाभाविकस्यापि विधोः सूर्य्याब्धिप्रवेशस्य परपराजयनिमित्तकलज्जा-निलीनत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारश्च, स च गम्यः, व्यञ्जकाप्रयोगात्, जी। लाटानुप्रासोऽन्त्यानुप्रास-श्छेकानुप्रासश्चेति संसृष्टिः। उत्प्रेक्षया च अतिचन्द्रं नलमुखमिति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। अन्योऽपि स्वजैत्रभयाद् दुर्गे आत्मानं सङ्गोप्य तिष्ठतीति ध्वनिः, भ ॥ ३३ ॥

पश्यतो वृद्धस्य समक्षं स्त्रीक्रीड़ा लज्जावहा, ना। पद्मसङ्कोचेन तद्दर्शनाभावाद् विलज्जता युक्तैव, भ । अत्र रमणं प्रति सङ्कुचितनाभिसरोजे ब्रह्मणोऽदर्शनस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः, अत्यब्जनलास्येति अब्जात् नलास्यस्य सौन्दर्य्याधिक्यवर्णनात् व्यतिरेकः, विष्णोः स्तुतिजनितनाभिसरोजसङ्कोचनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, जी । छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां मिथोनिरपेक्षतया संसृष्टिः । अन्यस्यापि स्वजैत्रनामश्रवणेन सङ्कोचो-भवतीति ध्वनिः, भ। प्रतीपमलङ्कारः, सा ॥ ३४ ॥

रेखाभिरास्ये गणनादिवास्य द्वात्रिंशता दन्तमयीभिरन्तः।
चतुर्दशाष्टादश चात्र विद्या द्वेधापि सन्तीति शशंस वेधाः ॥ ३५ ॥
श्रियौ नरेन्द्रस्य निरीक्ष्य तस्य स्मरामरेन्द्रावपि न स्मरामः।
वासेन सम्यक् क्षमयोश्च तस्मिन् बुद्धौ न दध्मः खलु शेषबुद्धौ ॥ ३६ ॥

रेखाभिरिति। अत्र नले चतुर्दश च अष्टादश च द्वेधापि द्विप्रकारा अपि विद्याः सन्ति विद्यन्ते केचिद्विद्यानां चतुर्दशत्वं वदन्ति केचिच्चाष्टादशत्वं तदुभयरूपा अपि सन्तीत्यर्थः इति अस्य नलस्य अन्तरास्ये मुखमध्ये द्वात्रिंशता द्वात्रिंशत्संख्याभिर्दन्तमयीभिर्दन्तरूपाभीरेखाभिर्गणनात् संख्यानात् वेधाः शशंसेव कथयति स्मेव। दन्तानां रेखात्वोत्कीर्तनं सूक्ष्मत्वेन सामुद्रिकलक्षणवत्त्वद्योतनार्थम्। विद्यानां चतुर्दशत्वमष्टादशत्वञ्चोक्तं प्रथमसर्गे॥ ३५ ॥

श्रियाविति। तस्य नरेन्द्रस्य नलस्य श्रियौ कान्तिसम्पत्ती निरीक्ष्य दृष्ट्वा स्मरामरेन्द्रावपि का कथान्येषां कामेन्द्रावपि न स्मरामः न नलतुल्यत्वेन चिन्तयामः। कन्दर्पे कान्तिरेव इन्द्रे सम्पत्तिरेव नले तु द्वे अपीत्यस्य ताभ्यामाधिक्यम्। तथा तस्मिन्नले क्षमयोश्च पृथिवीक्षान्त्योश्च सम्यग्वासेन निरपायमवस्थित्या खलु निश्चयेन शेषबुद्धौ अनन्तसुगतावपि बुद्धौ मत्यां न दध्मः न धारयामः न स्मरणविषयीकुर्म इत्यर्थः। शेषे केवलं पृथिवी सुगते केवलं क्षान्तिः नले तु तदुभयमित्याधिक्यम्। उत्कृष्टप्रस्तावे ततोन्यूनस्यान्यस्य स्मरणं जुगुप्सितमिति तन्न कृतमस्माभिरिति भावः। श्रियाविति क्षमयोरिति च सरूपेषु यदिष्टमित्येकशेषः। 'श्रीः सम्पत्कान्तिलक्ष्मीषु' बलः। 'क्षितिक्षान्त्योः क्षमायुक्ते क्षमं शक्ते हिते त्रिषु' अ ॥ ३६ ॥

---

'विंशत्याद्याः सदैकत्वे' इति द्वात्रिंशच्छब्दो बहुवचनान्तविशेषणम्, ना। अत्र दन्तानामपह्नवेन रेखास्थापनादपह्नुतिः, क्रियोत्प्रेक्षाचेत्यनयोः सङ्करः, सा। वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां सोऽपि संसृज्यते। दन्तमयीभीरेखाभिरित्यनेन दन्तानां सूक्ष्मत्वेन सामुद्रिकशुभलक्षणवत्त्वं सूचितमित्यपह्नुत्यलङ्कारेण वस्तुध्वनिः, ना ॥ ३५ ॥

अयम्भावः—सादृश्यदर्शनेन संस्कारोद्बोधात् सदृशस्मृतिर्भवति, अयं हि कान्त्या कामादधिकः, सम्पत्त्या इन्द्रादधिकः, अतएवासादृश्यादस्य श्रियोदर्शनात् तौ न स्मृतिविषयौ। एवं पृथ्वीधारणेनायं नागराजादप्यधिकः, तितिक्षया बौद्धरूपाद् भगवतोऽप्यधिकः, अतो तौ बुद्धिस्थौ न भवतः, भ। अत्र 'स्मरा' 'स्मरा' इति 'बुद्धौ' 'बुद्धौ' इति यमकद्वयम्। 'श्रियौ' 'क्षमयोः' इति पदश्लेषः, यथासंख्यम्, छेकानुप्रासश्चेति सङ्करः, तथा सौन्दर्यादिभिर्गुणैर्नलः स्मरादिभ्योऽप्यधिक इति व्यतिरेकालङ्कारोव्यज्यत इति वस्तुनालङ्कारध्वनिः, जी। कालान्तरीयबुद्धदेवस्याभिधानान्न कालविपर्ययदोषः अनन्तरकल्पीयबुद्धदेवस्याभिधानात् अनादित्वात् सृष्टेरेवं बहवः सत्यादयो युगा गताः ॥ ३६ ॥

विना पतत्रं विनतातनूजैः समीरणैरीक्षणलक्षणीयैः ।
मनोभिरासीदनणुप्रमाणै-र्न निर्जिता दिक्कतमा तदश्वैः ॥ ३७ ॥
संग्रामभूमीषु भवत्यरीणा-मस्त्रैर्नदीमातृकतां गतासु ।
तद्बाणधारापवनाशनानां राजव्रजीयैरसुभिः सुभिक्षम् ॥ ३८ ॥
यशोयदस्याजनि संयुगेषु कण्डूलभावं भजता भुजेन ।
हेतोर्गुणादेव दिगापगाली-कूलङ्कषत्वं व्यसनं तदीयम् ॥ ३९ ॥

विनेति । तदश्वैर्नलघोटकैः कतमा दिक् निर्जिता लङ्घिता न आसीत् अपि तु सर्व्वैव किम्भूतैः पतत्रं पक्षं विना विनतातनूजैर्गरुड़स्वरूपैः तथा ईक्षणलक्षणीयैर्नयनगोचरैः समीरणैर्वायुभिः तथा अनणुप्रमाणैर्महापरिमाणैर्मनोभिश्चित्तैः । गरुड़ो हि पक्षसहायो गच्छति वायुरचाक्षुषस्तद्वेगे प्रत्यक्षमात्रप्रमाणवादिनो न विश्वसन्ति मनस्त्वणुपरिमाणमतस्तस्य गौरवाभावाद्वेगो युज्यते अश्वास्तु तद्विपरीता अपि तद्रूपाइत्युपमानादुपमेयस्याधिकधर्मवत्त्वादधिकारूढ़वैशिष्ट्यरूपकमिदम् । एतेन नलः सर्वदिग्विजेता इति वस्तुध्वनिः ॥३७॥

संग्रामेति । हे दमयन्ति ! अरीणां शत्रूणाम् अस्त्रैः रुधिरैर्नदीमातृकतां नदीजलपाल्यत्वं गतासु प्राप्तासु संग्रामभूमीषु रणभूमीषु तस्य नलस्य बाणधाराः शरपरम्परा एव पवनाशनाः सर्पास्तेषां राजव्रजीयैर्विपक्षराजसमूहसम्बन्धिभिरसुभिः प्राणवायुभिः सुभिक्षम् आहारसौलभ्यं भवति । संग्रामे नलबाणैः सर्वे शत्रवो विनाशिता इति भावः । नदीमातृकभूमिषु अवग्रहादिसद्भावेऽपि सुभिक्षं भवति । अत्र पवनाशनेति सार्थकं पदं वायुभुजां वायुबाहुल्यएव सुभिक्षम् भवति । सुभिक्षमिति भिक्षाणां समृद्धिरित्यव्ययीभावः । 'देशो नद्यम्बुवृष्ट्यम्बुसम्पन्नव्रीहिपालितः । स्यान्नदीमातृकोदेवमातृकश्च यथाक्रमम्' अ ॥ ३८ ॥

यशइति । संयुगेषु युद्धेषु कण्डूलभावं रणकण्डूमत्त्वं भजता प्राप्नुवता अस्य नलस्य भुजेन हस्तेन यत् यशोऽजनि उत्पादितं दिशएवापगानद्यस्तासामाली समूहस्तस्याः कूलङ्कषत्वं तटघर्षणरूपं तदीयं तद्यशःसम्बन्धि व्यसनं व्यवसायः हेतोः कारणस्य गुणादेव न तु स्वभावात् किं जातमिति शेषः । तद्यशो दिगन्तगामीत्यर्थः । यशःकारणे हस्ते यः कण्डूलभावो गुणस्तस्मादेव दिगापगालीकूलङ्कषत्वं किं यशस्यागतमिति भावः । कारणगुणाः

गरुड़वायुमनांस्येव जगति अतिवेगानीति त्रैविध्यं दर्शितम्, भ । अत्र अर्थापत्तिः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति सङ्करः, केचित् । विभावनालङ्कारः, सा । रूपकालंकारः, जी ॥ ३७ ॥

दैर्घ्येणाशुगामित्वेन प्राणहरत्वेन च बाणानां पवनाशनत्वम् । प्राणानां पवनत्वात्तैरेव तेषां सुभिक्षमिति भावः, ना । रूपकमलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः, जी ॥ ३८ ॥

संयुगेष्विति बहुवचनेनानेकसंयुगाचरणात् "प्रायोवीरव्रताः स्त्रियः" इति महावीरत्वं

यदि त्रिलोकी गणनापरा स्या-त्तस्याः समाप्तिर्यदि नायुषः स्यात् ।
पारेपरार्द्धं गणितं यदि स्याद् गणेयनिःशेषगुणोऽपि स स्यात् ॥ ४० ॥
अवारितद्वारतया तिरश्चा-मन्तःपुरे तस्य निविश्य राज्ञः ।
गतेषु रम्येष्वधिकं विशेष-मध्यापयामः परमाणुमध्याः ॥ ४१ ॥

कार्य्यगुणमारभन्तइति नियमो यत्र समवायेन कार्य्यकारणभावस्तत्रैव अतोऽत्रातथाभूतस्य तथाभूतत्वेनोत्प्रेक्षा ॥ ३९ ॥

गुणवर्णने निजासामर्थ्यद्योतनया असंख्येयगुणत्वमस्य व्यञ्जयति । यदीति । त्रिलोकी त्रिभुवनं यदि गणनापरा तद्गुणगणनमात्रासक्ता स्यात् तस्यास्त्रिलोक्या आयुषः समाप्तिर्यदि न स्यात् यदि च गणितं संख्या पारेपरार्द्धं परार्द्धसंख्यातोऽप्यधिकं स्यात्तदा स नलः गणेया-गणयितुं शक्या निःशेषाः समस्ता गुणा यस्य तादृशोऽपि स्यादन्यथा नेत्यर्थः । असंख्येया-स्तस्य गुणा इति भावः । अपिः सम्भावनायाम् । पारेपरार्द्धमिति 'पारे मध्ये षष्ठ्या वा' इत्य-व्ययीभावः निपातनादेत्वम् । गणेयमिति 'गणेर्णिङ्वा' इति यङ्णिङ्णत् । सङ्ख्या तु परार्द्धा-दधिका नास्ति यथा लीलावत्यां भास्कराचार्य्यैः—'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणो-त्तराः संज्ञाः । सङ्ख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः' इति ॥ ४० ॥

अधिकविश्वासात् तदन्तःपुरेऽपि मया गम्यते इति ख्यापयन्नाह । अवारितेति । हे भैमि ! वयं तिरश्चां पक्षिणाम् अवारितद्वारतया अप्रतिषिद्धद्वारप्रवेशत्वेन तस्य राज्ञो नलस्य अन्तः-पुरे निविश्य प्रविश्य परमाणुवत् मध्यं यासां तादृशीः अतिकृशोदरीरित्यर्थः नारीः रम्येषु मनोरमेष्वपि गतेषु गमनेषु अधिकं लोकोत्तरं विशेषमुत्कर्षम् अध्यापयामः शिक्षयामः । एतेन त्वञ्चेत् नलपत्नी स्यास्तदा त्वामपि तथा गमनोत्कर्षं शिक्षयिष्यामीति सूचितम् । परमाणुमध्या इति याशिञ्जेत्यादिना प्रयोज्यस्य कर्मत्वम् ॥ ४१ ॥

ज्ञापितम्, भ । 'दिगापगा' इति रूपकमलङ्कारः, सा । किं जातमिति प्रतीयमाना क्रियोत्प्रेक्षा जी । श्रुत्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ३९ ॥

अत्र त्रिलोकीप्रभृतीनां गणनापरत्वाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तित्रयम् । तथा गुणानां गणनायोग्यत्वसम्बन्धेपि असम्बन्धकथनादपरातिशयोक्तिः' छेकानुप्रासश्चेति सङ्करः जी । स्यादिति क्रियातिपत्ते रविवक्षितत्वाल्लिङ्, ना । अहो बालिकाविलोभनाय वाक्यचातुर्य्या हंसस्य नलवर्णनम् ॥ ४० ॥

अत्र परमाणुमध्या इति लुप्तोपमा, सा । मध्यस्य परमाणुतुल्यत्वासम्बन्धेऽपि तत्सम्बन्धोक्ते-रतिशयोक्तिश्छेकानुप्रासश्चेति सङ्करः, केचित् ॥ ४१ ॥

पीयूषधारानधराभिरन्त-स्तासां रसोदन्वति मज्जयामः ।
रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजताद्दृताभिः ॥ ४२ ॥
काभिर्न तत्राभिनवस्मराज्ञा-विश्वासनिक्षेपवणिक् क्रियेऽहम् ।
जिह्रेति यन्नैव कुतोऽपि तिर्य्यक् कश्चित्तिरश्चस्त्रपते न तेन ॥ ४३ ॥
वार्त्ता च सासत्यपि नान्यमेति योगादरन्ध्रे हृदि यां निरुन्धे ।
विरिञ्चिनानाननवादधौत-समाधिशास्त्रश्रुतिपूर्णकर्णः ॥ ४४ ॥

तत्र स्वव्यापारान्तरमप्याह । पीयूषेति । वयं रम्भादीनामप्सरसां यत् सौभाग्यं वशीभूतपुरुषत्वादि रहश्च सुरतं गोपनीयाख्यानं वा तयोः कथाभिः करणैस्तासां नलस्त्रीणाम् अन्तर्हृदयं रसोदन्वति शृङ्गाररससमुद्रे मज्जयामः निमग्नीकुर्मः । किम्भूताभिः पीयूषस्य अमृतस्य धारातोऽनधराभिरन्यूनाभिरत्याह्लादकत्वात् । तथा काव्यं प्रबन्धविशेषं सृजता कुर्वता काव्येन शुक्रेण आद्दताभिः सम्मताभिः । 'रहः सुरतगोप्ययोः' धरणिः । 'काव्य उशना भार्गवः कविः' अ ॥ ४२ ॥

स्वस्यापि तासां विश्वास्यत्वं द्योतयन्नाह । काभिरिति । तत्र नलान्तःपुरे अहं काभिर्मुग्धाप्रभृतिभिः स्त्रीभिः अभिनवा नवीना या स्मराज्ञा कामोपदेशस्तस्या विश्वासेन निक्षेपबणिक् स्थापनिकबणिक् न क्रिये अपि तु सर्व्वाभिरेव अतिगोपनीयमपि कामरहस्यं विश्वासात् सर्व्वाभिरेव मयि कथ्यते इत्यर्थः । अन्योऽप्यतिगोपनीयवस्तु कस्मिंश्चित् बणिजि निक्षिपति । नन्वेतादृशी तासां विलज्जता इत्याशंक्याह -यत् यस्मात् तिर्यक् पक्षी कुतोऽपि कस्मादपि प्राणिनो नैव जिह्रेति नैव लज्जते तेन हेतुना कश्चित् प्राणी तिरश्चः पक्षिणो न त्रपते न लज्जते । अतस्त्वयापि अन्तर्गतं किञ्चिद्रहस्यञ्चेद्वक्तव्यं मा लज्जस्वेति ध्वनितम् ॥४३॥

अहमपि ताभिरुक्तं नान्यत्र प्रकाशयामीत्याह । वार्त्तेति । अहं योगादुपायात् प्रयत्नादिति यावत् ध्यानधारणादेरिति केचित् अरन्ध्रे निश्छिद्रे बहुविषयवृत्तिशून्य इत्यर्थः हृदि चेतसि यां वार्त्तां निरुन्धे नितरामावृणोमि सा च वार्त्ता वृत्तान्तः असत्यपि का कथा सत्यायाः

---

एतेन कथानामत्याह्लादकता ज्ञापिता, भ । पीयूषधारानधराभिरित्युपमा, सा । रसोदन्वतीतिरूपकम्, काव्येनादरासम्बन्धेपि तत्सम्बन्धोक्तेरतिशयोक्तिश्छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः, केचित् ॥ ४२ ॥

अभिनवेति मनोहरणयोग्यता सूचिता, भ । अत्र पूर्वार्धवाक्यार्थं प्रति [स्वकामरहस्यकथनं प्रति] परार्धवाक्यार्थो [त्रपाभावो] हेतुरिति काव्यलिङ्गम्, सा । निक्षेपबणिगिति रूपकम्, सा । अर्थापत्तिश्छेकानुप्रासश्चेति संसृष्टिः, केचित् ॥ ४३ ॥

अत्र समेन कार्य्येण वार्तायामसतीव्यवहारारोपणात समासोक्तिः, केचित् । 'वार्तानिरोध'

नलाश्रयेण त्रिदिवोपभोग्यं तवानवाप्यं लभते बतान्या।
कुमुद्वतीवेन्दुपरिग्रहेण ज्योत्स्नोत्सवं दुर्लभमम्बुजिन्या ॥ ४५ ॥
तन्नैषधानूढतया दुरापं शर्म्म त्वयास्मत्कृतचाटुजन्म।
रसालवल्ल्या मधुपानुविद्धं सौभाग्यमप्राप्तवसन्तयेव ॥ ४६ ॥

प्रकाशशङ्कायां परिहाससमयोक्ता अलीकापि अन्यं जनं न एति न प्राप्नोति तामन्यस्मै न कथयामीत्यर्थः। सा सत्यपि हृदि वर्तमानापि अविस्मृतापि अन्यं जनं न एतीति केचित्। योगवशत्वमेवाह—अहं किम्भूतः विरिञ्चेर्ब्रह्मणो यानि नाना चत्वारि आननानि मुखानि तैर्योवाद उच्चारणं तेन धौतं शुद्धं यत् समाधिशास्त्रं योगशास्त्रम् तस्य या श्रुतिः श्रवणं तया पूर्णौ कर्णौ यस्य तादृशः। एतेन त्वया हृदयगतं रहस्यं किञ्चिच्चेत् वक्तव्यम् नाहं कदापि तत् प्रकाशयिष्यामीति सूचितम्। निरुन्ध इति रुधेः स्वरितेत्त्वादात्मनेपदम् ए श्रम्। 'योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु' अ ॥४४॥

अत्यन्तमुत्कण्ठयन्नाह। नलाश्रयेणेति। हे दमयन्ति! तव त्वया अनवाप्यम् अप्राप्यं नलाश्रयेण हेतुना त्रिदिवोपभोग्यम् अस्मत्कर्तृकपक्षवीजनादिरूपस्वर्गोपभोग्यं वत कष्टम् अन्या त्वदितरा काचिदनर्हा नायिका लभते प्राप्नोति अनर्हायास्तल्लाभेऽस्माकं खेदइत्यर्थः। उपमिनोति यथा अम्बुजिन्या पद्मिन्या दुर्लभं दुष्प्रापम् ज्योत्स्नोत्सवं ज्योत्स्नाजन्यं प्रकाशलक्षणमुत्सवम् इन्दुपरिग्रहेण चन्द्रस्वीकारेण कुमुद्वती लभते तथेत्यर्थः। अतस्त्वया स्वभोगभोगाय नलस्यैव परिग्रहार्थं यतस्वेति भावः। तवेति कर्त्तुः कृत्यैश्चेति कर्त्तरि षष्ठी ॥ ४५ ॥

प्रकृतमुपसंहरन्नाह। तन्नैषधेति। तत्तस्मात् अस्माभिः कृताच्चाटुनः प्रियवचनाज्जन्म उत्पत्तिर्यस्य तादृशं शर्म सुखं नैषधानूढतया नलेनापरिणीततया हेतुना त्वया दुरापं दुर्लभम् अस्मत्प्रियवचनश्रवणादिजनितसुखं नलपरिणयेनैव प्राप्स्यसि नान्यथेति भावः। उपमिनोति—यथा अप्राप्तो वसन्त ऋतुविशेषोयया तादृश्या सत्या रसालवल्ल्या आम्रलतया मधुपानुविद्धं भ्रमरैः कृतम् सौभाग्यं झङ्कारादि दुरापं तथेत्यर्थः। अत्र रसालवल्ल्या दृष्टान्तत्वेन कालान्तरभावी नलसंयोगः सूचितः ॥ ४६ ॥

प्रति विरिञ्चीत्यादि पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्', जी, छेकानुप्रासश्चेति संसृष्टिः। अन्याऽप्यसती अछिद्रेऽपि हृदि सति योगादौषधादिना जनमन्यं गच्छतीति ध्वनिः, वं ॥ ४४ ॥

उपमालङ्कारः, सा। लभते इति वर्तमानसामीप्ये लट्, ना ॥ ४५ ॥

पूर्वश्लोके अम्बुजिनीदृष्टान्तेन सर्वथा दुष्प्रापत्वं सूचितम्, ना। उपमालङ्कारः, सा। वसन्तेन सह रसालवल्ल्या योग इव नलेन सह तव योगो योग्य इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः, जी ॥ ४६ ॥

तस्यैव वा यास्यसि किन्न हस्तं दृष्टं मनः केन विधेः प्रविश्य ।
अजातपाणिग्रहणासि ताव-द्रूपस्वरूपातिशयाश्रयश्च ॥ ४७ ॥
निशा शशाङ्कं शिवया गिरीशं श्रिया हरिं योजयतः प्रतीतः ।
विधेरपि स्वारसिकप्रयासः परस्परं योग्यसमागमाय ॥ ४८ ॥
वेलातिगस्त्रैणगुणाब्धिवेणी न योगयोग्यासि नलेतरेण ।
सन्दीर्यते दर्भगुणेन मल्ली-माला न मृद्वी भृशकर्कशेन ॥ ४९ ॥

अथ नलप्राप्तिसम्भावनाख्यापनया पूर्वोक्तभीतम् अस्या दौर्मनस्यमपहरन्नाह । तस्यैवेति । वा पूर्वापेक्षायां अथवा तस्यैव नलस्यैव हस्तं त्वं किं न यास्यसि प्राप्स्यसि इति निश्चेतुं केन शक्यत इति शेषः । निश्चयाभावः कथमत आह—केन जनेन विधेर्ब्रह्मणो मनोऽन्तः-करणं प्रविश्य दृष्टं भैम्या नलो न प्राप्स्यत इति विधिमनःस्थं केन ज्ञातं न केनापीत्यर्थः। यतस्तावदादौ त्वम् अजातं पाणिग्रहणं विवाहो यस्यास्तादृशी असि वर्त्तसे तथा रूपस्य लावण्यस्य यत् स्वरूपं भूषणमन्तरेणापि शोभाजनकत्वं तेन योऽतिशयउत्कर्षस्तस्याश्रयः स्थानम् । रूपं सौन्दर्य्यं स्वरूपं राजसुतात्वादि तयोर्योऽतिशय इति केचित् । अतः प्रथममेव औदास्यं मा गच्छ तव सौन्दर्य्येण नलप्राप्तिः सम्भाव्यत इति भावः ॥ ४७ ॥

विधेर्योग्यवस्तुद्वयमेलकताकथनेन तस्या नलप्राप्तिं द्रढयति । निशेति । निशा रात्र्या सह शशाङ्कं चन्द्रं शिवया गौर्य्या सह गिरीशं शिवं श्रिया लक्ष्म्या सह हरिं विष्णुं योजयतो-घटयतो विधेरपि परस्परं योग्यसमागमाय योग्यवस्तुमेलनाय स्वारसिकः स्वेच्छाचारी स्वाभा-विक इति यावत् प्रयासः प्रयत्नः प्रतीतः ख्यातः अतस्तथाभूतो विधिरवश्यमेव नलेन सह तत्सदृशीं भवतीं योजयिष्यतीति भावः ॥ ४८ ॥

नलाद्भिन्नं त्वत्सदृशं सुन्दरान्तरमपि नास्ति यस्य पत्नी भविष्यसीति प्रतिपादयन्नाह । वेलातिगेति । वेलां तीरमतिक्रम्य गच्छतीति तादृशो यः स्त्रैणगुणाब्धिः स्त्रीसम्बन्धि-

---

अत्र कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ४७ ॥

अत्र निशाशशाङ्कादीनामन्योन्यानुरूप्येण श्लाघासूचनात् सममलङ्कारः, सा । निशाशशाङ्कयो-र्लिङ्गसाम्येन पत्नीपतिव्यवहारसमारोपात् समासोक्तिः, शशाङ्कादीनां 'योजयतः' इति एक-क्रियायाः कर्मत्वेनान्वयात् तुल्ययोगिता चेत्येतेषामङ्गाङ्गिभावेन सङ्करः, केचित् । स्वरसेन चरतीति स्वारसिकः स्वशब्दस्य द्वारादिषु पठितत्वात् तत्र तदादिविधेरभ्यनुज्ञानात् सौवारसिक इति यद्यपि भवितव्यम्, तथापि स्वागतादिषु दर्शनात् स्वार्थिक-स्वाभाविकादिभाष्यकारप्रयोगदर्शनाच्च वृद्धिरेवेति बोध्यम् ॥ ४८ ॥

अत्र गुणाब्धिवेणीति निरङ्गरूपकम् सा । नलेतरेण तव योगः दर्भगुणेन मल्लीमालाया-

विधिं वधूसृष्टिमपृच्छमेव तद्यानयुग्यो नलकेलियोग्याम् ।
त्वन्नामवर्णा इव कर्णपीता मयास्य संक्रीड़ति चक्रचक्रे ॥ ५० ॥
अन्येन पत्या त्वयि योजितायां विज्ञत्वकीर्त्या गतजन्मनो वा ।
जनापवादार्णवमुत्तरीतुं विधा विधातुः कतमा तरिः स्यात् ॥ ५१ ॥

सौन्दर्यादिगुणसमुद्रस्तस्य वेणी प्रवाहरूपा अशेषरमणीगुणभाजनमित्यर्थः त्वं नलेतरेण नलाद्भिन्नेन पुरुषेण न योगयोग्यासि न सम्बन्धार्हा भवसि नलेनैव योगयोग्यासीत्यर्थः। यतः मृद्वी कोमला मल्लीमाला भृशकर्कशेनातिकठोरेण दर्भगुणेन कुशलक्षणसूत्रेण न संदीर्य्यते न ग्रथ्यते । यथा कुशरज्ज्वा मल्लीमालागुम्फनमनुचितं तथा नलेतरेण तव योग इत्युभयोर्बिम्बप्रतिबिम्बभावपर्य्यवसानाद्दृष्टान्तालङ्कारोऽयम् ॥ ४९ ॥

न केवलमेवं युक्त्या तत्र नलप्राप्तिर्निश्चीयते किन्तु प्रमाणान्तरेणापीति तदेव दर्शयन्नाह । विधिमिति । तस्य विधेर्यानस्य रथस्य युग्यो वाहकोऽहं नलस्य केलियोग्यां क्रीड़ायामुचितां वधूसृष्टिं कृदभिहितभावत्वात् सृष्टां वधूं नलक्रीड़ायोग्या कतमा वधूस्त्वया सृष्टेत्येवं विधिं ब्रह्माणमपृच्छमेव पृष्टवानेव । ततस्तेन किमुक्तमित्याह ततो मया त्वन्नामवर्णा इव नलकेलियोग्या भैमी मया निर्म्मितेति तव नामाक्षराणीव कर्णपीताः श्रुताः इवशब्दात् अस्पष्टं त्वन्नामवर्णाः श्रुता इत्यर्थः । स्पष्टमेव किमिति न श्रुता इत्याह– अस्य विधेः चक्रचक्रे रथचक्रसमूहे संक्रीड़ति अव्यक्तं शब्दायमाने सति । चक्रचक्रे हंससमूहे भीमोभीमसेनइतिवत् हंसवाचकस्य चक्राङ्गशब्दस्य एकदेशेन चक्रशब्देन हंस उच्यते इति केचित् ॥ ५० ॥

गमकान्तरमाह । अन्येनेति । वा अथवार्थे आक्षेपे निश्चये वा अन्येन नलादितरेण पत्या स्वामिना त्वयि योजितायां विवाहितायां सत्यां विज्ञत्वकीर्त्त्या चिरकालं सदृशवस्तूनां परस्परमेलनात् विवेचकत्वयशसा गतमतिक्रान्तं जन्म येन तथाविधस्य विधातुर्ब्रह्मणः जनापवादएव धिगिममयोग्ययोजकमिति जनैरुच्यमाना निन्दैव अर्णवः बहुलत्वात् समुद्रस्तम् उत्तरीतुं उत्तीर्णोभवितुं कतमा विधा किंप्रकारा तरिर्नौका स्यात् अपि तु न कापीत्यर्थः तथात्वे

---

गुम्फनतुल्यमिति व्यतिरेकेण दृष्टान्तालङ्कारश्चानयोः सङ्करः, जी । सममलङ्कारः, सा । अर्थान्तरन्यासः, भ । 'वेणिर्नदीप्रवाहे कचोचये' क्षीरस्वामी, ना ॥ ४९ ॥

'यदि निश्चयेनावक्ष्यत्तदा स्वत एव कार्यसिद्धेस्तदर्थं स्वस्मिन् सादरा नाभविष्यदितीवशब्दप्रयोगः' ना । अत्र अस्पष्टश्रवणं प्रति चक्रचक्रकूजनपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः, केचित् । उपमा, सा । यानयुग्य इति यानस्य युगं प्रासङ्गं वहतीति यः । कारकार्थ तद्धितस्य वाच्यलिङ्गत्वात् पुंस्त्वम् । वाहनमात्रे तु युग्यं क्लीवं रूढत्वात्, भ ॥ ५० ॥

'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति श्रीभगवद्गीतावचनम् २।३४, भ । अत्र

आस्तां तदप्रस्तुतचिन्तयालं मयासि तन्वि श्रमितातिवेलम् ।
सोऽहं तदागः परिमार्ष्टुकाम-स्तवेप्सितं किं विदधेऽभिधेहि ॥ ५२ ॥
इतीरयित्वा विरराम पत्री स राजपुत्रीहृदयं बुभुत्सुः ।
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्य्यावतरं हि सन्तः ॥ ५३ ॥

विधातुर्निन्दा चिरं स्थास्यतीत्यर्थः । अतो जनापवादाशङ्किना विधात्रा त्वमवश्यमेव नलेन योजिता भविष्यसीति भावः । अत्रोऽपि तर्य्यार्णवमुत्तरतीति तथा रूपितम् । उत्तरीतुमिति वृङ्वृञ्‌ऋतामलिङ् मङ्लिट्स्वीड्वेति ईङ् । 'स्त्रियां नौस्तरणिस्तरिः' अ ॥ ५१ ॥

प्रकृतानुसरणच्छलेन भैम्या अभिप्रायं जिज्ञासुराह । आस्तामिति । हे भैमि ! तत्प्रासङ्गिकं नलगुणविवरणम् आस्तां तिष्ठतु अन्यत्र वक्तव्यमित्यर्थः यतोऽप्रस्तुतचिन्तया अप्राकरणिकार्थानुशीलनेन अलं प्रयोजनाभावः । प्रस्तुतमाह हे तन्वि ! क्षीणाङ्गि ! मया अतिवेलमत्यर्थम् असि त्वं श्रमिता अतिदूराकर्षणात् परिश्रमं नीता अतः स तथाविधश्रमप्रदोऽहं तदागस्तदपराधं परिमार्ष्टुमपनेतुं कामो यस्य तादृशः सन् तव किम् ईप्सितम् अभीष्टं विदधे करिष्यामि अभिधेहि अर्थात्वत् कथय । तन्वीत्यनेन परिश्रमासहिष्णुत्वं सूचितम् । परिमार्ष्टुकाम इति तुम्समोः कामसनसोरिति मकारलुक् । विदध इति वर्तमानसामीप्ये भविष्यति लट् ॥ ५२ ॥

हंसवचनमुपसंहरति । इतीति । स पत्री हंसो राजपुत्र्या दमयन्त्या हृदयं मनो-बुभुत्सुर्नलेऽनुरक्तं विरक्तं वेति जिज्ञासुः सन् इति पूर्वोक्तम् ईरयित्वा उक्त्वा विरराम तूष्णीमभूत् । ननु नले तवानुरागो वर्तते न वेति किमिति स्फुटं नोक्तवानित्यत आह ह्रद इति । हि यतः स्वभावतो गभीरे गाम्भीर्य्यवति ह्रदे जलाशये गूढाभिप्राये हृदि मनसि च अवगाढे आलोडिते नक्रादिशून्यत्वेन ज्ञाते सादरत्वेन निश्चिते च सत्येव सन्तः पण्डिताः कार्य्यावतरं स्नानादिकार्य्यार्थमन्तर्नमनं कार्य्यस्य प्रस्तावञ्च शंसन्ति कथयन्ति अन्यथा न शंसन्तीत्यर्थः । प्रकृते तद्धृदयस्याज्ञाताभिप्रायत्वात् हठादनुरागजिज्ञासा नोचिता, अतो नलानुरागप्रकाश्यैव तूष्णीं बभूवेति भावः । अत्राप्रस्तुतप्रस्तुतयोर्ह्रदहृदययोरेकधर्माभिसम्बन्धाद्दीपकालङ्कारः ॥ ५३ ॥

जनापवादे अर्णवत्वारोपो विधात्र्यां तरित्वारोपे निमित्तमिति परम्परितरूपकम्, छेकानुप्रासश्चेति संसृष्टिः, सा । 'विधा' 'विधा' इति यमकम्, जी ॥ ५१ ॥

तन्वीति परिणयसम्भवार्थं सूक्तम्, भ । छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः, सा ॥ ५२ ॥

'राजपुत्रीति हृदयस्य गूढाशयत्वम्, ना । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, सा । अप्रस्तुतप्रस्तुतयोर्ह्रदहृदोः 'अवगाढे' इत्येकक्रिययाभिसम्बन्धाद् दीपकालङ्कारश्चेति सङ्करः, केचित् । विररामेति 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्, ना ॥ ५३ ॥

किञ्चित्तिरश्चीनविलोलमौलि-र्विचिन्त्य वाच्यं मनसा मुहूर्त्तम्।
पतत्रिणं सा पृथिवीन्द्रपुत्री जगाद वक्त्रेण तृणीकृतेन्दुः॥ ५४॥
धिक् चापले वत्सिमवत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या।
समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि॥ ५५॥
आदर्शतां स्वच्छतया प्रयासि सतां स तावत् खलु दर्शनीयः।
आगः पुरस्कुर्वति सागसं मां यस्यात्मनीदं प्रतिबिम्बितं ते॥ ५६॥

अथ हंसं प्रति दमयन्त्या वचनोपक्रममाह। किञ्चिदिति। पृथिवीन्द्रपुत्री भीमसुता सा दमयन्ती हंसवचनविचारणे किञ्चिदीषत्तिरश्चीनो वक्रो विलोलश्चञ्चलो मौलिर्मस्तकं यस्यास्तादृशी सती मुहूर्त्तं क्षणमात्रं मनसा बुद्ध्या वाच्यं वक्तव्यं विचिन्त्य निश्चित्य पतत्रिणं हंसं जगाद उक्तवती। सा किम्भूता सहजसौन्दर्य्येणाभिलाषसिद्ध्याशयातिप्रसन्नत्वेन च वक्त्रेण मुखेन तृणीकृतोऽवज्ञातइन्दुश्चन्द्रो यया तादृशी॥ ५४॥

किं जगादेत्याह। धिगिति। हे हंस! मम चापले चपलताविषये वत्सिम्ना बालत्वेन वत्सलत्वं स्नेहवत्त्वं धिक् निन्द्यं चपलताप्रतिपादकं बालत्वनिबन्धनं यत्किञ्चिद्वस्त्वभिलाषित्वमनुचितमित्यर्थः। कथमेवमात्मानमाक्षिपसीत्याह—यतः यस्य वत्सिमवत्सलत्वस्य प्रेरणात् नियोगात् यदधीनत्वादित्यर्थः उत्तरलीभवन्त्या चञ्चलीभवन्त्या मया तटस्थः पूर्वपरिचयाभावादुदासीनस्त्वमुपद्रुतोऽसि ग्रहणार्थं व्याकुलीकृतोऽसि। यथा समीरसङ्गात् वायुसम्पर्कात् उत्तरलीभवन्त्या नीरभङ्ग्या स्वल्पजलतरङ्गेण तटस्थस्तीरस्थस्त्वम् उपद्रूयसे तथेत्यर्थः कूलस्थोवृक्षादिरुपद्रूयत इति वा। 'तटस्थः स्यादुदासीने तीरस्थनिकटस्थयोः' बलः॥ ५५॥

सोऽहं तडागइत्यनेन हंसेन स्वस्य यत्सापराधत्वमुक्तं तद्भैमी स्वीयत्वेन स्वीकृत्य हंसं स्तौति। आदर्शतामिति। खलूत्प्रेक्षायां निश्चये वा हे हंस! दर्शनीयोऽतिरम्यदर्शनः स त्वम् स्वच्छतया शुद्धान्तःकरणतया सतां साधुजनानां तावत् प्रथमम् आदर्शतां दृष्टान्ततां

---

अत्र वक्त्रेण तृणीकृतेन्दुरिति इन्दोरपेक्षया वक्त्रस्य सौन्दर्यातिशयकथनाद् व्यतिरेकालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते, केचित्। उपमालङ्कारः, सा॥ ५४॥

'निरपराधस्त्वं पश्चाल्लगित्वा मया पीडितः, अतोऽहमनुचितकारिण्येवेति भावः' ना। उपमा, सा। प्रथमपादवाक्यार्थं प्रति द्वितीयपादवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेति संसृष्टिः, केचित्। वत्सस्य भावः वत्सिमा वत्स-शब्दात् पृथ्वादित्वादिमनिच्, ना। वत्सः स्नेहः विद्यतेऽस्य इति वत्सलः, भ॥ ५५॥

अत्र दृष्टान्तदर्पणयोर्भेदेऽपि आदर्शपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, प्रथमार्धं प्रति उत्तरार्धवाक्यार्थोहेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोरङ्गाङ्गिभावेन सङ्करः, केचित। अर्थान्तरं

अनार्य्यमप्याचरितं कुमार्य्या भवान्मम क्षाम्यतु सौम्य तावत् ।
हंसोऽपि देवांशतयाभिवन्द्यः श्रीवत्सलक्ष्मेव हि मत्स्यमूर्त्तिः ॥ ५७ ॥
मत्प्रीतिमाधित्ससि कां त्वदीक्षामुदं मदक्ष्णोरपि यातिशेताम् ।
निजामृतैर्लोचनसेचनाद्वा पृथक्किमिन्दुः सृजति प्रजानाम् ॥ ५८ ॥

प्रयासि गच्छसि शुद्धान्तःकरणजनविवेचनायां त्वमेव प्रथमं तेषां दृष्टान्तस्थानं भवसीत्यर्थः। यतः सागसं सापराधां मां पुरस्कुर्व्वति बहुमन्यमाने यस्य ते तव आत्मनि स्वरूपे इदं मदीयमागोऽपराधः प्रतिविम्बितं सङ्क्रान्तम् । अयं हि सतां स्वभावः यदन्यापराधं स्वीयत्वेना-ङ्गीकृत्य तं बहुमन्यतइति । जिघृक्षया चञ्चलीकरणान्मयैव तवापराधः कृतः स तु त्वया-त्मीयत्वेन गृह्यतेऽतएव त्वम् स्वच्छतया सताम् दृष्टान्तभूतोऽसीति भावः । अथ च स्वच्छतया निर्मलतया आदर्शतां दर्पणतां प्रयासि । दर्पणोऽपि सतां शोभादिदृक्षूणां श्रीमतां दर्शनीय एवम् अग्रस्थितस्य कालिमादियुतवस्तुनः प्रतिविम्बग्राही भवति ॥ ५६ ॥

स्वापराधं निश्चित्य तं क्षमार्थं प्रार्थयते। अनार्य्यमिति। हे सौम्य ! सुन्दर ! सोमयाजिवत् क्षमाशील ! वा, हंस ! कुमार्य्या बालिकायाः कुमारीत्वादप्रशस्तमनिकाया इत्यर्थः मम अनार्य्य-मप्यनुचितमपि आचरितम् आचरणं उपद्रवरूपं भवान् तावत् प्रथमं क्षाम्यतु सहतां ममेप्सित-करणम् दूरे तिष्ठतु अपराधएव प्रथमं क्षन्तव्य इत्यर्थः । राजपुत्री भूत्वा किमेवं पक्षिणि मयि प्रार्थयस इत्यत आह—असि त्वं हंसोऽपि पक्षिविशेषोऽपि देवांशतया ब्रह्मवाहनत्वात् देवभागवत्तया वन्द्यः पूजनीयः यथा श्रीवत्सलक्ष्मा विष्णुर्मत्स्यमूर्त्तिरपि हि निश्चितं लोकैर्वन्द्यते। कुमार्य्याइत्यनेन शिशोर्ममापराधग्रहणं नोचितमिति स क्षन्तव्यएवेति सूचितम् ॥ ५७ ॥

तवेप्सितं किं विदधेऽभिधेहीत्यस्योत्तरमाह। मत्प्रीतिमिति। त्वं कां मत्प्रीतिं मम हर्षम् आधित्ससि करिष्यसि या प्रीतिर्मदक्ष्णोर्मम नयनयोस्त्वदीक्षामुदं त्वद्दर्शनजनितहर्षं मन्नयनद्वय-करणकत्वद्दर्शनजनितहर्षमित्यर्थः अतिशेताम् अतिक्रम्य वर्त्ततां ततोऽप्यधिका भवत्वित्यर्थः अर्थात्तादृशी प्रीतिर्नास्त्येवेति भावः । दृष्टान्तेनेदं द्रढयति—इन्दुश्चन्द्रः निजामृतैः स्वीय-पीयूषैः प्रजानां लोचनसेचनात् नेत्रसेकात् पृथगन्यत् किं वा सृजति जनयति न किमपीत्यर्थः।

श्लेषश्च, सा। दर्पणोऽपि स्वच्छो रम्यश्च भवति, तत्रापि अग्रस्थितवस्तुधर्मस्य प्रतिविम्बं भवती-त्यलङ्कारेण वस्तुध्वनिः, भ ॥ ५६ ॥

'अज्ञस्य ह्यपराधः क्षन्तव्य इति कुमारीपदम्' ना। पूर्वार्धवाक्यार्थं प्रति उत्तरार्धवाक्यार्थो-हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, उपमा, छेकानुप्रासश्चेत्येतेषां संसृष्टिः, सा। 'सौम्यं तु सुन्दरे' अ ॥ ५७ ॥

तव दर्शनादेव प्रीतास्मीत्यर्थः, भ। चन्द्रस्य दर्शनमिव तव दर्शनं प्रीतिकरमिति विम्बा-

मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः।
का नाम बाला द्विजराजपाणि-ग्रहाभिलाषं कथयेदलज्जा ॥ ५९ ॥
वाचन्तदीयां परिपीय मृद्वीं मृद्वीकया तुल्यरसां स हंसः।
तत्याज तोषं परपुष्टघोषे घृणाञ्च वीणाक्वणिते वितेने ॥ ६० ॥

एतेन चन्द्रोयथा निजामृतकरणकनयनसेचनद्वारा लोकानामाह्लादकस्तथा त्वमपि नलवर्णनद्वारा मम अतः सम्मुखीभूय सुचिरं कालं नलमेवानुवर्णय न तस्माद्विरमेति सूचितम्। लोचन-सेचनादित्यत्र पृथग्विनानानेत्यादिना पृथक्शब्दयोगे पञ्चमी ॥ ५८ ॥

नलाभिलाषं व्यञ्जयन्ती ब्रूते। मनस्त्विति। तुरेवार्थे भिन्नक्रमे, हे हंस! मम मनो-जातु कदाचित् यं मनोरथं न तु उज्झति नैव त्यजति स मनोरथो वाञ्छाविषयः कथं केन प्रकारेण कण्ठपथं कण्ठमार्गं यातु गच्छतु योऽभिलाषविषयो मया मनसैव चिरं गृह्यते स-वचनगोचरत्वं कथं प्राप्नोत्वित्यर्थः। यद्यपि भवादृशे सुहृज्जने मनोऽभिलषितस्योक्तौ दोषा-भावस्तथापि वक्तुं न शक्नोमीत्याह। नाम सम्भावनायां का बाला स्त्री अलज्जा निर्लज्जा सती द्विजराजस्य चन्द्रस्य पाणिना हस्तेन यो ग्रहो ग्रहणं तस्याभिलाषं कथयेत् हस्तेन चन्द्रग्रहणे मम वाञ्छा वर्तत इति वदेत् न कापीत्यर्थः यथा हस्तेन चन्द्रग्रहणेच्छाकथन-मत्यन्तासम्भवतया तद्वक्तु निर्लज्जत्वं ख्यापयति तथा मदीयमानसविषयाभिलाषकथनमपि एतेन मदभिलाषसिद्धिर्दुर्घटैवेति सूचितम्। अथ च द्विजानां राजा सम्राट् नलस्तद्विवाहाभिलाषं का बाला मुग्धा स्त्री अलज्जा सती कथयेदपि तु न कापि। तत्कथने मम मौग्ध्याल्लज्जा जायत इति भावः। एतेन नलेन सह विवाहमिच्छामीति सूचितम्। हे द्विज! पक्षिन्! राजपाणिग्रहाभिलाषमिति, हे द्विजराज! पक्षिश्रेष्ठ! पाणिग्रहाभिलाषमिति च बहवः। यद्वा आमबाला अपक्वयौवनेत्यर्थः का स्त्री द्विजराजपाणिग्रहाभिलाषं नलेन सह विवाहाभिलाषम् अलज्जा सती न कथयेत् अपि तु सर्वैव नवयौवना स्त्री लज्जां विहाय कथयेदित्यपि सूचित-मित्यलं प्रपञ्चेन। 'आमोरुक्तद्विदोः पुंसि स्यादपक्वेऽन्यलिङ्गके' मे। पूर्वार्द्धे मनसोऽधोदेश-त्वात् कण्ठस्य चोर्ध्वदेशत्वादिति प्राचां हेतूपन्यासश्चिन्त्यः मनसोभ्रूमध्यस्थितत्वेन कण्ठतोऽ-प्यूर्ध्वदेशवर्त्तित्वात्। तथा च –'मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथम्' इत्यानन्द-लहरी ॥ ५९ ॥

भैमीवचनस्य हंसमनोहारित्वमाह। वाचमिति। स हंसः मृद्वीं कोमलाक्षराम् अतएव

नुविम्बप्रतीते दृष्टान्तालङ्कारः, जी। छेकानुप्रासश्चेति संसृष्टिः। आक्षेपः, सा ॥ ५८ ॥

अत्र समधर्मयोर्वस्तुनोर्विम्बप्रतिविम्बभावात् दृष्टान्तालङ्कारः, अर्थापत्तिः, श्रुत्यनुप्रासः, वृत्यनुप्रासश्चेति संसृष्टिः, केचित्। अर्थान्तरन्यासोऽलङ्कारः, श्लेषश्चेति, वं ॥ ५९ ॥

'अत्र मृद्वीकया तुल्यरसामिति आर्थोपमा, रसशब्दश्लेषेण रसनेन्द्रियग्राह्यस्य मृद्वीकारसस्य

मन्दाक्षमन्दाक्षरमुद्रमुक्त्वा तस्यां समाकुञ्चितवाचि हंसः।
तच्छंसिते किञ्चन संशयालु-र्गिरा मुखाम्भोजमयं युयोज ॥ ६१ ॥
करेण वाञ्छेव विधुं विधत्तुं यमित्थमात्थादरिणी तमर्थम्।
पातुं श्रुतिभ्यामपि नाधिकुर्वे वर्णं श्रुतेर्वर्ण इवान्तिमः किम् ॥ ६२
अर्थाप्यते वा किमियद्भवत्या चित्तैकपद्यामपि विद्यते यः।
यत्रान्धकारः किल चेतसोऽपि जिह्मेतरैर्ब्रह्म तदप्यवाप्यम् ॥ ६३ ॥

सुखजनकत्वात् मृद्वीकया द्राक्षया तुल्यरसां समानास्वादां तदीयाम् भैमीसम्बन्धिनीं वाचं परिपीय सादरमाकर्ण्य परपुष्टानां कोकिलानां घोषे रुते तोषं हर्षं तत्याज त्यक्तवान् तथा वीणाक्वणिते च वीणाशब्दे च घृणां जुगुप्सां वितेने कृतवान्। ताभ्यां मधुरतरा तस्या वाणीति वस्तुध्वनिः, ताभ्यामुपमेयभूतायाश्च वाण्या उत्कर्षद्योतनाद्व्यतिरेकध्वनिश्च। 'मृद्वीका गोस्तनी द्राक्षा' अ ॥ ६० ॥

तूष्णीम्भूतायां तस्यां हंसस्य वचनोपक्रममाह। मन्दाक्षेति। तस्यां दमयन्त्यां मन्दाक्षेण लज्जया मन्दा स्वल्पा अक्षराणां वर्णानां मुद्रा विन्यासो यत्र क्रियायां तद्यथा स्यात्तथा उक्त्वा कथयित्वा समाकुञ्चिता उपसंहृता वाग्यया तथाविधायां तूष्णीम्भूतायां सत्यामित्यर्थः। अयं हंसस्तस्याः शंसिते भाषिते किञ्चन संशयालुः सन् स्वल्पत्वादस्फुटत्वाच्च अर्थावधारणे किञ्चित् संदिहानः सन् गिरा वाचा मुखाम्भोजं मुखकमलं युयोज युक्तं कृतवान् उवाचेत्यर्थः। 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा' अ ॥ ६१ ॥

किमुवाचेत्याह। करेणेति। विधुं चन्द्रं करेण हस्तेन विधर्त्तुं ग्रहीतुं वाञ्छेव स्पृहेव इवशब्दात्र तात्त्विकी इत्थमनेन प्रकारेण आदरिणी समादरयुक्ता न तु विरक्ता सती यम् आत्थ ब्रवीषि तमर्थं प्रयोजनं श्रुतिभ्यां कर्णाभ्यां पातुमपि श्रोतुमपि अहं किं नाधिकुर्वे नाधिकारी भवामि। अन्तिमश्चरमोवर्णः शूद्रो यथा श्रुतेर्वेदस्य वर्णमक्षरं श्रोतुमपि नाधिकुरुते। यद्यप्यहं कर्तुमसमर्थस्तथापि किं श्रोतुमप्यसमर्थः अतः श्रवणे का बाधा उच्यतामित्यपिशब्दार्थः। अथ च तमर्थं कर्तुमप्यधिकारी भवामि किं पुनः श्रोतुमिति स्फुटतया सोऽर्थो वक्तव्यः, अहं तं साधयिष्यामीति सूचितम् ॥ ६२ ॥

दुर्लभः सुलभो वा मनोरथविषयः प्रकाश्यतां न तन्मयि गोपनमुचितमित्याह। अर्थाप्यत

---

श्रवणेन्द्रियग्राह्यस्य वाक्यरसस्य चोभयोर्भेदेऽप्यभेदप्रतिपादनात् अतिशयोक्तिः, व्यतिरेकश्छेकानुप्रासः, वृत्त्यनुप्रासश्चेत्येतेषां मिथोनिरपेक्षतया संसृष्टिः ॥ ६० ॥

अत्र समासगतोपमा, यमकञ्चेति संसृष्टिः, सा ॥ ६१ ॥

अत्र उपमाद्वयम्, छेकानुप्रासश्चेति संसृष्टिः, सा ॥ ६२ ॥

अत्र विरोधाभासोऽलङ्कारः, सा। मनसोऽविषयोऽपि ब्रह्मपदार्थः सूक्ष्मार्थदर्शिभिरवाप्यते,

ईशाणिमैश्वर्य्यविवत्त मध्ये लोकेशलोकेशयलोकमध्ये ।
तिर्य्यञ्चमप्यञ्च मृषानभिज्ञ-रसज्ञतोपज्ञसमज्ञमज्ञम् ॥ ६४ ॥

इति । हे भैमि।! चित्तैकपद्यामपि मनोमार्गेऽपि मनोजन्यज्ञानेऽपीत्यर्थः यो विषयतामापन्नो-विद्यते भवति वा एवार्थे स भवत्या इयत् एवं किं वा किमर्थमेव अर्थाप्यते अर्थो धनवत् क्रियते सङ्गोप्यत इत्यर्थः हस्तेन चन्द्रग्रहणकथनभङ्ग्यैव मया चतुरेण त्वद्धृदयस्थं सर्व्वं ज्ञातम् अतो मयि तद्गोपनं न कर्त्तव्यमिति भावः । चतुरजनैश्चित्तगोचरस्तु ज्ञायत एव चित्तागोचरोऽपि तैर्ज्ञातुं शक्यतइति दृष्टान्तेनाह—किल निश्चये यत्र ब्रह्मणि चेतसोऽपि अन्धकारः मनसोऽप्यग्राह्यत्वं 'यतोवाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः, तदपि ब्रह्म परमात्मा जिह्मेतरैरनलसैर्जनैरवाप्यं प्राप्यं भवति किं पुनर्मनोग्राह्यम् । एतेन सूक्ष्मार्थदर्शिना मया त्वन्मनोगतं ज्ञातमेव अतः प्रकाश्य वक्तव्यम्, अहमपि तत्साधनयोग्य इति सूचितम् । अर्थाप्यतइति अर्थः क्रियतइत्यर्थे णिङि कृते वेदार्थसत्यादापुरित्यनेनापुः ॥ ६३ ॥

ननु मनोगतं विश्वस्तेषु वक्तव्यं त्वयि तु पक्षिणि कथं मे विश्वासो भवेदित्याशङ्क्य स्वस्य विश्वसनीयत्वं ख्यापयति । ईशेति । हे ईशाणिमैश्वर्य्यविवर्त्त मध्ये ! हे अतिक्षीणमध्ये ! दम-यन्ति ! अज्ञम् अनभिज्ञं तिर्य्यञ्चमपि पक्षिणमपि मां लोकेशस्य ब्रह्मणो यो लोको भुवनं तत्र शेरतेऽवतिष्ठन्ते ये लोकाजनास्तेषां मध्ये मृषानभिज्ञः सत्यवादी सचासौ रसज्ञः सामाजिक-श्चेति कर्मधारयः तस्य भावस्तत्ता सत्यवादिता सामाजिकता चेत्यर्थः तया या उपज्ञा तद्रू-पत्वेन यत् आदिकथनं के केऽत्र सत्यवादिनः सामाजिकाश्चेति प्रश्ने प्रथमं तद्रूपत्वेन यन्मम कीर्त्तनमित्यर्थः तेन समज्ञा कीर्त्तिर्यस्य तादृशम् अञ्च जानीहि पूजय वा । यद्यप्यहं पक्षि-योनित्वात् कार्य्याकार्य्यानभिज्ञस्तथापि सत्यवादिनां सामाजिकानाञ्च प्रथमगण्योऽस्मि अतो विश्व-सिहीति भावः । ईशेति—वैपरीत्येन वर्त्ततइति विवर्त्तः प्रतिपक्षः ईशस्य ईश्वरस्य अणिमै-श्वर्य्ये अणुत्वलक्षणैश्वर्य्यविषये विवर्त्तः प्रतिपक्षो मध्योयस्याः हे तादृशि ! अणिमैश्वर्य्यशालीश्वर-सदृशातिक्षीणमध्ये इत्यर्थः । ईश्वरस्य योऽणिमा अणुत्वलक्षणमैश्वर्य्यं तस्माद्विवर्त्तस्तद्विषम-सत्ताकत्वेन उत्पादो यस्य तादृशं मध्यं यस्या हे तादृशि इति वा, 'उपादानविषमसत्ताक-कार्य्योत्पादो विवर्त्तः' इति वेदान्तिनः । लोकेशयेति शेतेरधिकरणादित्यङ् अकालवाचिनः शयवासवासिष्विति सप्तम्या अलुक् । अञ्चेति अन्चु गतिपूजनयोः लोटो हि, सर्व्वे गत्यर्थाः

मनोग्राह्यः किमु वक्तव्यः इति अर्थापत्तिः, जी। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास-च्छेकानुप्रासश्चेति संसृष्टिः, केचित्। 'वर्त्मन्येकपदी' अ, 'जिह्मस्तु कुटिलेऽलसे' अ ॥ ६३ ॥

अत्र ओजोगुणः, अनुप्रासोऽलङ्कारः, सा । आद्ये चरणे आर्थोपमा, 'लोकेश' 'लोकेश' इति यमकम्, पूर्वार्धे अन्त्ययमकम्, छेकानुप्रासः, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः, केचित्। 'हिरण्य-

मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे नः ।
ह्रियेव ताभ्यः स्खलतीयमद्धा-पथान्न संसर्गगुणेन नद्धा ॥ ६५ ॥
पर्य्यङ्कतापन्नसरस्वदङ्का लङ्कापुरीमप्यभिलाषि चित्तम् ।
कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु ॥ ६६ ॥

ज्ञानार्थाः स्युरिति ज्ञानार्थकत्वम् । उपज्ञेति । उपज्ञोपक्रमावादिकथन इति जुमरनन्दी, उपज्ञादि क्लीवमिति तत्पुरुषे क्लीवत्वाद्ध्स्वोऽन्तः क्लीव इति ह्रस्वः । 'यशः कीर्त्तिः समज्ञा च' अ । मृषानभिज्ञा सत्यवादिनी रसज्ञा जिह्वा यस्य स तथा तस्य भावस्तत्ता तया उपज्ञा आद्यज्ञानं तत्तथा तेन समज्ञा कीर्त्तिर्यस्य तादृशम् अज्ञ जानीहि ब्रह्मलोकवासिनां मध्ये अहमेव सत्य-वचनत्वेन प्रथमज्ञानविषयतया प्रसिद्धइत्यर्थइति बहवः । व्याख्यानान्तराणि तु बाहुल्यभिया नोक्तानि ॥ ६४ ॥

सत्यवादितामेव स्वस्य प्रकटयति । मध्यइति । हे भैमि ! सरस्वती वाणी प्रतिवेशिनीनाम् एकपल्लीवासिनीनां ब्रह्ममुखोच्चारितत्वेन अतिनिकटस्थितानामित्यर्थः श्रुतीनां वेदानां मध्ये याऽस्माकं मुखे वासवती स्थितिमती अत इयं ताभ्यः श्रुतिभ्यो ह्रियेव लज्जयेव अद्धापथात् याथार्थ्यमार्गात् न स्खलति न च्यवते । हेतुगर्भविशेषणमाह –सा किम्भूता संसर्ग एव सतां सङ्गएव उत्कर्षकत्वाद्गुणः अथ च रज्जुः तेन नद्धा सम्बद्धा । अन्यदपि रज्ज्वा सम्बद्धं सत् न स्खलति । अनवरतब्रह्ममुखोच्चरितवेदध्वनिश्रवणेन पवित्रान्तःकरणतया मृषाभाषण-दोषश्रवणेन वा न कदाचिदपि मिथ्या वदामीति भावः । अतो मया यद्वक्तव्यं तन्मिथ्या-त्वेन नोपेक्षणीयमिति सूचितम् । अद्धा तत्त्वं यथा तथा अपथात् कुमार्गात् अपथं प्राप्येत्यर्थः अजगर्भत्वात् पञ्चमी न स्खलति न व्यभिचरतीति वा । 'तत्त्वे त्वद्धाञ्जसा द्वयम्' अ ॥ ६५ ॥

स्वस्यालौकिकसामर्थ्यद्योतनेन भैमीं प्ररोचयति । पर्यङ्कतेति । हे भैमि ! ते तव मनश्चित्तं लङ्कापुरीमपि राक्षसनगरीमपि अर्थात् द्रष्टुं गन्तुं वा अभिलाषि अभिलाषुकं सत् कुत्रापि कस्मिंश्चित् लङ्काया इतरत्र दुष्प्रापे वस्तुनि विषये चेद् यदि प्रयाति साभिलाषं भवति

---

गर्भोलोकेशः स्वयम्भूश्चतुराननः', अ, 'लोकस्तु भुवने जने' अ, 'रसज्ञा रसना जिह्वा' अ, 'उपज्ञा ज्ञानमाद्यं स्यात्' अ ॥ ६४ ॥

अत्र उपमा, समासोक्तिः, सा । विशेषणेन सरस्वत्यां तथाविधरमण्या व्यवहारारोपणेन समासोक्तिः, ह्रियेवेति हेतूत्प्रेक्षा, वृत्त्यनुप्रासः, अन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः, केचित् । 'वती' 'वती' इति यमकम् । 'अन्यापि गुणेन रज्ज्वा बद्धा सती न चलतीति ध्वनिः, वं ॥ ६५ ॥

अत्र समासोक्तिः, सा । प्रथमे पादे निरङ्गं केवलं रूपकम्, स्वशये शयालु शयालुवदिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शना, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः, केचित् ।

इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी ।
चेतोनलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम् ॥ ६७ ॥
विचिन्त्य बालाजनशीलशैलं लज्जानदीमज्जदनङ्गनागम् ।
आचष्ट विस्पष्टमभाषमाणा-मेतां स चक्राङ्गपतङ्गशक्रः ॥ ६८ ॥

तदपि का कथान्येषाम् एतादृशं दुष्प्रापमपि वस्तु स्वशये निजहस्तमध्ये शयालु विद्यमानम् अवेहि जानीहि। कुत्रापि वस्तुनि अभिलापि तव चित्तं लङ्कापुरीमपि ईप्सितवस्तुलाभार्थं चेद् यदि प्रयाति तदपीति वा योजना। किम्भूतां लङ्कां पर्य्यङ्कतापन्नः खट्वारूपतां प्राप्तः सरस्वतः समुद्रस्य अङ्कः क्रोड़ो मध्यमित्यर्थः यस्यास्तां समुद्रस्य मध्यवर्त्तिनीमित्यर्थः, एतेन दुष्करमपि कर्त्तुं क्षमोऽस्मि अतोमनोगतं कथयेति भावः ॥ ६६ ॥

अथ भैमी हंसं प्रत्याह । इतीति । तेन पत्त्ररथेन पक्षिणा हंसेन इत्युक्तप्रकारमीरिता उक्ता भैमी दमयन्ती ह्रीणा नलाभिलापकथनप्रस्तावेन लज्जिता हृष्टा हंसस्य स्वाभिलापसाधनोन्मुखत्वज्ञानात् मुदिता च सती बभाण प्रत्युवाच। किं बभाणेत्याह - मदीयं चेतः लङ्कां राक्षसपुरीं न अयते न गच्छति अन्यत्र कुत्रापि वस्तुनि नच नैव साभिलापं सस्पृहं भवतीति शेपः अथच मदीयं चेतो नलं कामयते नलनामानं राजानं प्रार्थयते अन्यत्र कुत्रापि राजनि न साभिलापमिति श्लेषेणोवाच। 'पतत्पत्त्ररथाण्डजाः' अ ॥ ६७ ॥

अभिप्रायं बुद्ध्वापि तद्वचनस्य दार्ढ्यं जिज्ञासुर्हंसः पुनस्तामाह। विचिन्त्येति। चक्राङ्गाख्यानां पतङ्गानां पक्षिणां शक्र इन्द्र इव स राजहंसः बालाजनानां मुग्धाङ्गनानां शीलं स्वभाव एव दुर्ज्ञेयत्वेनातिगहनत्वात् शैलः पर्व्वतस्तं लज्जैव नदी तस्यां मज्जन् क्रीड़न् अनङ्गः काम एव नागो हस्ती यत्र तं विचिन्त्य विचार्य्य कामपीड़िता अपि बाला लज्जावशात् स्वाभिलापं न कथयन्तीति विचार्य्येत्यर्थः। विस्पष्टं स्फुटार्थं यथा तथा अभापमाणामकथयन्तीम् एतां दमयन्तीम् आचष्ट उवाच। अन्यत्रापि शैलनद्यां हस्ती मज्जतीति तथोक्तम्। 'चक्राङ्गा मानसौकसः' अ ॥ ६८ ॥

'पर्य्यङ्कः पुंसि खट्वायां वाच्यवत् परिवेष्टके' बलः ॥ ६६ ॥

लज्जावशात् श्लेषेण सङ्गोप्य स्वमनोरथं स्फुटीचकार' व । पूर्वं चद्वयं तुल्यताद्योतकसमुच्चये, पश्चाच्चकार इवार्थे, भ। अत्र नललङ्कारूपयोरुभयोरेवार्थयोः प्रस्तुतत्वात् सभङ्गश्लेषः, सा। वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ६७ ॥

अत्र साङ्गरूपकमलङ्कारश्छेकानुप्रासेन संसृज्यते ॥ ६८ ॥

नृपेण पाणिग्रहणस्पृहेति नलं मनः कामयते ममेति ।
आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थः सुधिया मया किम् ॥६९॥
त्वच्चेतसः स्थैर्य्यविपर्य्ययन्तु सम्भाव्य भाव्यस्मि तदज्ञ एव ।
लक्ष्ये हि बालाहृदि लोलशीले दरापराद्धेषुरपि स्मरः स्यात् ॥७० ॥

किमाचष्टेत्याह । नृपेणेति । हे दमयन्ति ! श्लेषकवेः श्लिष्टकाव्यकारिकाया भवत्यास्तव 'का नाम बाला द्विजराजे'ति 'चेतो नलं कामयते मदीयमि'ति श्लोकद्वयस्यार्थोऽभिधेयः क्रमेण नृपेण नलेन सह पाणिग्रहणस्पृहा विवाहवाञ्छेति मम मनो नलं कामयत इति एवंरूपः सुधिया पण्डितेनापि नाश्लेषि नाज्ञायि किं मया अज्ञेन नैव ज्ञातोमया इत्यर्थः अथच सुधिया मया किं नाज्ञायि अपितु ज्ञातएवेत्यर्थः । अतः किमर्थं गोपायसीति भावः । स्वधियेति पाठेतु निजबुद्ध्येत्यर्थः ॥ ६९ ॥

ममाभिप्रायो ज्ञात श्चेत् तर्हि किमिति लज्जां त्याजयित्वा पुनर्व्वादयसीत्याशङ्क्याह । त्वच्चेतस इति । तु किन्तु त्वच्चेतसस्तव चित्तस्य स्थैर्य्यविपर्य्ययं स्थैर्य्यस्यान्यथाभावम् अस्थैर्य्यमित्यर्थः सम्भाव्य संदिह्य तदज्ञ एव एवकार इवार्थे तस्य श्लोकद्वयार्थस्यानभिज्ञ इव भावी अस्मि भवामि । कथं ते स्थैर्य्यविपर्य्ययसम्भावनेत्याकाङ्क्षायामाह - हि यस्मात् लोलशीले बालभावादेव चञ्चलस्वभावे अपक्वानुरागतया एकत्रानवस्थायिनीत्यर्थः बालाहृदि मुग्धाहृदये लक्ष्ये वेध्ये स्मरोऽपि का कथान्येषां स्वमनोभवः कामोऽपि दरेण च्युतिशङ्कया भयेन अपराद्धेषुश्च्युतसायकः स्यात् भवेत् । बालानां चित्तचाञ्चल्यादेव तव नलाभिलापनिश्चयाभावादज्ञ एवास्मीति भावः अतोनिश्चयार्थं पुनर्व्वादयामीति भावः । भावीति ग्रहादेराकृतिगणत्वात् स्वार्थे च ग्रहादेरिति स्वार्थे भुवो णिन् यद्वा भावोभावना चिन्तेति यावत् सोऽस्यास्तीति तथा भावी अस्मि चिन्तयामीत्यर्थः अथवा भावोऽभिप्रायः सोऽस्यास्तीति तथा एवकारोऽप्यर्थे भिन्नक्रमे तवाभिप्रायाभिज्ञोऽपि तद्विपर्ययं सम्भाव्य तदज्ञोऽस्मीत्यर्थः । 'दरोऽस्त्री साध्वसे गर्त्ते कन्दरे तु दरी स्मृता' मे । 'अपराद्धपृषत्कोऽसौ लक्ष्याद्यश्च्युतसायकः' अ ॥ ७० ॥

---

श्लेषकवेरित्यनेनान्योऽप्यर्थोऽवगत इति सूचितम् । एकरूपस्य वचसोऽनेकार्थता श्लेषः भ । ज्ञानं प्रति सुधीपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् , अर्थापत्तिश्चेति सङ्करः । वृत्त्यनुप्रासश्छेकानुप्रासश्चेति समुदायसंसृष्टिः केचित् , ॥ ६९ ॥

बालानामल्पकामत्वात् कामवाणस्तथा न पीड़यति, यथा तरुणीनामिति तस्य च्युतसायकत्वं युक्तम् । अन्योपि धानुष्कश्चञ्चले लक्ष्ये च्युतसायको भवति, ना । त्वच्चित्तचापल्यमाशङ्क्य सन्दिग्धोऽस्मीति भावः, भ । अत्र परार्धवाक्यार्थरूपकारणेन पूर्वार्धवाक्यार्थरूपकार्यस्य समर्थनात् कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः, सा । सोऽपि छेकानुप्रासवृत्त्यनुप्रासाभ्यां 'भाव्य' 'भाव्य' इति यमकेनच संसृज्यते ॥ ७० ॥

महीमहेन्द्रः खलु नैषधेन्द्र-स्तद्बोधनीयः कथमित्थमेव ।
प्रयोजनं संशयकम्प्रमीदृक् पृथग्जनेनेव स मद्विधेन ॥ ७१ ॥
पितुर्नियोगेन निजेच्छया वा युवानमन्यं यदि वा वृणीषे ।
त्वदर्थमर्थित्वकृति प्रतीतिः कीदृङ् मयि स्यान्निषधेश्वरस्य ॥७२॥
त्वयापि किं शङ्कितविक्रियेऽस्मि-न्नधिक्रिये वा विषये निधातुम् ।
इतः पृथक् प्रार्थयसे तु यद्यत् कुर्वे तदुर्वीपतिपुत्रि सर्वम् ॥ ७३ ॥

अनिश्चितोऽर्थो मादृशेन राजनि विज्ञापयितुं न शक्यते इत्याह । महीमहेन्द्र इति । नैषधेन्द्रो नलः खलु यस्मात् मह्यां पृथिव्यां महेन्द्र इव सम्राडित्यर्थः तत्तस्मात् स नैषधेन्द्रः पृथग्जनेनेव नीचजनेनेव मूर्खजनेनेव वा मद्विधेन विश्वास्येन इत्थमेव अनेनैव बालाजनहृदय-चाञ्चल्यसमर्थनप्रकारेणैव संशयकम्प्रं संशयविषयत्वादस्थिरम् ईदृक् विवाहाभिलाषं प्रयोजनं कार्य्यं कथं केन प्रकारेण बोधनीयः ज्ञापनीयः । यथा पृथग्जनेन नीचतया मूर्खतया वा लज्जाभयादिकं परित्यज्य राज्ञोऽग्रे अनिश्चितोऽप्यर्थः कथ्यते तथा मया कथयितुं न शक्यत इत्यर्थः । इत्थमेव बालया त्वया यथाहं बोधितस्तथा मया स कथं बोध्य इति वा । इत्थमेव निर्णयं विनैवेति केचित् । 'मूर्खनीचौ पृथग्जनौ' अ ॥ ७१ ॥

अनिश्चितार्थविज्ञापने दोषं दर्शयति । पितुरिति । हे भैमि ! पितुर्नियोगेनानुमत्या निजेच्छया वा स्वेच्छया वा यदि अन्यं नलाद्भिन्नं युवानं तरुणं वृणीषे वरिष्यसि तदा त्वदर्थं त्वन्निमित्तम् अर्थित्वकृति भवता दमयन्ती परिणेतव्येति प्रार्थनाकारिणि मयि निषधेश्वरस्य नलस्य प्रतीतिः प्रत्ययः विश्वस्तोऽयमिति निश्चयः कीदृक् स्यात् कथं तिष्ठेत् नैव स्थास्यतीत्यर्थः । कीदृक् स्यात् भद्रफलदायिनी न स्यादित्यर्थः इति केचित् । अर्थित्वकृतीति कृञः क्विप् ततः सप्तम्येकवचनम् ॥ ७२ ॥

सन्दिग्धविषये त्वयापि नाहं नियोज्य इत्याह । त्वयापीति । हे उर्व्वीपतिपुत्रि ! हे राजसुते ! दमयन्ति ! त्वयापि शङ्कितविक्रिये सम्भावितनलेतरवरवरणलक्षणविकारेऽस्मिन् विषये विवाहरूपे निधातुं नियोजयितुं किं किमिति अहम् अधिक्रियेऽधिकारी क्रिये । तु किन्तु इतो नलविवाह-लक्षणविषयात् पृथगन्यत् यद्यत् प्रार्थयसे, तत्सर्वमहं कुर्व्वे करोमि न त्वन्यदित्यर्थः । केचित्तु शङ्कितधिक्क्रिय इति पाठं धृत्वा शङ्किता धिक्क्रिया कुत्सा यत्र तथाभूत इति व्याचक्षते ॥ ७३ ॥

---

निर्णीतं हि राज्ञि विज्ञाप्यते, भ । अत्र बोधनीयत्वाभावं प्रति महीमहेन्द्रपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, उपमा, सा । छेकानुप्रासश्चेति ॥ ७१ ॥

निश्चयं विना तस्याग्रे वक्तुं न युक्तमित्यर्थः, ना । छेकानुप्रासोऽलङ्कारः ॥ ७२ ॥

अर्थापत्तिरलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते, केचित् । यमकम्, सा । 'प्रार्थयसे' इति 'कुर्वे' इति च वर्तमानसामीप्ये लट्, ना ॥ ७३ ॥

श्रवःप्रविष्टा इव तद्गिरस्ता विधूय वैमत्यधुतेन मूर्ध्ना ।
ऊचे ह्रियोऽपि श्लथितानुरोधा पुनर्धरित्रीपुरुहूतपुत्री ॥ ७४ ॥
मदन्यदानं प्रति कल्पनाभूद् वेदस्त्वदीये हृदि तावदेषा ।
निशोऽपि सोमेतरकान्तशङ्का-मोङ्कारमग्रेसरमस्य कुर्य्याः ॥ ७५ ॥
सरोजिनीमानसरागवृत्ते-रनर्कसम्पर्कमतर्कयित्वा ।
मदन्यपाणिग्रहशङ्कितेय-महो महीयस्तव साहसिक्यम् ॥ ७६ ॥

अथ लज्जापरित्यागपूर्वकभैमीवचनमाह । श्रवइति । धरित्रीपुरुहूतपुत्री पृथिवीन्द्रसुता दमयन्ती वैमत्येनासम्मत्या धुतेन कम्पितेन मूर्ध्ना मस्तकेन श्रवःप्रविष्टा इव कर्णान्तर्गतजलादय इव ताः पूर्वोक्तास्तद्गिरो हंसवचनानि विधूय अग्राह्यत्वेन विज्ञाप्य अथ च निःसार्य्य ह्रियोऽपि लज्जाया अपि श्लथितोमन्दीकृतोऽनुरोधोऽधीनत्वं यया तादृशी निर्लज्जा सतीत्यर्थः पुनरूचे उक्तवती । इवोपमितौ । यथा कर्णान्तर्गता जलादयः कम्पितमूर्ध्ना निःसार्य्यन्ते तथेत्यर्थः । श्रवःप्रविष्टाः श्रुता अथच कर्णशष्कुलिं प्रविष्टास्तास्तद्गिरो वैमत्यधुतेन मूर्ध्ना विधूयेव निरस्येवे-त्युत्प्रेक्षा वा । 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' अ ॥ ७४ ॥

यदूचे तदाह । मदन्येति । हे हंस ! मदन्यदानं मम अन्यस्मै नलाद्भिन्नाय वराय यद्दानं पितृकर्तृकस्त्यागस्तत्प्रति तदुद्दिश्य एषा तावत् कल्पना पितुर्नियोगेनेत्यादिवितर्कोयदि त्वदीये हृदि तव मनसि वेदो वेदवत्प्रमाणभूतः स्थिर इति यावत् अभूत् तदा निशोऽपि रात्रेरपि सोमेतरश्चन्द्रादितरो यः कान्तः प्रियस्तस्य शङ्कां तद्रूपमोङ्कारमस्य वेदस्य अग्रेसरं पुरोवर्त्तिनं कुर्य्याः कुरु । वेदोहि प्रथममोङ्कारसहित उच्चार्य्यते । यथा रात्रेश्चन्द्रातिरिक्तः कान्तो न तथा ममापि नलातिरिक्तः कान्तो नेत्यर्थः । एतेन पितुर्नियोगेनेत्यनेन नलातिरिक्तवरणे यत्पितृ-नियोगरूपकारणसम्भावनं तत्तवानुचितमेवेति सूचितम् ॥ ७५ ॥

पुनरपि पूर्व्ववदाक्षिपति । सरोजिनीति । सरोजिन्याः कमलिन्या मानसरागोऽन्तःकरणा-नुरागस्तस्य वृत्तिरुद्भवः स्थितिर्व्वा तस्या अनर्केण सूर्य्यतरेण सम्पर्कं सम्बन्धम् अतर्कयित्वा

'तच्छ्रवणमपि तस्या नाकाङ्क्षितमिति भावः' भ । 'या लज्जा सर्वथा त्यक्तुं न शक्या, सापि त्यक्तेत्यपि शब्दार्थः' ना । क्रियोत्प्रेक्षा, सा । सा च छेकानुप्रासेन संसृज्यते ॥ ७४ ॥

तथा च यदि रात्रेश्चन्द्रान्यप्रियाभिरतिः स्यात्, तदा ममापि नलान्यकान्तशङ्का स्यादिति भङ्ग्या प्रतिपादितम्, भ । कल्पनायां वेदत्वारोपः सोमेतरकान्तशङ्कायामोङ्कारत्वारोपं प्रति निमित्तमिति परम्परितरूपकञ्च । असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, केचित् । अतिशयोक्तिः, सा ॥ ७५ ॥

सरोजिन्या मानसरागस्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, सा । लिङ्गसादृश्येनार्क-

साधु त्वया तर्कितमेतदेव स्वेनानलं यत्किल संश्रयिष्ये।
विनामुना स्वात्मनि तु प्रहर्त्तुं मृषागिरं त्वां नृपतौ न कर्त्तुम् ॥७७॥
मद्विप्रलभ्यं पुनराह यस्त्वां तर्कः स किं तत्फलवाचि मूकः।
अशक्यशङ्काव्यभिचारहेतु-र्वाणी न वेदा यदि सन्तु के तु ॥ ७८ ॥

अविचार्य्य इयं मम अन्येन नलादितरेण सह पाणिग्रहशङ्किता विवाहशङ्का अतस्तव अहो आश्चर्य्यम् महीयोऽतिशयेन महत् साहसिक्यं साहसकर्म्म। यदि सूर्य्यातिरिक्तः कान्तः कमलिन्याः स्यात्तदा ममापि नलातिरिक्तस्तथा स्यादिति भावः ॥ ७६ ॥

निजेच्छया वा युवानन्तरं यदि वृणीषे इति यदुक्तं तत्रोत्तरमाह। साध्विति। किलोपहासे निश्चये सम्भावनायां वा हे हंस! त्वया एतत् साध्वेव समीचीनमेव तर्कितम् आशङ्कितं यत् किल स्वेन आत्मना अनलं नलातिरिक्तं संश्रयिष्ये आश्रयिष्यामि। तु किन्तु अमुना नलेन विना नलालाभे प्रहर्त्तुं विनाशयितुं स्वात्मनि स्वशरीरे अनलम् अग्निं संश्रयिष्ये न तु त्वां नृपतौ नले मृषागिरं मिथ्यावादिनं कर्त्तुम् अनलं नलाद्भिन्नं संश्रयिष्ये नलं विना आत्मघातिनी भविष्यामीति भावः। स्वात्मनीति कर्म्माविवक्षायां सप्तमीति प्राञ्चः। 'आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि। धृतावपि मनीषायां शरीरब्रह्मणोरपि' मे ॥ ७७ ॥

सत्यमुच्यते मया न तु भवान् प्रतार्य्यतइत्याह। मद्विप्रलभ्यमिति। हे हंस! यः पुनस्तर्कः त्वां मद्विप्रलभ्यं मया प्रतार्य्यम् आह वदति स तर्कः तस्य प्रतारणस्य फलवाचि प्रयोजनकथने किं मूको निर्व्वाक्। येन तर्केण त्वमात्मानं मत्प्रतार्य्यं मन्यसे तेन तर्केण तत्प्रतारणस्य प्रयोजनं किमिति न जानासीत्यर्थः। प्रतारणं हि किञ्चित् प्रयोजनमुद्दिश्यैव क्रियते अतः प्रयोजनमज्ञात्वैव स्वस्य प्रतार्य्यत्वज्ञानं तव नोचितमिति भावः। ननु तथापि कथं त्वद्वचनप्रामाण्यमित्याशङ्क्याह -अशक्या शङ्का संशयोऽपि येषां तादृशा व्यभिचारहेतवो भ्रान्तो-च्चरितत्वादयो यत्र तादृशी वाणी यदि न वेदा न वेदवत् प्रमाणभूता भवेत् के तु के

सरोजिन्योः पतिपत्नीव्यवहारसमारोपात् समासोक्तिः, सा। छेकानुप्रासश्चेत्येतेषां संसृष्टिः निदर्शना, केचित् ॥ ७६ ॥

नलाभावे अग्निप्रवेशमेव करिष्यामीति फलितार्थः, भ। त्वं चेन्नाङ्गीकरोषि, तर्ह्यग्ना-वात्मघातं करिष्यामीति तस्य पुरस्तात् कथयेति भावः, ना। अनलमिति पदश्लेषः, सा। द्वितीयार्धेऽन्त्यानुप्रासश्चेति संसृष्टिः ॥ ७७ ॥

वाक्यं हि द्विविधं भवति, व्यभिचारि, अव्यभिचारि च। अत्र व्यभिचारहेतवो वक्तृनिष्ठ-भ्रमप्रमादविप्रलिप्सादयः, तेषां शङ्का यत्र वाक्ये तद् व्यभिचारि, तद्भिन्नमव्यभिचारि। तथा च वेदे वक्ता परमेश्वरः। अत्र भ्रमादिशङ्का त्वशक्या यथा, तथा इहापीति भावः, व।

अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम् ।
ईष्टे तनूजन्मतनोः स नूनं मत्प्राणनाथस्तु नलस्तथापि ॥७९॥
तदेकदासीत्वपदादुदग्रे मदीप्सिते साधु विधित्सुता ते ।
अहेलिना किं नलिनी विधत्ते सुधाकरेणापि सुधाकरेण ॥८०॥

पुनर्वेदाः सन्तु भवन्तु। यत्र व्यभिचारबोधहेतूनां शङ्कापि नास्ति तथाविधाया वाण्या अप्रामाण्ये वेदस्याप्यप्रामाण्यं स्यादित्यर्थः। अतो व्यभिचारशून्यं मम वचनं विश्वसिहीति भावः ॥ ७८ ॥

पुनरपि पितुर्नियोगेनेति कल्पं युक्त्या निराकरोति। अनैषधायैवेति। एव यद्यर्थे तातः पिता यदि माम् अनैषधाय नलव्यतिरिक्तवराय जुहोति ददाति तदा शरीरशेषां देहमात्रावशिष्टां गतप्राणामित्यर्थः मां कृशानौ वह्नौ किं न जुहोति न प्रक्षिपति अपितु जुहोत्येव। नलेतरेण सह विवाहात् प्रागेव मरिष्यामि ततः पिता केवलं मच्छरीरमेव नलेतरस्मिन् वह्नौ त्यक्ष्यतीत्यर्थः एवञ्च पिता मम मरणव्यवसायमवधार्य नलायैव मां दास्यतीति भावः। नन्वेवं पितुरभिप्रेतं विफलीकृत्य कथं प्रागल्भ्यमाश्रयिष्यसीत्याशङ्क्य तदङ्गीकृत्याह। यद्यपि अन्यस्मै मां दास्यति, तथापि मम प्राणानां नाथो नलस्तु नल एव। तुरेवार्थे। स पिता नूनं निश्चितं तनूजन्म अपत्यं तस्य तनोः शरीरस्य ईष्टे प्रभुर्भवति। तदधीनस्य शरीरस्य यत् किञ्चित् करोतु, प्राणास्तु नलाधीना अतो ददातु पिता मामन्यस्मै अहन्तु जन्मान्तरेऽपि प्राप्त्यर्थं नलमुद्दिश्य वह्नौ प्राणांस्त्यक्ष्यामीति भावः। अपत्यशरीरस्य पित्रधीनत्वमाह वशिष्ठः—'शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः' इति ॥ ७९ ॥

इतः पृथक् प्रार्थयसे इति यदुक्तं तत्रासम्मतिं ख्यापयति। तदेकेति। तस्य नलस्य यत् एकं केवलं दासीत्वं तल्लक्षणं यत् पदं वस्तु तस्मादुदग्रे उत्कृष्टे मदीप्सिते मम लिप्साविषये वस्तुनि ते तव विधित्सुता त्वद्विधानेच्छा भवतीति शेषः। इदं साधु भद्रं सोल्लुण्ठनोक्तिरियम् इदमसाध्वेवेत्यर्थः। नलदासीत्वमेव ममाभिलषितम् अतस्तदेव विधीयतां न त्वन्यदिति भावः।

अत्र अप्रस्तुत (वेद) वाणीसामान्यात् प्रस्तुतभैमीवाणीविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, अर्थापत्तिश्चेति सङ्करः, केचित्। काव्यलिङ्गम्, सा ॥ ७८ ॥

'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' इति श्रीभगवद्गीतायां श्रीमद्भगवद्वचनाज् जन्मान्तरे नलप्राप्ति-सम्भावना, ना। नलादन्यदानं वह्निनिक्षेपश्च द्वयं तुल्यमेव, इति निदर्शना, व। अत्र प्रथमार्धवाक्यार्थं प्रति उत्तरार्धगतवाक्यार्थोहेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, सा। अर्थापत्तिरपि, केचित् ॥ ७९ ॥

'सुधाकरपदं प्रथमं यौगिकम्, द्वितीयमयौगिकमिति न पुनरुक्तिः' ना। 'नलस्य दासीत्वं सम्यक्, अन्यस्य महिषीत्वं नेत्याह नलिनीति', ना। हेलिः सूर्यश्चन्द्रमाः शीतरश्मिरिति ज्योतिषा-

तदेकलुब्धे हृदि मेऽस्ति लब्धुं चिन्ता न चिन्तामणिमप्यनर्घ्यम् ।
चित्ते ममैकः सकलत्रिलोकी-सारो निधिः पद्ममुखः स एव ॥ ८१ ॥
श्रुतः स दृष्टः स हरित्सु मोहाद्ध्यातः स नीरन्ध्रितबुद्धिधारम् ।
ममाद्य तत्प्राप्तिरसुव्ययो वा हस्ते तवास्ते द्वयमेव शेषः ॥ ८२ ॥

गुणवदपि निष्प्रयोजनं वस्तु अकिञ्चित्करमेवेत्याह—नलिनी कमलिनी अहेलिना हेलिः सूर्य्यस्तद्भिन्ने न सुधाया अमृतस्य आकरेणापि उत्पत्तिस्थानेनापि सुधाकरेण चन्द्रेण किं विधत्ते किं कुरुते अपि तु न किमपि । यथा सूर्य्यानुरक्तायाः कमलिन्याः सुधाधारत्वात्तदुत्तमोऽपि चन्द्रोऽनुरागाभावान्न रोचते तथा ममेत्यर्थः । अथच नलिनी इच्छासम्बन्धेन नलवती अहम् अहेलिना हेला कामविकारविशेषः जनकतया सोऽस्यास्तीति तथा तद्भिन्नेन किं विधास्यामीति ध्वनिः ॥ ८० ॥

इदमेव द्रढयति । तदेकलुब्धइति । तस्मिन् नले एकं केवलं लुब्धम् अभिलाषुकं तथाविधे हृदि अन्तःकरणे अनर्घ्यम् अभिलषितप्रदातृत्वादमूल्यं चिन्तामणिमपि तदाख्यं रत्नविशेषमपि लब्धुं प्राप्तुं मे मम चिन्ता मनोरथो नास्ति किं पुनः पुरुषान्तरमित्यर्थः । चिन्ता भावना नास्तीति केचित् । तर्हि किं ते हृदीत्याह—एकः केवलः सएव मम चित्ते निधिः शेवधिरूपः किं चिन्तामणिनेत्यर्थः । यद्वा निधीयत इति निधिर्निहितः कर्म्मणि द्वङ् । किम्भूतः सकलत्रिलोक्याः सारः श्रेष्ठः सकलश्चतुःषष्टिकलासहितः त्रिलोक्याः श्रेष्ठश्च ति वा । तथा पद्मं कमलमिव मुखं वदनं यस्य सः । अथ च स एवैकः सकलत्रिलोक्याः सारो धनं पद्मादिर्निधिः शेवधिः । एको-नल एव मम पद्मादयोऽष्टौ निधय इत्यर्थः । पद्मोमुखमादिर्यस्येति विग्रहः । यस्याष्टौ निधयः सन्ति किं तस्य चिन्तामणिना । 'पद्मस्तथा महापद्मः शङ्खो मकरकच्छपौ । मुकुन्दकुन्दौ नीलश्च निधयोऽष्टौ प्रकीर्त्तिताः' व्यासः । 'सारो बले स्थिरांशे च मज्जनि पुंसि जले धने । न्याय्ये क्लीवं त्रिषु वरे' मे ॥ ८१ ॥

न केवलमधुनैव भवन्मुखाद्गुणराशिं श्रुत्वा बालभावात्तं स्पृहयामि किन्तु पूर्व्वमपि तस्मिन् जातानुरागास्मीत्याह । श्रुत इति । स प्रसिद्धस्वरूपो नलः श्रुतः पूर्व्वं द्विजवन्द्यादिमुखादा-

भाणम् , भ । दृष्टान्तालङ्कारः, सा । चतुर्थपादे यमकञ्चेति संसृष्टिः ॥ ८० ॥

अत्र प्रथमद्वितीयपादार्थं प्रति तृतीयचतुर्थपादवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् । निधिरिति निरङ्गं रूपकम् , सा । पद्ममुख इति पदश्लेषः, वृत्त्यनुप्रासश्छेकानु-प्रासश्चेति संसृष्टिः ॥ ८१ ॥

'त्वत् सकाशान्नलं मृत्युं वा प्राप्स्यामीति भावः' ना । अत्र तुल्यबलयोर्नलप्राप्तिप्राणव्यययो-र्विरोधस्य चातुरीयुतत्वाद् विकल्पोनामालङ्कारश्छेकानुप्रासेन संसृज्यते, 'विकल्पस्तुल्यबलयो-र्विरोधश्चातुरीयुतः' इति साहित्यदर्पणलक्षणम् , केचित् । समुच्चयः, सा । अत्र तत्पदार्थ-

सञ्चीयतामाश्रितपालनोत्थं मत्प्राणविश्राणनजञ्च पुण्यम् ।
निवार्य्यतामार्य्य वृथा विशङ्का भद्रेऽपि मुद्रेयमये भृशं का ॥ ८३ ॥
अलं विलङ्घ्य प्रियविज्ञ याच्ञाः कृत्वापि वाम्यं विविधं विधेये ।
यशःपथादाश्रवतापदोत्थात् खलु स्खलित्वाऽस्तखलोक्तिखेलात् ॥ ८४ ॥

कर्णितः । ततो हरित्सु दिक्षु मोहात् उन्मादवशात् स दृष्टः आलोकितः उन्मादात् सर्व्वं जगत्तन्मयत्वेन दृष्टमित्यर्थः । तथा नीरन्धिता वस्त्वन्तरज्ञानेनाव्यवहिता बुद्धिधारा बुद्धिप्रवाहो धारावाहिकबुद्धिरित्यर्थः यत्र क्रियायां तद्यथा तथा स ध्यातश्चिन्तितः । अद्य इदानीं मम तत्प्राप्तिर्नलस्य लाभः असूनां प्राणानां व्ययोऽपगमो वा शेषोऽवशिष्टम् एतद्द्वयं तवैव हस्ते आस्ते त्वदधीनं भूत्वा विद्यते । एकशेष इति पाठे एकश्चासौ शेषश्चेति कर्म्मधारयः एकशेषरूपेण द्वयं तिष्ठतीत्यर्थः । एतेन पूर्व्वरागे येऽभिलापादयो मरणान्ता दश कामदशा विरहिणां जायन्ते तेषां नव दशा मयानुभूता इति सूचितम् । अथ च—'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । मत्या च सततं ध्येय एते दर्शनहेतवः' इति वचनात् श्रवणादिना पूर्व्वं विषयीकृतस्य 'तत्त्वमसि' इति श्रुतौ तच्छब्दवाच्यब्रह्मणः प्राप्तिः कस्यचिदेव सुकृतिनो भवति, बहवस्तु तदप्राप्य म्रियन्ते । तद्वन्ममापि नलप्राप्तिर्मरणं वा भविष्यतीति ध्वनिः ॥ ८२ ॥

तत्र प्रवर्त्तनाय प्ररोचनया हंसं विलोभयति । सञ्चीयतामिति । आश्रितस्य शरणं प्राप्तस्य जनस्य पालनोत्थं रक्षणजनितं तथा मम प्राणानां विश्राणनात् वितरणात् जायत इति तादृशञ्च पुण्यं सञ्चीयतां त्वया सञ्चितं क्रियताम् । निश्चयाभावे कथं कार्य्यमित्यत आह—अये कोमलसम्बोधने, हे आर्य्य ! साधो ! वृथा निष्प्रयोजना विशङ्का 'पितुर्नियोगेन' इत्यादिरूपा आशङ्का निवार्य्यतां परित्यज्यतां भद्रेऽपि साधावपि त्वयि शुभकर्म्मण्यपि वा भृशमत्यर्थम् इयं मुद्रा मूकीभावः का अपि तु नैवेयमङ्गीकार्य्येत्यर्थः । मुद्रा सङ्कोचरूपा भङ्गीति केचित् । 'विश्राणनं वितरणम्' अ ॥ ८३ ॥

तदर्थं नानाविधमाह । अलमिति । हे प्रियविज्ञ ! हंस ! याच्ञा मम प्रार्थनाः विलङ्घ्याति-

---

श्रवणमनननिदिध्यासनसम्पन्नस्य ब्रह्मप्राप्तिः दुःखोच्छेदलक्षणमोक्षोगुर्वायत्त एवेतर्थान्तरप्रतीतिर्ध्वनिरेव अभिधायाः प्रकृतार्थनियन्त्रणादिति संक्षेपः' जी। शेषशब्दस्य द्वयी गतिः प्रधानशब्दवत्, अजहल्लिङ्गता वाच्यलिङ्गताचेति, भ । नीरन्ध्रा कृता नीरन्धिता इति ण्यन्तान्निष्ठा, ना ॥ ८२ ॥

शरणागतपालनेन महान् धर्मः, तेन च मत्प्राणरक्षणाद्धर्मश्च भविष्यति, सा । एकेनैव व्यापारेण धर्मद्वयस्य सिद्धिः, भ । शरणागतापालनेचाधर्मः, मत्प्राणहानिश्चेति स्त्रीहत्यालक्षणश्चाधर्म्मः । एतद्द्वयं यथा न भवति तथा कर्त्तव्यमितिभावः, ना । छेकानुप्रासः, सा, अन्त्यानुप्रासः । 'वृथा निष्कारणे व्यर्थे वृथा स्याद् विधिवर्जिते' वि । 'हस्तिजात्यन्तरे भद्रे वाच्यवत् श्रेष्ठसाधुनोः' वि ॥ ८३ ॥

इह 'न पादादौ खल्वादयः' इति निषेधस्योद्वेजकत्वाभिप्रायत्वात् नञर्थस्य खलुशब्द-

स्वजीवमप्यर्थिमुदे ददद्भय-स्तव त्रपा नेदृशबद्धमुष्टेः।
मह्यं मदीयान् यदसूनदित्सो-र्द्धर्म्मः कराद् भ्रश्यति कीर्त्तिधौतः॥ ८५॥

क्रम्य अलं मम याच्ञा नातिक्रमणीया इत्यर्थः। तथा विधेये विविधं नानाप्रकारं, वाम्यं प्रातिकूल्यं, कृत्वापि अलं तन्न करणीयमित्यर्थः। तथा आश्रवता वचनकारिता तद्रूपं यत्पदं व्यवसायस्तदेव पदं चरणं तस्मादुत्थादुत्पन्नात्, यशःपथात् कीर्त्तिमार्गात्, स्खलित्वा प्रभ्रश्य, खलु तस्मात् स्खलनं न कर्त्तव्यमित्यर्थः। किम्भूतात्? अस्ता क्षिप्ता खलोक्तीनां खलजनदुर्वचनानां खेला विलासो यस्मिन् तथाभूतात्। हंससदृशः परोपकारकोऽन्यो नास्तीति दुर्ज्जना अपि यथा त्वां प्रशंसन्ति तथा कुर्व्वित्यर्थः। प्रियविज्ञेति प्रियं नलं विशेषेण जानातीति 'समुदिताच्चे'त्यङ्, अथवा प्रियो नलप्रस्तावकत्वात् प्रीतिविधायकः विज्ञो वीनां पक्षिणां मध्ये ज्ञः श्रेष्ठश्च हे तादृश! यद्वा प्रियस्य सतो विज्ञस्य नलस्य याच्ञा इति योजना। हे प्रिय! हे विज्ञ! इति सम्बोधनद्वयमिति बहवः। आश्रवतापदोत्थादिति श्लिष्टरूपकम्। अन्योऽपि पन्था अनवरतगमनागमनेन पदादुत्थितो भवति। अलं विलङ्घ्येति कृत्वापीति खलु स्खलित्वेति च 'निषेधार्थालंखलुयुक्ताद्वे'ति क्त्वा। 'वचने स्थित आश्रवः' अ॥ ८४॥

साक्षेपं ब्रूते स्वजीवमपीति। हे हंस! मदीयान् मत्सम्बन्धिनोऽसून् नलरूपान् प्राणान्, मह्यमेव न त्वन्यस्मै, अदित्सोर्दातुमनिच्छोरीदृशबद्धमुष्टेरेतादृशकृपणशिरोमणेस्तव, अर्थिनां याचकानां मुदे, आर्त्तमुदे इति पाठे आर्त्तानां दीनानां मुदे हर्षाय, स्वजीवमपि निजजीवनमपि, दददभ्यो दधीचिजीमूतवाहनादिभ्यो, यत् यस्मात्त्रपा लज्जा न भवति तस्मात् तव कीर्त्तिधौतो यशसा शुद्धो, धर्म्मः, करात् हस्तात्, भ्रश्यति पतति। धर्म्मयशसी द्वे अप्यत्र वर्त्तेते इति भावः। योऽन्यदीयं गृहीत्वा पुनस्तन्न ददाति तस्य स्वजीवदातृभ्यो लज्जा जायत एव, तव तु तां न पश्यामि, अतः कीर्त्तिधर्म्मौ तव गतावेवेत्यर्थः। बद्धमुष्टेः करात्पततीति विरोधाभासोऽयम्। 'बद्धमुष्टिर्दृढमुष्टौ कृपाणे कृपणेऽपि च' वि॥ ८५॥

स्यानुद्धजकात्वाद् नञ्वदेव पादादौ प्रयोगो न दुष्यति इत्यनुसन्धेयम्' जी। अत्र आश्रवतायां पदत्वारोपो यशसि पथित्वारोपे हेतुः, पदशब्दश्च श्लिष्ट इति श्लिष्टपरम्परितरूपकमलङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते॥ ८४॥

"कर्णस्त्वचं शिविर्मांसं जीवं जीमूतवाहनः। ददौ दधीचिरस्थीनि किमदेयं महात्मनाम्' इति वचनं जीवदाने प्रमाणम्" ना। अत्र असून् नललक्षणान् प्राणान् इति असुनलयोर्भेदेऽपि अभेदाध्यवसाया 'दतिशयोक्तिः' सा। बद्धमुष्टेः करात् पततीति विरोधे कृपणस्येति अविरोधाद् विरोधाभासः। 'अन्यस्यापि निबद्धमुष्टेः कराद् यदि वस्तु पतति, तत्तस्य लज्जाकरमेवेति ध्वनिः' भ॥ ८५॥

दत्त्वा स्वजीवं त्वयि जीवदेऽपि शुद्ध्यामि जीवाधिकदे तु केन ।
विधेहि तन्मां त्वदृणेषु शोद्धु-ममुद्रदारिद्र्यसमुद्रमग्नाम् ॥ ८६ ॥
क्रीणीष्व मज्जीवितमेव पण्य-मन्यन्न चेदस्ति तदस्तु पुण्यम् ।
जीवेशदातर्यदि ते न दातुं यशोऽपि तावत्प्रभवामि गातुम् ॥ ८७ ॥
वराटिकोपक्रिययापि लभ्या-न्नेभ्याः कृतज्ञानथवाद्रियन्ते ।
प्राणैः पणैः स्वं निपुणं भणन्तः क्रीणन्ति तानेव तु हन्त सन्तः ॥ ८८ ॥

पुनः सानुनयं ब्रूते—दत्त्वेति । हे हंस ! जीवदे प्राणदे, त्वयि, स्वजीवं निजप्राणान् दत्त्वापि शुद्ध्यामि अनृणीभवामि उभयोः समत्वात् । तु पुनः, जीवाधिकं प्राणाधिकं नलं, ददातीति तथाविधे त्वयि, केन प्रकारेण शुद्ध्यामि अपितु न केनापि, प्राणाधिकस्य वस्तुनोऽभावात् । तत्तस्मात्, त्वं मां त्वदृणेषु तव ऋणेषु विषयेषु, शोद्धुं शुद्धा भवितुम्, अमुद्रोऽसीमो यो दारिद्र्यसमुद्रस्तत्र मग्नाम् अतिदरिद्रत्वादसमर्थामित्यर्थः, विधेहि कुरु, तवाधमर्णा यथा स्यां तथा कुर्वित्यर्थः । प्राणाधिकनलदो भवेति भावः । अत्र ऋणशब्द उपकारपरः, अशोधनं प्रत्युपकाराकरणम् ॥ ८६ ॥

पुनस्तथैव प्ररोचयति—क्रीणीष्वेति । हे हंस ! मम जीवितमेव पण्यं विक्रेयं वस्तु, क्रीणीष्व प्रियदानमूल्येनेति शेषः । तत् क्रीत्वा मह्यमेव प्रयच्छेत्यर्थः । नलं दत्त्वा मां जीवयेति भावः । एवंकरणे को मे लाभ इत्यत्राह—चेत् यदि अन्यत् त्वत्प्रतिदानोपयुक्तं धनादिकं नास्ति तत्तदा पुण्यम् अस्तु भवतु । ननु पुण्यं परत्र फलदम् अहमैहिकं किमपि प्रार्थय इत्यत्राह—हे जीवेशदातः ! प्राणनाथप्रद ! प्रत्युपकारोपयुक्तवस्त्वभावात् ते तुभ्यं, यदि दातुं न प्रभवामि न शक्नोमि, अपि तथापि, तव यशस्तावत् साकल्येन, गातुं प्रभवामि हंसेनैवास्मि जीवितेति कीर्त्तिगानं कर्त्तुं समर्थास्मीत्यर्थः । अतः कीर्त्तिमात्रमप्युद्दिश्य त्वयेदं कर्त्तव्यमिति भावः ॥ ८७ ॥

स्वाभीष्टलाभमनपेक्ष्यैव साधव उपकुर्वन्तीत्याह—वराटिकेति । अथवा पूर्वाक्षेपे, इभ्या धनिनो धनलुब्धा इत्यर्थः, वराटिकोपक्रिययापि एककपर्दकमात्रदानोपकारेणापि, लभ्यान् प्राप्यान् कृतज्ञान् उपकारस्मारिणः साधून्, नाद्रियन्ते न बहु मन्यन्ते, तु किन्तु, सन्तः साधवः, स्वमात्मानं निपुणं सम्यक्कारिणं, भणन्तः कथयन्तः सन्तः, हन्त हर्षे, प्राणैः पणैः प्राणदानरूपमूल्यैरपि, तान्

"जीवाधिकं नलं दत्त्वा मां निस्तार्य्य ऋणमग्नां कुरु इत्यर्थः" भ । अत्र द्रारिद्र्यसमुद्रेति रूपकम्, वृत्त्यनुप्रासश्चेत्यनयोः सङ्करः । 'विरोधाभासोऽलङ्कारः" सा ॥ ८६ ॥

जीविते पण्यत्वारोपस्य प्रकृतक्रयोपयोगित्वेन परिणामालङ्कारश्छेकानुप्रासः, परार्द्धे अन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः । 'अतिशयोक्तिः' सा । क्रयासम्बन्धेऽपि तत्सम्बन्धोक्तेः ॥ ८७ ॥

यद्यपि मया त्वमुपद्रुत्यानादृतोऽसि, तथापि त्वया साधुत्वात् स्वयमेवाहं क्रेतव्येति भावः'

स भूभृदष्टावपि लोकपाला-स्तैर्म्मे तदेकाग्रधियः प्रसेदे।
न हीतरस्माद्घटते यदेत्य स्वयं तदाप्तिप्रतिभूर्म्ममाभूः॥ ८९॥
अकाण्डमेवात्मभुवार्ज्जितस्य भूत्वापि मूलं मयि वीरणस्य।
भवान्न मे किं नलदत्वमेत्य कर्त्ता हृदश्चन्दनलेपकृत्यम्॥ ९०॥

कृतज्ञान् क्रीणन्त्येव अतः प्रयोजनाभावेऽपि साधुना त्वया नलप्रदानेन चिरकालमुपकारज्ञाहं कर्त्तव्येति भावः। 'इभ्य आढ्यो धनी' अ॥ ८८॥

त्वयेदं कर्त्तव्यमेवेत्युक्तिविशेषेण ख्यापयति—स इति। यतः स भूभृन्नलोऽष्टावपि लोकपालाः राजत्वेन तदंशोत्पन्नत्वादिन्द्रादिलोकपालस्वरूपा इत्यर्थः। अतस्तस्मिन् इन्द्रादिरूपे नले एकाग्रा तन्मात्रविषया निश्चिता वा धीर्बुद्धिर्यस्यास्तथाभूताया, मे मम, तैर्लोकपालैः, प्रसेदे प्रसन्नम्। भावे लिट्। नलस्य लोकपालांशत्वात् तद्ध्यानवत्या मम ते प्रसन्ना इत्यर्थः। देवता हि अनवरतध्यानेन प्रसन्ना भवन्ति। प्रसन्नत्वेऽन्यथानुपपत्तिं प्रमाणयति—हि यस्मात्, हे हंस! त्वं यत् स्वयम् एत्य आगत्य, मम तदाप्तौ, नलप्राप्तौ प्रतिभूर्लग्नकोऽभूर्भूतोऽसि, इदम् इतरस्मात् लोकपालप्रसादभिन्नात् कारणात्, न घटते न सङ्गच्छते मम विश्वासाय लोकपालैस्त्वं लग्नकः कृत इत्यर्थः। लोके हि ऋणदानादिविषये लग्नक आगत्याधमर्णपक्षपाती भूत्वा मा शङ्कतामहमेवेदं दास्यामीति विश्वासाय वदति तथा त्वमपि आगतः 'तदप्यवेहि स्वशये शयालु' इत्युक्त्वा नलप्रदाने प्रतिभूर्भूतः, अतो लोकपालान् परित्यज्य त्वामेव नलं याचे, त्वयैव स दातव्य इति भावः। प्रतिभूरिति 'भुवः संज्ञान्तरयोः' इति क्विप्॥ ८९॥

त्वयैव मह्यं नलो दातव्य इत्याह—अकाण्डमेवेति। अकाण्डम् अनवसरं कन्यावस्थायामनुचितत्वादयुक्तकालमित्यर्थः यथा स्यात्तथा, आत्मभुवैव कामेनैव, मयि आर्जितस्य जनितस्य, रणस्य शब्दस्य रहस्यकथनस्येत्यर्थः, मूलं कारणं, भूत्वा अपिर्भिन्नक्रमे, विरपि पक्ष्यपि, भवान् नलदत्वं नलदातृत्वं, एत्य प्राप्य, नलं दत्त्वेत्यर्थः, मे मम, हृदो हृदयस्य, चन्दनलेपस्य कृत्यं कार्य्यं शीतलत्वं, किं न कर्त्ता न करिष्यति अवश्यमेव करिष्यतीत्यर्थः। कौमारावस्थायां निन्दितमपि

---

भ। अत्र इभ्येभ्यः सतामाधिक्यवर्णनात् व्यतिरेकालङ्कारश्छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः। 'अत्रोपमाप्रशंसारूपकालङ्कारः' सा॥ ८८॥

"घटते' इत्यस्य इदं कर्तृ गम्यते एव यच्छब्देन सम्बन्धात्" भ। अत्र च प्रसन्नतां प्रति तदेकाग्रधीपदार्थस्य हेतुत्वेन पदार्थहेतुककाव्यलिङ्गं, तज्जनितविच्छित्तियुतत्वेन "अनुमानालङ्कारः" सा। अनुमानशरीरञ्चात्र शक्रादयः लोकपालाः मयि प्रसन्नाः तदेकाग्रधिया उपास्यत्वे सति लग्नकद्वारेण मदभीष्टपूरकत्वात्, रूपकम् अनुप्रासश्च॥ ८९॥

वीरणमिति सभङ्गशब्दश्लेषः, अन्यत्रार्थश्लेषः, नलदातृत्वोशीरत्वयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः, हंसे आरोप्यमाणस्योशीरस्य चन्दनकृत्यलक्षणप्रकृतकार्य्योप-

अलं विलम्ब्य त्वरितुं हि वेला कार्य्ये किल स्थैर्य्यसहे विचारः ।
गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमर्त्तिः ॥ ९१ ॥
अभ्यर्थनीयः स गतेन राजा त्वया न शुद्धान्तगतो मदर्थम् ।
प्रियास्यदाक्षिण्यबलात्कृतो हि तदोदयेदन्यवधूनिषेधः ॥ ९२ ॥

कामरहस्यकथनं त्वयैव कारितम्, अतस्त्वमेव नलदो भवेति भावः। अकाण्डं बाणशून्यं यथा स्यात्तथा, कामेनार्जितस्य रणस्य सुरतसंग्रामस्य, मूलं निदानं, भूत्वेत्यादि वा। अथ च अकाण्डं स्कन्धरहितं यथा स्यात्तथा, आत्मभुवा ब्रह्मणा अर्जितस्य स्रष्टस्य वीरणस्य तृणविशेषस्य मूलमिव ब्रध्न इव, मयि भूत्वा, नलदत्वम् एत्य उशीररूपतां प्राप्य, त्वं हृदो वक्षसश्चन्दनलेपकृत्यमङ्गरागं, करिष्यसि। 'काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते वृक्षभिन्नाड़ीवृन्दे रहसि न स्त्रियाम्' मे। 'स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्। अभयं नलदं सेव्यम्' अ। कर्त्तेति लुटो रूपम् ॥ ९० ॥

शीघ्रमेवैतत् कर्त्तव्यं मा चिरयेत्याह —अलमिति। हे हंस! हि यस्मादियं, त्वरितुं सत्वरीभवितुं, वेला समयस्तस्माद्विलम्ब्य अलं विलम्बो न कर्त्तव्य इत्यर्थः। तदर्थमस्मिन् क्षण एव त्वरा कर्त्तव्या विलम्बे विघ्नोपस्थितिश्चेत् तद् दुर्घटं भवेदिति भावः। कथमिदं समयमविचार्य्य करिष्यामीत्याशङ्क्याह —किल यतः, स्थैर्य्यसहे विलम्बसहे कार्य्ये, विचारो वारवेलादिविवेचनं क्रियत इति शेषः। इदन्तु विलम्बसहं न भवतीत्यत्र विचारो न युज्यत इति भावः। अत्र हेतुमाह —अर्त्तिः पीड़ा प्रकृते विरहयातना, जातु कदाचिदपि, कालं कालविचारं न प्रतीक्षते नापेक्षते। इव यथा, तीक्ष्णा सूक्ष्मार्थग्राहिणी, प्रतिभा शिष्यप्रज्ञा, गुरूपदेशं न प्रतीक्षते गुरूपदेशात् पूर्व्वमेव शास्त्रार्थं विषयीकरोति तथेत्यर्थः। त्वरितुमिति 'ज्ञादिभिगु क्तादि' त्यादिना तुमङ् ॥९१॥

एवं पूर्व्वोक्तैर्हंसमनुकूल्य चतुर्भिः श्लोकैर्विज्ञापनाप्रकारमुपदिशति —अभ्यर्थनीय इति। हे हंस! गतेन इतो नलसान्निध्यं प्राप्तेन, त्वया शुद्धान्तगतोऽन्तःपुरमध्यस्थः, स राजा नलः, मदर्थं 'त्वया दमयन्ती उद्वोढव्ये'ति मन्निमित्तं, नाभ्यर्थनीयो न याचनीयः। कथं नेत्याह —हि यस्मात्तदा

---

योगात् श्लेषप्रतिभोत्थापितः परिणामालङ्कारः। तथा अन्यस्य कृत्यं कथमन्यः करोतु इति न्यायेन हंसस्य चन्दनकृत्यकरणासम्भवेन चन्दनकृत्यमिव कृत्यमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना, किं न कर्त्ता अपितु कर्त्तैवेति अर्थापत्तिश्चेत्येतेषां सङ्करः ॥ ९० ॥

"लोकेऽपि यावद् विवाहादिसमयः समायाति, तावत् पूर्व्वमेव त्वरा भवति। शीघ्रमेतत् कार्य्यं साधयेति भावः" ना। "प्रज्ञा नव नवोन्मेषशालिनी प्रतिभा मता" भ। "काव्यलिङ्गोपमे" सा। "उपमार्थान्तरन्यासयोः संसृष्टिः" जी। छेकानुप्रासश्च ॥ ९१ ॥

'शुद्धान्तश्चावरोधश्च' अ। 'अर्थ उपयाचने' ना। 'काव्यलिङ्गम्'सा। 'कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः' जी ॥ ९२ ॥

शुद्धान्तसम्भोगनितान्ततुष्टे न नैषधे कार्य्यमिदं निगाद्यम्।
अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा॥ ९३॥
त्वया निधेया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य।
पित्तेन दूने रसने सितापि तिक्तायते हंसकुलावतंस॥ ९४॥
धरातुरासाहि मदर्थयाञ्चा कार्य्या न कार्य्यान्तरचुम्बिचित्ते।
तदार्थितस्यानवबोधनिद्रा बिभर्त्यवज्ञाचरणस्य मुद्राम्॥ ९५॥

तस्मिन्, समये प्रियाया आस्यस्य मुखस्य दाक्षिण्येन अनुरोधेन बलात्कृतो हठाज्जनितः, अन्यवधू-निषेधः एतत्समाना काचित् स्त्री नास्तीत्येवंरूपः, उदयेदाविर्भवेत्। यद्यपि अन्यरमण्यामस्य वासना स्यात्तथापि प्रियानुरोधात् तामप्रकाश्य अन्यस्त्रीविवाहं निषिध्येदिति भावः॥ ९२॥

शुद्धान्तेति। हे हंस! शुद्धान्तसम्भोगेन अन्तःपुरिकोपभोगेन नितान्ततुष्टे अतिशयेन सन्तुष्टे निवृत्तकामाभिलाषे, इति यावत्, नैषधे नले, इदं पूर्व्वोक्तकार्य्यं, न निगाद्यं न वक्तव्यम्। अर्थान्तरेणेदं समर्थयति—हि यस्मात्, सुगन्धिः कर्पूरादिगन्धद्रव्यवती, तुषारा शीतला, अतएव स्वादुः सुरसा, वारिधारा जलधारा, अपां तृप्ताय जलैः प्रीताय जनाय, न स्वदते न रोचते पिपासा-भावात्। यथा पिपासारहितस्य सुरसापि वारिधारा नादरणीया तथा सम्भोगबाहुल्यात् कामा-भिलापरहितस्य तस्य मदर्थप्रार्थनेत्यर्थः। अपामिति 'तृप्तत्यर्थस्यचे' ति करणे षष्ठी। तृप्तायेति 'यत्प्रीतिकृद्रुच्यर्थकर्त्ते'ति संप्रदानसंज्ञायां चतुर्थी'। 'शुद्धान्तोऽन्तःपुरे कक्षाभेदे योषिति भूपतेः' इत्यजयः॥ ९३॥

त्वयेति। नैषधस्य नलस्य, हृदि मनसि, क्रुधा कोपेन, कदुष्णे ईषदुत्तप्ते सति कलुषिते सतीत्यर्थः, त्वया मदर्था मत्प्रयोजना, गिरो वचनानि, न निधेया नार्पणीया न वक्तव्या इत्यर्थः। अर्थान्तरेण समर्थयति—हे हंसकुलावतंस हंसकुलालङ्कारभूत! पित्तेन दूने अभिभूते रसने जिह्वायां, सितापि शर्करापि, तिक्तायते निम्बादिवदाचरति। उत्तमानां नाधिकं कोपकालुष्यं भवतीति कदुष्णेत्युक्तम्। 'रसनं ध्वनिते स्वादे रसज्ञारास्नयोरपि' हे॥ ९४॥

धरेति। हे हंस! कार्य्यान्तरचुम्बिचित्ते अन्यकार्य्यासक्तमनसि, धरातुरासाहि पृथिवीन्द्रे

जलपानेनापगतपिपासाय पीतादुदकादुत्कृष्टमप्युदकं यथा न रोचते, तथा स्त्रीसम्भोगेनो-पशान्तकामाय तस्मै तद्वधूभ्योऽभ्यधिकाप्यहं न रुचिकरी भवेयम्। तस्मात् तदापि न वक्तव्य-मिति भावः। 'तुषारेत्यभिधेयलिङ्गता' ना। 'अर्थान्तरन्यासः' सा। 'दृष्टान्तालङ्कारः' जी॥ ९३॥

"अर्थान्तरन्यासः। तिक्तायते इत्युपमा" सा। 'दृष्टान्तालङ्कारः' जी॥ ९४॥

"तुरासाहि' इति प्रयोगो भाषायां 'छन्दसि सहः' इति ण्विप्रत्ययस्य छन्दसि विहितत्वा-

विज्ञेन विज्ञाप्यमिदं नरेन्द्रे तस्मात्त्वयास्मिन् समयं समीक्ष्य।
आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः कार्यस्य कार्यस्य शुभा विभाति ॥ ९६ ॥
इत्युक्तवत्या यदलोपि लज्जा सा नौचिती चेतसि नश्चकास्तु।
स्मरस्तु साक्षी तददोषताया-मुन्माद्य यस्तद्वीवदत्ताम् ॥ ९७ ॥

नले, मदर्थयाच्ञा मत्प्रयोजनप्रार्थना, त्वया न कार्य्या न कर्त्तव्या यतस्तदा कार्य्यान्तरचिन्ताकाले, अर्थितस्य प्रार्थितस्य कार्य्यस्य, अनवबोध एव अज्ञानमेव निद्रा कर्त्री, अवज्ञाया अवहेलाया आचरणस्य करणस्य, मुद्रां चिह्नं, बिभर्त्ति धारयति। कार्य्यान्तरासक्तचित्तत्वाद्यदि भवत्प्रार्थनं स न शृणुयात्तदा इदं कार्य्यमस्मै न रोचत इति विविच्य पुनः कथने भवतः प्रवृत्तिर्न स्यादिति भावः ॥ ९५ ॥

किं मयाधिकं वक्तव्यं, त्वया पुनः सुसमयं प्राप्यैव विज्ञापनीयमित्याह—विज्ञेनेति। हे हंस! विज्ञेन पण्डितेन त्वया, तस्माद्धेतोः, समयम् अवसरं, समीक्ष्य प्रतीक्ष्य, तस्मिन् नरेन्द्रे इदं मत्प्रयोजनं, विज्ञाप्यं निवेदनीयम्। ननु समयप्रतीक्षायां तव प्रयोजनसिद्धिर्झटिति न भविष्यतीत्याशङ्क्याह, कार्य्यस्य आत्यन्तिकी सदातनी या असिद्धिः सिद्ध्यत्यन्ताभाव इत्यर्थः, या च विलम्बिनी कालान्तरभाविनी सिद्धिः सिद्धिप्रागभाव इत्यर्थः, तयोर्द्वयोर्मध्ये, आर्य्यस्य बुद्धिमतस्तव का अन्यतरा, शुभा समीचीना, विभाति प्रतिभाति, तां कथयेति शेषः। असमयविज्ञापने कार्य्यस्य सर्वथासिद्धिरेव, समयं प्रतीक्ष्य विज्ञापने तु तस्य विलम्बेन सिद्धिः, मम तु सैव समीचीना, अतः समयं प्रतीक्ष्यैव वक्तव्यं, भवति चेत् भवतु विलम्ब इति भावः ॥ ९६ ॥

एवंकथनेन जातं दमयन्त्या औद्धत्यं कविरपहरति—इत्युक्तवत्येति। इत्येवमुक्तवत्या कथयन्त्या दमयन्त्या, यत् लज्जा, अलोपि परित्यक्ता सा लज्जापरित्यागरूपा, अनौचिती अनौचित्यं, नोऽस्माकं, चेतसि, चकास्तु प्रकाशतां, बालया सलज्जया भवितव्यमित्यस्यातिक्रमात् आपाततो भैम्या अनुचितत्वम् अस्माभिर्ज्ञायतामित्यर्थः। तु किन्तु, तस्या दमयन्त्या, अदोषतायां निर्दोषतायां

चिन्त्यः। गिरिशादिवन्महाकविप्रयोगादस्यापिच्छान्दसत्वस्य प्रायिकत्वाद्वा परिहर्त्तव्यम्" ना। 'लोके तु साहयतेः क्विप्' सिद्धान्तकौमुदी। तथा च 'तुरासाहं पुरोधाय' कुमारे प्रयोगः। 'काव्यलिङ्गम्' सा। 'अनवबोधनिद्रे'ति रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ९५ ॥

"लक्षणहेत्वोः' इति ज्ञापकाद् 'अल्पाच्तरम्' इत्यस्यानित्यत्वाद् 'आत्यन्तिकासिद्धिविलम्बिसिद्ध्योः' इत्यत्र परनिपातः समर्थनीयः" ना। "कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः" जी। छेकानुप्रासः, कार्य्यस्य कार्य्यस्येति यमकञ्चेति संसृष्टिः ॥ ९६ ॥

'कामेनैव बलाद् अयुक्तं वादिता सा इति तस्या न दोषः, कवीनां वर्णनेऽनौचित्यं प्रातिभासिकं, नतु तात्त्विकम् अनुवादत्वीदितिभावः' ना। छेकानुप्रासः। 'अतिशयोक्तिः' सा ॥ ९७ ॥

उन्मत्तमासाद्य हरः स्मरश्च द्वावप्यसीमां मुदमुद्वहेते ।
पूर्व्वः परस्पर्द्धितया प्रसूनं नूनं द्वितीयो विरहाधिदूनम् ॥ ९८ ॥
तथाभिधात्रीमथ राजपुत्रीं निर्णीय तां नैषधबद्धरागाम् ।
अमोचि चञ्चूपुटमौनमुद्रा विहायसा तेन विहस्य भूयः ॥ ९९ ॥
इदं यदि क्ष्मापतिपुत्रि तत्त्वं पश्यामि तन्न स्वविधेयमस्मिन् ।
त्वामुच्चकैस्तापयता नृपञ्च पञ्चेषुणैवाजनि योजनेयम् ॥ १०० ॥

स्मरः कामः साक्षी द्रष्टा । कथमत्र कामस्य साक्ष्यमित्यत आह, यः स्मरस्तां दमयन्तीम्, उन्माद्य उन्मत्तां कृत्वा, तत्तत् पूर्व्वोक्तम्, अवीवदत् वादयति स्म । कामवशगा सती तत्तदुवाच न तु सा स्वभावतः प्रगल्भेति भावः ॥ ७ ॥

कामो वा कथमेवं वादयतीत्याह - उन्मत्तमिति । हरः शिवः, स्मरः कामश्च, द्वावपि उभावपि, उन्मत्तं वस्त्वासाद्य प्राप्य, असीमां सातिशयां, मुदं हर्षम्, उद्वहेते धारयतः । किन्तु, तयोर्मध्ये पूर्वः शिवः, प्रसूनम् उन्मत्तं धुस्तूरपुष्पम्, आसाद्य मुदमुद्वहते, द्वितीयः स्मरस्तु, विरहाधिना वियोगजनितमानसव्यथया दूनम् उत्तप्तम् उन्मत्तम् उन्मादाख्यकामदशाविशेषवन्तं जनम् आसाद्य मुदमुद्वहते । उभयत्र हेतुमाह --परस्पर्द्धितया शत्रुं प्रति स्पर्द्धावत्तया, अन्योऽन्य-स्पर्द्धितयेति प्राञ्चः । नूनमुत्प्रेक्षायाम् । अयं भावः, स्मरवैरी शिवः स्मरस्य उन्मत्ते विरहिजने हर्षं दृष्ट्वा किं मयापि नोन्मत्ते हर्षणीयमिति स्पर्द्धां कृत्वा उन्मत्ताख्यधुस्तूरकुसुमं प्राप्य हृष्यति, एवं स्मरोऽपि स्वशत्रुं शिवम् उन्मत्ताख्यकुसुमप्रणयिनं दृष्ट्वा उन्मत्तविरहिजनं प्राप्य हृष्यतीति । उभयोः शत्रुभूतयोरेकवस्तुग्रहणन्तु शेषग्रहादुपहासाकरं भवतीत्येकनामकं पृथक् वस्तुद्वयं द्वाभ्यां गृहीतम् । उद्वहेते इति वहेः स्वरितेत्त्वादात्मनेपदम् । 'उन्मत्तउन्मादवति धुस्तूरमुचुकुन्दयोः' अ ॥ ९८ ॥

अथ हंसो दमयन्तीं प्रति पुनर्वक्तुमारभते --तथेति । अथानन्तरं, तथा पूर्व्वोक्तप्रकारम्, अभिधात्रीं कथयन्तीं, तां राजपुत्रीं भैमीं, नैषधे नले, बद्धः स्थापितो रागः प्रीतिर्यया तादृशीं, निर्णीय निश्चित्य, तेन विहायसा पक्षिणा हंसेन, विहस्य हास्यं कृत्वा, भूयः पुनरपि, चञ्चूपुटस्य ओष्ठयुगलस्य, मौनमुद्रा तूष्णीम्भावभङ्गी अमोचि त्यक्ता, वक्तुं प्रारब्धमित्यर्थः । 'खगे विहङ्गविहगविहङ्गम-विहायसः' अ ॥ ९९ ॥

यद्वक्तुमारब्धं तदाह – इदमिति । हे क्ष्मापतिपुत्रि राजसुते दमयन्ति ! इदं पूर्व्वोक्तं, सर्व्वं

अत्र नूनंशब्दवाच्य उत्प्रेक्षालङ्कारः, प्रकृताप्रकृतयोः हरकामयोरेकोद्वहनक्रियासम्बन्धाद् दीपकं, श्लेषोत्थापितोपमाध्वनिश्च । "व्यतिरेकालङ्कारः" सा ॥ ९८ ॥

"छेकानुप्रासः" सा ॥ ९९ ॥

"अयसोरिव सन्तप्तयोः सन्धिः स्यादिति" भ । अत्र पूर्व्वार्द्धगतवाक्यार्थं प्रति परार्द्धोक्त-

त्वद्बद्धबुद्धेर्बहिरिन्द्रियाणां तस्योपवासव्रतिनां तपोभिः ।
त्वामद्य लब्ध्वामृततृप्तिभाजां स्वदेवभूयं चरितार्थमस्तु ॥ १०१ ॥

यदि तत्त्वं सत्यं, तर्त्तर्हि अस्मिन् कार्य्ये, स्वविधेयं मम निजकरणीयं किमपि, न पश्यामि मया, यत् कर्त्तव्यं तन्नावशिष्यत इत्यर्थः । कुतः ? यतस्त्वां नृपञ्च नलञ्च, उच्चैः सातिशयं, तापयता उभयोरपि परस्परानुरागाद्विरहव्यथां जनयता पञ्चेषुणैव कामेनैव, इयं योजना घटना, अजनि जनिता, उभयोः परस्परजातानुरागत्वाद्योजना सुकरेति भावः । उत्तप्तयोर्हि सन्धिर्लोहादौ दृष्टः ॥ १०० ॥

न केवलं त्वमेव विरहदुःखिनी किन्तु नलोऽपि त्वद्विरहदुःखमनुभवतीति चतुर्दशभिः श्लोकैराह — त्वत्बद्धेति । हे दमयन्ति ! तपोभिस्तपस्यासञ्चितपुण्यैरद्य त्वां लब्ध्वा प्राप्य सन्निकृष्टां कृत्वेत्यर्थः, अमृततृप्तिभाजाम् अमृतजनिततुष्टिसदृशतुष्टिं भजतां, तस्य नलस्य वहिरिन्द्रियाणां चक्षुरादीनां, स्वदेवभूयं निजदेवतात्वं, चरितार्थमस्तु सार्थकं भवतु । पूर्व्वं तेषाम् अमृततृप्त्यभावाच्छब्दमात्रेणैव देवत्वमासीदिदानीन्तु त्वत्प्राप्त्या अमृततृप्तिमत्त्वात्सार्थकत्वं भविष्यतीत्यर्थः । देवा हि अमृतं भुञ्जते कथं तेषां तप इति इन्द्रियाणि विशिनष्टि — किम्भूतानाम् ? उपवासोऽनशनं स्वस्वविषयाग्राहकत्वरूपं व्रतं नियमो विद्यते येषां तथाविधानाम् । उपवास एव तेषां कथमिति नलं विशिनष्टि — किम्भूतस्य तस्य ? त्वयि बद्धा लीना अनवरतत्वच्चिन्तनासक्तेत्यर्थः बुद्धिर्मनो यस्य तादृशस्य । ज्ञानसामान्यं प्रति मनसः कारणतया चिन्तनसाधनतापन्ने च तस्मिन् ज्ञानद्वययौगपद्यानङ्गीकाराद्बहिरिन्द्रियाणां स्वस्वार्थग्राहिता न भवतीति तथोक्तम् । अन्येऽपि उपवासव्रतिनो भूत्वा तपस्यया पीयूषतृप्तिप्राप्त्या चरितार्था भवन्ति । अद्य त्यनेन शीघ्रभावी नलसङ्गमः सूचितः । त्वामित्यत्र युष्मच्छब्दस्य उपादानलक्षणया त्वं तव च मधुरालापः मलयजाङ्गलेपकोमलाङ्गबिम्बाधररसा यथायथं चक्षुरादीनां विषया बोध्याः ।

---

वाक्यार्थस्य हेतुत्वाद् वाक्यार्थहेतुककाव्यलिङ्गम्, योजनं प्रति 'तापयता' इत्यनेन पदेन तापस्य हेतुतोक्तेः पदार्थहेतुकं काव्यलिङ्गं च । तापयतेत्येकक्रियया 'त्वां' 'नृपम्' इति प्रस्तुतयोर्द्वयोः कर्म्मत्वेनान्वयात् तुल्ययोगिता च, तथा योजनकारणस्य तापस्य वर्त्तमानत्वेन, योजनरूपकार्य्यस्य च अतीतत्वेनाभिधानात् कारणकार्य्ययोः पौर्व्वापर्य्यविपर्य्ययलक्षणातिशयोक्तिश्चेति सङ्करः । छेकानुप्राससंसृष्टिश्च ॥ १०० ॥

"इन्द्रियाण्येव सूर्य्यादिदेवताः' इति श्रुतिः । 'आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद्' इति च श्रुतिः । अन्यस्यापि आकृष्टेन्द्रियस्यानशननियमवतः परब्रह्मध्यायतः पुण्यैस्तदेव ब्रह्म लब्ध्वा मोक्षलक्षणानन्दभाजो देवत्वं सार्थकं भवति इत्युक्तिः ( ध्वनिः ) । बहिरिन्द्रियाणां निजव्यापारेष्वप्रवृत्तिस्तपः । विषयभोगाभावश्च उपवासः" ना । अत्र प्रस्तुतेषु बहिरिन्द्रियेषु अप्रस्तुतस्य ब्रह्मध्यायिनो व्यवहारारोपणात् "समासोक्तिः" सा । 'अर्थान्तरप्रतीति र्ध्वनिरेव' जी । 'उप-

तुल्यावयोर्म्मूर्त्तिरभून्मदीया दग्धा परं सास्य न ताप्यतेऽपि ।
इत्यभ्यसूयन्निव देहतापं तस्यातनुस्त्वद्विरहाद्विधत्ते ॥ १०२ ॥
लिपिं दृशा भित्तिविभूषणं त्वां नृपः पिबन्नादरनिर्निमेषः ।
चक्षुर्भरैरर्पि तमात्मचक्षू-रागं स धत्ते रचितं त्वया च ॥ १०३ ॥

चक्षुरादीन्द्रियाणाम् आदित्यादिदेवस्वरूपत्वम् आगमेषु प्रसिद्धम् । केचित्तु देवभूयमिन्द्रियत्वमिति वदन्ति । देवभूयमिति 'भुवोभावे सुप्यपादौ' इति क्यः । 'देवः सुरे घने राज्ञि देवमाख्यातमिन्द्रिये' वि ॥ १०१ ॥

तुल्येति । हे दमयन्ति ! अतनुरनङ्गः, त्वद्विरहात् तव वियोगात्, तस्य नलस्य, देहतापं शरीरसन्तापरूपं विरहव्याधिं, विधत्ते करोति । अत्रोत्प्रेक्षते किम्भूतः ? आवयोर्मम नलस्य च, मूर्त्तिः शरीरं, तुल्या पूर्वं समाना अभूत्, परं केवलं, ततः परं वा, मदीया मत्सम्बन्धिनी मूर्त्तिर्दग्धा, भस्मीकृता शिवेनेति शेषः । अस्य नलस्य तु, सा मूर्त्तिः, न ताप्यतेऽपि मया तापयुक्तोऽपि न क्रियते, माभूदस्य दाहः तापस्तु कथं न क्रियत इत्यर्थः । इत्येवम् अभ्यसूयन्निव ईर्ष्यां कुर्व्वन्निव ॥ १०२ ॥

अधुना नलस्य पूर्वरागित्वात् नयनप्रीत्यादिकामदशा आह—लिपिमिति । हे दमयन्ति ! स नृपो नलः, आदरेण आवेशौत्कण्ठेन निर्निमेषो नेत्रसङ्कोचरहितः सन्, भित्तेः कुड्यस्य, विभूषणं विशेषेणालङ्कारभूतां, लिपिं लिखितां त्वां, दृशा चक्षुषा, पिबन् पश्यन्, चक्षुर्झरैरनिमिषावलोकनजातैर्नयनजलप्रवाहैः, अर्पितं जनितम्, आत्मचक्षुरागं निजनयनयोर्लौहित्यम्, एवं त्वया च

---

वासश्चासौ व्रतं चेति कर्म्मधारयादिनिः समर्थनीयः । उपवासेन व्रतिनः इति वा समाधिः' ना ॥ १०१ ॥

'तनुदाहादेवातनुपदोपन्यासः' भ । मम च तस्य च आवयोः, 'तदादीनां मिथः' इत्येकशेषः । क्रियोत्प्रेक्षालङ्कारः । अतनोस्तनुकार्य्यस्य तापजनकत्वस्य विरुद्धत्वाद् मनसिजत्वेन च तस्य परिहाराद् विरोधाभासः । उपमेयस्य नलस्य उपमानात् कामादुत्कर्षाभिधानाद् व्यतिरेकश्चेत्येतेषां सङ्करः । छेकानुप्रासश्च । 'अत्र चिन्तालक्षणा स्मरदशोक्ता' सा ॥ १०२ ॥

निर्निमेषे चक्षुषि अश्रुपातान् लौहित्यरूपरागो जायते, प्रियालिपिदर्शनात् चक्षुषोः तत्रानुरागरूपो रागश्च भवति । अत्र उभयकार्य्यसम्भवादुभयस्मिन्नपि रागे जाते श्लेषमहिम्ना एकत्वाभिमानात् कारणविशेषसन्देहः । उभयोरेव रागयोः प्रस्तुतत्वात् शब्दश्लेषालङ्कारः । 'एतेन चक्षूरागरूपा प्रथमदशा दर्शिता । चक्षूरागस्तदनु मनसः सङ्गतिर्भावना च व्यावृत्तिः स्यात्, तदनुविषयग्रामतश्चेतसोऽपि । निद्राच्छेदस्तदनु तनुता निस्त्रपत्वं ज्वरश्चोन्मादो मूर्च्छा तदनु मरणं

पातुर्दृशा लेख्यमयीं नृपस्य त्वामादरादस्तनिमीलयास्ति ।
ममेदमित्यस्रुणि नेत्रवृत्तेः प्रीतेर्निमेषच्छिदया विवादः ॥ १०४ ॥
त्वं हृद्गता भैमि बहिर्गतापि प्राणायिता नासि कयास्य गत्या ।
न चित्तमाक्रामति तत्र चित्र-मेतन्मनो यद्भवदेकवृत्ति ॥ १०५ ॥

चित्रितया रचितं जनितम्, आत्मचक्षुषो रागमनुरागं, धत्ते धारयति। अत्र नयनप्रीतिरूपा कामदशा सूचिता। 'प्रवाहे निर्झरो झरः' अ ॥ १०३ ॥

पुनरपि तामेव दशामाह—पातुरिति। आदरादनुरागादस्तनिमीलया अपगतनिमेषया, दृशा चक्षुषा, लेख्यमयीं भित्तौ चित्रितां, त्वां पातुः सादरं पश्यतो, नृपस्य नलस्य अस्रुणि लोचनजले विषये, नेत्रवृत्तेश्चक्षुर्वर्तिन्याः प्रीतेरनुरागस्य, निमेषच्छिदया निमेषविच्छेदेन सह ममेदमिति विवादः, इदमस्रु मज्जनितमिति परस्परकलहः, अस्ति भवति। अस्रु हि अनुरागान्निमेषशून्यदर्शनाच्च भवति तदत्र कस्माज्जातमिति सम्भवति विवादः। इतरेऽपि एकस्मिन् विषये ममेदमिति कृत्वा परस्परं विवदन्ते। भिदादित्वाच्छिदा साधुः ॥ १०४ ॥

चिन्तासङ्गरूपां दशामाह—त्वमिति। हे भैमि! बहिर्गतापि, दूरस्थापि हृद्गता अन्तःकरण-वर्त्तिनी चिन्ताविषयतापन्नेत्यर्थः। तादृशी त्वं, कया गत्या केन प्रकारेण, अस्य नलस्य, प्राणायिता नासि प्राणतुल्या न भवसि अपितु सर्व्वप्रकारेणैव प्राणवत् प्रियतमा भवसीत्यर्थः। अथच बहिर्गता त्वं नासिकया घ्राणेन आस्यगत्या मुखभङ्ग्या च अर्थाद् दूतादिभ्यः श्रुतया हृद्गता मनोज्ञा, अतएव प्राणायिता प्राणवत्प्रिया। प्राणा अपि नासिकया मुखमार्गेण च बहिर्गत्य हृद्गता भवन्ति। अतएव एतन्मनो नलान्तःकरणं, यत् भवती त्वमेव एका मुख्या वृत्तिर्जीवनोपाय आश्रयणीयेति यावत् यस्य, अथ च भवत्याम् एका केवला वृत्तिः परिणामो यस्य तादृशं भवतीति शेषः। तत्र विषये चित्तम् अस्माकं मनः कर्तृ, चित्रम् आश्चर्य्यं, नाक्रामति न प्राप्नोति इन्द्रियाणां प्राणावलम्बनत्वात्। प्राञ्चस्तु न चित्तमिति पाठं धृत्वा भवदेकवृत्ति

---

स्युर्दशाः क्रमेण' भ। नयनयोरश्रुजनितरागे भैमीप्रीतिजनितत्वोत्प्रेक्षा, तया च अयं बाष्प-जनितलोहितिमा न भवति, किन्तु तद्विषयको नयनानुराग इति अपन्हुतिर्व्यज्यते ॥ १०३ ॥

अत्र विवादासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिरलंकारः। 'निमेषच्छिदयेत्यत्राप्रधाने तृतीयया मुख्या नयनप्रीतिरिति द्योतितम्' ना। पातुरित्यस्य तृणन्तत्वात् न कर्मणि षष्ठी। 'अत्र नयनप्रीतिः स्मरदशा प्रतिपादिता' सा ॥ १०४ ॥

'प्राणा अपि नासिकामुखमार्गेण द्वादशाङ्गुलपर्य्यन्तं बहिर्गत्वा पुनरन्तः प्रविशन्ति, प्राणाख्याञ्च लभन्ते, तथा त्वमपि' ना। बहिर्गताया हृद्गतत्वस्य विरूद्धत्वेऽपि प्राणस्वाभाव्यात्, अतिप्रिय-त्वेन च भ्रमाद् बहिः, तथा सदा ध्यानाच्च रन्तर्दर्शनात् तत्परिहारेण विरोधाभासः, नासिकयास्य-

अजस्रमारोहसि दूरदीर्घां संकल्पसोपानततिं तदीयाम्।
श्वासान् स वर्षत्यधिकं पुनर्यद् ध्यानात्तव त्वन्मयतामवाप्य ॥ १०६ ॥
हृत्तस्य यां मन्त्रयते रहस्त्वां तां व्यक्तमामन्त्रयते मुखं यत्।
तद्वैरिपुष्पायुधमित्रचन्द्र-सख्यौचिती सा खलु तन्मुखस्य ॥ १०७ ॥

एतत्मनो नलमनः, चित्रं सम्मुखस्थमप्यालेख्यं, यन्नाक्रामति न गृह्णाति, तत्र चित्रम् आश्चर्यम्। विरहव्यथया हि चञ्चलेन भवितव्यं, तत्रापि यदस्यैकाग्रत्वं तदाश्चर्य्यविषयमित्यर्थ इति व्याख्यातवन्तः। वहिर्गतापि हृद्गतेति विरोधाभासः। भवदेकवृत्तीति समासे भवत्याः पुंवद्भावः ॥ १०५ ॥

संकल्परूपां दशामाह—अजस्रमिति। हे भैमि! त्वं दूरदीर्घाम् अतिमहतीं, तदीयां नल-सम्बन्धिनीं, संकल्पश्चिन्तैव सोपानम् आरोहणं तस्य ततिं परम्पराम्, अजस्रमनवरतमारोहसि अजस्रं चिन्ताविषयो भवसीत्यर्थः। कथमेवं त्वया ज्ञातमित्याह—यद्यस्मात्, स नलः, तव ध्यानाच्चिन्तनात्, त्वन्मयतां त्वद्रूपताम् अवाप्य, पुनर्वारंवारम्, अधिकं दीर्घं यथा तथा, श्वासान् वर्षति मुञ्चति। अतिदीर्घसोपानारोहणे हि परिश्रमान्निश्वासा जायन्ते, तेषां नलसम्बन्धित्वे च अनवरतचिन्तनजनिता तस्य त्वद्रूपताप्राप्तिः कारणम्। यो हि यमजस्रं चिन्तयति स तद्रूपतां भजते। अत्र पुनःशब्दस्य पुनः पुनरर्थे लक्षणा। 'आरोहणं स्यात् सोपानम्' अ ॥ १०६ ॥

पुनरपि तामेव दशामाह—हृदिति। हे भैमि! तस्य नलस्य, हृत् हृदयं रह एकान्ते, यां त्वां, मन्त्रयते त्वामुद्दिश्य यत्किञ्चिद्गोपनीयं भाषते, हे प्रिये! दीयतामह्यमालिङ्गनमित्यादि यन्मनसा संकल्पयतीत्यर्थः। तां त्वां, मुखं नलस्य वदनं कर्तृ, व्यक्तम् अतिस्फुटं यथा तथा, यत् आमन्त्रयते गुप्तं विषयं भाषते, खलूत्प्रेक्षायां, सा, तन्मुखस्य नलमुखस्य तद्वैरी नलशत्रुः

गत्येति सभङ्गश्लेषस्य हृद्गतत्वबहिर्गतत्वरूपसामान्यधर्म्मबोधकत्वात् तदुत्थापिता प्राणायितेति उपमा, वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति संसृष्टिः ॥ १०५ ॥

'योगिनो हि यं भृशं ध्यायन्ते, तद्रूपतां प्राप्नुवन्ति, इत्यागमः' भ। "योगप्रभावात् प्रह्लादो जातो विष्णुमयोऽसुरः" इति विष्णुपुराणम्।" ना। अतः नलस्य दमयन्तीरूपता युज्यते। एतेन तृतीयस्मरदशा नलस्य उक्ता। सङ्कल्पे सोपानत्वारोपाद् रूपकम्, सोपानारोहणरूपं कारणं दमयन्त्यां, दीर्घश्वासत्यागरूपं कार्य्यञ्च नले इति कार्य्यकारणयोर्भिन्नदेशतायामसङ्गत्यलङ्कारः, अवाप्येति प्रतीयमाना क्रियोत्प्रेक्षा चेति सङ्करः ॥ १०६ ॥

'नलो मन्त्रलक्षणां शक्तिं प्रयुङ्क्ते, नलः एवंविधं मन्त्रं करोतीति नलशत्रोर्मदनस्याग्रे मदन-मित्रेण कथनीयम्। नीतिज्ञा हि मित्रमित्रेणापि रिपुमन्त्रभेदं कुर्व्वन्ति, तच्चन्द्रमित्रेण नलमुखेन कृतमिति भावः। मुखे पाण्डुतादिगुणदर्शनादतिशयेन त्वद्विषयां चिन्तां करोतीति स्पष्टं ज्ञायते

स्थितस्य रात्रावधिशय्य शय्यां मोहे मनस्तस्य निमज्जयन्ती ।
आलिंग्य या चुम्बति लोचने सा निद्राधुना न त्वदृतेऽङ्गना वा ॥ १०८ ॥
स्मरेण निस्तक्ष्य वृथैव बाणै-र्लावण्यशेषां कृशतामनायि ।
अनङ्गतामप्ययमाप्यमानः स्पर्द्धान्न सार्द्धं विजहाति तेन ॥ १०९ ॥

पुष्पायुधः कन्दर्पस्तस्य मित्रं सखा यश्चन्द्रस्तेन यत् सख्यं मैत्री तस्य औचिती औचित्यम् । चन्द्रतुल्यत्वान्नलमुखं चन्द्रमित्रं, नलः कामस्य शत्रुः पीड्यमानत्वात्, चन्द्रोऽपि कन्दर्पमित्रं तत् पीड्यविरहिपीड़कत्वात् । मित्रञ्च मित्रस्य कार्यं करोतीति तथोत्प्रेक्षितम् ॥ १०७ ॥

निद्राच्छेदविषयनिवृत्ती कामदशे युगपदाह—स्थितस्येति । रात्रौ शय्यां शयनमधिशय्य अधिरुह्य स्थितस्य, तस्य नलस्य, मनोऽन्तःकरणं, मोहे वैचित्त्ये अथ च मोहनं मोहः शृङ्गारस्तत्र च निमज्जयन्ती तदधीनं कुर्व्वती सती, आलिङ्ग्य अङ्गानि श्लथयित्वा, अथ च आश्लिष्य, या लोचने चक्षुषी, चुम्बति निमीलयति, अथ च वक्त्रसंयुक्ते करोति, सा निद्रा मेध्यामनःसंयोगरूपा, अङ्गना वा नायिका वा, त्वदृते त्वां विना तव वियोगे इत्यर्थः, अधुना इदानीं, न चुम्बतीत्यनुषञ्जनीयम् । विद्यत इति शेष इति बहवः । तव विरहे तस्य निद्रा न भवति इतराङ्गना च तस्मै न रोचत इति भावः । अत्र श्लेषादेकप्रयत्नेन निद्राच्छेदरूपा विषयनिवृत्तिरूपा च दशाद्वयमुक्तमतः क्रमोल्लङ्घनं न दोषायेति बोध्यम् । शय्यामिति 'यत्रार्थोऽधिष्ठादेरि'त्यनेनाधिकरणस्य कर्मत्वम् । अधिशय्येति अधिपूर्व्वात् शीङः, 'क्त्वा यच् क्यचोश्चे'ति शीङः शेभावः, 'शीङोऽङ्यि' इत्ययादेशः ॥ १०८ ॥

तनुतारूपां दशामाह—स्मरेणेति । स नलः, स्मरेण कामेन, वाणैर्निस्तक्ष्य तनूकृत्य निर्भिद्य, लावण्यस्य सौन्दर्यस्य शेषोऽल्पता यस्यां तादृशीं, कृशतां वृथैव मिथ्यैव, अनायि प्रापितः । यतोऽयं नलोऽनङ्गताम् अतिक्षीणशरीरताम्, अथ च शरीरशून्यताम्, आप्यमानोऽपि नीयमानोऽपि, तेन स्मरेण सार्द्धं सह, स्पर्द्धां साम्याभिमानं, न विजहाति न त्यजति । पूर्वं लावण्यसाम्यात् स्पर्द्धा स्थिता, अधुना तु तादृशलावण्याभावेऽपि अनङ्गतासाम्यात् स्पर्द्धा विद्यत एवेति

---

इत्यर्थः' ना । 'आमन्त्रयते खलु' इति उत्प्रेक्षा, सख्यौचित्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेति संसृष्टिः । 'सप्तम्यर्थे रहोऽव्ययम्' ज ॥ १०७ ॥

'चक्षुरपि चुम्बनस्थानं, तथा च कामशास्त्रम्, "नयनगलकपोलं दन्तवासो मुखान्तः स्तनजघनललाटं चुम्बनस्थानमाहुः" अत्र निद्राच्छेदविषयनिवृत्तिलक्षणे चतुर्थी षष्ठी च कामदशे उक्ते' ना । अत्र निद्राङ्गनयोः प्रस्तुतयोरेवालिङ्गनाक्षिचुम्बनादिधर्म्मसाम्यादौपम्यप्रतीतेः केवलप्रकृतगोचरा तुल्ययोगितालङ्कारः' जी । छेकानुप्रासश्चेति संसृष्टिः ॥ १०८ ॥

अत्र अङ्गकृशतारूपकारणे सत्यपि स्पर्द्धात्यागरूपतत्कार्यानुदयात् विशेषोक्तिः, अनङ्गतामिति नलपक्षे कृशता, कामपक्षे अङ्गरहितताचेत्यनयोर्भेदेऽपि श्लेषबलेनाभेदप्रतिपादनादति-

त्वत्प्रापकात्त्रस्यति नैनसोऽपि त्वय्येकदास्येऽपि न लज्जते यत् ।
स्मरेण बाणैरभितक्ष्य तीक्ष्णैर्लूनः स्वभावोऽपि कियान् किमस्य ॥ ११० ॥
स्मारं ज्वरं घोरमपत्रपिष्णोः सिद्धागदंकारचये चिकित्सौ ।
निदानमौनादविशद्विशाला सांक्रामिकी तस्य रुजेव लज्जा ॥ १११ ॥

भावः । अनङ्गतेत्यत्र नलपक्षे नञ ईषदर्थकत्वं, कामपक्षे अभावार्थकत्वम् । लावण्यशेषां लावण्यमात्रावशिष्टामिति बहवः । निस्तक्ष्येति तक्ष तनूकरणे ॥ १०९ ॥

त्रपानाशरूपां दशामाह –त्वत्प्रापकादिति । हे भैमि ! एष नलः, त्वां प्रापयतीति तादृशात्, एनसोऽपि पापादपि युद्धहरणादिपापकर्म्मणोऽपीत्यर्थः, न त्रस्यति न बिभेति, किञ्च, त्वयि एकदास्ये ऽपि केवलदासत्वेऽपि यद्यस्मात् न लज्जते न सलज्जो भवति, तत् किं स्मरेण बाणैर-भितक्ष्य शरीरमतिकृशीकृत्य, अस्य नलस्य, कियान् कश्चित् स्वभावोऽपि प्रकृतिरपि लूनश्छिन्नः । न केवलं शरीरस्य कृशता जाता किन्तु स्वभावस्याप्यल्पता जातेत्यर्थः । पूर्वं धर्म्मशीलत्वा-द्राजत्वाच्च पापाद्भयं दास्ये च लज्जा आसीदधुना तु त्वत्प्राप्तिलोभेन तत् सर्वं परित्यक्तमिति भावः । 'कलुषं वृजिनैनोऽघमंहोदुरितदुष्कृतम्' अ ॥ ११० ॥

पूर्वरागेऽपि केचित् ज्वररूपां कामदशां वर्णयन्तीति तामप्याह –स्मारमिति । अपत्रपिष्णोर्लज्जा-शीलस्य तस्य नलस्य, विशाला अतिमहती, लज्जा सांक्रामिकी संसर्गेण संक्रमणशीला, रुजेव रोग इव, सिद्धागदङ्कारचये चिकित्साख्यातवैद्यसमूहे, निदानस्य आदिकारणस्य यत् मौनं ज्ञात्वापि लज्जयाकथनं तस्मादविशत् प्रविष्टा । किम्भूते ? घोरं दारुणं, स्मारं ज्वरं विरहज्वरं, चिकित्सौ प्रतिकुर्वाणे । इवोत्प्रेक्षायाम् उपमायां वा । ज्वरस्यादिकारणम् विप्रलम्भं ज्ञात्वापि किमिदमेतस्या-प्येतादृशो भावस्तत् कथमिदं जनसमक्षमुच्यतामिति लज्जैव चिकित्सकानां निदानाकथनहेतुः । रोगा

---

शयोक्तिः, कृशताया वृथात्वं प्रति चतुर्थपादवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, छेकानु-प्रासश्च ॥ १० . ॥

'त्रपानाशरूपा सप्तमी दशा उक्ता । त्वत्प्रापकादित्यादिना त्वदन्यविषयनिवृत्तिरेव तात्-पर्य्यवृत्त्या वर्ण्यते इति श्लोकतात्पर्य्यम् । अतितक्ष्येति स्वभावापगमे हेतुत्वार्थमुक्तम्, ननु तनुतावस्थाप्रतिपादनार्थम् । शरीरस्यातितक्षणे स्वभावस्य लूनत्वं सम्भाव्यते इति द्योतनार्थ-मतिशब्दतीक्ष्णशब्दप्रयोगौ' ना । 'एतेन स्वभावादयं पापभीरुः सलज्जश्चेति सूचितम्' भ । शरीरस्यातिकार्श्यात् स्वभावस्यापि कार्श्यं जातमिति सहेतुकोत्प्रेक्षालङ्कारः ॥ ११० ॥

'क्षयादिव्याधिः क्षयिणं परित्यज्य यथान्यं संसर्गिणं प्रविशति, तथा लज्जाशीलस्य तस्य लज्जया भवितव्यम् । स च तं विहाय वैद्यसमूहे दृश्यते, कार्श्ये निदानाज्ञानात्' ना । रुजेवेति श्रौती उपमा, नलस्य लज्जा वैद्ये आविशदिवेति प्रतीयमाना क्रियोत्प्रेक्षा, लज्जारूपकार्य्यस्य काम-

विभेति रुष्टासि किलेत्यकस्मात् स त्वां किलोपैति हसत्यकाण्डे ।
यान्तीमिव त्वामनुयात्यहेतो-रुक्तस्त्वयेव प्रतिवक्ति मोघम् ॥ ११२ ॥
भवद्वियोगाच्छिदुरार्त्तिधारा-यमस्वसुर्मज्जति निःशरण्यः ।
मूर्छामयद्वीपमहान्ध्यपङ्के हाहा महीभृद्भटकुञ्जरोऽयम् ॥ ११३ ॥

हि सांक्रामिका भवन्ति । तथाच वैद्यकम् । 'सर्वे सञ्चारिणो रोगा वर्जयित्वा विसूचिकाम्' इति । 'अक्षिरोगो ज्वरः कुष्ठं तथापस्मार एव च । सह भुक्तादिसम्बन्धात् संक्रामन्ति नरान्तरम्' इति च । 'रोगहार्यगदङ्कारो भिषग्वैद्यश्चिकित्सकः' अ ॥ १११ ॥

उन्मादरूपां दशामाह —बिभेतीति । स नलः, हे दमयन्ति ! रुष्टासि कुपितासि, किलेति सम्भाव्य, अकस्मात् निष्कारणमेव, बिभेति सभयो भवति । तथा किल मिथ्याभूतां त्वाम्, उपैति उपगच्छति। एवम् अकाण्डे अनवसर एव, हसति त्वत्प्राप्तिं विनापि सुखातिशयात् हास्यं करोति । यान्तीमिव गच्छन्तीमिव, त्वाम् अनु लक्षीकृत्य, अहेतोरकारणात् याति । त्वया उक्त इव सम्भाषित इव, मोघं वृथा, प्रतिवक्ति प्रत्युत्तरं ददाति । एतानि उन्मादचेष्टितान्येव । नव्यास्तु 'अलक्ष्यवाक् प्रलापः स्यादि'त्युक्तलक्षणप्रलापरूपामप्यत्र कामदशां वदन्ति ॥ ११२ ॥

मूर्च्छारूपां दशामाह —भवदिति । भवत्यास्तव वियोगेन विरहेण जनिता अच्छिदुरा निविड़ा या आर्त्तिधारा पीड़ापरम्परा सैव यमस्वसा यमुना तस्याः, मूर्च्छामयो मूर्च्छारूपो यो द्वीपोऽन्तस्तटं तत्र महान्ध्यं महाज्ञानरूपं यत् पङ्कं कर्दमस्तस्मिन्, अयं महीभृत् नलराज एव भटकुञ्जरः सैन्य-हस्ती, महीभृत्सु राजसु मध्ये भटो वीरो नल एव कुञ्जर इति वा । तथाभूतो हाहा अतिकष्टं निःशरण्यो रक्षकरहितः सन्, मज्जति मग्नो भवति । अन्योऽपि हस्ती नद्या द्वीपपङ्के मग्नो भवति । पीड़ायाः श्यामत्वेन वर्णनात् यमुनाया रूपणम् । निःशरण्य इत्यनेन त्वां विना अस्य शरणान्तरं नास्ति अतस्त्वमेव शरणं भवेति सूचितम् । केचित्तु महीभृद्भटकुञ्जरो राजयोधश्रेष्ठ इति

---

ज्वररूपकारणस्य च भिन्नदेशतया असङ्गत्यलङ्कारः । 'अत्र वैद्येषु विषये लज्जान्तरस्यारोपाद् अपह्नुतिरुपमालङ्कारः' सा । अनेन तपानाशः पुनरुक्तः ॥ १११ ॥

'सर्व्वोऽप्ययमुन्मादानुभावः । उन्मादः चित्तविभ्रमः' जी । 'अत्र उत्प्रेक्षालङ्कारः' सा । विभेत्याद्यनेकक्रियासु स इत्येकस्य कर्त्तृकारकत्वेनान्वयात् दीपकालङ्कारः ॥ ११२ ॥

'पीड़ायाः श्यामत्वेन वर्णनात् यमुनासादृश्यम्, एवं मोहस्यापि श्यामत्वेन वर्णनात् यमुना-द्वीपस्य सादृश्यम्, तस्य (अज्ञानस्य) दुःखहेतुत्वात् पङ्कसादृश्यम्' भ । 'अन्योऽपि कुञ्जरो हस्तिपकं विना नद्या द्वीपपङ्के ब्रुडति, पङ्कमग्नो गजो नोद्धर्त्तुं शक्यते इति मूर्च्छावस्था । एवं नवावस्थासूचकाः श्लोकाः 'लिपिम्' इत्यादयो यथायथमूह्याः । भवत्या वियोग इति 'सर्व्व-नाम्नो वृत्तिमात्रे' इति पुंवत् । अच्छिदुरेति 'विदिभिदि' इति कुरच्' ना । 'रूपकालङ्कारः, अर्त्तिधारायास्तमोविकारत्वेन रूपसाम्याद् यमुनारूपणम्' जी ॥ ११३ ॥

सव्यापसव्यत्यजनाद् द्विरुक्तैः पञ्चेषुवाणैः पृथगर्जितासु।
दशासु शेषः खलु तद्दशा या तया नभः पुष्पतु कोरकेण ॥ ११४ ॥
त्वयि स्मराधेः सततास्मितेन प्रस्थापितो भूमिभृतास्मि तेन।
आगत्य भूतः सफलो भवत्या भावप्रतीत्या गुणलोभवत्याः ॥ ११५ ॥

व्याचक्षते तन्न समीचीनम्, अस्य साङ्गरूपकविषयतया सति कुञ्जरशब्दे समस्तवस्तुविषयमेव वक्तुं युक्तत्वात् ॥ ११३ ॥

व्यतिरेकमुखेण मरणरूपां दशामाह—सव्यापसव्येति। सव्यापसव्ययोर्वामदक्षिणयोर्यत् त्यजनं मोचनं तस्मात्, द्विरुक्तैर्द्विगुणैर्दशभिरित्यर्थः, पञ्चेषुवाणैः कामशरैः, पृथक् प्रत्येकम् अर्जितासु उत्पादितासु दशासु दशसु कामावस्थासु मध्ये, शेषोऽवशिष्टा या तस्य नलस्य दशा मरणलक्षणा तया, कोरकेण कलिकया, नभः आकाशमेव, खलु निश्चितं, पुष्पतु पुष्पितं भवतु सा गगनकुसुमरूपा भवत्वित्यर्थः, सा नैव भवत्विति यावत्। एकैकेन कामवाणेनान्येषां दश दशा भवन्ति, अनेन तु नवमीपर्य्यन्तमनुभूतं, दशम्या अयमवसरः, अतोऽधुना तव लाभश्चेत् सा न भविष्यतीति भावः। दशम्या दशाया अमङ्गलतया नामग्रहणानर्हत्वात् यच्छब्दप्रयोगः। तथाचोक्तं—'रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसा काक्षितं तथा। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः' इति। अत्र मरणस्य जातप्रायत्वमुक्तम्। शेषशब्दस्याजहल्लिङ्गत्वान्न दशया सामानाधिकरण्यविरोधः। दश दशा यथा—'नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः' इति। नव्यास्तु—'अभिलापश्चिन्ता स्मृतिगुणकथनोद्वेगसंप्रलापाश्च। उन्मादोऽथ व्याधिर्जडता मृतिः इति दशात्र कामदशा' इत्यभिलापादिका एव पूर्वरागे दशा वदन्ति ॥ ११४ ॥

प्रकृतमनुसरन्नाह त्वयीति। स्मराधेः कामजनितमानसपीड़ातः, सततं सर्वदा नास्ति

---

'द्विरुक्तशब्दो लक्षणया द्विगुणपर्य्यायः। शेषशब्दस्त्रिलिङ्गः, अभिधेयलिङ्गत्वात्' ना। "यथासंख्यमलङ्कारः" सा। अत्र इषुवाणशब्दयोरापाततः पुनरुक्ततया प्रतीतेः, पर्यवसाने च पञ्चेषोर्वाणैरितिबोधाद् भिन्नाकारशब्दत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, कोरकेणेति रूपकम्, मरणदशारूपकोरकेण नभःपुष्पणासम्भवात् नलमरणदशा आकाशकोरकवदलीका भवत्विति सादृश्याक्षेपाद् असम्भवद्वस्तुसम्बन्धा निदर्शनाचेत्येतेषां सङ्करः। कोरकत्वमनुद्भूतत्वम्, अतोमरणस्याप्यनुद्भूतत्वरूपप्रागवस्था व्यज्यते इति रूपकालङ्कारेण वस्तुध्वनिः। अनेन नलस्य दशमी दशा यथा न भवेत् तथा तं त्वरा कार्येति वस्तुध्वनिः। मरणदशाया अशुभत्वेन नामग्रहणानर्हत्वान्न तच्छब्दप्रयोगः, तेनामङ्गलव्यञ्जकाश्लीलतादोषोऽपि परिहृतः ॥ ११४ ॥

'नलस्त्वत्सदृशो गुणी त्वञ्च गुणानुरागिणी, स्वत एव तस्मिन्ननुरक्तेति ज्ञात्वा कृतार्थोजातोऽ-

धन्यासि वैदर्भि गुणैरुदारै-र्यया समाकृष्यत नैषधोऽपि ।
इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥ ११६ ॥
नलेन भायाः शशिना निशेव त्वया स भायान्निशया शशीव ।
पुनःपुनस्त्वद्युगयुग्विधाता योग्यामुपास्ते नु युवां युयुक्षुः ॥ ११७ ॥

स्मितं हास्यं यस्य तादृशेन, तेन भूमिभृता राज्ञा नलेन, त्वयि विषये, प्रस्थापितोऽस्मि । सोऽहमागत्य गुणेषु लोभवत्या अनुरागिण्या भवत्यास्तव, भावप्रतीत्या तं प्रति चित्तविकारज्ञानेन अभिप्रायज्ञानेन वा, सफलो भूतः कृतकार्यो जातः ॥ ११५ ॥

प्ररोचयन्नाह –धन्यासीति । हे वैदर्भि दमयन्ति ! त्वं धन्यासि प्रशंसनीया भवसि, यया त्वया उदारैरतिरमणीयैर्गुणैः सौन्दर्यादिभिः, नैषधोऽपि अतिधीरो नलोऽपि, समाकृष्यत सम्यगाकृष्टः । धन्यत्वं द्रढयति –खलु यस्माच्चन्द्रिकाया, इतः परा का स्तुतिः, यदब्धिमपि अतिगाम्भीर्य्यवन्तं समुद्रमपि, उत्तरलीकरोति चञ्चलीकरोति । प्रतिवस्तूपमेयम् ॥ ११६ ॥

आशीर्वादेन संतोषयति –नलेनेति । हे भैमि ! त्वं नलेन भायाः शोभस्व, यथा शशिना चन्द्रेण निशा रात्रिः शोभते । स नलस्त्वया भायात् शोभतां, यथा शशी चन्द्रो निशया रात्र्या शोभते । उभाभ्यामेव उभावपि व्यतिभातामित्यर्थः । उत्प्रेक्षते नूत्प्रेक्षायां, युवां त्वां नलञ्च,

स्मीति भावः' ना । 'अत्र अनियतदेशावयवं यमकालङ्कारः' सा । वृत्त्यनुप्रासश्च ॥ ११५ ॥

'या ईदृशं धीरं वशीकरोति, ततः परा का धन्येत्यर्थः । तद्वशीकरणमेव तवस्तुतिर्धन्यता च । अत्रच वैदर्भी काव्यरीतिः गुणैः श्लेषादिभिरलङ्कारैः । अन्यदपि विशालै र्दोरकैराकृष्यते' ना । 'अत्र प्रतीपमलङ्कारः' सा । 'दृष्टान्तालङ्कारः । तेन नलस्य समुद्रगाम्भीर्यं दमयन्त्या श्चन्द्रिकासौन्दर्यं व्यज्यते' जी । अत्र समाकर्षणमुत्तरलीकरणञ्च क्रियैकैव पौनरुक्तनिरासाय भिन्नवाचकतया निर्दिष्टा, अनया च अब्धिनलयोः चन्द्रिकादमयन्त्योश्च साम्यस्य गम्यत्वात् प्रतिवस्तूपमालङ्कारः इति दर्पणकृत् । मल्लिनाथस्य तु समाकर्षणोत्तरलीकरणयोर्भेदाभिमानाद् दृष्टान्तालङ्कारोक्तिः । अनयोः क्रिययोः भेदाभेदसन्देहात् दृष्टान्ततुल्ययोगितयोः सन्देहसङ्करः इति रम्यम् ॥ ११६ ॥

'शिल्पी रमणीयं वस्तु संघट्टयितुमभ्यासं करोति, अन्यथा चन्द्रनिशयोः पुनःपुनर्योजनं व्यर्थं स्यादित्यर्थापत्तिः ( योगाभ्यासे ) प्रमाणम्' ना । 'अलोपमोत्प्रेक्षालङ्कारः । आशीर्वादप्रतिपादनादाशीरलङ्कारोऽपि' सा । 'अत्र दमयन्तीनलयोरन्योन्यशोभाजननोक्तेरन्योन्यालङ्कारः । सच 'निशेव' 'शशीव' इत्युपमाद्वयानुप्राणित इति सङ्करः, तन्मूला चेयं विधातुः पुनः पुनः निशाशशियोजनायां दमयन्तीनलयोजनार्थाभ्यासत्वोत्प्रेक्षेति सङ्करः' जी । वृत्त्यनुप्रासश्छेकानुप्रासश्चेति ॥ ११७ ॥

स्तनद्वये तन्वि ! परं तवैव पृथौ यदि प्राप्स्यति नैषधस्य ।
अनल्पवैदग्ध्यविवर्द्धिनीनां पत्रावलीनां रचना समाप्तिम् ॥ ११८ ॥
एकः सुधांशुर्न कथञ्चन स्या-त्तृप्तिक्षमस्त्वन्नयनद्वयस्य ।
त्वल्लोचनासेचनकस्तदस्तु नलास्यशीतद्युतिसद्वितीयः ॥ ११९ ॥

युयुक्षुर्योक्तुमिच्छुर्विधाता ब्रह्मा, पुनः पुनर्वारंवारं, तयोर्निशाचन्द्रयोर्युगं युग्मं युनक्तीति तादृशः सन्, योग्याम् अभ्यासम् उपास्ते करोति। अन्योऽपि शिल्पी रमणीयं वस्तु घटयितुम् अभ्यासम् करोति। 'योग्याभ्यासार्कयोषितोः' वि ॥ ११७ ॥

त्वां विना तस्य शिल्पनैपुण्यं व्यर्थमित्याह —स्तनद्वय इति। हे तन्वि कृशाङ्गि दमयन्ति! नैषधस्य नलस्य, अनल्पं बहुतरं यत् वैदग्ध्यं नैपुण्यं तस्य विवर्द्धिनीनां सूचिकानां, पत्रावलीनां चित्रपङ्क्तीनां, रचना करणं, यदि समाप्तिं संपूर्णतां, प्राप्स्यति तर्हि परं केवलं तवैव पृथौ अतिमहति स्तनद्वये, न त्वन्यासां, तासाम् एतादृक्स्तनप्राशस्त्याभावात् ॥ ११८ ॥

नलस्ते नयनप्रीतिकरो भविष्यतीत्याह --एक इति। हे दमयन्ति! एकः सजातीयशून्यः, सुधांशुश्चन्द्रः, कथञ्चन केनापि प्रकारेण, त्वन्नयनद्वयस्य तव चक्षुर्द्वयस्य, तृप्तिक्षमो न स्यात् प्रीतिजननसमर्थो न भवेत्, तत्तस्मात्, स चन्द्रः, नलास्यं नलमुखलक्षणो यः शीतद्युतिश्चन्द्रस्तेन सद्वितीयः सजातीयसहितः सन्, त्वल्लोचनासेचनकः तव चक्षुषोरसीमप्रीतिजनकोऽस्तु भवतु। चन्द्र इव नलमुखं तव नयनप्रीतिं जनयिष्यतीति भावः। 'तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' अः ॥ ११९ ॥

"अत्र 'यदि' सम्भावनायां, वा एवं सम्भाव्यते, समाप्तिं प्राप्स्यति पृथुत्वात्। एतेन तस्याः स्तनयोः तस्य अशेषालेख्यनैपुण्यं दर्शितम्" भ। "पृथुशब्दस्य भाषितपुंस्कत्वाद्विकल्पेन पुंवद्भावः" जी। तवैव स्तनद्वये ( नत्वन्यस्या इतीतरव्यावृत्तेर्गम्यमानत्वात् ) आर्थी परिसंख्यालङ्कारः ॥ ११८ ॥

"चकोरतुल्यस्य त्वन्नेत्रद्वयस्यैकेन चन्द्रेण तृप्त्यभावाच्चन्द्रद्वयेन भवितव्यम्, तत्र चन्द्रसहकारी नलास्यचन्द्रो भवतु इत्यभिप्रायः। तत्प्राप्त्यर्थं यत्नः कार्यः इतिभावः" ना। 'अथच कामोद्दीपकत्वात् तद्विरहे चन्द्रो न तृप्तिहेतुस्तत्सन्निधावेवायमानन्दकरः स्यादितिभावः' भ। अत्र-रूपकमलङ्कारः' सा। नव्यमते नलास्ये शीतद्युतित्वारोपस्य प्रकृतासेचनकत्वोपयोगित्वात् परिणामालङ्कारो युक्तः। तथा एकचन्द्रस्य तृप्तिक्षमत्वेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः। छेकानुप्रासश्च ॥ ११९ ॥

अहो तपःकल्पतरुर्नलीय-स्त्वत्पाणिजाग्रस्फुरदङ्कुरश्रीः ।
त्वद्भ्रूयुगं यस्य खलु द्विपत्री तवाधरो रज्यति यत्कड़म्बः ॥ १२० ॥
यस्ते नवः पल्लवितः कराभ्यां स्मितेन यः कोरकितस्तवास्ते ।
अङ्गम्रदिम्ना तव पुष्पितो यः स्तनश्रिया यः फलितस्तवैव ॥ १२१ ॥
[ युग्मकम ]

कांसीकृतासीत् खलु मण्डलीन्दोः संसक्तरश्मिप्रकरा स्मरेण ।
तुला च नाराचलता निजैव मिथोऽनुरागस्य समीकृतौ वाम् ॥ १२२ ॥

नलपुण्यातिशयेनैव त्वमेतादृशी जातेति युग्मकेनाह—अहो इति । नलीयो नलसम्बन्धी, तप एव कल्पतरुः कल्पवृक्षः, अहो आश्चर्यरूपः। आश्चर्यरूपत्वं दर्शयति, कीदृशः कल्पतरुः ? त्वत्पाणिजाग्रेषु तव नखाग्रेषु स्फुरन्ती प्रकाशमाना अङ्कुरश्रीरङ्कुरशोभा यस्य, त्वत्पाणिजाग्रमेव स्फुरंती अङ्कुरश्रीर्यस्येति वा तादृशः। तथा खलु निश्चये, त्वद्भ्रूयुगं तव भ्रूद्वयमेव यस्य तपःकल्पतरोर्द्विपत्री पत्रद्वयं, तव अधर एव यस्य कड़म्बः पत्राङ्कुरो नालमित्यर्थः, रज्यति स्वयमेवा रक्तो भवति शोभते वा। रज्यतीति कुषिरन्जोरित्यादिना कर्मकर्त्तरि परस्मैपदं यक्च, दैवादिकोऽपि रन्जधातुरस्ति। 'कड़म्बः सायके नीपे नाले शाके कलम्ब्यपि' वि ॥ १२० ॥

यस्ते इति। यो नलीयस्तपःकल्पतरुः ते तव, कराभ्यां नवो नवीनः, पल्लवितः जातपल्लवः कोमलत्वाद्रक्तत्वाच्च तव करावेव पल्लवस्थाने जातावित्यर्थः। यस्तव स्मितेन ईषद्धसनेन कोरकितो जातकलिक आस्ते स्मितस्य शुभ्रत्वात् कोरकत्वम्। यस्तव अङ्गम्रदिम्ना शरीरमार्दवेन, पुष्पितः जातकुसुमः। यस्तवैव स्तनश्रिया कुचशोभया, फलितः संजातफलः। अन्यस्य कल्पतरोरङ्कुरादीनि क्रमेण जायन्ते, अस्य तु सर्व्वं युगपदुत्पन्नमित्याश्चर्यरूपत्वम्। नवः पल्लवित इति व्युत्पत्तिवैचित्र्यान्नवत्वस्य पल्लवेऽन्वयः। युग्मकम् ॥ १२१ ॥

तयोरनुरागसाम्यमाह—कांसीकृतेति। हे दमयन्ति ! खलूत्प्रेक्षे - वां युवयोः मिथोऽनुरागस्य परस्परानुरागस्य, समीकृतौ तुलनेन साम्यकरणे, स्मरेण कामेन, इन्दोश्चन्द्रस्य मण्डली विम्बं,

प्रथमाङ्कुरापेक्षया मध्यमाङ्कुरस्यातिरक्तत्वात् अधरोरज्यति इत्युक्तम्, अन्यत्र वृक्षे अङ्कुरद्विपत्रकलम्बादीनां क्रमेण उत्पत्तिः, अस्मिन् नलीयतपःकल्पतरौ तु एककालमेवेति अहो शब्द आश्चर्यं द्योतयति। पल्लवितादिचतुष्टये तारकादित्वादितच्। "अत्र श्लोकद्वयेन तपसि दमयन्तीनखादिषु च कल्पतरुत्वावयवत्वरूपणात् सावयवरूपकम्। तथावयविनः कल्पतरोरवयवानां नखाङ्कुरादीनाञ्च मिथः कार्यकारणभूतानां भिन्नदेशत्वादसङ्गत्याश्रितमिति सङ्करः" जी ॥ १२०—१२१ ॥

"अत्र इन्दुमण्डलादौ कंसादिरूपणादेव स्मरे तोलकत्वरूपणसिद्धेः एकदेशविवर्त्तिरूपकम्" जी। वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १२२ ॥

सत्त्वस्रुतस्वेदमधूत्थसान्द्रे तत्पाणिपद्मे मदनोत्सवेषु।
लग्नोत्थितास्त्वत्कुचपत्रलेखा-स्तन्निर्गतास्तं प्रविशन्तु भूयः॥ १२३॥
बन्धाढ्यनानारतमल्लयुद्ध-प्रमोदितैः केलिवने मरुद्भिः।
प्रसूनवृष्टिं पुनरुक्तमुक्तां प्रतीच्छतं भैमि युवां युवानौ॥ १२४॥

कांसीकृतासीत् कांस्यनिर्मितपरिमेयवस्तुपात्रीकृता बभूव, परिमाणपात्रीकृतासीद्वा। किम्भूता? संसक्ताश्चतुर्दिक्षु तुलादण्डसम्बद्धा रश्मयो रज्जुसमूहरूपाः प्रकराः प्रकृष्टकिरणा यस्याः सा। तुलादण्डं विना परिमाणं न भवतीति तमपि घटयति, निजैव स्वीयैव नाराचलता सरलत्वात् बाणलता, तुला च तुलादण्डश्च कृतासीदित्यनुषङ्गः। कांसीकृतेति कंसविकारा कांसी मानार्थकत्वे तु कंस एव कांसः स्वार्थे टण्, अभूततद्भावविवक्षायां च्विः। 'कंसोऽस्त्री तैजसद्रव्ये कांस्ये मानेऽसुरे तु ना' मे। 'किरणप्रग्रहौ रश्मी' अः॥ १२२॥

पद्यद्वयेन नलेन सार्द्धं भाविरतिकेलिवर्णनया भैमीमाह्लादयन्नाह—सत्त्वेति। हे दमयन्ति! मदनोत्सवेषु सुरतेषु, सत्त्वेन सत्त्वभावेन, स्रुतः क्षरितो यः स्वेदो घर्मजलं स एव मधूत्थं सिक्थकं, तेन सान्द्रे निविडे, तत्पाणिपद्मे नलकरकमले, लग्नोत्थिताः आदौ लग्नाः सम्बद्धाः पश्चादुत्थिता विमर्द्दनेन अयथास्थानं प्रापिताः त्वत्कुचपत्रलेखाः तव स्तनोपरिरचितपत्रावल्यः, तन्निर्गतास्ततः कुचाद्बहिर्गताः सत्यः, भूयः पुनरपि, तं कुचमेव प्रविशन्तु कुचलग्ना भवन्तु। केचित्तु तमित्यस्य स्थाने तदिति पाठं प्रकल्प्य तत्पाणिपद्मं प्रविशन्त्विवति व्याचक्षते। 'मधूत्थं सिक्थकं समम्, वलः॥ १२३

बन्धाढ्येति। हे भैमि! युवानौ तरुणौ युवां केलिवने क्रीडाकानने, मरुद्भिर्वायुभिः, पुनरुक्तमुक्तां पुनः पुनस्त्यक्तां, प्रसूनवृष्टिं पुष्पवृष्टिं, प्रतीच्छतं गृह्णीतं, किम्भूतैर्वायुभिः? बन्धाढ्यं स्मरचक्र-विपरीतादिनानारतिप्रभेदात्मकं यत् नानारतमनेकप्रकारसुरतं तदेव मल्लयुद्धं तेन प्रमोदितैः, पुष्पाणां विमर्दनात् प्रमोदं प्रकृष्टसौरभं प्रापितैः, अथ च प्रहृष्टैः। अन्यावपि मल्लौ मल्लयुद्धहृष्टै-र्मरुद्भिर्देवैर्मुक्तां पुष्पवृष्टिं गृह्णीतः। युवानाविति युवतिश्च युवा चेत्येकशेषः 'मरुतौ पवनामरौ' अः॥ १२४॥

'कारणे कार्यालयः उचित इति भावः, मधूत्थे यथालिखितम् (चित्रादि) एतीति मधूत्थ-पदम्' ना। एतत् स्फुटीभूतं जीवातौ "मधूच्छिष्टे निकषस्थकनकरेखावदि"ति। "आशी-रलङ्कारः रूपकंच" सा॥ १२३॥

'अत्र रूपकप्रतीयमानोत्प्रेक्षाश्लेषालङ्कारसंसृष्टिः' सा। "मरुतो देवा नानामल्लयुद्धहृष्टाः मल्लयोरुपरि शश्वत् पुष्पवृष्टिं कुर्वन्तीति (श्लेषात्) वस्तुध्वनिः' भ। नवीनमते चात्र श्लेष-मूलकवस्तुध्वनिरेव, तर्कवागीशपादैरप्ययमर्थः टीकायां 'अन्यावपी'त्यादिना स्फुटीकृतः॥ १२४॥

अन्योऽन्यसङ्गमवशादधुना विभातां
तस्यापि तेऽपि मनसी विकसद्विलासे।
स्रष्टुं पुनर्म्मनसिजस्य तनुं प्रवृत्त-
मादाविव व्यणुककृत्परमाणुयुग्मम् ॥ १२५ ॥
कामः कौसुमचापदुर्जयममुं जेतुं नृपं त्वां धनु-
र्वल्लीमव्रणवंशजामधिगुणामासाद्य माद्यत्यसौ।
ग्रीवालङ्कृतिपट्टसूत्रलतया पृष्ठे कियल्लम्बया
भ्राजिष्णुं कषलेखयेव विलसत्सिन्दूरसौन्दर्य्यया ॥ १२६ ॥

पुनराशिषा सन्तोषयन्नाह—अन्योऽन्येति। अधुना इदानीम्, अन्योऽन्यसङ्गमवशात् परस्परसम्बन्धवशात्, विकसन् आविर्भवन् विलासः कामविकारविशेषो ययोस्तादृशे, तस्यापि नलस्यापि, तेऽपि तवापि, मनसी उभे चित्ते, विभातां शोभेताम्। अत्रोत्प्रेक्षते— मनसिजस्य कामस्य तनुं शरीरं, पुनः स्रष्टुं निर्म्मातुं, प्रवृत्तं जातक्रियम्, अतएवादौ द्व्यणुकं करोतीति तादृशं परमाणुयुग्ममिव द्वौ परमाणू इव। परमाणुद्वयेन हि प्रथमं द्व्यणुकमारभ्यते, एवं क्रमेण महत् कार्यं जन्यते। प्रकृते भगवच्छिवकोपेन दग्धशरीरस्य कामस्य मनसिजत्वात् पुनः शरीरान्तरोत्पत्तौ परमाणुस्वरूपं युवयोर्मनोद्वयमेव द्व्यणुकं जनयित्वा कारणं भविष्यतीत्युत्प्रेक्षा। युवयोः कामोऽनुरागबाहुल्यात् मूर्त्तिमानिव भविष्यतीति भावः। वसन्ततिलकं वृत्तमिदम् ॥ १२५ ॥

श्लोकत्रयेण त्वमेव नलं वशीकरिष्यसीति व्यञ्जयन्नाह—काम इति। असौ कामः, कौसुमचापेन पुष्पमयधनुषा, दुर्जयम् अशक्यजयम्, अमुं नृपं नलराजं, जेतुं त्वां त्वन्मयीं धनुर्वल्लीं धनुर्लताम्, आसाद्य प्राप्य, माद्यति सन्तुष्यति। किंभूताम्? अव्रणवंशजां निर्दोषभीमकुलजाम् अथच घुणादिजन्यव्रणरहितवेणुजाताम्, अधिगुणाम् अतिशयितसौन्दर्यादिगुणयुक्ताम् अथ च आरोपितमौर्वीकां, तथा विलसता विद्यमानेन सिन्दूरेण सौन्दर्यं लौहित्यं यस्यां तथाभूतया, पृष्ठे पृष्ठभागे कियल्लम्बया किञ्चिल्लम्बमानया कषलेखयेव सारपरीक्षार्थतक्षणजन्यरेखातुल्यया, ग्रीवायाः कण्ठस्य

---

"अन्यच्छरीरं पृथिव्यादिपञ्चकेन जन्यते। कामशरीरन्तु मनोद्वयेन, अतोऽत्रोचितमेव मनसिजपदम्" व। 'सक्रियाभ्यां द्वाभ्यां परमाणुभ्यामेकं द्व्यणकमारभ्यते, एवं क्रमेण महत्कार्यमारभ्यते' इति सिद्धान्तः" ना। मनसोऽपि परमाणुरूपत्वं तर्कसिद्धान्तानुमतम्। 'उत्प्रेक्षालङ्कारः' सा। 'ज्ञेयं वसन्ततिलकं तभजा जगौगः' इति वसन्ततिलकच्छन्दोलक्षणम् ॥ १२५ ॥

"कषणधारया धनुर्योग्यवेणुपरीक्षायां निघृष्यमानं सिन्दूरं चलति चेत् तदा परिपाको ज्ञेयः इति धानुष्कप्रसिद्धिः" ना। "कोमलचापेन यो जेतुं न शक्यते तज्जयाय दृढधनुःप्राप्तिः शूराणां

त्वद्गुच्छावलिमौक्तिकानि गुलिकास्तं राजहंसं विभो-
र्वेध्यं विद्धि मनोभुवः स्वमपि तां मञ्जुं धनुर्मञ्जरीम्।
यन्नित्याङ्कनिवासलालिततमज्याभज्यमानं लस-
न्नाभीमध्यविला विलासमखिलं रोमालिरालम्बते॥ १२७॥

अलङ्कृतिरलङ्कारभूता या पट्टसूत्रलता तया, भ्राजिष्णु शोभमानाम्। कामस्य नलवशीकरणहेतुस्त्वां वर्जमन्यो नास्तीति त्वयैव स वश्यो भविष्यतीति भावः। शार्दूलविक्रीडितमिदं वृत्तम्॥ १२६॥

त्वद्गुच्छावलीति। हे दमयन्ति! त्वद्गुच्छावलेस्तव हारविशेषश्रेण्याः मौक्तिकानि मुक्ताफलानि, विभोः प्रभोर्मनोभुवः कामस्य, गुलिकाः वेधनमृद्गोलकान्, विद्धि जानीहि। तथा राजहंसं राजश्रेष्ठं तं नलं, मनोभुवो वेध्यं लक्ष्यं विद्धि। अथ च तं नलं, मनोभुवो वेध्यं राजहंसं पक्षिविशेषं विद्धि। तथा स्वमपि आत्मानमपि तां वक्ष्यमाणप्रकारां मञ्जुं मनोज्ञां मनोभुवोधनुर्मञ्जरीं धनुर्लतां विद्धि। तां कां? तव रोमालिर्लोमावलिर्यस्यास्त्वद्रूपधनुर्मञ्जर्या नित्यं सर्वदा योऽङ्कनिवासो मध्यावस्थानं तेन लालिततमा अतिशयेन शोभमाना या ज्या मौर्वी तया भज्यमानं सेव्यमानमुत्पाद्यमानमित्यर्थः अखिलं समस्तं विलासं शोभाम् आलम्बते आश्रयति। मौर्व्याः स्थाने रोमावलिरेव जातेत्यर्थः। किम्भूता? लसत् शोभमानं नाभीमध्यमेव विलं गुलिकाधारणस्थानं यस्यास्तादृशी। गुलिकाक्षेपणधनुषि गुलिकास्थापनार्थं छिद्रं क्रियते तत्तव नाभिरेवेत्यर्थः। त्वद्रूपेणैव शस्त्रेण नलः कामस्य वश्यो भविष्यति नान्येनेति भावः। 'हारभेदा यष्टिभेदा गुच्छगुच्छार्द्धगोस्तनाः' अः। 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' अ॥ १२७॥

मुदे भवति" व। "अत्र रूपकोपमालङ्कारः" सा। "श्लेषोत्प्रेक्षासङ्कीर्णो रूपकालङ्कारः" जी। सूर्य्याश्वैर्मसजास्ततः सगुरवः शार्दूल विक्रीडितम्' इति वृत्तलक्षणम्॥ १२६॥

"अत्रायमर्थः, कामो गुटिकाधनुर्धरः, तस्य गुटिकास्तव हारमुक्ता एव। त्वमेव धनुर्लता। तव रोमराजिरेव धनुर्गुणः। धनुर्मौर्वीमध्ये गुलिकारोपणस्थानविलं भवति, तदत्र तव नाभिरेव, नल एव वेध्यः" भ। अत्र मौक्तिकादौ गुलिकाद्यवयवरूपणादवयविनि कामे वेद्धृत्वरूपणस्य गम्यमानत्वादेकदेशविवर्त्तिसाङ्गरूपकम्" जी। छेकानुप्रासश्चेति संसृष्टिः। "हंसो लोभपराङ्मुखेऽवनिपतौ हंसो विहङ्गान्तरे। हंसौ विष्णुदिवाकरावपि हयश्रेष्ठो च हंसौ स्मृतौ॥ हंसाः पर्वतयोगिमन्त्रमरुतां भेदास्तु ते च स्मृताः। हंसः स्यात् परमादिरेप परमे पुंसीश्वरे सर्वगे"॥ "अन्येनापि इत्थं गुलिकया राजहंसः पक्षिभेदो विध्यते इति ध्वनिः" भ॥ १२७॥

पुष्पेषुश्चिकुरेषु ते शरचयं त्वद्भालमूले धनू
रौद्रे चक्षुषि तज्जितस्तनुमनुभ्राष्ट्रञ्च यश्चिक्षिपे ।
निर्व्विद्याश्रयदाश्रमं स वितनुस्त्वां तज्जयायाधुना
पत्रालिस्तदुरोजशैलनिलया तत्पर्णशालायते ॥ १२८ ॥

पुष्पेषुरिति । यः पुष्पेषुः कामः, तज्जितः तेन नलेन सौन्दर्य्यादिना पराभूतः सन्, निर्विद्य ईर्ष्यया आत्मानमवज्ञाय, ते तव चिकुरेषु केशेषु शरचयं पुष्पमयवाणसमूहं चिक्षिपे क्षिपति स्म । तथा त्वद्भालमूले तव ललाटमूले भ्रुवि, धनुश्चिक्षिपे । अनुभ्राष्ट्रं भर्जनपात्रसदृशे, रौद्रे रुद्रसम्बन्धिनि चक्षुषि तृतीयनयने, तनुञ्च शरीरञ्च चिक्षिपे । अधुना इदानीं, स कामः वितनुरनङ्गः सन् अथ च विशेषेण कृशः सन्, तस्य नलस्य जयाय, त्वामेवाश्रमं तपोवनम् आश्रयत् आश्रितवान् । तपस्यार्थमित्यर्थात् । तथा तव उरोजौ स्तनावेव शैलौ पर्वतौ तावेव निलयः स्थानं यस्यास्तादृशी पत्रालिः पत्रावलिः, तस्य कामस्य पर्णस्य शालायते उटजवदाचरति । दमयन्त्याः केशस्थपुष्पाणामुद्दीपकत्वात् कामवाणत्वेन रूपणं, भ्रुवोरपि तथात्वात् धनुष्ट्वेन रूपणं, स्तनलिखितपत्रावलीनाम् तथात्वात् कामगृहत्वेन रूपणम् । अन्योऽपि कश्चिद्वीरः केनचिज्जितः सन् आत्मानमवज्ञाय शस्त्रादिकं स्थानान्तरे निक्षिप्य शरीरञ्च वह्न्यादिसेवया कृशीकृत्य कस्मिंश्चित् पर्वते पर्णशालामास्थाय शत्रुपराभवार्थं तपस्यति । कामः त्वयैव नलजयं करिष्यति नान्यथेति भावः । अनुभ्राष्ट्रमिति सादृश्यार्थेऽव्ययीभावः । चिक्षिप इति स्वरितेत्त्वादात्मनेपदम् । तत्त्वज्ञानापदीर्ष्यादेर्निर्व्वेदः स्वावमाननम् । दैन्यचिन्ताश्रुनिश्वासवैवर्णोच्छ्वसितादिकृत्' दर्पणः । 'चिकुरः कुन्तलो बालः' अ, 'मुनीनान्तु पर्णशालोटजोऽस्त्रियाम्' अ ॥ १२८ ॥

"अत्र दमयन्तीबद्धकुसुमैर्भ्रूयुगेन च सह शरचयधनुषोरभेदप्रतिपादनाद्भेदेऽभेदरूपातिशयोक्तिसमासोक्तिरूपकोपमालङ्कारसंसृष्टिः । ननु स्तनयोः शैलत्वादिरूपणमलङ्कारकृतां दूषणम्, यदुक्तं काव्यप्रकाशे –"उपमाया उपमानस्य जातिप्रमाणगतं न्यूनत्वमधिकता वा सादृश्यानुचितार्थत्वं दोषः । यथा –"पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ" इति । सत्यमेतत् – किं त्वत्र निर्भिन्नपुरुषव्यापारवर्त्मने क्रियमाणमेतद्रूपकं गुणातिशयतामेवाश्रयति, न तु दोषताम् । तथा पर्णशालायते इत्युपमाया एतद्रूपकमङ्गम् । यदि चैतन्न क्रियते तदा कवेरनौचित्यं स्यादधुना त्वलङ्कारातिशयप्रतिपादनादौचित्यमेव" सा । "अत्र पूर्वार्द्धे शरचापादीनां पूर्वोक्तपुष्पादिविषयनिगरणेन तदभेदाध्यवसायाद्भेदेऽभेदलक्षणातिशयोक्तिः । तत्पर्णशालायते इत्युपमया चोत्थापितेन त्वामाश्रममितिरूपकेण सङ्कीर्णा व्यञ्जकाप्रयोगाद् गम्या कामस्याश्रमाश्रयणोत्प्रेक्षेति सङ्करः" जी । एकक्षेपणक्रियया प्रकृतानां शरादीनां कर्मत्वेनाभिसम्बन्धात् तुल्ययोगिता च ॥ १२८ ॥'

इत्यालपत्यथ पतत्रिणि तत्र भैमीं
सख्यश्चिरात्तदनुसन्धिपराः समीयुः।
शर्म्मास्तु ते विसृज मामिति सोऽप्युदीर्य्य
वेगाज्जगाम निषधाधिपराजधानीम् ॥ १२९ ॥

चेतोजन्मशरप्रसूनमधुभिर्व्यामिश्रतामाश्रयत्
प्रेयोदूतपतङ्गपुङ्गवगवीहैयङ्गवीनं रसात्।
स्वादं स्वादमसीममिष्टसुरभि प्राप्तापि तृप्तिं न सा
तापं प्राप नितान्तमन्तरतुलामानर्च्छ मूर्च्छामपि ॥ १३० ॥

अथ तत्र भैमीसखीनामागमनं हंसस्य प्रस्थानञ्च युगपदाह—इत्यालपतीति। अथानन्तरं, तत्र पतत्रिणि हंसे, इत्येवं पूर्वोक्तम्, आलपति कथयति सति, चिरात् बहुकालं, तदनुसन्धिपराः दमयन्त्या अन्वेषणे कृतयत्नाः, सख्यो वयस्याः भैमीं समीयुः प्रापुः। सोऽपि हंसोऽपि, हे भैमि! ते तुभ्यं शर्म अस्तु मङ्गलं भवतु, मां विसृज प्रेषय, इति उदीर्य उक्त्वा, वेगात् निषधाधिपस्य नलस्य, राजधानीं नगरीं जगाम गतवान् ॥ १२९ ॥

हंसान्नलगुणं श्रुत्वा तस्मिन् प्रस्थिते भैम्या दौर्मनस्यमाह—चेत इति। सा भैमी, प्रेयसो नलस्य दूतो यः पतङ्गपुङ्गवो हंसश्रेष्ठस्तस्य या गवी वाणी सैव हैयङ्गवीनं ह्योगोदोहोद्भवघृतं तत्, रसादनुरागात्, स्वादं स्वादम् आस्वाद्यास्वाद्य सादरमाकर्ण्येत्यर्थः, तृप्तिं न प्राप्तापि सुखमलभमानापि, अन्तर्मनसि, नितान्तमत्यर्थं, तापं प्राप सन्तापं प्राप्तवती। अतुलां निःसीमां मूर्च्छामपि मोहमपि, आनर्च्छ लेभे। किंभूतं हैयङ्गवीनं? चेतोजन्मनो मनसिजस्य शरप्रसूनानां बाणभूतपुष्पानां मधुभीरसैः अथ च माध्वीकैर्व्यामिश्रतां मेलनम् आश्रयत् प्राप्नुवत् तथा असीमं बहुलम् इष्टसुरभि प्रसिद्धम् अथ च अतिसुगन्धि, नलगुणानामुद्दीपकत्वात् विरहव्यथया तापो मूर्च्छा च तया प्राप्तेत्यर्थः। अन्येऽपि मधुमिश्रितं घृतमास्वाद्य तापं मूर्छाञ्च लभन्ते। घृतं हि मधुमिश्रितं सत् विषं भवति, अतएव ज्योतिषे—'तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्विषं यथेति। सुश्रुतेऽपि 'मधुसर्पिषी मानतस्तुल्ये नाश्नीयाद्' इति। पुङ्गवगवीति 'गोरतद्धितलुकि' इति

"नलपीड़ास्मरणाद् वेगमनम्" ना। छेकानुप्रासोऽलङ्कारः। वसन्ततिलकं वृत्तम् ॥ १२९ ॥

हंसमुखात् नलगुणाकर्णनेन अनुरागबाहुल्यात् तापमोहौ तस्य जातौ इति भावः" ना। "अत्र अतिशयोक्तिसमासोक्तिविषमालङ्कारसंकरः। तत्रातिशयोक्तिर्भेदाभेदरूपा। समासोक्तिर्वैद्यकशास्त्रव्यवहारसमारोपात्" सा। तृप्ताऽपि अन्तस्तापं न प्राप, मूर्च्छामपि नानर्च्छ इति व्याख्याने मधुमिश्रितघृतस्य विषत्वेऽपि तत्पानस्य मरणरूपफलस्याजननेन वैफल्यात् विषमालङ्कारः बोध्यः, अस्मिन् व्याख्याने एव "मधुमिश्रघृतस्य विषत्वात् तत्पानेऽपि तापाद्यभावः

तस्या दृशो वियति बन्धुमनुव्रजन्त्या-
स्तं वाष्पवारि नचिरादवधीबभूव।
पार्श्वेऽपि विप्रचकृपे तदनेन दृष्टे-
रारादपि व्यवदधे न तु चित्तवृत्तेः॥ १३१॥

अस्तित्वं कार्य्यसिद्धेः स्फुटमनुकथयन् पक्षयोः कम्पभेदै-
राख्यातुं वृत्तमेतन्निषधनरपतौ सर्व्वमेकः प्रतस्थे।
कान्तारे निर्गतासि प्रियसखि! पदवी विस्मृता किन्नु मुग्धे!
मा रोदीरेहि यामेत्युपहृतवचसो निन्युरन्यां वयस्याः॥ १३२॥

राजादित्वाट्टः, टित्त्वादी। 'स्वर्गेषु पशुवाग्वज्रदङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः' इति। 'तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम्' अ॥ १३०॥

अथ हंसगमनखिन्नाया भैम्या अस्रुपतनं हंसचिन्तनञ्चाह—तस्या इति। तस्याः भैम्याः, वियति आकाशमार्गे, तं बन्धुं हंसम्, अनुव्रजन्त्या अनुयान्त्या, दृशो दृष्टेः, वाष्पवारि अस्रुजलं, नचिरात् शीघ्रं, यस्मात् अवधीबभूव अनुगमनप्रतिबन्धकमभूत् तत्तस्मात् पार्श्वेऽपि समीपस्थेनापि अनेन हंसेन विप्रचकृपे दूरस्थीभूतम्। भैमी अस्रुजलाविललोचनत्वात् समीपस्थमपि हंसं द्रष्टुमशक्ता-सीदित्यर्थः। तु किन्तु, आरादपि दूरस्थेनापि, तेन हंसेन, चित्तवृत्तेर्न व्यवदधे न व्यवहितीभूतं, दूरगेणापि तस्याश्चिन्ताविषयेण भूतमित्यर्थः। 'ओदकान्तं प्रियं पान्थमनुव्रजेत्' इति वचनात् बान्धवानुगमने जलमवधिभूतम्। अत्रापि नेत्रवारिणोऽनुगमनप्रतिबन्धकत्वादवधित्वमुक्तम्। विप्रचकृपे व्यवदधे इति भावे लिट्। 'आराद्दूरसमीपयोः' अ॥ १३१॥

अथ हंसस्य नलसन्निधिगमनं भैम्याश्च स्वगृहप्रापणमाह—अस्तित्वमिति। तयोर्मध्ये एको हंसः, पक्षयोश्छदयोः, कम्पभेदैश्चालनविशेषैः कार्यसिद्धेर्नलप्राप्तिरूपाया अस्तित्वम् अवश्यम्भावं, स्फुटं यथा तथा, अनुकथयन् भैम्यां सूचयन्निव, निषधनरपतौ नले एतत्सर्वं वृत्तं भैमीदर्शनाला-पादिवृत्तान्तम्, आख्यातुं कथयितुं प्रतस्थे जगाम। तथा वयस्याः सख्यः इत्येवम् उपहृतम्

इति विरोधः स च गवी एव हैयङ्गवीनमिति रूपकोत्थापित इति सङ्करः" जी। विषपान-रूपकारण सति मरणरूपफलाभावात् विशेषोक्तिः, तदेतेषां सङ्करः॥ १३०॥

"अत्र समीपस्थस्य विप्रकृष्टत्वं दूरस्थस्य सन्निकृष्टत्वं चेति विरोधाभासः" जी। "अतिशयोक्तिः" सा। भैम्याः नेत्र मित्रजनानुगामिनो लोकस्य व्यवहारसमारोपात् समासोक्तिः॥ वसन्ततिलकं वृत्तम्॥ १३१॥

"प्रतीयमाना क्रियोत्प्रेक्षा" सा। छेकानुप्रासश्चेति संसृष्टिः। 'म्रभ्नैर्यानां त्रयेण त्रिमुनियति-युता स्रग्धरा कीर्तितेयम्' इति वृत्तलक्षणम्॥ १३२॥

सरसि नृपमपश्यद्यत्र तत्तीरभाजः
स्मरतरलमशोकानोकहस्योपमूलम्।
किसलयदलतल्पम्लापिनं प्राप तं स
ज्वलदसमशरेषुस्पर्द्धिपुष्पर्द्धिमौलेः ॥ १३३ ॥
परवति दमयन्ति! त्वां न किञ्चिद्वदामि
द्रुतमुपनम किं मामाह सा शंस हंस!
इति वदति नलेऽसौ तच्छशंसोपनम्रः
प्रियमनु सुकृतां हि स्वस्पृहाया विलम्बः ॥ १३४ ॥

उच्चरितं वचो याभिस्तथाविधाः सत्यः, अन्यां दमयन्तीं निन्युः तस्मात् स्वालयं प्रापयामासुः। इति किं? हे प्रियसखि! कान्तारे दुर्गमवर्त्मनि, निर्गतासि प्रस्थितासि, नु भो, मुग्धे भ्रान्तचित्ते भैमि! किं त्वया पदवी पन्थाः विस्मृता? मा रोदीः अधुना रोदनं मा कार्षीः। एहि, अस्माभिः सार्द्धमागच्छ, याम वयं सर्व्वाः मिलित्वा गृहं गच्छाम इति। अन्योऽपि हस्तकम्पभङ्ग्या कार्य-सिद्धिं सूचयति। 'कान्तारो वर्त्म दुर्गमम्'। 'अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः' अ। स्रग्धरावृत्तमिदम् ॥ १३२ ॥

अथ हंसस्य नलदर्शनमाह—सरसीति। स हंसः, यत्र सरसि उद्यानतडागे, नृपं नलराजम्, अपश्यत् पूर्वं दृष्टवान्, तस्य सरसस्तीरभाजः कूलस्थितस्य, अशोकानोकहस्य अशोकवृक्षस्य, उपमूलं मूलसमीपे, तं नलं प्राप प्राप्तवान्। किम्भूतं? स्मरेण कामपीड्या तरलं चञ्चलम्, अतएव किसलयदलानां नवपल्लवखण्डानां कोमलाङ्गभेदशङ्कया शिरा-रहितीकृतपल्लवानामित्यर्थः तल्पं शय्यां म्लापयति विरहतापाधिक्यान्मलिनं करोतीति तादृशम्। किंभूतस्याशोकानोकहस्य? ज्वलन्तो दीप्यमाना ये असमशरस्य कामस्य इषवो बाणास्तैः सह स्पर्द्धितुं शीलं येषां तथाविधानां पुष्पाणाम् ऋद्धिः प्राचुर्य्यं यत्र तादृशो मौलिरग्रभागो यस्य तादृशस्य। अशोकपुष्पाणामारक्तत्वात् ज्वलत्कामबाणसाम्यम्। 'अनोकहः कुठः सालः पलाशी द्रुद्रुमागमाः' अः। मालिनीवृत्तमिदम्॥ १३३ ॥

तत्रागत्य हंसो भैमीवृत्तान्तजातमुक्तवानित्याह - परवतीति। हे परवति पित्राद्यधीनत्वात् परतन्त्रे दमयन्ति! त्वां किञ्चिदपि न वदामि अद्यापि नागच्छसीत्यादि नानुयुञ्जे। हंस! त्वं

अत्र 'असमशरेषु इति शरेषुशब्दयोरेकपर्यायत्वेनापाततः पुनरुक्ततया प्रतीतेः कामस्य इषव इति पर्य्यवसाने भेदज्ञानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, "उपमा" सा। छेकानुप्रासश्चेति। 'न न म य य युतेयं मालिनी भोगिलोकैः, इति वृत्तलक्षणम्॥ १३३ ॥

"यदैव तेषां वस्तुप्राप्तुमिच्छा भवति, तदैव पुण्यवशात् प्राप्नुवन्तीति भावः" ना। सामान्येन

कथितमपि नरेन्द्रः शंसयामास हंसं किमिति किमिति पृच्छन् भाषितं स प्रियायाः।
अधिगतमथ सान्द्रानन्दमाध्वीकमत्तः स्वयमपि शतकृत्वस्तत्तथान्वाचचक्षे ॥ १३५ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तार्त्तीयीकतया मितोऽयमगमत्तस्य प्रबन्धे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १३६ ॥

द्रुतं शीघ्रम् उपनम मत्समीपमागच्छ। सा दमयन्ती, मां प्रति, किम् आह वदति तच्छंस कथय। इत्येवं नले वदति भाषमाणे सति, असौ हंसः, उपनम्रः नलसमीपमागतः सन्, तत् भैमीवचनं, शशंस उवाच। नलकथनसमकालमेव कथमयमागत्य तदुक्तवानित्याशङ्क्य समर्थयति — हि यस्मात्, सुकृतां भाग्यवतां जनानां, प्रियं स्वाभीष्टम् अनु लक्षीकृत्य, स्वस्पृहायाः स्वेच्छाया विलम्बः कालक्षेपः इच्छाकरणे यावान् विलम्बो भवतु, इच्छायां सत्यान्तु विलम्बो न भवतीत्यर्थः। परतन्त्रः पराधीनः परवान्नाथवानपि' अ ॥ १३४ ॥

भैमीवृत्तान्तश्रवणेन नलस्यानुरागातिशयं व्यञ्जयति--कथितमपीति। स नरेन्द्रो नलः, कथितमपि उक्तमपि, प्रियाया दमयन्त्या भाषितं वचनं, किमिति पृच्छन् कीदृक् कीदृगिति जिज्ञासमानः सन्, हंसं शंसयामास पुनरपि वादयति स्म। अथानन्तरं सान्द्रो निविडो य आनन्दः स एव मादकत्वात् माध्वीकं मधु तेन मत्तो हृष्टः सन्, अधिगतं हंसमुखाच्छ्रवणात् ज्ञातमपि तत् प्रियाया भाषितं स्वयमपि शतकृत्वोऽनेकवारं, हंसो यथोक्तवान् तथैव अन्वाचचक्षे अनुवदति स्म। अन्तरिति पाठे तु सान्द्रानन्दजनकं यन्माध्वीकं तद्रूपं प्रियाया भाषितम् अन्तर्मनसि, तथा हंसोक्तप्रकारेण, अन्वाचचक्षे आलोचयामासेत्यन्वयः। एतेनानुरागातिशयो ध्वनितः ॥ १३५ ॥

श्रीहर्षमिति। तृतीय एव तार्त्तीयीकस्तस्य भावस्तत्ता तया तृतीयत्वेनेत्यर्थः मितः संख्या-तोऽयं सर्गोऽगमत् समाप्तिमिति शेषः ॥ १३६ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायां
तृतीयः सर्गः समाप्तः ॥ ३ ॥

---

विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः" सा। अकथनं प्रति परवतीपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चेति सङ्करः। मालिनीवृत्तमिदम् ॥ १३४ ॥

आनन्दमाध्वीकमिति रूपकम्, छेकानुप्रासश्चेति संसृष्टिः। 'मधु माध्वीकमद्ययोः, अ। मालिनी वृत्तम् ॥ १३५ ॥

शार्दूलविक्रीडितं वृत्तम् ॥ १३६ ॥

३यः सर्गः समाप्तः ॥

# चतुर्थः सर्गः ।

अथ नलस्य गुणं गुणमात्मभूः सुरभि तस्य यशः कुसुमं धनुः ।
श्रुतिपथोपगतं सुमनस्तया तमिषुमाशु विधाय जिगाय ताम् ॥ १ ॥
यदतनुज्वरभाक् तनुते स्म सा प्रियकथासरसीरसमज्जनम् ।
सपदि तस्य चिरान्तरतापिनी परिणतिर्विषमा समपद्यत ॥ २ ॥

पूर्वं स्वप्नदर्शनादिना नलेऽनुरक्ताया अपि विशिष्य हंसमुखाद् गुणसमूहाकर्णनेन भैम्या जातमनुरागातिशयं व्यञ्जयितुं विरहवर्णनरूपं चतुर्थसर्गमारभमाणः कविर्द्विचत्वारिंशच्छ्लोकैस्तस्या विरहप्रकारमाह —अथेति । अथ हंसप्रस्थानानंतरम्, आत्मभूः कामः, तस्य नलस्य, गुणं सौन्दर्यादिकं, गुणं मौर्वीं, विधाय कृत्वा, तथा तस्य सुरभि विख्यातम्, यशः कर्म, कुसुमं पुष्पमयं, धनुर्विधाय, सुमनस्तया धीरतया, श्रुतिपथोपगतं भैम्याः शाब्दबोधविषयीभूतं हंसमुखादित्यर्थात्, तं नलं, इषुं बाणं, विधाय, आशु शीघ्रं, तां दमयन्तीं, जिगाय जितवान् । हंसमुखान्नलगुणं श्रुत्वा तत्क्षणादेव सा मदनपीड़िता जातेति भावः । कामस्य धनुरपि पुष्पमयत्वात् सुरभि सुगन्धि, एवं बाणोऽपि श्रुतिपथोपगतः कर्णान्तमाकृष्टः सुमनस्तया पुष्पमयश्च भवति । 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये' 'सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातिफले पुमान् स्वर्णे गन्धोत्पले क्लीवं सुगन्धिकान्तयोस्त्रिषु । विख्याते सचित्रे धीरे चैत्रेऽपि च पुमानयम्' । 'सुमनाः पुष्पमालत्योः स्त्रियां ना धीरदेवयोः' मे । अस्मिन् सर्गे द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥ १ ॥

यदिति । सा दमयन्ती, अतनुज्वरभाक् कामजनितसन्तापवती सती, प्रियस्य नलस्य कथैव सरसी कासारस्तस्यां यो रसो विप्रलम्भाख्यः शृङ्गारः तत्र मज्जनं चित्तावधानं यत् तनुते स्म कृतवती । सपदि तत्क्षणात् हंसगमनानन्तरमेवेत्यर्थः, तस्य मज्जनस्य चिरं चिरकालम्, अन्तरं मनः तापयितुं शीलमस्यास्तादृशी, परिणतिः परिपाकः, विषमा दुःसहा, समपद्यत जाता । पूर्वं जातानुरागतया कामपीड़ितापि हंसमुखाद् गुणान् श्रुत्वा तेषामुद्दीपकतया सातिशयां कामव्यथां प्राप्तेति भावः । अन्योऽपि महाज्वरभाक् सन् सरसीजले मज्जनं कृत्वा चिरान्तरतापकं वैषम्यं प्राप्नोति ।

---

"अत्र रूपकदीपकश्लेषसंकरः" सा । नलस्य सौन्दर्यादिगुणे धनुर्गुणत्वाद्यारोपस्य प्रकृतजयोपयोगितया परिणाम इति नव्याः । छेकानुप्रासश्च ॥ १ ॥

"अत्र रूपकम् । अर्थान्तर प्रतीतिस्तु रूपकादेव । तेन समासोक्तिः" सा । "ज्वरशान्त्यर्थाद्रसमज्जनात् तद्विरूपानर्थोत्पत्तेर्विषमालङ्कारभेदः" जी ॥ २ ॥

ध्रुवमधीतवतीयमधीरतां दयितदूतपतद्गतवेगतः ।
स्थितिविरोधकरीं द्व्यणुकोदरी तदुदितः स हि यो यदनन्तरः ॥ ३ ॥
अतितरां समपादि जड़ाशयं स्मितलवस्मरणेऽपि तदाननम् ।
अजनि पङ्गुरपाङ्गनिजाङ्गन-भ्रमिकणेऽपि तदीक्षणखञ्जनः ॥ ४ ॥
किमु तदन्तरुभौ भिषजौ दिवः स्मरनलौ विशतः स्म विगाहितुम् ।
तदभिकेन चिकित्सितुमाशु तां मखभुजामधिपेन नियोजितौ ॥ ५ ॥

तदुक्तं भैषज्यरत्नाकरे—'परिषेकान् प्रदेहांश्च स्नानं संशोधनानि च दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम् । क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी । शोपच्छर्दिमदान् मूर्च्छाभ्रमतृष्णाद्य-रोचकान् । प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनाद्' इति । 'रसो गन्धरसे जले शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः' मे ॥ २ ॥

ध्रुवमिति । ध्रुवमुत्प्रेक्षे, द्व्यणुकोदरी अतिकृशोदरी, इयं दमयन्ती, दयितस्य प्रियस्य नलस्य दूतो यः पतन् पक्षी हंसस्तस्य गते गमने यो वेगः गमनजन्यवेगाख्यसंस्कारविशेष इत्यर्थः तस्मात्, स्थितिविरोधकरीं मर्यादाविरोधिनीं हंसपक्षे अवस्थानविरोधिनीम्, अधीरतां धैर्याभावम् अधीतवती पपाठ । अत्र प्रमाणमुपन्यस्यति—हि यतः, यो वेगादिको, यदनन्तरो यस्याव्यवधानेन भवति सः, तदुदितस्तस्मादुत्पन्नः कार्याव्यवहितप्राक्क्षणावच्छिन्नस्यैव कारणताभ्युपगमात् । हंसगमनानन्तर-मेवास्या अधैर्यं जातमिति भावः ॥ ३ ॥

अतितरामिति । तदाननं तस्या दमयन्त्या मुखं स्मितलवस्य हास्यलेशस्य स्मरणेऽपि का कथा करणे स्मृतावपि, अतितरां सातिशयं यथा तथा, जड़ाशयं जड़मति, समपादि जातम् । विरहव्यथया भैम्या मुखे हास्यलेशोऽपि नाभूदित्यर्थः । अन्योऽपि जड़ाशयः पूर्वानुभूतं किमपि न स्मरति । तथा तस्या ईक्षणं नयनमेव अतिचाञ्चल्यात् खञ्जनः खञ्जरीटः सः, अपाङ्गो नेत्रप्रान्तः एव निजाङ्गनं तत्र भ्रमिकणेऽपि भ्रमणलेशेऽपि, पङ्गुः खञ्जोऽजनि जातः । विरहव्यथया तस्याः कटाक्षो नाभू-दित्यर्थः । अन्योऽपि खञ्जो निजाङ्गनेऽपि भ्रमितुं न शक्नोति ॥ ४ ॥

किन्विति । स्मरनलौ कन्दर्पनलराजौ, तस्या दमयन्त्या अन्तर्हृदयं, विगाहितुम् आलोड़यितुं विशतः स्म प्रविष्टौ । नलो नलविषयकः कामश्च द्वौ तस्याः सदा चिन्तागोचरौ जातावित्यर्थः । अत्रोत्प्रेक्षते—तस्या दमयन्त्याः, अभिकेन कामुकेन, मखभुजां देवानामधिपेन इन्द्रेण, आशु शीघ्रं, तां दमयन्तीं चिकित्सितुं प्रतिकर्तुं, नियोजितौ प्रेरितौ, दिवः स्वर्गस्य उभौ भिषजौ चिकित्सकौ

---

"अत्रोत्प्रेक्षा हेतुश्चालङ्कारः" सा । उत्प्रेक्षार्थान्तरन्यासयोरङ्गाङ्गिभावेन संकरः" जी ॥ ३ ॥

"अत्र विशेषोक्तिः रूपकञ्च" सा । "अतिशयोक्तिरूपकालङ्कारः" ति ॥ ४ ॥

"अत्रोत्प्रेक्षालंकारः । तेनास्य मदनाश्विसमानसौन्दर्यं व्यज्यते । अत्र चिन्ताख्यः सञ्चारी भावः" सा ॥ ५ ॥

कुसुमचापजतापसमाकुलं कमलकोमलमैक्ष्यत तन्मुखम्।
अहरहर्वहदभ्यधिकाधिकां रविरुचिग्लपितस्य विधोर्विधाम्॥ ६॥
तरुणतातरणिद्युतिनिर्मितद्रढिम तत्कुचकुम्भयुगं तदा।
अनलसङ्गतितापमुपैतु नो कुसुमचापकुलालविलासजम्॥ ७॥
अधृत यद्विरहोष्मणि मज्जितं मनसिजेन तदूरुयुगं तदा।
स्पृशति तत्कदनं कदलीतरुर्यदि मरुज्ज्वलदूषरदूषितः॥ ८॥

अश्विनीकुमारौ किमु। तयोः सौन्दर्यातिशयादियमुत्प्रेक्षा। इन्द्रोऽपि नारदमुखात् सौन्दर्य्यादिकं श्रुत्वा भैमीमभिलषितवानिति वक्ष्यते॥ ५॥

कुसुमेति। कमलं पद्ममिव कोमलम् अतिमृदुलं, तन्मुखं दमयन्त्या मुखं कुसुमचापजतापेन कामजनितविरहज्वरेण, समाकुलम् अतिम्लानम्, ऐक्ष्यत दृष्टं सखीभिरित्यर्थात्। मुखस्य कोमलत्वादेव म्लानिर्जातेति भावः। कोमलं पद्ममपि तापेन समाकुलं भवति। किम्भूतं? रविरुचिभिः सूर्यकिरणैर्ग्लपितस्य आच्छादितस्य, विधोश्चन्द्रस्य, अहरहः प्रतिदिनम्, अभ्यधिकाधिकाम् उत्तरोत्तरबहुलां, विधाम् अवस्थां, वहत् धारयत्। यथा कृष्णपक्षेऽधःस्थितसूर्यकिरणैश्चन्द्रस्य प्रतिदिनमधिकाधिकतिरोधानं भवति तथा भैम्या मुखस्य विरहतापेन प्रतिदिनमधिकाधिका म्लानता जातेत्यर्थः। ग्लपितस्य ग्लानिं प्रापितस्येति तु बहवः॥ ६॥

तरुणतेति। तदा तस्मिन् समये, तस्या दमयन्त्याः कुचौ स्तनावेव कुम्भयुगं घटयुग्मं, तरुणता यौवनमेव तरणिद्युतिः सूर्यकिरणस्तया निर्मितो जनितो द्रढिमा काठिन्यम् अथ च नीरसत्वं यस्य तादृशं सत्, अनलसङ्गत्या नलसङ्गमाभावेन अथ च वह्निसम्बन्धेन जनितं तापं विरहज्वरम् अथ च औष्ण्यं, नो उपैतु न प्राप्नोतु अपि तु प्राप्नोत्वेव। किम्भूतं तापं? कुसुमचापः कन्दर्प एव कुलालः कुम्भकारस्तस्य विलासात् प्रादुर्भावात् अथ च उद्योगाज्जायत इति तादृशम्। कुलालोऽपि घटं कृत्वा सूर्यकिरणैः परिशोष्य वह्नौ प्रक्षिपति। 'द्युमणिस्तरणिर्मिलः' 'कुम्भकारः कुलालः स्यात्' अः॥ ७ ॥

अधृतेति। तदा तस्मिन् समये, मनसिजेन कामेन, विरहोष्मणि विरहदाहे, मज्जितं मग्नीकृतं, तदूरुयुगं तस्या दमयन्त्या ऊरुद्वयं, यत् कदनम् अवसादं, अधृत धृतवत्, तत् कदनं, कदलीतरुः

---

"दमयन्त्याः विधोर्विधायाः वहनासम्भवेन सादृश्याक्षेपाद् असम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः" जी॥ ६॥

"अत्रानुप्रासश्लेषरूपकालंकारः" सा। श्लेषानुप्राणितरूपकमत्र, नतु श्लेषस्य पृथगलंकारतेति नव्याः॥ ७॥

"अत्रातिशयोक्तिरलंकारः" सा। "अत्रोपमानस्य कदलीतरोरुपमेयत्वकल्पनात् प्रतीपालंकारभेदः" जी॥ ८॥

स्मरशराहतिनिर्मितसंज्वरं करयुगं हसति स्म दमस्वसुः ।
अनपिधानपतत्तपनातपं तपनिपीतसरःसरसीरुहम् ॥ ९ ॥
मदनतापभरेण विदीर्य नो यदुदपाति हृदा दमनस्वसुः ।
निविडपीनकुचद्वययन्त्रणा तमपराधमधात् प्रतिबध्नती ॥ १० ॥
निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् ।
मृदुतनोर्वितनोतु कथन्न तामवनिभृत्तु निविश्य हृदि स्थितः ॥ ११ ॥

रम्भावृक्षस्तदा स्पृशति लभेत, यदि मरौ निर्जलप्रदेशे ज्वलता अतितीक्ष्णत्वात्तृणादिकं दहता ऊष-रेण क्षारमृत्तिकया दूषितः पीडितः स्यात् अन्यथा तस्योपमानभूतोऽपि तथाविधं कदनं न प्राप्नुया-दित्यर्थः । तस्या ऊरुद्वयं विरहदाहेन मरुदेशक्षारमृत्तिकादग्धकदलीतरुसदृशं जातमिति भावः । 'कदनं सादने पापे' वि । 'समानौ मरुधन्वानौ', 'स्यादूषः क्षारमृत्तिका ऊषवानूषरौ द्वौ' अः ॥८॥

स्मरेति । दमस्वसुर्दमयन्त्याः, करयुगं स्मरशराणां कामबाणानामाहत्या प्रहारेण निर्मितो जनितः संज्वरः सन्तापो यत्र तादृशं सत्, अनपिधानम् अनावरणम् यथा स्यात्तथा पतन् तपनस्य सूर्यस्य आतपो यत्र तथा भूतं, तपेन निदाघेन निपीतस्य शोषितस्य सरसः सरोवरस्य सरसीरुहं पद्मं हसति स्म तत्तुल्यं जातमित्यर्थः । विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयतीत्युपक्रम्य तस्य चानुकरोतीति शब्दाः सादृश्यवाचिन इति दण्डी । 'निदाघऊष्णोपगम उष्ण उष्मागमस्तपः' अ ॥ ९ ॥

मदनेति । दमनस्वसुर्दमयन्त्या, हृदा हृदयेन कर्त्रा, मदनतापभरेण कामजनितसन्तापबाहु-ल्येन हेतुना, विदीर्य स्फुटित्वा, यत् नो उदपाति नोत्पतितं, तं विदीर्य्यानुत्पतनलक्षणम् अपराधम् निविडेन निरन्तरेण पीनेन पीवरेण कुचद्वयेन कृता या यन्त्रणा रोधः सा प्रतिबध्नती प्रतीबन्धक-तामाचरन्ती सती, अधात् दधार । विरहव्यथाबाहुल्येन भैमीहृदयं स्फुटितमभविष्यदेव तर्हि यन्न स्फुटितं सोऽपराधो निविडत्वात्पीनत्वाच्च उपरिस्थितस्तनद्वयस्यैवेत्यर्थः । अन्यदपि निविडं स्थूलञ्च पाषाणादिकमुपरिस्थितं सत् तापातिशयेन स्फुटित्वा पतनोन्मुखं किमपि वस्त्वावृणोति ॥ १० ॥

निविशत इति । शूकशिखा धान्यकण्टकाग्रमपि, यदि पदे चरणे, निविशते प्रविशति, तदा सा चरणप्रविष्टा शूकशिखा, कियतीमिव व्यथां पीडां, न सृजति न जनयति अपि तु महतीमेव पीडां

---

"हसतीर्ष्यत्यसूयतीति दण्डिना सदृशपर्य्याये पठितत्वादुपमालंकार" अनुप्रासश्चेति संसृष्टिः । 'सन्तापः संज्वरः समौ' अ ॥ ९ ॥

"अत्रातिदाहेऽपि हृदयस्यास्फुटनमायुषोऽवशेषनिबन्धनमपि कुचयन्त्रणनिमित्तमित्युत्-प्रेक्षते, सा च व्यञ्जकाप्रयोगादृगम्या" जी ॥ १० ॥

"अत्रातिशयोक्तिर्व्यक्रियाविरोधश्चालंकारः" सा । अत्रेदं बोध्यम् डुभृञ् धारणपोषणयो-रिति भृधातोरवनिं बिभर्त्ति इतिव्युत्पत्त्या श्लेषवशादत्र राजा नलः पर्वतश्च उच्येते, ततश्च

मनसि सन्तमिव प्रियमीक्षितुं नयनयोः स्पृहयान्तरुपेतयोः।
ग्रहणशक्तिरभूदिदमीययो-रपि न संमुखवास्तुनि वस्तुनि ॥ १२ ॥
हृदि दमस्वसुरस्रुझरप्लुते प्रतिफलद्विरहात्तमुखानतेः।
हृदयभाजमराजत चुम्बितुं नलमुपेत्य किलागमि तन्मुखम् ॥ १३ ॥

जनयतीत्यर्थः। मृदुतनोः सुकुमाराङ्ग्या न तु कठिनाया दमयन्त्याः, हृदि निविश्य स्थितः न तु बहिर्गतः, अवनिभृत्पर्वतः अथ च नलः, तु पुनस्तां व्यथां कथं न वितनोतु न जनयतु अपितु ततोऽप्यधिकां पीड़ां जनयत्वेवेत्यर्थः। अनवरतं नलं चिन्तयन्त्या महती व्यथा प्राप्तेति भावः। अवनिभृदिति अवनिं पृथिवीं बिभर्त्ति धारयति पुष्णाति चेति डुभृञ् धारणपोषणयोरित्यस्मात् क्विप्। प्रकृतिश्लेषः। 'शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे' अः। इवशब्दोवाक्यालङ्कारे ॥ ११ ॥

मनसीति। इदमीययोर्दमयन्तीसम्बन्धिनोर्नयनयोः, संमुखे वास्तु स्थानं यस्य तादृशेऽपि, वस्तुनि घटादौ विषये, न ग्रहणशक्तिरभूत् न ज्ञानजननसामर्थ्यं बभूव निरन्तरनलचिन्तनेन मनसासंयुक्तत्वात्। अत्रोत्प्रेक्षते—मनसि सन्तं चिन्ताविषयत्वात् वर्त्तमानं, प्रियं नलम्, ईक्षितुं द्रष्टुं स्पृहया वाञ्छया, अन्तर्हृदयम्, उपेतयोरिव प्रविष्टयोरिव अतएव सान्निध्याभावात् तथाविधविषयग्रहं न जनयतीत्यर्थः ॥ १२ ॥

हृदीति। विरहेण आत्ता स्वीकृता मुखस्य आनतिरीषन्नम्रता यया तथाभूताया, दमस्वसुर्दमयन्त्याः, अस्रुझरप्लुते वाष्पजलप्रवाहव्याप्ते, हृदि वक्षसि, प्रतिफलत् प्रतिविम्बतां गच्छत्, तत् तादृक् सुन्दरं, मुखं कर्तृ, अराजत शुशुभे। उत्प्रेक्षते -किम्भूतं मुखं? हृदयभाजं हृदयमध्यवर्त्तिनं, नलं चुम्बितुम्, उपेत्य समीपं गत्वा, आगमि किल आगच्छदिव, मुखानमय्य नलं चिन्तयामासेति भावः। विरहेणात्ता या मुखानतिस्तस्या हेतोः प्रतिफलदिति पञ्चम्यन्तं वा। आगमीति आगमः आगमनमस्यास्तीति अस्त्यर्थ इन् ॥ १३ ॥

---

प्रकृतविषयस्य नलस्य निगरणेन तत्र पर्वताभेदारोपादत्रातिशयोक्तिः, पर्वतस्य महतो द्रव्यस्य तन्वाः क्षुद्रे हृदये प्रवेशासम्भवात् प्रवेशक्रिययाऽस्य विरोधश्च। "अत्र पदे सूक्ष्मकण्टकप्रवेशे दुःसहा व्यथा, किमुत मृद्वङ्ग्याः हृदि महत्प्रवेशेनेति कैमुत्यन्यायेनार्थापत्तेरर्थापत्तिरलंकारः" जी ॥ ११ ॥

"नलव्यासङ्गनिमित्तस्य बाह्यादर्शनस्य चक्षुषोरन्तःप्रवेशनिमित्तत्वमुत्प्रेक्षते। चिन्ता सञ्चारी भावः" जी। ग्रहणसामर्थ्याभावं प्रति अन्तःप्रविष्टपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, अनुप्रासश्चेति संसृष्टिः ॥ १२॥

अत्रोत्प्रेक्षातिशयोक्तिश्च" सा। अतिशयोक्तिश्च मुखस्य प्रतिविम्बनासम्बन्धेऽपि तत्सम्बन्धोक्तेः। 'वार्त्ता सम्भाव्ययोः किल' अ ॥ १३ ॥

सुहृदमग्निमुदञ्चयितुं स्मरं मनसि गन्धवहेन मृगीदृशः ।
अकलि निश्वसितेन विनिर्गमा-नुमितनिह्नुतवेशनमायिता ॥ १४ ॥
विरहपाण्डिमरागतमोमसी-शितिमतन्निजपीतिमवर्णकैः ।
दश दिशः खलु तद्दृगकल्पय-ल्लिपिकरी नलरूपकचित्रिताः ॥ १५ ॥
स्मरकृतां हृदयस्य दशां मुहु-र्बहु वदन्निव निश्वसितानिलः ।
व्यधित वाससि कम्पमदःश्रिते त्रसति कः सति नाश्रयबाधने ॥ १६ ॥

सुहृदमिति । मृगीदृशो दमयन्त्याः, निश्वसितेन निश्वासरूपेण, गन्धवहेन वायुना, मनसि वर्त्तमानं, सुहृदं मित्रं, स्मरं कामलक्षणमग्निम्, उदञ्चयितुमुत्तेजयितुं, विनिर्गमणेन बहिर्गमणेन अनुमिता सखीभिरनुमानविषयीकृता या निह्नुतवेशने गुप्तप्रवेशे मायिता मायावित्वं सा, अकलि अङ्गीकृता । वायोरन्तःप्रवेशं विना वहिर्गमनमनुपपद्यमानं सत् तमनुमापयतीत्यनुमीयमानो वायोर्गुप्तप्रवेशः स्वमित्रस्मराग्नेरुत्तेजनार्थं इवेति प्रतीयमाणोत्प्रेक्षेयम् । विरहेण तस्या बहवो निश्वासा जाता इति भावः । तस्याः पद्मिनीत्वान्निश्वासस्य गन्धवहत्वम् ॥ १४ ॥

विरहेति । खलूत्प्रेक्षे, तद्दृक् दमयन्त्याः नयनरूपा, लिपिकरी चित्रकारिणी, विरहेण जनितो यः पाण्डिमा मुखादेः पाण्डुत्वं तथा रागो रोदनान्नयनयोर्लौहित्यम् तमो मूर्च्छारूपा या मसी तस्याः शितिमा कृष्णत्वम् एवं तस्या भैम्या निजः सहजो यः पीतिमा गौरत्वम् एतल्लक्षणैर्वर्णकैः कृत्वा, दश दिशः नलरूपकैर्नलप्रतिच्छन्दकैश्चित्रिता जातचित्रा, अकल्पयत् कृतवती । विरहवशात्तस्या मुखपाण्डिमादयस्तन्मयता च जाता इति भावः । विरहः पाण्डिमादित्रये हेतुः । अन्यापि चित्रकारिणी नानावर्णैः केनचित् प्रतिच्छन्दकेन भित्त्यादिकं चित्रयति । लिपिकरीति 'निशादेः कृञ' इति टङ्, टित्त्वादीप् ॥ १५ ॥

स्मरकृतामिति । निश्वसितानिलो निश्वासवायुः, स्मरकृतां कामजनितां, दमयन्त्या हृदयस्य मनसो दशां पीड़ां मुहुर्वारं वारं बहु सातिशयं यथा तथा, वदन्निव कथयन्निव, अदःश्रिते दमयन्त्याश्रिते, वाससि वस्त्रे, कम्पं व्यधित जनयामास । दीर्घनिश्वाससम्पर्केण वस्त्रस्य

---

"अत्र समासोक्तिरलंकारः" सा । सा च प्रस्तुते गन्धवहे अप्रस्तुस्य गुप्तप्रवेशनिर्गमणकारिणः शत्रोर्व्यवहारारोपात् । स्मरमग्निमिति निरङ्गं रूपकम् । 'उत्प्रेक्षा' जी । स च निर्गत इवेति सम्भावनया । गन्धवहः गुप्तप्रवेशवान् अज्ञातप्रवेशत्वे सति ज्ञातनिर्गमवत्त्वात् इत्यनुमानेन गुप्तप्रवेशरूपसाध्यस्यानुमानात्, उत्प्रेक्षादिजनितविच्छित्तिमत्तयाचानुमानालङ्कारः ॥१४॥

"अत्र रूपकं विशेषश्च" सा । विरहपाण्डिमादिषु वर्णकत्वारोपाद् रूपकम्, एकस्य नलस्य दशसु दिक्षु कल्पनाद् विशेषः । "लिपिकरीवेति उत्प्रेक्षा" ना । अनुप्रासश्च ॥ १५ ॥

"अत्र अर्थान्तरन्यासोत्प्रेक्षालङ्कारः" सा । अनुप्रासश्च ॥ १६ ॥

करपदाननलोचननामभिः शतदलैः सुतनोर्विरहज्वरे ।
रविमहो बहु पीतचरं चिरा-दनिशतापमिषादुदसृज्यत ॥ १७ ॥
उदयति स्म तदद्भुतमालिभि-र्धरणिभृद्भुवि तत्र विमृश्य यत् ।
अनुमितोऽपि च वाष्पनिरीक्षणा-द्व्यभिचचार न तापकरोऽनलः ॥ १८ ॥

चाञ्चल्यं जातमित्यर्थः । युक्तमेवैतत् यतः आश्रयस्य बाधने पीड़ायां सत्यां क आश्रितो न लसति न बिभेति अपितु सर्व एव लसति । आश्रयभूताया दमयन्त्या मनःपीड़ायां सत्यां तदाश्रितस्य वस्त्रस्यापि कम्पो युज्यत एव । अन्योऽपि कस्यचिन्महतो मनःपीड़ां कथयन् तदाश्रितं जनं कम्पयति । अदो हृदयं श्रिते आश्रिते वाससीति व्याख्यानमश्रद्धेयमेव, अदःपदेन पूर्वोक्तहृदय-शब्दोपस्थाप्यमनसः प्रतिपाद्यतया वस्त्रस्य तत्सम्बन्धाभावेनासङ्गतत्वात्, नह्येकत्र हृदयस्य मनोवाचकत्वमपरत्र वक्षोवाचकत्वमित्युन्मत्तेनापि शक्यते वक्तुम् । व्यधितेति विपूर्वधाञो लुङ् त, 'सङ्स्थादे' त्यादिना इङ्, 'सङ्लुगिणादे' रिति सङ्लुक् ॥ १६ ॥

करपदेति । सुतनोर्दमयन्त्याः, विरहज्वरे वियोगजनितज्वरे, करपदाननलोचनानि नामानि संज्ञा येषां तथाभूतैः, शतदलैः पद्मैः करपद्मादिभिरित्यर्थः चिरात् बहुकालम् अनिशतापमिषात् निरन्तरसन्तापच्छलात्, पीतचरं पूर्वं पीतं, बहु अनेकं, रविमहः सूर्यतेजः, उदसृज्यत वान्तम् । विरहज्वरेण तस्याः करादिषु सन्तापो जात इति भावः । पद्मस्येव सूर्यतेजसि सति प्रफुल्लतया स्थितत्वात्तत्त्वेन करादीनां रूपणम् । पीतचरेति भूतपूर्वे चरट् ॥ १७ ॥

उदयति स्मेति । तत् अद्भुतम् आश्चर्यम्, उदयति स्म उदितं, किं तदद्भुतमित्याह - यत् आलिभिः, सखीभिः, तत्र तस्यां, धरणिभृद्भीमराजस्तस्माद् भूरुत्पत्तिर्यस्याः सा तथा तस्यां दमयन्त्याम्, अपिर्भिन्नक्रमे, वाष्पनिरीक्षणादपि अस्रुजलदर्शनादपि विमृश्य विवेच्य अनुमितोऽनुमानविषयी-कृतः, तापकरः सन्तापकारी नलो राजा न व्यभिचचार न व्यभिचरति स्म अकथितोऽपि केवल-मस्रुजलदर्शनात् चिन्ताविषयतयानुमितो नलराजो यन्न व्यभिचरति स्म तदेवाश्चर्यमित्यर्थः ।

---

"अत्र पद्मानां भैमीकरचरणादिभ्यो नाममात्रभेदः न रूपभेदः इत्यभेदोक्तेरतिशयोक्तिः, तन्मूला चेयं पूर्वपीततेजोवमनोत्प्रेक्षा, सा च तापव्याजादित्यपह्नवानुप्राणितेति सङ्करः" जी । उत्-प्रेक्षा चेयं व्यञ्जकाप्रयोगाद् गम्या । "अतिशयोक्तिसमासोक्त्यपह्नुत्यलङ्कारः" सा । समासोक्तिश्च ज्वरिणो व्यवहारारोपात् ॥ १७ ॥

"श्लेषव्यतिरेकालङ्कारः" सा । लिङ्गाभासात् अवधारितस्य उपमानभूतस्य अनलस्य व्यभि-चारित्वेऽपि उपमेयभूतस्य तापकरनलस्याव्यभिचारित्वेन आधिक्यकथनात् व्यतिरेकः समर्थनीयः । "अत्र वाष्पलिङ्गदर्शनादनलज्ञानं तच्चाव्यभिचारीति स्फुरतो विरोधस्य अश्रुलिङ्गात् सन्तापकरो नलो निश्चित इत्याभासीकरणात् विरोधाभासः । स च श्लेषानुप्राणितः । सन्तापकरोनल इति शब्दश्लेषः, अन्यत्रार्थश्लेषः । अपिर्विरोधे" जी । 'आलिः सखी वयस्या च' अ ॥ १८ ॥

हृदि विदर्भभुवः प्रहरञ्छरै-रतिपतिर्निषधाधिपतेः कृते ।
कृततदन्तरगस्वदृढव्यधः फलदनीतिरमूर्च्छदलं खलु ॥ १९ ॥
विधुरमानि तया यदि भानुमान् कथमहो स तु तद्धृदयं तथा ।
अपि वियोगभरास्फुटनस्फुटी-कृतदृषत्त्वमजिज्वलदंशुभिः ॥ २० ॥

अन्यत्र धरणिभृतः पर्वतस्य, भुवि भूम्यां, वाष्पनिरीक्षणात् धूमायमानोष्मणोदर्शनात्, विमृश्यापि परामर्शं कृत्वापि, अनुमितस्तापकरो न तु भ्रमविषयतया भासमानोऽनलोऽग्निः, व्यभिचरत्येव अत्र तु यत्र व्यभिचचार तदाश्चर्यमेवेति शब्दच्छलमूलेयं वाक्यभङ्गी । उभयत्रापि व्यभिचारो हेतुसमानाधिकरणाभावप्रतियोगित्वरूपो बोध्यः । समानाकारज्ञानप्रतिबन्धकतायामेवमेव दीधितिकारादिभिस्तस्य स्वीकृतत्वात् । अनलोनलसंसर्गाभावो न व्यभिचचारेत्यपि व्याचक्षते, तत्र क्वचिदव्ययीभावस्यापि क्लीवत्वं व्यभिचरतीत्यनलस्य पुंस्त्वम् । 'वाष्पावुष्माश्रु' अ ॥ १८ ॥

हृदीति । रतिपतिः कामो, निषधाधिपतेर्नलस्य कृते नलवेधार्थं, विदर्भभुवो दमयन्त्याः, हृदि मनसि, शरैर्बाणैः प्रहरन् प्रहारं कुर्वन् सन् अलमत्यर्थम्, अमूर्च्छत् मूर्च्छां प्राप्तवान् । किम्भूतः ? कृतस्तदन्तरगस्य दमयन्तीहृदयमध्यवर्तिनः स्वस्यात्मनो दृढो व्यधस्ताडनं येन तादृशः खलु एवम्भूत इव, अतएव फलन्ती प्रतिफलदा अनीतिर्यस्य तादृशः । दमयन्तीहृदये नलो वर्त्तते इति बुद्ध्या तत् शरैः प्रहृतवान् ततश्च तत्र स्थितमात्मानमपि प्रहृतवान् । योद्धृमुख्या हि आत्मानं रक्षित्वा शत्रुं प्रहरन्ति, अनेन तु आत्मानमरक्षित्वैव केवलं नलपराभवव्याकुलितमनसा प्रहृतं सुतरां वीरनयानभिज्ञस्य तस्य युज्यत एव मूर्च्छा । कामप्राबल्येन साततरां पीड़ां प्राप्तेति भावः । अमूर्च्छदिति 'मूर्च्छा मोहसमुच्छ्राययोः' शब्दच्छलादेवेयमुत्प्रेक्षा ॥ १९ ॥

विधुरिति । तया दमयन्त्या, यदि, विधुश्चन्द्रो भानुमान् अमानि दाहकत्वात् सूर्यत्वेनारोपितः, तदा स तु सूर्यत्वेनारोपितो विधुः पुनः वियोगभरेण विरहबाहुल्येन यदस्फुटनं अविदारणं तेन स्फुटीकृतं व्यक्तीकृतं दृषत्त्वं सूर्यकान्तपाषाणत्वं यस्य तथाविधमपि, तस्या दमयन्त्याः हृदयं कथम् अंशुभिः किरणैः, तथा तात्त्विकसूर्यवत्, अजिज्वलत् ज्वलयति स्म । आरोपितस्य तत्कार्यकारित्वाभावात् । अतएवाहो आश्चर्यं सूर्यकान्तं तात्त्विकः सूर्य एव ज्वलयति न त्वारोपितः विधुस्तु सूर्यत्वेनारोपितोऽपि तापास्फुटनलक्षणसाधर्म्येण प्रकटीकृतसूर्यकान्तत्वं

---

"मूर्च्छामोहसमुच्छ्राययोरित्यनुशासनात् मूर्च्छधातोरुभयार्थतया श्लेषेण समुच्छ्रायरूपवर्द्धनतिरस्कारात् "मोहाभेदेन मूर्च्छालक्षणकार्यदर्शनात् रतिपतेः स्मरस्यापि प्रहारः उत्प्रेक्ष्यते, व्यञ्जकाप्रयोगात् गम्या, सा च श्लेषमूलातिशयोक्त्युत्थापितेति संकरः, परप्रहारोद्यतस्य स्वप्रहाररूपानार्थोत्पत्ते र्विषमभेदश्च व्यज्यते" जी ॥ १९ ॥

"अत्र विरोधाभासोऽलङ्कारः" सा । अनुप्रासश्च ॥ २० ॥

हृदयदत्तसरोरुहया तया क सदृगस्तु वियोगनिमग्नया ।
प्रियधनुः परिरभ्य हृदा रतिः किमनुमर्तुमशेत चितार्चिषि ॥ २१ ॥
अनलभावमियं स्वनिवासिनो न विरहस्य रहस्यमबुध्यत ।
प्रशमनाय विधाय तृणान्यसून् ज्वलति तत्र यदुज्झितुमैहत ॥ २२ ॥

तद्धृदयं यत् ज्वलयति स्म तदाश्चर्यमेवेत्यर्थः । विरहेण तया चन्द्रकिरणाः सोढुमशक्ता इति भावः ॥ २० ॥

हृदयेति । वियोगनिमग्नया विरहाग्निपीडितया, अतएव हृदये दत्तं सन्तापशान्त्यै न्यस्तं सरोरुहं पद्मं यया तथाभूतया, तया दमयन्त्या, सदृक् सदृशी क कस्मिन् देशे अस्तु वर्त्तताम्? अपि तु न कापि तत्सदृशीत्यर्थः । नन्वेतत्सदृशी रतिर्भवेदित्याशङ्क्याह, रतिः प्रियस्य कन्दर्पस्य, धनुः, हृदा वक्षसा, परिरभ्य आलिङ्ग्य, अनुमर्तुं कन्दर्पस्य पश्चान्मरणार्थं, चितार्चिषि चिताग्निज्वालायां, किमशेत शयनं कृतवती अपि तु नैव । प्रियाभिलषितं वस्तु हृदयेन परिरभ्य स्त्रियो म्रियन्त इत्याचारः, दमयन्ती स्वमुखादिसाम्यान्नलाभिलषितं पद्मं हृदा परिरभ्य विरहाग्नौ मर्त्तुमुद्यता रतिस्तु स्वप्रियाभिलषितं धनुर्वक्षसि निधाय नैव मृतेति कथमेतत्सदृशी भवेदित्यर्थः । एतेनास्या विरहेण मृतप्रायत्वं सूचितम् ॥ २१ ॥

अनलेति । इयं भैमी, स्वनिवासिन आत्मनि स्थितस्य, विरहस्य, रहस्यं तात्त्विकम् अनलभावम् अग्नित्व, नाबुध्यत न जानाति स्म । कुतः यद्यस्माज्ज्वलति दीप्यमाने, तत्र विरहानले, प्रशमनाय शान्त्यर्थम्, असून् प्राणान् तृणानि विधाय तृणत्वेनारोप्य, उज्झितुं त्यक्तुम् ऐहत चिचेष्ट । यदि तस्याग्नित्वं जानीयात्तदा कथं शान्त्यर्थं तत्र तृणानि क्षिपेत् अग्निर्हि तृणैः सातिशयं ज्वलति न तु निर्वाति । अथ च इयं स्वविरहस्य अनलभावं नलप्राप्त्यभावरूपं रहस्यं मूलकारणं न अबुध्यत अपि तु अबुध्यतैव, यद्यस्मात् तत्र विरहे ज्वलति अतितरां तापयति सति प्राणान् तृणानि विधाय तृणवत्तुच्छत्वेन परिगृह्य उज्झितुम् ऐहत । वरं मरणमेव ज्यायो न त्वेतादृग्दुःसह-विरहसहनसाधनं प्राणधारणमिति ज्ञात्वा प्राणांस्त्यक्तुमैच्छदित्यर्थः । अनेनापि तस्या विरहेण मृतप्रायत्वं सूचितम् ॥ २२ ॥

"अत्रोत्प्रेक्षा" सा । प्रियमनुमर्त्तुं चितार्चिषि शयाना साक्षाद्रतिरेवेयम् इत्युत्प्रेक्षा, तज्ज्वराग्निस्तथा प्रज्वलतीति भावः" जी । यदि रतिः तथाविधा स्यात् तर्हि दमयन्त्याः सदृशी भवेदिति असम्बन्धे सम्बन्धाभिधानात् अतिशयोक्तिर्ध्वनिः ॥ २१ ॥

"अत्रानुमानातिशयोक्तिरलङ्कारः" सा । "अनुमानातिशयोक्तिविरोधालङ्कारसङ्करः" ति ॥ नलविरहे अनलत्वज्ञानाभावरूपसाध्यस्य तच्छान्त्यर्थं तृणदानस्य हेतुत्वादनुमानम् । नल-विरहानलयोर्भेदेऽपि अभेदस्य, असूनां तृणकरणासम्बन्धेऽपि तत्सम्बन्धस्य अध्यवसायाद् अति-शयोक्तिः, अनलशान्त्यर्थं तृणदानस्य विरुद्धत्वेऽपि अज्ञानात् तत्परिहाराद् विरोधाभासः । रहस्य रहस्येति यमकञ्च ॥ २२ ॥

प्रकृतिरेतु गुणः स न योषितां कथमिमां हृदयं मृदु नाम यत्।
तदिषुभिः कुसुमैरपि दुन्वता सुविवृतं विबुधेन मनोभुवा ॥ २३ ॥
रिपुतरा भवनादविनिर्यतीं विधुरुचिर्गृहजालविलैर्नु ताम्।
इतरथात्मनिवारणशङ्कया ज्वलयितुं बिसवेशधराविशत् ॥ २४ ॥
हृदि विदर्भभुवोऽस्रुभृति स्फुटं विनमदास्यतया प्रतिबिम्बितम्।
मुखद्वगोष्ठमरोपि मनोभुवा तदुपमाकुसुमान्यखिलाः शराः ॥ २५ ॥

प्रकृतिरिति। नाम प्रसिद्धौ, योषितां स्त्रीणां हृदयम् अन्तः करणं मृदु कोमलम्, इति यत् प्रकृतिः स्वाभाविको गुणः, स कथं कुतः, इमां दमयन्तीं योषितं, न एतु न गच्छतु अपि तु गच्छत्वेव। कुतस्तस्या हृदयमार्द्दवं त्वया ज्ञातमित्यपेक्षायां प्रमाणमाह, विबुधेन देवेन अथच पण्डितेन, मनोभुवा कामेन, कुसुमैरपि, पुष्पमयैरपि, इषुभिर्वाणै,र्दुन्वता तस्या हृदयं पीड़यता सता, तत् हृदयमार्द्दवं, सुविवृतं सुष्ठु स्पष्टीकृतम्। यदि मृदुत्वं तस्य हृदयस्य न स्यात् तदा कुसुमैः पीड़ा न स्यादित्यर्थापत्तिरत्र प्रमाणमित्यर्थः। अन्यदपि दुर्ज्ञेयं वस्तु पण्डितेन स्पष्टीक्रियते। सा कामवाणैरत्यन्तं पीड़ितेति भावः ॥ २३ ॥

रिपुतरेति। रिपुतरा उद्दीपकतया विरहिपीड़कत्वादतिवैरिणी, विधुरुचिश्चन्द्रकान्तिर्भवनात् गृहात् अविनिर्यतीम् अवहिर्गच्छन्तीं, तां दमयन्तीं, ज्वलयितुम् उत्तापयितुम्, गृहजालविलैर्गवाक्षच्छिद्रै रविशत् प्रविष्टा। किम्भूता ? नुरिवार्थे इतरथा अन्यथा स्वरूपं प्रकटीकृत्य प्रवेशेन, या आत्मनो निवारणस्य निरोधस्य शङ्का भयं तयेव, बिसवेशधरा मृणालरूपधारिणी। अतिवैरिणो हि स्वरूपं प्रकटीकृत्य गृहं प्रविशन्तो गृहस्थैरवश्यमेव निवार्यन्तेऽतो गृहस्थितस्य कस्यचिद्रूपं गृहीत्वा प्रविशन्ति विधुरुचिरपि तदाशङ्क्येव तस्यास्तापोपशान्तये सखिभिरानीतस्य मृणालस्य रूपमास्थाय प्रविष्टेति युक्तमुत्प्रेक्षितम् ॥ २४ ॥

हृदीति। अस्रुभृति नयनजलव्याप्ते, विदर्भभुवो दमयन्त्याः, हृदि वक्षसि विनमदास्यतया नम्रमुखत्वेन हेतुना, प्रतिबिम्बितं, मुखद्वगोष्ठं वदननयनद्वयौष्ठाधरं स्फुटमुत्प्रेक्षे, मनोभुवा कामेन

---

"अत्रानुमानं श्लेषश्च" सा। कोमलकुसुमशराघातजनितपीड़ावत्त्वेन हेतुना टीकोक्तार्थोपत्त्याच भैमीहृदयकोमलत्वरूपसाध्यस्य बोधादनुमानालङ्कारः। विबुध इत्यत्र शब्दश्लेषः अन्यत्रार्थश्लेषः, तन्मूला भेदेऽप्यभेदारोपरूपा अतिशयोक्तिः, तद्विच्छित्तिमूलानुमानालङ्कारः ॥ २३ ॥

उत्प्रेक्षासमासोक्तिश्च" सा। "शिशिरोपचारबिसाङ्कुरा निरन्तरान्तःस्थितभैमीबाधनाय प्रच्छन्नप्रविष्टेन्दुकरा इव प्रविभान्ति स्मेत्युत्प्रेक्षा" जी। चन्द्रकिरणे वैरिव्यवहारारोपात् समासोक्तिः ॥ २४ ॥

"अत्रातिशयोक्तिः" सा। प्रतिबिम्बासम्बन्धेऽपि तत्सम्बन्धाभिधानात्। "तस्यास्तथाविधे

विरहपाण्डुकपोलतले विधु व्यधित भीमभुवः प्रतिविम्बितः।
अनुपलक्ष्यसितांशतया मुखं निजसखं सुखमङ्कमृगार्पणात्॥ २६॥
विरहतापिनि चन्दनपांशुभि-र्वपुषि सार्पितपाण्डिममण्डना।
विषधराभविसाभरणा दधे रतिपतिं प्रति शम्भुविभीषिकाम्॥ २७॥

तदुपमाकुसुमानि तेषां मुखादीनाम् उपमायोग्यानि कुसुमानि कमलनीलोत्पलबन्धूकपुष्पाणि अ-खिलाः शराः, स्फुटं पूर्वोक्तकुसुमरूपवाणपञ्चकमिव अरोपि आरोपितं, तस्या वधार्थं कामेन पञ्चापि शरास्तद्वक्षसि आरोपिता इत्यर्थः। तस्या विरहेण नम्रमुखत्वं रोदनञ्च जातमिति भावः। मुखदृगोष्ठं शरा इति व्यस्तरूपकं प्राण्यङ्गमिति गवाश्वादित्वादेकवद्भावः अरोपीति प्रस्तुतापेक्षया एकवचनम् ॥ २५॥

विरहेति। विधुश्चन्द्रो, भीमभुवो दमयन्त्याः, विरहेण पाण्डुनि कपोलतले, प्रतिविम्बितो जात-प्रतिविम्बः सन्, अनुपलक्ष्यः समानवर्णत्वात् प्रणिधानेनापि ज्ञातुमशक्यः सितांशः शुक्लभागो यस्य चन्द्रस्य तस्य भावस्तत्ता तया। सितांशुतयेति पाठे अज्ञेयसितकिरणतयेत्यर्थः। अङ्कमृगस्य केवलं लाञ्छनहरिणस्य, अर्पणादङ्के मुखमध्ये मृगस्य अर्पणाद्वा सुखमनायासेन, मुखं भैम्या वदनं, निज-सखं निजमित्रम् आत्मतुल्यं, व्यधित अकरोत्, चन्द्रस्येव कपोलस्यापि पाण्डुत्वात् तत्र समग्रतया प्रतिविम्बितस्यापि चन्द्रस्य शुक्लभागो नोपलब्धः कलङ्कस्तु कृष्णत्वादुपलब्धः। विरहात् पूर्वं मुखस्य गौरत्वात् प्रतिविम्बितश्चन्द्रः पृथग्लक्ष्यते स्म अतस्तदानीं मुखं निष्कलङ्कतया चन्द्रादधिकमासीत् अधुना तु चन्द्रतुल्यं जातमिति भावः। अन्योऽपि कश्चित् जनं स्वकीयं किञ्चिद्दत्त्वा सखायं करोति॥ २६॥

विरहेति। सा दमयन्ती, रतिपतिं कन्दर्पं, प्रति शम्भुविभीषिकां शम्भुरहमिति भय-प्रदानं, दधे कृतवती। किम्भुता? यतो विरहतापिनि वियोगजन्यसन्तापवति, वपुषि शरीरे, चन्दन-पांशुभिर्विरहतापेन शुष्कत्वात् चन्दनरजोभिः, अर्पितं जनितं, पाण्डिमा पाण्डुत्वमेव मण्डनं भूषणं यस्याः सा तथा, शुभ्रत्वात् दीर्घत्वाच्च विषधरस्य वासुक्यादिसर्पस्येव आभा शोभा यस्य तादृशं यद्बिसं मृणालं तदेव आभरणमलङ्कारो यस्याः सा। शम्भुरपि भस्मपाण्डरः सितसर्पाभ-

---

वक्षसि प्रतिफलितम् मुखाद्यवयवपञ्चकं पञ्चशरनिखातम्, तदुपमानकुसुमशरपञ्चकमिवालक्ष्यते इत्युत्प्रेक्षार्थः" जी। व्यस्तरूपकञ्च टीकायां स्फुटम्॥ २५॥

"अलोपमा" सा। "अत्र चन्द्रस्य कपोलसावर्ण्येन तदेकत्वकथनात् सामान्यालङ्कारः" जी। "तद्गुणश्चालङ्कारः" ति। अङ्कमृगस्यार्पणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेति संकरः, मुखं निजसखं सुखमिति च्छेकानुप्रासवृत्त्यनुप्रासयोरेकाश्रयानुप्रवेशरूपः संकरः। एवमर्था-लङ्कारशब्दालङ्कारयोः पुनःसंसृष्टिः॥ २६॥

"अत्रोपमालङ्कारः" सा। विषधराभेति लुप्तोपमा। "गम्योत्प्रेक्षा" जी॥ २७॥

विनिहितं परितापिनि चन्दनं हृदि तया धृतबुद्बुदमाबभौ।
उपनमन् सुहृदं हृदयेशयं विधुरिवाङ्कगतोडुपरिग्रहः॥ २८॥
स्मरहुताशनदीपितया तया बहु मुहुः सरसं सरसीरुहम्।
श्रयितुमर्द्धपथं कृतमन्तरा श्वसितनिर्मितमर्मरमुज्झितम्॥ २९॥
प्रियकरग्रहमेवमवाप्स्यति स्तनयुगं तव ताम्यति किन्त्विति।
जगदतुर्निहिते हृदि नीरजे दवथुकुड्मलनेन पृथुस्तनीम्॥ ३०॥

रणश्च। शम्भुदग्धः कामो मां शम्भुभ्रान्त्या न प्रहरिष्यतीति बुद्ध्वेव सा मृणालादि धृतवतीति प्रतीयमानोत्प्रेक्षेयम्॥ २७॥

विनिहितमिति। तया भैम्या, परितापिनि विरहसन्तापवति, हृदि वक्षसि, विनिहितम् अर्पितं चन्दनं धृता बुद्बुदाः फेणविकारविशेषा येन तादृशं सत्, आबभौ शुशुभे। उत्प्रेक्षते, अङ्कगता अन्तिकप्राप्ता उडवो नक्षत्राण्येव परिग्रहाः परिजना यस्य तादृशः सन्, हृदयेशयं भैम्या हृदि वर्तमानं, सुहृदं मित्रं कामम्, उपनमन् उपगच्छन् विधुरिव चन्द्र इव। चन्दनस्य चन्द्र-साम्यं बुद्बुदानां नक्षत्रसाम्यम्। एतेन तापाधिक्यं सूचितम्। अन्योऽपि परिजनसहितो मित्रमुपगच्छति। हृदयेशयमिति 'अकालवाचिनः शयवासवासिष्वि'ति सप्तम्या अलुक्। 'अङ्को भूषारूपकलक्ष्मसु। चिह्नाजौ नाटकाद्यंशे स्थाने क्रोडेऽन्तिकागसोः' हे। 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' मे॥ २८॥

स्मरेति। स्मरः काम एव, दाहकत्वाद्धुताशनो वह्निस्तेन दीपितया उत्तापितया तया भैम्या, मुहुरनेकवारम्, श्रयितुं शरीरसन्तापनिवारणाय आश्रयितुम्, अर्द्धपथं कृतम् अर्द्धवर्त्म प्रापितं, बहु अनेकं सरसं स्निग्धं सरसीरुहं पद्मम्, अन्तरा मध्ये, श्वसितेन अत्युष्णनिश्वासवायुना निर्म्मितो जनितो मर्म्मरः शब्दो यस्य एवंभूतम्, उज्झितम् अनुपयोगित्वात् परित्यक्तम्। एतेन सन्तापाधिक्यं सूचितम्। 'अर्द्धपथमिति 'ऋगादेरत्सर्वत्र' इत्यत्समासान्तः। 'अथ मर्मरः स्वनिते वस्त्रपर्णानाम्' अ॥ २९॥

प्रियकरेति। हृदि वक्षसि, निहिते भैम्या अर्पिते, नीरजे पद्मे कर्तृणी, दवथुकुड्मलनेन उत्तापजनितसङ्कोचेन, पृथुस्तनीं पीनस्तनीं दमयन्तीम्, इति जगदतुः ऊचतुरिव। इति किं?

---

"अत्रोत्प्रेक्षा" सा॥ २८॥

"मर्मरधर्म्मासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदोऽलङ्कारः" जी। छेकानुप्रासश्च। अतिशयोक्त्या च सन्तापाधिक्यं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ २९॥

"अत्रोत्प्रेक्षा" सा। कुड्मलनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, तदुत्थापिताचोत्-प्रेक्षेति सङ्करः॥ ३०॥

त्वदितरो न हृदापि मया धृतः पतिरितीव नलं हृदयस्थितम्।
स्मरहविर्भुजि बोधयति स्म सा विरहपाण्डुतया निजशुद्धताम् ॥ ३१ ॥
विरहतप्ततदङ्गनिवेशिता कमलिनी निमिषद्दलमुष्टिभिः।
किमपनेतुमचेष्टत किं परा-भवितुमैहत तद्दवथुं पृथुम् ॥ ३२ ॥
इयमनङ्गशरावलिपन्नग-क्षतविसारिवियोगविषावशा।
शशिकलेव खरांशुकरार्दिता करुणनीरनिधौ निदधौ न कम् ॥ ३३ ॥

नु भो भैमि ! तव स्तनयुगं कर्तृ एवमनेन प्रकारेण अस्मत्सङ्कोचकृतग्रहणरीत्या, आवयोर्यथा सङ्कोचस्तदाकारेण वा, प्रियस्य, नलस्य, करग्रहं कराभ्यां ग्रहणं अवाप्स्यति प्राप्स्यति, किं कथं, ताम्यति ग्लायति यद्वा भवती किं ग्लायति भावि सुखं मनसि कृत्वा भवत्या ग्लानिर्न कार्येत्यर्थः इति जगदतुरिवेति प्रतीयमानोत्प्रेक्षा। अनेनापि तापाधिक्यं सूचितम् ॥ ३० ॥

त्वदितर इति। हे प्रिय ! मया त्वदितरः, त्वद्भिन्नः, पतिः स्वामी, हृदापि मनसापि, न धृतः किं पुनर्हस्तादिना, इति प्रकारेण सा दमयन्ती,विरहेण या पाण्डुता तया, स्मरहविर्भुजि कामाग्नौ, निज-शुद्धतां स्वीयपातिव्रत्यं हृदयस्थितं चिन्ताविषयत्वान्मनोवर्त्तिनं नलं बोधयति स्मेव। ज्ञापयति स्मेव। विरहेण तस्या पाण्डुत्वाधिक्यं जातमिति भावः। अन्यापि सती स्वामिनं वह्नि-परीक्षया निजपातिव्रत्यं बोधयति ॥ ३१ ॥

विरहेति। विरहेण तप्ते, तस्या दमयन्त्याः, अङ्गे शरीरे निवेशिता तापोपशमनाय सखीभिः स्थापिता, कमलिनी पद्मिनी कर्त्री, निमिषन्ति सन्तापवशात् संकुचन्ति यानि दलानि तान्येव मुष्टयस्ताभिः करणैः, पृथुं महान्तं, तस्याः दमयन्त्याः, दवथुं संतापं, किम् अपनेतुं दूरीकर्त्तुम्, अचेष्टत उद्योगं चक्रे, किं वा पराभवितुं प्रहर्त्तुम् ऐहत चेष्टते स्म। द्वयोरपि मुष्टौ सम्भाव्यमानत्वात् अत्युत्तापवशात् पद्मिनीदलानि संकुचितानि जातानीति भावः ॥ ३२ ॥

इयमिति। इयं दमयन्ती, खरांशोस्तीक्ष्णकिरणस्य सूर्यस्य करैः किरणैरर्दिता पीड़िता, शशिकला इव चन्द्रलेखेव, कं जनं करुणनीरनिधौ करुणासमुद्रे, न निदधौ न निमज्जयामास अपि तु सर्वमेव निदधौ। किम्भूता ? अनङ्गस्य कामस्य, शरावलिर्बाणपङ्क्तिरेव पन्नगाः सर्पाः तेषां यत् क्षतं दंशनं

"अत्रोत्प्रेक्षा" सा। अग्निदिव्येन स्वशुद्धिं सीता राममिव नलं बोधयामासेवेत्युत्प्रेक्षा" जी ॥ ३१ ॥

"ऐहत किं ? अचेष्टत किमित्युत्प्रेक्षा, वस्तुतस्तु, न किञ्चित् कर्त्तुं शशाक। प्रत्युत स्वयमेव दग्धेत्यर्थः। अतएवानर्थोत्पत्तिलक्षणो विषमालङ्कारः। तदुत्थापिता चेयमुत्प्रेक्षेति सङ्करः" जी। कमलदलनिमेषासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। निमिषद्दले मुष्टित्वा-रोपात् निरङ्गरूपकञ्च। एतेषां संकरः ॥ ३२ ॥

"रूपकोपमयोरङ्गाङ्गिभावेन संकरः" जी। अनुप्रासश्च ॥ ३३ ॥

ज्वलति मन्मथवेदनया निजे हृदि तयार्द्रमृणाललतार्पिता ।
स्वजयिनोस्त्रपया सविधस्थयो-र्मलिनतामभजद्भुजयोर्भृशम् ॥ ३४ ॥
पिकरवश्रुतिकम्पिनि शैवलं हृदि तया निहितं विचलद्बभौ ।
सततनद्गतहृच्छयकेतुना हतमिव स्वतनूघनघर्षिणा ॥ ३५ ॥
न खलु मोहवशेन तदाननं नलमनः शशिकान्तमबोधि तत् ।
इतरथा शशिनोऽभ्युदये ततः कथमसुस्रवदस्रुमयं पयः ॥ ३६ ॥

तेन विसारि प्रसरणशीलं यत् वियोगो विरह एव विषं तेनावशा व्याकुला । यथा सूर्यकिरणग्लपितां चन्द्रकलां दृष्ट्वा सर्वेषां करुणा जायते तथा तथाभूतां दमयन्तीं दृष्ट्वा सर्वेषां करुणा जातेत्यर्थः । अन्यः सर्पदष्टोऽपि विषज्वालाविह्वलतया सर्वं सकरुणं करोति ॥ ३३ ॥

ज्वलतीति । तया भैम्या, मन्मथवेदनया कामजनितपीड्या, ज्वलति सन्तप्ते, निजे स्वकीये हृदि वक्षसि, अर्पिता तापोपशमनाय निहिता, आर्द्रा स्निग्धा, मृणाललता स्वजयिनोः स्वपराभविनोः सविधस्थयोः समीपवर्त्तिनोः भुजयोरतिसरलबाह्वोः, त्रपया लज्जयेव, भृशमत्यन्तं मलिनतां मालिन्यम्, अभजत् प्राप्ता । अन्योऽपि स्वजयिना सहैकत्र स्थितो मलिनमुखो भवति । सरसापि मृणाललता तस्या हृदयसम्पर्कान्मलिना जातेति तापाधिक्यं सूचितम् । प्रतीयमानोत्प्रेक्षेयम् ॥ ३४ ॥

पिकरवेति । पिकरवश्रुत्या विरहित्वात् कोकिलरवश्रवणेन, कम्पिनि कम्पमाने, हृदि वक्षसि, तया भैम्या, निहितं तापोपशान्त्यर्थम् अर्पितं, शैवलं शैवालं, विचलत् विशेषेण कम्पमानं सत्, बभौ शुशुभे । उत्प्रेक्षते—किम्भूतं ? सततं निरन्तरं, तद्गतस्य तत्र वर्त्तमानस्य हृच्छयस्य कामस्य केतुना ध्वजेन मत्स्येन स्वतनूं स्वशरीरं घनमत्यन्तं यथा तथा घर्षतीत्येवंभूतेन सता, हतमिव ताडितमिव । मत्स्यो हि शैवालैः शरीरघर्षणं करोतीति स्वभावः । घर्षणस्य घनत्वं कम्पाधिक्यसूचनार्थम् । तापोपशमनाय हृदि निक्षिप्तेऽपि शैवले कोकिलरवं श्रुत्वातितरां विह्वला जातेति भावः । शैवलशब्दः क्लीवलिङ्गोऽपि, तथा च हेमचन्द्रः । 'नील्यां शैवालशेवलं । शेवालं शैवलमि'ति ॥ ३५ ॥

न खल्विति । नलमनो नलान्तःकरणं कर्तृ, तत् अतिसुन्दरं तदाननं भैम्या मुखं, न खलु नैव, मोहवशेन उन्मादवशेन, शशिकान्तं चन्द्रवत् कमनीयम् अथ च चन्द्रकान्तमणिविशेषम् अबोधि जानाति स्म, किन्तु तत्त्वतएव चन्द्रकान्तत्वेनाबोधीत्यर्थः । इतरथा अन्यथा यदि

---

"हतामिव बभौ इत्युत्प्रेक्षा" जी ॥ ३५ ॥

"अत्रानुमानालङ्कारः" सा । चन्द्रवत्कमनीयस्य चन्द्रकान्तमणिविशेषस्य च भेदेऽपि चन्द्रकान्तपदश्लेषेणाभेदाध्यवसायात् श्लेषमूलातिशयोक्तिः, अस्रुमयपयः इत्यपह्नुतिः, तदाननं

रतिपतेर्विजयास्त्रमिषुर्यथा जयति भीमसुतापि तथैव सा।
स्वविशिखानिव पञ्चतया ततो नियतमैहत योजयितुं स ताम्॥ ३७॥
शशिमयं दहनास्त्रमुदित्वरं मनसिजस्य विमृश्य वियोगिनी।
झटिति वारुणमस्रु मिषाद्सौ तदुचितं प्रतिशस्त्रमुपाददे॥ ३८॥
अतनुना नवमम्बुदमाम्बुदं सुतनुरस्त्रमुदस्तमवेक्ष्य सा।
उचितमायतनिश्वसितच्छलात् श्वसनमस्त्रममुञ्चदमुं प्रति॥ ३९॥

तन्मुखस्य चन्द्रकान्तता तात्त्विकी न स्यात्तर्हि, शशिनश्चन्द्रस्य, अभ्युदये उदये, ततो भैमीमुखात्, कथम् अस्रु मयं वाष्पलक्षणं, पयो जलम्, असुस्रवत् क्षरति स्म। चन्द्रकान्तमणेर्हि चन्द्रोदये जलक्षरणं भवति। सा दिवसे कथञ्चित् स्वस्थतया स्थातुं शक्ता रात्रौ तु अत्यन्तोद्दीपकं चन्द्रं दृष्ट्वा सातिशयं रुरोदेति भावः॥ ३६॥

रतिपतेरिति। रतिपतेः कामस्य, इषुर्बाणो, यथा विजयास्त्रं विजयसाधनमस्त्रं जयति, तथैव इषुवदेव, सा भीमसुतापि दमयन्त्यपि, जयति सर्वोत्कर्षेण वर्त्तते, ततस्तस्माद्धेतोरेव स कामस्तां दमयन्तीं, स्वविशिखानिव आत्मबाणानिव, नियतं नियमेन, पञ्चतया पञ्चत्वसंख्यया, अथ च मरणेन, योजयितुम् ऐहत चेष्टते स्म। विरहेण मृतप्राया जातेति भावः। पञ्चतापदे श्लेषात् शब्दच्छलमूलेयं प्रतीयमानोत्प्रेक्षा। नियतशब्द उत्प्रेक्षावाचक इति केचित्। 'पञ्चता पञ्चभावः स्यात् पञ्चता मरणेऽपि च' वि॥ ३७॥

शशिमयमिति। वियोगिनी विरहिणी, असौ दमयन्ती, मनसिजस्य कामस्य, शशिमयं चन्द्रलक्षणं, दहनास्त्रम् अग्निबाणम्, उदित्वरं, उद्गतं, विमृश्य तर्कयित्वा, झटिति शीघ्रम्, अस्रु मिषात् नयनजलच्छलात्, तदुचितं दहनास्त्रनिवारणयोग्यं, वारुणं वरुणदैवतं जलरूपं प्रतिशस्त्रम्, उपाददे जग्राह। चन्द्रोदये सा विरहवेदनया भृशमरोदीदित्यर्थः। अन्योऽपि योद्धा प्रतिपक्षक्षिप्तमाग्नेयास्त्रं वारुणास्त्रेण निवारयति। उदित्वरमिति उत्पूर्वादिनगतावित्यस्माद्वरः, 'ह्रस्वात्तुग्वरादौ' इति तुक्॥ ३८॥

अतनुनेति। अतनुना कामेन, नवम् अम्बुदं नवमेघलक्षणम् आम्बुदम् अस्त्रम्, उदस्तमुत्-

---

शशिकान्तमणिः चन्द्रोदयकालीनपयःस्रावकत्वादित्यनुमानेन साध्यबोधात् अतिशयोक्तिमूलविच्छित्तिविशेषवत्तया अनुमानालङ्कारः, एतेषामङ्गाङ्गिभावेन संकरः अनुप्रासेन च संसृष्टिः॥३६॥

"अत्रातिशयोक्तिः" सा। "उपमोत्प्रेक्षयोः सकरः" जी। पञ्चसंख्या मरणं चेतिद्वयोर्भेदेऽपि, पञ्चतापदश्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिः, स्वविशिखानिवेति उपमालङ्कारश्चेति संकरः॥ ३७॥

"अत्रातिशयोक्तिरपह्नुतिश्च" सा। 'सापह्नवोत्प्रेक्षा" जी। ३८॥

अत्रापि पूर्ववदलङ्कारः॥ ३९॥

रतिपतिप्रहितानिलहेतितां प्रतियती सुदती मलयानिले ।
तदुरुतापभयात्तमृणालिकामयमियं भुजगास्त्रमिवादित ॥ ४० ॥
न्यधित तद्धृदि शल्यमिव द्वयं विरहिताञ्च तथापि च जीवितम् ।
किमथ तत्र निहत्य निखातवान् रतिपतिः स्तनविल्वयुगेन तत् ॥ ४१ ॥

क्षिप्तम्, अवेक्ष्य दृष्ट्वा, सा सुतनुर्दमयन्ती, आयतस्य दीर्घस्य निश्वसितस्य निश्वासस्य छलाद्व्याजात्, उचितम् आम्बुदास्त्रनिवारणयोग्यं, श्वसनम् अस्त्रं वायव्यमस्त्रम्, अमुं कामं प्रति,अमुञ्चत् त्यक्तवती। आम्बुदास्त्रं हि वायव्यास्त्रेण निवार्यते। मेघानामुद्दीपकत्वात् तान् दृष्ट्वा तस्या दीर्घनिश्वासाः जाता इत्यर्थः। अन्यत्रापि संग्रामे अतनुना क्षीणशरीरेण क्षिप्तमस्त्रं सुतनुः स्थूलशरीरोऽनायासेनैव निजक्षिप्तेनास्त्रेण निवारयति ॥ ३९ ॥

रतिपतीति। इयं सुदती शोभनदन्ता दमयन्ती, मलयानिले दक्षिणवायौ, रतिपतिना कामेन प्रहिता प्रेरिता या अनिलहेतिः वायव्यास्त्रं तस्य भावस्तत्ता तां, प्रतियती अवगच्छन्ती सती, नायं मलयानिलः किन्तु कामप्रक्षिप्तं वायव्यास्त्रमेवेति अवगच्छन्ती सतीत्यर्थः, तस्मात् कामात् य उरुर्महान् तापस्तस्माद्भयेन आत्ता गृहीता या मृणालिका विसानि तन्मयं, भुजगास्त्रं सर्पास्त्रमिव, आदित गृहीतवती। वायव्यास्त्रं हि भुजगास्त्रेण निवार्यते। मलयानिले वहति सति तस्योद्दीपकत्वात् संजाततापबाहुल्यनिवारणाय तया मृणालानि धृतानीत्यर्थः। प्रतीयतीति प्रतिपूर्वादिनधातोः शतृः। 'रवेरर्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः' अ ॥ ४० ॥

न्यधितेति। रतिपतिः कामस्तद्धृदि भैमीहृदये, विरहितां वियोगित्वं, तथापि वियोगित्वे सत्यपि। तथापि तथैव तत्प्रकारेणैवेति वा। जीवितञ्च जीवनञ्च द्वयं शल्यमिव शङ्कुद्वयमिव न्यधित आरोपितवान्। विरहस्यातिदुःसहत्वात् तदनुभवप्रधानहेतोर्जीवितस्य चाधार्यत्वात् शल्यसाम्यम्। अथ हृदयोपरि शल्यद्वयस्थापनानन्तरं तत् शङ्कुद्वयं स्तनावेव विल्वयुगं लोहमयविल्वयुग्मं तेन कृत्वा निहत्य निःशेषेण आहत्य तत्र हृदये किं निखातवान् शैथिल्यनिरासाय गाढं प्रवेशितवान्। विरहवशात्तस्या जीवनं दुःखेन धार्यं जातमिति भावः। अन्योऽपि कश्चित् स्थपतिः कुत्रचित् शङ्कुमारोप्य शैथिल्यनिरासाय तदुपरि लोहमयविल्वं संस्थाप्य मुद्गरेणाहत्य गाढं प्रवेशयति। किं वितर्के स्तनयोरत्यन्तकाठिन्यादेवं वितर्कः। चद्वयं समुच्चये ॥ ४१ ॥

---

"अत्र सापह्नवोत्प्रेक्षा" सा ॥ ४० ॥

"अत्रोत्प्रेक्षालङ्कारः" सा। पूर्वार्द्धे शल्यनिखननोत्प्रेक्षा, उत्तरार्धे निहत्येति निहननोत्प्रेक्षा, निखातवानित्यनुवादः" जी। शल्यमिवेत्युपमा, प्रस्तुते रतिपतौ कार्येणाप्रस्तुतस्य स्थपतेर्व्यवहारसमारोपात् समासोक्तिः, प्रस्तुतयोर्विरहिताजीवितयोर्न्यधितेत्येकक्रिययाभिसम्बन्धात् तुल्ययोगिता, स्तनविल्वयुगेनेतिरूपकमित्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ४१ ॥

अतिशरव्ययता मदनेन तां निखिलपुष्पमयस्वशरव्ययात् ।
स्फुटमकारि फलान्यपि मुञ्चता तदुरसि स्तनतालयुगार्पणा ॥ ४२ ॥
अथ मुहुर्बहुनिन्दितचन्द्रया स्तुतविधुन्तुदया च तया पुनः ।
पतितया स्मरतापमये गदे निजगदेऽस्रुविमिश्रमुखी सखी ॥ ४३ ॥
नरसुराब्जभुवामिव यावता भवति यस्य युगं यदनेहसा ।
विरहिणामपि तद्रतवद्युव-क्षणमितं न कथं गणितागमे ॥ ४४ ॥

अतीति । स्फुटमुत्प्रेक्षे, तां भैमीम्, अतिशरव्ययता अतितरां शरव्यां वेध्यां कुर्वता, मदनेन कामेन, अतएव निखिलानां सर्वेषां, पुष्पमयाणां स्वशराणां निजवाणानां व्ययात् नाशात्, तां प्रति फलान्यपि मुञ्चता वृक्षाणां सकलकुसुमव्ययात् तत्सन्निहितफलान्यपि प्रक्षिपता सता, तदुरसि तस्या भैम्या वक्षसि, स्तनावेव तालयुगं तालफलद्वयं तस्यार्पणा आरोपणम्, अकारि कृता। नेदं स्तनद्वयं किन्तु कामेनारोपितं तालफलद्वयमिति स्तनयोः पीनत्वादियमुत्प्रेक्षा। अन्योऽपि धानुस्को वाणव्ययेन सम्मुखवर्त्तिलोष्ट्रादिनापि वैरिणं हन्ति। अतिशरव्ययतेति 'नाम्नस्तत्करोत्यादौ' इत्यादिना णिङ् ततः शतृः। 'लक्षं लक्ष्यं शरव्यञ्च' अ ॥ ४२ ॥

एवं विरहप्रकारमुक्त्वा संप्रति तत्समयोपयुक्तं सखीं प्रति तस्या वचनोपक्रममाह – अथेति। अथानन्तरं स्मरतापमये गदे कामजनितसन्तापरूपे रोगे, पतितया निमग्नया अतएव मुहुर्व्वारंवारं बहु सातिशय यथा तथा निन्दितो विरहिपीड़कश्चन्द्रो यया तादृश्या, तथा पुनः स्तुतः प्रशंसितो विधुन्तुदो विरहिशत्रु चन्द्रपीड़को राहुर्यया तथाभूतया, च तया दमयन्त्या, अस्रुविमिश्रं सन्ताप-दर्शनेन रोदनान्नयनजलव्याप्तं मुखं यस्यास्तादृशी, सखी, निजगदे वक्ष्यमाणमुक्ता। अन्योऽपि रोगी असाधुं निन्दति साधुञ्च स्तौति। विधुन्तुद इति युक्तं पदं विधुं तुदतीति व्युत्पत्तेः 'तुदोविधुतिला-रुप' इति खः। 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' अ ॥ ४३ ॥

श्लोकत्रयेण विरहस्यातिदुःसहत्वमाह नरेति। हे सखि! नरसुराब्जभुवां नराणां मनुष्याणां सुराणां देवानाम् अब्जभुवो ब्रह्मणश्च मध्ये, यस्य यावता यत्परिमाणेन अनेहसा कालेन, यत् युगं भवति तद्वत्, विरहिणामपि वियोगिस्त्रीपुंससम्बन्ध्यपि, तत् युगं रतवन्तो रतियुक्ता, ये युवानो युवतयो युवानश्च तेषां यः क्षणस्तेन, मितं परिमितं सत्, गणितागमे ज्योतिःशास्त्रे, कथं किमिति न भवति। यथा ब्रह्मणः कतिचित्क्षणपरिमितं देवनां युगम् एवं देवानां कतिचिद्वत्सरपरिमितं मनुष्यानां युगं, गणितशास्त्रे उक्तं तथा सम्भोगिनां क्षणेन परिमितं

"अत्रोत्प्रेक्षारूपकम्" सा। "स्फुटमित्युत्प्रेक्षा, शरक्षये पाषाणादिनापि प्रहरन्तीति भावः" जी। स्तनतालयुगेतिरूपकम्, अनयोरङ्गाङ्गिभावेन संकरः ॥ ४२ ॥

"अत्र छेकानुप्रासः" सा ॥ ४३ ॥

"अत्रोपमातिशयोक्तिश्च" सा। अत्र नरसुराब्जभुवामिवेत्युपमा, रतवद्युवक्षणपरिमितस्य

जनुरधत्त सती स्मरतापिता हिमवतो न तु तन्महिमादृता ।
ज्वलति भालतले लिखितः सती-विरह एव हरस्य न लोचनम् ॥ ४५ ॥
दहनजा न पृथुर्दवथुव्यथा विरहजैव पृथुर्यदि नेदृशम् ।
दहनमाशु विशन्ति कथं स्त्रियः प्रियमपासुमुपासितुमुत्सुकाः ॥ ४६ ॥
हृदि लुठन्ति कला नितराममू-र्विरहिणीवधपङ्ककलङ्किताः ।
कुमुदसख्यकृतस्तु वहिष्कृताः सखि विलोकय दुर्विनयं विधोः ॥ ४७ ॥

विरहिणां युगं तत्र किमिति नोक्तमित्यर्थः । सुखिभिर्यावान् कालः क्षणत्वेन ज्ञायते तावान् कालो दुःखिभिर्युगत्वेन ज्ञायते दुःखदत्वेनानुभूयमानतया गमयितुमिष्टत्वात् । यथा सम्भोगिनां कालः शीघ्रं याति तथा विरहिणामपि शीघ्रं यात्विति भावः ॥ ४४ ॥

जनुरिति । सती दाक्षायणी, स्मरतापिता सती, हिमवतो हिमालयात्, जनुर्जन्म अधत्त गृहीतवती, न तु न पुनस्तस्य हिमालयस्य, महिम्नि देवस्वरूपोऽयमिति महत्त्वे, आदृता जातादरा सती, जनुरधत्त । तस्य हिममयत्वादेव कामतापोपशमनार्थं सत्या जन्माङ्गीकृतं न तु देवत्वादिति भावः । तथा हरस्य शिवस्य, भालतले ललाटे विधात्रा लिखितः सतीविरह एव मूर्त्तिमान् ज्वलति न लोचनं तृतीयनयनं, न ज्वलति । शिवगौर्योरप्येतादृशी विरहज्वाला का कथा मादृशामिति भावः । 'सती पुनः कात्यायन्याञ्च साध्व्याञ्च' हे ॥ ४५ ॥

दहनजेति । दहनजा वह्निजनिता, दवथुव्यथा तापपीड़ा, न पृथुर्न गुर्व्वी, किन्तु विरहजैव वियोगजनितैव, दवथुव्यथा पृथुः अत्यन्तमसह्येत्यर्थः । यदि नेदृशं यद्येवं न स्यात्तर्हि स्त्रियः साध्व्यो नार्य्यः, कथम् उत्सुका उत्कण्ठिताः सत्यः अपगता असवः प्राणा यस्य तादृशं, मृतं प्रियं स्वामिनम्, उपासितुं सेवितुम्, आशु शीघ्रं विलम्बमकृत्वैव, दहनं वह्निं विशन्ति विरहव्यथाया असह्यत्वं विविच्य दहनव्यथामङ्गीकुर्वन्ति । तस्माद्वह्निव्यथातोऽतिदुःसहा विरहव्यथेति सिद्धमिति भावः ४६ ॥

अथ सप्तविंशतिश्लोकैश्चन्द्रमाक्षिपति —हृदीति । हे सखि ! विधोश्चन्द्रस्य, दुर्विनयम् अवि-

---

कालस्य विरहिणां युगत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्यनयोः संकरः ॥ ४४ ॥

"अत्रापह्नुतिः" सा । प्रकृतं हिमालयमहिमादरं हरतृतीयलोचनं च प्रतिषिध्य स्मरतापसतीविरहयोः जन्मकारणत्वस्थापनात् ॥ ४५ ॥

"अत्रानुमानम्" सा । विरहभीतसाध्वीप्रवेशलिङ्गेनाग्नेर्विरहतापाऽल्पतापानुमानात् । "अग्निदाहाद् विरहदाह एवाधिक इत्यर्थः, तस्य तत्परिहारार्थेन स्त्रीणामग्निप्रवेशकार्येण समर्थनात् कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः" जी । अनुप्रासश्च ॥ ४६ ॥

"अत्र समासोक्तिः" सा । प्रस्तुते विधौ अप्रस्तुतदुर्विनीतव्यवहारारोपात् । चतुर्थपादार्थं प्रति पूर्वपादवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्चेति संकरः ॥ ४७ ॥

अयि विधुं परिपृच्छ गुरोः कुतः स्फुटमशिक्ष्यत दाहवदान्यता।
ग्लपितशम्भुगलाद्गरलात् त्वया किमुदधौ जड़ वा वड़वानलात् ॥ ४८ ॥
अयमयोगिवधूवधपातकै-र्भ्रमिमवाप्य दिवः खलु पात्यते।
शितिनिशादृषदि स्फुटमुत्पतत्-कणगणाधिकतारकिताम्बरः ४९ ॥
त्वमभिधेहि विधुं सखि मद्गिरा किमिदमीदृगधिक्रियते त्वया।
न गणितं यदि जन्म पयोनिधौ हरशिरःस्थितिभूरपि विस्मृता ॥ ५० ॥

नीतत्वं, विलोकय पश्य। दुर्विनयमाह, विरहिणीनां वधेन यत्पङ्कं पापं तेन कलङ्किता जातकलङ्काः अमूर्दृश्यमानाः, कला नितरामत्यर्थं, हृदि लुठन्ति क्रीड़न्ति, तु पुनः, कुमुदैः सार्द्धं यत् सख्यं प्रकाशकत्वात् मैत्री तत् कुर्वन्तीति तादृश्यः कलाः, वहिष्कृता दूरतः परित्यक्ताः। पापिनां रक्षणं परोपकारकाणाञ्च परित्यागो महान् दुर्विनयः। 'अस्त्री पङ्कं पुमान् पाप्मा पापम्' अ ॥ ४७ ॥

अयीति। अयि हे सखि! विधुं चन्द्रं, परिपृच्छ विधुं प्रति प्रश्नं कुरु। किं पृच्छामीत्याह, हे विधो! त्वया कुतः कस्माद्गुरोरुपदेशकात्, दाहवदान्यता दाहदातृत्वं, स्फुटं शुद्धं यथा तथा अशिक्ष्यत अभ्यस्ता। हे जड़! अनुचिताभ्यासकारिन् मन्दबुद्धे! ग्लपितो ग्लानिं गमितो मलिनीकृतः शम्भुगलः शिवस्य कण्ठो येन तादृशात् गरलात् कालकूटात् किम् अशिक्ष्यत, किंवा उदधौ समुद्रे वड़वानलात् वाड़वाग्नेरशिक्ष्यत। हरमस्तके स्थितत्वात् तत्रकण्ठदेशस्थगरलात् किमिदमभ्यस्तं किं वा समुद्रे जातत्वात् तत्रत्यवड़वानलादभ्यस्तम्। अन्यस्माद्गुरोरीदृशदाहाभ्यासासम्भवादित्यर्थः। अतितीव्रदाहकत्वादीदृशोवितर्कः। केचितु उदधावित्युभयत्र योजयन्ति। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' अ ॥ ४८ ॥

अयमिति। हे सखि! खल्वत्र संक्षे, अयोगिन्यो विरहिण्यो या बध्वस्तासां वधेन मारणेन जनितैः पातकैः पापैः कर्तृभिः, अयं चन्द्रः, भ्रमिं भ्रमणम् अवाप्य, प्राप्य, दिवः स्वर्गात्, शितिनिशादृषदि कृष्णरात्रिलक्षणायां शिलायां, पात्यते प्रक्षिप्यते। कुतस्तवेयं सम्भावनेति विशेषणेनोपपादयति किम्भूतः? स्फुटन्तः शिलायां पातनादेव विदीर्यमाणा उत्पतन्तःउद्गच्छन्तश्च ये कणा लेशास्तेषां गणेन समूहेन अधिकं सातिशयं यथा तथा तारकितं जाततारकम् अम्बरमाकाशं यस्मात् तादृशः। शुक्लपक्षे परिपूर्णत्वाच्चन्द्रेण विरहिण्यः पीड्यन्ते तारकाश्च परिभूयन्ते कृष्णपक्षे चन्द्रतिरोधानात् विरहिणीनां तादृशपीड़ा न भवति तारकाश्च स्फुटतरा भवन्ति। मणयश्चूर्णिता अपि स्वभावं न त्यजन्तीत्युत्प्रेक्षा। अन्योऽपि पातकी पातकैर्भ्रामयित्वा स्वर्गात् शिलायां पात्यते कणाश्चोद्र्ध्वं गच्छन्ति ॥ ४९ ॥

त्वमिति। हे सखि! त्वं मद्गिरा मम वचसा, विधुं चन्द्रम्, अभिधेहि कथय। किम-

---

"अत्र च्छेकानुप्रासः" सा ४८ ॥
"अत्र रूपकमनुमानञ्च" सा। पात्यते खलु इत्युत्प्रेक्षा, निशादृशदीति रूपकम् ॥ ४९ ॥
"यस्तु कुलीनो भवति सत्सन्निधौ च वर्त्तते स परापकारं न करोति त्वया कुलीनत्वं सत्सन्नि-

निपततापि न मन्दरभूभृता त्वमुदधौ शशलाञ्छन चूर्णितः ।
अपि मुनेर्जठराचिंषि जीर्णतां वत गतोऽसि न पीतपयोनिधेः ॥ ५१ ॥
किमसुभिर्गलितैर्जड़ मन्यसे मयि निमज्जतु भीमसुतामनः ।
मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः ॥ ५२ ॥

भिधास्यामीत्याह - हे चन्द्र ! त्वया ईदृक् एवंविधम् इदं विरहिवधलक्षणं कर्म, किं कथम्, अधिक्रियते अङ्गीक्रियते विशिष्टेन त्वया इदं कर्तुं न युज्यते इत्यर्थः । यदि पयोनिधौ रत्नाकरे जन्म उत्पत्तिर्न गणितं न विचारितं, तर्हि हरस्य शिवस्य शिरो मस्तकरूपा स्थितिभूरपि वसतिस्थानमपि उत्तमसंसर्ग इत्यर्थः, विस्मृता न स्मृतिविषयीकृता । यद्यपि जना बाल्यावस्थापरिचितस्य जन्मस्थानस्य गुण विस्मरन्ति तथापि शिष्टसमाजवासगुणं स्मरन्त्येव तस्य ज्ञानावस्थापरिचितत्वात् त्वया तु तदुभयमपि परित्यक्तमिति भावः ॥ ५० ॥

निपततेति । हे शशलाञ्छन कलङ्किन् चन्द्र ! उदधौ समुद्रे, निपततापि विलोड्यतापि, मन्दरभूभृता मन्दरपर्वतेन, तत्र स्थितस्त्वं न चूर्णितः न चूर्णीकृतः । तथा पीतः पयोनिधिः समुद्रो येन तादृशस्य मुनेरगस्त्यस्य, जठराचिष्यपि उदराग्निज्वालायामपि, जीर्णतां नाशं, न गतोऽसि न प्राप्तोऽसि । वतेत्युभयत्रापि खेदे । अस्माकं दौर्भाग्येणैव तव द्वाभ्यामपि विनाशकारणाभ्यां विनाशो न जात इति भावः ॥ ५१ ॥

किमसुभिरिति । हे जड हे मूर्ख चन्द्र ! गलितैर्गतैरसुभिः प्राणैर्हेतुभिः, भीमसुताया दमयन्त्या मनो, मयि निमज्जतु निलीयताम्, 'मनश्चन्द्रे निलीयते' इति श्रुतेः । इति किं मन्यसे मनसि निश्चिनोषि । प्राणेषु गतेषु दमयन्त्या मनो मयि निलीनं भविष्यतीत्येवं मनसि निश्चयं माकार्षीरित्यर्थः । श्रुतिप्रतिपाद्यं न मन्यसे कथमित्याह -किल यस्मात्, विबुधो देवः स्मरः अथ च पण्डितो वेदव्याख्यानकर्त्ता, तदर्थिकां मृतानां चन्द्रे मनोलीयते इत्येतत्प्रतिपादिकां श्रुतिं, नलमुखेन्दुपरां नलवदनरूपचन्द्रविषयिकां, मम आह कथयति । सामान्यापि श्रुतिर्विशेषपरतया पण्डितेन कामेन व्याख्याता अतएव तादृशश्रुत्या वास्तविकमर्थमविज्ञाय केवलं यथाश्रुतार्थमादाय विवदमानस्य जडत्वमेव युक्तमिति तथा सम्बोधनं कृतम् । अति·

---

धित्वं चोभयमपि विस्मृतम्। पापिना सह साक्षान्मया नोच्यते इति मद्विरेत्यनेन सूचितम्" ना। परोपकारकरणकारणे सति तदभावात्, परापकारकारणेऽसत्यपि तत्सद्भावाच्च विशेषोक्तिविभावनासंकरो व्यज्यते ॥ ५० ॥

"अत्र विभावनालंकारः" सा। विनाशकारणयोः सतोरपि विनाशाभावात् विशेषोक्तिः, विनाशाभावकारणासत्त्वेऽपि तत्सद्भावाद् विभावना चेति संकरः ॥ ५१ ॥

"अत्र रूपकमतिशयोक्तिश्च" सा । नल मुखेन्द्विति रूपकम्, श्रुतेस्तथाव्याख्यासम्बन्धेऽपि तत् सम्बंधोक्तेरतिशयोक्तिः साच विबुधेतिशब्दश्लेषोत्थापिता । 'विबुधः पण्डिते सुरे' हे ॥ ५२ ॥

मुखरय स्वयशोऽनवडिण्डिमं जलनिधेः कुलमुज्ज्वलयाधुना।
अपि गृहाण बधूवधपौरुषं हरिणलाञ्छन! मुञ्च कदर्थनाम्॥ ५३॥
निशि शशिन् भज कैतवभानुता-मसति भास्वति तापय पाप माम्।
अहमहन्यवलोकयितास्मि ते पुनरहर्पतिनिर्धुतदर्पताम्॥ ५४॥
शशकलङ्क! भयङ्कर! मादृशां ज्वलसि यन्निशि भूतपतिं श्रितः।
तदमृतस्य तवेदृशभूतता-द्भुतकरी परमूर्द्धविधूननी॥ ५५॥

पीडायां कृतायामपि अहं न त्वदधीना भविष्यामि किन्तु नलाधीनैव भविष्यामीति भावः। 'स्मरः स्मृतौ स्मरः कामे वेदव्याख्यातरि स्मरः' व॥ ५२॥

मुखरयेति। हे हरिणलाञ्छन मृगाङ्क! त्वमधुना इदानीं, स्वयशसोनिजकीर्त्तेर्नवं नूतनं, डिण्डिमं वाद्यविशेषं, मुखरय अतितरां वादय मादृशीष्वकारणवैरप्रकटनेन जगति महतीं कीर्त्तिं विस्तारयेत्यर्थः। तथा स्वपितुर्जलनिधेः समुद्रस्य, कुलम् उज्ज्वलय उद्दीपय, एतादृगनपराधजन-पीडनजनितपुण्यवता पुत्रेण त्वया पितुः कुलमुज्ज्वलं क्रियतामित्यर्थः। बधूनां स्त्रीणां, वधे मारणे, पौरुषमपि गृहाण। सोल्लुण्ठनोक्तिरियम्। मद्वधेन तव अकीर्त्तिः कुलनिन्दा अपौरुषं च भविष्यतीति भावः। अतएव कदर्थनां यातनादानं मुञ्च त्यज। 'वाद्यप्रभेदा डमरुमड्डु' डिण्डिमझर्झराः' अ॥ ५३॥

निशीति। हे शशिन् शशकलङ्किन् चन्द्र! निशि रात्रौ, कैतवेन छलेन भानुतां सूर्यत्वं भज गृहाण, तद्वद्दाहकत्वात्। तथा हे पाप दुरात्मन्! असति अविद्यमाने भास्वति, मां तापय ज्वलय। अहनि दिवसे, पुनस्ते तव, अहर्पतिना सूर्येण निर्धुतो निराकृतो दर्पो गर्वो यस्य तस्य भावम्, अहं अवलोकयितास्मि द्रक्ष्यामि। असति भास्वतीति उभयत्र वा योजनीयम्। रात्रावविद्यमाने सूर्ये तदीयदाहकतामवलम्ब्य मयि यथेच्छं कुरु इदानीं न किञ्चिदपि वदामि, किन्तु दिवसे सूर्यप्रकाशात्तवैतादृग्दौरात्म्यं न स्थास्यतीति लौकिकोक्तिः। लोके हि भाविदुःखोद्घाटनेन शत्रुं भाययति। अवलोकयितास्मीति लुटउत्तमपुरुषैकवचनम्॥ ५४॥

शशकलङ्केति। हे शशकलङ्क हे मृगाङ्क! मादृशां विरहिणीनां भयङ्कर सन्त्रासजनक,

"अत्रस्तुतिनिन्दा" सा। व्याजस्तुतिरिति नवीनाः। अत्र बधूवधस्यानिष्टत्वेनाविधेयस्य विधानात्, 'विषं भुङ्क्ष्व' इतिवन्निषेधपरो विध्याभासः। अनिष्टनिषेधाभासपराक्षेपा-लंकारभेदः" जी॥ ५३॥

'असातिशयोक्तिः' चन्द्रे कैतवभानुताभेदाध्यवसायात्। "पापिष्ठाः स्वविनाशमासन्नमपश्यन्तः परान् हिनस्तीति भावः" जी। अनुप्रासश्च॥ ५४॥

"अत्र श्लेषः" सा। जीवतः पिशाचत्वमद्भुतमिति श्लेषमूलको ध्वनिरिति नव्याः। अनु-प्रासश्च॥ ५५॥

श्रवणपूरतमालदलाङ्कुरं शशिकुरङ्गमुखे सखि ! निक्षिप ।
किमपि तुन्दिलितः स्थगयत्यमुं स यदि तेन समुच्छ्वसिमि क्षणम् ॥ ५६ ॥
असमये मतिरुन्मिषति ध्रुवं करगतैव गता यदियं कुहूः ।
पुनरुपैति निरुध्य निवास्यते सखि ! मुखं न विधोः पुनरीक्ष्यते ॥ ५७ ॥

निशि रात्रौ, भूतानां पृथिव्यादीनां पतिं विभुत्वात् श्रेष्ठम् आकाशं श्रितः आश्रितः सन्, यत् ज्वलसि अन्तर्भाविण्यर्थत्वाद्विरहिजनान् ज्वलयसीत्यर्थः, तत्तस्मात् अमृतस्य पीयूषमयस्य, तव ईदृशभूतता एतादृग्रूपता विरहिजनदाहकस्वरूपतेत्यर्थः । अद्भुतकरी चमत्कारजनिका, किम्भूता ? परस्य मूर्द्धानं मस्तकं विधूनयति कम्पयतीति तादृशी । अमृतमयस्य दाहकत्वमाश्चर्यमेवेत्यर्थः । दग्धस्यापि पीडातिशयान्मूर्द्धा कम्पते । अथ च भूतपतिं पिशाचाध्यक्षम् आश्रितः सन् रात्रौ यत् ज्वलसि ज्वलद्रूपो भवसि तस्मात् अमृतस्य जीवत एव तव परमूर्द्धविधूननी ईदृशभूतता एतादृक्पिशाचता अद्भुतकरी आश्चर्यजनिका । मृतस्यैव भूतत्वं श्रुतं न तु जीवतस्तव तु जीवतोऽपि तद् दृश्यत इत्याश्चर्यम् । पिशाचोऽपि यमाविशति तस्य मूर्द्धा कम्पते ॥ ५५ ॥

श्रवणेति । हे सखि ! त्वं श्रवणपूरः कर्णपूरीकृतो यस्तमालदलाङ्कुरस्तमालवृक्षपत्राङ्कुरस्तं, शशिकुरङ्गमुखे चन्द्रहरिणस्य मुखे, निक्षिप अर्पय । किमर्थं तत् करोमीत्याह, स कुरङ्गस्तेन तमालपत्राङ्कुरेण तुन्दिलितः स्थूलीकृतः सन्, यदि किमपि स्वल्पमपि, अमुं चन्द्रं स्थगयति आच्छादयेत्तर्हि क्षणम् अल्पकालमपि, समुच्छ्वसिमि जीवामि । तमालपत्राङ्कुरभोजनपुष्टेन हरिणेन यदि चन्द्रस्तिरोहितः स्यात्तदा तद्दर्शनाभावात् क्षणमात्रमपि जीवेयमित्यर्थः । स्थगयति उच्छ्वसिमीति आशंसायां लट् । 'तुन्दिलित इति तुन्दिलः कृत इति 'नाम्न' इत्यादिना णिङ् ॥ ५६ ॥

असमय इति । ध्रुवं निश्चितं, मतिर्बुद्धिः, असमये अकालएव, उन्मिषति स्फुरति, यद्यस्मात् इयं कुहूरमावास्या करगतैव हस्तगतैव हस्तप्राप्तैव गता अचिरमेव गतेत्यर्थः, यदि समये मतिस्फूर्त्तिर्भवेत्तर्हि तदैव कुहूर्निरुद्धा भवेत् येन दुरात्मनश्चन्द्रस्य दर्शनं न भवेदित्यर्थः । पुनरागमने परामृशति—सा कुहूः यदि पुनरुपैति आगमिष्यति, तर्हि निरुध्य निरोधं कृत्वा, त्वया इतः कदापि न गन्तव्यमिति बलाद्गृहीत्वेत्यर्थः, निवास्यते स्थापयिष्यते, हे सखि न पुनर्विधोश्चन्द्रस्य मुखम् ईक्ष्यते अमावास्यायां तद्दर्शनासम्भवात् । उपैति निवास्यते ईक्ष्यत इति वर्त्तमानसामीप्ये लट् ॥ ५७ ॥

"अत्रहेतुः" सा । सच तेनेत्यभेदार्थकतृतीयया स्थगनस्य हेतोरुच्छ्वसनाभेदाभिधानात् समर्थनीयः ॥ ५६ ॥

"अत्रार्थान्तरन्यासोऽलंकारः" सा ॥ ५७ ॥

अपि ममैष चकोरशिशुर्मुनेर्व्रजति सिन्धुपिबस्य न शिष्यताम्।
अशितुमब्धिमधीतवतोऽस्य वा शशिकराः पिबतः कति शीकराः ॥ ५८ ॥
कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरञ्च कुरुष्व मे।
विशति तत्र यदैव विधुस्तदा सखि! सुखादहितं जहि तं द्रुतम् ॥ ५९ ॥
उदर एव धृतः किमुदन्वता न विषमो वड़वानलवद्विधुः।
विषवदुज्झितमप्यमुना न स स्मरहरः किममुं बुभुजे विभुः ॥ ६० ॥

अपीति। हे सखि! मम एष चकोरस्य पक्षिविशेषस्य शिशुर्बालः, सिन्धुपिबस्य जलधिपानकर्तुर्मुनेरगस्त्यस्य, शिष्यतां छात्रतां न व्रजति न गच्छेत्, एतत् पृच्छामीति शेषः। अपि सम्भावनायाम्। किमेतादृक्सम्भावनायाः फलमित्याह— अब्धिं समुद्रम् अशितुं पातुम् अधीतवतोऽध्ययनं कुर्वतः समुद्रपानसमर्थस्येत्यर्थः, पिबतश्चन्द्रकरपानं कुर्वतोऽस्य चकोरशिशोः, शशिकराश्चन्द्रकिरणाः कतिशीकरा वा कियद्बिन्दवो वा भविष्यन्ति अपि तु स्वल्पा एव भविष्यन्ति। यस्य समुद्रपानसामर्थ्यं तस्य चन्द्रकिरणपानं सुकरमित्यर्थः। एवं सति कदापि चन्द्रदर्शनं न स्यादिति भावः। सिन्धुपिबस्येति 'अप्रादेश्चेत्येक' इति पिबतेः शङ्, सिन्धोः पिबः सिन्धुपिब इति षष्ठीतत्पुरुषः ॥ ५८ ॥

कुर्विति। हे सखि! एकं गुरुं महान्तं अयोघनं लोहमुद्गरं, करे हस्ते, कुरु स्थापय, एवम् इतो गृहात् मे मम मुकुरञ्च दर्पणञ्च, बहिः कुरुष्व बहिः स्थापय। एवंकरणे किं प्रयोजनमित्याह, तत्र मुकुरे, विधुश्चन्द्रो, यदैव यस्मिन्नेव क्षणे, विशति तदा तस्मिन् क्षणे, सुखादनायासेन, तम् अहितं शत्रुं, चन्द्रं, द्रुतं शीघ्रं जहि चूर्णीकुरु। तेन मम पीड़ाशान्तिर्भविष्यतीति भावः। 'दर्पणे मुकुरादर्शौ' अ ॥ ५९ ॥

उदर इति। उदन्वता समुद्रेण, विषमोऽतिदुःसहो यद्वा विषेण मीयते उपमीयतेऽसाविति तादृशो, विधुश्चन्द्रो, वड़वानलवत् वाड़वाग्निवत्, उदरएव, अभ्यन्तरएव किं किमिति, न धृतः न स्थापितः। यथा लोकानां सन्तापकारी वड़वानलः समुद्रेण दयां प्रकाश्य निजाभ्यन्तर एव स्थापितस्त-

---

"अत्र विरोधादलंकारः" सा। "अत्र समुद्रपायिनो दण्डापूपिकया शशिकरपानसिद्धेरर्थापत्तिरलंकारः" जी। अनुप्रासश्च ॥ ५८ ॥

अनुप्रासोऽलङ्कारः। "अत्रचन्द्रप्रहारादिप्रलापा मेघसन्देशादिवन्मदनोन्मादविकारा इत्यनुसन्धेयम्" जी ॥ ५९ ॥

"अत्र सन्देहालङ्कारः" सा। नायं नव्यसम्मतः, उपमेये उपमानसंशयस्यैवैतदलङ्कारविषयत्वात्। वड़वानलवत्, विषवदित्युपमाद्वयम्, तेन च क्रमेण विधोर्दाहकत्वमतिपीड़ाकरत्वं च व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥ ६० ॥

अस्तिमेकसुराशितमप्यभून्न पुनरेष विधुर्विषदं विषम् ।
अपि निपीय सुरैर्जनितक्षयं स्वयमुदेति पुनर्नवमार्णवम् ॥ ६१ ॥
विरहिवर्गवधव्यसनाकुलं कलय पापमशेषकलं विधुम् ।
सुरनिपीतसुधाकमपापकं ग्रहविदो विपरीतकथाः कथम् ॥ ६२ ॥

थायमपि विरहितापकः किमिति तत्र न स्थापित इत्यर्थः । किञ्च विभुः प्रभुः लोकोपकरणसमर्थ इत्यर्थः, स्मरहरः विरहिशत्रु कन्दर्पविनाशकः शिवः, अमुना उदन्वता, उज्झितमपि त्यक्तमपि अमुं विधुं, विषवत् गरलवत्, किं कथं, न बुभुजे न भक्षितवान् । यथा समुद्रेण त्यक्तमपि लोकानां विनाशकं मत्वा गरलं शिवो दयां प्रकाश्य भुक्तवान् तथामुमपि किमिति न भुक्तवानित्युभयत्रापि व्यतिरेकेण दृष्टान्तः । तथा सत्यस्माकमेतादृक् दुःखं न स्यादिति भावः ॥ ६० ॥

असितमिति । एकेन न तु बहुभिः सुरेण देवेन शिवेन, अशितमपि भुक्तमपि, असितं कृष्णम् आर्णवं सामुद्रं विषं कालकूटाख्यं, न पुनरभूत् पुनर्नोत्पन्नं, किन्तु एष विधुरेतच्चन्द्रलक्षणं विषदं शुभ्रम्, आर्णवं विषं, सुरैः सर्वैर्देवैर्नत्वेकेन द्वाभ्यां वा, निपीय निःशेषेण पीत्वा, जनित उत्पादितः क्षयो विनाशो यस्य तथाभूतमपि, पुनर्नवं नवीनं सत् स्वयमुदेति उदयभाग् भवति । चन्द्रलक्षणविषस्याश्चर्यमेवेदं सामर्थ्यमित्यर्थः । आर्णवमित्युभयत्रापि सम्बध्यते ॥ ६१ ॥

विरहीति । हे सखि ! विरहिणां वियोगिस्त्रीपुंसानां वर्गस्य समूहस्य वधो मारणरूपं यद्व्यसनम् अशुभकर्म तत्राकुलम् आसक्तम्, अशेषकलं सम्पूर्णमण्डलं, विधुं चन्द्रं, पापं न तु शुभं, कलय जानीहि । अकारणविरहिजनमारणपापित्वात् । सुरैर्देवैर्निपीता सुधा अमृतं यस्य तादृशं क्षीणमित्यर्थः, विधुम् अपापकं पापशून्यं शुभमित्यर्थः कलय । विरहिमारणरूपपापकर्मणोविरतत्वादपापकत्वम् । ग्रहविदो ज्योतिर्वेत्तारोऽत्र विपरीता अन्यथाभूता कथा येषां तादृशाः, कथं विपरीतं कथयन्तीति तादृशा वा । ते हि पूर्णचन्द्रं शुभग्रहं क्षीणचन्द्रं पापग्रहं वदन्ति । तथा च वराहमिहिरः । 'क्षीणेन्द्वर्कयमारराहुशिखिनः पापा बुधस्तैर्युत' इति । विरहिवर्गवधजन्यं यद्व्यसनं पापं तेनाकुलं युक्तम् अतएव पापं पापिनं कलयेति वा । सम्पूर्णचन्द्रमण्डलस्यैवोद्दीपकत्वादेवमुक्तम् । 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवानिष्टफले पापे विपत्तौ निष्फलोद्यमे' मे ॥ ६२ ॥

---

व्यतिरेकोविरोधश्च" सा । उपमानादसितविषादुपमेयस्य विषदविषस्य विधोराधिक्यकथनात् व्यतिरेकः, जनितक्षयमपि पुनरुदेतीतिविरोधस्य चन्द्रस्वाभाव्येन परिहाराद् विरोधाभासः । विधौ विषदविषत्वारोपादधिकारूढवैशिष्ट्यरूपकम् ॥ ६१ ॥

अत्र पूर्णचन्द्रस्य पापत्वे प्रथमपादवाक्यार्थो हेतुः, क्षीणस्य तस्यापापत्वे च तृतीयपादार्थः, अतः पदार्थहेतुकं काव्यलिङ्गद्वयम् । अनुप्रासश्चेति संसृष्टिः ॥ ६२ ॥

विरहिभिर्बहुमानमवापि यः स बहुलः खलु पक्ष इहाजनि।
तदमितिः सकलैरपि यत्र तै-र्व्यरचि सा च तिथिः किममीकृता ॥ ६३ ॥
स्वरिपुतीक्ष्णसुदर्शनविभ्रमात् किमु विधुं ग्रसते स विधुन्तुदः।
निपतितं वदने कथमन्यथा वलिकरम्भनिभं निजमुज्झति ॥ ६४ ॥
वदनगर्भगतं न निजेच्छया शशिनमुज्झति राहुरसंशयम्।
अशित एव गलत्ययमत्ययं सखि विना गलनालविलाध्वना ॥ ६५ ॥

विरहिभिरिति। खलूत्प्रेक्षे, यः पक्षो, विरहिभिर्वियोगिभिः, बहु सातिशयं मानं सम्माननम् अवापि प्रापितः, तत्र चन्द्रस्य क्षीणत्वात् स पक्षः कृष्णपक्षः इह लोके, बहुलोऽजनि बहुलेतिनामा जातः। विरहिभ्यो बहुमानग्राहित्वात् बहु अर्थान्मानं लाति आदत्ते इति व्युत्पत्त्या बहुलेति यौगिकं कृष्णपक्षस्य नाम जातमित्यर्थः। यत्र तस्यां तिथौ सकलैरपि समस्तैरपि, तैर्विरहिभिः, तस्य बहुमानस्य अमितिरपरिमितता, व्यरचि रचिता, किमुत्प्रेक्षे, सा च सैव तिथिरमावास्या, अमीकृता अमेतिसंज्ञाकृता पण्डितैरिति शेषः। अमावास्यायां चन्द्रस्यात्यन्तादर्शनात्। विरहिणां कृष्णपक्षः सुखदस्तत्राप्यतिशयेनामावास्या तथेति भावः। 'अमावास्या त्वमावस्या तथैवामावसीति च। अमावासी च दर्शः स्यादमा सूर्येन्दुसङ्गमः' इति शब्दरत्नावली। बहुलः कृष्णपक्षेऽग्नौ' शब्दार्णवः ॥ ६३ ॥

स्वरिप्विति। स प्रसिद्धो विधुन्तुदो राहुः, स्वरिपोर्निजशत्रोर्नारायणस्य यत्तीक्ष्णः शितधारः सुदर्शनश्चक्रं तस्य विभ्रमात् वर्त्तुलत्वसाम्येन भ्रान्त्या, विधुं चन्द्रं, ग्रसते कवलयति किम्वित्युत्प्रेक्षे। अन्यथा यदि चन्द्रबुद्ध्या ग्रसते तदा वदने मुखे निपतितं निजं स्वीयभक्षणीयं, बलये पूजायै करम्भो दधिमिश्रितशक्तवस्तन्निभं तत्सदृशं, विधुं कथमुज्झति त्यजेत्। चन्द्रत्वप्रकारकबुद्ध्या ग्रासे तु नैव त्यजेदित्यर्थः। पूर्व्वानुभूतपराक्रमात् भगवत्सुदर्शनात् पुनर्वदनभेदशङ्कया चन्द्रस्य परित्यागः कृत इति भावः। 'करम्भं राहवे दद्यादि'ति ज्योतिषम्। 'बलिः पूजोपहारयोः' वि। 'करम्भोदधिशक्तवः' अ ॥ ६४ ॥

वदनेति। हे सखि! राहुः वदनगर्भगतं मुखमध्यप्राप्तं, शशिनं चन्द्रम्, असंशयं निःस-

"अत्रोत्प्रेक्षा" सा ॥ ६३ ॥

"अत्रानुमानं" सा। "निगरणलिङ्गेन पीडकसुदर्शनभ्रमस्यानुमानात्। "उत्प्रेक्षा" जी। वलिकरम्भनिभमित्युपमा। विधौ सुदर्शनभ्रमस्य कविप्रतिभोत्थापितत्वात् भ्रान्तिमांश्चेत्येतेषां सङ्करः, 'विधुं ग्रसते' विधुंतुदः" इत्युभयत्र 'विधु' शब्दार्थयोस्तात्पर्य्यमात्रभेदेन पुनरुक्ते लाटानुप्रासेन संसृष्टिः ॥ ६४ ॥

"अत्र विरोधाभासः" सा। अशितस्य जीवतो गलनस्य विरुद्धत्वेऽपि राहोरुदराभावेन तत्-

ऋजुदृशः कथयन्ति पुराविदो मधुभिदं किल राहुशिरश्छिदम् ।
विरहिमूर्द्धभिदं निगदन्ति न क्व नु शशी यदि तज्जठरानलः ॥ ६६ ॥
स्मरसखौ रुचिभिः स्मरवैरिणा मखमृगस्य यथा दलितं शिरः ।
सपदि संदधतुर्भिषजौ दिवः सखि तथा तमसोऽपि करोतु कः ॥ ६७ ॥

न्देहं, निजेच्छया स्वेच्छया, न उज्झति न त्यजति, किन्तु राहुणा अशित एव भक्षित एव, अयं शशी, अत्ययं नाशं, विना गलस्य कण्ठस्य यन्नालविलं नाडीरन्ध्रं तद्रूपो योऽध्वा पन्थास्तेन करणेन गलति निःसरति। राहोश्छिन्नमस्तकस्वरूपत्वेन उदराग्नेरभावान्नाशाभावः ॥ ६५ ॥

ऋजुदृश इति। ऋजुदृशो यथादृष्टग्राहिणः, पुराविदः पुराणज्ञाः, किल निश्चये प्रसिद्धौ वा, मधुभिदं मधुसूदनं, राहुशिरश्छिदं राहुमस्तकच्छेत्तारं, कथयन्ति न तु विरहिमूर्द्धभिदं वियोगिशिरश्छिदं, निगदन्ति कथयन्ति। तथाविधोक्तौ हेतुमाह, नु भो, यदि तस्य राहोः, जठरानल उदराग्निः स्यात्तदा शशी चन्द्रः, क्व कुत्र अपि तु न स्यादेव तस्योदराग्निना जीर्णीभूय विनाशमेव गच्छेदित्यर्थः। राहोः शिरश्छेदादेव जठराग्नेरभावात् चन्द्रस्य विद्यमानता तथा च कृष्णेन विरहिणां मस्तकानि च्छिन्नानीति भावः। राहुशिरश्छिदमिति राहोः शिरो राहुशिरस्तच्छिनत्तीति क्विप्। न चात्र दैत्यविशेषीयशिरोभागस्यैव राहुत्वादभेदे षष्ठीसमसनमनुशासनविरुद्धमिति वाच्यं राहुपदेनावयविलक्षणया दैत्यविशेषस्यैव बोधात्। दार्शनिकास्तु राहोः शिरो वसन्तस्य समय इत्यादौ तादात्म्यं षष्ठ्यर्थ इति वदन्ति, वस्तुतस्तु राहुरूपं शिर इति कर्मधारयेणात्र न क्वापि विप्रतिपत्तिरिति ध्येयम् ॥ ६६ ॥

स्मरेति। रुचिभिः कान्तिभिः, स्मरसखौ कन्दर्पस्य सखायौ, दिवः स्वर्गस्य भिषजौ चिकित्सकौ अश्विनीकुमारौ, यथा स्मरवैरिणा कन्दर्पस्य शत्रुणा महादेवेन, दलितं छिन्नं मख एव मृगस्तस्य मृगरूपधारिणो यज्ञस्येत्यर्थः, शिरो मस्तकं, सपदि तत्क्षणमेव, संदधतुर्घटयामासतुः, तथा तमसोऽपि राहोरपि, कः करोतु तथाविधः कोऽपि नास्तीत्यर्थः। यथा कामशत्रुणा छिन्नं मखमृगमस्तकं काममित्राभ्यामश्विनीकुमाराभ्यां संघटितं तथा विरहिशत्रुणा विष्णुना छिन्नं

---

परिहारात्। गलतीवेति प्रतीतेः प्रतीयमानोत्प्रेक्षा। "राहोः शिरोमात्रत्वेन कण्ठनालनिःसृतस्याशितस्य जठराग्निसंयोगविरहात् अस्य पापिष्ठस्येन्दोः पुनरुदय इत्युत्प्रेक्षार्थः" जी ॥ ६५ ॥

"अत्र हेतुः" सा। सच चिन्त्यः। ऋजुदृक्पदार्थस्य पुराविदां राहुशिरश्छिदुक्तिहेतुत्वात्, तथा यदि जठरानलेति वाक्यार्थस्य क्वनु शशीतिवाक्यार्थहेतुत्वात् काव्यलिङ्गद्वयम्। "राहुशिरश्छेदेन तदीयजठराग्निविच्छेदकत्वात् विरहिमारकं शशिनमुज्जीवयन्नयं विष्णुर्विरहिशिरश्छेदीत्येवं व्यपदेशः, न राहुशिरश्छेदीत्यर्थः ॥ ६६ ॥

'असोपमा" सा ॥ ६७ ॥

नलविमस्तकितस्य रणे रिपोर्मिलति किन्न कबन्धगलेन वा।
मृतिभिया भृशमुत्पततस्तमोग्रहशिरस्तदसृग्दृढबन्धनम्॥ ६८॥
सखि जरां परिपृच्छ तमः शिरः सममसौ दधतापि कबन्धताम्।
मगधराजवपुर्दलयुग्मवत् किमिति न व्यतिसीव्यति केतुना॥ ६९॥

राहुमस्तकं कः सन्दधातु विरहिणां मित्राभावादिति भावः। पुरा किल शिवेन छिन्नं यज्ञमृग-मस्तकं दस्राभ्यां संयोजितमिति पुराणवार्त्ता। 'तमस्तु राहुः स्वर्भानुः सैंहिकेयोविधुन्तुदः' अ॥ ६७॥

नलेति। वा अथवा, रणे युद्धे, नलेन विमस्तकितस्य छिन्नमस्तकीकृतस्य, रिपोः शत्रोः कवन्धगलेन मस्तकशून्यक्रियायुक्तकण्ठेन सह, तमोग्रहस्य राहुग्रहस्य, शिरो मस्तकं किं न मिलति न संयुक्तं भवति अपि तु भवितुमर्हत्येव। कथं भूमिष्ठेन कबन्धगलेन सह आकाशस्थराहुशिर-सोमेलनसम्भावनेति रिपुं विशिनष्टि। किंभूतस्य? मृतिभिया मरणशङ्कया, भृशमत्यर्थम्, उत्पतत ऊर्द्ध्वं गच्छतः। जायतां कथञ्चित् संयोगः कथं गाढ़ता भवेदिति शिरो विशिनष्टि, किम्भूतं? तस्य कबन्धगलस्य असृजा रक्तेन दृढं गाढ़ं बन्धनं संयोगो यस्य तादृशम्। तेन मेलने हि राहुवदनपतितश्चन्द्रो गिलितो जठरानलेन जीर्णतां गमिष्यति तेन चास्माकमेतादृक् दुःखं न भविष्यतीति भावः। विगतं मस्तकं यस्य तथाभूतः कृत इति 'नाम्न' इत्यादिना णिङ् ततः कर्मणि क्तः। 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरः' अ॥ ६८॥

सखीति। हे सखि! त्वं जरां जरानाम्नीं राक्षसीम्, इति पृच्छ, असौ जरा, कबन्धताम् अपमूर्द्धकलेवरतां, दधता धारयता केतुनापि केतुग्रहेणापि, समं सह, तमःशिरो राहुमस्तकं मगधराजस्य जरासन्धस्य, वपुषो दलयुग्मवत् खण्डद्वयवत्, किमिति कुतोहेतोर्न व्यतिसीव्यति न संयोजयति। यथा त्वया मगधराजस्य वपुषो दलद्वयं संयुक्तं तथा राहोः कथं न संयुज्यत इति त्वया जरां प्रति वक्तव्यमित्यर्थः। व्यतिसीव्यतीत्यत्र सेवनक्रिययोर्विभिन्नकालीनत्वात् कर्मव्यतीहारे नात्मनेपदमिति केचित्, वस्तुतस्तु निर्ज्ञातान्यसम्बन्धायाः क्रियाया विपर्ययोऽन्यत्र दर्शनं कर्मव्यतीहार इति जुमरनन्द्युक्तेः, क्रिययोर्भिन्नकर्तृकत्व एव व्यतीहारे आत्मानेपदम्भवति अत्र तु द्वयोरपि सेवनयोर्जराया एव कर्तृत्वादिति ध्येयम्॥ ६९॥

---

"अत्रोत्प्रेक्षा" सा। काव्यलिङ्गमनुप्रासश्च॥ ६८॥

"अत्रोपमा" सा। अनुप्रासश्च। "जराकृताङ्गसन्धानो जरासन्ध इति भारतीकथा" जी॥ द्वापरयुगजजरासन्धाद् नलदमयन्त्योरर्वाचीनत्वेऽपि सृष्टिप्रवाहस्यानादित्वेन पूर्वकल्पीय-जरासन्धवृत्तान्तश्रवणेन दमयन्त्या वचनमिदं सङ्गच्छते इति बोध्यम्॥ ६९॥

वद विधुन्तुदमालि मदीरितै-स्त्यजसि किं द्विजराजधिया विधुम् ।
किमु दिवं पुनरेति यदीदृशः पतित एष निषेव्य हि वारुणीम् ॥ ७० ॥
दहति कण्ठमयं खलु तेन किं गरुडवद् द्विजवासनयोज्झितः ।
प्रकृतिरस्य विधुन्तुद दाहिका मयि निरागसि का वद विप्रता ॥ ७१ ॥

वदेति । हे आलि सखि ! त्वं मदीरितैर्मम वचनैः, विधुन्तुदं राहुं वद । किं वक्ष्यामीत्याह - हे राहो त्वं विधुं चन्द्रं, द्विजराजधिया ब्राह्मणश्रेष्ठोऽयमिति बुद्ध्या, किं त्यजसि उपेक्षसे । चन्द्रो नाममात्रेण द्विजराजो नतु ब्राह्मणश्रेष्ठत्वेन, तस्मादेनं निःशङ्कं नाशयेत्यर्थः । अस्य ब्राह्मणश्रेष्ठत्वाभावं द्रढयति । यदि एष चन्द्रः, ईदृशोऽर्थतोऽपि द्विजराजः स्यात्तर्हि, वारुणीं मदिराम् अथ च पश्चिमां दिशं, निषेव्य पीत्वा अथ च प्राप्य, पतितः पातित्ययुक्तोऽपि अथ च अस्तगतोऽपि, किमु दिवं स्वर्गम् अथ च अन्तरीक्षं, पुनरेति आगच्छति हि । पतितश्रोत्रियस्य स्वर्गगमनानधिकारात् । तस्मात् संज्ञामात्रेण द्विजराजोऽयं हन्तव्य इत्यर्थः । 'वारुणी गण्डदूर्वायां प्रतीचीसुरयोरपि' मे ॥ ७० ॥

ननु वारुणीसेवनाद् ब्राह्मणत्वस्य तारतम्यमेव भवति न तु तदपगच्छतीति ब्राह्मणमात्रोऽपि न हन्तव्य इति शास्त्रं, तत् कथमेनं हन्मीत्याशंक्याह दहतीति । खलु यस्मादयं चन्द्रः कण्ठं गलं दहति ज्वलयति, तेन हेतुना, गरुडवत् गरुडेनेव, त्वया द्विजवासनया ब्राह्मणबुद्ध्या, किं गिलितोऽपि चन्द्र उज्झितस्त्यक्तः । यथा निषादपुरं भक्षयता गरुडेन गिलितोनिषादीसंसर्गी कश्चिद् ब्राह्मणः कण्ठं दहन् परित्यक्तस्तथा त्वयापि किं कण्ठदाहकत्वाद् ब्राह्मणत्वमनुमाय चन्द्रः परित्यक्तः ब्राह्मणत्वाभावात् तद्वन्नैव परित्याज्य इत्यर्थः । एवञ्चेत् कण्ठदाहः कथमित्याह, हे विधुन्तुद ! राहो ! अस्य चन्द्रस्य, प्रकृतिः स्वभावो दाहिका दाहकर्त्री न तु ब्राह्मण्याद्दाहकतेत्यर्थः । कथमेवं ज्ञातमित्याह, यतो निरागसि निरपराधायां मयि का कीदृक्, विप्रता ब्राह्मण्यं, वद कथय, ब्राह्मण्यमपराधकारिणमेव दहति अतोऽयं ब्राह्मणो न भवति त्वयाऽवश्यमेव हन्तव्य इति भावः । 'अथ वासनं धूपनेऽपि च । वारिधान्याञ्च वस्त्रे च प्रत्याशाज्ञानयोः स्त्रियाम्' मे ॥ ७१ ॥

---

"अत्र समासोक्तिः" सा । चन्द्रे मद्यपब्राह्मणव्यहारसमारोपात् । "वारुणीपानस्य पतनहेतुत्वात्, तस्य स्वर्गगमनाभावहेतुत्वात्, पतितस्येन्दोस्स्वर्गगमनस्य ब्राह्मणत्वाभावबुद्धिहेतुत्वात् तस्य च त्यागाभावहेतुत्वात् काव्यलिङ्गालंकाराः । द्विजराजादिशब्दश्लेषमहिम्ना विषयनिगरणेन भेदेप्यभेदाभिधानादतिशयोक्तिः ॥ ७० ॥

"अत्रातिशयोक्तिरुपमाच" सा । विधौ विरहतापोद्दीपकत्वं तिरस्कृत्य दाहकप्रकृतित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, गरुडवदित्युपमा । 'आगोऽपराधो मन्तुश्च' अ । पुरा किल क्षुधितेन गरुत्मता पित्रादेशेन म्लेच्छान् भक्षयता गिलितो भ्रष्टद्विजः कश्चित् तद्दग्धगलेन सहसोद्गीर्ण इति पौराणिकी कथा, तथा माघश्चाह 'विप्रं पुरा पतगराडिव निजगार" जी ॥ ७१ ॥

सकलया कलया किल दंष्ट्रया समवधाय यमाय विनिर्मितः।
विरहिणीगणचर्वणसाधनं विधुरतो द्विजराज इति स्मृतः ॥ ७२ ॥
स्मरमुखं हरनेत्रहुताशना-ज्ज्वलदिदं चकृषे विधिना विधुः।
बहुविधेन वियोगिवधागसा शशमिषादथ कालिकयाङ्कितः ॥ ७३ ॥
इति विधोर्विविधोक्तिविगर्हणं व्यवहितस्य वृथेति विमृश्य सा।
अतितरां दधती विरहज्वरं हृदयभाजमुपालभत स्मरम् ॥ ७४ ॥

एवञ्चेत्तर्हि द्विजराजसंज्ञास्य कथमित्याह—सकलयेति। सकलया समस्तया, कलया दंष्ट्रया, दन्तेन, जात्याश्रयत्वादेकत्वं षोड़शसंख्यककलारूपैर्दन्तैरित्यर्थः। समवधाय संयोज्य विरहिणीनां गणस्य समूहस्य चर्वणसाधनं चर्वणनिष्पत्तौ कारणं, विधुश्चन्द्रो, यमाय यमार्थं किल यस्माद्विनिर्मितः अर्थाद्विधात्रा, अनेनैव यमोविरहिणीर्भक्षयतु इति विधात्रा रचितः, अतोहेतोर्द्विजैर्दन्तैराजत इति व्युत्पत्त्या द्विजराज इति स्मृतः द्विजराजसंज्ञत्वेन लोके ज्ञातः न त्वसौ ब्राह्मणश्रेष्ठत्वात् द्विजराजनामेत्यर्थः। इति विधुन्तुदं वदेति प्राक्तनतृतीयश्लोकेनान्वयः। 'दन्तविप्राण्डजा द्विजाः' अ ॥ ७२ ॥

स्मरमुखमिति। विधिना ब्रह्मणा हरनेत्रहुताशनात् हरनयनानलात्, ज्वलत् दह्यमानम् इदं दृश्यमानं स्मरमुखं विधुः कन्दर्पमुखं चन्द्रः, आचकृषे आकृष्टम्। नायं चन्द्रनामा कश्चिदतिरिक्तः पदार्थः किन्तु विधात्रा निजनिर्मितसमीचीनवस्त्वपचयव्याकुलितमनसा हरनयनानलादाकृष्टं दह्यमानं कन्दर्पस्य मुखमेवेत्यर्थः। तर्हि शशकलङ्कः कथमित्याह, अथानन्तरं बहुविधेन नानाप्रकारेण वियोगिवधागसा विरहिस्त्रीपुंसमारणापराधेन हेतुना शशमिषात् शशकलङ्कच्छलात् कालिकया श्यामिकया अङ्कितश्चिह्नितः। अन्यस्याप्यपराधिनोमुखे कालिका युज्यते ॥ ३ ॥

एवं चन्द्रं विनिन्द्य कन्दर्पं निन्दयितुमुपक्रमते—इतीति। अतितरामत्यर्थं, विरहज्वरं सन्तापं दधती धारयन्ती, सा दमयन्ती, व्यवहितस्य दूरस्थस्य, विधोश्चन्द्रस्य, इत्येवंप्रकारेण

---

"अत्रापह्नवोत्प्रेक्षा" सा। विधुस्वरूपमपह्नुत्य विरहिगणचर्वनसाधननिर्माणस्य सम्भावनात्। कलायां दंष्ट्रात्वारोपात् रूपकम् अनयोरङ्गाङ्गिभावेन सङ्करः। कलया कलयेति यमकेन च संसृष्टिः ॥ ७२ ॥

"अत्र रूपकमपह्नुतिश्च" सा। "दाहकालिमा वा पापकालिमा वा शशमिषाद् दृश्यते इति सापह्नवोत्प्रेक्षाद्वयम्। इदं शब्देन चन्द्ररूपं वस्तु निर्दिश्य तत्र स्मरमुखत्वारोपे रूपकम्, प्रकृतविधुं निगीर्य इदं स्मरमुखमित्यध्यवसाये अतिशयोक्तिरित्यनयोः सन्देहसंकरः। अनुप्रासेन च संसृष्टिः ॥ ७३ ॥

व्यवहितस्येतिपदार्थस्य निन्दाया वृथात्वे हेतुत्वात् काव्यलिङ्गम्, आद्यचरणे च्छेकानुप्रासः शेषार्धे चान्त्यानुप्रासश्चेति संसृष्टिः ॥ ७४ ॥

हृदयमाश्रयसे यदि मामकं ज्वलयसीत्थमनङ्ग तदेव किम् ।
स्वयमपि क्षणदग्धनिजेन्धनः क भवितासि हताश हुताशवत् ॥ ७५ ॥
पुरभिदा गमितस्त्वमदृश्यतां त्रिनयनत्वपरिप्लुतिशङ्कया ।
स्मर निरैष्यत कस्यचनापि न त्वयि किमक्षिगते नयनैस्त्रिभिः ॥ ७६ ॥

विविधोक्तिभिर्नानाविधाभिः कथाभिर्विगर्हणं विशेषेण गर्हणं निन्दा, वृथा निष्फलम् इति विमृष्य विचार्य, हृदयभाजं हृदयस्थितत्वादतिसन्निहितं, स्मरं कामम्, उपालभत निनिन्द। निन्दा हि निन्द्यमानश्रूयमाणैव निन्दकस्य हिताय भवतीति सा दूरस्थं चन्द्रं त्यक्त्वा समीपवर्त्तिनं स्मरं निन्दयितुमारब्धवतीति भावः ॥ ७४ ॥

पञ्चविंशतिश्लोकैः काममाक्षिपति--हृदयमिति। हे अनङ्ग काम ! यदि मामकं मदीयं, हृदयम् आश्रयसे आश्रित्य तिष्ठसि, तदा तदेव आश्रयभूतं हृदयमेव, इत्थमेवंप्रकारं किं किमर्थं, ज्वलयसि दहसि। किमिति न ज्वलयिष्यामीत्याह हे हताश विफलप्रत्याश ! अनालोचितभाविक्लेश क्षणेनाल्पकालेनैव, दग्धं निजेन्धनं स्वाश्रयमद्धृदयलक्षणं दाह्यं येन तादृशः सन्, त्वं हुताशवत् वह्निरिव स्वयमपि क भवितासि कुत्र स्थास्यपि अपि तु विनङ्क्ष्यसीत्यर्थः। यथा वह्निः क्षणदग्धनिजेन्धनः सन् विनश्यति तथा त्वमपि क्षणदग्धमद्धृदयलक्षणाश्रयः सन् विनङ्क्ष्यसि। अतो दाहमदत्त्वैव स्वाश्रयभूतं मम हृदयं रक्षेति भावः ॥ ७५ ॥

पुरभिदेति । पुरभिदा महादेवेन त्रिनयनत्वस्य त्रिनेत्रत्वस्य परिप्लुतिरतिप्रसक्तिस्तस्या शङ्कया ममासाधारणो धर्मस्त्रिनयनत्वं यदि मत्तोऽन्येषां स्यादित्येवमाशङ्कया त्वम् अदृश्यताम् अप्रत्यक्षविषयत्वं गमितः प्रापितः अन्यथा सशरीरस्यैव तव नयनानलेन दाहादिकं विदध्यान्न तु मारणमिति भावः। कथं मयि प्रत्यक्षे सति त्रिनयनत्वस्यातिप्रसक्तिरित्याह, हे स्मर त्वयि अक्षिगते सति अकारणपरापकारिणि त्वयि दृष्टे सति कस्यचनापि कस्यचिदपि जनस्य त्रिभिर्नयनैः किं न निरैष्यत, निर्गतैर्नाभविष्यत अपि तु सर्वेषामेव निरैष्यत। सर्वेऽपि अतिदुर्विनीतस्य तव प्रतीकाराय तपस्यादिना त्रिनयना भविष्यन्तीत्यर्थः योहि दुर्विनीतः पूर्वं केनापि येनोपायेन प्रतिकृतस्तेनैवोपायेनापरेऽपि तं प्रतिकुर्वन्ति नयनाग्निनैव शिवेनास्य प्रतिकृतत्वात्। दौरात्म्यं भगवता शिवेनाप्यनुभूतमिति भावः। प्राञ्चस्तु लौकिकोक्तिरियमिति वदन्ति तथा च लोके हि शत्रुं प्रति जातक्रोधं जनं दृष्ट्वा असौ इमं प्रति त्रिनेत्रोजात इति वदन्ति। अत्र त्रिनेत्रशब्देन कोपयुक्तत्वं लक्ष्यते। तथात्रापि सर्वेऽपि सक्रोधा भवेयुरित्यर्थः। छलात्तु सर्वेऽपि त्रिनेत्रा भवेयुरिति। केचित्तु योऽमुं द्रक्ष्यति तस्य ललाटेऽग्निर्ज्वलिष्यति ज्वालया ललाटे भिन्ने यदि अग्निर्दृश्यतां याति तदाहमिव सोऽपि त्रिनयनः

"परहिंसाव्यसनेनात्मनाशं न पश्यसीत्याशयेन हताशेत्यामन्त्रनम्।" जी। "अत्रानुप्रासोपमे" सा ॥ ७५ ॥

"अत्रोत्प्रेक्षा" सा ॥ ७६ ॥

सहचरोऽसि रतेरिति विश्रुति-स्त्वयि वसत्यपि मे न रतिः कुतः ।
अथ न संप्रति सङ्गतिरस्ति वा-मनुमृता न भवन्तमियं किल ॥ ७७ ॥
रतिवियुक्तमनात्मपरज्ञ किं स्वमपि मामिव तापितवानसि ।
कथमतापभृतस्तव सङ्गमा-दितरथा हृदयं मम दह्यते ॥ ७८ ॥
अनुममार न मार कथं नु सा रतिरतिप्रथितापि पतिव्रता ।
विरहिणीशतघातनपातकी दयितयापि तयासि किमुज्झितः ॥ ७९ ॥

स्यात् मम ललाटचक्षुषोऽग्निरूपत्वादित्यतस्तवादृश्यता कृतेत्यर्थः इत्याहुः । निरैष्यतेति निर्पूर्वादिनो लृङःस्यत ॥ ७६ ॥

सहचरइति । हे काम ! त्वं रतेः स्वप्रियाया अथ च प्रीतेः सहचरोऽसि तया विना एकाकी न कुत्रापि तिष्ठसि इति विश्रुतिर्विरुद्धा ख्यातिः रतिं विनापि त्वं तिष्ठसीत्यर्थः । यतस्त्वयि वसत्यपि मयि वर्तमाने सत्यपि मे मम प्रीतिः रतिः कुतो न कस्मान्न जायते त्वञ्चेद्रतिसहचरस्तदा त्वयि सति मम रतिरपि तिष्ठेदित्यतो विरुद्धैव सा प्रसिद्धिः । अथ किं वा, संप्रति अनङ्गतावस्थायां, वां युवयोः, सङ्गतिर्नास्ति एकत्रावस्थितिर्न विद्यते, किल यस्मात्, इयं रतिर्भवन्तम् अनु लक्षीकृत्य, न मृता अन्वारोहणं न चकार । शब्दच्छलमूलेयमुक्तिः । 'रतिः स्मरप्रियायाञ्च रागे च सुरते रतिः' वि ॥ ७७ ॥

रतिवियुक्तमिति । हे अनात्मपरज्ञ ! आत्मा असन्ताप्यः परस्तु सन्ताप्य एवं न जानातीति हे तादृश ! वैषयिकबुद्धिशून्येत्यर्थः, त्वं रतिवियुक्तां मामिव रतिवियुक्तं स्वमपि आत्मानमपि, किं तापितवानसि उत्तप्तीकृतवान् असि । कुत एवं ज्ञातमित्याह—इतरथा अन्यथा यद्यात्मानं न तापितवांस्तर्हि, अतापभृतः सन्तापरहितस्य, तव सङ्गमात् सम्बन्धात्, मम हृदयं कथं दह्यते स्वयमेव दह्यमानं भवति। दाहो हि सन्तप्तसङ्गादपि जायते परतापार्थं त्वमात्मानमपि तापितवान् । अतस्त्वत्सदृशः परापकारकोऽन्यो नास्तीति भावः । दह्यत इति कर्मकर्त्तरि रूपम् ॥ ७८ ॥

अनुममारेति । नु सम्बोधने, हे मार काम ! अतिप्रथिता पतिव्रतापि पतिव्रतात्वेनातिविख्यातापि, सा तव प्रिया रतिः, मृतं त्वाम्, अनु लक्षीकृत्य, कथं न ममार न म्रियते स्म । पतिव्रतानां

---

"अत्र विभावनाहेतुश्चालङ्कारः" सा । रतेरभावे कारणाभावेऽपि तत्सत्त्वात् विभावना, रतिसहचरवासरूपकारणे सत्यपि रत्यभावात् विशेषोक्तिश्च, "अत्र प्रीतिलक्षणाया रते रतिदेव्या सहाभेदाध्यवसायादयमुपालम्भः, तत एवातिशयोक्तिरलंकारः" जी ॥ ७७ ॥

"अत्रोपमानुमानञ्चालङ्कारः" सा । हृदयदाहलिङ्गेन हृदयस्थकामस्यापि दाहानुमानात् अनुमानं, मामिवेत्युपमा ॥ ७८ ॥

"अत्रातिशयोक्त्युत्प्रेक्षालङ्कारः" सा । कामजनिततापनिगरणेन तत्र पातकत्वाध्यवसायादतिशयोक्तिः, किमुज्झितोऽसीति उत्प्रेक्षा ॥ ७९ ॥

सुगत एव विजित्य जितेन्द्रिय-स्तदुरुकीर्त्तितनूं यदनाशयत् ।
नव तनूमवशिष्टवतीं ततः समिति भूतमयीमहरद्धरः ॥ ८० ॥
फलमलभ्यत यत् कुसुमैस्त्वया विषमनेत्रमनङ्ग विगृह्णता ।
अहह नीतिरवाप्तभया ततो न कुसुमैरपि विग्रहमिच्छति ॥ ८१ ॥
अपि धयन्नितरामरवत् सुधां त्रिनयनात् कथमापिथ तां दशाम् ।
भण रतेरधरस्य रसादरा-दमृतमात्तघृणः खलु नापिबम् ॥ ८२ ॥

पत्यनुमरणमावश्यकं तदनया यन्न कृतं तत्र हेतुमाह – दयितयापि अतिप्रिययापि तया रत्या, विरहिणीनां विरहिस्त्रीणां शतस्य घातनेन मारणेन पातकी विदितपातित्यजनकपापाश्रयस्त्वं, किमुज्झितोऽसि परित्यक्तोऽसि । किं वितर्के । विदितैहिकपातकस्य पत्युर्दाहनिषेधादेव स्त्रियस्तेन न सह गच्छन्ति। स्वस्त्रिया अपि परित्यक्तोऽसीति त्वत्सदृशोऽन्यो दुरात्मा नास्तीति भावः। 'मदनो मन्मथो मारः' अ ॥ ७९ ॥

सुगत इति । जितेन्द्रियो वशीकृतेन्द्रियः, सुगत एव बुद्ध एव, विजित्य पराभूय, तम् उर्वीं महतीं कीर्त्तिं तनूं शरीरं, यदनाशयत् नाशितवान्, ततोनाशानन्तरं जितेन्द्रियो हरः शिवः, समिति युद्धे, अवशिष्टवतीं कीर्त्तितनोरवशिष्टां, भूतमयीं पाञ्चभौतिकीं, तनूं शरीरम् अहरत् नाशितवान् । त्वं जितेन्द्रियाणामकिञ्चित्करोऽसीति भावः । अवशिष्टेति भावे क्तः ॥ ८० ॥

फलमिति । हे अनङ्ग काम ! कुसुमैः पुष्पैः करणैः, विषमनेत्रं शिवं, विगृह्णता प्रहरता, त्वया यत् फलं स्वशरीरनाशरूपं कुफलम्, अलभ्यत प्राप्तम्, अहह विस्मये, ततः फलादवाप्तं प्राप्तं भयं यया तादृशीव, नीतिर्नीतिशास्त्रं, कुसुमैरपि किं पुनरस्त्रादिभिः पुष्पैरपि विग्रहं युद्धं न इच्छति नोपदिशति । पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैरिति नीतिशास्त्रम् । अथ च युद्धं हि अङ्गसहितेन क्रियते त्वं पुनः स्वयमनङ्गः योद्धव्यः शिवस्तु विषमनेत्रः विषमोऽजेयोनेत्रोनायकः अतस्तथाविधेन सह विगृह्णतस्तव महन्मौर्ख्यमिति ध्वनिः । 'नेत्रं पथि गुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यान्तु नेता नेतरि वाच्यवत्' मे॥ ८१ ॥

अपीति । इतरामरवत् अन्यदेव इव, सुधाममृतं, धयन्नपि पिबन्नपि पीतसुधोऽपि, त्वं त्रिनयनान्महादेवात्, कथं तां दशाम् अनङ्गतारूपामवस्थाम्, आपिथ प्राप्तवानसि । अमृतपानेन इन्द्रादिवदमरः कथं नाभूरित्यर्थः । एवं प्रश्नपूर्वकं स्वयमप्युत्तरमुपदिशति । रतेः स्वप्रियाया अधरस्य रसे अस्वादे आदरात् गाढानुरागात् आत्ता गृहीता घृणा जुगुप्सा येन तादृशः सन्, खलु प्रायेण

"अत्र रूपकम्" सा ॥ ८० ॥
"अत्र प्रतीयमानोत्प्रेक्षा" सा ॥ ८१ ॥
"अत्रोत्प्रेक्षा" सा । अमृतादपि रतेरधरस्याधिक्यप्रतीतेर्व्यतिरेको व्यज्यते ॥ ८२ ॥

भुवनमोहनजेन किमेनसा तव परेत बभूव पिशाचता।
यदधुना विरहाधिमलीमसामभिभवन् भ्रमसि स्मर मद्विधाम्॥ ८३॥
वत ददासि न मृत्युमपि स्मर स्खलति ते कृपया न धनुः करात्।
अथ मृतोऽसि मृतेन च मुच्यते न किल मुष्टिरुरीकृतबन्धनः॥ ८४॥
दृगुपहत्यपमृत्युविरूपताः शमयतेऽपरनिर्ज्जरसेविता।
अतिशयान्ध्यवपुःक्षतिपाण्डुताः स्मर भवन्ति भवन्तमुपासितुः॥८५॥

अमृतं नापिवं न पीतवानस्मीति भण कथय। ओष्ठमाधुर्यलम्पटेन त्वया अमरत्वसाधनम् अमृतपानमप्यनङ्गीकृत्य अनङ्गता प्राप्तेति भावः। आपिथेति आपोलिटस्थङ्॥ ८२॥

भुवनेति। हे परेत मृत! भुवनानां जगतां मोहनाज्जातेन एनसा पापेन किं तव पिशाचता प्रेतत्वं बभूव जाता, यद्यस्मात् अधुना अस्मिन् समये, विरहाधिना वियोगजन्यमानसव्यथया मलीमसां मलिनां, मद्विधां मादृशीम् अभिभवन् पीड़यन्, त्वं भ्रमसि अन्योऽपि भुवनापकारजनितपातकेन पिशाचतां प्राप्य मलिनां स्त्रियं बलादभिभवति। भुवनापकारी त्वत्सदृशः कोऽप्यन्योनास्तीति भावः॥ ८३॥

वतेति। हे स्मर! वत कष्टं त्वं कृपया कारुण्येन, मृत्युमपि न ददासि मा कार्षीरुपकारं किन्तु झटिति मरणमपि मादृशां न जनयसीत्यर्थः। तथा ते तव कराद्धस्तात्, धनुरपि न स्खलति न पतति तथाचेदेतादृशी पीड़ा न स्यादित्यर्थः। धनुःपतनाभावे कारणमाह अथ अथवा त्वं मृतोऽसि मरणं प्राप्तोऽसि, तथात्वे वा कथं धनुषः पतनाभाव इत्याह, किल यस्मात् मृतेन जनेन उरीकृतमङ्गीकृतं बन्धनं कुञ्चनं येन तादृशो मुष्टिर्न च नैव मुच्यते त्यज्यते अतएव धनुर्न स्खलतीत्यर्थः। मुष्टिशब्दः पुंलिङ्गोऽपि॥ ८४॥

दृगिति। हे स्मर! अपरान् त्वद्भिन्नान् निर्जरान् देवान् सेवितुं शीलं यस्य तादृशो जनः दृशोर्नयनयोरुपहतिम् अन्धताम्, अपमृत्युं रोगादीन् विना आकस्मिकमरणं, विरूपतां कुष्ठादिना शरीरवैरूप्यं, शमयते नाशयति। परन्तु भवन्तम् उपासितुः सेवितुर्जनस्य, अतिशयेनान्ध्यं प्रतिपत्तिराहित्यं नेत्रराहित्यञ्च, वपुःक्षतिः शरीरकाश्यम्, आकस्मिकमरणञ्च पाण्डुता पाण्डुरोगश्च एता भवन्ति इतरदेवोपासकानामनर्थो नैवोत्पद्यन्ते उत्पन्नाश्च विनश्यन्ति तत्रोपासकस्य तु दूरे

---

"अत्रोत्प्रेक्षा" सा। "पापिष्ठाः किल पिशाचतां गताः दुर्बलस्त्रीबालादीन् पीड़यन्ति, त्वञ्च तादृक् कोऽपि पिशाच इत्युत्प्रेक्षा" जी॥ ८३॥

"अत्रोत्प्रेक्षा" सा॥ ८४॥

"अत्र व्यतिरेकालङ्कारः" सा। "अनर्थोत्पत्तिलक्षणो विषमालङ्कारभेदः" जी॥ प्रतिपत्तिराहित्यनेत्रराहित्यादीनां भेदेऽपि आन्ध्यादिशब्दश्लेषेणाभेदाध्यवसायादतिशयोक्तित्रयम्। छेकानुप्रासश्च॥ ८५॥

स्मर नृशंसतमस्त्वमतोविधिः सुमनसः कृतवान् भवदायुधम् ।
यदि धनुर्दृढमाशुगमायसं तव सृजेत् प्रलयन्त्रिजगद्व्रजेत् ॥ ८६ ॥
स्मररिपोरिव रोपशिखी पुरां दहतु ते जगतामपि मा त्रयम् ।
इति विधिस्त्वदिषून् कुसुमानि किं मधुभिरन्तरसिञ्चदनिर्वृतः ॥ ८७ ॥
विधिरनङ्गमभेद्यमवेक्ष्य ते जनमनः खलु लक्ष्यमकल्पयत् ।
अपि स वज्रमदास्यत चेत्तदा त्वदिषुभिर्व्यदलिष्यदसावपि ॥ ८८ ॥

तिष्ठत्वनर्थनिवारणं किन्तु उपासनाया माहात्म्यादनर्थाः क्षिप्रमुत्पद्यन्तेऽत स्त्वमेतादृशोदेव इत्युपहासोऽत्र ध्वन्यते । अपरनिर्जराणां सेविता सेवकत्वमिति वा ॥ ८५ ॥

स्मरेति । हे स्मर ! त्वं नृशंसतमः अत्यन्तहिंस्रः, अतो हेतोः, विधिर्ब्रह्मा, सुमनसः पुष्पाणि भवत आयुधम् अस्त्रं, कृतवान्, यदि तव धनुर्दृढं कठिनम्, एवम् आशुगं वाणम्, आयसं लोहमयं, सृजेत् कुर्यात्, तर्हि त्रिजगत् भुवनत्रयं प्रलयं नाशं, व्रजेत् गच्छेत् । दुष्टमनसस्तव आयुधस्य विधिना सुमनस्त्वं कृतमिति ध्वनिः ॥ ८६ ॥

स्मररिपोरिति । इव यथा, स्मररिपोः शिवस्य, रोपशिखी पुरां त्रयं ददाह तथा तव रोपशिखी वाणाग्निः जगतां त्रयं मा दहतु दग्धं मा कार्षीत् इति कृत्वा विधिर्ब्रह्मा अनिर्वृतो व्याकुलचित्तः सन्, कुसुमानि पुष्पमयान् त्वदिषून् तव वाणान्, अन्तर्मध्ये मधुभिर्मकरन्दैः, किम् असिञ्चत् सिक्तवान् । मधुसिक्तस्यापि त्वद्बाणस्येदृक् प्राखर्यं केवलस्तु कीदृग्भवेदिति भावः । 'कलम्बमार्गणशराः पत्नी रोप इपुर्द्वयोः' अ ॥ ८७ ॥

विधिरिति । हे काम ! विधिर्ब्रह्मा जनानां मनोऽन्तःकरणम्, अनङ्गं निरवयवम्, अतएव अभेद्यं भेत्तुमशक्यम् अवेक्ष्य निश्चित्य, खलु निश्चितम् उत्प्रेक्षे वा, ते तव लक्ष्यं वेध्यम्, अकल्पयत् कृतवान् । अपि सम्भावनायां, स विधि, श्चेद्यदि वज्रम् अदास्यत तव लक्ष्यं यदि वज्रम् अकल्पयिष्यत्, तदा आसावपि अतिकठिनो वज्रोऽपि, त्वदिपुभिस्तव वाणैः व्यदलिष्यत् विदीर्णोऽभविष्यत्, अतः पूर्वं ब्रह्मणा तव त्वदीयवाणानाञ्च क्रूरत्वं विचार्य्यैव अभेद्यं लक्ष्यं निर्दिष्टमित्यर्थः । 'ह्लादिनी वज्रमस्त्री स्यात्' अ ॥ ८८ ॥

---

"अत्रहेतुरलङ्कारः" सा । कामस्य नृशंसतमत्वादिव विधेः कुसुमायुधत्वकरणप्रतीतेः प्रतीयमानोत्प्रेक्षा ॥ ८६ ॥

"अत्रोपमोत्प्रेक्षालङ्कारः" सा । पुरां त्रयमिवेत्युपमा, असिञ्चत् किमित्युत्प्रेक्षा ॥ ८७ ॥

"अत्र विरोधालङ्कारः" सा । वज्रद्रव्यदलनक्रिययोर्विरोधात् कामवाणस्य प्रभावातिशयाच्च तत्परिहारात् विरोधाभासः । अभेद्यत्वं प्रति अनङ्गपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् ॥ ८८ ॥

अपि विधिः कुसुमानि तवाशुगान् स्मर विधाय न निर्वृ तिमाप्तवान् ।
अदित पञ्च हि ते स नियम्य तां-स्तदपि तैर्बत जर्जरितं जगत् ॥ ८९ ॥
उपहरन्ति न कस्य सुपर्वणः सुमनसः कति पञ्च सुरद्रुमाः ।
तव तु हीनतया पृथगेकिकां धिगियतापि न तेऽङ्गविधारणा ॥ ९० ॥
कुसुममप्यतिदुर्नयकारि ते किमु वितीर्य विधिर्धनुरग्रहीत् ।
किमतनूकृतैष तवैकतदास्पदे द्वयमभूदधुना हि नलभ्रुवौ ॥ ९१ ॥

अपीति। हे स्मर ! विधिर्ब्रह्मा, तव कुसुमान्यपि अतिकोमलानि पुष्पाण्यपि, आशुगान् वाणान्, विधाय कृत्वा, निर्वृ तिं सुस्थतां, नाप्तवान् न लभते स्म अतिहिंस्रोऽसौ पुष्पमयवाणेनापि जगदस्थिरं करिष्यतीति बुद्ध्वा निर्वृ तिं न प्राप्तवानित्यर्थः। कुत एवं त्वया ज्ञातमित्याह, हि यतः, स विधिस्तान् पञ्च आशुगान्, नियम्य पञ्चसंख्यत्वेन गणयित्वा, ते तुभ्यम्, अदित दत्तवान् न त्वधिकान् अदित, वत कष्टं, तदपि तथापि, तैः पञ्चभिरपि आशुगैः, जगद् भुवनं जर्जरितं जर्जरीकृतम्। हिंस्रतमोऽसीति भावः ॥ ८९ ॥

उपहरन्तीति। पञ्च सुरद्रुमाः पञ्चसंख्यका देवतरवो मन्दारादयः, कस्य सुपर्वणः कस्यापि देवस्य, कति सुमनसः पुष्पाणि, नोपहरन्ति नोपायनीकुर्वन्ति अपि तु असंख्याताः सुमनस उपहरन्तीत्यर्थः। तव तु देवस्यापि, हीनतया अपकृष्टतया, पृथक् प्रत्येकम् एकिकाम् एकाम् एकां सुमनसम् उपहरन्ति, अतएव पञ्चवाणस्त्वम्, इयतापि एतावताप्यपमानेन ते तव अङ्गविधारणा शरीरधारणं न धिक् निन्दनीया न अपि तु धिगेव। अनङ्गस्यापि तव एतादृक्तिरस्कारेणाप्य-ङ्गान्तरधारणं निन्दनीयमेवेत्यर्थः। न तेऽङ्ग विदारणमिति पाठे अङ्ग सोपहाससम्बोधने इयतापि तव विदारणं न हृदयस्फोटनं न किन्तु एतादृगपमानेन तव हृदयविदारणं युक्तमासीदित्यर्थः। अतएव त्वां धिगित्यन्वयः। सुमनःशब्दस्य 'सुमनोऽप्सरोवल्वजादेर्वे' ति पाक्षिकबहुवचनान्त-त्वादेकिकामित्यत्र न विप्रतिपत्तिः। अतएव 'वेश्या श्मशानसुमना इव वर्जनीया' इति मृच्छक-टिकम्। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दन-म्' 'स्त्रियः सुमनसः पुष्पम्' अ ॥ ९० ॥

कुसुममिति। किमुत्प्रेक्षायां प्रश्ने वा, विधिर्ब्रह्मा, ते तुभ्यं, कुसुममपि पुष्पमयमपि धनुर्वितीर्य दत्त्वा, किमु अग्रहीत् पुनर्गृहीतवान्, किम्भूतम् ? अतिदुर्नयकारि अकारणविरहि-

---

"अत्रापि विरोधः" सा। विधातुः पञ्चसंख्यानियतवाणदानमपि विफलमभूत्, परन्तु जगज्जर्जरीकरणरूपोऽनर्थः उत्पन्न इतिप्रतीते विषमालङ्कारभेदो वा ॥ ८९ ॥

"अत्र हेतुरलङ्कारः" सा ॥ ९० ॥

"अत्रोत्प्रेक्षातिशयोक्तिश्चालङ्कारः" सा। धनुषः पुनर्ग्रहणं प्रति अतिदुर्नयकारिपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं, विषमालंकारश्च टीकायामुक्तः ॥ ९१ ॥

षडृतवः कृपया स्वकमेककं कुसुममक्रमनन्दितनन्दनाः ।
ददति यद्भवते कुरुते भवान् धनुरिवैकमिषूनिव पञ्च तैः ॥ ९२ ॥
यदतनुस्त्वमिदं जगते हितं क स मुनिस्तव यः सहते हतीः ।
विशिखमाश्रवणं परिपूर्य चे-दविचलद्भुजमुज्झितुमीशिषे ॥ ९३ ॥

जनमारणसाधनत्वादत्यन्तविसदृशकर्तृ अतिदुर्नयकारीति ज्ञात्वा दत्तमपि पुनर्गृहीतवानित्यर्थः तथा सत्यपि एष विधिः किम् अकृत अपि तु किञ्चिदपि न कृतवानित्यर्थः । हि यतस्तव अधुना इदानीम् एकस्य तस्य धनुष आस्पदे स्थाने नलस्य राज्ञो भ्रुवौ धनुषो द्वयमभूत् नलभ्रुवावेव द्वे धनुषी जाते इत्यर्थः । जगतामुपकाराय पुष्पमयैकधनुःपुनर्ग्रहणप्रवृत्तेन विधिना विलक्षणनलभ्रूनिर्माणेन धनुर्द्वयकरणादत्यन्तापकार एव कृत इति भावः । अत्रारब्धवैफल्यपूर्वकानर्थसम्भवरूपो विषमालङ्कारः ॥ ९१ ॥

षडिति । अक्रमं क्रममुलङ्घ्यैव, नन्दितं शोभितं नन्दनम् इन्द्रोद्यानं यैस्तादृशा युगपन्नन्दनवनस्थितिका इत्यर्थः, षट्संख्यका ऋतवो हेमन्तादयः, कृपया न देवत्वानुरोधेन, स्वकं स्वीयम् एककम् एकम् एकं, यत् कुसुमं पुष्पं, भवते तुभ्यं, ददति । इवद्वयमुत्प्रेक्षायां, भवान् तैः षड्भिः कुसुमैर्विशिष्टः सन् एकं कुसुमं धनुरिव कुरुते पञ्चकुसुमानि इषून् बाणानिव कुरुते । त्वं देवेष्वतिदरिद्रोऽसि यत ऋतुभ्यो भिक्षया कुसुमषट्कमेव लब्ध्वा अनुपभोज्य धनुर्बाणांश्च कृतवान् । अतिदरिद्रोहि यत् किञ्चित् स्वल्पमपि वस्तु लब्ध्वा विभज्य नानाविधं करोति । यदि ऋतवः कृपया कुसुमषट्कं न दद्युः तदा तव धनुर्बाणाः कथं भवेयुः तथा सति तवैतादृशं दौरात्म्यं न भवेदिति ध्वनिः । तैरिति विशेषणे तृतीया ॥ ९२ ॥

यदिति । हे काम ! त्वं यत् अतनुरनङ्गः अथ च कृशोजात, इदम् अतनुत्वं, जगते हितं भुवनस्योपकारकं, चेद्यदि, आश्रवणं कर्णपर्यन्तं परिपूर्य आकृष्य, विशिखं बाणम्, अविचलन्तौ स्थिरीभवन्तौ भुजौ हस्तौ यत्र क्रियायां तद्यथा तथा, उज्झितुम् त्यक्तुम्, ईशिषे समर्थो भवसि, तदा यस्तव हतीर्बाणप्रहारान्, सहते स मुनिर्वशीकृतेन्द्रियः, क अपि तु न कुत्रापि । अधुना अनङ्गस्यापि तव बाणप्रहारोऽतिदुःसहः अङ्गवतस्तु मुनिना जितेन्द्रियेणापि सोढुं न शक्यते का कथाऽस्मदादीनामित्यर्थः । अतोऽस्माकं भाग्यादेव भगवता शिवेन त्वमनङ्गः कृतोऽसीति भावः । जगत इति हितयोगे चतुर्थी ॥ ९३ ॥

"अत्रोपमालङ्कारः" सा । अत्र कुसुमानां धनुर्बाणकरणत्वेनोत्प्रेक्षणादुत्प्रेक्षाद्वयम् तदुक्तमत्रटीकायाम् 'इवद्वयमुत्प्रेक्षायामि'ति ॥ ९२ ॥

"अत्रकाव्यलिङ्गमलंकारः" सा । अर्थापत्तिः, अनुप्रासश्च ॥ ९३ ॥

सह तया स्मर भस्म धगित्यभूः पशुपतिं प्रति यामिषुमग्रहीः।
ध्रुवमभूदधुना वितनोः शर-स्तव पिकस्वर एव स पञ्चमः॥ ९४॥
स्मर स मद्दुरितैर्विफलीकृतो भगवतोऽपि भवद्दहनश्रमः।
सुरहिताय हुतात्मतनुः पुन-र्ननु जनुर्दिवि तत्क्षणमापिथ॥ ९५॥
विरहिणो विमुखस्य विधूदये शमनदिक्पवनः स न दक्षिणः।
सुमनसोनमयन्नटनौ धनु-स्तव तु बाहुरसौ यदि दक्षिणः॥ ९६॥

सहेति। हे स्मर! पशुपतिं शिवं, प्रति याम् इषुं वाणम्, अग्रहीर्गृहीतवानसि तया इष्वा सह त्वं धगिति कृत्वा भस्म अभूर्भूतवानसि, धगित्यव्यक्तशब्दानुकरणं प्राचां व्याख्यानात् झटितीति वा पाठः। ध्रुवमुत्प्रेक्षे, अधुना इदानीं वितनोरनङ्गस्यापि तव, पिकस्वर एव कोकिलालाप एव, स प्रसिद्धः पञ्चमः पञ्चानां पूरकः, शरो वाणोऽभूत्। तव शरीरं गतं वाणस्तु न गत इति भावः। अथ च पञ्चमः कोकिलस्वर इति शब्दच्छलम्। 'पत्नी रोपइषुद्र्योः' अ॥ ९४॥

स्मरेति। हे स्मर! भगवतोऽपि शिवस्यापि, स प्रसिद्धोभवद्दहनश्रमस्तत्र दाहपरिश्रमो, मद्दुरितैर्मम पातकैः, विफलीकृतः निष्फलीकृतः। ननु यस्मात् सुराणां देवानां, हिताय हुता त्यक्ता आत्मतनुः स्वशरीरं येन तादृशः सन्, तत्क्षणं तस्मिन्नेव क्षणे, दिवि स्वर्गे, पुनर्जनुर्जन्म, आपिथ प्राप्तवानसि। तव जन्मान्तरप्राप्तौ परोपकारित्वं मदीयदौर्भाग्यञ्च हेतुः, अन्यथा शिवकोपानलदग्धः सन् गत एवासीति भावः॥ ९५॥

विरहिण इति। विधूदये चन्द्रोदये, विमुखस्य पराङ्मुखस्य दुःखितस्येत्यर्थः, विरहिणोजनस्य शमनस्य यमस्य दिग्भवः पवनः मलयानिलो, न दक्षिणो नानुकूलः शमनदिग्भवत्वादेव दुःखद इत्यर्थ। प्रथमं चन्द्रोदय एव विरहिणामसह्यः मलयानिलस्तु तदपेक्षयाप्यसह्य इति भावः। अथ च संपूर्णमण्डलविधूदये विमुखस्य विपरीतमुखस्य पश्चिमाभिमुखस्य विरहिणो मलयानिलो न दक्षिणो न दक्षिणदिग्वर्त्ती अपि तु वाम एव। मलयानिलस्य प्रसिद्धदक्षिणत्वं कथमपलपसी-

अत्र "शरकार्यकारित्वात् पिकस्वरस्य शरत्वोत्प्रेक्षा" जी। कामतनोराधारस्याभावेऽपि आधेयस्य शरस्य विद्यमानत्वात् विशेषभेदश्च॥ ९४॥

"अत्रातिशयोक्तिः" सा। भैमीदुरितैर्दाहविफलत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः। पूर्वार्धवाक्यार्थं प्रति परार्धवाक्यार्थस्य हेतुत्वात् काव्यलिंगमनुप्रासश्च॥ ९५॥

"अत्रातिशयोक्ति" सा। दक्षिणदिग्भवे मलयपवने दक्षिणशब्दश्लेषात् दक्षिणशब्दवाच्यानुकूलत्वेनाभेदमारोप्य तन्निषेधात् कामस्य दक्षिणवाहुत्वेनाभेदाध्यवसायाच्चातिशयोक्तिद्वयम्। "प्रत्यङ्मुखस्य दक्षिणोऽपि वाम इति ध्वनिः। शमनदिक्पवनोऽपि न दक्षिण इतिस्फुरणात् विरोधाभासोऽलङ्कारः" जी॥ ९६॥

किमु भवन्तमुमापतिरेककं मदमुदान्ध्यमयोगिजनान्तकम् ।
यदजयत्तत एव न गीयते स भगवान् मदनान्धकमृत्युजित् ॥ ६७ ॥
त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ शुश्रुवे ।
स्वमदहो दहनाज्ज्वलतात्मना ज्वलयितुं परिरभ्य जगन्ति यः ॥ ६८ ॥

त्याह, असौ मलयानिलो, यदि दक्षिणः दक्षिणत्वेनाऽभिमतस्तर्हि सुमनसो धनुः पुष्पमयचापम्, अटनौ अग्रे नमयन् नम्रीकुर्वन्, असौ तव बाहुरेव। तुरेवार्थे, यद्यस्य दक्षिणत्वमवश्यमभ्युपेयं तर्हि दक्षिणत्वं दक्षिणबाहुत्वमिति वक्तव्यं न त्वनुकूलत्वमित्यर्थः। तव दक्षिणबाहुरपि पीडकत्वाद्विरहिणां प्रतिकूल एव। मलयानिलोऽपि पुष्पाणामग्रं नमयति। दक्षिणशब्दे श्लेषादीदृशोक्तिः। 'अटनिर्धनुषः कोटिः' व ॥ ९६ ॥

किमिति। उमापतिः शिवो, मदमुदा गर्वहर्षेण अन्धं विमोहकम्, अयोगिजनानां वियोगिजनानाम् अन्तकं विनाशकम्, एककम् एकमेव, भवन्तं त्वां, यदजयत् जितवान्, ततएव एकस्य तव जयादेव, स भगवान् उमापतिः किमु मदनान्धकमृत्युजित् न गीयते मदनजित् अन्धकजित् मृत्युजित् नाम्ना न कथ्यते अपि तु एकस्य तव जयादपि गीयते न तु मदनान्धकाख्यासुरविशेषमृत्यूनां त्रयाणामेव जयाद्भगवतोनामत्रयम्। एकस्मिन्नेव त्वयि मदजनकत्वम् अन्धकारित्वम् अन्तकारित्वञ्चेति धर्म्मत्रयं विद्यतेऽतस्त्वमतिदुर्द्धर्ष इति भावः। अन्धमिति अन्धं करोतीति 'नाम्न' इत्यादिना णिङ्, 'इनन्त' इति इङादित्वान्ङः, एवमन्तकमित्यत्र अन्तं करोतीति णिङन्तात्ण्वकः ॥ ९७ ॥

त्वमिवेति। हे मन्मथ काम! त्वमिव त्वत्सदृशः कोऽपि परापकृतौ परेषामपकारविषये कृती कुशलो, न ददृशे न दृष्टः, न च शुश्रुवे नापि श्रुतः। कथमित्यत आह, यस्त्वं ज्वलता आत्मना, जगन्ति भुवनानि, परिरभ्य आलिङ्ग्य, ज्वलयितुं दहनात् हरनयनानलं प्राप्य स्वमात्मानम् अदहः दग्धवानसि। ईदृशः कोऽपि न दृष्टो न च श्रुतः। अन्येऽपकारका हि स्वं रक्षित्वैव परेषामपकाराय प्रवर्त्तन्ते, त्वन्तु परेषां ज्वलनाय स्वस्यापि ज्वलनमङ्गीकृतवानिति परापकारे कुशलोऽसीत्युपहासः। जगन्तीत्यस्य परिरभ्येत्यनेन ज्वलयितुमित्यनेन च सम्बन्धः। दहनादिति 'यजगर्भान्तेरि'ति पञ्चमी ॥ ९८ ॥

---

"अत्र सापह्नवोत्प्रेक्षालङ्कारः" सा। प्रकृतान्धकासुरमरणजित्त्वादिकं प्रतिषिध्योमापतौ केवलमदनजित्त्वोत्प्रेक्षणात्। "अत्र मदनादीनां मिथो भेदेप्यभेदोक्तेरतिशयोक्तिः" जी ॥ ९७ ॥

"अत्रोपमातिशयोक्तिश्च" सा। त्वमिवेति उपमा, स्वदाहे जगज्ज्वलनार्थत्वाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, पूर्वार्द्धवाक्यार्थं प्रति परार्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमनुप्रासश्चेति ॥ ९८ ॥

त्वमुचितं नयनार्च्चिषि शम्भुना भुवनशान्तिकहोमहविः कृतः।
तव वयस्यमपास्य मधुं मधुं हतवता हरिणा वत किं कृतम्॥ ९९॥
इति कियद्वचसैव भृशं प्रिया-धरपिपासु तदाननमाशु तत्।
अजनि पांशुलमप्रियवाग्ज्वल न्मदनशोषणवाणहतेरिव॥ १००॥
प्रियसखीनिवहेन सहाथ सा व्यरचयद्गिरमर्द्धसमस्यया।
हृदयमर्म्मणि मन्मथशायकैः क्षततमा बहु भाषितुमक्षमा॥ १०१॥

त्वमिति। हे काम! शम्भुना शिवेन, नयनार्च्चिषि स्वनेत्राग्निज्वालायां, त्वम् उचितं योग्यं भुवनशान्तिकहोमहविर्भुवनानां शान्तिप्रयोजनकहोमे हविर्हवनीयः,कृतः त्वं यद्भुवनशान्तिकहोमहविःकृतस्तदुचितमिति वा। शम्भुना त्वां दग्ध्वा भुवनानां शान्तिः कृता, अन्यथा त्वच्चेच्छरीरी स्यात्तदा भुवनत्रयं न तिष्ठेदिति भावः। किन्तु वत कष्टं, तव वयस्यं सखायं मधुं वसन्तम् अपास्य त्यक्त्वा, मधुं दैत्यविशेषं, हतवता विनाशितवता, हरिणा विष्णुना, किं कृतम् अपि तु न किमपि कृतं, भुवनानां शान्तयेऽवतीर्णेन भगवता विष्णुना मधुदैत्यविनाशात् यादृशी शान्तिः कृता तदपेक्षयापि वसन्तविनाशेऽतितरां शान्तिरासीदतो न तेन समीचीनं कृतमित्यर्थः। किं कृतं कुत्सितं कृतमिति वा। 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्ते दैत्यभिच्चैत्रे स्याज्जीवन्त्यान्तु योषिति' मे॥ ९९॥

एवं कथयन्त्यास्तस्या मुखशोषमाह—इतीति। प्रियस्य नलस्य अधरपिपासु अधरपानेच्छु, तत् सुकुमारतया प्रसिद्धं विरहपाण्डुरं वा, तदाननं तस्या भैम्या मुखम्, इति पूर्वोक्तप्रकारेण, कियद्वचसैव अल्पवचनेनैव, भृशं सातिशयम्, आशु शीघ्रं, पांशुलं शुष्कम्, अजनि जातम्, सा साकल्येन वक्तुमसमर्था जातेत्यर्थः। अत्र हेतुरुत्प्रेक्ष्यते, अप्रियवाग्भिः परुषोक्तिभिः ज्वलतोऽत्यन्तं क्रुध्यतो, मदनस्य कामस्य, यः शोषणवाणः शोषणाख्यः शरस्तस्य हतेरिव, प्रहारादिव पांशुलमजनि। आशु यदिति पाठे यत्पांशुलं अजनि तत् शोषणवाणहतेरिवेति तत्पदमाक्षिप्यान्वयः कार्यः॥ १००॥

तस्या वक्रोक्तियोग्यतां व्यञ्जयितुमुपक्रमते, प्रियसखीति। अथानन्तरं, सा दमयन्ती प्रियसखीनिवहेन स्निग्धसखीजनसमूहेन, सह, अर्द्धस्य सखीभाषितस्य पूर्वार्द्धस्य, समस्यया

"रूपकमतिशयोक्तिश्च" सा। शिवनयनार्च्चिषि अर्च्चिःशब्दश्लेषात् होमाग्नित्वस्य, मदनदाहे होमत्वस्य मदने च आहवनीयत्वस्यारोपात् साङ्गरूपकम्, मधौ वसन्ते मधुदैत्याभेदस्याध्यवसायादतिशयोक्तिः॥ ९९॥

"हतेरिवेति हेतूत्प्रेक्षा" जी॥ १००॥

"अत्रानुप्रासो हेतुः सहोक्त्यलङ्कारः" सा। बहुभाषणासामर्थ्ये मन्मथशरक्षततमत्वस्य, समस्योक्तौच तादृशासामर्थ्यस्य हेतुत्वात् काव्यलिङ्गद्वयम्॥ १०१॥

अकरुणादव सूनशरादसून् सहजयापदि धीरतयात्मनः ।
असव एव ममाद्य विरोधिनः कथमरीन् सखि रक्षितुमात्थ माम् ॥ १०२ ॥
हितगिरं न शृणोषि किमाश्रवे प्रसभमप्यव जीवनमात्मनः ।
सखि हिता यदि मे भवसीदृशी मदरिमिच्छसि या मम जीवितम् ॥ १०३ ॥
अमृतदीधितिरेष विदर्भजे भजसि तापममुष्य किमंशुभिः ।
यदि भवन्ति मृताः सखि चन्द्रिकाः शशभृतः क तदा परितप्यते ॥ १०४ ॥

प्रत्युत्तरेण उत्तरार्द्धपरिपूरणरूपेण, गिरं वचनं, व्यरचयत् रचयति स्म, पूर्वं सख्योऽर्द्धमूचुरनन्तरं दमयन्त्यर्द्धमुवाचेत्यर्थः। कुत इत्याह मन्मथशायकैः कामवाणैः हृदयमर्मणि हृदयलक्षणे मर्मस्थाने, क्षततमा अतितरां विक्षता सती, बहु समग्रं, भाषितुं कथयितुमक्षमा असमर्था। 'समस्या तु समासार्था' अ। समस्यते संपूर्यतेऽनयेति 'अकर्तृकारके च समजादेः संज्ञायाम्' इति क्यः ॥ १०१ ॥

अष्टाभिः श्लोकैः पूर्वश्लोकप्रतिज्ञातमाह अकरुणादिति। हे भैमि! अकरुणात् निर्दयात्, सूनशरात् कुसुमवाणात् कामात्, आपदि एतादृशे आपत्काले, सहजया स्वाभाविक्या, आत्मनो धीरतया धैर्य्येण, असून् प्राणान्, अव रक्ष। विपदि धैर्यावलम्बनमुचितमिति धैर्यमेवावलम्ब्य प्राणान् रक्षेत्यर्थः। इति पूर्वार्द्धं सखीवचनं। भैमीवचनन्तु हे सखि! मम असव एव प्राणा एव, अद्य अधुना, विरोधिनः शत्रवः दुःखानुभवप्रधानहेतुत्वात्। अतएव कथम् अरीन् शत्रून्, रक्षितुं माम् आत्थ ब्रवीषि। अरयो हि विनाशनीया एव यदि प्राणा न स्युस्तदा दुःखमप्यनुभवनीयं न स्यादतो हितं न वदसीति भावः। आत्थेति 'ब्रुवः सिङ्पञ्चाहोब्रुवः' इति ब्रुवआह 'सिजस्थङ हस्य तस्थङी'ति हस्य तः ॥ १०२ ॥

हितगिरमिति। हे आश्रवे वचनकारिणि भैमि! किं किमिति, हितगिरं हितकरं वचनं, न शृणोषि स्वस्य आश्रवत्वात् वचनस्य च हितकरत्वात् अस्माभिर्यदुच्यते तत् त्वयावश्यमेवाङ्गीकर्त्तव्यमित्यर्थः। का ते हितगीरित्याह, प्रसभमपि सर्वथाप्यात्मानं गोपायेत्' इति श्रुतेर्बलेनापि आत्मनोजीवनम् अव रक्ष, इयं सख्या उक्तिः। भैम्यास्तु हे सखि! त्वं यदि मे मम हिता अनुकूला भवसि तर्हि ईदृशी एतादृशी कथमित्यर्थात् या त्वं मदरिं विरहदुःखानुभवहेतुत्वात् ममैव शत्रुं मम जीवितम्, इच्छसि चिरं जीवत्वियमिति प्रार्थयसे, अतस्त्वं न हिता भवसीत्यर्थः। 'वचने स्थित आश्रवः' अ ॥ १०३ ॥

अमृतेति। हे विदर्भजे दमयन्ति! एष पुरोवर्त्ती अमृतदीधितिश्चन्द्रः, न तु तीक्ष्णदीधितिः, अतोऽमुष्य अंशुभिः सुधामयैः किरणैः, किं कथं तापं दाहं भजसि अङ्गीकरोषि, एत-

"इतः अष्टसु वाक्येषु श्लेषवक्रोक्तिरलङ्कारः" सा। "सम्प्रति मे प्राणरक्षणमाशीविषपोषणं पयोभिरिति भावः" जी ॥ १०२ ॥

"अमृतेति सुधाविवक्षया प्रयुक्तस्य मृतेतरार्थत्वेन योजनाद् वक्रोक्तिरलङ्कारः" जी ॥ १०४ ॥

भज धृतिं त्यज भीतिमहेतुका-मयमचण्डमरीचिरुदञ्चति।
ज्वलयति स्फुटमातपमुर्मुरैरनुभवं वचसा सखि लुम्पसि॥ १०५॥
अयि शपे हृदयाय तवैव त यदि विधोर्न रुचेरसि गोचरः।
रुचिफलं सखि दृश्यत एव य-ज्ज्वलयति त्वचमुल्ललयत्यसून्॥ १०६॥
विधुविरोधितिथेरभिधायिनी-मपि न किं पुनरिच्छसि कोकिलाम्।
सखि किमर्थगवेषणया गिरं किरति सेयमनर्थमयीं मयि॥ १०७॥

स्योदयात् वरं तापशान्तिरुचिता न तु तापस्वीकारः इति सख्या उक्तिः। भैम्यास्तु हे सखि यदि शशभृतः शशकलङ्किनश्चन्द्रस्य, चन्द्रिका मृता भवन्ति तदा क कस्मिन् जने, परिताप्यते चन्द्रेण परितापयितुं शक्यते अपि तु न कुत्रापि साधनाभावात्। अमृतपदे श्लेषादिदं छलोत्तरम्। अमृताः सुधामया अथच मरणप्रतियोगिताशून्या दीधितयो यस्येति समासः॥ १०४॥

भजेति। हे भैमि! त्वं धृतिं धैर्यं भज लभस्व। अहेतुकां निष्कारणां भीतिं भयं त्यज। यतोऽयं दृश्यमानोऽचण्डमरीचिः शीतकिरण उदञ्चति उदेति। सूर्यभ्रान्त्या भयं मा कार्षीरित्यर्थः। इयं सख्या उक्तिः। भैम्यास्तु हे सखि! आतपा एव मुर्मुराः तुषाग्नयः, तैः कृत्वा स्फुटमत्यन्तं मां ज्वलयति दहति, अतो वचसा वचनमात्रेण, अनुभवं प्रत्यक्षं ज्वलनहेतुकचण्डमरीचित्वानुमानं वा, लुम्पसि खण्डयसि न मन्यसे इत्यर्थः, कथमित्यर्थात्, अतएवायं चण्डमरीचिरेवेत्यर्थः। ज्वलयतीत्यस्य अनुसन्धितेनायमितिकर्तृपदेनान्वयः। ज्वलयति त्वचमित्यपि क्वचित् पुस्तकेषु पाठः। 'मुर्मुरस्तुषवह्नौ स्यात्' वि॥ १०५॥

अयीति। अयीति कोमलसम्बोधने। अयि हे भैमि! त्वं यदि विधोश्चन्द्रस्य, रुचेः किरणस्य, गोचरो विषयो, नासि न भवसि, तत्तर्हि तवैव हृदयाय शपे शपथेन तवैव हृदयं तोषयितुमिच्छामि। अयीति पाठे तव विश्वासार्थे शपेऽयीत्यन्वयः। चन्द्र एवायमुदेतीति मया सत्यमेवोक्तं विश्वसिहीत्यर्थः। इयं सख्या उक्तिः। दमयन्ती तु रुचिशब्दस्य प्रीत्यर्थकत्वमादाय च्छलेनोत्तरमाह—हे सखि! रुचिफलं प्रीतिफलं दृश्यत एव। यत् त्वचं ज्वलयति दहति, यच्च असून् प्राणान्, उल्ललयति व्याकुलयति अयमित्यर्थात्। शरीरज्वलनं प्राणानां व्याकुलीकरणञ्च प्रीतिफलमेवेति त्वया सत्यमुक्तं किं प्रणयिना एवं क्रियते इत्यर्थः। हृदयायेति 'श्लाघादेर्यज्ज्ञीप्से'ति संप्रदानसंज्ञायां चतुर्थी। शपे इति 'शपः शपथ' इत्यात्मनेपदम्। 'रुचिर्मयूखे शोभायामभिष्वङ्गाभिलाषयोः' वि॥ १०६॥

विधिवति हे सखि! विधुविरोधितिथेश्चन्द्रविरोधिन्यास्तिथेरमावास्याया अभिधायिनीमपि कुहूइति शब्देनामावस्यावक्त्रीमपि, कोकिलां किं किमिति, न पुनरिच्छसि अपि तु तथाविधां

"अत्राचण्डकरे चण्डकरभ्रान्त्या भ्रान्तिमदलङ्कारः" जी॥ १०५॥

अत्र काव्यलिङ्गमनुप्रासश्च॥ १०७॥

हृदय एव तवास्ति स वल्लभ-स्तदपि किं दमयन्ति विषीदसि ।
हृदि परं न बहिः खलु वर्त्तते मम यतस्तत एव विपद्यते ॥ १०८ ॥
स्फुटति हारमणौ मदनोष्मणा हृदयमप्यनलङ्कृतमद्य ते ।
सखि हतास्मि तदा यदि हृद्यपि प्रियतमः स मम व्यवधापितः ॥ १०९ ॥
इदमुदीर्य तदैव मुमूर्च्छ सा मनसि मूर्च्छितमन्मथपावका ।
क्व सहतामवलम्बलवच्छिदा-मनुपपत्तिमतीमतिदुःखिता ॥ ११० ॥

कोकिलाम् इच्छेत्यर्थः । चन्द्रोदयादेव लब्धवेदनासि अतः कोकिलामुखात् चन्द्रविरोध्यमावास्यापस्थापकं कुह्विति शब्दं श्रुत्वा क्षणमाश्वसिहीति भावः । इयं सख्या उक्तिः । भैम्यास्तु हे सखि ! अर्थस्य चन्द्रविरोध्यमावास्यालक्षणस्य गवेषणया अनुसन्धानेन, किम् अलम् । अनुसन्धानेनापि तावानर्थो नोपलभ्यत इत्यर्थः । यतः सेयं कोकिलापि मयि मद्विषये, अनर्थमयीम् अमावास्यालक्षणार्थशून्यां, गिरं वाचं, किरति क्षिपति । अर्थोऽहि वक्तृतात्पर्यविषय एव शाब्दबोधे भासते । कोकिलाया उद्दीपकतया कामपरिजनत्वान्नामावास्याह्वाने तात्पर्य-मित्यर्थशून्यं तद्वचनमित्यर्थः । अथ च अनर्थमयीम् अतिदुःसहां गिरं किरति । अर्थग्रहो दूरे तिष्ठतु प्रथमं शब्दश्रवणमेवोद्दीपकत्वादतिदुःसहमित्यर्थः ॥ १०७ ॥

हृदय इति । हे दमयन्ति ! स वल्लभः प्रियो नलः, तव हृदय एव मनस्येव, अस्ति तदपि तथापि, किं किमर्थं, विषीदसि खेदं कुरुषे, इति सख्या उक्तिः । भैम्यास्तु हे सखि ! यतः स परं केवलं हृदि वर्त्तते न खलु बहिर्वर्त्तते तत एव तस्माद्धेतोरेव विपद्यते खिद्यते । बन्धुजनः सन्निहितबहिःस्थित एवात्यन्तं सुखयतीति भावः ॥ १०८ ॥

स्फुटतीति । हे भैमि ! मदनोष्मणा मदनजनितवियोगानलेन हेतुना, हारमणौ हार-स्थितनायकमणौ नायकसहिते हारे इत्यर्थः, स्फुटति विदीर्यमाणे सति, अद्य ते तव हृदयमपि मुखादिकन्तु प्रागेवानलङ्कृतं जातं वक्षोऽपि, अनलङ्कृतं भवेदिति शेषः । अतो धैर्यवारिणा मदनोष्मा निर्वापयितव्य इति भावः । इति सख्या उक्तिः । भैमी तु हृदयशब्दस्य मनःपरत्वं अनलमित्यस्य च नलशून्यपरत्वमादाय उत्तरयति । हे सखि ! हृद्यपि मनस्यपि, मम स प्रियतमो नलो यदि व्यवधापितोऽन्तर्धापितः विधिनेत्यर्थात् तदा हतास्मि मृतास्मि, हृदये तत्स-ङ्गतिरेवाधुना मम जीवनकारणमिति भावः ॥ १०९ ॥

एवं कथयन्त्या भैम्या मोहमाह—इदमिति । सा भैमी, मनसि मूर्च्छितः प्रवृद्धो मन्मथ-पावकः कामानलोयस्यास्तादृशी सती, इदं पूर्वश्लोकोत्तरार्द्धरूपम्, उदीर्य उक्त्वा, तदैव

---

"दुःखोद्विग्नस्य भ्रान्तमभ्रान्तं वानिष्टसंवेदनमतिदुःसहमतोयुक्तमस्या मूर्च्छनमिति भावः । अर्थान्तरन्यासोऽलङ्कारः" जी । मूर्च्छां प्रति मूर्च्छितमन्मथपावकपदार्थस्य हेतुत्वात् काव्य-लिङ्गं,'मन्मथपावकेतिरूपकमनुप्रासश्च ॥ ११० ॥

अधित कापि मुखे सलिलं सखी प्यधित कापि सरोजदलैः स्तनौ।
व्यधित कापि हृदि व्यजनानिलं न्यधित कापि हिमं सुतनोस्तनौ॥ १११॥
उपचचार चिरं मृदुशीतलै-र्जलजनालमृणालजलादिभिः।
प्रियसखीनिवहः स तथा क्रमा-दियमवाप यथा लघुचेतनाम्॥ ११२॥
अथ कले कलय श्वसिति स्फुटं चलति पक्ष्म चले परिभावय।
अधरकम्पनमुन्नय मेनके किमपि जल्पति कल्पलते शृणु॥ ११३॥
रचय चारुमति स्तनयो-र्वृतिं कलय केशिनि केश्यमसंयतम्।
अवगृहाण तरङ्गिणि नेत्रयोर्जलभरानिति शुश्रुविरे गिरः॥११४॥ युग्मकम्।

तत्कालमेव, मुमूर्च्छ मोहं प्राप्ता। नन्वलङ्कृतमित्यस्याताात्त्विकं नलशून्यं कृतमित्यर्थं बुद्ध्वा कथं सा मोहं प्राप्तेत्याह। अतिदुःखिता सा अनुपपत्तिमतीम् अनुपपद्यमानामपि पर्यालोचनया बाधितस्वरूपामपीत्यर्थः। अवलम्बस्य हृदयवृत्तिकनलावस्थानलक्षणजीवनधारणकारणस्य यो लवो लेशस्तन्मात्र इत्यर्थः तस्य छिदां खण्डनां क कुत्र सहतां सोढुं शक्ता स्यात् अपि तु न कुत्रापि। अतिदुःखिनो हि अलीकमप्यप्रियवचनं श्रुत्वा अविचार्यैव विमुह्यन्ति॥ ११०॥

एवं मूर्च्छितायाः तस्याः सखीनामुपचारान्मूर्च्छापनयनं श्लोकद्वयेनाह अधितेति। कापि सखी, सुतनोः कृशाङ्गया भैम्याः, मुखे सलिलं जलम्, अधित चिक्षेप। कापि सखी सरोजदलैः पद्मपत्रैः स्तनौ प्यधित आच्छादितवती। कापि सखी हृदि व्यजनानिलं तालवृन्तवातं, व्यधित कृतवती। कापि सखी तनौ शरीरे, हिमं मृणालादि शीतलं वस्तु, न्यधित स्थापितवती। हिमं चन्दनमिति प्राञ्चः। 'चन्दने च हिमं विदुः' वि। प्यधितेति 'अपेरलुग्धादौ वे'- त्यपेरकारलोपः॥ १११॥

उपचचारेति। स प्रियो हितः सखीनां निवहः समूहः, मृदुभिः कोमलैः, शीतलैर्हिमैश्च, जलजैः पद्मैः, नालैः पद्मदण्डैर्मृणालैर्बिसैः, जलैः आदिना चन्दनादिभिश्च क्रमात् परिपाटीं प्राप्य पूर्वोक्तरीत्या तथा चिरं भैमीम् उपचचार सेवितवान्, यथा इयं भैमी लघुम् अल्पां लघु शीघ्रं वा, चेतनाम् अवाप प्राप्तवती॥ ११२॥

अथ तदानीं सखीनामुपचारार्थपरस्पराह्वानकोलाहलं युग्मकेनाह—अथेति। अथानन्तरम्, इति गिरः सखीनां परस्परभाषणानि शुश्रुविरे श्रुताः समीपस्थितैर्जनैरित्यर्थात् इति वक्ष्यमाणेनान्वयः। इति किं? हे कले सखि! इयं भैमी, स्फुटं प्रकटं, श्वसिति प्राणिति जीवतीति कलय जानीहि। हे चले सखि! अस्याः पक्ष्म नेत्रलोम, चलति स्पन्दते, इति परिभावय पश्य। पक्ष्मचलनमपि जीवनचिह्नम्। हे मेनके! सखि! अधरकम्पनम् अधरस्फुरणम्, उन्नय तर्कय। हे कल्पलते! सखि! इयं किमपि अस्फुटं जल्पति वदति, तत् शृणु॥ ११३॥

रचयेति। हे चारुमति! सखि! स्तनयोर्वृतिमावरणं, रचय कुरु। हे केशिनि! सखि!

कलकलः स तदालिजनानना-दुदलसद्विपुलस्त्वरितेरितैः ।
यमधिगम्य सुतालयमीयिवान् धृतदरः स विदर्भपुरन्दरः ॥ ११५ ॥

कन्यान्तःपुरबाधनाय यदधीकारान्न दोषा नृपं
द्वौ मन्त्रिप्रवरश्च तुल्यमगदङ्कारश्च तावूचतुः ।
देवाकर्णय सुश्रुतेन चरकस्योक्तेन जानेऽखिलं
स्यादस्या नलदं विना न दलने तापस्य कोऽपि क्षमः ॥ ११६ ॥

असंयतं मुक्तबन्धनं कैश्यं केशसमूहं, कलय बधान। हे तरङ्गिणि ! सखि ! नेत्रयोश्चक्षुषोः जलझरान् बाष्पप्रवाहान्, अवगृहाण अपाकुरु इति गिरः श्रुताः। कलादीनि सखीनां नामानि ॥ ११४ ॥

ताः श्रुत्वा राज्ञः कन्यान्तःपुरप्रवेशमाह—कलकल इति। तस्या भैम्या आलिजनाननात् सखीजनमुखात्, त्वरितेरितैः शीघ्रभाषणैर्विपुलो महत्तरः, स कलकलः कोलाहलः, उदलसत् उद्भूतवान्। यं कलकलम् अधिगम्य आकर्ण्य, स विदर्भपुरन्दरो विदर्भराजेन्द्रो भीमो, धृतदरो गृहीतत्रासः सन्, सुतालयं कन्यान्तःपुरम्, ईयिवान् प्रविवेश। 'कोलाहलः कलकलः' अ। ईयिवानिति इन गतौ वसुः, अत्र वसोरपि समापकत्वम्। त्वरितानां धावकानाम्, ईरितैर्भाषणैरिति प्राचां पक्षान्तरव्याख्यानमालिजनाननस्यापादानत्वासङ्गतेरुपेक्षणीयम् ॥ ११५ ॥

अथ छन्दोऽन्तरेण सर्गशेषं सूचयन् राज्ञो मन्त्रिवैद्याभ्यां तद्वृत्तान्तजिज्ञासामाह—कन्यान्तःपुरेति। ययोरधीकारादध्यक्षत्वात् नियोगाद्वा, कन्यान्तःपुरस्य बाधनाय पीडायै दोषा व्यभिचारादयो वातपित्तादिवैषम्यजनितरोगाश्च, न भवन्तीति शेषः, तौ मन्त्रिप्रवरश्च मन्त्रिमुख्यश्च, अगदङ्कारश्च वैद्यश्च द्वौ, तुल्यं समकालं शब्दसारूप्यात् समानञ्च ऊचतुः कथयामासतुः। किमूचतुरित्याह, हे देव राजन् ! आकर्णय शृणु, अहं सुश्रुतेन सुष्ठु आकर्णितेन, चर एव चरकस्तस्य मत्प्रेरितस्य चरस्य उक्तेन कथितेन, अखिलं समस्तं गूढवृत्तान्तं, जाने। किं जानासीत्याह, अस्या भैम्यास्तापस्य दलने नाशे, नलदं नलनामकराजप्रदं पुरुषं, विना कोऽपि जनः, क्षमः समर्थो, न स्यात् न भवति इति चरमुखान्मया श्रुतम्। नले जातानुरागाया अस्याः पूर्वरागो जात इति जानीहि देवेति मन्त्रिवाक्यार्थः। वैद्यवाक्यार्थस्तु हे देव ! अहं सुश्रुतेन वैद्यकग्रन्थविशेषेण, चरकस्य चरकाचार्यस्य उक्तेन भाषितेन ग्रन्थविशेषेण, अखिलं निदानम् उपशमकारणञ्च जाने। नलदम् उशीरं, विना अस्यास्तापस्य दलने नाशे, कोऽपि क्वाथादिः क्षमो न स्यात् तदस्याः शरीरमुशीरेण लिप्यतां तेनाशु सन्तापशान्तिर्भविष्यतीति। च द्वयमुभयोः प्राधान्यसूचकम्। अधीकारादिति 'प्रादेर्घणि बहुलमि' ति दीर्घः। अगदङ्कार इति 'अस्तु-

---

"अत्र द्वयोरपि नलदयोः प्रकृतत्वात् केवलप्रकृतश्लेषोऽलङ्कारः" जी। "तुल्ययोगिता" सा। प्रकृतयोः वैद्यामात्ययोः श्लेषमहिम्नैकोक्ति सम्बन्धात् ॥ ११६ ॥

ताभ्यामभूद्युगपदप्यभिधीयमानं भेदव्यपाकृतमिथःप्रतिघातमेव ।
श्रोत्रे तु तस्य पपतुर्नृपतेर्न किञ्चित् भैम्यामनिष्टशतशङ्कितयाकुलस्य ॥ ११७॥
द्रुतविगमितविप्रयोगचिह्ना-मपि तनयां नृपतिः पदावनम्राम् ।
अकलयदसमाशुगाधिमग्नाऽझटिति पराशयवेदिनो हि विज्ञाः ॥ ११८ ॥
व्यतरदथ पिताशिषं सुतायै नतशिरसे सहसोन्नमय्य मौलिम् ।
दयितमभिमतं स्वयंवरे त्वं गुणमयमाप्नुहि वासरैः कियद्भिः ॥ ११९ ॥

सन्यागदेभ्यः कार' इति मकारागमः । 'रोगहार्यगदङ्कारो भिषग्वैद्यो चिकित्सके' 'स्याद्वीरणं वीरतरं मूलेऽस्योशीरमस्त्रियाम् अभयं नलदं सेव्यम्' अ । सारिवामधुकचन्दनकुचन्दनपद्मककाश्मीरफलमधूकपुष्पाण्युशीरञ्चेत्युक्त्वा सारिवादिः पिपासाघ्नी रक्तपित्तहरो गणः । पित्तज्वरप्रशमनो विशेषाद्दाहनाशन इति सुश्रुतः । लाजाचन्दनकाश्मर्यफलमधुकशर्करानीलोत्पलोशीरसारिवागुडूचीह्रीवेराणीति दशेमानि दाहप्रशमनानीति चरकः । शार्दूलविक्रीडितमिदं वृत्तम् अस्य लक्षणमुक्तं प्राक् ॥ ११६ ॥

ताभ्यामेवमुक्तमपि राज्ञा औत्कण्ठ्यान्न श्रुतमित्याह —ताभ्यामिति । ताभ्यां मान्त्रिवैद्याभ्यां युगपदेकदा, अभिधीयमानमपि कथ्यमानमपि एकरूपतया उच्चार्यमाणमपीत्यर्थः, भेदेन अर्थभेदाद्भिन्नत्वेन व्यपाकृतोऽपनीतो मिथःप्रतिघातः शाब्दबोधप्रतिबन्धकीभूतपरस्परैकतारूपविरोधो यत्र तादृशमेवाभूत् । विभिन्नमतयोर्मान्त्रिवैद्ययोर्हि वाक्ययोर्भिन्नत्वमेव युक्तम् एकरूपत्वे उन्मत्तवचनवत् तस्मात् श्रोतुर्बोधो न जायते अत्र तु अर्थभेदादेव भेदाङ्गीकारात् एकरूपमपि शाब्दबोधजननयोग्यमेवाभूदित्यर्थः । ननु तर्हि कथं राज्ञा तयोरर्थौ न गृहीतावित्यत्राह —तु किन्तु, भैम्यां दमयन्तीविषये, अनिष्टशतशङ्कितया अमङ्गलशताशङ्कया आकुलस्य अस्थिरचित्तस्य तस्य नृपतेर्भीमस्य, श्रोत्रे कर्णौ कर्तृणी, किञ्चित् किमपि एकांशमपि न पपतुः न सन्निचकृपतुः कामिनीजिज्ञासादिवत् स्निग्धजनानिष्टशङ्कात्र बोधप्रतिबन्धिकेति भावः । वसन्ततिलकावृत्तम् ॥ ११७ ॥

अथ राज्ञा भैमीदर्शनमाह —द्रुतेति । नृपतिर्भीमो, द्रुतं शीघ्रं विगमितं राजागमनवार्त्तां श्रुत्वा सखीभिरपसारितं विप्रयोगचिह्नं विरहानुमापकं मृणालादिकं यस्याः तादृशीमपि पदावनम्राम् अभिवन्दनाय पादयोः पतितां, तनयां सुतां भैमीम्, असमाशुगस्य विषमशरस्य कामस्य य आधिः तज्जनिता मानसी व्यथा तत्र मग्नाम् अकलयत् ज्ञातवान् । चिह्नाभावे कथं ज्ञातवानित्यर्थान्तरन्यासेनोपपादयति, हि यतोविज्ञाः सुधियो जनाः, झटिति शीघ्रं, हेतुमनपेक्ष्यैवेत्यर्थः, पराशयवेदिनः पराभिप्रेतज्ञा भवन्ति । पुष्पिताग्रावृत्तमिदम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ ११८ ॥

राजा तां तथाविधां निश्चित्याशीर्वादेन तदभिप्रेतसिद्धिं सूचयन् सान्त्वयति । व्यतरदिति ।

---

"अत्रार्थान्तरन्यासोऽलङ्कारः" जी ॥ ११८ ॥

तदनु स तनुजासखीरवादी-त्तुहिनऋतौ गत एव हीदृशीनाम् ।
कुसुममपि शरायते शरीरे तदुचितमाचरतोपचारमस्याम् ॥ १२० ॥
कतिपयदिवसैर्वयस्यया वः स्वयमभिलष्य वरिष्यते वरीयान् ।
कृशिमशमनयानया तदामुं रुचिरुचिताथ भवद्विधाभिधाभिः ॥ १२१ ॥
एवं यद्वदता नृपेण तनया नाप्रच्छि लज्जास्पदं
यन्मोहः स्मरभूरकल्पि वपुषः पाण्डुत्वतापादिभिः ।
यच्चाशीः कपटादवादि सदृशी स्यात्तत्र या सान्त्वना
तन्मत्वालिजनोमनोऽभिमतनोदानन्दमन्दाक्षयोः ॥ १२२

अथानन्तरं पिता भीमो नतशिरसे लज्जया नम्रमस्तकायै सुतायै दमयन्त्यै, सहसा शीघ्रं, मौलिं तस्या मस्तकम्, उन्नमय्य उत्तोल्य आशिषं व्यतरत् ददौ। का आशीरित्याह, हे भैमि! कियद्भिः कतिपयैः स्वल्पैरेव, वासरैर्दिवसैः स्वयंवरे स्वयं व्रियतेऽस्मिन्निति स्वयंवरसमाजे स्वयं व्रियतेऽसाविति स्वयंवरे राजसमूहमध्ये वा गुणमयं बहुगुणयुक्तम् अभिमतम् ईप्सितं दयितं स्वामिनम् आप्नुहि लभस्व इति। स्वयंवर इत्यनेन पितृपरतन्त्रास्मि न खलु स्वाभिमतं वरं प्राप्स्यामीति मनसि कृत्वा दुःखं माकार्षीरिति सूचितम्। वासरैरिति 'फलमिद्धौ क्रियोपरमे तृतीये'ति तृतीया। स्वयंवरे इति सम्बोधनान्तमिति प्राञ्चः ॥ ११९ ॥

तस्याः सखीः प्रत्युपदिशति। तदन्विति। तदनु आशीर्वादात् परं, स राजा, तनुजाया दुहितुः सखीरवादीत् उक्तवान्। किमवादीदित्याह हे भैमीसख्यः! तुहिने ऋतौ हिमऋतौ गत एव गतमात्र एव सति वसन्तप्रारम्भेऽपीत्यर्थः, ईदृशीनां एवंविधानां कोमलाङ्गीनाम् अथ च नवानुरक्तानां, शरीरे कुसुममपि अतिमृदुलं पुष्पमपि, शरायते शरवत् पीड़ाकरं भवति अथ च कामबाणायते अतो यूयम् अस्यां भैम्यां तदुचितं वसन्तसमयोपयुक्तम् उपचारं शुश्रूषाम् आचरत कुरुत ॥ १२० ॥

किन्तर्हि चिरकालमेवं कर्त्तव्यमित्याशङ्क्याह। कतिपयेति। वो युष्माकं वयस्यया सख्या भैम्या, कतिपयदिवसैरल्पैरेव दिनैः, स्वयम् अभिलष्य इच्छाविषयीकृत्य, वरीयान् अतिशयेन श्रेष्ठो वरो वरिष्यते, तत्तस्मात्, अथ इतः परम्, अनया युष्माकं वयस्यया भैम्या, भवद्विधानां युष्मादृशीनां अभिधाभिः सान्त्वनवाग्भिः कृशिमानं कार्श्यं शमं शान्तिं नाशं नयति प्रापयतीति तादृशी रुचिस्तुष्टिराप्तुं प्राप्तुम् उचिता युक्ता। 'अथ रुचिः समग्रा शोभा' इति प्राञ्चः ॥ १२१ ॥

राजा सर्वं ज्ञातमिति निश्चित्य सख्यो हृष्टा लज्जिताश्चेत्याह—एवमिति। एवं पूर्वोक्तं

---

"आशीरलङ्कारः" सा। पुष्पिताग्रावृत्तम् ॥ ११९ ॥
"अत्रोपमालङ्कारः" सा। छेकानुप्रासश्चेति संसृष्टिः। पुष्पिताग्रावृत्तम् ॥ १२० ॥
"छेकानुप्रासः" सा। वृत्त्यनुप्रासश्चेति संसृष्टिः। पुष्पिताग्रावृत्तम् ॥ १२१ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तुर्यः स्थैर्यविचारणप्रकरणभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १२३ ॥

वदता कथयता नृपेण भीमेन लज्जास्पदं सलज्जा तनया भैमी यत् नाप्रच्छि किमिति ते तापादिकं जातमिति न पृष्टा तथा वपुषः शरीरस्य पाण्डुत्वतापादिभिर्हेतुभिः स्मरभूः कामजनितो मोहो मूर्च्छा अकल्पि अनुमितः, तत्र मोहे या सान्त्वना सदृशी योग्या स्याद्भवेत् सा आशीःकपटादाशी-र्वादच्छलात् यच्च अवादि उक्ता, तत् सर्वं मत्वा ज्ञात्वा आलिजनः सखीजनो मनश्चित्तं आनन्द-मन्दाक्षयोराह्लादलज्जयोरब्धिं समुद्रम् अतनोत् कृतवान् । शीघ्रमेव भैम्याः स्वयंवरो भविष्यती-त्यानन्दः राज्ञाप्यस्याः कामविकारो ज्ञात इति लज्जा । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' अ । शार्दूलविक्रीडितमिदं वृत्तम् ॥ १२२ ॥

श्रीहर्षमिति । स्थैर्यस्य स्थिरत्वस्य विचारणा क्षणभङ्गवादनिराकरणेन विचारो यत्र तादृशस्य प्रकरणस्य ग्रन्थविशेषस्य भ्रातरि एकजनकत्वात् सोदरे तदप्यनेन कृतमिति भावः। नैषधीयचरितेऽयं तुर्यश्चतुर्थः सर्गः समाप्त इति अन्यत् पूर्ववत् ॥ १२३ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायां
चतुर्थः सर्गः समाप्तः ।

"अत्र रूपकसमुच्चयभावशबलतालङ्कारसङ्करः" सा । पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्य-नुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ १२२ ॥

'चतुरश्छयतौ' इति चलोपे तुर्येति पदं सिद्धम् ॥ १२६ ॥

चतुर्थः सर्गः समाप्तः ॥

# पञ्चमः सर्गः ।

यावदागमयतेऽथ नरेन्द्रान् स स्वयंवरमहाय महीन्द्रः ।
तावदेव ऋषिरिन्द्रदिदृक्षु-र्नारदस्त्रिदशधाम जगाम ॥ १ ॥
नात्र चित्रमनु तं प्रययौ यत् पर्वतः स खलु तस्य सपक्षः ।
नारदस्तु जगतो गुरुरुच्चै र्विस्मयाय गगनं विललङ्घे ॥ २ ॥

पूर्वसर्गसूचितस्वयंवरोपक्रममुद्दिश्य अनवरतकलहविलोकनकुतूहलस्य भगवतो नारदमुनेः पुरन्दरप्रोत्साहनार्थममरपुरप्रयाणमाह, यावदिति। अथ दमयन्तीसान्त्वनानन्तरं स महीन्द्रो भीमः स्वयंवरमहाय स्वयंवरोत्सवाय यावत् नरेन्द्रान् राज्ञ आगमयते स्वयंवरायाहूतवान् राज्ञः प्रतीक्षते तावदेव तस्मिन्नेव काले न तु किञ्चिद्विलम्ब्य इन्द्रदिदृक्षुरिन्द्रं द्रष्टुमिच्छुर्नारदऋषिस्त्रिदशधाम स्वर्गं जगाम गतवान्। अत्र कलहो जायतामिति कृत्वा स्वयंवरागमन इन्द्रं प्रवर्त्तयितुं गतवानित्यर्थः। आगमयत इति 'आगमयतेः कालहरण' इत्यात्मनेपदं। तावदेव ऋषिरिति 'ऋत्यकः' इति सन्ध्यभावः। इन्द्रस्य दिदृक्षुरिन्द्रदिदृक्षुरिति सम्बन्धषष्ठ्या तत्पुरुषः। 'मह उद्धव उत्सवः' अ। अस्मिन् सर्गे स्वागता वृत्तं 'स्वागतेति रनभाद् गुरुयुग्मम्' इति लक्षणात् ॥ १॥

सप्तभिः श्लोकैस्तस्य गमनप्रकारमेवाह—नात्रेति। पर्वतः पर्वतनामा मुनिः तं नारदम् अनु पश्चात् यत् प्रययौ प्रयातवान् अत्र प्रयाणविषये न चित्रं नाश्चर्यं, खलु यस्मात्, स पर्वतस्तस्य नारदस्य, सपक्षो मित्रम्। मित्रं हि सत्यपि स्वकार्य्यानुरोधे मित्रमनुगच्छत्येवेति नाश्चर्यमित्यर्थः, अथ च सपक्षः पक्षसहितः, पर्वतः शैलो यद्गच्छति तत्र नाश्चर्यम्। तर्हि कुत्राश्चर्यमित्याह, जगतो विश्वस्य उपदेष्टृत्वात् पूज्यत्वाच्च गुरुर्नारदस्तु नारदः पुनः, उच्चैर्विस्मयाय अत्याश्चर्य्याय, गगनम् आकाशं, विललङ्घे लङ्घितवान्। विमानादिकं विना यदाकाशं लङ्घितवान् तदाश्चर्यमित्यर्थः। जगतोगमनशीलस्य उच्चैर्विस्मयायेति वा वीनां पक्षिणामपि स्मयायेति प्राञ्चः। अथ च गुरुर्गुरुत्वगुणत्वात् जगतः पृथिव्याः सकाशात् यदाकाशं लङ्घयति तदतितरामाश्चर्य्याय भवति गुरुत्वात् पतनमेव युक्तं न तूर्द्ध्वगमनमिति भावः। गच्छतीति जगदिति वोपदेवः। विस्मयायेति तादर्थ्ये चतुर्थी। 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान्निषेकादिकारे पित्रादौ सुरमन्त्रिणि' मे ॥ २ ॥

---

"छेकानुप्रासः" सा ॥ १ ॥

"गुरुद्रव्यस्य पतनार्हस्य उत्पतनं विरुद्धमिति श्लेषोत्थापितो विरोधाभासालङ्कारः" जी। काव्यलिङ्गमनुप्रासश्च ॥ २ ॥

गच्छता पथि विनैव विमानं व्योम तेन मुनिना विजगाहे।
साधने हि नियमोऽन्यजनानां योगिनान्तु तपसाखिलसिद्धिः ॥ ३ ॥
खण्डितेन्दुभवनाद्यभिमाना-ल्लँङ्घते स्म मुनिरेष विमानान्।
अर्थितोऽप्यतिथितामनुमेने नैव तत्पतिभिरङ्घ्रिविनम्रैः ॥ ४ ॥
तस्य तापनभिया तपनः स्वं तावदेव समकोचयदर्च्चिः।
यावदेष दिवसेन शशीव द्रागतप्यत न तन्महसैव ॥ ५ ॥

गच्छतेति। पथि विमानं व्योमयानं विनैव गच्छता तेन मुनिना नारदेन व्योम आकाशं विजगाहे विलोडितम्। विनैव पक्षिणेव एवशब्द इवार्थकः विमानं परिमाणशून्यं व्योम गच्छतेति वा। कथमेवमित्यर्थान्तरन्यासेनोपपादयति हि यतः अन्यजनानां योगिव्यतिरिक्तानां साध्यतेऽनेनेति साधने वाहनादौ नियमो गमनाद्यवधारणं वाहनादावेव गमनादिकं भवतीत्येवंरूप इत्यर्थः। योगिनां तु पुनः तपसा तपस्ययैव अखिलसिद्धिः समस्तकार्यनिर्व्वाहः अतस्तपोबलेनैव तेनाकाशमाक्रान्तमित्यर्थः। 'व्योमयानं विमानोऽस्त्री' अ ॥ ३ ॥

खण्डितेन्द्विति। एष मुनिर्नारदः, खण्डितो दूरीकृत इन्दुभवनादीनां चन्द्रलोकादीनाम् अभिमानो रमणीयत्वगर्व्वोऽनतिक्रमणीयत्वगर्व्वो वा यैस्तादृशानपि विमानान् व्योमयानानि लङ्घते स्म। अतिक्रामति स्म, तथा तत्पतिभिस्तेषां विमानानां स्वामिभिः, अङ्घ्रिविनम्रैश्चरणानतैः सद्भिः, अर्थितोऽपि भगवन् मदीयं विमानमारुह्य क्षणं स्थीयतामिति याचितोऽपि अतिथिताम् आतिथ्यं नैव अनुमेने नैवाङ्गीचकार विलम्बभियेति भावः ॥ ४ ॥

तस्येति। तपनः सूर्यस्तस्य नारदस्य तापनभिया तत्कर्मकसन्तापनाद्भयेनेत्यर्थः, तावदेव तावत्परिमाणमेव स्वं स्वीयम्, अर्च्चिस्तेजः समकोचयत् सङ्कोचितवान्। मत्समीपमागतोऽयं महानुभावो मुनिर्मदीयतेजसा सन्तप्तो माभूदिति मत्वा तेजः सङ्कोचितवानित्यर्थः। तावदेवेत्यस्याकाङ्क्षां निवारयति, यावत् यावत्परिमाणसङ्कोचेनैव, एष सूर्यः, स्वयं तन्महसैव मुनितेजसैव, द्राक् झटिति, न अतप्यत सन्तप्तो नाभूत् यथा दिवसेन दिनतेजसा शशी चन्द्रस्तप्यते अल्पस्य सङ्कोचे स्वतेजसा मुनेरभिभवः स्यात् अधिकस्य सङ्कोचे मुनितेजसा स्वस्याभिभवः स्यादतो यथोभयं न भवति तथा तेजः संकोचितवानित्यर्थः। नारदः सूर्य इव तेजस्वीति भावः। यावत्तावदित्यव्ययम् ॥ ५ ॥

---

"सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः" जी ॥ ३ ॥

"अलोपमा विभावना च" सा। छेकानुप्रासश्चेति ॥ ४ ॥

अतिशयोक्तिः, श्रौतोपमा, छेकानुप्रासश्चेति संसृष्टिः॥ 'अर्च्चिर्हेतिः शिखा स्त्रियाम्, इति, 'द्राक् झटित्यञ्जसाह्नाय' अ ॥ ५ ॥

पर्यभूद्दिनमणिर्द्विजराजं यत्करैरहह तेन तदा तम् ।
पर्यभूत् खलु करैर्द्विजराजः कर्म कः स्वकृतमत्र न भुङ्क्ते ॥ ६ ॥
विष्टरं तटकुशालिभिरद्भिः पाद्यमर्घ्यमथ कच्छरुहाभिः ।
पद्मवृन्दमधुभिर्मधुपर्कं स्वर्गसिन्धुरदितातिथयेऽस्मै ॥ ७ ॥
स व्यतीत्य वियदन्तरगाधं नाकनायकनिकेतनमाप ।
सम्प्रतीर्य भवसिन्धुमनादिं ब्रह्म शर्मभरचारु यतीव ॥ ८ ॥
अर्चनाभिरुचितोच्चतराभिश्चारु तं सदकृतातिथिमिन्द्रः ।
यावदर्हकरणं किल साधोः प्रत्यवायधुतये न गुणाय ॥ ९ ॥

पर्यभूदिति । दिनमणिः सूर्यः, करैः स्वतेजोभिः करणैर्द्विजराजं चन्द्रं यत्पर्यभूत् परिभवति स्म, खलूत्प्रेक्षे तदा तस्मिन् काले तेन अकारणद्विजराजपरिभवेण हेतुना अहहाश्चर्ये द्विजराजो ब्राह्मणश्रेष्ठो नारदः, करैः स्वकिरणैः करणैः, तम् अकारणद्विजराजपरितापिनं सूर्यं खलु निश्चितं पर्यभूत् परिभूतवान् । युक्तमेतत् यतः अत्र लोके स्वकृतं स्वेन जनितं कर्म शुभाशुभात्मकं, को जनो न भुङ्क्ते अपितु सर्वएव भुङ्क्ते। अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते इति स्मृतेः। एकं द्विजराजं परिभवन् सूर्योऽपरेण द्विजराजेन परिभूत इत्यर्थः । सूर्यः स्वतेजसा द्विजराजं नारदं पूर्वं परिभूतवान् अनन्तरं द्विजराजो नारदोऽपि क्रुद्धः सन् स्वतेजसा सूर्यं परिभूतवानिति वेति प्राञ्चः ॥ ६ ॥

विष्टरमिति । अथान्तरं, स्वर्गसिन्धुर्मन्दाकिनी अतिथये अभ्यागतायास्मै नारदाय तटकुशालिभिस्तीरजातकुशश्रेणीभिर्विष्टरम् आसनम्, अदित दत्तवती, तथा अद्भिर्जलैः पाद्यम् अदित, कच्छरुहाभिर्जलप्रायदेशजातदूर्वाभिरर्घ्यम् अदित, पद्मवृन्दस्य पद्मसमूहस्य मधुभिर्मकरन्दैर्मधुपर्कम् अदित । अन्योऽपि अभ्यागताय आसनादिकं दत्त्वा तोषयति । कुशश्रेण्यादियुतां मन्दाकिनीं दृष्ट्वा स तुतोषेति भावः : 'वृक्षासनयोर्विष्टर' इति आसनार्थे विष्टरो निपातितः । अदितेति दाञोलुङ्त । 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' 'दूर्वा तु शतपर्विका । सहस्रवीर्याभार्गव्यो रुहानन्ता' अ ॥ ७ ॥

सइति । स नारदः, अगाधम् अपरिमाणं, वियदन्तराकाशान्तरालं व्यतीत्य अतिक्रम्य नाकस्य स्वर्गस्य नायकः पतिरिन्द्रस्तस्य, निकेतनं गृहम्, आप प्राप्तवान् । यतीव यथा संयमी अनादिं प्रवाहरूपत्वात् अवधिशून्यं, भवसिन्धुं संसाररूपसमुद्रं संप्रतीर्य उत्तीर्य, शर्मणः सुखस्य भरेण समूहेन, चारु रमणीयं, ब्रह्म परमात्मानं प्राप्नोपि तथा । आनन्दो ब्रह्मणो रूपमित्यादिश्रुतेः, इन्द्रगृहमपि सुखसमूहेन चारु, 'यन्न दुःखेन सम्भिन्नमि'त्यादिवचनात् ॥ ८ ॥

अत्रोपस्थितं नारदमिन्द्रोऽधिकं पूजितवानित्याह अर्चनाभिरिति । इन्द्रोऽतिथि-

---

श्लेषमूलातिशयोक्तिद्वयम्, अर्थान्तरन्यासः, अर्थापत्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ६ ॥

श्रौतोपमा, निरङ्गं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ८ ॥

नामधेयसमतासखमद्रेरद्रिभिन्मुनिमथाद्रियत द्राक्।
पर्वतोऽपि लभतां कथमर्चां न द्विजः स विबुधप्रभुलम्भो ॥ १० ॥
तद्भुजादतिवितीर्णसपर्याद् द्योद्रुमानपि विवेद मुनीन्द्रः।
स्वःसहस्थितिसुशिक्षितया तान्दानपारमितयैव वदान्यान्॥ ११ ॥

मभ्यागतं, तं नारदम् उचिताभ्यो योग्याभ्यः अच्चनाभ्य उच्चतराभिरत्यधिकाभिरर्च्चनाभिः पूजाभिः, श्राद सम्यक् विधिपूर्वकं यथा तथा, सदकृत पूजितवान्। अधिकपूजायाः कारणमाह, किल यतः, साधोर्यावदर्हकरणं यथोचितविधानं यावती अर्हा पूजा अतिथ्यागमने उक्ता तत्करणं वा, प्रत्यवायधुतये अकरणजन्यदुरितपरिहारमात्राय, भवति न गुणाय न विशेषफलाय भवति, अतो विशेषफलमनुसन्धायैव नारदमधिकं पूजयामासेति भावः। 'यो भूय आरभते तस्य फले विशेष' इति न्यायात् ॥ ९ ॥

पर्वतमुनिमपि पूजितवानित्याह -नामधेयेति। अथ नारदसत्कारानन्तरम् अद्रिभित्पर्वतभेदी इन्द्रः, अद्रेः पर्वतस्य नामधेयसमतया पर्वतेतिसंज्ञासाम्येन सखा मित्रं तादृशं मुनिं पर्वतं, द्राक् झटिति, आद्रियत पूजितवान्। कथं पर्वतभिदा पर्वतस्य पूजा कृतेति नामद्वयच्छलेनाशङ्क्याह -स द्विजो ब्राह्मणः पर्वतोऽपि विबुधप्रभुलम्भी सन् इन्द्रं प्राप्तः सन्, अर्चां पूजां कथं न लभतां न प्राप्नोतु अपि तु प्राप्तुमर्हत्येव। सन्तो गृहागतं शत्रुमपि पूजयन्तीतिच्छलम्। अयं हि ब्राह्मणो नाममात्रेण पर्वतः न तु वास्तविकपर्वतत्ववानिति युक्तमेवास्य पूजनमित्यर्थः। अथ च पर्वतः पाषाणतुल्यो मूर्खोऽपि द्विजो विबुधप्रभुलम्भी पण्डितश्रेष्ठं प्राप्तः सन् अर्च्चां कथं न लभतां जातिमात्रेणापि ब्राह्मणः पण्डितेनापि पूज्यतएव। 'सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे' इति स्मृतेः। समतासखमिति राजादित्वाट्टः ॥ १० ॥

इन्द्रस्य दातृत्वातिशयं व्यञ्जयति- तद्भुजादिति। मुनीन्द्रो नारदः, तान् दातृत्वेन प्रसिद्धान्, द्योद्रुमान् कल्पवृक्षानपि, अति अत्यन्तं वितीर्णा विहिता सपर्या पूजा येन तादृशात्, तस्य इन्द्रस्य भुजाद्धस्तात् उपदेष्टुः, स्वःसहस्थित्या एकस्मिन् स्वर्गे सहवासेन सुशिक्षितया सुष्ठ्वभ्यस्ततया दानपारमितया दानस्य पारमं परमत्वं विद्यते यस्य दानपारमी तस्य भावस्तत्ता तयैव अतिदातृतयैवेत्यर्थः हेतुना, वदान्यान् दानशौण्डान्, विवेद जानाति स्म। कल्पवृक्षाणां न स्वाभाविकं वदान्यत्वं किन्तु इन्द्रभुजाच्छिक्षितमित्यर्थः। दानपारमितया दानविधिबोधकग्रन्थविशेषेणेति केचित्। तद्भुजादिति 'गुर्वादीङर्थादेरि'त्यपादानसंज्ञायां पञ्चमी। 'पूजा नमस्यापचितिः सपर्यार्च्चार्हणाः समाः' अ। 'वदान्यो दानशौण्डे स्याद्व दान्यश्चारुभाषिणि' व ॥ ११ ॥

---

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः शाब्दीपरिसंख्या चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥९॥
कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासोऽर्थापत्तिश्चेत्यनयोः सङ्करः ॥ १० ॥
"अत्रातिशयोक्तिः" सा। "इन्द्रहस्तः कल्पवृक्षाणामपि दानविद्योपदेष्टेत्युत्प्रेक्षितवानित्यर्थः, कल्पवृक्षातिशायि औदार्यमस्येति भावः" जी ॥ ११ ॥

मुद्रितान्यजनसंकथनः सन् नारदं बलरिपुः समवादीत् ।
आकरः स्वपरभूरिकथानां प्रायशो हि सुहृदोः सहवासः ॥ १२ ॥
तं कथानुकथनप्रसृतायां दूरमालपनकौतुकितायाम् ।
भूभृतां चिरमनागतिहेतुम् ज्ञातुमिच्छुरवदच्छतमन्युः ॥ १३ ॥
प्रागिव प्रसुवते नृपवंशाः किन्नु सम्प्रति न वीरकरीरान् ।
ये परप्रहरणैः परिणामे विक्षताः क्षितितले निपतन्ति ॥ १४ ॥
पार्थिवं हि निजमाजिषु वीरा दूरमूर्द्ध्वगमनस्य विरोधि ।
गौरवाद्वपुरपास्य भजन्ते मत्कृतामतिथिगौरवऋद्धिम् ॥ १५ ॥

अथ नारदं प्रतीन्द्रस्य वचनमुपक्रमते द्वाभ्याम् —मुद्रितेति । बलरिपुरिन्द्रो मुद्रितं परित्यक्तम् अन्यजनैः सह सङ्कथनं सम्भाषणं येन तादृशः सन् भवन्, नारदं समवादीत् सादरमुवाच । अर्थान्तरमुपन्यस्यति, हि यतः, सुहृदोर्मिलयोः सहवास एकत्रावस्थानं प्रायशो बाहुल्येन स्वस्य परेषाञ्च भूरिकथानां नानाविधालापानाम् आकर उत्पादको भवति ॥ १२ ॥

तमिति । आलपने परस्परसम्भाषणे या कौतुकिता कुतूहलित्वं तस्यां, दूरमत्यन्तं कथानुकथनेन वचनानुवचनेन प्रसृतायां प्रवृद्धायां सत्यां, शतमन्युरिन्द्रः भूभृतां राज्ञां, चिरं बहुकालं व्याप्य या अनागतिः स्वर्गे अनागमनं तस्या हेतुं कारणं, ज्ञातुमिच्छुः सन्, तं नारदम्, अवदत् । किमिति ? बहुकालं राजानो मृताः सन्तः स्वर्गं नागच्छन्तीति ज्ञातुमिच्छया उवाचेत्यर्थः । 'शतमन्युर्दिवस्पतिः' अ ॥ १३ ॥

पञ्चभिरिन्द्रवाक्यमनुवदति प्रागिवेति । किं प्रश्ने, नु सम्बोधने, हे मुने ! नृपा राजान एव वंशा वेणवः, ते प्रागिव पूर्वमिव सम्प्रति इदानीं वीरा एव करीरा वंशाङ्कुरास्तान्, किं न प्रसुवते न जनयन्ति, यथा ते पूर्वं वीरानजनयन् तथाधुना किमिति न जनयन्तीत्यर्थः । ये वीरकरीराः परिणामे आयुःशेषे वेणुपक्षे पक्वतादशायां परेषां शत्रूणां प्रहरणैर्बाणादिभिरस्त्रैर्विक्षता हताः सन्तः, पक्षे अन्येषां कुठारादिभिश्छिन्नाः सन्तः, क्षितितले पृथिवीपृष्ठे निपतन्ति । 'करीरः कलसे वृक्षभेदे वंशांकुरेऽपि च' वि ॥ १४ ॥

नृपाणां तथात्वे तव किं फलमित्यत आह —पार्थिवमिति । हि यतो, वीराः शूराः, पार्थिवं सत्यपि पाञ्चभौतिकत्वे पृथिव्यंशबाहुल्यात्तद्विकृतम् अतएव गौरवात्पतनकारणाद्गुरुत्वात्

"सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः" सा । 'बलारातिः शचीपतिः' 'खनिः स्त्रियामाकरः स्यात्' अ ॥ १२ ॥

"अत्रानुप्रासः" सा ॥ १३ ॥

श्लेषोत्थापितपरम्परितरूपकमुपमाच्छेकानुप्रासश्च । 'वंशो वेणौ कुले वर्गे' वि । 'परं दूरान्यमुख्येषु परोऽरिपरमात्मनोः' वै ॥ १४ ॥

साभिशापमिव नातिथयस्ते मां यदद्य भगवन्नुपयन्ति।
तेन न श्रियमिमां बहु मन्ये स्वोदरैकभृतिकार्यकदर्याम्॥ १६॥
पूर्वपुण्यविभवव्ययबद्धाः श्रीभरा विपद एव विमृष्टाः।
पात्रपाणिकमलार्पणमेषां तासु शान्तिकविधिर्विधिदिष्टः॥ १७॥

दूरमत्यन्तम् ऊर्ध्वगमनस्य स्वर्गप्राप्तेर्विरोधि प्रतिबन्धकं निजं स्वीयं वपुः शरीरं जात्याश्रयत्वादेकत्वम् आजिषु संग्रामेषु, अपास्य परित्यज्य, मत्कृतां मया सञ्चिताम् अतिथिगौरवऋद्धिम् अभ्यागतार्थसत्कारसमृद्धिं भजन्ते प्राप्नुवन्ति। संग्रामनिहतैराजभिर्दिव्यशरीरैः सद्भिः स्वर्गमागत्य यन्ममातिथिभिर्भूयते तदेव मदीयसम्पत्तिफलमित्यर्थः। गौरवऋद्धिमित्यत्र 'ऋदृलृतोरि'त्यादिना सन्धिनिषेधः॥ १५॥

नन्वतिथिवैमुख्यमेव गृहिणां दोषाय भवति न तु तेषामनागमनमित्याशङ्क्याह साभिशापमिति। हे भगवन् ऐश्वर्यादिसमग्रशालिन् नारद! ते वीरा अतिथयः, अद्य इदानीं साभिशापमिव महापातकाद्यभिशस्तजनमिव, मां यत्र उपयन्ति न प्राप्नुवन्ति, तेन हेतुना इमां श्रियं सम्पत्तिं न बहु मन्ये नात्यन्तं सम्मानयामि। किम्भूतां? यतः स्वोदरस्य निजजठरस्य एका केवला या भृतिर्भरणं सैव कार्यं यस्याः सा चासौ अतएव कदर्या कुत्सिता चेति तादृशीम्। सम्पत्तेर्हि अतिथिसत्काराय नियोगेनैव साफल्यं न तु स्वोदरपरिपूरणेनातस्तेषामनागमने खिद्यामीत्यर्थः। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृतम्' इति॥ १६॥

पूर्वेति। किञ्च हे भगवन्! पूर्वपुण्यानां पूर्वजन्मकृतकृच्छ्रचान्द्रायणादिजन्यशुभादृष्टानां यो विभवो माहात्म्यं तस्य व्ययेन परिपाकेण नाशेन वा बद्धाः सम्बद्धाः प्राप्ताः श्रीभराः सम्पत्तिसमूहा, विमृष्टाः तत्त्वतो विचारिताः सत्यः, विपद एव, क्लेशसञ्चितपुण्यक्षयकारित्वात् भोगेनाशुविनाशितया पर्यवसाने दुःखदायित्वाच्च। किन्तु तासु सम्पत्तिलक्षणविपत्सु एषां श्रीभराणां, पात्रस्य विशिष्टसम्प्रदानस्य पाणिकमले हस्तपद्मे अर्पणं त्यागः, शान्तिकविधिः शान्तिप्रयोजनकर्म, विधीयतेऽनेनेति विधिना वेदेन ब्रह्मणा वा दिष्ट उक्तः, पात्रेति फलातिशयार्थमुक्तम्, उक्तञ्च—'सर्वत्र गुणवद्दानं श्वपाकादिष्वपि स्मृतम्। देशे काले विधानेन पात्रे दत्तं विशेषतः' इति। अन्यास्वपि विपत्सु शान्तिककर्म क्रियते। लक्ष्म्याः पद्माधिष्ठानं युक्तमिति पाणिकमलरूपकेऽभिप्रायः॥ १७॥

---

पदार्थहेतुकं काव्यलिङ्गम्। 'समित्याजिसमिद् युधः' अ॥ १५॥

तृतीयपादार्थं प्रति चतुर्थपादार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, साभिशापमिवेति उत्प्रेक्षा, छेकानुप्रासश्च। 'अथ मिथ्याभिशंसनमभिशापः' 'एके मुख्यान्यकेवलाः' अ॥ १६॥

"अत्रानुप्रासरूपकातिशयोक्तिसङ्करः" सा॥ १७॥

तद्विमृज्य मम संशयशिल्पि स्फीतमत्र विषये सहसाघम् ।
भूयतां भगवतः श्रुतिसारै-रद्य वाग्भिरघमर्षणऋग्भिः ॥ १८ ॥
इत्युदीर्य मघवा विनयर्द्धिं वर्द्धयन्नवहितत्वभरेण ।
चक्षुषां दशशतीमनिमेषां तस्थिवान् मुनिमुखे प्रणिधाय ॥ १९ ॥
वीक्ष्य तस्य विनये परिपाकं पाकशासनपदं स्पृशतोऽपि
नारदः प्रमदगद्गदयोक्त्या विस्मितः स्मितपुरःसरमाख्यत् ॥ २० ॥
भिक्षिता शतमखी सुकृतं य-त्तत्परिश्रमविदः स्वविभूतौ ।
तत्फले तव परं यदि हेला क्लेशलब्धमधिकादरदन्तु ॥ २१ ॥

तदिति । तत्तस्मात्, भगवतस्तव श्रुतिसारैः श्रवणसुखावहैर्वाग्भिर्वचनैः, अद्य इदानीं मम अत्र विषये अतिथ्यनागमकारणजिज्ञासायाम् अघस्य दुःखस्य मर्षणे विनाशने ऋग्भिर्मन्त्ररूपैः अथ च सन्ध्याविध्युक्तमन्त्रविशेषैर्भूयताम् । किं कृत्वा ? मम साभिशापत्वज्ञानात् कारणान्तराद्वा किमतिथयो नागच्छन्तीति संशयः सन्देह एव शिल्पी निर्म्माता हेतुर्यस्य तादृशं तथाविधं संशयजन्यमित्यर्थः । स्फीतमतिप्रवृद्धम्, अघं दुःखं, झटिति शीघ्रं, विमृज्य अपनीय, संशयच्छेदकं तव वचनं श्रुत्वा मम दुःखं यास्यति तत् तादृशं कथयेत्यर्थः । अन्यस्यापि मन्त्रविशेषश्रवणात् दुःखमपगच्छति । अघमर्षणऋचोऽपि श्रुतिभ्योवेदेभ्यः साराः श्रेष्ठभूता झटिति च अघं पापम् अपनयन्ति । भूयतामिति भावे लोट् ॥ १८ ॥

इतीति । मघवा इन्द्र इति पूर्वोक्तम् उदीर्य उक्त्वा अवहितत्वस्य अवधानस्य चित्तैकाग्रताया भरेण आधिक्येन विनयर्द्धिं स्वस्यातिविनीतत्वं वर्द्धयन् सन्, अनिमेषां निमेषरहितां चक्षुषां दशशतीं सहस्रं, मुनिमुखे प्रणिधाय संस्थाप्य तस्थिवान् स्थितः ॥ १९ ॥

अथ नारदो वक्तुमुपक्रमते —वीक्ष्येति । नारदः पाकशासनपदं इन्द्रपदं, स्पृशतोऽपि अधिकुर्वतोऽपि तस्य इन्द्रस्य विनये परिपाकं परिणतिं प्रकर्षं वीक्ष्य अनुभूय, विस्मितः सन्, ईदृशैश्वर्यशालिनोऽप्येतावान् विनय इति प्राप्तविस्मयः सन्, स्मितमीषद्धसनं पुरःसरमग्रवर्त्ति यत्र क्रियायां नद्यथा तथा प्रमदेन हर्षेण गद्गदया अस्पष्टया उक्त्या वाचा आख्यदुक्तवान् । स्मितपूर्वाभिभाषिणोहि महान्त इति स्मितपुरःसरमित्युक्तम् । आख्यदिति ख्यातेर्लुङ्लोवुक ख्यातेरात्मने चे'त्यग्' 'द्विरुक्तिहेताविे'त्यादिनाकारलोपः ॥ २० ॥

यदाख्यत्तदाह षोडशश्लोकैः—भिक्षितेति । हे इन्द्र ! त्वया यत् सुकृतं पुण्यं, शतमखी

---

"अत्र मुनिवाक्येष्वारोप्यमाणस्य अघमर्षणत्वस्य प्रकृताघहरणोपयोगात् परिणामालङ्कारः ।" जी ॥ १८ ॥

छेकानुप्रासोऽलङ्कारः ॥ १९ ॥

छेकानुप्रासः ॥ २० ॥

सम्पदस्तव गिरामपि दूरा यन्न नाम विनयं विनयन्ते ।
श्रद्दधाति क इवेह न साक्षा-दाह चेदनुभवः परमाप्तः ॥ २२ ॥
श्रीभरानतिथिसात्करवाणि स्वोपभोगपरता न हितेति ।
पश्यतो बहिरिवान्तरपीयं दृष्टिसृष्टिरधिका तव कापि ॥ २३ ॥

यज्ञशतं, भिक्षिता याचिता यज्ञशतं कृत्वा यत् सुकृतं सञ्चितमित्यर्थः । तत्फले तस्य सुकृतस्य फलभूतायां, स्वविभूतौ इन्द्रत्वलक्षणे निजैश्वर्ये हेला 'तेन न श्रियमिमां बहुमन्य' इत्यादिनोक्ता अवज्ञा, परं केवलं, तव नान्यस्य, यदि सम्भावनायाम् । किम्भूतस्य तव ? तत्परिश्रमविदः तस्याः शतमखीभिक्षायाः परिश्रममायामं वेत्तीति तादृशस्य । आयासाधिक्यलभ्येऽप्यैश्वर्ये केवलं तवैव अवज्ञा दृश्यत इत्यर्थः । इतरेषामेवं न भवतीत्याह, तु यस्मात्, क्लेशलब्धम् आयासप्राप्तं वस्तु, स्वस्मिन्नधिकमादरं ददातीति तादृशम् । भिक्षिर्द्विकर्मकः, शतमखीति गौणत्वाद्गौणं कर्म दुहादेरित्युक्तत्वे प्रथमा । 'हेलाऽवज्ञाविलासयोः' वि ॥ २१ ॥

सम्पद इति । नाम सम्भावनायां, हे इन्द्र ! गिरां वाचां, दूरा अपि दूरवर्त्तिन्योऽपि इयत्तया वक्तुमशक्या अपीत्यर्थः । तव सम्पदः सम्पत्तयो, यत् विनयं विनयित्वं, न विनयन्ते नापनयन्ति न दूरीकुर्वन्ति, इह अस्मिन् विषये, परमाप्तोऽतिसुहृत् परं केवलम् आप्तः सुहृद्भूतो वा साक्षादनुभवः प्रत्यक्षश्चेद्यदि नाह न ब्रूते, सतीष्वपि अतिसम्पत्सु त्वमतिविनयीति यदि प्रत्यक्षविषयो न स्यादित्यर्थः । तदा क इव श्रद्दधाति विश्वसिति अपि तु न कोऽपि । सम्पत्सु हि विनय-च्युतिरेव नियतेति, तव विनये परमुखेभ्यः शृण्वतां विश्वासो न जायत इत्यर्थः । यद्वा अनु-भवतीत्यनुभवः कृतप्रत्यक्षः परमाप्तः परमप्रत्ययितो जनो यदि नाह तर्हि क इव श्रद्दधाति । असम्भाव्यमाने हि विषये कथञ्चिदाप्तवाक्याद्विश्वासो जायते ॥ २२ ॥

श्रीति । श्रीभरान् सम्पत्तिसमूहान्, अतिथिसात् करवाणि अतिथिभ्यो देयान् कुर्याम्, स्वोपभोगपरता आत्मोपभोगाधीनता, न हिता नोचिता, इति पश्यतः पर्यालोचयतस्तव, बहिरिव अन्तरपि अन्तःकरणेऽपि, इयमनुभूयमाना, कापि वक्तुमशक्या, अधिका भूयसी, दृष्टि-सृष्टिर्ज्ञानसृष्टिः अथच चक्षुःसृष्टिः । यथा तव बहिः शरीरे अधिका चक्षुःसृष्टिस्तथा मनस्यपि ज्ञानसृष्टिरित्यर्थः । त्वमेवातिविवेचको नान्य इति भावः । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने' अ ॥ २३ ॥

---

"अत्र क्लेशवाक्येन हेलात्वसमर्थनाद् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः" जी ॥ २१ ॥

"अत्र सम्पदां वाग्गोचरत्वेऽपि तदगोचरत्वोक्त्या असम्बन्धरूपातिशयोक्तिः" जी । यम-कञ्चेत्यनयोः संसृष्टिः ॥ २२ ॥

"अत्र द्वयोरपि दृष्ट्योः श्लिष्टशब्दोपात्तयोरभेदाध्यवसायमूलातिशयोक्तिः, तन्मूला च बहिरिवेति श्रौत्युपमा चेति सङ्करः" जी ॥ २३ ॥

आः स्वभावमधुरैरनुभावै-स्तावकैरतितरां तरलाः स्मः ।
द्यां प्रशाधि गलितावधिकालं साधु साधु विजयस्व विड़ोजः ॥ २४ ॥
सङ्गरविक्षततनुस्रवदस्र-क्षालिताखिलनिजाघलघूनाम् ।
यस्त्विहानुपगमः शृणु राज्ञां तज्जगद्युवमुदन्तमुदन्तम् ॥ २५ ॥
सा भुवः किमपि रत्नमनर्घं भूषणं जयति तत्र कुमारी ।
भीमभूपतनया दमयन्ती नाम या मदनशस्त्रममोघम् ॥ २६ ॥

आइति । हे विड़ोज इन्द्र ! तावकैस्त्वदीयैः, स्वभावमधुरैः प्रकृतिसुन्दरैरनुभावैः स्वभावैर्भाव-बोधकव्यापारैर्वा हेतुभिर्वयम् अतितरामत्यर्थं, तरलाः स्मः चञ्चला भवामः, तवानुभावान् दृष्ट्वा वयमधैर्या भवाम इत्यर्थः । ज्ञानिनामस्माकं तारल्यमनुचितमिति आः पीड़ायां हर्षे वा । अत-एव गलितोऽवधिर्मर्यादा यस्य तादृशः कालो यत्र क्रियायां तद्यथा स्यात्तथा असङ्ख्यकालमित्यर्थः । गलितावधिकालं व्याप्येति वा । द्यां स्वर्गं, प्रशाधि पालय, साधु साधु भद्रं भद्रं, विजयस्व सर्वोत्कर्षेण वर्त्तस्व । प्रशाधीति शास्तेर्हि 'हुझल्भ्यो हेर्धिः' इति हेर्धि, 'शा हौ' इति सकारलुक् । विजयस्वेति 'विपराभ्यां जेः' इत्यात्मनेपदम् । 'अनुभावः स्वभावे स्यान्निश्चये भावसूचके' वि । 'तरलश्चञ्चले पिङ्गे हारमध्यमणावपि' व । 'विड़ोजाः पाकशासनः' अ । विड्व्यापकम् ओजस्तेजो यस्येति व्युत्पत्तिः ॥ २४ ॥

एवमिन्द्रं प्रशस्य तत्प्रश्नस्योत्तरयितुमुपक्रमते - सङ्गरेति । हे इन्द्र ! सङ्गरे युद्धे विक्ष-ताभ्यो बाणादिभिर्भिन्नाभ्यस्तनुभ्यः शरीरेभ्यः स्रवता क्षरता अस्रेण रुधिरेण क्षालितानि धौतानि अखिलानि सर्वाणि निजाघानि स्वकीयपापानि तैर्लघूनां स्वर्गगमनप्रतिबन्धकगौरव-रहितानां, राज्ञां यद्यस्मात्, इह अनुपगम आगमाभावः तं प्रसिद्धं तम् उदन्तं वृत्तान्तं शृणु । किम्भूतमुदन्तं ? जगतां त्रिलोकानां, यूनां तरुणानां मुत् हर्षो यस्मात् तादृशम् । एतद्वृत्ता-न्तश्रवणे सर्वेषां यूनां कौतुकं भवतीत्यर्थः । एतेन यूनस्तवाप्यत्रावश्यकमस्तीति सूचितम् । जगद्यूनां या मुद्धर्षस्तस्या अन्तोऽवधिर्यत्र तादृशम् । एतत्पर्यन्तमित्यर्थ इत्याहुः केचित् । 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' अ ॥ २५ ॥

सेति । तत्र मनुष्यलोके, भुवः पृथिव्याः, किमपि लोकोत्तरम्, अनर्घम् अमूल्यं, रत्नं भूषणम् अलङ्करणभूता कुमारी अजातपाणिग्रहा दमयन्ती नाम सा भीमभूपतनया भीमनृपतिसुता,

वृत्त्यनुप्रासः ॥ २४ ॥
श्लोकेऽस्मिन् "क्षालिताघपदार्थस्य विशेषणगत्या लघुत्वहेतुत्वात् पदार्थहेतुकं काव्य-लिङ्गम् । रुधिरैरघक्षालनाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्छेकानुप्रासः, यमकं, सत्यपि आगमनकारणे तदभाव इति विशेषोक्तिश्च ॥ २५ ॥

संप्रति प्रतिमुहूर्त्तमपूर्व्वा कापि यौवनजवेन भवन्ती।
आशिखं सुकृतसारभृते सा क्वापि यूनि भजते किल भावम्॥ २७॥
कथ्यते न कतमः स इति त्वं मां विवक्षुरसि किं चलदोष्ठः।
अर्द्धवर्त्मनि रुणत्सि न पृच्छां निर्गमेण न परिश्रमयैनाम्॥ २८॥
यत्पथावधिरणुः परमः सा योगिधीरपि न पश्यति यस्मात्।
बालया निजमनःपरमाणौ ह्रीदरीशयहरीकृतमेतम्॥ २९॥

जयति सर्वोत्कृष्टा सती वर्त्तते। सा का? या अमोघम् अव्यर्थं मदनशस्त्रं कामशस्त्ररूपा अतिसुन्दरीत्यर्थः। कुमारीत्यनेन नेयमधुना परवधूरतस्तां लिप्सुश्चेदुद्योगं कुर्विति सूचितम्॥ २६॥

सम्प्रतीति। किल प्रसिद्धौ सा दमयन्ती संप्रति इदानीं क्वापि लोकोत्तरे अथ च मयाप्यज्ञातनामनि यूनि तरुणे भावम् अनुरागं भजते। किम्भूता? यौवनस्य जवेन वेगेन यौवनचिह्नानां शैघ्र्येणेत्यर्थः प्रतिमुहूर्त्तं प्रतिक्षणं, कापि अनिर्वचनीया अपूर्वा अतिमनोज्ञा भवन्ती जायमाना। किम्भूते यूनि? आशिखं नखादिशिखापर्यन्तं सुकृतसारेण उत्कृष्टपुण्येन भृते पूर्णे। एतेन पुण्यातिशयलभ्या सा, त्वमपि देवराजत्वादतिपुण्यवानेव अतस्तत्र तवोद्योगो युज्यत इति सूचितम्। यौवनभरेणेति क्वचित् पाठः॥ २७॥

कथ्यत इति। यस्मिन् सा भावं भजते स युवा कतमः बहुषु मध्ये कः श्रेष्ठस्त्वया न कथ्यते, क्वाऽपीत्यनेन गोप्यते इति त्वं किं किमर्थं, मां विवक्षुरसि वक्तुमिच्छसि। कथं मे विवक्षा भवता ज्ञातेत्याह। यतस्त्वं चलन् स्पन्दमान ओष्ठो यस्य तादृशः। ओष्ठस्पन्दात्तव तद्वक्तुमिच्छा मयानुमितेत्यर्थः। हे इन्द्र! पृच्छां तादृक्प्रश्नम्, अर्द्धवर्त्मनि अर्द्धपथे मुखमध्य एव न रुणत्सि निरुद्धां न करोषि अपि तु निरुद्धामेव कुर्विति काकुः। एनां पृच्छां निर्गमेण मुखाद्वहिष्करणेन न परिश्रमय मा परिश्रमं प्रापय। मम उत्तरदानसामर्थ्याभावात्तवेयं पृच्छा विफला भविष्यति, तस्मान्न त्वया प्रष्टव्यमित्यर्थः। तव यद्विषयकः प्रश्नो भविष्यति तमहं न जानामीति भावः। 'प्रश्नोऽनुयोगः पृच्छा च' अ॥ २८॥

ननु योगिनापि त्वया कथं न ज्ञायत इत्यत्राह। यदिति। परमोऽणुः परमाणुः यस्या योगिधियः पथो विषयस्य अवधिर्मर्य्यादाभूतः परमाणुपर्यन्तमेव या विषयीकरोतीत्यर्थः सा योगिनां युक्तानां युञ्जानानां वा मादृशां धीरपि योगजसन्निकर्षजन्यप्रत्यक्षात्मिका बुद्धिरपि यस्माद्धेतोः, एतं भैम्या अभिलषितं युवानं, न पश्यति न विषयीकरोति अतोयोगिना सतापि मया स कथं

---

अत्र 'अमूल्यं रत्नम्' इति, 'अमोघं मदनशस्त्रम्' इति चारोपणद्वयस्य प्रकृते देवराजमनोहरणरूपे विषये उपयोगात् परिणामालङ्कारः। अधिकारूढवैशिष्ट्यं रूपकमिति कश्चित्॥ २६॥
अपूर्वत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः छेकानुप्रासश्च॥ २७॥
चलोष्ठत्वेन विवक्षत्वानुमानादनुमानं, पदार्थहेतुकं काव्यलिङ्गञ्च॥ २८॥

सा शरस्य कुसुमस्य शरव्या सूचिता विरहवाचिभिरङ्गैः ।
तातचित्तमपि धातुरधत्त स्वस्वयंवरमहाय सहायम् ॥ ३० ॥
मन्मथाय यदथादित राज्ञां हूतिदूत्यविधये विधिराज्ञाम् ।
तेन तत्परवशाः पृथिवीशाः सङ्गरं गरमिवाकलयन्ति ॥ ३१ ॥
येषु येषु सरसा दमयन्ती भूषणेषु यदि वापि गुणेषु ।
तत्र तत्र कलयापि विशेषो यः स हि क्षितिभृतां पुरुषार्थः ॥ ३२ ॥

ज्ञायतामित्यर्थः । कथं योगिबुद्धेरप्यविषयत्वमित्याह किम्भूतम् एतं बालया अप्रगल्भया भैम्या निजमनःपरमाणौ परमाणुरूपे स्वकीयमनसि वर्त्तमाना या ह्रीर्लज्जा सैव दरी कन्दरा तत्र शेते यो हरिः सिंहस्तद्रूपीकृतं योगिबुद्ध्या परमाणुर्विषयीकर्त्तुं शक्यते न तु तदन्तर्गतः कश्चित् पदार्थः । साऽत्यन्तलज्जावशात् कस्याऽप्यग्रे मनोगतं न कथयतीत्यर्थः। अन्यस्यां कन्दरायामपि शयानः सिंहः केनापि न ज्ञायते । बालयेति लज्जाधिक्यसूचनाय । सिंहरूपणेन तस्य श्रेष्ठत्वं सूचितम् ॥ २९ ॥

सेति । सा भैमी, विरहवाचिभिः पाण्डुत्वकृशत्वादिना पूर्वरागविप्रलम्भसूचकैरङ्गैः कर्तृभिः कुसुमस्य पुष्पलक्षणस्य शरस्य बाणस्य कामबाणस्येत्यर्थः शरव्या वेध्या सूचिता पितरि ख्यापिता सती स्वस्वयंवरमहाय स्वकीयस्वयंवरोत्सवाय तातचित्तमपि स्वपितुर्भीमनृपतेरन्तःकरणमपि धातुः प्रजापतेः सहायम् अधत्त कृतवती । प्रजापतीच्छया अवश्यम्भाविनि वैवाहिकविधौ पिता अङ्गकार्श्यादिना विरहमनुमाय अधुना विवाहयोग्येयमिति निश्चित्य उद्योगं करोतीत्यर्थः । हे तात इन्द्र ! धातुर्जनयितुश्चित्तमिति वा । स्वयंवरमहायेत्यनेन नेयं विवाहविधौ पितृपरतन्त्रेति सूचितम् ॥ ३० ॥

मन्मथायेति । अथानन्तरं विधिः राज्ञां हूतौ आह्वाने यत् दूत्यं दूतकर्म तस्य विधये विधानाय यत् मन्मथाय कामाय आज्ञाम् अदित दत्तवान्, तेन हेतुना पृथिवीशा राजानस्तत्परवशाः कामाज्ञाधीनाः सन्तः सङ्गरं युद्धं गरमिव विषमिव आकलयन्ति अनुभवन्ति । यथा अनिष्टसाधनत्वाद्विषं परित्यज्यते तथा भैम्येकलाभकामैराजभिर्युद्धं परित्यज्यत इत्यर्थः । अतएव पृथिव्यां युद्धाभावात् राजानोऽत्र नागच्छन्ति । 'हूतिराकारणाह्वानम्' अ ॥ ३१ ॥

येष्विति । दमयन्ती येषु येषु भूषणेषु अलङ्कारेषु यदि वा अथ वा येषु येष्वपि गुणेषु

---

परम्परितरूपकमलङ्कारः, वृत्त्यनुप्रासः । ह्रीदरीत्यनेन लज्जावशतया तस्य यूनस्तया तथा गोपनं कृतं, यथा केनापि ज्ञातुं न शक्यते इति ध्वन्यते, इत्यलङ्कारेण वस्तुध्वनिः । 'बुद्धिर्मनीषा धीषणा धीः प्रज्ञा सेमूषी मतिः' 'दरी तु कन्दरो वा स्त्री देवखातबिले गुहा' 'हर्यक्षः केशरी हरिः' अ ॥ २९ ॥

छेकानुप्रासः । 'मह उद्धवः उत्सवः' 'लक्ष्यं वेध्यं शरव्यञ्च' अ ॥ ३० ॥

अन्त्यानुप्रासः, श्रौतोपमा, छेकानुप्रासश्चेति संसृष्टिः ॥ ३१ ॥

शैशवव्ययदिनावधि तस्या यौवनोदयिनि राजसमाजे।
आदरादहरहः कुसुमेषो-रुल्ललास मृगयाभिनिवेशः ॥ ३३ ॥
इत्यमी वसुमतीं कमितारः सादरास्त्वदतिथीभवितुं न।
भीमभूसुरभुवोरभिलाषे दूरमन्तरमहो नृपतीनाम् ॥ ३४ ॥

शोभाविलासादिनायकगुणेषु शिल्पगीतादिविद्यासु वा सरसा सानुरागा भवति तत्र तत्र तेषु तेषु भूषणेषु गुणेषु च कलयाऽपि लेशेनापि यो विशेषः अन्याऽपेक्षया आधिक्यं सहि सएव क्षितिभृतां राज्ञां पुरुषार्थः पौरुषं धर्म्मादिरूपोवा। दमयन्तीसन्तोषाय तेऽधुना भूषणादिषु व्यासक्ता न तु संग्रामे इत्यर्थः ॥ ३२ ॥

शैशवेति। राजसमाजे नृपसमूहे कुसुमेषोः कामस्य आदरात् अनुरागात् मृगयायामभि निवेशआसक्तिः तस्या भैम्याः शैशवस्य बाल्यस्य व्ययोऽपगमोयत्र दिने तदेव अवधिर्यत्र क्रियायां तादृशं यथा स्यात्तथा बाल्यापगमदिनमारभ्येत्यर्थः अहरहर्दिनं दिनम् उल्ललास ववृधे। वयःसन्धौ वर्त्तमानाया दमयन्त्याः श्रवणावधि राजानः कामवशगा जाता इत्यर्थः। किम्भूते यौवनं तारुण्यम् उदयो धनसमृद्धिः तौ विद्येते यस्येति तादृशे किंवा यौवनस्य उदयआरम्भोविद्यते यत्रेति तस्मिन् नवयौवनशालिनीत्यर्थः। नवीनानामेव कामानुरागाधिक्यात्तथा विशेषितम् ॥ ३३ ॥

प्रकृतमुपसंहरति। इतीति। वसुमतीं पृथिवीं कमितारः कामयमाना अमी राजानः इत्यस्मात् पूर्वोक्तात् कारणात् त्वदतिथीभवितुं तव अभ्यागता भवितुं संग्राममरणेन स्वर्गमागन्तुमित्यर्थः सादराः साभिलाषा न भवन्तीति शेषः। यतो नृपतीनां राज्ञाम् अभिलाषे लिप्साविषये भीमभूसुरभुवोर्भीमस्वर्गयोर्दूरमतितराम् अन्तरं तारतम्यम् अहो वितर्के। दमयन्त्यालिङ्गनादिजन्यसुखमपेक्ष्य स्वर्गसुखं क्षुद्रतरं ते मन्यन्तइत्यहं वितर्कयामीत्यर्थः। अहो विस्मये वा दुःखासम्भिन्नसुखरूपस्वर्गमपेक्ष्य भैमीमेव बहु मन्यन्ते इत्याश्चर्यम्। यद्वा भीमभूसुरभुवोर्भीमदेवकन्ययोरभिलाषे नृपतीनां दूरमन्तरं महान् विशेषः स्वर्गगमनपूर्वकं देवकन्योपभोगमुपेक्ष्य भैम्या उपभोगमिच्छन्तीत्यर्थः। किंवा भीमस्य भुवो भीमनृपतेः स्थानस्य कुण्डिनस्य सुराणां भुवोदेवानां स्थानस्य च अभिलाषे महान् विशेषः कुण्डिनपुरस्य दमयन्त्यालङ्कृतत्वादित्यास्तां विस्तरः। कमितारइति 'शीलाचारे'त्यादिना तृङ्। तृनादित्वात्तद्योगे वसुमतीमित्यत्र न षष्ठी ॥३४॥

"शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यतेजसी। ललितौदार्यमित्यष्टौ सत्वजाः पौरुषा गुणाः" इति दर्पणे। निरङ्गं केवलरूपकमलङ्कारः ॥ ३२ ॥

अतिशयोक्तिरलङ्कारः ॥ ३३ ॥

अत्र पूर्वार्द्धवाक्यं प्रति उत्तरार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, सुरपुरवासं सुराङ्गना-सम्भोगञ्चोपेक्ष्य राजानः साम्प्रतं भीमनगरीं भीमकन्यां दमयन्तीञ्चाभिलषन्तीति दमयन्त्याः लोकोत्तरं सौन्दर्यं व्यज्यते इति व्यतिरेकालङ्कारध्वनिः। ॥ ३४ ॥

तेन जाग्रदधृतिर्दिवमागां सङ्ख्यसौख्यमनुसर्त्तुमनु त्वाम् ।
यन्मृधं क्षितिभुजां न विलोके तन्निमग्नमनसां भुवि लोके ॥ ३५ ॥
वेद यद्यपि न कोऽपि भवन्तं हन्त हन्त्वकरुणं विरुणद्धि ।
पृच्छ्यसे तदपि येन विवेक-प्रोञ्छनाय विषये रससेकः ॥ ३६ ॥
एवमुक्तवति देवऋर्षीन्द्रे द्रागभेदि मघवाननमुद्रा ।
उत्तरोत्तरशुभो हि विभूनां कोऽपि मञ्जुलतमः क्रमवादः ॥ ३७ ॥

तदेव स्वस्य स्वर्गागमनहेतुत्वेन गमयन्नाह तेनेति । तस्यां दमयन्त्यां निमग्नमनुरक्तं मनो येषां तथाभूतानां क्षितिभुजां राज्ञां भुवि लोके मर्त्ये भुवने मृधं युद्धं यत् यस्मात् न विलोके न पश्यामि तेन हेतुना जाग्रती स्फुरन्ती अधृतिरसन्तोषो यस्य तादृशः सन् त्वाम् अनु लक्षीकृत्य उद्दिश्य संख्यसौख्यं संग्रामदर्शनसुखम् अनुसर्त्तुम् अनुभवितुम् अहं दिवं स्वर्गम् आगाम् आगतवानस्मि अतस्त्वया केनचित् सार्द्धं योद्धव्यं तत् दृष्ट्वा सुखी भवेयमिति भावः । सुखमेव सौख्यं स्वार्थे ष्यञ् ॥ ३५ ॥

वेदेति । कोऽपि कश्चन वीरः हन्तृषु घातकेषु अकरुणं निर्दयं भवन्तं न विरुणद्धि भवता सह विरोधं न करोति इत्यहं यद्यपि वेद जानामि तदपि तथापि मया त्वं पृच्छ्यसे युद्धं न वेत्यर्थात् । मां तथाविधं ज्ञात्वापि कथमेवं पृच्छसीत्याह । येन हेतुना विषये अभिलषणीये युद्धदर्शनादौ रसस्य अनुरागस्य सेकः सम्बन्धोऽतिबाहुल्यं वा विवेकस्य विवेचनायाः प्रोञ्छनाय नाशाय भवति । विषयासक्तिः किं किं न करोतीति भावः । हन्ताश्चर्यं । तथाविधं भवन्तं ज्ञात्वापि यदेवं पृच्छामि तदाश्चर्यमेवेत्यर्थः । हन्तेति खेदसम्बोधने विरोधाभावात् युद्धाभावः तत्र खेदो भवत्येवेति केचित् । अथ च रससेको जलसेचनं प्रोञ्छनाय मार्जनाय भवत्येव ॥ ३६ ॥

एवमिति । देवऋर्षीन्द्रे देवर्षिश्रेष्ठे नारदे एवं पूर्वोक्तम् उक्तवति सति मघोनइन्द्रस्य आननमुद्रा मुखमुद्रणं मौनं द्राक् झटिति अभेदि स्वयमेव भिन्ना इन्द्र उवाचेत्यर्थः । पुनः किमित्युवाचेत्याह हि यतः विभूनां प्रभूणां मञ्जुलतमोऽतिरमणीयः कोऽपि लोकोत्तरः क्रमेण वादो भाषणम् उत्तरस्य उत्तरेण अग्रे अग्रे वा शुभः सुश्राव्यो भवति । देवऋर्षीन्द्र इति 'ऋत्यकः' इत्यादिना सन्धिनिषेधः यद्वा देव इति पृथक्सप्तम्यन्तं पदं दीव्यति युद्धादिविवाददर्शनेन हृष्यतीति तादृशे । अभेदीति कर्मकर्त्तरि रूपम् ॥ ३७ ॥

---

पदार्थहेतुकं काव्यलिङ्गम्, अन्त्ययमकञ्चेत्यनयोः संसृष्टिः ॥ ३५ ॥

अत्र 'विवेक प्रोञ्छनाय रससेक' इति सामान्येन 'तदपि पृच्छ्यसे' इति विशेषस्य समर्थनादर्थान्तरन्यासोऽलङ्कार छेकानुप्रासश्चेति संसृष्टिः ॥ ३६ ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ३७ ॥

कानुजे मम निजे दनुजारौ जाग्रति स्वशरणे रणचर्चा।
यद्भुजाङ्कमुपधाय जयाङ्कं शर्म्मणा स्वपिमि वीतविशङ्कः ॥ ३८ ॥
विश्वरूपकलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये।
विग्रहं मखभुजामसहिष्णुर्व्यर्थतां मदशनिं स निनाय ॥ ३९ ॥

किमुवाचेत्याह। केति। स्वशरणे स्वेषामात्मीयानां मादृशां शरणे रक्षितरि दनुजारौ असुरशत्रौ निजे आत्मीये सकलजनसाधारणकारुण्याश्रयेऽपि मत्पक्षपातिनि अनुजे कनिष्ठभ्रातरि उपेन्द्रे जाग्रति सावधाने सति मम रणचर्चा युद्धचिन्ता का अपि तु न कापि रणचिन्ता मया क्रियतइत्यर्थः। तर्हि अधुना किं करोषीत्याह जयाङ्कं जयचिह्नं यस्य उपेन्द्रस्य भुजाङ्कं भुजक्रोड़म् उपाधाय उपधानं कृत्वा वीतविशङ्कोविगतभयः सन् शर्मणा सुखेन स्वपिमि शये। स्वशरणे स्वगृहे जाग्रतीति वा योजना। अनुज इत्यनेन आज्ञावशवर्त्तित्वं सूचितम्, एवं निज इत्यनेन स्वतः प्रवृत्तत्वं, दनुजारावित्यनेन सामर्थ्यातिशयः, जाग्रतीत्यनेन अनुपेक्षत्वं, स्वशरण इत्यनेन अन्यान् परित्यज्यैव मदुपकारित्वं सूचितम् ॥ ३८ ॥

विश्वेति। हे मुने तस्य उपेन्द्रस्य विश्वरूपकलनात् सर्वं विष्णुमयं जगदिति श्रुतेर्विश्वप्रपञ्चभूतत्वात् उपपन्नं घटमानं जैमिनिमुनित्वम् उदीये अनुमितम्। जैमिनेर्विश्वान्तर्गतत्वात् भगवतश्च विश्वमूर्त्तित्वात् जैमिनिमुनित्वं युक्तमेवेत्यर्थः। अतएव स गृहीतजैमिनिरूप उपेन्द्रो मखभुजां यज्ञभुजां देवानां विग्रहं युद्धम् अथ च शरीरम् असहिष्णुरसहमानः सन् मदशनिं मम वज्रं व्यर्थतां निष्प्रयोजनताम् अथच पातशून्यतां निनाय प्रापयामास। असुरनिकरविनाशात् वज्रसाध्यं मदीयकृत्यं तेन स्वयमेव कृतमित्यर्थः। जैमिनिमुनिरपि मखभुजां यागोद्देश्यानां देवानां विग्रहं शरीरं न मन्यते उच्चार्य्यमाणश्च वज्रपतनं निवारयति। आद्यं यथा कौमुद्यां 'ननु देवताप्रीतिरेव यागव्यापारोऽस्तु किमपूर्वेणेति पूर्वपक्षे जैमिनिसूत्रं देवताचैतन्यासम्भवादिति शरीरासम्भवादेव चैतन्यासम्भव इति तत्परमार्थः।' अन्यत्र च। 'युक्तञ्चैतत् इतरथा चेतनस्य सहस्राक्षादेर्देवतात्वे आवाहनेन ऐरावतारूढ़सहस्राक्षादेरधिष्ठाने घटकुड्यभङ्गप्रसङ्ग' इत्यादि। 'देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वं देवतात्वमि'ति मीमांसकमते मणिकारः। निर्देश्यत्वं विशिष्टत्वं तथाच देशनादेशितं वेदबोधितं यच्चतुर्थ्यन्तत्वं तद्विशिष्टपदत्वं देवतात्वमि'ति तदर्थः। किञ्च देवतानां विग्रहेण कर्मसमवायेऽङ्गीक्रियमाणे युगपन्नानादेशेष्वनुष्ठीयमानेषु एकजातीयकर्मसु एकयागगतस्येन्द्रशरीरस्य तस्मिन्नेव क्षणे भिन्नदेशयागान्तरहविर्ग्रहणे शक्त्यभावात् यागान्तरलोपप्रसङ्ग एव स्यात्। न चैश्वर्यवशादनेकशरीराङ्गीकारेणैकोऽपि युगपत् कृष्णवत् सर्वत्र प्रयास्यतीति वाच्यं तस्यैवंविधैश्वर्यवत्त्वे प्रमाणाभावात्। अधुनातनानामपि देवतात्वाङ्गीकारात् तेष्वैश्वर्यसम्भावनाया अभावाच्चेत्यलमप्रस्तुतप्रपञ्चेन। जैमिनेर्वज्रनिवारकत्वं यथा

परिकरालङ्कारः ॥ ३८ ॥

ईदृशानि मुनये विनयाब्धि-स्तस्थिवान् स वचनान्युपहृत्य ।
प्रांशुनिश्वसितपृष्ठचरी वाग् नारदस्य निरियाय निरोजाः ॥ ४० ॥
स्वारसातलभवाहवशङ्की निर्वृणोमि न वसन् वसुमत्याम् ।
द्यां गतस्य हृदि मे दुरुदर्कः क्ष्मातलद्वयभटाजिवितर्कः ॥ ४१ ॥
वीक्षितस्त्वमसि मामथ गन्तुं तन्मनुष्यजगतेऽनुमनुष्व ।
किं भुवः परिवृढा न विवोढुं तत्र तामुपनता विवदन्ते ॥ ४२ ॥

'जैमिनिश्च सुमन्तुश्च वैशम्पायनएव च । पुलस्त्यः पुलहोजिष्णुः पडेते वज्रवारकाः' इति । तथा । 'मुनेः कल्याणमित्रस्य जैमिनेश्चापि कीर्त्तनात् । विद्युदग्निभयं नास्ति लिखिते च गृहोदरे' इति । उदीय इति उत्पूर्वादिनगतावित्यस्मात् कर्मणि लिट् ॥ ३९ ॥

ईदृशानीति । विनयस्य विनीतत्वस्य अब्धिः समुद्रोऽतिविनीतः स इन्द्र ईदृशानि एवंप्रकाराणि वचनानि मुनये नारदाय उपहृत्य उपहारीकृत्य मुनिमुद्दिश्य उक्त्वेत्यर्थः तस्थिवान् स्थितः तुष्णीम्बभूवेत्यर्थः। अनन्तरं नारदस्य निरोजा दुर्बला अभिलाषासिद्धेः क्षीणोच्चारणा प्रांशुनिश्वसितस्य दीर्घनिश्वासस्य पृष्ठचरी पश्चात् सञ्चारिणी वाक् वचनं निरियाय निर्गता बभूव । दीर्घं निश्वस्य मुनिरिन्द्रं प्रत्युवाचेत्यर्थः ॥ ४० ॥

वाचमेवाह । स्वारसेति । हे इन्द्र वसुमत्यां पृथिव्यां वसन् अवतिष्ठन्नहं स्वारसातलयोः स्वर्गपातालयोर्भवउत्पत्तिर्यस्य तादृशमाहवं युद्धं शङ्कितुं शीलं यस्य तादृशः सन् न निर्वृणोमि न सुखी भवामि । तथा द्यां गतस्य स्वर्गमागतस्यापि मे मम हृदि मनसि क्ष्मायाः पृथिव्या ये तले स्वरूपाधोभागौ तयोर्द्वयं तत्रस्थानां पृथिवीस्थानां पातालस्थानाञ्चेत्यर्थः भटानां सैन्यानाम् आजेर्युद्धस्य वितर्कः सम्भावना दुरुदर्कः दुरविद्यमान उदर्क उत्तरफलं यस्य तादृशः निष्फल इत्यर्थः । स्वर्गेऽपि युद्धस्यादर्शनादिति भावः । दुष्टोमन्दः श्रममात्र उदर्को यस्येति वा । भुवि स्थित्वा स्वर्गयुद्धं स्वर्गे च स्थित्वा तलत्रयुद्धं सम्भावयतो मम कुत्रापि तदुदर्शनात् नैव सुखमस्तीत्यर्थः । 'उदर्कः फलमुत्तरम्' अ । 'तलं स्वरूपेऽनूर्द्ध्वेऽस्त्री क्लीवं ज्याघातवारणे। कानने कार्यवीजे च पुंसि तालमहीरुहे' ॥ ४१ ॥

वीक्षितइति । हे इन्द्र मया त्वं वीक्षितोऽसि दृष्टो भवसि यद्यप्यत्रागत्य युद्धदर्शनं न कृतं तथापि त्वद्दर्शनमपि मम सुखकरमिति तत्कृतमेवेत्यर्थः । तत्तस्मात् स्वर्गे युद्धाभावात् अथ इतः परं मनुष्यजगते मर्त्यलोकाय गन्तुं माम् अनुमनुष्व अनुजानीहि । तत्रापि युद्धे

---

वाक्यार्थहेतुकं काव्यलिङ्गम्, अतिशयोक्तिश्चेत्यनयोः सङ्करः ॥ ३९ ॥

छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टि ॥ ४० ॥

पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासः, अन्त्यानुप्रासश्चेति संसृष्टिः । 'स्वरव्ययं स्वर्गनाकः' 'उदर्कः फल-मुत्तरम्' अ ॥ ४१ ॥

इत्युदीर्य स ययौ मुनिरुर्वीं स्वर्पतिं प्रतिनिवर्त्य बलेन ।
वारितोऽप्यनुजगाम सयत्नं तं कियन्त्यपि पदान्यपराणि ॥ ४३ ॥
पर्वतेन परिपीय गभीरं नारदीयमुदितं प्रतिनेदे ।
स्वस्य कश्चिदपि पर्वतपक्ष-च्छेदिनि स्वयमदर्शि न पक्षः ॥ ४४ ॥
पाणये बलरिपोरथ भैमी-शीतकोमलकरग्रहमर्हम् ।
भेषजं चिरचिताशनिवास-व्यापदामुपदिदेश रतीशः ॥ ४५ ॥

किं प्रमाणमत आह तत्र विदर्भदेशे पृथिव्यां वा तां भैमीं विवोढुम् उद्वोढुम् उपनताः समागता भुवः परिवृढाः प्रभवो राजानः न विवदन्ते परस्परं विवादं न कुर्वन्ति ? अपि तु विवदन्त एव। अनन्यसदृशीं भैमीं लिप्सूनां राज्ञां सौन्दर्यशौर्यादिगुणेषु परस्परमहमहमिकया विवादो भवितुमर्हत्येवेत्यर्थः। मनुष्यजगतइति 'गत्यर्थस्यापथ्यर्थाद्वा कृति चे'ति कर्मणि चतुर्थी विवदन्त इति 'विप्रतिपत्ताव'त्यात्मनेपदम् ॥ ४२ ॥

इतीति। स मुनिर्नारद इति पूर्वोक्तम् उदीर्य उक्त्वा बलेन बलात्कारेण स्वर्पतिम् इन्द्रं प्रतिनिवर्त्य परावर्त्य अनुगमने निषिध्य उर्वीं पृथिवीं ययौ गतवान्। किन्तु स इन्द्रः वारितोऽपि तिष्ठ मा मामनुगच्छेति नारदेन निषिद्धोऽपि सयत्नं यथा तथा कियन्ति अपराण्यपि पदानि तं नारदम् अनुजगाम अनुगच्छति स्म। अनुगमायेति क्वचित् पाठः स तु न मनोरमोऽर्थसौष्ठवविरहात्। अपराणीति वारणात् पूर्वं कानिचिदनुजगामैव वारितोऽपि तदितराण्यपीत्यर्थः। स्वर्पतिमिति 'अहरादेः पत्यादौ वे'तिरेफः। पदानीति अध्वार्थत्वात् 'कालाध्वन्यामि'त्यादिना द्वितीया ॥ ४३ ॥

पर्वतेनेति। पर्वतेन मुनिना गभीरम् अर्थगौरववत् नारदीयं नारदसम्बन्धि उदितं वचनं परिपीय श्रुत्वा प्रतिनेदे अनूद्यते स न तु स्वतन्त्रतया किञ्चिदुक्तम्। नारदेन यदुक्तं तस्यैव सम्यगयं कथयतीत्यभिनन्दन कृतमित्यर्थः। अथच 'आपो नारा इति प्रोक्ता' इति वचनात् नारदो मेघस्तदीयं गर्जितं शैलेन प्रतिध्वन्यत एव। पर्वतानां पक्षांश्छेत्तुं शीलं यस्य तादृशे इन्द्रे स्वयं पर्वतमुनिना स्वस्य कश्चिदपि पक्षोमतं नादर्शि न दर्शितः। अथच पर्वतपक्षच्छेदनशीले पर्वतेन यत् पक्षो न दर्शितस्तत् साधु कृतमिति ध्वनिः ॥ ४४ ॥

नारदमुखाद्भैमीं श्रुत्वा इन्द्रस्य तद्विवाहेच्छा जातेत्याह। पाणय इति। अथ नारदगमनानन्तरं रतीशः कामः चिरचितानां बहुकालसञ्चितानाम् अशनिवासव्यापदां वज्रावस्थानजन्यरोगाणाम् अर्हं योग्यं तदपनयनसमर्थं भैम्याः शीतः शीतलो कोमल मृदुलो यः करोहस्तस्य ग्रहो ग्रहणं विवाहरूपं भेषजम् औषधं बलरिपोरिन्द्रस्य पाणये हस्ताय उपदिदेश आदि-

---

वृत्त्यनुप्रासोऽलङ्कारः ॥ ४२ ॥
पदार्थहेतुकं काव्यलिङ्गम्, अतिशयोक्तिश्चेति सङ्करः ॥ ४४ ॥

नाकलोकभिषजोः सुषमा या पुष्पचापमपि चुम्बति सैव ।
वेद्मि तादृगभिषज्यदसौ तद्-द्वारसंक्रमितवैद्यकविद्यः ॥ ४६ ॥
मानुषीमनुसरत्यथ पत्यौ खर्वभावमवलम्ब्य मघोनी ।
खण्डितं निजमसूचयदुच्चै-र्मानमाननसरोरुहनत्या ॥ ४७ ॥
यो मघोनि दिवमुच्चरमाणे रम्भया मलिनिमालमलम्भि ।
वर्ण एव स खलूज्ज्वलमस्याः शान्तमान्तरमभावत भङ्ग्या ॥ ४८ ॥

ष्टवान् । इन्द्रं भैमीविवाहेच्छुं चकारेत्यर्थः । अन्योऽपि वज्राग्निदग्धस्य तापशान्त्यै शीतलं कोमलञ्च वस्तूपदिशति ॥ ४५ ॥

ननु भेषजं वैद्ये नोपदिश्यते कामस्य कथं वैद्यत्वमित्याशङ्क्याह । नाकेति । वेद्मीत्युत्प्रेक्ष नाकलोकभिषजोः स्वर्गवैद्ययोरश्विनीकुमारयोर्या सुषमा परमा शोभा सैव पुष्पचापमपि कन्दर्पमपि चुम्बति सङ्गच्छति यतः सैव परमा शोभैव द्वारं तेन कर्तृभूतेन संक्रमिता संक्रान्तिं प्रापिता वैद्यकविद्या आयुर्वेदविद्या यस्य तादृशोऽसौ रतीशः तादृक् अश्विनीकुमारवत् अभिषज्यत् चिकित्सितवान् । अश्विनीकुमारयोः सुषमासंक्रमणेन वैद्यकविद्यासंक्रमणात् कामस्य औषधोपदेशोयुज्यत एवेति भावः । अभिषज्यदिति कण्ड्वादित्वाद्यः ॥ ४६ ॥

एवं भैमीमभिलष्य इन्द्रे मर्त्यलोकं जिगमिषति दौर्मनस्यात् शच्यादीनामवस्थामाह षड्भिः श्लोकैः । मानुषीमिति । अथ नारदगमनानन्तरं पत्यौ इन्द्रे खर्वभावं स्वस्य नीचत्वम् अवलम्ब्य अङ्गीकृत्य मानुषीं भैमीम् अनु लक्षीकृत्य सरति मर्त्यलोकं जिगमिषति सति मघोनी इन्द्राणी शची आननसरोरुहस्य मुखपद्मस्य नत्या चिन्तावशात् नम्रतया निजं स्वीयम् उच्चैरत्यन्तं मानम् अहङ्कारं चित्तसमुन्नतिं वा खण्डितम् अपनीतम् असूचयत् विज्ञापयामास । मानापनयनसूचकं मुखनम्रत्वं कृतवतीत्यर्थः । यद्वा पत्यौ मानुषीमनुसरति मघोनी खर्वभावं वामनत्वम् अवलम्ब्य आननसरोरुहनत्या निजम् उच्चैर्मानं खण्डितम् असूचयदिति योजना । इन्द्रं मानुषीमनुसरन्तं दृष्ट्वा अङ्गानि खर्वीकृत्य मुखञ्च नमयित्वा चिन्तयामासेत्यर्थः । अथ वामनत्वाङ्गीकरणेन मानस्य परिमाणस्य खण्डनमल्पत्वं भवत्येव ॥ ४७ ॥

यइति । मघोनि इन्द्रे दिवं स्वर्गम् उच्चरमाणे परित्यज्य गच्छति सति रम्भया स्ववेश्या-

---

अत्र कामादेशनिबन्धनस्य दमयन्तीपाणिपीडनस्य अशनिपीडाशमयितृत्वरूपेणोत्प्रेक्षणात् प्रतीयमानोत्प्रेक्षालङ्कारः । समेन कार्येण प्रकृते रतीशे अप्रकृतस्य भिषजः व्यवहारारोपात् समासोक्तिश्चानयोः सङ्करः । परिणामालङ्कारो वा ॥ ४५ ॥

वेद्मीति क्रियोत्प्रेक्षा, काव्यलिङ्गालङ्कारश्चेति सङ्करः ॥ ४६ ॥

भावोदयनामालङ्कारः, सूक्ष्मं नामालङ्कारश्चेति सङ्करः ॥ अत्र इन्द्राण्याः शिरोनत्या चिन्ताहेतु निर्वेदभावो व्यज्यते इति ॥ ४७ ॥

जीवितेन कृतमप्सरसान्तत् प्राणमुक्तिरिह युक्तिमती नः।
इत्यनक्षरमवाचि घृताच्या दीर्घनिश्वसितनिर्गमणेन ॥ ४९ ॥
साधु नः पतनमेवमितः स्या-दित्यभण्यत तिलोत्तमयापि।
चामरस्य पतनेन कराब्जा-त्तद्विलोलनचलद्भुजनालात् ॥ ५० ॥

विशेषेण यो मलिनिमा मालिन्यम् अलमत्यर्थम् अलम्भि प्राप्तः खलु निश्चितं स मलिनिमरूपो वर्ण एव भङ्ग्या आकारविशेषेण अस्या रम्भाया आन्तरम् अन्तःकरणवृत्तिकम् उज्ज्वलं शृङ्गारं शान्तम् अपगतम् अभाषत सूचयति स्म। इतः परमिन्द्रेण सार्द्धमस्याः शृङ्गारावेशो न भविष्यतीति सूचयामासेत्यर्थः। यद्वा उज्ज्वलं हर्षयुक्तम् अस्या आन्तरं हृदयं शान्तं निर्विण्णं दुःखयुक्तम् अभाषत। अथवा शान्तं कोपरहितम् अस्या मन उत् अत्यन्तं ज्वलतीति तादृशं कोपयुक्तम् अभाषत। किंवा उज्ज्वलं शृङ्गाररसप्रधानम् अस्या आन्तरं मनः शान्तं शान्तरसप्रधानम् अभाषत। उच्चरमाण इति 'उच्चरः सकर्मकादि'त्यात्मनेपदम् ॥ ४८ ॥

जीवितेनेति। घृताच्या अप्सरोविशेषेण दीर्घनिश्वसितस्य दीर्घनिश्वासस्य निर्गमणेन निःसरणेन अनक्षरं वर्णशून्यं यथा तथा इति अवाचि उक्तम् अथ च अनक्षरम् अवाच्यम् अमङ्गलरूपत्वाद्वक्तुमशक्यं अवाचि सूचितम्। इति किं नोऽस्माकम् अप्सरसाम् इह अस्मिन् स्वर्गे समये वा जीवितेन जीवनेन कृतम् अलम् इन्द्रोयदि मानुष्यामनुरक्तस्तदा अस्माकं जीवनं निष्फलमित्यर्थः तत्तस्मात् जीवनस्यानावश्यकत्वात् प्राणमुक्तिः प्राणत्यागो युक्तिमती उचिता इति। यथा प्राणा निर्गच्छन्ति तथा दीर्घनिश्वासोमुक्त इत्यर्थः। प्राणानां निश्वासरूपत्वात् युज्यत एव तथा सूचनम्। 'अनक्षरमवाच्यं स्यात्' अ ॥ ४९ ॥

साध्विति। तिलोत्तमयापि स्वर्वेश्याविशेषेणापि तस्य चामरस्य विलोलने चलने चलन् चञ्चलो भुजोबाहुरेव नालं यस्य तथा तादृशात् करोऽब्जमिव तस्मात् पाणिकमलात् चामरस्य पतनेन इति अभण्यत प्रतिपादितम्। इति किं नोऽस्माकम् इतः स्वर्गात् एवं चामरवत् पतनं साधु युक्तं स्यात्। इन्द्रं मानुष्यामनुरक्तं पश्यन्त्यास्तिलोत्तमायाः कोपावेगेन हस्तशैथिल्याच्चामरं पतितमित्यर्थः। अब्जं सनालमेव भवतीति तथा रूपितम् ॥ ५० ॥

---

भावोदयसूक्ष्मयोः सङ्करः। अत्र मलिनिमा मालिन्यं वैवर्ण्यमिति यावत्। एतेन रम्भाया अपि वैवर्ण्यनिबन्धनो निर्वेदः सञ्चारिभाव उक्तः। तथाहि दर्पणे,—'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमानना, दैन्यचिन्ताश्रुनिश्वासवैवर्ण्योच्छ्वसितादिकृत्' इति ॥ ४८ ॥

अत्र प्रतीयमानोत्प्रेक्षा, प्रकृतस्य निश्वासस्य प्रतिषेधेन ततोभिन्नस्य प्राणनिर्गमस्य स्थापनादपह्नुतिः, 'अनक्षरमवाचि' इति विभावनालङ्कार श्लेषश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ४९ ॥

पदार्थहेतुकं काव्यलिङ्गम्, प्रतीयमानोत्प्रेक्षा, भावोदयालङ्कारश्च। 'कराब्जात्' इति, 'भुजनालात्' इति च लुप्तोपमाद्वयमिति। 'नाला नालमथास्त्रियाम्' अ ॥ ५० ॥

मेनका मनसि तापमुदीर्णं यत्पिधित्सु रकरोदवहित्थाम् ।
तत् स्फुटं निजहृदः पुटपाके पङ्कलिप्तिमसृजद्बहिरुत्थाम् ॥ ५१ ॥
उर्वशी गुणवशीकृतविश्वा तत्क्षणस्तिमितभावनिभेन ।
शक्रसौहृदसमापनसीम-स्तम्भकार्यमपुषद्वपुषैव ॥ ५२ ॥
कापि कामपि बभाण बुभुत्सुं शृण्वति त्रिदशभर्त्तरि किञ्चित् ।
एष कश्यपसुतामभिगन्ता पश्य कश्यपसुतः शतमन्युः ॥ ५३ ॥

मेनकेति । मेनका नाम काचित् स्ववेंश्या मनसि उदीर्णम् उद्गतं तापं पिधित्सुः पिधातुमिच्छुः सती यत् अवहित्थाम् आकारगुप्तिम् अकरोत् स्फुटमुत्प्रेक्षे तत् अवहित्थाकरणं कर्तृ निजहृदः स्वहृदयस्य पुटमध्ये यः पाकस्तस्मिन् विषये वहिरुत्थां बहिःस्थितां पङ्कलिप्तिं पङ्कलेपम् असृजत् अकरोत् । इन्द्रं तथाविधं दृष्ट्वा अत्यन्तसन्तप्तहृदया जातेत्यर्थः । अन्यदपि वस्तु सन्तापाधिक्याय पुटमध्ये पच्यते । 'अवहित्थाकारगुप्तिः' अ ॥ ५१ ॥

उर्वशीति । गुणैः सौन्दर्यादिभिर्वशीकृतं विश्वं यया तादृशी उर्वशी अप्सरोविशेषः तत्क्षणं तस्मिन्नेव क्षणे स्तिमितभावस्य निश्चलत्वस्य निभेन व्याजेन वपुषैव निजशरीरेणैव करणेन शक्रेण इन्द्रेण सह यत् सौहृदं मित्रता तस्य समापनं समाप्तिस्तस्य या सीमा एतावत्कालपर्यन्तम् इन्द्रेण सह मम प्रेम स्थितम् इतः परं नेतेत्यवं मर्यादा तत्र स्तम्भस्य कार्यं कर्त्तव्यम् अपुषत् ज्ञापयामास । निश्चलं निजशरीरमेव प्रेममर्यादाज्ञापकं स्तम्भं चकारेत्यर्थः । अन्यत्रापि भूम्यादिसीमाबोधकं स्तम्भं स्थापयति । सौहृदमित्यत्र सुहृच्छब्दस्य मित्रवाचित्वात्र 'हृद्भगसिन्ध्वन्ते'त्यनेनोभयपदादिवृद्धिः ॥ ५२ ॥

मर्त्यगमननिवारणाय स्वर्गस्त्रीणामिन्द्रं प्रत्युपहासमाह द्वाभ्याम् । कापीति । त्रिदशभर्त्तरि इन्द्रे किञ्चित् शृण्वति सति कापि इन्द्रपत्नी बुभुत्सुम् इन्द्रः कुत्र गमिष्यतीत्येवं ज्ञातुमिच्छुं कामपि देवाङ्गनां बभाण उवाच । किं बभणेत्याह एष शतमन्युः शतमखः कश्यपसुतः काश्यप इन्द्रः कश्यपसुतां काश्यपीं पृथिवीम् अभिगन्ता गमिष्यति त्वं पश्य । यज्ञशतं कृत्वा

अवहित्था चात्र प्रियोऽह्यन्यासक्तः मां त्यक्ष्यतीति भयनिबन्धना, यदाह दर्पणकारः—'भयगौरवलज्जादेर्हर्षाद्याकारगुप्तिरवहित्था' इति । वाच्या क्रियोत्प्रेक्षा, च्छेकानुप्रासोऽन्त्यानुप्रासश्चेति संसृष्टिः ॥ ५१ ॥

सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासश्चेति संसृष्टिः । स्तम्भो हि सात्त्विकभावविशेषः । यदाह दर्पणकारः, -'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ।' इन्द्रो मां परित्यक्ष्यतीति भीतिनिबन्धनः स्तिमितभावश्च । 'स्तम्भश्चेष्टाप्रतीघातोभयहर्षामयादिभिः' इति दर्पणकारः । 'मिषं निभञ्च निर्दिष्टम्' इति हलायुधः । 'स्तम्भःस्थूणजडत्वयोः' वि ॥ ५२ ॥

आलिमात्मसुभगत्वसगर्वा कापि शृण्वति मघोनि बभाषे
वीक्षणेऽपि सघृणासि नृणां किं यासि न त्वमपि सार्थगुणेन ॥ ५४ ॥
अन्वयुर्द्युतिपयःपितृनाथा-स्तं मुदाथ हरिताङ्कमितारः।
वर्त्म कर्षति पुरः परमेक-स्तद्गतानुगतिको न महार्घः ॥ ५५ ॥
प्रेषिताः पृथगथो दमयन्त्यै चित्तचौर्यचतुरा निजदूत्यः।
तद्गुरुं प्रति च तैरुपहाराः सङ्घसौख्यकपटेन निगूढाः ॥ ५६ ॥

प्राप्तैन्द्रपदोऽपि अधो गन्तुमिच्छतीतानयं पश्येति यथाश्रुतोऽर्थः। उपहासपक्षे तु एष कश्यपस्य सुतोऽयं कश्यपस्य सुताम् अर्थात् भगिनीम् अभिगन्ता तत्रापि शतमन्युः अनेकयज्ञकारीति पश्य याज्ञिकोभूत्वापि अयं भगिनीं गच्छतीत्युपहासः। अथच एव कश्यपस्य मुनेः सुतो विहितयज्ञशतश्च भूत्वापि कश्यं मद्यं पिबतीति तादृशस्य मद्यपस्य सुतां कन्यां गच्छतीति पश्य। 'कश्यं त्रिषु कशार्हे स्यात् क्लीबं मद्याश्वमध्ययोः' मे। 'मन्युः क्रोधे क्रतौ दैन्ये' वि ॥ ५३ ॥

आलिमिति। आत्मनः सुभगत्वेन सौन्दर्येण सगर्वा गर्विता कापि स्वर्वेश्या मघोनि इन्द्रे शृण्वति सति आलिं सखीं बभाषे उवाच। भाषितमाह हे सखि नृणां मनुष्याणां वीक्षणेऽपि मा क्रियतां तैः सार्द्धमालापादिकं दर्शनेऽपि किं सघृणासि प्राप्तजुगुप्सा भवसि यतस्त्वमपि सार्थस्य इन्द्रलक्षणस्य सङ्गिनो गुणेन गुणानुरोधेन न यासि न गच्छसि। मनुष्याणां दर्शने सघृणापि त्वम् इन्द्रानुरोधाद्गच्छेत्यर्थः। येषां दर्शनेऽपि तव घृणा जायते तज्जातीयां कन्यामुद्वोढुमिन्द्रो मर्त्यलोकं गच्छति अतः कीदृशस्य रुचिरित्युपहासः ॥ ५४ ॥

न केवलमिन्द्रो जगाम किन्तु वह्न्यादयोऽपि तेन सह जग्मुरित्याह। अन्वयुरिति। अथ हरितां दिशां कमितारः पतयो द्युतिपयःपितॄणां नाथा वह्निवरुणयमा मुदा भविष्यद्भैमीदर्शनादिजनितहर्षेण तम् इन्द्रम् अन्वयुरनुजग्मुः। तेषामिन्द्रानुगमनेऽर्थान्तरमुपन्यस्यति परं केवलम् एको जनः पुरः प्रथमं वर्त्म पन्थानं कर्षति करोति। किन्तु तद्गतानुगतिकस्तस्य प्रथमगन्तुर्गतं गमनमनु लक्षीकृत्य गतिर्यस्य तादृशस्तत्पश्चाद्गामी न महार्घो न दुर्लभः। प्राचीनैरपरिशीलितं विषयं प्रथममेक एव करोति अनन्तरम् अन्ये बहवोऽपि तमनुवर्त्तन्त इत्यर्थः ॥ ५५ ॥

प्रेषिता इति। अथो अनन्तरं तैरिन्द्रादिभिः चित्तस्य चौर्ये वशीकरणे चतुरा निपुणाः निजदूत्यः स्वीयस्वीयदूत्यः पृथक् प्रत्येकं दमयन्त्यै भैम्यर्थं प्रेषिताः प्रेरिताः पृथक् भिन्ना भिन्ना

---

अतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः। 'धरा धरित्री धरणिः क्षोणी ज्या काश्यपी क्षितिः' अ ॥ ५३ ॥

पर्यायोक्तमलङ्कारः, काव्यलिङ्गञ्चेत्यनयोः सङ्करः ॥ ५४ ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासेन संसृज्यते। 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' अ ॥ ५५ ॥

चित्रमत्र विबुधैरपि यत्तैः स्वर्विहाय वत भूरनुसस्रे ।
द्यौर्न काचिदथवास्ति निरूढा सैव सा बलति यत्र हि चित्तम् ॥ ५७ ॥
शीघ्रलङ्घितपथैरथ वाहैर्लम्भिता भुवममी सुरसाराः ।
वक्रितोन्नमितकन्धरबन्धाः शुश्रुवुर्ध्वनितमध्वनि दूरम् ॥ ५८ ॥

दूत्यो वा, तथा तस्या दमयन्त्या गुरुं पितरं भीमं प्रति उद्दिश्य संख्यसौख्यकपटेन सम्यक्संग्रामजनितसन्तोषव्याजेन निगूढाः परस्परं सङ्गोपिताः तिरस्करिण्या विद्यया भूपतीनामदृश्या वा उपहारा मणिमुक्ताद्युपढौकनानि च प्रेषिताः । संग्रामे त्वया बहवोऽसुरा हतास्तेन वयं त्वयि सन्तुष्टाः सन्त इमान्युपायनानि प्रेषयामः स्वीकर्त्तव्याणीति च्छलेन यदि च प्रीतेन तेन भैमी देया भवेदिति मनसि कृत्वा तैरुपहाराः प्रेषिता इत्यर्थः । सख्यसौख्यकपटेनेति पाठे मिलतासुखच्छलेनेत्यर्थः । महानुभावेन त्वया सह सख्यसुखं वयमनुभवितुमिच्छामः संप्रति च एतान्युपायनानि प्रेष्यन्ते गृह्यन्तामितिच्छलम् । सौख्येति स्वार्थे ष्यण् ॥ ५६ ॥

चित्रमिति । विबुधैः सुरैः अथच पण्डितैरपि तैरिन्द्रादिभिः स्वः स्वर्गं विहाय त्यक्त्वा यत् भूः पृथिवी अनुसस्रे अनुगता अत्र विषये चित्रम् आश्चर्यं वतेति खेदे । मूढा अपि भुवं त्यक्त्वा स्वर्गमेव गन्तुमिच्छन्ति एते तु विबुधा अपि यत् स्वर्गमनादृत्य भुवमनुसरन्ति तदाश्चर्यमेवेत्यर्थः । अथवा किंवा काचित् द्यौः स्वर्गो निरूढा प्रसिद्धा इयमेव द्यौरिति निश्चिता नास्ति किन्तु सैव सा द्यौर्यत्र हि चित्तं मनो बलति गच्छति अनुरक्तं भवतीत्यर्थः । ततश्च तेषां भूमावनुरागात् सैव स्वर्ग इति तदनुसरणं युक्तमिति भावः ॥ ५७ ॥

एषां नलेन सार्द्धं पथि परिचयो भविष्यतीति सूचयन् तस्य रथशब्दश्रवणं वर्णयति । शीघ्रेति अथानन्तरं शीघ्रं लङ्घितोऽतिक्रान्तः पन्था यैस्तादृशैर्वाहैर्यानैर्भुवं पृथिवीं लम्भिताः प्रापिता अमी सुरसारा देवश्रेष्ठा इन्द्रादयः आदौ वक्रिता तिर्यक्कृता पश्चादुन्नमिता ऊर्द्ध्वीकृता कन्धरा शिरोधिर्यत्र तादृशो बन्धो देहसङ्कोचविशेषो येषां तादृशाः सन्तः अध्वनि पथि दूरं दूरदेशोत्पन्नं ध्वनितं शब्दं शुश्रुवुराकर्णितवन्तः अध्वनि ध्वनिरहितं यथा तथा शब्दान्तरं निवार्य शुश्रुवुरिति वा । दूरवर्त्तिनं शब्दं हि श्रवणप्रतिबन्धकमितरशब्दं निवार्य वक्रितोन्नमितकन्धरबन्धोभूत्वा शृणोति ते नलरथशब्दं शुश्रुवुरित्यर्थः । वक्रित उन्नमितश्च कन्धराया ग्रीवाया बन्धः सन्धिर्यैस्तादृशाः 'ह्रस्वश्रितादाविष्टकादेरि'त्यत्र गणद्वयस्याकृत्या ग्रहणाद्ध्रस्वः कन्धराशब्दवदकारान्तो वा कन्धरशब्दोऽस्तीति वृद्धाः ॥ ५८ ॥

---

तुल्ययोगिता, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः । अपह्नुतिरिति कश्चित् । 'गुरुर्गीष्पति पित्राद्योः' अ ॥ ५६ ॥

सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्चेत्यनयोः संसृष्टिः । 'विबुधः पण्डिते देवे' अ ॥ ५७ ॥

स्वभावोक्तिः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति ॥ संसृष्टिः ॥ ५८ ॥

किं घनस्य जलधेरथवैवं नैव संशयितुमप्यलभन्त।
स्यन्दनं परमदूरमपश्य-न्निस्वनश्रुतिसहोपगतं ते ॥ ५९ ॥
सूतविश्रमदकौतुकिभावं भावबोधचतुरं तुरगाणाम्।
तत्र नेत्रजनुषः फलमेते नैषधं बुबुधिरे विबुधेन्द्राः ॥ ६० ॥
वीक्ष्य तस्य वरुणस्तरुणत्वं यत्तदाप निविड़ं जड़भूयम्।
नौचिती जलपतेः किमु सास्य प्राज्यविस्मयरसस्तिमितस्य ॥ ६१ ॥

अथैषां नलरथदर्शनमाह। किमिति। ते इन्द्रादयः इदं किं घनस्य मेघस्य अथवा जलधेः समुद्रस्य एवं संशयितुमपि का कथा निश्चये सन्देहं कर्त्तुमपि अर्थात् कालं न अलभन्त न प्राप्तवन्तः। तद्घनस्येत्यपि क्वचित् पाठः तत् ध्वनितं घनस्य अथ वा किंवा जलधेरिति संशयः। कथं संशयोऽपि न जात इत्यत्राह यतो निस्वनस्य ध्वनेर्या श्रुतिः श्रवणं तया सह तत्समकाल-मित्यर्थः उपगतम् आगतम् अदूरं निकटवर्त्ति स्यन्दनं नलस्य रथं परं केवलम् अपश्यन् दृष्टवन्तः। संशयात् प्रागेव स्यन्दनोपस्थित्या ध्वनौ तदीयत्वानुमानान्नोक्तसंशयावकाश इत्यर्थः। शब्दाकर्णन-समय एव रथोवेगादागत इति भावः। एतेन नलस्याश्वप्रेरणनैपुण्यं रथस्य च गम्भीरशब्दत्वं द्रुतगामित्वञ्च सूचितम् ॥ ५९ ॥

अथैषां नलदर्शनमाह। सूतेति। एते विबुधेन्द्रा देवश्रेष्ठा इन्द्रादयस्तत्र स्यन्दने नेत्र-जनुषोनेत्रजन्मनो नयनधारणस्येत्यर्थः फलम् अतिसौन्दर्यान्नयनप्रीतिजनकं नैषधं नलं बुबुधिरे ददृशुः। किम्भूतं सूताय सारथये विश्रमं विश्रान्तिं ददातीति तादृशः कौतुकिभावः कौतुकं यस्य तादृशं, कौतुकात् स्वयमश्वचालनेन सारथिं विश्रमयन्तमित्यर्थः। तथा तुरगाणामश्वानां भावस्य स्वभावस्य चेष्टाया अभिप्रायस्य वा बोधे ज्ञाने चतुरं निपुणम्। नलस्य अश्वभावाभिज्ञ-त्वं भारतादौ प्रसिद्धम् ॥ ६० ॥

अथातिसुन्दरं नलं दृष्ट्वा इममेव भैमी वरिष्यतीति निश्चित्य ते विषण्णा जाता इति क्रमेण सूचयति। वीक्ष्येति। तदा तस्मिन् समये वरुणस्तस्य नलस्य तरुणत्वं यौवनं वीक्ष्य विशेषेण दृष्ट्वा यत् निविड़मत्यन्तं जड़भूयं जलमयत्वम् आप प्राप्तवात् युवानं नलं दृष्ट्वा इममेव भैमी वरिष्यतीति निश्चित्य व्यर्थोऽयमस्माकमाडम्बर इत्येवं निर्वेदात् यत् खेदयुक्तोऽभूदित्यर्थः।

अत्र पूर्वार्द्धे सन्देहालङ्कारः उत्तरार्द्धे च सहोक्तिः। अतिशयोक्तिः, काव्यलिङ्गालङ्कारश्चेत्ये-तेषां संसृष्टिः। लक्षणानि तु दर्पणे, 'सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः' इति। 'सहार्थस्य बलादेकं यत्र स्याद् वाचकं द्वयोः। सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्'। 'सिद्ध-त्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते' इति ॥ ५९ ॥

पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः। 'जनुर्जननजन्मानि जनिरुत्पत्ति-रुद्भवः' अ।। ६० ॥

रूपमस्य विनिरूप्य तथाति-म्लानिमाप रविवंशवतंसः ।
कीर्त्यते यदधुनापि स देवः काल एव सकलेन जनेन ॥ ६२ ॥
यं बभार दहनः खलु तापं रूपधेयभरमस्य विमृष्य ।
तत्र भूदनलता जनिकर्त्री मा तदप्यनलतैव तु हेतुः ॥ ६३ ॥
कामनीयकमधःकृतकामं काममक्षिभिरवेक्ष्य तदीयम् ।
कौशिकः स्वमखिलं परिपश्य-न्मन्यते स्म खलु कौशिकमेव ॥ ६४ ॥

अथ च यत् जड़भूयं जाड्यं प्रतिपत्तिशून्यत्वम् आप सा अस्य जलपतेर्जलाधिपस्य वरुणस्य किमु औचिती न औचित्यं न अपितु औचित्यमेव। किम्भूतस्य प्राज्यः प्रभूतो यो विस्मयरसोऽद्भुतरसस्तेन स्तिमितस्य स्तब्धस्य जलपतेर्जलमयत्वमुचितमेव। अथ च यो हि जड़ानां मूर्खाणां पतिस्तस्य जड़त्वं युज्यते। अतिसुन्दरं नलं दृष्ट्वा चिन्तितोऽभूदिति भावः। डलयोरेकरूपत्वादेवमुक्तम्। 'अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः। अनिमिषनयननिरीक्षणतूष्णीम्भावादयस्तत्र' इति दर्पणः 'प्रभूतं प्रचुरं प्राज्यम्' अ ॥ ६१ ॥

रूपमिति। रविवंशस्य सूर्यकुलस्य वतंसः शिरोभूषणभूतः श्रेष्ठोयमः अस्य नलस्य रूपं सौन्दर्यं विनिरूप्य विशेषेणावलोक्य अतिम्लानिम् अत्यन्तकालिमानं तथा आप प्राप्तवान् यत् यथा सकलेन जनेन न पुनरेकेन द्वाभ्यां वा स देवोयमः अधुनापि अद्यापि काल एव कृष्णवर्ण अथ च कालेतिसंज्ञकः कीर्त्यते कथ्यते। नलसौन्दर्यावलोकनेन कालिम्नोजननादेव यमस्य काल इति नाम जातं नतु भूतानां कलनात् लयकरणात्तथेत्यर्थः। 'कालोदण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः' अ ॥ ६२ ॥

यमिति। दहनोऽग्निः अस्य नलस्य रूपधेयस्य सौन्दर्यस्य भरमतिशयं विमृष्य विशेषेणावलोक्य खलु निश्चितं यं तापं बभार धारयति स्म तत्र तापे अनलता वह्नित्वं जनिकर्त्री जनकतावच्छेदिका मा भूत् परतापं प्रत्येव वह्नित्वावच्छिन्नस्य कारणत्वाभ्युपगमेन स्वतापे तस्यास्तथात्वायोगात्। तर्हि कथं ताप इत्याह तु किन्तु तदपि तथापि अनलतैव नलान्यत्वमेव हेतुः कारणम् अहं नलो न अतः, कथं दमयन्तीं प्राप्स्यामीति दुःखवशात् सन्तप्तोऽभूदिति भावः। रूपधेयेति स्वार्थे धेयप्रत्ययः ॥ ६३ ॥

कामनीयकमिति। कौशिक इन्द्रः अधःकृतोऽवज्ञास्पदीकृतः कामः कन्दर्पो येन तादृशं

---

अतिशयोक्तिरर्थापत्तिश्चेत्यनयोः सङ्करः ॥ ६१ ॥

अतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ॥ ६२ ॥

अत्र अनलता न ( जानिकर्त्री ) हेतुरपितु अनलतैव हेतुरिति एकव्यक्तिमात्रवाचिनोरनलयोर्विरोधात् विरोधोऽलङ्कारः। 'यदाह दर्पणे—'जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः। क्रिया क्रियाद्रव्याभ्यां वा द्रव्यं द्रव्येण वा मिथः। विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः' इति ॥ ६३ ॥

रामणीयकगुणाद्वयवादं मूर्त्तमुत्थितममुं परिभाव्य
विस्मयाय हृदयानि वितेरु-स्तेषु तेन न सुराः प्रबभूवुः ॥ ६५ ॥
प्रैयरूपकविशेषनिवेशैः संवदद्भिरमराः श्रुतपूर्वैः।
एष एव स नलः किमितीदं मन्दमन्दमितरेतरमूचुः ॥ ६६ ॥
तेषु तद्विधवधूवरणार्हं भूषणं स समयः स रथाध्वा।
तस्य कुण्डिनपुरं प्रतिसर्पन् भूपतेर्व्यवसितानि शशंसुः ॥ ६७ ॥

तदीयं नलसम्बन्धि कामनीयकं रमणीयतां काममत्यर्थम् अक्षिभिः सहस्रेणापि चक्षुभिरवेक्ष्य दृष्ट्वा अखिलं सकलं स्वम् आत्मानं परिपश्यन् कौशिकमेव पेचकमेव मन्यते स्म खलु निश्चये उत्प्रेक्षायां वा नलस्याग्रे पेचकतुल्योऽस्मीति निश्चिनोति स्मेत्यर्थः। 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' अ ॥ ६४ ॥

सर्वेषां युगपद्विस्मयमाह। रामणीयकमिति। सुरा इन्द्रादयः अमुं नलम् उत्थितम् उन्नतं मूर्तं साकारम् रामणीयकगुणस्य रमणीयतागुणस्य अद्वयवादम् अद्वितीयालापं परिभाव्य विचार्य नलोऽद्वितीयसौन्दर्यगुणशालीति विचार्येत्यर्थः विस्मयाय आश्चर्याय हृदयानि मनांसि वितेरुर्दत्तवन्तः। लोकातीतं सौन्दर्यं दृष्ट्वा किमिदमित्यद्भुतरसे मनांसि मग्नीचक्रुरित्यर्थः। तेन हेतुना तेषु हृदयेषु न प्रबभूवुः समर्था नाभूवन् आश्चर्यवशात् किं करणीयमधुनेति न स्फुरितमिति भावः। दानस्य स्वस्वत्वध्वंसपूर्वकपरस्वत्वजनकत्वात् विस्मयाय दत्तेषु हृदयेषु यत् प्रभवः स्वामिनो न भूतास्तद्युक्तमिति ध्वनिः ॥ ६५ ॥

प्रैयेति। अमरा इन्द्रादयः श्रुतपूर्वैः पूर्वं लोकमुखाच्छ्रुतैः संवदद्भिः पूर्वं यादृशा गुणाः श्रुतास्तादृशा एवात्र दृश्यन्त इति संगच्छमानैः प्रैयरूपकस्य प्रियरूपत्वस्य विशेषोऽतिशयः निवेशा अङ्गविन्यासाः स च ते च तथा तैः प्रैयरूपकविशेषस्य निवेशैर्वा हेतुभिः स पूर्वं श्रुतो नल एष एव किम् इत्येवम् इदम् इतरेतरं परस्परं मन्दं मन्दम् ऊचुः कथयामासुः। पूर्वश्रुतनलसौन्दर्यादीनां दर्शनात् किमयं नल आगच्छतीत्यन्योऽन्यं कथयामासुरित्यर्थः ॥ ६६ ॥

तेष्विति। तद्विधा तादृशी अतिसुन्दरी या वधूर्भैमी तस्या वरणार्हं वरणयोग्यं यद्भूषणमलङ्कारः। एवं स समयः स्वयंवरकालः तथा कुण्डिनपुरं भीमनगरं प्रतिसर्पन् अभिगच्छन् भीमनगरप्रापक इत्यर्थः स रथाध्वा रथमार्गः। एते कर्तारस्तस्य भूपतेर्नलस्य व्यवसितानि चेष्टास्तेषु इन्द्रादिषु शशंसुः सूचयामासुः। भैमीविवाहार्थमयं कुण्डिनपुरं गच्छतीति तेभ्यः कथयामासुरित्यर्थः। वयमिव नलोऽपि भैमीलाभाय स्वयंवरे यातीति ते ज्ञातवन्त इति भावः ॥ ६७ ॥

व्यतिरेकः, वाच्या जात्युत्प्रेक्षा, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ६४ ॥ गुणोत्प्रेक्षालङ्कारः ॥ ६५ ॥ समुच्चयोऽलङ्कारः, अनुमानालङ्कारश्चेत्यनयोः संसृष्टिः ॥ ६ ॥ •

धर्मराजसलिलेशहुताशैः प्राणतां श्रितममुं जगतस्तैः ।
प्राप्य हृष्टचलविस्तृततापैश्चेतसा निभृतमेतदचिन्ति ॥ ६८ ॥
नैव नः प्रियतमोभयथासौ यद्यमुं न वृणुते वृणुते वा ।
एकतस्तु धिगमूमगुणज्ञा-मन्यतः कथमदःप्रतिलम्भः ॥ ६९ ॥
मामुपैष्यति तदा यदि मत्तो वेद नेयमिदमस्य महत्त्वम् ।
ईदृशी च कथमाकलयित्री मद्विशेषमपरान्नृपपुत्री ॥ ७० ॥

एवं नलोऽयमिति निश्चित्य भैमीविवाहार्थञ्च तद्व्यवसायं ज्ञात्वा ते चिन्तिता जाता इत्याह । धर्मराजेति । तैर्धर्मराजसलिलेशहुताशैर्यमवरुणाग्निभिः जगतो विश्वस्य प्राणतां सुदृश्यत्वादुपकारित्वाच्च प्राणवत् प्रियतां श्रितम् आश्रितम् अमुं नलं प्राप्य दृष्ट्वा हृष्टचलविस्तृततापः प्रथमं सौन्दर्यातिशयदर्शनात् हृष्टैः प्रमुदितैः ततो भैमीस्वयंवराय तस्य गमनं निश्चित्य चलैश्चञ्चलैः अस्थिरचित्तैः अनन्तरम् एतादृशमतिसुन्दरं विहाय कथमस्मान् सा वरिष्यतीति निश्चित्य विस्तृततापैः प्रवृद्धखेदैरेवम्भूतैः सद्भिः चेतसा चित्तेन निभृतं गूढं यथा तथा एतत् वक्ष्यमाणम् अचिन्ति चिन्तितम् अथ च यमो जगतः प्राणान् असून् प्राप्य लोकानां प्राणापहारित्वात् हृष्यति वरुणोऽपि जगत्प्राणं वायुं प्राप्य जलेशत्वेन जलमयत्वात् चञ्चलो भवति तथा वह्निरपि वायुसम्बन्धाद्विस्तृततापः प्रवृद्धो भवति ॥ ६८ ॥

धर्मराजस्य चिन्तामाह । नैवेति । असौ दमयन्ती यदि अमुं नलं न वृणुते वा अथवा वृणुते उभयथापि वरणावरणपक्षद्वयेऽपि असौ नोऽस्माकं नैव प्रियतमा प्राणेश्वरी भवेदिति शेषः । कथमित्याह तु यस्मात् एकतोऽवरणपक्षे अगुणज्ञाम् अमूं दमयन्तीं धिक् मत्तोऽधिकगुणाश्रयं नलं परित्यज्य यदि मां वरिष्यति तदेयं गुणाश्रयानभिज्ञा कथं प्रियतमा भवेदित्यर्थः । अन्यतो वरणपक्षे कथम् अदःप्रतिलम्भः अस्या लाभः लाभाभावादेव नैव सा प्रियतमा भविष्यतीत्यर्थः । यमेन स्वस्य धर्मप्रधानत्वाद्धर्मप्रधाना चिन्ता कृता ॥ ६९ ॥

वरुणस्य चिन्तामाह । मामिति । इयं दमयन्ती तदा माम् उपैष्यति वरिष्यति यदि मत्तोऽस्य नलस्य इयत् ईदृक् अत्यन्तं महत्त्वं माहात्म्यं न वेद न जानाति नत्वन्यथा एतन्नैव भविष्यतीत्याह ईदृशी अतिसुन्दरी च नृपपुत्री नृपपुत्रीत्वादतिचतुरा भैमी अपरात् इतरस्मात् नलात् मद्विशेषं ममैवोत्कर्षं कथम् आकलयित्री कथं ज्ञास्यति । अतोऽतिसुन्दरं नलं दृष्ट्वा अयमेवातिरमणीयो वरो वरणीय इति निश्चित्य तमेव वरिष्यतीत्यर्थः । बहूनां मध्ये सर्व्वोत्कृष्टतया निश्चित एव व्रियते मम तु इतरानपेक्ष्य सत्यप्युत्कर्षे मदपेक्षयापि नलस्योत्कर्षात्तं विहाय मां कथं वरिष्यतीति सर्वथा ममालभ्यैव सा इति भावः । चञ्चलप्रकृतित्वात् भवितव्यतामनपेक्ष्यैव वरुणेन चिन्ता कृता ॥ ७० ॥

---

भावोदयालङ्कारः, काव्यलिङ्गञ्चेत्यनयोः संकरः ॥ ६८ ॥ विकल्पो नामालङ्कारः, काव्यलिङ्गञ्चेत्यनयोः संसृष्टिः ॥ ६९ ॥

नैषधे वत वृते दमयन्त्या व्रीड़ितो न हि वहिर्भवितास्मि ।
स्वां गृहेऽपि वनितां कथमास्यं ह्रीनिमीलि खलु दर्शयिताहे ॥ ७१ ॥
इत्यवेत्य मनसात्मविधेयं किञ्चन त्रिविबुधी बुबुधे न ।
नाकनायकमपास्य तमेकं सा स्म पश्यति परस्परमास्यम् ॥ ७२ ॥
किं विधेयमधुनेति विमुग्धं स्वानुगत्रयमवेक्ष्य ऋभुक्षाः ।
शंसति स्म कपटे पटुरुच्चैर्वञ्चनं समभिलष्य नलस्य ॥ ७३ ॥
सर्वतः कुशलभागसि कच्चित् त्वं स नैषध इति प्रतिभा नः ।
स्वासनार्द्धसुहृदस्त्वयि रेखां वीरसेननृपतेरिव विद्मः ॥ ७४ ॥

वह्नेश्चिन्तामाह । नैषधइति । वत खेदे दमयन्त्या नैषधे नले वृते सति अहं व्रीडितोलज्जितः सन् न हि नैव वहिर्भवितास्मि न वहिर्निर्गन्तुं शक्ष्यामि । तर्हि गृहएव स्थातव्यमित्यत्राह गृहेऽपि स्वां निजां वनितां स्त्रियं कथम् आस्यं मुखं दर्शयिताहे दर्शयिष्ये । किम्भूतम् आस्यं खलु यतो ह्रिया लज्जया या निमीला चक्षुर्मुद्रणा सा विद्यते यत्र तादृशम् । वहिर्लोकभयं गृहेऽपि वनिताभयमतो मम महद्वैषम्यमुपस्थितमिति भावः। रजःप्रकृतित्वादग्निना लज्जाप्रधाना चिन्ता कृता । भवितास्मि दर्शयिताह इति लुटउत्तमपुरुषैकवचनम् । वनितामिति 'दृश्यभिवाद्योरात्मनेपद' इति प्रयोज्यस्य कर्मत्वम् ॥ ७१ ॥

युगपत्त्रयाणामवस्थामाह । इतीति । त्रिविबुधी यमवरुणाग्निरूपा देवत्रयी मनसा इति पूर्वोक्तम् अवेत्य विचार्य किञ्चन किमपि आत्मविधेयं स्वकर्त्तव्यं न बुबुधे न निश्चिकाय किन्तु सा त्रिविबुधी तम् एकं नाकनायकम् इन्द्रम् अपास्य त्यक्त्वा परस्परमन्योन्यम् आस्यं मुखं पश्यति स्म कर्त्तव्यतामूढ़ाभूदित्यर्थः। इन्द्रस्तु विषयचातुर्यान्न तथा जातः ॥ ७२ ॥

तदानीमिन्द्रेण यत् कृतं तदाह । किमिति । ऋभुक्षा इन्द्रः स्वानुगानां स्वानुगच्छतां यमवरुणाग्नीनां त्रयम् अधुना इदानीं किं विधेयं करणीयम् इति विमुग्धं कर्त्तव्यतानिश्चयाभावात् विशेषेण मूढ़म् अवेक्ष्य निश्चित्य नलस्य वञ्चनं प्रतारणं समभिलष्य इच्छाविषयीकृत्य शंसति स्म नलं प्रति वक्ष्यमाणं कथयामास । वञ्चनेच्छायां हेतुगर्भविशेषणमाह किम्भूतः उच्चैरतितरां कपटे कापट्ये प्रतारणायां पटुः कुशलः । 'आखण्डलः सहस्राक्ष ऋभुक्षाः' अ ॥ ७३ ॥

यदुवाच तदाह । सर्वत इति । त्वं सर्वतः सर्वस्मिन् स्वाङ्गे राजाङ्गे च कुशलभागसि कुशलं भजसे कच्चित् कथय । नन्वपरिचितस्य कुशलजिज्ञासा नोचितेत्यत्राह । त्वं स प्रसिद्धो नैषधो वीरसेनसुतो नल इति नोऽस्माकं प्रतिभा अनुमितिः । कुत इत्याह स्वस्य मम आसनार्द्धे विषये सुहृदो मित्रस्य मदीयासनार्द्धभागिनो मित्रस्य वीरसेननृपतेर्वीरसेननाम्नो राज्ञ इव

काव्यलिङ्गम्, अर्थापत्तिश्चेत्यनयोः सङ्करः ॥ ७१ ॥ छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः ॥ ७२ ॥ काव्यलिङ्गालङ्कार श्छेकानुप्रासश्चेत्यनयोः संसृष्टिः । ७३ ॥

क्व प्रयास्यसि नलेत्यलमुक्त्वा यात्रयात्र शुभयाजनि यन्नः ।
तत्तयैव फलसत्वरया त्वं नाध्वनोऽर्द्धमिदमागमितः किम् ॥ ७५ ॥
एष नैषध स दण्डभृदेष ज्वालजालजटिलः स हुताशः ।
यादसां स पतिरेष च शेषं शासितारमवगच्छ सुराणाम् ॥ ७६ ॥
अर्थिनो वयममी समुपेमस्त्वां किलेति फलितार्थमवेहि ।
अध्वनः क्षणमपास्य च खेदं कुर्म्महे भवति कार्यनिवेदनम् ॥ ७७ ॥
ईदृशीं गिरमुदीर्य बिडोजा जोषमाप न विशिष्य बभाषे ।
नात्र चित्रमभिधाकुशलत्वे शैशवावधि गुरुर्गुरुरस्य ॥ ७८ ॥

रेखां शरीरचिह्नं शोभां वा त्वयि विद्मः पश्यामः । वीरसेनसमानशरीरत्वात् त्वं तत्पुत्रो नल इत्यस्माभिरनुमितम् । पुत्रो हि प्रायेण पितृसमानशरीरो जायते । अथच त्वमस्माकं मित्रपुत्रोऽतोऽस्माभिर्यदुक्तव्यं तत्त्वयावश्यमेवानुष्ठेयं भविष्यतीति सूचितम् । 'कच्चित् कामप्रवेदने' अ । स्वाभिप्रायकथनं कामप्रवेदनम् ॥ ७४ ॥

क्वेति । हे नल त्वं क्व कस्मिन् देशे प्रयास्यसि गमिष्यसि इति उक्त्वा पृष्ट्वा अलं व्यर्थ एवायं प्रश्न इत्यर्थः । यत् यस्मात् नोऽस्माकम् अत्र पृथिव्यां यात्रया शुभया फलावश्यम्भावात् कुशलया अजनि जातं तत्तस्मात् फलसत्वरया शीघ्रफलिकया तयैव यात्रयैव किं त्वम् इदम् अध्वनोऽर्द्धम् अर्द्धपथं नागमितो न प्रापितः अपि तु यात्रयैवास्मत्कार्यार्थं प्रापितः न तु त्वं स्वकार्यवशादत्रागतवानित्यर्थः । उक्त्वेति 'निषेधार्थालंखल्वोः क्त्वा' ॥ ७५ ॥

के यूयं न जानामीत्यत्राह । एष इति । हे नैषध एषोऽग्रे दृश्यमानः स प्रसिद्धो दण्डभृत् यमः तथा एष ज्वालजालेन शिखासमूहेन जटिलो जटावान् स हुताशोऽग्निः एष च स यादसां जलजन्तूनां पतिर्वरुणः शेषमवशिष्टं मां सुराणां देवानां शासितारं शासनकर्त्तारम् इन्द्रम् अवगच्छ जानीहि । दण्डभृदादिविशेषणं भयप्रदर्शनार्थं तेन सति सामर्थ्येऽस्मन्नियोगाकरणे यथोचितशास्तिर्भविष्यतीति सूचितम् । 'वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्' अ ॥ ७६ ॥

अर्थिन इति । हे नल अमी वयं देवाः किल निश्चितम् अर्थिनो याचका भूत्वा त्वां समुपेमः प्राप्ताः स्मः इति फलितार्थं निष्कृष्टार्थम् अवेहि जानीहि । तर्हि शीघ्रं कथं न याच्यत इत्यत्राह क्षणमल्पकालं व्याप्य अध्वनः पथः खेदं गमनायासम् अपास्य अपनीय किञ्चिद्विलम्ब्य भवति त्वयि कार्यस्य प्रयोजनस्य निवेदं ज्ञापनञ्च कुर्महे करिष्यामः आगत्यैव प्रार्थनं न दातुराग्रहकरं भवतीति तथोक्तमिति भावः । कुर्महे इति वर्त्तमानसामीप्ये लट् ॥ ७७ ॥

ईदृशीमिति । बिडोजा इन्द्र ईदृशीं पूर्वोक्तां गिरं वाचम् उदीर्य उक्त्वा जोषं तूष्णीम्भावम्

---

काव्यलिङ्गमलङ्कारः ॥ ७४ ॥ श्रुत्यनुप्रासश्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥ ७५ ॥ परिकरालङ्कारः ॥ ७६ ॥ अन्त्यानुप्रासोऽलङ्कारः ॥ ७७ ॥

अर्थिनामहृषिताखिलरोमा स्वं नृपः स्फुटकदम्बकदम्बम्।
अर्चनार्थमिव तच्चरणानां स प्रणामकरणादुपनिन्ये ॥ ७९ ॥
दुर्लभं दिगधिपैः किममीभि-स्तादृशं कथमदो मदधीनम्।
ईदृशं मनसिकृत्य विरोधं नैषधेन समशायि चिराय ॥ ८० ॥
जीविताबधि वनीयकमात्रै-र्याच्यमानमखिलं सुलभं यत्।
अर्थिने परिवृढाय सुराणां किं वितीर्य मम तुष्यतु चेतः ॥ ८१ ॥

आप प्राप्तवान् आसेति पाठे जगामेत्यर्थः। न तु विशिष्य विशेषं कृत्वा बभाषे उवाच। भैमीलाभार्थमागतानामस्माकं त्वं दौत्यं कुर्विति विशेषं नोवाचेत्यर्थः। हठादुक्तौ कार्यस्यागौरवं मत्वा यदि निषेधमेवाश्रयेतेति भयेन विशिष्य नोक्तमिति भावः। कथमेतादृग्वाक्चातुर्यमस्येत्युपपादयति अत्र ईदृशे अभियाकुशलत्वे वाक्चातुर्यं न चित्रं नाश्चर्यं यतः शैशवावधि बाल्यमारभ्य गुरुर्बृहस्पतिरस्य इन्द्रस्य गुरुरुपदेष्टा। बृहस्पतिशिक्षितो यदेवं वदति तत्र नाश्चर्यमित्यर्थः। 'तूष्णीमर्थे सुखे जोषम्' अ ॥ ७८ ॥

एवमुक्त्वा इन्द्रे विरते नलस्यावस्थामाह। अर्थीति। अर्थिनाम्ना अर्थीतिनामश्रवणेन हृषितानि उद्गतानि अखिलानि समस्तानि रोमाणि यस्य तादृशः स नृपो नलः प्रणामकरणात् भक्तिश्रद्धादिना प्रकृष्टनमस्कारकरणाद्धेतोः अर्चनार्थं पूजार्थं स्वमात्मानं तच्चरणानामिन्द्रादिपदानाम् उपनिन्ये समीपं प्रापयामास। कमिव स्फुटानां विकसितानां कदम्बानां नीपानां कदम्बमिव समूहमिव। कदम्बकुसुमसमूहोऽपि भक्तेन पूजार्थं देवानां चरणसमीपं प्राप्यते। 'कदम्बं निकुरम्बे स्यान्नीपसिद्धार्थयोः पुमान्' ॥ ७९ ॥

दुर्लभमिति। अमीभिर्दिगधिपैर्दिक्पतिभिरिन्द्रादिभिः किं वस्तु दुर्लभं दुष्प्रापम् अपि तु न किमपि। तादृशम् इन्द्रादिदुर्लभं वा अदो वस्तु मदधीनं ममायत्तं कथम् ईदृशं विरोधं मनसिकृत्य आलिकल्पेन विचार्य नैषधेन नलेन चिराय बहुकालं व्याप्य समशायि वक्ष्यमाणप्रकारेण संशयितम्। मनसिकृत्येति 'अनुपश्लेषे उरसि मनसि मध्ये पदे निवचने चे'ति प्रादुरादित्वात् क्त्वायच् ॥ ८० ॥

संशयप्रकारमेवाह। जीवितेति। जीविताबधि जीवनपर्यन्तम् अखिलं समस्तं याच्यमानं

---

"अत्र छेकानुप्रासः काव्यलिङ्गमुत्प्रेक्षा" सा। आसेति पाठे 'अस गतिदीप्त्यादानेषु' इति असधातोरूपं, जगाम इत्यर्थः। 'गुरुर्गीष्पतिपित्राद्योः' वै ॥ ७८ ॥ "अत्र रूपकोत्प्रेक्षापह्नुतयश्च" सा। तच्चरणानामर्चनार्थं स्फुटकदम्बं विकसितनीपकुसुमवृन्दमिवेत्युत्प्रेक्षा, प्रणामकरणव्याजात् इत्यपह्नुतिः। अर्चनार्थमिवेति हेतूत्प्रेक्षाङ्गीकारे नलशरीरे स्फुटकदम्बकदम्बत्वारोपाद्रूपकम् ॥ ७९ ॥ छेकानुप्रासः। चिरायेत्यव्ययम्। 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः' अ ॥ ८० ॥

भीमजा च हृदि मे परमास्ते जीवनादपि धनादपि गुर्वी ।
न स्वमेव मम सार्हति यस्याः षोडशीमपि कलां किल नोर्वी ॥ ८२ ॥
मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव ।
तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥ ८३ ॥
प्रापितेन चटुकाकुविलम्बं लम्भितेन बहुयाचनलज्जाम् ।
अर्थिना यदघमर्ज्जति दाना-त्तन्न लुम्पति विलम्ब्य ददानः ॥ ८४ ॥

वनीयकमात्रैः सामान्ययाचकैर्विशिष्टपात्रताशून्यैरपि यत् यतः सुलभम् अनायासेन प्राप्यम् अतोऽर्थिने याचकाय सुराणां देवानां न तु केषाञ्चिन्मनुष्यादीनां परिवृढाय प्रभवे नतु दूतादिरूपाय इन्द्राय किं वस्तु वितीर्य दत्त्वा मम चेतोऽन्तःकरणं तुष्यतु सन्तुष्टं भवतु। जीवितपर्यन्तं यस्मै कस्मैचिद्याचकाय दीयते जीवितादधिकन्तु वस्तु नास्त्येव यत् देवेन्द्राय दत्त्वा तुष्यामीत्यर्थः। पात्रविशेषे हि दानस्य विशेष एव युज्यते। 'वनीयकोयाचनकोमार्गणोयाचकार्थिनौ' अ ॥ ८१ ॥

ननु तव जीविताधिका दमयन्ती वर्त्तते सैवास्मै दीयतामित्याशङ्क्याह। भीमजेति। उर्वी बहुरत्ना पृथिव्यपि यस्या भैम्याः षोडशीमपि कलां षोडशभागं किल निश्चितं नार्हति पृथिव्यपि मूल्यविषये यस्याः षोडशभागयोग्या न भवति सा जीवनादपि धनादपि गुर्वी गौरववती भीमजा च भैमी तु परं केवलं मे मम हृदि मनसि आस्ते वर्त्तते न तु सा मम स्वमेव नैव मत्स्वामिका। केवलं तामहं मनसाभिलष्यामि न तु सा मदधीना। यत्र हि स्वत्वं नास्ति तत् कथं दातुं शक्यते अस्वामिकस्य दानासम्भवात् ॥ ८२ ॥

मीयतामिति। एषाम् इन्द्रादीनाम् अभीप्सितम् इष्टं वस्तु कथं मया मीयतां ज्ञायतां येन अयाचितमेव तैरप्रार्थितमेव प्रार्थनायाः प्रागेवेत्यर्थः अभीप्सितं द्रुतं शीघ्रं दीयतां प्रार्थनामप्रतीक्ष्यैव तेषां वाञ्छितं दीयतामित्यर्थः। ननु प्रार्थनानन्तरमेव अभिलषितं ज्ञात्वा दातव्यं कथमधुना व्याकुलीभवसीत्याह। तं दातारं जनं धिगस्तु स निन्दनीयो भवतु यो दाता याचकानां वाञ्छाम् अभिलाषं कलयन्नपि कथञ्चित् प्रकरणादिना जानन्नपि अर्थिनां याचकानां वाचो मह्यमेतद्वस्तु दातव्यमिति प्रार्थनवचनस्य अवसरम् अवकाशं सहते प्रतीक्षते। यो याचकानां वाञ्छितं ज्ञात्वापि भवतु प्रथमं याचतां ततोऽहं दास्यामीति चिरयति सोऽधमो दाता इत्यर्थः। तस्मादयाचितमेव देयमिति भावः। अभीप्सितमिति 'पूजेच्छे'त्यादिना वर्त्तमाने क्तः तद्योगे च एषामित्यत्र 'वर्त्तमानवाचिना क्तेने'ति कर्त्तरि षष्ठी ॥ ८३ ॥

तदेव द्रढयन्नाह। प्रापितेनेति। दाता विलम्ब्य विलम्बं कृत्वा ददानोददत्सन् अर्थिना

---

"अत्रातिशयोक्तिः" सा। व्यतिरेकालङ्कार श्छेकानुप्रासश्चेति संसृष्टिः। सत्यपि स्वत्वे 'देयं दारसुतादृते' इति वचनेन दाराणां सुतानाञ्च दाननिषेधशास्त्रं कथमतिक्रम्यते इत्यपि चावधेयमिति ध्वन्यते ॥ ८२ ॥

यत्प्रदेयमुपनीय वदान्यै-र्दीयते सलिलमर्थिजनाय।
सार्थनोक्तिविफलत्वविशङ्का-त्रासमूर्च्छदपमृत्युचिकित्सा ॥ ८५ ॥
अर्थिने न तृणवद्धनमात्रं किन्तु जीवनमपि प्रतिपाद्यम्।
एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः ॥ ८६ ॥
पङ्कसङ्करविगर्हितमर्हं न श्रियः कमलमाश्रयणाय।
अर्थिपाणिकमलं विमलन्त-द्वासवेश्म विदधीत सुधीस्तत् ॥ ८७ ॥

याचकेन करणेन हेतुना वा यत् अघं पापं अर्जति उपार्जयति तत् अघं दानात् न लुम्पति दानं कृत्वा परिमार्ष्टुं न शक्नोति का कथाधिकपुण्यस्येत्यर्थः। किम्भूतेनार्थिना चटुः त्वमेवैको जगति महानुभावो नान्य इत्यादिप्रियोक्तिः काकुः, दीनपालक दीने मयि विधेयानुकम्पेत्यादिदैन्योक्तिस्ताभ्यां विलम्बं कालात्ययं विडम्बं पराभवं वा प्रापितेन तथा बहुयाचनेन अनेकवारप्रार्थनेन कृत्वा लज्जां लम्भितेन प्रापितेन। प्रियवचनाद्यवादयित्वा शीघ्रमेव याचकाय देयमन्यथा पातकं स्यादिति भावः। अर्जतीति अर्ज अर्जने भ्वादिः ॥ ८४ ॥

यदिति। किञ्च वदान्यैर्बहुप्रदैर्जनैः प्रदेयं प्रदातव्यं वस्तु उपनीय समीपमानीय अर्थिजनाय याचकजनाय यत्सलिलं जलं दीयते उत्सर्गजलं यदर्थिजनहस्ते क्षिप्यते सा जलप्रक्षेपरूपा क्रिया अर्थनोक्तेर्याञ्चावचनस्य या विफलत्वविशङ्का वैफल्याशङ्का तया जनितोयस्त्रासोभयं तेन मूर्च्छन् वर्द्धमानोयोऽपमृत्युराकस्मिकमरणं तस्य चिकित्सा प्रतिक्रिया सलिलप्रक्षेपेण याञ्चासाफल्यनिश्चयात्। आशङ्कात्रासजनितोमूर्च्छनापमृत्युरपि जलप्रक्षेपात् शाम्यति। शीघ्रमेवार्थिभ्यो दातव्यं न तु विलम्बः कर्त्तव्य इति भावः ॥ ८५ ॥

न केवलं धनमात्रमेव झटिति देयं किन्तु याचकानां हिताय प्राणा अपि परित्याज्या इत्याह। अर्थिनइति। कुशवज्जलदायी सकुशजलकरणकदानप्रतिपादक उक्तिविदग्धः श्लेषोक्तिचतुरो द्रव्यदानविधिर्द्रव्याणां दानविधायकं शास्त्रम् 'कुशवत् सलिलोपेतं दानं सङ्कल्पपूर्वकम्' इत्यादिरूपम् एवमाह भङ्ग्या एवं प्रतिपादयति एवं किम् अर्थिने याचकाय तृणवत् तृणमिव तृणवत्तुच्छत्वेन परिगृह्य दात्रा धनमात्रं केवलं धनं न प्रतिपाद्यं न देयं किन्तु जीवनमपि अर्थिनामुपकाराय जीवितमपि प्रतिपाद्यं परित्याज्यम्। अयम्भावः सकुशजलेन दातव्यमिति विधौ सत्स्वपि पवित्रवस्तुषु विशिष्य कुशजलयोर्ग्रहणं कुशस्य तृणत्वात् दातृभिर्धनं तृणमिव मत्वा त्यक्तव्यं जलस्य च जीवनसंज्ञत्वात् तज्जीवनमिव स्वजीवितमपि याचकोपकाराय त्यक्तव्यमित्येतत्सूचकमिति अतएव विधेरुक्तिविदग्धता ॥ ८६ ॥

धनानामर्थिसात्करणमेव श्रेय इत्याह। पङ्केति। पङ्कस्य कर्दमस्य सङ्करेण संसर्गेण

पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ८४ ॥ "अत्रातिशयोक्तिः" सा ॥ ८५ ॥ "अत्र प्रतीयमानोत्प्रेक्षा समासोक्तिर्वा" सा ॥ ८६ ॥

याचमानजनमानसवृत्तेः पूरणाय वत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ८८ ॥
मा धनानि कृपणः खलु जीवन् तृष्णयार्पयतु जातु परस्मै ।
अत्र चैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ ८९ ॥
माममीभिरिह याचितवद्भिर्दातृजातमवमत्य जगत्याम् ।
यद्यशो मयि निवेशितमेतन्निष्क्रयोऽस्तु कतमस्तु तदीयः ॥ ९० ॥

विगर्हितं विशेषेण निन्दितं कमलं पङ्कजं श्रियः सम्पदः अथच लक्ष्म्या आश्रयणाय अवस्थानाय अर्हं योग्यं न भवेदिति शेषः पङ्कस्थितत्वादेव श्रियोऽवस्थाने न युज्यत इत्यर्थः । अन्यदपि पङ्किलस्थानमवस्थानाय न भवति । अथ च पङ्कसङ्करेण पापसाङ्कर्येण विगर्हितम् अवस्थानाय योग्यं न भवति । तत्तस्मात् सुधीः पण्डितः विमलं पङ्करहितम् अर्थिपाणिकमलं याचकहस्तपद्मं तस्याः श्रियो वासवेश्म वासगृहं विदधीत कुर्वीत । सम्पतेरर्थिभ्यः प्रतिपादनमेव श्रेयस्करमिति भावः ॥ ८७ ॥

अदातुर्निन्दामाह । याचमानेति । यस्य पुरुषस्य जन्म उत्पत्तिर्याचमानजनानां याचकजनानां मानसवृत्तेर्मनोरथस्य पूरणाय धनवितरणद्वारा निवृत्तये न भवति तेन पुरुषेणैव इयं भूमिः पृथिवी अतिभारवती अतितरां सभारा भवति न द्रुमैर्न तु वृक्षैर्न गिरिभिर्न पर्वतैर्न समुद्रैर्भारवती । वृक्षादीनां पुष्पादिना औषधादिना रत्नादिना च जनानामुपकारकत्वात् । अतोभूम्यामाविर्भूय याचकमनोरथपूरणमवश्यं करणीयमिति भावः ॥ ८८ ॥

किञ्च । मेति । कृपणोऽव्ययकुण्ठजनो जीवन् सन् परस्मै अन्यस्मै तृष्णया मदीयमिदं चिरं तिष्ठत्विति दुराशया धनानि जातु कदाचिदपि खलु निश्चितं मा अर्पयतु न ददातु तृष्णाधिक्याज्जीवित्वा यन्न ददाति तन्न नाश्चर्यमित्यर्थः । अत्र च अस्मिन् विषये एष कृपणः मम चित्रम् आश्चर्यं कुरुते यत्तु यत् पुनरेष मृतोऽपि तानि धनानि नार्पयति न प्रयच्छति मृतेन तृष्णासम्भवाभावात् यन्न त्यज्यन्ते तदाश्चर्यमेवेत्यर्थः । अथ च मृतः सन्नेव कृपणो धनानि नार्पयति नार्पाणि नृपसम्बन्धीनि करोति प्रायेण कृपणानां सन्निहिताधिकार्यन्तराभावेन बलेन वा राजा धनानि गृह्णातीत्यर्थः । तत्राश्चर्यं येन जीवता किञ्चिन्न दीयते तस्य मृतस्य सर्वं राजा गृह्णातीत्याश्चर्यम् । तस्माद्यावज्जीवति तावद्दातव्यं, मृते तु राजा नेष्यतीति भावः ॥ ८९ ॥

देवानां दुर्लभं कतमद् वस्तु मदधीनं यद्दत्त्वैते तोषणीया इति मनसि कृत्वा चिन्तयति । मामिति । इह जगत्यां भूलोके दातृजातं वदान्यसमूहम् अवमत्य अनादृत्य मां याचितवद्भिः

---

"अत्रातिशयोक्तिरूपके च्छेकानुप्रासोऽपि" सा ॥ ८७ ॥ "अप्राप्यसम्बन्धे सम्बन्धातिशयोक्तिः" सा ॥ ८८ ॥ अत्र 'यो नार्पयति, स नार्पयति' इत्यसङ्गत्या आपाततः क्रिययोर्विरोध आभासते, नृपसम्बन्धीनि करोतीति तत्परिहारः । अतएव श्लेषमूलो विरोधाभासोऽलङ्कारः ॥ ८९ ॥

लोक एष परलोकमुपेता हा विहाय निधने धनमेकः।
इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुदयद्दयचित्तः ॥ ९१ ॥
दानपात्रमधमर्णमिहैक-ग्राहि कोटिगुणितं दिवि दायि।
साधुरेति सुकृतैर्यदि कर्त्तुं पारलौकिककुसीदमसीदत् ॥ ९२ ॥
एवमादि स विचिन्त्य मुहूर्त्तं तानवोचत पतिर्निषधानाम्।
अर्थिदुर्लभमवाप्य सहर्षान् याच्यमानमुखमुल्लसितश्रि ॥ ९३ ॥

प्रार्थितवद्भिरमीभिरिन्द्रादिभिर्मयि यद्यशो निवेशितं स्थापितम् इन्द्रादयोऽपि नलस्य याचका जाता इति या कीर्त्तिरर्पितेत्यर्थः। एतस्य यशसो निष्क्रयो विनिमयस्तदीय इन्द्रादिसम्बन्धी कतमस्तु कतमः पुनरस्तु भवतु। यशोनिवेशनप्रतिदेयं कतमद् वस्तु इन्द्रादिभ्यो दत्त्वा यशोरक्षणीयमित्यर्थः। यदेतद्यशोनिवेशितं तदीयो यशःसम्बन्धी निष्क्रय इति वा ॥ ९० ॥

तर्हि किं यशोरक्षणार्थमेवं चिन्तयसीत्याशङ्क्याह। लोक इति। हा विषादे एष लोको निधने मरणे सति धनं विहाय परित्यज्य एकोऽसहायः सन् परलोकं लोकान्तरम् उपेता गमिष्यति इति हेतोः खलु निश्चितम् उदयन्ती जायमाना दया यत्र तादृशं चित्तं मनो यस्य तादृशः सन् अर्थिबन्धुर्याचकरूपः सुहृत् अस्य दातुस्तद्धनम् अमुं परलोकं निनीषति नेतुमिच्छति 'न दत्तं नोपतिष्ठत' इति स्मरणात्। खलूत्प्रेक्षायां वा न केवलं यशोऽर्थमेव लोकैर्याचकेभ्यो धनानि दीयन्ते किन्तु परलोके स्वेषामप्युपयोगायेति भावः। उपेतेति लुटोरूपम् ॥ ९१ ॥

इह याचकाय यावद्दीयते परलोके तावन्मात्रमेव न प्राप्यते किन्तु तत्कोटिगुणितं तत्र भवतीत्याह। दानपात्रमिति। यद्यर्थे वार्थे साधुर्यदि सज्जन एव पारलौकिकं परलोकभवं कुसीदं वृद्धिजीविकाम् असीदत् अविनश्वरं कर्त्तुं सुकृतैः पुण्यैर्दानपात्र वेदपारगत्वादिगुणयुक्तसंप्रदानलक्षणम् अधमर्णम् ऋणग्रहीतारम् एति प्राप्नोति जानाति वा किम्भूतम् इह लोके एकम् एकगुणं ग्रहीतुं शीलमस्य तादृशं दिवि स्वर्गे कोटिगुणित कोटिसंख्यकं ददाति दास्यति वा तादृशम् 'आनन्त्यं वेदपारग' इत्यादिस्मरणात्। अन्योऽधमर्ण एकगुणं गृहीत्वा द्विगुणादधिकं न ददाति 'कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता' इति मनुस्मरणात् दानपात्राधमर्णस्तु एकगुणं गृहीत्वा कोटिगुणं ददातीति व्यतिरेकालङ्कारः। तस्मादेतादृशमधमर्णं पुण्यैः करणैः साधुरेव प्राप्नोति नान्य इत्यर्थः। 'कुसीदं वृद्धिजीविका' अ। दायीति 'अधमर्णे' इत्यनेन 'भविष्यति गमादेरि'त्यनेन वा णिन् अस्य 'भविष्यदणिनोर्णिनि'ति त्वादित्वात् कोटिगुणितमित्यत्र न षष्ठी ॥ ९२ ॥

एवमिति। स निषधानां पतिर्नलः मुहूर्त्तं क्षणमात्रं व्याप्य एवमादि एवंप्रभृति विचिन्त्य

---

"अत्र च्छेकानुप्रासः" सा ॥ ९० ॥ वाच्या क्रियोत्प्रेक्षा, निरङ्गं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ९१ ॥ "अत्रातिशयोक्तिव्यतिरेकच्छेकानुप्राससंकरः" सा। रूपकञ्च। 'साधुस्त्रिषु हिते रम्ये सज्जने वाद्धुंषौ पुमान्' 'उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकावुभौ' अ ॥ ९२ ॥

नास्ति जन्यजनकव्यतिभेदः सत्यमन्नजनितो जनदेहः ।
वीक्ष्य वः खलु तनूममृतादं दृङ् निमज्जनमुपैति सुधायाम् ॥ ९४ ॥
मत्तपः क नु तनु क फलं वा यूयमीक्षणपथं व्रजथेति ।
ईदृशान्यपि ददन्ति पुनर्नः पूर्वपूरुषतपांसि जयन्ति ॥ ९५ ॥
प्रत्यतिष्ठिपदिमां खलु देवीं कर्म सर्वसहनव्रतजन्म ।
यूयमप्यहह पूजनमस्या यन्निजैः सृजथ पादपयोजैः ॥ ९६ ॥

विभाव्य तान् इन्द्रादीनवोचत उक्तवान् । तान् किम्भूतान् अर्थिभिर्याचकैर्दुर्लभं दुष्प्रापम् उल्लसिता उदिता श्रीः शोभा यत्र तादृशं याच्यमानस्य प्रार्थ्यमानस्य प्रकृतं नलस्य मुखम्प्राप्य सहर्षान् हृष्टान् । दाता हि प्रायेण याच्यमानः सन् मुखं मलिनमेव करोति । नलन्तु याच्यमानं प्रसन्नमुख दृष्ट्वा कार्यसिद्धिं निश्चित्य इन्द्रादयः सहर्षा जाता इत्यर्थः ॥ ९३ ॥

यदुक्तवांस्तदाह । नास्तीति । जन्यजनकयोः कार्यकारणयोर्व्यतिभेदः परस्परं भेदो व्यति अत्यन्त भेदो वैलक्षण्यं वा नास्ति, तथा जनानां देहः शरीरम् अद्यते भुज्यते यत् तदन्नं भक्ष्यं वस्तु तेन जनित उत्पादित इत्युभयं सत्य खलु यस्मात् वो युष्माकम् अमृतादं सुधाभक्षिकां सुधाभक्षगोपचितामित्यर्थः तनूं शरीर वीक्ष्य विशेषेण दृष्ट्वा मम दृक् चक्षुः सुधायाममृते निमज्जनम् उपैति सुधानिमज्जनजन्यसुखमनुभवति । उपैमीति पाठे अहं सुधायां दृशोश्चक्षुषोर्निमज्जनम् उपैमि सुधाकरणकचक्षुःसेचनजन्यसुखमनुभवामीत्यर्थः सुधाभोजिनां युष्माकं शरीरं यत् निमज्जतः सुधावत्सुख जनयति तत्र सांख्योक्तः कार्यकारणाभेद एव हेतुरित्यर्थः । युष्मान् दृष्ट्वा अहमतितरां सुखी जातो न त्वितरदातृजनवद् याचकदर्शनाद् दुःखी तस्मादभिलषितं याच्यतामिति भावः । यद्यप्योदन एव वाच्येऽन्नेति निपातितं तथाप्यत्र गौण्या लक्षणया अदनीयवस्तुमात्रपरमिति बोध्यम् । अमृतादमिति 'अदोऽनन्ने' इति क्विप् ॥ ९४ ॥

मत्तपइति । नु भो देवास्तनु अत्यल्पं मत्तपो मदीया तपस्या क कुत्र अदृश्या अपि यूयम् ईक्षणपथं दृष्टिगोचरतां व्रजथ गच्छथ इति फलं वा क अपि तु अत्यन्तासम्भावितमेतत् पुण्यपुञ्जलभ्यस्य भवतां दर्शनलक्षणफलस्याल्पपुण्येन लाभासम्भवात् । तर्हि तत् कथं लब्धमित्याशङ्क्याह ईदृशान्यपि असंघटमानान्यपि युष्मद्दर्शनलक्षणफलानि नोऽस्मभ्यं ददन्ति ददानानि पूर्वपूरुषाणां पित्रादीनां तपांसि पुनर्जयन्ति उत्कर्षेण वर्त्तन्ते पूर्वपूरुषतपोबलादेव यूयं दृष्टा इत्यर्थः ॥ ९५ ॥

प्रत्यतिष्ठिपदिति । सर्वसहनव्रतात्सर्वभारसहिष्णुत्वलक्षणनियमात् जन्म उत्पत्तिर्यस्य तादृशं कर्म पुण्यं कर्तृ खलु निश्चितम् इमां भूमिं देवीं प्रत्यतिष्ठिपत् प्रतिष्ठापयामास देवीति

---

"अत्र भावोदयालङ्कारः' सा ॥ ९३ ॥ कार्येण कारणसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्च' ॥ ९४ ॥ "विरूपघटनारूपो विषमालङ्कारः" जी ॥ ९५ ॥

जीवितावधि किमप्यधिकं वा यन्मनीषितमितोनरडिम्भात्।
तेन वश्चरणमर्च्चतु सोऽयं ब्रूत वस्तु पुनरस्तु किमीदृक्॥ ९७॥
एवमुक्तवति वीतविशङ्के वीरसेनतनये विनयेन।
वक्रभावविषमामथ शक्रः कार्यकैतवगुरुर्गिरमूचे॥ ९८॥
पाणिपीड़नमहं दमयन्त्याः कामयेमहि महीमहिकांशो।
दूत्यमत्र कुरु नः स्मरभीतिं निर्ज्जितस्मर निरस्य चिरस्य॥ ९९॥

प्रतिष्ठां प्रापयामासेत्यर्थः। खलूत्प्रेक्षायां वा सर्वभारसहनव्रतजनितपुण्येनेव भूम्या देवीत्वं जनितमित्यर्थः तत्र प्रमाणमाह अहहाश्चर्य्ये यत् यस्मात् यूयमपि देवेन्द्रादयोऽपि निजैः स्वीयैः पादपयोजैश्चरणपङ्कजैः करणैः अस्या भूम्याः पूजनं सृजथ कुरुथ। युष्माभिः पूजनमेवास्या देवीत्वे प्रमाणमित्यर्थः। अन्यापि देवीप्रतिमा प्रतिष्ठिता सती पद्मैः पूज्यते। पृथिवीभाग्यादेव यूयमत्रागतवन्तो न तु मदधीनविधेयत्वादिति भावः। अनिष्ठिपदिति 'इदातः स्थ'इत्याकारस्येकारः॥ ९६॥

जीवितेति। जीवितम् अवधिर्मर्य्यादा यत्र तादृशं प्राणपर्यन्तं वा किंवा प्राणेभ्योऽप्यधिकं तत् किं वस्तु यद्वस्तु इतो मल्लक्षणात् नरडिम्भान्मानुषार्भकात् युष्माभिर्मनीषितम् अभिलषितम्। सोऽयं नरडिम्भस्तेन वस्तुना वो युष्माकं चरणम् अर्च्चतु पूजयतु ईदृग्वस्तु किं पुनरस्तु भवतु ब्रूत यूयं कथयत शङ्कां परित्यज्य याचनीयम्। बालोऽप्यह प्राणाधिकमपि दातुं शक्नोमीति भावः। चरणद्वयपूजने सामर्थ्याभावात् चरणमित्येकवचनेन स्वस्य विनीतत्व सूचितम्॥ ९७॥

एवं नलकथानन्तरम् इन्द्रः प्रत्युवाचेत्याह। एवमिति। वीता त्यक्ता विशङ्का विरुद्धा शङ्का अभिशापाद्याशङ्का येन तादृशे वीरसेनस्य राज्ञस्तनये पुत्रे नले विनयेन विनीततया एवं पूर्वोक्तम् उक्तवति कथयति सति अथानन्तरं शक्र इन्द्रो वक्रभावेण वक्रत्वेन वक्रोक्त्या कुटिलाभिप्रायेण च विषमां दुर्बोधाम् अथ च विषेण मीयते उपमीयत इति तादृशीं दुष्टां गिरं वाचम् उवाच कथयति स्म। किम्भूतः कार्य्ये यत् कैतवं कापट्यं तत्र गुरुर्बृहस्पतिसमः॥ ९८॥

यदूचे तदाह। पाणीति। हे महीमहिकांशो पृथिवीहिमकिरण पृथिवीचन्द्र नल वयं दमयन्त्याः पाणिपीड़नमहं विवाहोत्सवं कामयेमहि इच्छामः। तर्हि तत्रैव गच्छत किमर्थं मामनुप्राप्ता इत्यत्राह हे निर्ज्जितस्मर निःशेषेण जितः सौन्दर्य्येण पराभूतः स्मरः कामो येन हे तादृश चिरस्य चिरकालीनां स्मरभीतिं कामाद्भयं विरहभयमिति यावत् निरस्य दूरीकृत्य अत्र विवाहविधौ नोऽस्माकं दूत्यं दूतकर्म कुरु। स्वस्य विरहभयमङ्गीकृत्यैव यथा दमयन्ती अस्माकमन्यतमं वृणुयात्तथा तत्र गत्वा सा त्वया प्रलोभनीयेत्यर्थः। योहि कामजेता स कामभयं

---

"अत्रोत्प्रेक्षा रूपकं च" सा। वृत्त्यनुप्रासश्च। 'अहहेत्यद्भुते खेदे' 'हि हेताववधारणे' अ॥ ९६॥ "अत्र च्छेकानुप्रासः" सा॥ ९७॥ रूपकम्, छेकानुप्रासेन संसृज्यते॥ ९८॥

आसते शतमधिक्षिति भूपा-स्तोयराशिरसि ते खलु कूपाः।
किं ग्रहा दिवि न जाग्रति ते ते भास्करस्य कतमस्तु तुलास्तु ॥ १०० ॥
विश्वदृश्वनयना वयमेव त्वद्गुणाम्बुधिमगाधमवेमः।
त्वामिहैवमनिवेश्य रहस्ये निर्वृतिं न हि लभेमहि सर्वे ॥ १०१ ॥

निरस्यत्येव। अथ च त्वं निर्जितस्मरो जितेन्द्रियोऽसि सुतरां विवाहावश्यकाभावादस्मदर्थमेव यतस्वेति ध्वनिः। भीतिं यथाशक्त्यकरणे दण्डभयम् अभिशापभयं वा स्मर मनसि कुर्विति वा अस्माकम् स्मरभीतिं निरस्य निवारयेत्यपि वा। कामयेमहीति लिङ ईमहिरूपम् ॥ ९९ ॥

नन्वन्येऽपि राजानः पृथिव्यां सन्ति कथं तान् विहाय मामेवं प्रार्थयथेत्याशङ्कायामाह आसत इति। हे नल अधिक्षिति क्षितौ शतम् असंख्या भूपा राजान आसते वर्त्तन्ते किन्तु त्वं गाम्भीर्यादिगुणवत्त्वात् तोयराशिरसि समुद्रोऽसि ते त्वद्भिन्ना राजानः खलु निश्चितं क्षोभणीयत्वात् क्षुद्राशयत्वाच्च कूपाः। यथा समुद्रापेक्षया कूपा हीनास्तथा त्वदपेक्षया अन्ये राजानो हीना अतस्ते न याचिता इत्यर्थः। 'वरं प्राणत्यागो न पुनरधमानामनुगमः' इति शिष्टोक्तेः। अर्थान्तरेणेदं द्रढयति ते ते प्रसिद्धाः सूर्यभिन्ना ग्रहा दिवि स्वर्गे किं न जाग्रति न स्फुरन्ति अपि तु स्फुरन्त्येव किन्तु तेषां मध्ये कतमस्तु कः पुनर्ग्रहो भास्करस्य सूर्यस्य तुला सदृशोऽस्तु भवतु अपि तु सूर्य इव कोऽपि ग्रहस्तमोनाशको नास्तीत्यर्थः। अधिक्षितीति सप्तम्यर्थेऽव्ययीभावः। तुलेति कर्मण्यात्प्रत्ययः। वस्तुतस्तु भास्करस्य कतमस्तुलयास्ते इत्येव पाठः भास्करस्य तुलया साम्येन तद्विशिष्ट इत्यर्थः कतमोग्रह आस्ते इत्यन्वयः एवमेव प्राचीनैर्व्याख्यातम् ॥ १०० ॥

विश्वेति। हे नल विश्वदृश्वानि विश्वावलोकनसमर्थानि नयनानि येषां तादृशा वयमेव अगाधम् असीमं त्वद्गुणाम्बुधिं तव गुणसमुद्रम् अवेमः जानीमः न त्वन्ये सर्वज्ञत्वाद्वयमेव तत्र असंख्येयं समुद्रतुल्यं गुणं जानीम इत्यर्थः। अतएव इह अस्मिन् रहस्ये भैमीपाणिग्रहणलक्षणे गोप्येऽर्थे एवं दूतत्वप्रकारेण त्वाम् असंख्यगुणाश्रयम् अनिवेश्य अनियोज्य सर्वे वयं निर्वृतिं सुखं न हि नैव लभेमहि प्राप्नुमः। अस्मिन् विषये गुणवन्तं त्वामेव नियोज्य सुखं लप्स्यामह इत्यर्थः। विश्वदृश्वनयना इत्यनेन सर्वज्ञत्वात् वयं तवान्तर्गतमपि ज्ञातुं समर्था, अतो मनस्यन्यत् वचसि चान्यन्न कर्त्तव्यमिति सूचितम्। विश्वदृश्वेति 'कर्मणोदृश' इति वन् ॥ १०१ ॥

---

महीमहिकांशो इत्यनेन चन्द्रवत्तव सर्वेषां तापापनोदनत्वमाह्लादकत्वञ्च सूचितम्। तथाच त्वमनेन दौत्येन कामसन्तप्तानस्मान् शीतलय, आनन्दय चेति गम्यते। "अत्र च्छेकानुप्रासोरूपकञ्च' सा। निर्जितस्मरेतिपदस्य स्मरभीतिनिरासहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, लाटानुप्रासः, वृत्त्यनुप्रासश्च। 'प्रालेयं मिहिका' अ ॥ ९९ ॥ "अत्र रूपकं दृष्टान्तश्च" सा ॥ १०० ॥ "अत्र च्छेकानुप्रासोरूपकञ्च" सा। विश्वदृश्वनयनपदार्थस्य नलगुणाम्बुधिज्ञानहेतुत्वात् काव्यलिङ्गम् ॥ १०१ ॥"

शुद्धवंशजनितोऽपि गुणस्य स्थानतामनुभवन्नपि शक्रः।
क्षेप्तुमेनमृजुमाशु सपक्षं शायकन्धनुरिवाजनि वक्रः॥ १०२॥
तेन तेन वचसैव मघोनः स स्म वेद कपटं पटुरुच्चैः।
आचरत्तदुचितामथ वाणीमार्जवं हि कुटिलेषु न नीतिः॥ १०३॥
सेयमुच्चतरता दुरितानामन्यजन्मनि मयैव कृतानाम्।
युष्मदीयमपि या महिमानं जेतुमिच्छति कथापथपारम्॥ १०४॥

शुद्धेति। शुद्धवंशजनितोऽपि अतिपवित्रकश्यपान्वयाज्जातोऽपि तथा गुणस्य विद्याया विवेकधैर्यादेर्वा स्थानताम् आश्रयताम् अनुभवन्नपि श्रयन्नपि नलस्य गुणवत्तां जानन्नपि वा शक्र इन्द्रः सपक्षं लोकपालांशभूत्वात् यज्ञे हविर्दानाद्वा मित्रम् ऋजुं सरलाशयम् एनं नलम् आशु शीघ्रं क्षेप्तुं प्रतारयितुं वक्रः कुटिलो मायावी अजनि जातः। उपमिनोति शायकं धनुरिव यथा धनुः शायकं वाणं क्षेप्तुं त्यक्तुं वक्रो नतकोटिर्जायते तथा। धनुरपि शुद्धवंशजनितः घुणाद्यनुपहतवेणुजातः गुणस्य मौर्व्याश्च स्थानताम् अधिष्ठानताम् अनुभवति शायकमपि सपक्षं पक्षसहितम्। 'अथास्त्रियां धनुश्चापौ' इत्यमरोक्त्या धनुःशब्दः पुंलिङ्गोऽपि॥ १०२॥

एवमिन्द्रस्य कापट्यं निश्चित्य नलस्तदुचितं वक्तुमारभते। तेनेति। उच्चैरतितरां पटुर्वक्रोक्तिबोधचतुरः स नलः मघोन इन्द्रस्य तेन तेन पूर्वोक्तेन पाणिपीडनमहं दमयन्त्या इत्यादिना वचसैव वाक्येनैव कपटं प्रतारकतां वेद स्म जानाति स्म अथानन्तरं नलस्तदुचितां प्रतारकताज्ञानोपयुक्तां वाणीं वाचम् आचरत् उक्तवान्। ननु देवेष्वपि कथं तथा चरितमित्यत आह, हि यतः कुटिलेषु खलेषु आर्जवं सारल्यं न नीतिर्नयो न भवति किन्तु कौटिल्यमेव नीतिरित्यर्थः। तथाच भारविः, 'व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिन' इति॥ १०३॥

यदुक्तवांस्तदाह। सेयमिति। हे इन्द्रादयः सा इयम् अन्यजन्मनि जन्मान्तरे मयैव न तु मत्पूर्वपुरुषैः कृतानां जनितानां दुरितानां पापानाम् उच्चतरता अत्याधिक्यम् या उच्चतरता युष्मदीयमपि महिमानं महत्त्वं जेतुमिच्छति उल्लङ्घयितुं वाञ्छति असम्भाव्यमानतया युष्माकं नियोगस्याकरणात् माहात्म्यं विनाशयितुमिच्छतीत्यर्थः। किम्भूतं कथापथपारं वचनमार्गातीतं वक्तुमशक्यं, युष्माकं नियोगः पुण्येन विनाऽनुष्ठातुं न शक्यते तत्तु मम नास्तीति भावः। अथच या, युष्मदीयं मही उत्सववांश्चासौ मानो भैमीप्राप्तग्रहङ्कारश्चेति तादृशं जेतुमिच्छति खण्डयितुं

---

'अथास्त्रियां धनुश्चापौ' इत्यमरसिंहाभिधानात् धनुःशब्दः पुंलिङ्गोऽपि अस्ति अथवा सौत्रधनधातोरौणादिकेन उप्रत्ययेन सिद्ध उकारान्तोऽयं धनुशब्दः। प्रकृताप्रकृतश्लेषेणानुप्राणिता पूर्णोपमा। 'मौर्वी ज्या शिञ्जिनी गुणः' अ॥ १०२॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः" सा॥ १०३॥

वित्त चित्तमखिलस्य न कुर्यां धुर्यकार्यपरिपन्थि तु मौनम् ।
ह्रीर्गिरास्तु वरमस्तु पुनर्म्मा स्वीकृतैव परवागपरास्ता ॥ १०५ ॥
यन्मतौ विमलदर्पणिकायां संमुखस्थमखिलं खलु तत्त्वम् ।
तेऽपि किं वितरथेदृशमाज्ञां या न यस्य सदृशी वितरीतुम् ॥ १०६ ॥
यामि यामिह वरीतुमहो त-द्दूततान्तु करवाणि कथं वः ।
ईदृशां न महतां वत जाता वञ्चने मम तृणस्य घृणापि ॥ १०७ ॥

वाञ्छति सेयं मम पूर्वजन्मकृतानामशुभकर्मणामुच्चतरता युष्माकमहङ्कारखण्डने समर्थोऽस्मि तस्माद्वैर्मालिप्सा न कर्त्तव्येत्युचितम् इन्द्रं प्रति कपटोत्तरम् ॥ १०४ ॥

विश्वदृश्वनयना इत्यनेन सूचितस्योत्तरमाह । वित्तेति । अत्र यदीत्यध्याहार्यम् । हे देवा यदि यूयं सर्वसाक्षित्वात् अखिलस्य सकलस्य चित्तं मनोवृत्तिं वित्त जानीत तथापि धुर्यकार्यस्य प्रधानकार्यस्य दमयन्तीप्राप्तिलक्षणस्य परिपन्थि विरोधि तु पुनर्मौनं तूष्णीम्भावं न कुर्यां न करोमि । यद्यपि सर्वज्ञत्वाद्युष्माभिर्मदीया मयैतन्नाङ्गीकर्त्तव्यमिति मनोवृत्तिर्ज्ञातैव तथाप्यत्र मौनावलम्बनं नोचितमित्युच्यते श्रूयतामित्यर्थः । वरं गिरा नैतत् कर्त्तुं शक्नोमीति निष्ठुर-वचनेन ह्रीर्लज्जा अस्तु भवतु अपरास्ता अप्रतिषिद्धा पुनः परवाक् अनभिमतं परस्य वचनं स्वी-कृतैव अप्रतिषिद्धमनुमतं भवतीति न्यायात् अङ्गीकृतैव माभूत् अतोयुष्माभिर्मदभिप्राये विदितेऽपि दार्ढ्यार्थं पुनर्वचनेन प्रतिषिध्यामीति भावः । 'प्रत्यर्थिपरिपन्थिनः' अ । वित्तेत्ति लोटो मध्यमपुरुषबहुवचनरूपम् ॥ १०५ ॥

यन्मताविति । येषां युष्माकं मतौ बुद्धावेव विमलदर्पणिकायां निर्मलादर्शे अखिलं सकलं तत्त्वं प्रमेयं खलु निश्चितं सम्मुखस्थं विषयीभूतम् अथ च अग्रवर्त्ति तेऽपि सर्वसाक्षिणोऽपि यूय तस्मै मह्यम् ईदृशम् एतादृशीम् आज्ञां किं कथं वितरथ दत्थ या आज्ञा यस्य यस्मै वितरीतुं दातुं न सदृशी न योग्या सर्वसाक्षिणां युष्माकं भैमीकामुकाय अस्मदर्थं भैमीदौत्यं कुर्वित्याज्ञा-वितरणं नोचितमिति भावः । दर्पण एव दर्पणिका क्वचित् स्वार्थिकप्रत्ययाः प्रकृतितो लिङ्ग-वचनान्यतिक्रम्य वर्त्तन्त इति स्त्रीत्वम् । ईदृशमिति क्विवन्तं, यस्येति संप्रदानत्वाविवक्षायां सम्बन्ध-विवक्षया षष्ठी । वितरीतुमिति 'वृङ्वृञ ॠतामि'त्यादिना ईड् ॥ १०६ ॥

यामीति । हे देवा अहम् इह अस्मिन् समये पथि वा यां भैमीं वरीतुं यामि गच्छामि अहो आश्चर्ये सोपहाससम्बोधने वा वो युष्माकं तद्दूततां तस्यां दौत्यं तु पुनः कथं करवाणि कुर्याम् । वत कष्टं महतां माहात्म्यवताम् ईदृशां लोकपालानां युष्माकं तृणस्य तृणवदतिक्षुद्रस्य मम वञ्चने प्रतारणायां घृणापि करुणापि जगुप्सापि वा न जाता अपि तु घृणैव कर्त्तुमुचिता । महद्भि-

---

अत्र छेकानुप्रासः ॥ १०४ ॥ वाक्यार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १०५ ॥ निरङ्गं व्यस्तं केवलरूपकम् छेकानुप्रासेन संसृज्यते ॥ १०६ ॥

उद्भ्रमामि विरहान्मुहुरस्या-मोहमेमि च मुहूर्त्तमहं यः ।
ब्रूत वः प्रभवितास्मि रहस्यं रक्षितुं स कथमीदृगवस्थः ॥ १०८ ॥
यां मनोरथमयीं हृदि कृत्वा यः श्वसिम्यथ कथं स तदग्रे ।
भावगुप्तिमवलम्बितुमीशे दुर्ज्जया हि विषया विदुषापि ॥ १०९ ॥
यामिकाननुपमृद्य च माद्दृक् तां निरीक्षितुमपि क्षमते कः ।
रक्षिलक्षजयचण्डचरित्रे पुंसि विश्वसिति कुत्र कुमारी ॥ ११० ॥

र्हि महानेव प्रतार्यो न तु लघीयान् अहन्तु युष्माकं कारुण्यास्पदमतो मयि न युज्यते तादृक प्रतारणेत्यर्थः। 'घृणा जुगुप्साकृपयोः' मे ॥ १०७ ॥

त्वामिहैकमनिवेश्य रहस्यइत्यनेन कर्मणो रहस्यत्वादत्र त्वमेव नियोज्य इति यत्प्रतिपादितं तस्योत्तरमाह। उद्भ्रामीति। योऽहम् अस्या भैम्या विरहाद्वियोगान्मुहुः प्रतिक्षणम् उद्भ्रामामि सोन्मादो भवामि मुहूर्त्तं व्याप्य क्षणे क्षणे मोहं मूर्च्छाञ्च एमि प्राप्नोति सोऽहं ईदृगवस्थ एतादृङ्मूर्च्छोन्मादरूपकामदशाद्वययुक्तः सन् वो युष्माक रहस्यं गोप्यमर्थं रक्षितुं गोपयितुं कथं प्रभवितास्मि प्रभुर्भविष्यामि ब्रूत यूयं कथयत युष्माकं रहस्यम् उन्मादवशाद्व्यक्तीकरिष्यामि मूर्च्छावशाद्वा विस्मरिष्यामि तत्कथमल नियोज्योऽस्मीत्यर्थः ॥ १०८ ॥

अपि च। यामिति। योऽहं मनोरथमयीं संकल्परूपां यां भैमीं हृदि मनसि कृत्वा निधाय श्वसिमि जीवामि सोऽहम् अथ दौत्यस्वीकारानन्तरं तस्या भैम्या अग्रे भावानां स्तम्भस्वेदादिसात्विकभावानां गुप्तिं गोपनम् अवलम्बितुम् आश्रयितुं कथम् ईशे समर्थो भवामि अपि तु तस्या दर्शनमात्रेणैव मम कामविकारा भविष्यन्तीत्यर्थः। ननु विदुषस्तव कथमेवं भविष्यतीत्याशङ्कार्थान्तरमाह हि यतो विदुषापि पण्डितेनापि विषया इन्द्रियार्था रूपादयो दुर्जया जेतुमशक्याः। यस्याः संकल्पेनापि जीवामि तस्याः साक्षात्कारे सात्विकभावा भविष्यन्त्येव ततः कुतोयुष्मद्दूत्यचिन्ता। तस्मादेतादृग्विषये नाहं नियोक्तव्य इति भावः ॥ १०९ ॥

किञ्च प्रथमं तत्र गमनमेव दुर्घटं कथञ्चित्सति वा तस्मिन् उद्देश्यं नैव सम्पत्स्यत इत्याह। यामिकानिति। चकारः पूर्वसमुच्चये मादृक् मद्विधोऽतिसुन्दरः को युवा यामिकान् प्रहरिकान् द्वारपालान् अनुपमृद्य अनिष्पीड्यैव अविनाश्यैव ताम् अन्तपुरस्थायिनीं भैमीं निरीक्षितुमपि का कथा सम्भापितुं द्रष्टुमपि क्षमते समर्थोभवति अपि तु न कोऽपीत्यर्थः। अतिसुन्दरपुरुषाणामन्तः पुरगमनानुज्ञाभावात् दौवारिकैर्निषेधे कृते तान् अविनाश्य तत्र मम प्रवेशो दुर्घट इत्यर्थः।

---

"अत्र च्छेकानुप्रासविरोधरूपकसंकरः" सा ॥ १०७ ॥ "उद्भ्रमामि' इत्यादिवाक्यानां रहस्यरक्षणाभावे कारणत्वात् वाक्यार्थहेतुक "काव्यलिङ्गम्" सा ॥ १०८ ॥ विद्वद्भिरपि विषयाणां दुर्ज्जयत्वमुक्तं स्मृतौ 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ १०९ ॥

आदधीचि किल दातृकृतार्घ्यं प्राणमात्रपणसीम यशोयत् ।
आददे कथमहं प्रियया तत् प्राणतः शतगुणेन पणेन ॥ १११ ॥
अर्थना मयि भवद्भिरिवास्यै कर्त्तुमर्हति मयापि भवत्सु ।
भीमजार्थपरयाचनवाचे यूयमेव गुरवः करणीयाः ॥ ११२ ॥

तर्हि यामिकान् विनाश्यैव प्रवेष्टव्यमित्यत्राह रक्षिणां रक्षकाणां यामिकानां लक्षस्य जयेन चण्डं भीषणं चरितं चेष्टा यस्य तादृशे कुत्र कस्मिन् पुंसि पुरुषे कुमारी अप्रगल्भा स्त्री विश्वसिति विश्वासं प्राप्नोति अपि तु न । अप्रागल्भ्यात् रक्षिलक्षसंमर्दकोलाहलं श्रुत्वा मां वा क्रूरकर्म्माणं मत्वा सा पलायिष्यत इति भावः ॥ ११० ॥

ननु दधीच्यादिभिर्मह्यं प्राणादयोऽपि दत्तास्त्वं कथमेकां स्त्रियं दातुं नेच्छसीत्याशङ्क्याह । आदधीचीति । प्राणमात्रे प्राणाएव पणसीमा मूल्यावधिर्यस्य तादृशं यत् यशः कीर्त्तिः आदधीचि दधीचिमुनिपर्यन्तं दातृभिः कृतार्घ्यं व्यवस्थितमूल्यं किलेति श्रूयते । यशः प्राणेभ्योऽधिकं मूल्यं नार्हतीति दधीच्यादिभिरपि यशोऽर्थं प्राणा एव परित्यक्ता न तु तेभ्योऽधिका इत्यर्थः । अहं तद्यशः प्राणतः प्राणेभ्यः शतगुणेनात्यधिकेन प्रियया भैमीलक्षणेन पणेन कथम् आददे अङ्गीकरिष्यामि अपि तु न कथञ्चित् । यदल्पमूल्येन लभ्यते तदधिकमूल्येन केनापि न क्रीयते मया वरं प्राणा अपि त्यक्तुं शक्यन्ते न तु भैमीं दातुं तत् किमर्थमत्र यत्नः क्रियत इति भावः ॥ १११ ॥

अर्थनेति । भवद्भिरिव युष्माभिर्यथा अस्यै भैम्यर्थं मयि अर्थना याच्ञा कर्त्तुमर्हति तथा मयापि भवत्सु युष्मासु भैम्यर्थम् अर्थना कर्त्तुमर्हति उचिता । यथा सा मां वरिष्यति तथा कर्त्तव्यमिति भवन्तो याच्यन्त इत्यर्थः । ननु त्वया कदाचिदपि कुतश्चिद्याचनं न कृत तत् कथमद्य करिष्यत इत्याशङ्क्याह । भीमजा दमयन्त्येव अर्थः प्रयोजनं तत्परा तत्फलिका या याचनवाक् मह्यं भीमजा दातव्येति याचनवचनं तस्यै भीमजार्थपरयाचनवचनशिक्षायै यूयमेव भवन्त एव गुरव उपदेशकाः करणीयाः कार्य्याः । यद्यपि मया पूर्वं कदापि न याचितं तथापीदानीं भवतां याचनवचनं श्रुत्वा भवद्भ्य एव तच्छिक्षणीयमित्यर्थः । लोकपालानामपि याचनं युक्तञ्चेन्ममापि तद्युक्तं भविष्यतीति भावः । कर्त्तुमर्हतीति 'ज्ञादिभियुक्तात्क्रियार्थार्थाच्चे'ति तुमङ् ॥ ११२ ॥

---

रक्षिलक्षेत्यादि पदार्थस्य विश्वासाभावे हेतुत्वात् पदार्थहेतुकं "काव्यलिङ्गम्" सा ॥ ११० ॥ "अत्र परिवृत्तिरलङ्कारः, प्राणैर्यशसो न्यूनपरिवृत्तिः हीनमूल्यत्वात्, प्रियया यशसोऽधिकपरिवृत्तिरधिकमूल्यत्वात्" जी । "रूपकं विषमञ्च" सा । छेकानुप्रासश्च । पुरा किल वृत्रासुरपराजितेन देवेन्द्रेण याचितो दधीचि मुंनिः योगेन प्राणांस्तत्याज । ततश्च देवराजस्तदस्थ्ना वज्रं निर्माय तेन वज्रेण वृत्रं निहतवानिति पुराणकाहिनी ॥ १११ ॥ अत्र श्रौतोपमा ॥ ११२ ॥

अर्थिताः प्रथमतो दमयन्तीं यूयमन्वहमुपास्य मया यत् ।
ह्रीर्न चेद्व्यतियतामपि तद्वः सा ममापि सुतरान्न तदस्तु ॥ ११३ ॥
कुण्डिनेन्द्रसुतया किल पूर्वं मां वरीतुमुररीकृतमास्ते ।
व्रीडमेष्यति परं मयि दृष्टे स्वीकरिष्यति न सा खलु युष्मान् ॥ ११४ ॥
तत्प्रसीदत विधत्त न खेदं दूत्यमत्यसदृशं हि ममेदम् ।
हास्यतैव सुलभा न तु साध्यं तद्विधित्सुभिरनौपयिकेन ॥ ११५ ॥
ईदृशानि गदितानि तदानी-माकलय्य स नलस्य बलारिः ।
शंसति स्म किमपि स्मयमानः स्वानुगाननविलोकनलोलः ॥ ११६ ॥

नन्वस्माभिः प्रथमं याचितं तव याचनन्तु पश्चाद्भावित्वादकिञ्चित्करमित्याशङ्कायामाह । अर्थिता इति । हे इन्द्रादयः प्रथमत आदावेव मया अन्वहं प्रतिदिनम् उपास्य संपूज्य यूयं यत् दमयन्तीम् अर्थिता याचिता पूजानन्तरं भो भगवन्तो मया भैमी लभ्यतामिति यत् वरो याचित इत्यर्थः तद्याचनं व्यतियतामतिक्रामतां वो युष्माकं चेद्यदि ह्रीर्लज्जा न भवतीति शेषः तत्तदा युष्माकं याचनमतिक्रामतो ममापि सुतरां सा लज्जा नास्तु न भवतु तस्मादादावेव मया याचितमिति मय्येव दमयन्ती लब्धुमर्हतीति भावः ॥ ११३ ॥

भवतु मया वा कथञ्चिद्दौत्यमाश्रीयतां भैमी तु युष्मान्नाङ्गीकरिष्यतीत्याह । कुण्डिनेन्द्रसुतया दमयन्त्या किल निश्चितं मां वरीतुं पूर्वम् उररीकृतमङ्गीकृतम् आस्ते अतएव सा दमयन्ती भवतां दूत्यर्थं तत्र गते मयि दृष्टे सति परं केवलं व्रीडं लज्जाम् एष्यति प्राप्स्यति । अदृष्टपूर्वं मां दृष्ट्वा मदनुरक्ततया सत्त्वोदयाल्लज्जिता भविष्यतीत्यर्थः । न खलु नैव युष्मान् स्वीकरिष्यति अङ्गीकरिष्यति । तस्मान्न दृशे कर्मणि नियोक्तव्यमिति भावः । व्रीडशब्दः पुंलिङ्गोऽप्यस्ति ॥ ११४ ॥

तदिति । हि यस्मान्मम इदं दूत्यम् अत्यसदृशम् अत्यन्तमनुचितं तत्तस्मात् यूयं प्रसीदत मयि प्रसादं कुरुत । खेदम् अनेन देवानामप्यस्माकं वचनं न कृतमिति मनसि दुःखं न विधत्त न कुरुत । अनौपयिकेन युक्तिशून्यतया तत् दूत्यं विधित्सुभिर्विधातुमिच्छुभिर्युष्माभिर्हास्यतैव उपहसनीयत्वमेव सुलभा सुप्रापा न तु न पुनः साध्यं दमयन्तीविवाहरूपं सुलभम् । 'युक्तमौपयिकं लभ्यम्' अ ॥ ११५ ॥

इदृशानीति । स बलारिरिन्द्रः नलस्य ईदृशान्येवंविधानि गदितानि भाषणानि आकलय्य श्रुत्वा तदानीं तस्मिन् समये स्वानुगानां निजमनुगच्छतां यमाग्निवरुणानाम् आननस्य मुखस्य विलोकने लोलः सन् अहो दृश्यतां युष्माभिरस्य चातुर्यं स्वीकृतमप्यधुना त्यजतीत्युपहासाय

"अत्र काव्यलिङ्गम्" सा ॥ ११३ ॥ वाक्यार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्च ॥ ११४ ॥ अत्र छेकानुप्रासः ॥ ११५ ॥

नाभ्यधायि नृपते भवतेदं रोहिणीरमणवंशभुवेव ।
लज्जते न रसना तव वाम्या-दर्थिषु स्वयमुरीकृतकाम्या ॥ ११७ ॥
भङ्गुरं न वितथं न कथं वा जीवलोकमवलोकयसीमम् ।
येन धर्म्मयशसी परिहातुं धीरहो वलति धीर तवापि ॥ ११८ ॥
कः कुलेऽजनि जगन्मुकुटे वः प्रार्थकेप्सितमपूरि न येन ।
इन्दुरादिरजनिष्ट कलङ्की कष्टमत्र स भवानपि मा भूत् ॥ ११९ ॥

धृतशरीरचापल्यः सन् किमप्यनिर्वचनीयं यथा तथा भङ्गीविशेषं कृत्वेत्यर्थः स्मयमानो हास्यं कुर्वन् शंसति स्म वक्ष्यमाणमुवाच ॥ ११६ ॥

यच्छंसति स्म तदाह । नाभ्यधायीति । हे नृपते नल रोहिणीरमणस्य चन्द्रस्य वंशे भूरुत्पत्तिर्यस्य भवतीति वा तादृशेन पुरुषेणेव भवता त्वया इदं सेयमुच्चतरतेत्यादि कुण्डिनेन्द्रसुतयेतिपर्यन्तं नाभ्यधायि नोक्तं चन्द्रवंशो हि यदङ्गीकरोति तत्परिपालयत्येव त्वया तु चन्द्रवंशोत्पन्नेनाप्यङ्गीकृतं न परिपाल्यतेऽतश्चन्द्रवंशजननोचितमिदं त्वया नोक्तमित्यर्थः । अर्थिषु याचकेष्वस्मासु स्वयमात्मनैव उरीकृतं जीवितावधि किमप्यधिकं वेत्यादिना स्वीकृतं काम्यं याचकाभिलषणीयं यया तादृशी तव रसना जिह्वा वाम्यात् अङ्गीकृतापरिपालनलक्षणप्रातिकूल्यात् न लज्जते न लज्जिता भवति अपि तु तस्या लज्जैव युज्यत इत्यर्थः । अथच रोहिणीरमणो बलीवर्दस्तद्वंशभुवेव बलीवर्देनेव त्वया इदं किं नाभ्यधायि अपि तु तादृशेनेवाभ्यधायीत्यर्थः । यथा च बलीवर्दस्य जिह्वा वाम्यात् भक्षितस्य तृणादेर्वमनात् न लज्जते, तथा तवापि जिह्वा अङ्गीकृतापरिपालनलक्षणवाम्यान्न लज्जते अतस्त्वं बलीवर्दवन्मूर्ख इत्युपहासोऽत्र ध्वन्यते । अथ च रोहिणीरमणपदेन कामित्वं कलङ्कित्वञ्चाभिप्रेतं तेन तद्वंशोद्भवस्य स्वीकृतापरिपालनान्न लज्जेति केचित् ॥ ११७ ॥

विषयनिन्दया प्रवर्त्तयन्नाह । भङ्गुरमिति । हे धीर हेयोपादेयविवेचनकुशल नल त्वम् इमं जीवलोकं कथं भङ्गुरं स्वयमेव नश्वरम् अचिरावस्थायिनं नावलोकयसि न विचारयसि कथं वा वितथं मायाकार्यत्वान्मिथ्याभूतं स्वप्नोपमं नावलोकयसि अपि तु धीरत्वात् त्वयेदमवश्यं विचारयितुं युक्तमित्यर्थः । किमर्थमेवं विचारणीयमित्यत्राह अहो चमत्कारे येनाविचारेण हेतुना तवापि का कथेतरेषां पुण्यश्लोकस्य भवतोऽपि धीर्बुद्धिर्धर्मयशसी पुण्यकीर्त्ती परिहातुं परित्यक्तुं वलति तरला भवति । नश्वरविषयभोगाय अनश्वरे धर्मयशसी न हातव्ये इत्यर्थः ॥ ११८ ॥

क इति । जगतां मुकुटे शिरोऽलङ्कारभूते श्रेष्ठे वो युष्माकं कुले एतादृशः कोऽजनि जातः येन प्रार्थकानां याचकानाम् ईप्सितमभिलषितं नापूरि न पूरितम् अपि तु सर्व एव त्वद्वंश्या दातारो जाता इत्यर्थः । केवलपदमध्याहार्यम् । अत्र कुले केवलम् आदिर्वंशादिरिन्दुश्चन्द्रः

पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते । 'बलारातिः शचीपतिः' अ ॥ ११६ ॥ अत्र अन्त्यानुप्रासः ॥ ११७ ॥ अत्र छेकानुप्रासः ॥ ११८ ॥

यापदृष्टिरपि या मुखमुद्रा याचमानमनु या च न तुष्टिः।
त्वादृशस्य सकलः स कलङ्कः शीतभासि शशकः परमङ्कः॥ १२०॥
नाक्षराणि पठता किमपाठि प्रस्मृतोऽथ भवता पठितोऽपि।
इत्थमर्थिचयसंशयदोला-खेलनं खलु चकार नकारः॥ १२१॥
अब्रवीत्तमनलः क्व नलेदं लब्धमुज्झसि यशः शशिकल्पम्।
कल्पवृक्षपतिमर्थिनमेतं नाप कोऽपि शतमन्युमिहान्यः॥ १२२॥

कलङ्की अजनिष्ट जातः। कष्टं खेदे किन्तु भवानपि स कलङ्की मा भूत् अङ्गीकृताकरणात्त्वमपि द्वितीयः कलङ्की मा भूरित्यर्थः॥ ११९॥

यथा चन्द्रस्य कलङ्कित्वं तथा ममापि तदस्तु का हानिरित्याशङ्क्याह। यापदृष्टिरिति। याचमानं याचकजनमनु लक्षीकृत्य या अपदृष्टिः सकोपदर्शनं यापि मुखमुद्रा मुखभङ्गीविशेषो मौनं वा या च न तुष्टिरसन्तोषः स सकलः समस्तस्त्वादृशस्य भवद्विधस्य कलङ्कोऽपयशः शीतभासि चन्द्रे तु परं केवलं शशको मृगोऽङ्कश्चिह्नम्। चन्द्रोहि शशचिह्नयुक्तत्वादेव कलङ्की चिह्नयुक्तः त्वन्तु अतिथ्यनादरलक्षणनिषेध्यकर्मानुष्ठानात् कलङ्की पापी भविष्यसीति भावः॥ १२०॥

स्तवेन प्रोत्साहयति। नाक्षराणीति। अक्षराणि ककारादिवर्णमातृकां पठता गुरोरधीयमानेन भवता नकारो नेतिवर्णः किं नापाठि नाधीतः। अथ किंवा पठितोऽपि नकारः प्रस्मृतो विस्मृतः। खलु निश्चितम् उत्प्रेक्षे वा इत्थमेवम् अर्थिचयस्य याचकसमूहस्य संशयः सन्देह एव दोला हिन्दोला तत्र खेलनं क्रीड़नं चकार। अपठितत्वविस्मृतत्वकोटिकसंशयविषयो बभूव। त्वया पूर्वं याचकैर्याच्यमानो निषेधवाचकं नेत्यक्षरं कदापि नोक्तम्। अधुनापि तन्न वक्तव्यमिति भावः॥ १२१॥

वह्न्यादिभिरपि नलप्रोत्साहनायोक्तं तत्र प्रथमं वह्निवचनं द्वाभ्यामनुवदति। अब्रवीदिति। अनलो वह्निस्तं नलम् तदब्रवीदुवाच। उक्तमाह हे नल शशिकल्पं चन्द्रवच्छुभ्रं लब्धं हस्तप्राप्तम् इदं यशः क्व कथम् उज्झसि त्यजसि अपि तु नैवेदं त्याज्यमित्यर्थः। क्वेति कथमित्यर्थेऽपीष्यत इति वृद्धाः। क्व कस्मिन् अन्यस्मिन् उज्झसि त्यक्तुमिच्छसि। यदि त्वया दूत्यं न स्वीक्रियते तदान्योऽभ्यर्थनीयः स यदि दूत्यं करिष्यति तदा तवेदं यशो यास्यतीत्यर्थ इति केचित्। यशोऽपि नाल्पतरमित्याह इह भूलोके अन्यस्त्वदितरः कोऽपि दाता कल्पवृक्षाणां पतिं स्वामिनं न त्वितरयाचकवदतिदरिद्रं शतमन्युं शतक्रतुं विहितयज्ञशतत्वात् पात्रोत्तमम् एतम् इन्द्र-

---

निरङ्गरूपकम्, अतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः। गुरुपत्नीहरणेन चन्द्रस्य कलङ्कित्वं जातमिति पौराणिकी वार्त्ता॥ ११९॥ "अत्रानुप्रासव्यतिरेकसमुच्चयसङ्करः" सा। छेकानुप्रासः, यमकम्, अन्त्यानुप्रासश्च॥ १२०॥ "अत्र अर्थिनामीदृक् संशयासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः, सच संशयोत्थापितः इति संकरः" जी। संशयदोलेतिरूपकम्, छेकानुप्रासश्च।१२१।

न व्यहन्यत कदापि मुदं यः स्वःसदामुपनयन्नभिलाषः ।
तत्पदे त्वदभिषेकक्रतान्नः स त्यजत्वसमतामदमद्य ॥ १२३ ॥
अब्रवीदथ यमस्तमहृष्टं वीरसेनकुलदीप तमस्त्वाम् ।
यत्किमप्यभिबुभूषति तन् किं चन्द्रवंशवसतेः सदृशन्ते ॥ १२४ ॥
रोहणः किमपि यः कठिनानां कामधेनुरपि या पशुरेव ।
नैतयोरपि वृथाऽभवदर्थी हा विधित्सुरसि वत्स किमेतत् ॥ १२५ ॥

लक्षणम् अर्थिनं याचकं नाप न प्राप्तवान् । यः सर्वमनोरथसम्पादकस्य कल्पवृक्षस्य स्वामी यश्च यज्ञशतकर्त्ता तादृशं याचकं नल एव प्राप्तवान् नान्य इति महदेव यशो न त्याज्यमित्यर्थः। अथ च कल्पवृक्षपतित्वादस्य दमयन्तीप्राप्तिः प्रकारान्तरेणापि भविष्यति त्वन्तु कथमनायासलभ्यं यशस्त्यजसीति सूचितम् ॥ १२२ ॥

नेति। स्वःसदां देवनां योऽभिलाषो मुदम् उपनयन् अभिलषितार्थोपस्थापनया हर्षं जनयन् कदापि कस्मिन्नपि काले न व्यहन्यत न विहतः स्वयमेव वा व्यर्थीकृतो नाभूत् तत्पदे अभिलापस्थाने त्वदभिषेकृतां तवाभिषेकं कुर्वतां त्वां स्थापयतां नोऽस्माकं सोऽभिलापोऽसमता-मदम् अहमेव देवानामभीष्टप्रापको नान्य इत्यसादृश्यगर्वम् अद्य त्यजतु मुञ्चतु भवल्लक्षणस्य सदृशान्तरस्य सद्भावात्। अत्रायमर्थः देवानामभिलाषोत्तरकालमेवाभिलषितवस्तूपस्थितेरव्यव-हितप्राक्क्षणावच्छिन्नत्वात् यथाभिलाषोऽभिलषितप्राप्तौ कारणं तथाभिलषितदमयन्त्याः प्राप्तेः केवलाभिलाषाजन्यतया त्वमपि कारणं भव तस्मादसादृश्यगर्वं त्यजत्वभिलाप इति। इच्छो-पस्थितविषया अपि वयं त्वद्यशो वर्द्धयितुमत्रागता इति भावः। व्यहन्यतेति कर्मणि कर्मकर्त्तरि वा रूपम्। स्वःसदामिति स्वः स्वर्गे सीदन्तीति क्विप् ॥ १२३ ॥

अथ चतुर्भिः यमवचनमनुवदति। अब्रवीदिति। अथानलवचनानन्तरम् अहृष्टं दौत्या-ङ्गीकारेऽसन्तुष्टं तं नलं यमोऽब्रवीत् उवाच। किमुवाचेत्याह हे वीरसेनकुलदीप वीरसेनकुल-प्रकाशक नल किमप्यनिर्वचनीयं तमो दमयन्त्यप्राप्तिसम्भावनाजन्यः शोको यत् त्वाम् अभिबुभूषति अभिभवितुमिच्छति। किमपि किञ्चिदिति क्रियाविशेषणं वा। तत्किं चन्द्रवंशवसतेश्चन्द्रवंशो-त्पन्नस्य ते तव सदृशम् उचितम् अपि त्वनुचितमेव। चन्द्रवंशोत्पन्नो हि प्राणवितरणेऽपि न शोकमङ्गीकुरुते तदुत्पन्नेन त्वयापि तथाविधेनैव भवितव्यं न त्वेवंविधेनेत्यर्थः। अथ च तमोऽ-न्धकारो यद्दीपरूपं त्वामभिबुभूषति तदनुचितमेव तमसो दीपनाश्यत्वादिति ध्वनिः। एवं तमो राहुश्चन्द्रशत्रुत्वाच्चन्द्रवंशोत्पन्नमपि त्वां यदभिबुभूषति तद्युज्यत एवेत्युपहासश्च। 'तमो ध्वान्ते गुणे शोके क्लीबं वा ना विधुन्तुदे' मे ॥ १२४ ॥

रोहण इति। यो रोहणो विदूराद्रिः स कठिनानां कर्कशानाम् अथ च कृपणाग्रगण्यानां मध्ये

---

"अत्र च्छेकानुप्रासोपमाकाव्यलिङ्गम्" सा ॥ १२२ ॥ "अत्र व्यतिरेकः काव्यलिङ्गञ्च" सा ॥ १२३ ॥ निरङ्गं रूपकम्, अतिशयोक्तिः, पदार्थहेतुकं काव्यलिङ्गञ्च ॥ १२४ ॥

याचितश्चिरयति क नु धीरः प्राणने क्षणमपि प्रतिभूः कः ।
शंसति द्विनयनी दृढनिद्रां द्राङ्निमेषमिषघूर्णनपूर्णा ॥ १२६ ॥
अभ्रपुष्पमपि दित्सति शीतं सार्थिना विमुखता यदभाजि ।
स्तोककस्य खलु चञ्चुपुटेन म्लानिरुल्लसति तद्घनसंघे ॥ १२७ ॥

किमपि लोकोत्तरः कठिनः । यापि कामधेनुः सापि पशुरेव गौरेव अथ च अज्ञैव । एतयोरपि रोहणकामधेन्वोरपि अर्थी याचको वृथा निष्फलो नाभवत् अपि तु सफल एव बभूव । हा कष्टं हे वत्स एतत् किम् अर्थिप्रातिकूल्यं विधित्सुरसि कर्त्तुमिच्छसि । कठिनानामचेतनानामपि अज्ञानां पशूनामपि च याचको नैव निष्फलो भवति तव तु सरसहृदयस्यापि बुद्धिमतोऽपि च याचका वयं निष्फला भवाम इति महाननय इति भावः ॥ १२५ ॥

याचित इति । धीरो विवेचको याचितो याचकैः प्रार्थितः सन् क नु चिरयति चिरं विलम्बं करोति अपि तु न क्वापि याचनाव्यवधानकाल एव ददातीत्यर्थः । यतः क्षणमपि अल्पकालमपि प्राणने जीवने कः प्रतिभूर्लग्नकः अपि तु न कोऽपि । उत्तरकालजीवननिश्चयाभावात् यद्यन्तरा मरणं स्यात्तदा दानं न भवेदिति मनसि कृत्वा झटित्येव धीरो ददातीत्यर्थः । कथमाशुमरणाशङ्केत्यत्राह द्राक् झटिति निमेषमिषेण नेत्रसङ्कोचव्याजेन यद्घूर्णनं तेन पूर्णा द्विनयनी चक्षुर्द्वयं दृढनिद्रां महानिद्रां मरणं शंसति कथयति । यथा निमेषः शीघ्रं भवति तथा मरणमपि शीघ्रं भवतीति सूचयतीत्यर्थः । तस्माद्धीरेण त्वया मरणस्य शीघ्रभावित्वात् शीघ्रमेव दातव्यमिति भावः ॥ १२६ ॥

अभ्रेति । अर्थिना जलयाचकेन स्तोक एव स्तोककस्तस्य चातकस्य चञ्चुपुटेन सा प्रसिद्धा विमुखता विलम्बजनितं पराङ्मुखत्वं यदभाजि आश्रिता तत् खलु तस्मादेव हेतोः शीतं शीतलम् अभ्रपुष्पं जलं दित्सत्यपि दातुमिच्छत्यपि घनसङ्घे मेघवृन्दे म्लानिर्मालिन्यं याचकवैमुख्यजनिताऽकीर्त्तिरुल्लसति स्फुरति । चातकेन जले याचिते मेघस्य दानेच्छायां जातायामपि तत्क्षणाददानात् श्यामत्वरूपमयशो जातमित्यर्थः । खलूत्प्रेक्षायां वा । अकीर्त्तेर्मलिनत्वेन वर्णनीयत्वाद्युक्तमुत्प्रेक्षितम् । अथ च स्तोककस्य अतिनिकृष्टस्यार्थिना मुखेन पराङ्मुखत्वं यदाश्रितं तस्मादेव हेतोः अभ्रपुष्पमपि गगनकुसुमतुल्यम् असम्भवं वस्त्वपि भवतु अन्विष्य दातव्यमिति दातुमिच्छति मेघतुल्ये पुरुषे म्लानिरकीर्त्तिरुल्लसति असम्भवमपि याचमानस्यातिनिकृष्टस्यापि याचकस्य वैमुख्येन अन्विष्य दातुमिच्छतोऽपि वस्त्वनुपस्थितेर्विलम्बकारिणोऽकीर्त्तिर्जायते, किं पुनरिन्द्रादीनां सुलभमपि याचतां वैमुख्येन कथमपि दातुमनिच्छतस्तव वक्तव्यम् । तस्मादविलम्बं

एतादृशः महानपि भवान् याचकप्रत्याख्यानेन पशुपाषाणाभ्यामपि निकृष्टो भवितुमिच्छति किमित्यर्थः । व्यतिरेकश्छेकानुप्रासश्च ॥ १२५ ॥ 'श्वः कार्यमद्य कर्त्तव्यं पूर्वाह्णे चापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतमस्य नवा कृतम्' इति नीतिवाक्यम् । कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासः, सम्भवद्वस्तु सम्बन्धरूपा निदर्शना, अपह्नुतिः, छेकानुप्रासश्चेति संसृष्टिः ॥ १२६ ॥

ऊचिवानुचितमक्षरमेतं पाशपाणिरपि पाणिमुदस्य ।
कीर्त्तिरेव भवतः प्रियदारा दाननीरझरमौक्तिकहारा ॥ १२८ ॥
चर्म वर्म किल यस्य न भेद्यं यस्य वज्रमयमस्थि च तौ चेत् ।
स्थायिनाविह न कर्णदधीची तन्न धर्ममवधीरय धीर ॥ १२९ ॥
अद्य यावदपि येन निबद्धौ न प्रभू विचलितुं बलिविन्ध्यौ ।
आस्थितावितथतागुणपाश-स्त्वादृशा स विदुषा दुरपासः ॥ १३० ॥

त्वयाऽस्मभ्यं दातव्यं न चेदतितरामकीर्त्तिस्ते स्थास्यतीति भावः। 'अभ्रं मेघो वारिवाहः' 'अभ्रं व्योम पुष्करमम्बरम्' 'मेघपुष्पं घनरसः' 'चञ्चुस्त्रोटिरुभे स्त्रियौ' अ । 'स्तोकः स्याच्चातकाल्पयोः' हे ॥ १२७ ॥

अथ नवभिर्वरुणवचनमनुवदति। ऊचिवानिति। पाशपाणिरपि वरुणोऽपि पाणिमुदस्य हस्तमुत्तोल्य एतं नलम् उचितं युक्तम् अक्षरं वचनम् ऊचिवान् उक्तवान्। किं तदित्याह भवतां भवादृशां चन्द्रवंश्यानां कीर्त्तिरेव प्रियदाराः प्रेयस्यः स्त्रियः किम्भूता दाने क्रियकाणे यन्नीरं जलं तस्य यो झरः प्रवाहः स एव मौक्तिकहारो यस्याः सा। अतः कीर्तिरेव त्वया स्थापनीया नतु स्त्रीनिमित्ताकीर्त्तिरिति भावः। पाशपाणिरित्यनेने नियोगाकरणे त्वां बन्धनं प्रापयिष्यामीति सूचितम्। पाणिमुदस्येति याचकस्वभावः ॥ १२८ ॥

चर्मेति। यस्य कर्णस्य चर्म त्वक् वर्म कवचम् न भेद्यमच्छेद्यं, यस्य च दधीचेर्वज्रमयं वज्ररूपमस्थि किलेति श्रूयते तौ तादृशावपि कर्णदधीचौ इह पृथिव्यां चेद्यदि न स्थायिनौ, उत्पत्स्यमानः कर्णो न स्थास्यति उत्पन्नो दधीचिर्न स्थित इत्यर्थः। हे धीर प्राज्ञ तत्तस्माद्धर्मं नावधीरय नावजानीहि धर्ममेव चिरस्थायीति मत्वा सर्वं परित्यज्य सएव रक्ष्यतामित्यर्थः। अस्मद्दौत्यस्वीकारे तव चिरस्थायिधर्मः भविष्यतीति भावः। द्वापरयुगोत्पन्नस्य कर्णस्य वृत्तान्तोत्कीर्त्तनं कल्पभेदादविरुद्धमिति केचित् ॥ १२९ ॥

अद्येति। येन पाशेन निबद्धौ बलिविन्ध्यौ असुरविशेषपर्वतविशेषौ अद्य यावदपि अद्यपर्यन्तमपि विचलितुम् अन्यथा भवितुं प्रतिज्ञामनिर्वोढुं न प्रभू न समर्थौ जातौ किन्तु तद्वशेन यावद्याप्यङ्गीकृतं परिपालयतः एकः पाताले तिष्ठति अन्यश्चोर्द्ध्वं न वर्द्धत इत्यर्थः स आस्थितस्याङ्गीकृतस्य अवितथता

---

मेघेषु यः कालिमा दृश्यते, तस्य च याचकानां चातकानामभिलषितार्थस्य जलस्य विलम्बेन दानमेव हेतुरिति भावः। तस्मादविलम्बेनैव त्वयास्माकमभिलाषः पूरणीयः। सति विलम्बे तवैवानपनेयः कलङ्कः स्यादिति तात्पर्यम्। गम्योत्प्रेक्षा ॥ १२७ ॥ "अत्र छेकानुप्रासो रूपकञ्च" सा। परिसंख्या, लाटानुप्रासः, अन्त्यानुप्रासश्चेति संसृष्टिः। 'प्रचेता वरुणः पाशी' 'भार्या जायाथ पुंभूम्नि दाराः' अः। १२८ ॥ "अत्र विरोधः" सा। अस्थायित्वेन सह अभेद्यचर्मवर्मणोः वज्रमयास्थ्नोश्च विरोधात्। छेकानुप्रासश्च, 'वार्त्ता सम्भाव्ययोः किल' अ ॥ १२९ ॥

प्रेयसी जितसुधांशुमुखश्री-र्या न मुञ्चति दिगन्तगतापि।
भङ्गिसङ्गमकुरङ्गदृगर्थे कः कदर्थयति तामपि कीर्त्तिम्॥ १३१॥
यान् परं प्रति परेऽर्थयितार-स्तेऽपि यं वयमहो स पुनस्त्वम्।
नैव नः खलु मनोरथमात्रं श्राग पूरय दिशोऽपि यशोभिः॥ १३२॥

सत्यतारूपो यो गुणः स एव पाशो बन्धनहेतुत्वाद्रज्जुः विदुषा पण्डितेन त्वादृशा भवादृशेन जनेन दुरपासोऽपनेतुमशक्यः। 'अङ्गीकृतं सुकृतिनः परिपालयन्ति' इति शिष्टोक्तेस्त्वयापि जीविताविधि किमप्यधिकं वेत्याद्यङ्गीकृतं परिपाल्यतामित्यर्थः। दैत्यपाषाणाभ्यामप्यङ्गीकृतं सत्यं कृतं त्वया तु विदुषा कथं न कर्त्तव्यमिति भावः॥ १३०॥

प्रेयसीति। प्रेयसी प्रियतमा जिता सुधांशुमुखानां चन्द्रादीनां श्रीर्धावल्यशोभा यया तादृशी च या कीर्त्तिर्दिगन्तगतापि दिशामन्तं प्राप्तापि सती न मुञ्चति तत्सम्बन्धित्वेन गीयमानत्वात् तं न त्यजति तामपि तथाविधामपि कीर्त्तिं को विवेकशून्यो जनो भङ्गी विच्छेदवान् विनश्वरः सङ्गमो यस्यास्तादृश्याः कुरङ्गदृशो मृगनयनायाः स्त्रियोऽर्थे निमित्तम् अथ च कुत्सितो रङ्गो ययोस्तादृशौ दृशौ यस्यास्तन्निमित्तं कदर्थयति अवजानाति विनाशयति वा अपि तु नित्यां कीर्त्तिं विहाय अनित्यां स्त्रियं न कोऽपि वाञ्छतीत्यर्थः। तस्मात्त्वयापि भैमीलिप्सां विहाय कीर्त्तिरेव जगति स्थाप्यतामिति भावः। कुरङ्गदृगपि प्रेयसी प्राणेश्वरी तथा जितः सुधांशुश्चन्द्रो यया तादृशी मुखश्रीर्यस्यास्तादृशी च किन्तु सा न चिरस्थायिनी कीर्त्तिस्तु चिरस्थायिनीत्यनयोर्महान् विशेषः॥ १३१॥

यामिति। परेऽन्ये यान् अस्मान् प्रति उद्दिश्य परं केवलम् अर्थयितारो याचितारो न तु दातार इत्यर्थः परमेवार्थे यान् पर यानेव अर्थयितार इति केचित्। वरमिति क्वचित् पाठः, वरम् अभीष्टम् उद्दिश्येत्यर्थः। अहो आश्चर्यं तेऽपि निखिलजनप्रार्थ्यमाना अपि वयं यम् अर्थयितारः स

"अत्र रूपकम्" सा। अवितथागुणे पाशत्वारोपात्। गुणपाशशब्दयोरापाततः पौनरुक्त्यप्रतीतेः पुनरुक्तवदाभासश्च। पुरा किल बलिपराजितेन च्युतेन्द्रपदेन महेन्द्रेण प्रार्थितः भगवान् नारायणः वामनशरीरं परिगृह्य बलियज्ञे ततः पादत्रयमितां भूमिं लब्ध्वा विराड् रूपेण द्वाभ्यां चरणाभ्यां स्वर्गं भूलोकं च आच्छाद्य तृतीयपदं बलेः शिरसि दत्त्वा तं पातालमनयत्, त्रैलोक्यं च पुनरिन्द्राय ददौ इति। मेरुजिगीषया वर्द्धमानं निरुद्धरविमार्गं विन्ध्यं समालोक्य लोकनाशभीतदेवैः प्रार्थितः विन्ध्यगुरुर्महर्षिरगस्त्यः विन्ध्यसमीपमागत्य गुरुदर्शनाद् विनतं तं यावदहं नागमिष्यामि तावदेवं नतेन त्वया स्थातव्यमित्युक्त्वा दक्षिणां दिशं जगाम, स नाद्यापि प्रत्यावृत्तः विन्ध्यश्च नत एव स्थितः इति च पौराणिकी कथा॥ १३०॥ स्त्रियाः उपमानभूतकीर्त्तेरुत्कर्षकथनात् व्यतिरेकः, कीर्त्तौ साधुस्त्रीव्यवहारस्य भङ्गिसङ्गमकुरङ्गदृशि च दुष्टसपत्नीव्यवहारस्य समारोपात् समासोक्तिः, समासगतोपमा च॥ १३१॥

अर्थितां त्वयि गतेषु सुरेषु म्लानदानजनितोरुयशःश्रीः ।
अद्य पाण्डु गगनं सुरशाखी केवलेन कुसुमेन विधत्ताम् ॥ १३३ ॥
प्रवसते भरतार्जुनवैण्यवत् स्मृतिधृतोऽपि नल त्वमभीष्टदः ।
स्वगमनाफलतां यदि शङ्कसे तदफलं निखिलं खलु मङ्गलम् ॥ १३४॥
इष्टिं नः प्रति ते प्रतिश्रुतिरभूदाद्या सुराह्लादिनी
धर्मार्था सृज तां श्रुतिप्रतिभटीकृत्यान्विताख्यापदाम् ।

एवंविधः पुनस्त्वं न त्वन्य इत्यर्थः । हे शूर दानशूर खलु निश्चितं नोऽस्माकं मनोरथमालं केवलमभिलापं नैव पूरय सफलय किन्तु दिशोऽपि यशोभिः लोकपाला अपि नलस्य याचका जाता इति कीर्त्तिभिः पूरय व्याप्ताः कुरु । अस्माकं मनोरथपूरणाय प्रवृत्तेन त्वया महती कीर्त्तिरपि जनयिष्यत इति भावः ॥ १३२ ॥

अर्थितामिति । सुरेषु देवेषु इन्द्रादिषु त्वयि अर्थितां याचकतां गतेषु प्राप्तेषु सत्सु म्लाना मलिनीभूता विनष्टप्राया दानजनिता उर्वी महती यशश्रीः कीर्त्तिशोभा यस्य तादृशः सुरशाखी कल्पवृक्षः अद्य इदानीं केवलेन कीर्त्तेर्मालिन्यादसहायेन कुसुमेन पुष्पेण करणेन गगनमाकाशमम्बरं पाण्डु श्वेतं विधत्तां करोतु । एतावत्कालं कीर्त्तिकुसुमाभ्यां गगनं श्वेतं चकार अधुना तु त्वत्तः कीर्त्तेर्विनाशात् कुसुमेनैव तत् करोत्विति भावः ॥ १३३ ॥

अथ छन्दोऽन्तरेण सर्गशेषं सूचयति । प्रवसत इति । हे नल त्वं भरतार्जुनवैण्यवत् भरतो दुष्मन्तपुत्रः अर्जुनः कार्त्तवीर्यः वैण्यः पृथुस्तद्वत् स्मृतिधृतोऽपि स्मरणविषयीकृतोऽपि प्रवसते प्रवासिने जनाय अभीष्टं वाञ्छितं ददातीति तादृशो भवसीति शेषः । स त्वं यदि स्वगमनस्य आत्मगमनस्य अफलतां निष्फलतां वृथाऽहं गमिष्यामि कार्यसिद्धिर्न घटेतेत्येवंरूपां शङ्कसे भावयसि तर्हि निखिलं समस्तं मङ्गलं शुभसूचक भरतादिस्मरणं शुभशकुनादिदर्शनं वा खलु निश्चितम् अफलं निष्फलं भवेदिति शेषः । तव गमनस्य निष्फलत्वे भरतादिनामस्मरणस्यापि वैयर्थ्यप्रसङ्गः स्यादित्यर्थः । भरतादिनामस्मरणस्य मङ्गलजनकत्वं यथा । 'वैण्यं पृथुं हैहयमर्जुनञ्च शाकुन्तलेयं भरतं नलञ्च । एतान् नृपान् यः स्मरति प्रयाणे तस्यार्थसिद्धिः पुनरागमञ्च'ति । द्रुतविलम्बितमिदं वृत्तम् ॥ १३४ ॥

इष्टिमिति । हे नल नोऽस्माकम् इष्टिम् इच्छां प्रति लक्षीकृत्य आद्या प्रथमा सुरान् देवा-

---

अत्र देवमनोरथपूरणरूपे सुकरे कार्ये दैवात् वस्त्वन्तरभूतायाः कीर्त्तेरागमात् समाधिः, छेकानुप्रासश्च ॥१३२॥ अत्र अतिशयोक्तिः, पदार्थहेतुकं काव्यलिङ्गम्, आर्थी परिसंख्या च । सुरशाखिनः उपमानस्य नलादुपमेयाद् न्यूनताबोधाद्व्यतिरेकालङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः ॥ १३३ ॥ "यत् स्मरणादन्येषामर्थसिद्धिः तस्य तथार्थसिद्धौ कः सन्देहः इति भावः" जी। वृत्त्यनुप्रासोऽलङ्कारः ॥ १३४ ॥

त्वत्कीर्त्तिः पुनती पुनस्त्रिभुवनं शुभ्राद्वयादेशना-
द्द्रव्याणां शितिपीतलोहितहरिन्नामान्वयं लुम्पतु ॥ १३५ ॥
यं प्रासूत सहस्रपादुदभवत्पादेन खञ्जः कथं
स च्छायातनयः सुतः किल पितुः सादृश्यमन्विष्यति ।
एतस्योत्तरमद्य नः समजनि त्वत्तेजसां लङ्घने
साहस्रैरपि पङ्गुरङ्घ्रिभिरभिव्यक्तीभवन् भानुमान् ॥ १३६ ॥

तस्मान् आह्लादयितुमानन्दयितुं शीलं यस्यास्तादृशी। स्वराह्लादिनीति पाठे स्वर्गाह्लादजनिका स्वरेणाङ्गीकारसूचकस्वनेन आह्लादिनीति वा। धर्म एवार्थः प्रयोजनं यस्यास्तादृशी या प्रतिश्रुतिः प्रतिश्रवः जीवितावधि किमप्यधिकं वेत्येवंरूपोऽङ्गीकारोऽभूत् तां प्रतिश्रुतिं सत्यत्वेन श्रुतेर्वेदस्य प्रतिभटीकृत्य सदृशीकृत्य अन्वितं यौगिकं श्रुतेः प्रति प्रतिनिधिरित्यर्थयुक्तम् आख्यापदं प्रतिश्रुतिरिति नामशब्दो यस्यास्तादृशीं सृज कुरु सत्यां कुर्वित्यर्थः। अङ्गीकृतं परिपालयेति भावः। तथा सति तव यशोऽप्यतितरां भविष्यतीत्याह त्रिभुवनं त्रिलोकीं पुनती पवित्रयन्ती अथ च शुभ्रत्वादुज्वलं कुर्वती पुनस्त्वत्कीर्त्तिः शुभ्रस्य श्वेतवर्णस्य अद्वयम् अद्वैतं तस्यादेशनात् करणात् द्रव्याणां क्षित्यादित्रिकवृत्तयो ये शितिपीतलोहितहरितः कृष्णगौररक्तपालाशा वर्णभेदास्तेषां यानि नामानि शितीत्यादीनि तेषामन्वयं सम्बन्धं स्वनिष्ठवाचकतानिरूपितवाच्यतारूपं लुम्पतु विनाशयतु। सर्वस्य श्वेतीकरणात् कृष्णादिवर्णाभावो भवत्वित्यर्थः। तव सर्वत्र व्यापिनी कीर्त्तिर्भविष्यतीति भावः। श्रुतिरपि इष्टिं यागमुद्दिश्य प्रवर्त्तते घृतादिदानोपदेशकतया देवानामाह्लादिनी। पाठान्तरे तु स्वरैरुदात्तादिभिः श्रोतॄणामाह्लादयित्री। स्वराह्लादः स्वरशब्दस्तद्वतीति वा। तथा धर्म एवार्थः प्रतिपाद्यं यस्यास्तादृशी तस्याः श्रुतेः कीर्त्तिः कीर्त्तनञ्च त्रिभुवनं पुनाति एकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतेश्च अद्वैतभानं जनयति शितिपीतलोहितहरिन्नामान्वयं मायासम्बन्धं लुम्पति 'अजामेकां लोहितशुक्लकृष्णामि'त्यादिश्रवणान्माया लोहितादिरूपा। 'इष्टिर्यागेच्छयोः' 'शिती धवलमेचकौ' अ। शार्दूलविक्रीडितमिदं वृत्तम् ॥१३५॥

यमिति। सहस्रपात् सहस्रचरणोऽथ च सहस्रकिरणः सूर्य्यो यं प्रासूत जनयामास स छायायाः सूर्यपत्न्यास्तनयः पुत्रः शनैश्चरः कथ पादेन खञ्जः पङ्गुरुदभवत् उत्पन्नः किल यतः सुतः पुत्रः पितुर्जनयितुः सादृश्यं साम्यम् अन्विष्यति प्राप्नोति कारणगुणाः कार्य्यगुणमारभन्त इति न्यायात् एतस्य निरुक्तप्रकारस्य प्रश्नस्य अद्य इदानीं त्वत्तेजसां तव प्रतापानां लङ्घनेऽतिक्रमणे विषये साहस्रैरपि सहस्रसंख्यकैरपि अङ्घ्रिभिश्चरणैः अथ च किरणैः पङ्गुः खञ्जोऽथच असमर्थोऽभिव्यक्तीभवन् प्रकटीभवन् भानुमान् सूर्य्यो नोऽस्माकम् उत्तरं प्रतिवाक्यं समजनि जातः। पितुः पङ्गुत्वात् सुतरां पुत्रस्य पङ्गुत्वं युक्तमित्यर्थः। रवितेजसस्तव तेजोऽधिकतरमिति व्यतिरेकोऽत्र

"अत्र नीलादीनां वस्तूनां स्वगुणत्यागेन कीर्त्तिगुणग्रहणात् तद्गुणालङ्कारः" जी। श्रुतिप्रतिभटीकृत्येति उपमा च्छेकानुप्रासश्च ॥ १३५ ॥

इत्याकर्ण्य क्षितीशस्त्रिदशपरिषदस्ताशिरश्चाटुगर्भा
वैदर्भीकामुकोऽपि प्रसभविनिहितं दौत्यभारं बभार ।
अङ्गीकारङ्गतेऽस्मिन्नमरपरिवृढः सम्भृतानन्दमूचे
भूयादन्तर्द्धिसिद्धेरनुविहितभवच्चित्तता यत्र तत्र ॥ १३७ ॥
श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
तस्य श्रीविजयप्रशस्तिरचनातातस्य नव्ये महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत्पञ्चमः ॥ १३८ ॥

ध्वन्यते । पादेनेति 'येनाङ्गी विकृत' इति तृतीया । 'छाया सूर्य्यप्रिया' अ । विसर्ग-लोपनिबन्धनसन्धिनिषेधस्याच्सन्धिप्रतियोगिकत्वान्न सच्छायेत्यत्र सन्धिनिषेधः ॥ १३६ ॥

इत्याकर्ण्येति । क्षितीशो नलः भैदर्भ्या भैम्याः कामुकोऽपि अभिलाषुकोऽपि त्रिदशपरिषदो देवसमूहस्य इत्येवंप्रकाराश्चाटुगर्भाः प्रियोक्तिमध्यास्ताः पूर्वोक्ता गिरो वचनानि आकर्ण्य श्रुत्वा प्रसभविनिहितं बलादारोपितं दौत्यमेव दुर्वहत्वात् भारं बभार करिष्यामीत्यङ्गीचकार । अस्मिन् नले अङ्गीकारं गते प्राप्ते सति अमरपरिवृढो देवानां प्रभुरिन्द्रः सम्भृतानन्दमुपचितहर्षं यथा तथा ऊचे नलं प्रत्युवाच । उक्तमेवाह हे नल यत्र तत्र सर्वत्रैव देशे काले च अन्तर्द्धिसिद्धेरन्तर्द्धान-सिद्धेः अनुविहितम् अनुसृत भवच्चित्तं तव मनोरथो यया तस्या भावस्तत्ता त्वदिच्छानुसारित्वं भूयात् यदा यत्र तिरोधातुकामो भविष्यसि तदा तत्रान्तर्धानसिद्धिर्भविष्यतीत्यर्थः । अतएव यामिकाननुपमृद्य त्याद्याशङ्का न कर्त्तव्येति भावः । स्रग्धरावृत्तमिदम् ॥ १३७ ॥

श्रीहर्षमित्यादि । श्रीविजयप्रशस्तिरचनाया ग्रन्थविशेषस्य तातस्य जनकस्य साप्त्वनेन कृतेति भावः । नव्ये नव्यजनादरणीये नूतनप्रमेये वा । नैषधीयचरित इत्यत्र क्वचिद्वैरसेनिचरित इति पाठः वैरसेनिर्नलः । पञ्चमः पञ्चानां पूरकोऽयं सर्गोऽगमत् समाप्तिम् ॥ १३८ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायां नैषधटीकायामन्वयबोधिकासमाख्यायां
पञ्चमः सर्गः समाप्तः ।

---

"अत्र अर्कस्यापङ्गोः पङ्गुत्वोक्तेरतिशयोक्तिभेदः तद्धेतुत्वञ्च शनैश्चरपङ्गुत्वस्येत्युत्प्रेक्षा" जी । पादशब्दश्लेषेण च किरणचरणाभेदाध्यवसायमूला चेयमुत्प्रेक्षा, ततः उपमानात् सूर्यान्नलस्याधिक्य-प्रतीतेः व्यतिरेको ध्वनिः । 'पादाः रश्म्यङ्घ्रितुर्यांशाः' 'मन्दः शनिः पङ्गुकालश्छाया-पुत्रोऽसितश्च सः' 'भानुः करो मरीचिः' अ । शार्दूलविक्रीडितं वृत्तम् ॥ १३६ ।

पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति सङ्करः । 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणम् ॥ १३७ ॥

५ मः सर्गः समाप्तः ।

# षष्ठः सर्गः ।

दौत्याय दैत्यारिपतेः प्रवृत्तो द्विषां निषेद्धा निषधप्रधानम् ।
स भीमभूमीपतिराजधानीं लक्षीचकाराथ रथस्यदस्य ॥ १ ॥
भैम्या समं नाजगणद्वियोगं स दूतधर्मे स्थिरधीरधीशः ।
पयोधिपाने मुनिरन्तरायं दुर्वारमप्यौर्वमिवौर्वशेयः ॥ २ ॥

अथ षष्ठसर्गमारभमाणः पञ्चमसर्गशेषोक्तस्य दूत्यभारं बभारेत्येतस्यैकवाक्यतार्थं दौत्यमङ्गीकृत्याथ नलः कुण्डिनपुरं प्रस्थितवानित्याह । दौत्यायेति । अथ दौत्याङ्गीकारानन्तरं दैत्यारिपतेर्देवप्रभोरिन्द्रस्य दौत्याय दूतकर्म कर्तुं प्रवृत्तो जातप्रवृत्तिः सन् द्विषां शत्रूणां निषेद्धा निवारणसमर्थो निषधप्रधानं निषधदेशाधिपः स नलो भीमभूमीपतेर्भीमनाम्नो राज्ञो राजधानीं कुण्डिननगरीं रथस्यदस्य रथवेगस्य लक्षीचकार उद्देश्यां चकार कुण्डिननगरीं प्रति प्रस्थितवानित्यर्थः । इन्द्रादीनां चतुर्णामपि दूत्याय प्रवृत्तावपि प्राधान्याद्दैत्यारिपतिपदेनेन्द्रोपादानम् । द्विषां निषेद्धेत्यनेन भीमस्य भयानकस्यापि भूपतेराजधानीप्रवेशोऽस्य भीतिर्नासीदिति सूचितम् । रथस्यदस्येत्यनेन दौत्यस्यानीप्सितत्वेऽपि अङ्गीकृतस्यावश्यनिष्पाद्यत्वज्ञानात् सत्वरमेव रथं चालयामास न तु भावनया मन्दमिति सूचितम् । प्रधानशब्दस्याजहल्लिङ्गत्वान्न पुंलिङ्गेन सामानाधिकरण्यविरोधः । 'रंहस्तरसी तु रयः स्यदः' अ । अस्मिन् सर्गे क्वचिदिन्द्रवज्रा क्वचिदुपेन्द्रवज्रा क्वचिदुपजातिवृत्तम् एतेषां लक्षणमुक्तं प्राक् ॥ १ ॥

तदानीं भैम्यप्राप्तिनिश्चयजन्यं दुःखमपि तस्य नाभवदित्याह । भैम्येति । अधीशः प्रभुर्नलः दूतधर्मे दौत्यानुष्ठाने दुर्वारमपि निवारयितुमशक्यमपि अन्तरायं विघ्नरूपं भैम्या समं वियोगं विच्छेदं नाजगणत् न गणयामास । किम्भूतः यतः स्थिरधीरक्षोभ्यहृदयः । उपमिनोति इव यथा और्वशेय उर्वशीपुत्रो मुनिरगस्त्यः पयोधिपाने समुद्रपाने दुर्वारमपि दाहकत्वादन्तरायम् और्वं वाडवानलं नाजगणत् तथेत्यर्थः । वियोगलक्षणे विघ्ने सत्यपि निष्कपटेन हृदयेन दूतकर्मणि प्रवृत्तवानित्यर्थः । और्वशेय इति युक्तं पदम् उरु बहु अश्नातीति उर्वशी, बहुभोजिन्याः पुत्रस्तस्य विघ्नमविगणय्यैव बहुभोजनं युक्तम् । अजगणदिति 'जागृगणोर्वे'ति अनः सन्वद्भावाभावः । 'और्वस्तु वाडवो वडवानलः' अ ॥ २ ॥

---

अत्र छेकानुप्रासः ॥ १ ॥ अत्र श्रौतोपमा, पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्च । पुरा किल तपस्यतोः मित्रावरुणयोः सकाशे विचरन्त्या उर्वश्याः रूपमनावृतमसाधारणं विलोकयतोः रेतश्चस्कन्द । तस्य च कियानंशस्तत्रत्ये जलपूर्णे कुम्भे पपात । रेतसश्चाव्यर्थतया तस्मात् कुम्भाज्जातो मुनिः कुम्भसम्भवापरनामाऽगस्त्यः । वृत्रासुरवधात् परं भयेन समुद्रं प्रविष्टैर्जगद्-

नलप्रणालीमिलदम्बुजाक्षी-संवादपीयूषपिपासवस्ते ।
तदध्ववीक्षार्थमिवानिमेषा देशस्य तस्याभरणीबभूवुः ॥ ३ ॥
तां कुण्डिनाख्यापदमात्रगुप्ता-मिन्द्रस्य भूमेरमरावतीं सः ।
मनोरथः सिद्धिमिव क्षणेन रथस्तदीयः पुरमाससाद ॥ ४ ॥
भैमीपदस्पर्शकृतार्थरथ्या सेयं पुरीत्युत्कलिकाकुलस्ताम् ।
नृपो निपीय क्षणमीक्षणाभ्यां भृशं निशश्वास सुरैः क्षताशः ॥ ५ ॥

इन्द्रादयोऽपि नलागमनप्रतीक्षया तत्रैव स्थिता इत्याह। नलेति। ते इन्द्रादयस्तस्य नलस्य योऽध्वा पुनरागमनमार्गस्तस्य या वीक्षा निरीक्षणं तदर्थमिव अनिमेषा निमेषरहिताः सन्तः यस्मिन् देशे नलेन सह संवादोऽभूत् तस्य देशस्य आभरणीबभूवुः अलङ्कारका भूताः। नलस्य पुनरागमनप्रतीक्षया तत्रैव स्थिता इत्यर्थः। किम्भूता नल एव प्रणाली द्वारं तया मिलतो मिलिष्यत आगमिष्यतोऽम्बुजाक्ष्या दमयन्त्याः संवादपीयूषस्य रहस्यकथालक्षणामृतस्य पिपासवः पानाभिलाषिणः नलद्वारा भैमीरहस्यकथाशुश्रूषव इत्यर्थः। देवत्वात् स्वाभाविकमपि निमेषशून्यत्वं भैमीरहस्यकथनार्थं नलः कदागमिष्यतीति नलमार्गप्रतीक्षार्थत्वेनोत्प्रेक्षितम् ॥ ३ ॥

अथ नलस्य कुण्डिनपुरप्राप्तिमाह। तामिति। स वेगित्वेन प्रसिद्धस्तदीयो नलसम्बन्धी रथः क्षणेनाल्पकालेन भूमेरिन्द्रस्य भीमराजस्य तां नगरीम् आससाद प्राप्तवान्। किम्भूतां कुण्डिनाख्यापदमात्रेण केवलं कुण्डिनमिति नामशब्देन गुप्तां गोपितां व्यवच्छिन्नाम् अमरावतीं साक्षादिन्द्रपुरीम्। अमरावतीकुण्डिननगर्योः स्वरूपतः ऐक्यमेव किन्तु नाममात्रेण भेद इत्यर्थः। उपमिनोति इव यथा मनोरथस्तपस्विनामभिलाषः क्षणेन सिद्धिं प्राप्नोति तथा। मनोरथदृष्टान्तेन रथस्यातिवेगित्वं सूचितम् ॥ ४ ॥

तत्र गतस्य नलस्य भैमीस्मरणाद्विकारं वर्णयति। भैमीति। भैमीपदस्पर्शेन दमयन्तीचरणसम्पर्केण कृतार्था सफलजन्मा रथ्या मार्गो यत्र तादृशी यत्र भैमी विचरति सा इयं पुरीति प्रत्यभिज्ञाय उत्कलिकया उत्कण्ठया आकुल उन्मनाः सन् नृपो नलः क्षणं व्याप्य ईक्षणाभ्यां चक्षुर्भ्यां तां नगरीं निपीय सादरमालोक्य भृशमत्यन्तं निशश्वास निश्वसिति स्म। किम्भूतः यतः सुरैर्देवैः क्षता दौत्यादेशनात् खण्डिता आशा भैमीप्राप्तिप्रत्याशा यस्य तादृशः ॥ ५ ॥

---

विनाशाय यतमानैः कालकेयादिभिरसुरैः रात्रौ रात्रौ बहिर्निर्गत्य निहतेषु मुनिगणेषु श्रीमद्भगवदुपदेशेनासुरवधार्थिभिर्देवैः प्रार्थितोऽगस्त्यः समुद्रं पपौ, माता उर्वशी च तं तत्र वरुणभयाद् ररक्ष। ततश्च देवैः कालकेयादयः निहताः इति पुराणवार्त्तात्रानुसन्धेया ॥ २ ॥ अत्र नले प्रणाल्याः, संवादे पीयूषस्य, स्वेषु चाभरणानामारोपाद् रूपकमलङ्कारः, तथा देवानां स्वभावादेवानिमेषत्वेऽपि तदध्ववीक्षणार्थत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ३ ॥ "अत्र व्यतिरेकरूपकालङ्कारसङ्करः" सा। कुण्डिनाख्यापदमात्रगुप्तामिति अपह्नुतिः, पुरे अमरावतीत्वारोपाद् रूपकम्, मनोऽपेक्षया रथस्य क्षणेनेति उत्कर्षकथनाद् व्यतिरेकः ॥ ४ ॥ "अत्र छेकानुप्रास-

स्विद्यत्प्रमोदाश्रुलवेन वामं रोमाञ्चभृत्पक्ष्मभिरस्य चक्षुः।
अन्यत्पुनः कम्प्रमपि स्फुरत्त्वा-त्तस्याः पुरः प्राप नवोपभोगम्॥ ६॥
रथादसौ सारथिना सनाथा-द्राजावतीर्य्याशु पुरं विवेश।
निर्गम्य बिम्बादिव भानवीयात् सौधाकरं मण्डलमंशुसङ्घः॥ ७॥
चित्रं तदा कुण्डिनवेशिनः सा नलस्य मूर्त्तिर्ववृते न दृश्या।
बभूव तच्चित्रतरन्तथापि विश्वैकदृश्यैव यदस्य मूर्त्तिः॥ ८॥

तस्य नगरीदर्शनाद्धर्षमाह। स्विद्यदिति। प्रमोदेन दमयन्त्यधिष्ठिता नगरी मया दृष्टेति हर्षेण जनितो योऽश्रुलवो बाष्पकणस्तेन स्विद्यत् सात्त्विकभावविशेषं स्वेदं भजत् तथा पक्ष्मभिर्नेत्ररोमभी रोमाञ्चं सात्त्विकभावविशेषं बिभर्त्तीति तादृशम् अस्य नलस्य वामं चक्षुः तस्याः पुरः कुण्डिननगर्य्या नवोपभोगं प्रथमदर्शनम् अथ च नवीनकामुकत्वं प्राप प्राप्तवान् तथा अन्यदितरद्दक्षिणं चक्षुः पुनः स्फुरतीति स्फुरत् तस्य भावः स्फुरत्त्वं तस्मात् भविष्यद्दमयन्तीलाभसूचकस्फूर्त्तिमत्त्वात् कम्प्रमपि सत्त्वोदयेन कम्पनशीलमपि तस्याः पुरो नवोपभोगं प्रथमदर्शनं प्राप। अन्यस्यापि कामिनो नवोपभोगे स्वेदादयः सात्त्विकभावा जायन्ते। पुंसामकस्माद्वामचक्षुषः साश्रुत्वं दक्षिणचक्षुषः स्फुरणञ्च भविष्यन्मङ्गलसूचकमित्येवं वर्णितम्। केचित्तु वामं चक्षुः साश्रुत्वात् न वा नैव उपभोगं प्राप दक्षिणं चक्षुस्तु नवोपभोगं प्रापेति पदभङ्गेनान्वयं व्याचक्षते। स्फुरत्त्वादिति क्वचित् पाठः तत् प्रसिद्धम्। क्वचिच्च स्फुरद्वेति पाठस्तत्र वा शब्द एवार्थः। स्फुरत्तु इति पाठस्तु न सम्यक् पुनःशब्दोपादानेनैव तुकारस्य नैष्फल्यात्॥ ६॥

अस्य कुण्डिनपुरप्रवेशमाह। रथादिति। अथानन्तरम् असौ राजा नलः सारथिना सनाथादधिष्ठितात् रथादवतीर्य। अवरुह्य पुरं कुण्डिननगरम् आशु शीघ्रं विवेश प्रविष्टवान्। रथे सारथिं संस्थाप्य एकाकी पुरं प्रविष्टवानित्यर्थः। उपमिनोति इव यथा अंशुसंघः किरणसंघो भानवीयात् सूर्यसम्बन्धिनो बिम्बात् मण्डलात् निर्गम्य निर्य्याय सौधाकरं चन्द्रसम्बन्धिमण्डलं विशति तथा। अमृतपिण्डरूपस्य चन्द्रबिम्बस्य सूर्यकिरणसम्पर्केण तेजस्वित्वं भवतीति ज्योतिषिकाः। तथाच शिद्धान्तशिरोमणौ भास्कराचार्यः। 'तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति। तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट इव निजमूर्त्तिच्छाययैवातपस्थ' इति॥ ७॥

पुरप्रविष्टस्यास्य भूयादन्तर्द्धिसिद्धिरित्यादीन्द्रवचनाददृश्यत्वमाह। चित्रमिति। तदा

---

काव्यलिङ्गभावशबलतालङ्कारसङ्करः" सा ॥ ५॥ "आनन्दाश्रुपक्ष्मोत्क्षेपाक्षिस्पन्देषु स्वेदादिस्वात्त्विकभावरूपणाद्रूपकम्, तदुत्थापितनवोपभोगव्यवहारसमारोपणात् पुरीचक्षुषोः स्त्रीपुंसत्वप्रतीतेः रूपकसंकीर्णा समासोक्तिरलंकारः" जी ॥ ६॥ "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमोनैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः। इति शास्त्रादियमुपमा" जी। छेकानुप्रासश्चेति संसृष्टिः। उपमालङ्कारेण च राज्ञः नलस्य प्रवेशेन पुरस्य चन्द्रोदयेनेव

जनैर्विदग्धैर्भवनैश्च मुग्धैः पदे पदे विस्मयकल्पवल्लीम् ।
विगाहमाना पुरमस्य दृष्टि-रथाददे राजकुलातिथित्वम् ॥ ९ ॥
हेलां दधौ रक्षिजनेऽस्त्रसज्जे लीनश्चरामीति हृदा ललज्जे ।
द्रक्ष्यामि भैमीमिति संतुतोष दूत्यं विचिन्त्य स्वमसौ शुशोच ॥ १० ॥

तस्मिन् समये कुण्डिनवेशिनः कुण्डिनपुरप्रवेशिनो नलस्य सा चक्षुर्ग्राह्या मूर्त्तिस्तनुर्यद् दृश्या चक्षुर्ग्राह्या न वव्रृते न संवृत्ता तच्चित्रम् आश्चर्यम् एतावन्तं कालं चक्षुर्ग्राह्या स्थिता अधुना त्वकस्मात्तादृशी न भवतीत्याश्चर्यमेवेत्यर्थः। अथच सा रमणीयत्वेन प्रसिद्धा नलस्य मूर्त्तिर्यद् दृश्या रमणीया न वव्रृते तदाश्चर्यमेव। यद्यपि दृश्या न वव्रृते तथापि अस्य नलस्य मूर्तिर्यत् विश्वेषां सर्वजनानाम् एका मुख्या दृश्यैव चक्षुर्ग्राह्यैव अथच रमणीयैव बभूव तच्चित्रतरम् अतीवाश्चर्यम्, अदृश्यस्य विश्वजनदृश्यत्वमत्याश्चर्याय भवत्येव। 'दृश्यं दर्शनयोग्ये स्याद्रमणीयेऽपि चेष्यते' इति बलः ॥ ८ ॥

अस्य राजपुरदर्शनमाह। अस्य नलस्य दृष्टिः पदे पदे स्थाने स्थाने वर्त्तमानैः विदग्धैश्चतुरैर्जनैः पुरवासिभिः मुग्धैर्मनोज्ञैर्भवनैः प्रासादैश्च करणैर्विस्मयस्याश्चर्यस्य कल्पवल्लीं कल्पलतां विस्मयजनिकामित्यर्थः पुरं कुण्डिननगरीं विगाहमाना दर्शनविषयिणीं कुर्वती सती अथानन्तरं राजकुलस्यातिथित्वम् आतिथ्यम् आददे प्राप्तवती राजा राजसदनं ददर्शेत्यर्थः। 'मुग्धस्तु सुन्दरे मूढे' 'कुलं जनपदे गोत्रे स्वजातीयगणेष्वपि। भवने च तनौ क्लीबं कण्टकार्यौषधौ कुली' मे ॥ ९ ॥

तत्र प्रविष्टस्यास्य युगपद्भावानाह। हेलामिति। असौ नलः अस्त्रैः करवालादिभिः सज्जा यस्य तादृशे अस्त्रसन्नद्धेऽपि रक्षिजने राजगृहरक्षकलोके हेलाम् अवज्ञां दधौ एते किमपि मम कर्त्तुं न शक्नुवन्तीति गर्वं दधारेत्यर्थः। तथा अहं लीनश्चरामि राजा भूत्वापि चौरवददृश्यो गच्छामीति हृदा मनसा विचिन्त्य ललज्ज लज्जितवान्। तथा अद्य भैमीं द्रक्ष्यामि अवलोकयिष्यामीति विचिन्त्य सन्तुतोष हर्षं लेभे। तथा स्वं स्वकीयं दूत्य विचिन्त्य को वा मम लाभो भैमीदर्शने यतोऽहं दूत इति विचार्येत्यर्थः शुशोच शोकं प्राप्तवान्। दूतस्य मम तस्यामभिलापोऽनुचित इति मत्वा आत्मानं निनिन्देति भावः। अत्र चतुर्णां गर्वादिभावानां मिश्रितत्वाद्भावशबलता ॥ १० ॥

---

समुज्ज्वलता जातेति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ७ ॥ सा दर्शनीया नलमूर्त्तिरदृश्या वव्रृते इत्येकः विरोधाभासः, तथा अदृश्यापि विश्वैकदृश्या बभूवेति अपरः, अनयोर्विरोधाभासयोः संसृष्टिः ॥ ८ ॥ अत्र विस्मयकल्पवल्लीम् इतिरूपकम्, छेकानुप्रासश्च ॥ ९ ॥ अत्र चतसृष्वपि क्रियासु एकस्य कर्त्तृत्वाद् दीपकम् तथा गर्वलज्जाहर्षनिर्वेदानां बहूनां भावानां परस्परोपमर्द्देन समावेशाद् भावशबलता। यदाह दर्पणकारः, 'रसभावौ तदाभासौ भावस्य प्रशमोदयौ। सन्धिः शबलता चेति सर्वेऽपि रसनाद् रसाः। सञ्चारिणः प्रधानानि देवादिविषया रतिः। उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते, तथा 'भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः॥ १० ॥

अथोपकार्य्यामम रेन्द्रकार्य्यात् कक्षासु रक्षाधिकृतैरदृष्टः।
भैमीन्दिदृक्षुर्बहु दिक्षु चक्षु-र्दिशन्नसौ तामविशद्विशङ्कः॥ ११॥
अयं क इत्यन्यनिवारकाणां गिरा विभुर्द्वारि विभुज्य कण्ठम्।
दृशन्ददे विस्मयनिस्तरङ्गां स लङ्घितायामपि राजसिंहः॥ १२॥
अन्तःपुरान्तः स विलोक्य बालां काञ्चित्समालब्धुमसंवृतोरुम्।
निमीलिताक्षः परया भ्रमन्त्या सङ्घट्टमासाद्य चमच्चकार॥ १३॥
अनादिसर्गस्रजि वानुभूता चित्रेषु वा भीमसुता नलेन।
जातेव यद्वा जितशम्बरस्य सा शाम्बरीशिल्पमलक्षि दिक्षु॥ १४॥

इतः प्रभृत्यन्तःपुरप्रविष्टस्य नलस्य व्यापारमाह। अथेति। अथानन्तरम् असौ नलोऽमरेन्द्रकार्यात् सुरपतेः प्रयोजनाद्धेतोः अमरा वरुणादयश्च इन्द्रश्च ते तथा तेषां कार्याद्वा तां दृष्ट्वा उपकार्यां राजसदनम् अविशत् प्रविष्टवान्। किम्भूतः कक्षासु अन्तःपुरप्रकोष्ठेषु वर्त्तमानैः रक्षायां रक्षणे ये अधिकृता नियुक्तास्तैर्द्वारपालैः कर्तृभिरदृष्टः भूयादन्तर्द्धिसिद्धिरित्यादिदेववरादनालोकितः अतएव विशङ्को निर्भयो भूत्वा भैमीं दिदृक्षुर्द्रष्टुमिच्छुः सन् बहु अनेकवारं दिक्षु आशासु बहुदिक्षु सर्वासु दिक्षु वा चक्षुर्दिशन् प्रेरयन्। अनाहूतस्य परान्तःपुरप्रवेशनिषेधादमरेन्द्रकार्यादित्युक्तम्। पाञ्चस्तु अमरेन्द्रकार्यादिन्द्रवरदानाददृष्ट इत्यन्वयमाचक्षते। 'उपकार्या राजसद्मन्युपकारोचितेऽन्यवत्' मे। 'कक्षाः प्रकोष्ठे हर्म्यादेः' अ॥ ११॥

अयमिति। स विभुर्विभवशाली राजसिंहो राजश्रेष्ठो नलः लङ्घितायामपि अतिक्रान्तायामपि द्वारि उपकार्याद्वारे अयं क इत्यन्यनिवारकाणाम् अन्यजननिषेधकानां गिरा वाचा हेतुभूतया कण्ठं विभुज्य वक्रीकृत्य विस्मयेन कथमहमदृश्योऽप्येतैर्दृष्ट इत्याश्चर्येण निस्तरङ्गां निश्चलां स्थिरां दृशं चक्षुर्ददे दत्तवान्। सिंह इत्यनेन दृष्टेऽप्यात्मनि निर्भयत्वं सूच्यते, सिंहोऽप्यवज्ञया ग्रीवां वक्रीकृत्य गर्वेण दृष्टिं पश्चाद्ददाति। विभुज्येति 'भुजकौटिल्ये' इत्यस्य रूपम्॥ १२॥

अन्तःपुरेति। स नलः अन्तःपुरस्यान्तर्मध्ये समालब्धुमुद्वर्त्तयितुम् असंवृतौ अनावृतौ वस्त्रशून्यीकृतौ ऊरू यया तादृशीं काञ्चिद् बालां स्त्रियं विलोक्य दृष्ट्वा निमीलिते तथाविधाया दर्शनानर्हत्वान्मुद्रिते अक्षिणी चक्षुषी येन तादृशः सन् भ्रमन्त्या इतस्ततो गच्छन्त्या परया अन्यया स्त्रिया सङ्घट्टं सम्पर्कम् आसाद्य प्राप्य चमच्चकार किमिदमनुचितं जातमित्यकस्मात् स चकितो बभूव निमीलिताक्ष इति 'स्वाङ्गाभ्यां सक्थ्यक्षिभ्यामि'ति टः॥ १३॥

अनादीति। सा भीमसुता दमयन्ती नलेन दिक्षु प्रतिदिशम् अलक्षि दृष्टा। नन्वसन्नि-

---

पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः॥ ११॥ श्रोत्रपथं प्रविष्टेषु स्वल्पेष्वपि शब्दादिषु ग्रीवाभङ्गेन दर्शनं लोकानां स्वभावसिद्धमिति स्वभावोक्तिरलङ्कारः। राजसिंह इति समासगतोपमा। "सिंहस्य ग्रीवाभङ्गेन लङ्घिताध्वदर्शनं युक्तमितिभावः" जी॥ १२॥ पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः॥ १३॥

अलीकभैमीशतदर्शनान्न तस्यान्यकन्याप्सरसो रसाय ।
भैमीभ्रमस्यैव ततः प्रसादा-द्भैमीभ्रमस्तेन न तास्वलम्भि ॥ १५ ॥
भैमीनिराशे हृदि मन्मथेन दत्तस्वहस्ताद्विरहाद्विहस्तः ।
स तामलीकामवलोक्य तत्र क्षणादपश्यन् व्यषदद्विबुद्धः ॥ १६ ॥

कृष्टायाः कथं दर्शनं नच शुक्तौ रजतबुद्धिवद् भ्रमरूपं तत् अननुभूतस्य भ्रमविषयतानङ्गीकारेण भैम्यास्तथात्वासम्भवादित्थमाशङ्क्य भ्रम एवायमिति निश्चित्य तस्यान्यथानुपपत्त्या पूर्वानुभवं शंसते । सा किम्भूता अनादिः प्रवाहरूपत्वादनवधिर्या सर्गस्रक् सृष्टिपरम्परा तस्यां वा अनुभूता जन्मान्तरेऽपि परिगृहीतत्वादनुभवविषयीकृता । ननु जन्मान्तरीणसंस्कारस्य प्रायेणोद्बोधासम्भवात् कथं तस्याः स्मरणमित्यत आह अथवा किंवा चित्रेषु आलेख्येषु अनुभूता । ननु चित्रे निश्चेष्टैव भैमी दृष्टा यादृशो ह्यनुभवस्तादृश एव भ्रमो जायते नचात्र तथा सचेष्टाया एवास्या नलेन लक्षितत्वादित्यत आह यद्वा अथ वा जातेव मिथ्या भैमी उत्पन्नेव वा अलक्षि शुक्त्यादौ अनिर्वचनीयं मिथ्यारजतादिकमुत्पद्यत इति वेदान्तिनः । नन्विदं वैशेषिकादीनां बहूनां विरुद्धमित्यत आह जितः शम्बरो दैत्यविशेषो येन तादृशस्य मदनस्य या शाम्बरी शम्बरसम्बन्धिनी माया तस्याः शिल्पम् । अत्र वाकारोऽनुपञ्जनीयः शाम्बर्या निर्माणकौशलं वा अतिमायाविनं शम्बरासुरं जयता कामेन तस्य मायाप्यपहृता तन्माययैवेयं निर्मिता वेत्यर्थः । तन्मयतारूपया काम दशयैव तेनेत्थं लक्षितमिति भावः ॥ १४ ॥

अलीकेति । अलीकस्य मिथ्याभूतस्य पूर्वोक्तरीत्या भ्रमविषयतया भासमानस्य भैमीशतस्य दर्शनात् अलीकभैमीशतेनाकृष्टचित्तत्वादित्यर्थः अन्या भैमीभिन्ना कन्या अप्सरस इवेति तादृश्यः स्ववैश्यातुल्या अपि भैमीसख्यस्तस्य नलस्य रसाय अनुरागाय न बभूवुरिति शेषः । अप्सरस्तुल्यासु तात्त्विकीष्वपि भैमीसखीष्वननुरज्य अत्युत्कृष्टतया अलीकेष्वपि भैमीशतेष्वनुरक्तो बभूवेत्यर्थः । ननु तास्वेव भैमीभ्रमः कथं नाभूदित्यत आह ततस्तस्य भैमीभ्रमस्यैव भैमीभ्रान्तौ तारतम्यज्ञानस्य प्रसादात् सामर्थ्यात् तासु अन्यकन्याप्सरःसु भैमीभ्रमो नालम्भि न प्राप्तः । अलीकदृष्टाया भैम्याः सकाशात्तासामतिहीनत्वात् सादृश्यलक्षणभ्रान्तिकारणाभावाद्भैमीभ्रान्तिर्नोत्पन्नेत्यर्थः । तत इति षष्ठ्याः स्थाने तसिः ॥ १५ ॥

भैमीति । भैम्यां विषये निराशे दौत्याङ्गीकारात् विगततृष्णेऽपि हृदि मनसि वर्त्तमानेन मन्मथेन कामेन दत्तः स्वहस्तः स्वहस्तावलम्बनं यस्मै तादृशात् कामेन कृतसाहाय्यात् उद्दीपिता-

---

अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः, मिथ्याभूतदमयन्तीसाक्षात्कारे जन्मान्तरानुभवो वा, चित्रानुभवो वा, मन्मथमायाबलं वा हेतुरिति हेतूत्प्रेक्षा, निरङ्गं केवलरूपकञ्चेत्येतेषां सङ्करः । एतेन तन्मयतारूपविप्रलम्भदशा सूचिता ॥ १४ ॥ अन्यकन्याप्सरसः इत्युपमा, प्रसादादिवेतिप्रतीतेः प्रतीयमानोत्प्रेक्षा, च्छेकानुप्रासश्चेति संसृष्टिः ॥ १५ ॥

प्रियां विकल्पोपहृतां स याव-द्दिगीशसन्देशमजल्पदल्पम्।
अदृश्यवाग्भीषितभूरिभीरु-भवो रवस्तावदचेतयत्तम्॥ १७॥
पश्यन् स तस्मिन् मरुतापि तन्व्या-स्तनौ परिस्प्रष्टुमिवात्तवस्त्रौ।
अक्षान्तपक्षान्तमृगाङ्कमास्यं दधार तिर्य्यग्बलितं विलक्षः॥ १८॥
अन्तःपुरे विस्तृतवागुरेऽपि बालावलीनां वलितैर्गुणौघैः।
न कालसारं हरिणन्तदक्षि-द्वयं प्रभुर्बन्द्धुमभून्मनोभूः॥ १६॥

दिति यावत् विरहाद्विच्छेदाद्विहस्तो व्याकुलः स नलः तत्रान्तःपुरे क्षणादल्पकालम् अलीकां मिथ्याभूतां तां भैमीमवलोक्य भ्रान्तिविपर्यीकृत्य अनन्तरं विबुद्धो दोषापगमात् भ्रान्तिरहितो भूत्वा अपश्यन् भैमीमनवलोकयन् सन् व्यषदत् विषादं प्राप्तवान्। दौत्याङ्गीकारात् हृदि भैमी-निराशे सतीति वा। येन हस्तो दत्तस्तस्यैव विहस्तत्वं हस्तराहित्यं युक्तम् अत्र तु तद्विपरीतं जातमिति विरोधो व्यङ्ग्यः। 'विहस्तव्याकुलौ समौ' अ॥ १६॥

प्रियामिति। स नलो विकल्पेन सङ्कल्पेन उपहृताम् उपनीतां प्रियां भैमीं यावत् दिगीशानां दिक्पालानाम् इन्द्रादीनां सन्देशं संवादम् अल्पं किञ्चित् अजल्पत् अवोचत् तावत्तस्मिन्नेव क्षणे अदृश्यस्य दर्शनाविषयस्य नलस्य वाचा भीषितास्त्रासिता भूरयोऽनेका भीरवो भयस्वभावाः स्त्रियस्ताभ्यो भव उत्पत्तिर्यस्य स ताभ्यो भवः उत्पन्नो वा रवः शब्दस्तं नलम् अचेतयत् चेतनां प्रापयामास सावधानं चकार। भ्रान्तिवीक्षितामपि भैमीं प्रति इन्द्रादिभिस्त्वमेवमुक्तेति यावद्वक्तुमारब्धवान् तावदनेनैव शब्देन अदृश्यो भूतादिः कोऽप्यन्तःपुरे समागत इति भीतानां स्त्रीणां कलकलेन अभ्रान्तो भूत्वा तूष्णीं बभूवेत्यर्थः॥ १७॥

पश्यन्निति। तस्मिन्नन्तःपुरे मरुतापि अचेतनेन वायुनापि अथ च देवेनापि परिस्प्रष्टुमिव ईषन्मर्द्दयितुमिव आत्तवस्त्रौ अपसारितावरणौ कस्याश्चित्तन्व्याः स्तनौ कुचौ पश्यन् अबुद्धिपूर्वकमकस्माद्विलोकयन् स नलः अदृश्यो खलु परस्त्रीस्तनाविति विलक्षो विमनाः सन् तिर्यग्बलितं तिरश्चालितं वक्रीकृतम् आस्यं मुखं दधार धारयति स्म पराङ्मुखोऽभूदित्यर्थः। किम्भूतम् आस्यम् अक्षान्तो मृगाङ्कत्वादसोढः पक्षान्तमृगाङ्कः पूर्णमासीचन्द्रो येन तादृशं चन्द्रतुल्यमित्यर्थः। प्रच्छन्नकामुकसम्भोगे चन्द्रतिरोधानं युक्तमिति तथाकृतमिति च ध्वन्यते॥ १८॥

अन्तःपुर इति। मनोभूः कामोऽन्तःपुरे बालावलीनां तरुणीश्रेणीनां वलितैः सविलासैर्गुणौघैः

---

येन हस्तो दत्तस्तस्यैव हस्तापगमाद् विहस्तता युक्ता। अत्र तु मदनेन हस्तो दत्तः, नलस्तु-विहस्तो जात इति कार्यकारणयोर्भिन्नदेशत्वादसङ्गतिः, पदार्थहेतुकं काव्यलिङ्गं भावोदयश्च॥ १६॥ भावोदयनामालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते। 'सन्देशवाक् वाचिकं स्यात्' अ॥ १७॥ परिस्प्रष्टुमिवेत्युत्प्रेक्षा, अक्षान्तपक्षान्तमृगाङ्कमित्युपमा, अक्षान्तेत्यनेन चन्द्रस्य हीनत्वाभिधानाद् व्यतिरेकः, छेकानुप्रासश्चेति संसृष्टिः। "यत्राचेतनस्य वायोरपि चपलता तत्रायं निर्विकार एवेत्यहो जितेन्द्रियत्वमस्येति भावः" जी॥ १८॥

दोर्म्मूलमालोक्य कचं रुरुत्सो-स्ततः कुचौ तावनुलेपयन्त्याः ।
नाभीमथैष श्लथवाससोऽनु मिमील दिक्षु क्रमकृष्टचक्षुः ॥ २० ॥
मीलन्न शेकेऽभिमुखागताभ्यां धर्त्तुं निपीड्य स्तनसान्तराभ्याम् ।
स्वाङ्गान्यपेतो विजगौ स पश्यन् पुमङ्गसङ्गोत्पुलके ततस्ते ॥ २१ ॥

सौन्दर्य्यादिगुणसमूहैः कृत्वा विस्तृता इतस्ततः स्थापिता वागुरा बन्धनोपाया येन तादृशः सन्नपि कालः कृष्णवर्णः कनीनिकालक्षणः सारः श्रेष्ठभागो यस्य तादृशं तथा हरिणम् अभितः पाण्डरं तस्य नलस्य अक्षिद्वयं चक्षुर्द्वयं बन्द्धुं सौन्दर्य्यादेर्वशं कर्त्तुं न प्रभुरभूत् न समर्थो बभूव । अन्तःपुरे सौन्दर्य्यादिगुणशालिनीरपि तरुणीर्दृष्ट्वा नलो न कामाधीनो बभूवेत्यर्थः । अथ च मनोभूलक्षणो मृगयुर्बालावलीनां केशपङ्क्तीनां बलितैस्त्रिगुणीकृतैर्गुणौघैरज्जुसमूहैः करणैर्विस्तृतवागुरोऽपि प्रसारित मृगबन्धनजालोऽपि कालसारं कालसारनामकं तस्य अक्षिद्वयमेव हरिणं मृगं बन्द्धुम् अन्तःपुरेऽपि न प्रभुरभूत्। अन्यो मृगयुस्तु एतादृशोपकरणोऽरण्येऽपि मृगं बन्द्धुं शक्नोतीत्याश्चर्य्यमित्यप्रस्तुतोऽर्थः । 'वागुरा मृगबन्धिनी' अ । प्रकृते तु वागुराशब्दो गौणः ॥ १९ ॥

दोर्मूलमिति । एष नलः कचं केशं रुरुत्सोरोद्धुमिच्छोः कस्याश्चित् दोर्मूलं बाहुमूलम् आलोक्य दृष्ट्वा ततोऽनन्तरम् अन्यस्यां दिशि दत्तदृष्टिः सन् अनुलेपयन्त्याः कुङ्कुमादिना विलेपयन्त्याः कस्याश्चित् तौ पीनत्वेन प्रसिद्धौ कुचौ स्तनौ आलोक्य अथानन्तर' ततोऽन्यस्यां दिशि श्लथवाससः श्लथीकृतवसनायाः कस्याश्चिन्नाभीमालोक्य तिसृषु दिक्षु क्रमेण उक्तक्रमेण कृष्टम् अन्यत आकृष्टं चक्षुर्येन तादृशः सन् अनु पश्चात् मिमील मुद्रितनयनो बभूव चतुर्थ्यां दिशस्तु पश्चाद्वर्त्तित्वात् एवंविधादृश्यरमण्यन्तरसत्त्वसम्भावनाविषयत्वाद्वा तत्र दृष्टिप्रक्षेपमकृत्वा सुकरं निमीलनमेव चकार । प्राञ्चस्तु एकस्या एव स्त्रिया दोर्मूलमालोक्य किञ्चिदधो नमितदृष्टिः सन् अनन्तरं कुचावालोक्य ततोऽप्यधोनमितदृष्टिरनन्तरं नाभीमवलोक्य लज्जावशात् दिक्षु ऊर्द्ध्वदेशादधोदेशक्रमेण कृष्टचक्षुः सन् मिमीलेति व्याचक्षते ॥ २० ॥

मीलन्निति । अभिमुखं परस्परं सम्मुखमागताभ्यां काभ्याञ्चित् स्त्रीभ्यां मध्ये वर्त्तमानो मिलन् पूर्वोक्तान्ते तोमुद्रितनयनः स नलो निपीड्य गाढ' पीड़यित्वा धर्त्तुं न शेके न शकितः । धारणाशक्तौ हेतुगर्भविशेषणमाह किम्भूताभ्यां यतोऽत्युच्चतराभ्यां स्तनाभ्यां कृत्वा सान्तराभ्यां व्यवधानसहिताभ्याम् । उभयोरत्युच्चतरस्तनावेव नलाङ्गसंश्लिष्टौ न तु तयोर्वक्षोभ्यां गाढसंश्लेषो जात इति निपीड्य धारणाशक्तौ हेतुः अनन्तरं ततः स्त्रीद्वयमध्यतोऽपेतो निर्गतः सन्नलः पुंसः परपुरुषस्य

अत्र गुणशब्दश्लेषात् गुणे रज्जुत्वस्य अक्षिद्वन्द्वे च हरिणत्वस्य आरोपात् मनोभुवि मृगयुत्वरूपणमार्थमित्येकदेशविवर्त्ति रूपकम् । सत्यपि बन्धनकारणे बन्धनायोगाद् विशेषोक्तिः, छेकानुप्रासः, वृत्त्यनुप्रासश्चेति । एतेन नलस्य जितेन्द्रियत्वं ध्वन्यते ॥ १९ ॥ अत्र पर्य्यायो, भावोदयः, तुल्ययोगिता, च्छेकानुप्रासश्चेति संसृष्टिः । 'कचः केशः शिरोरुहः' अ ॥ २० ॥

निमीलनस्पष्टविलोकनाभ्यां कदर्थितस्ताः कलयन् कटाक्षैः ।
स रागदर्शीव भृशं ललज्जे स्वतः सतां ह्रीः परतोऽपि गुर्वी ॥ २२ ॥
रोमाञ्चिताङ्गीमनु तत्कटाक्षै-र्भ्रान्तेन कान्तेन रतेर्विसृष्टः ।
मोघः शरौघः कुसुमानि नाभू-त्तद्धैर्य्यपूजां प्रतिपर्य्यवस्यन् ॥ २३ ॥
हित्वैकवर्त्मैवमिह भ्रमन्त्याः स्पर्शः स्त्रियाः सुत्यज इत्यवेत्य ।
चतुष्पथस्याभरणो बभूव लोकावलोकाय सतां स दीपः ॥ २४ ॥

अङ्गसङ्गात् देहसंसर्गात् पुलके सत्त्वोदयाज्जातरोमाञ्चे ते स्त्रियौ पश्यन् स्वाङ्गानि निजाङ्गानि विजगौ धिङ्ममैतान्यङ्गानि यत्सम्बन्धादनयोः सत्योरप्येवमभूदिति विशेषेण निन्दितवानित्यर्थः ॥ २१ ॥

निमीलनेति । निमीलनेन विवस्त्रस्त्रीणां स्तनादिदर्शनात् चक्षुर्मुद्रणेन परस्त्री संसर्गात्, स्पष्टविलोकनेन च प्रकटावलोकनेन च कदर्थितो विरक्तीकृतः स नलः रागेणानुरागेण द्रष्टुं शीलमस्य तादृशो जन इव कटाक्षैरपाङ्गदर्शनैस्ताः स्त्रियः कलयन्नवलोकयन् सन् भृशमत्यन्तं ललज्जे लज्जितवान् । यदा निमीलनं तदा सङ्घट्टनं यदा स्पष्टविलोकनं तदा स्तनादिदर्शनम् अतः कटाक्षैस्ता दृष्ट्वा अनन्तरं रागेण परस्त्रीलम्पट एवं पश्यतीति मत्वा अतिशयितां लज्जां प्राप्तवानित्यर्थः । ननु लज्जा अन्यस्मात् पश्यतो भवति तत् कथमस्यादृश्यस्य सा जातेत्यर्थान्तरन्यासेनोपपादयति सतां साधूनां परतोऽपि अन्यापेक्षयापि स्वतो गुर्वी अतिमहती ह्रीर्लज्जा जायते, स्वतो यावती लज्जा भवति तावती परतो न, तस्माददृश्योऽपि कटाक्षावलोकनेन स्वयमेव लज्जित इत्यर्थः ॥ २२ ॥

रोमाञ्चिताङ्गीमिति । रोमाञ्चितांगीम् अनु अङ्गसंसर्गात् पुलकितदेहां स्त्रियं प्रति पूर्वोक्ताद्धेतोर्जायमानैस्तस्य नलस्य कटाक्षैर्हेतुभिर्भ्रान्तेन नलोऽनुरागादेव रोमाञ्चिताङ्गीमिमां प्रति कटाक्षं करोतीति भ्रान्तिमता रतेः कान्तेन कामेन विसृष्टो विक्षिप्तः कुसुमानि पुष्पलक्षणः शरौघो बाणसमूहस्तस्य नलस्य धैर्यपूजां प्रति पर्यवस्यन् धैर्यपूजापर्यवसायी भवन् मुख्यप्रयोजनाभावेऽपि नलसदृशः कोऽपि धीरो नास्तीति तद्धैर्यपूजायामुपयोगं गच्छन् सन् मोघो विफलो नाभूत् अपि तु सफलो बभूव । पूजा हि पुष्पैः क्रियत इति तथोक्तम् ॥ २३ ॥

हित्वेति । इह एकवर्त्मान्तः पुरे भ्रमन्त्या इतस्ततो विचरन्त्याः स्त्रियाः स्पर्शः एवं करणेन

---

अत्र प्रथमार्द्धे 'स्तनसान्तराभ्या'मिति पदार्थस्य धारणाशक्तौ हेतुत्वात्, परार्द्धे 'पुमङ्गसङ्गोत्पुलके पश्यन्' इति वाक्यार्थस्य स्वाङ्गगर्हनहेतुत्वाच्च काव्यलिङ्गद्वयम्, भावोदयः, छेकानुप्रासश्चेति संसृष्टिः ॥ २१ ॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, श्रौतोपमा, पदार्थहेतुकं काव्यलिङ्गञ्चेति सङ्करः ॥ २२ ॥ "अत्र नलधैर्य्यभङ्गार्थे प्रयुक्तस्य कुसुमशरजालस्य न केवलं तदभञ्जकत्वम् प्रत्युत तत्पूजकत्वमापन्नमित्यनर्थोत्पत्तिलक्षणो विषमालङ्कारः" जी । भ्रान्तिमान्, पदार्थहेतुकम् काव्यलिङ्गम्, छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ २३ ॥

उद्वर्त्तयन्त्या हृदये निपत्य नृपस्य दृष्टिर्न्यवृतद् द्रुतैव ।
वियोगिवैरात् कुचयोर्नखाङ्कै-रर्द्धेन्दुलीलैर्गलहस्तितेव ॥ २५ ॥
तन्वीमुखं द्रागधिगत्य चन्द्रं वियोगिनस्तस्य निमीलिताभ्याम् ।
द्वयं द्रढीयः कृतमीक्षणाभ्यां तदिन्दुता च स्वसरोजता च ॥ २६ ॥

सुत्यजः सुखेन त्यक्तुं शक्यते न त्वन्यथा इत्यनेत्य निश्चित्य एकवर्त्म एकपदीं हित्वा सतां साधूनां दीपः प्रकाशकः साधूनां मध्ये उज्ज्वलो वा स नलः लोकानां कर्मभूतानां पुरलोकानाम् अवलोकाय दर्शनाय चतुष्पथस्य शृङ्गाटकस्य आभरणो बभूव अलङ्कारको जातः तत्रैव गतवानित्यर्थः । अन्यो दीपोऽपि लोककर्तृकावलोकाय चतुष्पथे स्थाप्यते । चतुष्पथमिति चतुर्णां पथां समाहार इति 'ऋगादेरि'त्यादिना अत्समासान्तः ॥ २४ ॥

उद्वर्त्तयन्त्या इति । उद्वर्त्तयन्त्या विलेपनं कुर्वत्याः कस्याश्चिद्धृदये वक्षसि निपत्य नृपस्य नलस्य दृष्टिर्द्रुतैव सत्वरैव न्यवृतत् निवृत्ता, बभूव । उत्प्रेक्षते किम्भूतेव कुचयोः स्तनयोर्वर्त्तमानैः अर्द्धेन्दुलीलैरर्द्धचन्द्राकारैर्नखाङ्कैर्नखक्षतिचिह्नैर्वियोगिनो नलस्य वैरात् विरोधात् गलहस्तितेव दूरीकरणाय गले हस्तो गलहस्तः स जातोऽस्या इति तादृशो वा नखाङ्कदर्शनं चन्द्रदर्शनञ्च विरहिणामसह्यमिति वैरम् । 'तर्ज्जन्यङ्गुष्ठविस्तारे गलहस्तार्द्धचन्द्रको' इति बलः ॥ २५ ॥

तन्वीति । वियोगिनो विरहिणस्तस्य नलस्य ईक्षणाभ्यां चक्षुर्भ्यां तन्व्याः कस्याश्चित् कृशाङ्ग्याः स्त्रियो मुखं चन्द्रम् अधिगत्य निश्चित्य अथच चन्द्ररूपं तन्वीमुखम् अधिगत्य प्राप्य द्राक् झटिति निमीलिताभ्यां मुद्रिताभ्यां सद्भ्यां तस्य मुखस्य इन्दुता चन्द्रत्वञ्च स्वस्यात्मनः सरोजता पद्मत्वञ्च इदं द्वयं द्रढीयो दृढतरं निश्चितं कृतम् चन्द्रप्राप्तौ पद्मस्यैव सङ्कोचो न त्वन्यस्य चन्द्रप्राप्तावेव पद्मस्य सङ्कोचो न त्वन्यप्राप्तावित्यन्वयव्यतिरेकाभ्यां मुखस्य चन्द्रत्वं स्वस्य पद्मत्वं व्यक्तीकृतमित्यर्थः । अदृश्यं खलु परकलत्रमिति मत्वा नलो नेत्रसङ्कोचं कृतवानिति भावः ॥ २६ ॥

---

अत्र परार्द्धे प्रस्तुताप्रस्तुतयोर्नलदीपयोर्लोकावलोकायेति एकधर्माभिसम्बन्धात् दीपकम् दीप इति अर्थश्लेषेणानुप्राणितम् 'चतुष्पथस्याभरणम्' इति रूपकम्, छेकानुप्रासश्च ॥ २४ ॥
यथा लोके कोऽपि जनः केनचिद् गले हस्तेन गृहीत्वा ताडितो निवर्त्तते, तथैवार्द्धचन्द्राकृतिनखाङ्कनिराकृता नलदृष्टिः परस्त्रीकुचदर्शनपापभयात् सहसैव न्यवर्त्तिष्ट इति निष्कृष्टोऽर्थः । अर्द्धेन्दुलीलैरिति समासगता लुप्तोपमा, गलहस्तितेवेति वाच्योत्प्रेक्षा चेत्यनयोः सङ्करः । 'अर्द्धेन्दुश्चन्द्रशकले गलहस्तनखाङ्कयोः' वि ॥ २५ ॥ अत्र 'मुखं चन्द्रम्' इति व्यस्तरूपकम्, 'द्वयं द्रढीयः कृतम्' इतीवादिव्यञ्जकस्याप्रयोगात् प्रतीयमानोत्प्रेक्षा दृढीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः' तन्वीमुखं चन्द्रः नलनयनसरोजनिमीलनकरत्वात्, तथा नलनयनद्वयं सरोजं तन्वीमुखचन्द्रसन्निधानजनितनिमीलनावत्त्वादित्यनुमानद्वयेन मुखे चन्द्रत्वस्य नयनयोश्च सरोजत्वस्य साधनादनुमानालङ्कारद्वयं तेन च तन्वीमुखं चन्द्रवद्रमणीयं, नलनेत्रे च नीलोत्पलवत् रमणीये इत्युपमाद्वयं व्यज्यते ॥ २६ ॥

चतुष्पथे तं विनिमीलिताक्षं चतुर्दिगेताः सुखमग्रहीष्यन्।
सङ्घट्टय तास्तन् भृशभीनिवृत्ता-स्ता एव तद्वर्त्म न चेददास्यन् ॥ २७ ॥
संघट्टयन्त्यास्तरसात्मभूषा-हीराङ्कुरप्रोतदुकूलहारी।
दिशा नितम्बं परिधाप्य तन्व्या-स्तत्पापसन्तापमवाप भूपः ॥ २८ ॥
हतः कयाचित् पथि कन्दुकेन संघट्टय भिन्नः करजैः कयापि।
कयाचनाक्तः कुचकुङ्कुमेन सम्भुक्तकल्पः स बभूव ताभिः ॥ २९ ॥
छायामयः प्रैक्षि कयापि हारे निजे स गच्छन्नथ नेक्ष्यमाणः।
तच्चिन्तयान्तर्निरचायि चारु स्वस्यैव तन्व्या हृदयं प्रविष्टः ॥ ३० ॥

चतुष्पथ इति। चतुर्दिग्भ्य एता आगताश्चतस्रः स्त्रियश्चतुष्पथे विनिमीलिताक्षं परस्त्रीमुखादिदर्शनाद्विशेषेण मुद्रितनयनं तं नलं सुखमनायासेन तदा अग्रहीष्यन् अधारयिष्यन् चेद्यदि ता एव स्त्रियस्तस्मिन्नदृष्टे नले सङ्घट्टय सङ्घट्टमासाद्य भृशभिया किमिदं स्पृष्टमिति जायमानया सातिशयभीत्या निवृत्ताः परावृत्ताः सत्यस्तस्य नलस्य वर्त्म पन्थानं न अदास्यन् न अत्यक्ष्यन् अतिभयेन परावृत्तत्वात्तस्य पन्था दत्तस्ततो धर्तुं नाशक्नुवन्नित्यर्थः। अग्रहीष्यन्निति अदास्यन्निति च क्रियाऽनिष्पत्तौ लृङ् ॥ २७ ॥

सङ्घट्टयन्त्या इति। भूपो नलस्तरसा वेगेन संघट्टयन्त्या मिलन्त्यास्तन्व्याः कस्याश्चित् सुन्दर्या आत्मनो भूषासु अलङ्कारेषु ये हीरास्तेषामङ्कुरेषु कोटिषु प्रोतं स्यूतं सन्नद्धं दुकूलं पट्टाम्बरं हरति आकर्षतीति तादृशः सन् तस्या नितम्बं दिशा परिधाप्य दिगम्बरीकृत्य विवस्त्रं कृत्वेत्यर्थः तेन परस्त्रीविवस्त्रीकरणेन जनितं यत् पापं तेन सन्तापं न खलु मया साधु कृतमिति परमं दुःखं अवाप प्राप्तवान्। तरसा परस्त्रीस्पर्शभिया झटिति प्रतिनिवृत्तत्वाद्वेगेन भूषाहीराङ्कुरेषु प्रोतं दुकूलं हरतीति बहवः। दुकूलवस्त्रं हि स्वल्पाकर्षणेनापि श्लथबन्धन भवतीति दुकूलेत्युक्तम् ॥ २८ ॥

हत इति। स नलस्ताभिरन्तःपुरे विचरन्तीभिः स्त्रीभिः सम्भुक्तकल्पः कृतसम्भोग इव बभूव। किम्भूतः कयाचित् स्त्रिया पथि कन्दुकेन गोलाकारक्रीडनकेन हतः अन्यार्थक्षिप्तेन पथिमध्येऽदृश्यो वर्तमानस्ताडित इत्यर्थः तथा कयापि स्त्रिया सङ्घट्टय सश्लिष्य करजैर्नखैर्भिन्नः अङ्कितः कयाचन स्त्रिया कुचकुङ्कुमेन स्तनस्थकाश्मीरलेपेन आक्तः लेपितः। संभुक्तकल्प इति 'मनागूने कल्पदेश्यदेशीया' इति कल्पप्रत्ययः, केवलं ग्राम्यधर्माभावात् सम्भोगस्य मनागूनत्वम्। ताभिरिति तृतीयया तासामेव बुद्धिपूर्वकत्वं न तु नलस्येति सूचितम् ॥ २९ ॥

छायामय इति। कयापि स्त्रिया निजे स्वीये हारे छायामयः प्रतिबिम्बितः स नलः प्रैक्षि प्रथमं दृष्टः अथानन्तरं गच्छन् ततोऽन्यत्र चलन् अतएव हारे नेक्ष्यमाणो न दृश्यमानः स नलः

"अत्र काव्यलिङ्गभावोदयालङ्कारसङ्करः" सा ॥२७॥ अत्र पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासः, वृत्त्यनुप्रासः, भावोदयश्चेति संसृष्टिः ॥२८॥ अत्र कन्दुकहननादीनामेकेनापि सम्भोगकल्पत्वसिद्धेरन्ययोरपि करजभेदकुचकुङ्कुमाक्तत्वयोः तत्करत्वोक्तेः समुच्चयः, सम्भुक्तकल्प इति उपमा च ॥ २९ ॥

तच्छायसौन्दर्य्यनिपीतधैर्य्याः प्रत्येकमालिङ्गदमूरतीशः ।
रतिप्रतिद्वन्द्वितमासु नूनं नामूषु निर्णीतरतिः कथञ्चित् ॥ ३१ ॥
तस्मादद्दश्यादपि नातिबिभ्यु-स्तच्छायरूपाहितमोहलोलाः ।
मन्यन्त एवादृतमन्मथाज्ञाः प्राणानपि स्वान् सुदृशस्तृणानि ॥ ३२ ॥

अधुनैव कश्चिद्युवा हारे दृष्टः क्व दानीं गत इति तस्य नलस्य चिन्तया हेतुभूतया तन्व्या तयैव स्त्रिया स्वस्यैव हृदयमन्तःकरणं प्रविष्ट इति अन्तर्मनसि चारु सम्यक् निरचायि निश्चितः । हृदय एव हारस्य विद्यमानत्वात् सामीप्यात्तत्रैव प्रविष्ट इति युक्तस्तथाविधनिश्चयः । यद्यप्यदृश्यस्य प्रतिबिम्बं न सम्भवति, तथापि कौतुकित्वाददृश्यस्यापि मम प्रतिबिम्बेन भवितव्यमिति नलस्येच्छावशात् प्रतिबिम्बं जातमित्यवधेयम् ॥ ३० ॥

तच्छायेति । रतीशः कामो हारादौ तच्छायस्य नलप्रतिबिम्बस्य सौन्दर्येण निपीतं निःशेषेण हृतं धैर्यं यासां तादृशीरमूः स्त्रियः प्रत्येकं पृथक् पृथक् आलिङ्गत् आश्लिष्टवान् प्रतिबिम्बितनलरूपदर्शनात्ताः कामाधीना बभूवुरित्यर्थः । ननु रतीशस्य कथं रतीतरस्त्रीष्वालिङ्गनमितुप्रत्प्रेक्षयोपपादयति नूनमुत्प्रेक्षे रतीशः रतेः स्वप्रियायाः प्रतिद्वन्द्वितमासु अतिशयेन प्रतिस्पर्द्धिनीषु रतितुल्यास्वित्यर्थः अमूष्वन्तःपुरिकासु मध्ये कथञ्चित् केनापि सौन्दर्यादिप्रकारेण निर्णीता निश्चिता रतिर्येन तादृशो न बभूवेति शेषः । आसां मध्ये मम प्रिया रतिः कतमेति निश्चेतुमशक्तेन कामेन सर्वासामालिङ्गनेन रतेरप्यालिङ्गनं भविष्यतीति मत्वा सर्वा एवालिङ्गिता इत्यर्थः । अथ च यो हि अनिर्णीतरतिरनिश्चितसुरतः स सर्वा एवालिङ्गतीति ध्वनिः । तच्छायेति 'सेनासुरे'त्यादिना छायायाः क्लीवत्वम् ॥ ३१॥

तस्मादिति । सुदृशो युवतयः अदृश्यादपि तस्मान्नलान्नातिबिभ्युर्नात्यन्तं भयं प्रापुः किम्भूता यतो हारादौ तच्छायस्य नलप्रतिबिम्बस्य रूपेण सौन्दर्येण आहितो जनितो यो मोहो विचित्तता-लक्षणो व्यभिचारिभावस्तेन लोलाश्चञ्चला नष्टस्वभावाः प्रतिबिम्बदर्शनेन कामवशत्वान्न भयं प्रापुरित्यर्थः एतदपि कथमित्यत आह आदृता सादरं स्वीकृता मन्मथाज्ञा कामाज्ञा याभिस्तादृश्यः कामाधीनाः सत्यः सुदृशः स्वान् स्वीयान् प्राणानपि तृणानि मन्यन्ते तृणवत्तुच्छत्वेन परिगृह्णन्ति । यासां प्राणवाञ्छा न विद्यते तासां भयं कथं भवेदिति भावः । मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः । घूर्णनागात्रपतनभ्रमणादर्शनादिकृत्' इति दर्पणः ॥ ३२ ॥

अत्र अतिशयोक्तिः, भावोदयः, वृत्त्यनुप्रासच्छेकानुप्रासौ च ॥ ३० ॥ असम्बन्धे सम्बन्धरूपातिशयोक्तिः, पदार्थहेतुकं काव्यलिङ्गम्, आर्थोपमा, वाच्या क्रियोत्प्रेक्षा, च्छेकानुप्रासश्चेति सङ्करः ॥ ३१ ॥ शृङ्गाररसेन भयस्थायिभावस्य भयानकरसस्य विरोधात् तत्प्रादुर्भावे कथं भयानकः स्थानं प्राप्नोतीति तात्पर्य्यम् । तदुक्तं दर्पणे, 'आद्यः करुण-बीभत्सरौद्रवीरभयानकैः । भयानकेन करुणेनापि हास्यो विरोधभाक्' इति । अतिभयकारणे सत्यपि तदभावात्, विशेषोक्तिः, पदार्थहेतुकं काव्यलिङ्गम् ॥ ३२ ॥

जागर्त्ति तच्छायदृशां पुरा यः स्पृष्टे च तस्मिन्विससर्प कम्पः।
द्रुतं द्रुते तत्पदशब्दभीत्या स्वहस्तितश्चारुदृशां परं सः॥ ३३॥
उल्लास्यतां स्पृष्टनलाङ्गमङ्गं तासां नलच्छायपिवापि दृष्टिः।
अश्मैव रत्यास्तदनर्त्ति पत्या च्छेदेऽप्यबोधं यदहर्षि लोम॥ ३४॥
यस्मिन्नलस्पृष्टकमेत्य हृष्टा भूयोऽपि तं देशमगान्मृगाक्षी।
निपत्य तत्रास्य धरारजःस्थे पदे प्रसीदेति शनैरवादीत्॥ ३५॥

जागर्त्तीति। तच्छायदृशां हारादौ नलप्रतिबिम्बं पश्यन्तीनां चारुदृशां सुदृशां पुरा पूर्वं प्रतिबिम्बितनलदर्शनेन सत्वोदयाद्यः कम्पः सात्त्विकभावविशेषो जागर्त्ति अभूत्, अनन्तरं तस्मिन्नले स्पृष्टे च संश्लिष्टे च यः कम्पो विससर्प वृद्धिं गतः दर्शनापेक्षया स्पर्शनस्याधिकसात्त्विकभावप्रयोजकत्वात् दर्शनप्रयुक्तकम्पापेक्षया योऽधिको जात इत्यर्थः। अनन्तरं गाढालिङ्गनशङ्कया द्रुतं शीघ्रं द्रुते पलायिते तस्मिन् स कम्पः परं केवलं तस्य अदृष्टस्य नलस्य पदशब्दभीत्या चरणशब्दाद्भयेन स्वहस्तितो दत्तहस्तावलम्बः कृतः स्थिरीकृत इति यावत् न तु शृङ्गारापगमेन सत्वतिरोधानात् विनाशित इत्यर्थः। कम्पो हि यथा शृङ्गारे तथा भयानके अपि सम्भवति। तथाच भयानकरसविवेके दर्पणः, 'प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः' इति। शृङ्गारभयानकौ द्वावपि नलात्तासां जाताविति भावः। जागर्त्तीति 'स्मयुक्तेत्या'दिना भूते लट्॥ ३३॥

उल्लास्यतामिति। रत्याः पत्या कामेन तासामन्तःपुरिकाणां स्पृष्टं नलाङ्गं येन तादृशम् अङ्गम् उल्लास्यतां हर्षवशात् पुष्टीक्रियतां तथा तासां नलच्छायपिवापि नलप्रतिबिम्बं पिबन्ती दृष्टिरपि चक्षुरपि उल्लास्यतां हर्षवशात् प्रसार्यतां अत्रास्माकं नाश्चर्यमित्यर्थः किन्तु छेदेऽपि कर्त्तनेऽपि अबोधं चैतन्यशून्यं तासां लोम यदहर्षि हर्षितं विक्रियां प्रापितं तदश्मैव पाषाण एव अनर्त्ति नर्त्तितः अचेतनस्य हर्षणं पाषाणनर्त्तनतुल्यमित्यर्थः। सत्ववशात्तासां रोमाञ्चोऽपि जात इति भावः। पिबतेः 'अप्रादेश्चेत्यक' इति शङ्॥ ३४॥

यस्मिन्निति। मृगाक्षी हरिणनयना काचित् स्त्री यस्मिन् देशे नलस्य स्पृष्टकमालिङ्गनविशेषम् एत्य प्राप्य हृष्टा हर्षं प्राप्ता भूयोऽपि पुनरपि तं देशम् अगात् अलिङ्गनलुब्धा सती जगाम। तत्र गत्वा किं चकारेत्याह,—तत्र देशे धरारजःस्थे पृथ्वीधूलिस्थिते अस्य नलस्य पदे चरणचिह्ने निपत्य पतित्वा प्रसीद मयि प्रसन्नो भवेति शनैरितरजनाकर्णनशङ्कया मन्दं यथा यथा अवादीदुवाच। स्पृष्टकं यथा। 'यद्योषितः संमुखमागताया अन्यापदेशाद् व्रजतो नरस्य। गात्रेण गात्रं घटते तदेतदालिङ्गनं स्पृष्टकमाहुरार्या' इति कामशास्त्रम्॥ ३५॥

---

नलविषयकरतिभावप्रशमस्य भयानके गुणभावप्राप्तेः समाहितं नामालङ्कारश्छेकानुप्रासेन संसृज्यते॥३३॥ "अश्मनर्त्तनप्रायं रोमहर्षणं कुर्वाणस्य कामस्य किमसाध्यमिति भावः। अत्र रोमहर्षणाश्मनर्त्तनवाक्यार्थयोर्यत्तच्छब्दावगतसामानाधिकरण्यस्यानुपपत्त्या सादृश्याक्षेपात् वाक्यार्थवृत्तिनिदर्शना"। अत्र रोमाञ्चरूपः सात्त्विकभाव उक्तः॥३४॥ "अत्र हर्षभावोदयालङ्कारः" सा॰॥३५॥

भ्रमन्नमुष्यामुपकारिकाया-मायस्य भैमीविरहात् कृशीयान् ।
असौ मुहुः सौधपरम्पराणा-माधत्त विश्रान्तिमुपत्यकासु ॥ ३६ ॥
उल्लिख्य हंसेन दले नलिन्या-स्तस्मै यथादर्शि तथैव भैमी ।
तेनाभिलिख्योपहृतस्वहारा कस्या न दृष्टाजनि विस्मयाय ॥ ३७ ॥
कौमारगन्धीनि निवारयन्ती वृत्तानि रोमावलिवेत्रचिह्ना ।
सालिख्य तेनैक्ष्यत यौवनीय-द्वाःस्थामवस्थाम्परिचेतुकामा ॥ ३८ ॥

भ्रमन्निति । असौ नलः अमुष्यामुपकारिकायां राजान्तःपुरे भ्रमन् भैमीं द्रष्टुमितस्ततः पर्यटन् सन् आयस्य आयासं प्राप्य सौधपरम्पराणां प्रासादश्रेणीनाम् उपत्यकासु आसन्नभूमिषु मुहुर्वारंवारं विश्रान्तिं विश्रामम् आधत्त कृतवान् कथमन्तःपुरप्रचारेऽप्यायासः पुनःपुनर्विश्रामो वास्य जात इति नलस्य हेतुगर्भविशेषणेनोपपादयति, किम्भूतः यतो भैम्या विरहात् वियोगात् कृशीयान् अतिशयेन कृशः क्षीणः । अतिकृशस्य हि स्वल्पसञ्चारेऽपि आयासो मुहुर्मुहुर्विश्रामश्च सम्भवत्येव ॥ ३६ ॥

उल्लिख्येति । हंसेन नलिन्याः पद्मिन्या दले पत्रे उल्लिख्य लिखित्वा तस्मै नलाय यथा भैमी अदर्शि दर्शिता तथैव तेन तत्र विश्रान्तेन नलेन अभिलिख्य भूम्यां चित्रयित्वा उपहृतः कण्ठेऽर्पितः स्वहारो निजमुक्ताहारो यस्यास्तादृशी चित्रमयी भैमी दृष्टा सती कस्या अन्तःपुरस्त्रियो विस्मयाय आश्चर्याय न अजनि न जाता अपि तु सर्वासामेव विस्मयाय जाता । तथाभूतां तां दृष्ट्वा अहो कण्ठार्पितहारा केनास्माकं भैमीप्रतिमूर्तिर्लिखितेति सर्वा एव विस्मिता जाता इत्यर्थः । नलः परिश्रान्तो भूत्वा यत्र तत्रापि भैमीप्रतिमूर्तिं लिखित्वा मनोविनोदनं कृतवानिति भावः ॥ ३७ ॥

कौमारेति । तेन नलेन सा भैमी आलिख्य सम्यक् लिखित्वा ऐक्ष्यत दृश्यते स्म । किम्भूता यौवनीयायां यौवनसम्बन्धिन्यां द्वारि तिष्ठतीति तादृशीम् अवस्थां परिचेतुमङ्गीकर्त्तुं कामोऽभिलाषो यस्यास्तादृशी यौवनप्रारम्भे स्थिता शैशवयौवनयोः सन्धौ वर्त्तमानेत्यर्थः । अतएव कौमारस्य शैशवस्य गन्धो लेशोऽपि विद्यते येषु तादृशानि वृत्तानि चेष्टितानि नयनार्जवादीनि कटिस्थौल्यादिचिह्नानि च निवारयन्ती परित्यजन्ती अथ च निषेधन्ती । यतो रोमावलिरेव वेत्रं वेत्रयष्टिस्तदेव चिह्नं निषेधचिह्नं यस्यास्तादृशी। अन्यापि वेत्रधारिणी पुरे स्थातुमिच्छतः कांश्चिन्निषेधति द्वारदेशोपस्थितांश्च कांश्चित् के यूयमिति परिचेतुमिच्छति । वयःसन्धौ वर्त्तमानां भैमीं लिखित्वा अनुरागाद्ददर्शेति भावः। कौमारगन्धीति 'अल्पार्थोच्च'त्यनेन इत्समासान्तः ॥ ३८ ॥

अत्र आयासं प्रति कृशीयस्त्वस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् । उपत्यकास्विति "अत्र सौधानां पर्वतसाधर्म्याद् गौणोऽयं प्रयोगः। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन् प्रत्ययस्य पर्वतासन्नभूमिसंज्ञात्वेन विधानात्, उपत्यकाद्रेरासन्नाभूमिरित्यभिधानात् तथैव प्रयोगाच्च । संज्ञात्वादेव कात्पूर्वस्येकाराभावः" जी ॥ ३६ ॥ अत्र दमयन्त्यां द्वाररक्षिण्याः, रोमावलौ च वेत्रचिह्नस्यारोपात् साङ्गरूपकम् छेकानुप्रासेन संसृज्यते ॥ ६८ ॥

पश्याः पुरन्ध्रीः प्रति सान्द्रचन्द्र-रजःकृतक्रीड़कुमारचक्रे ।
चित्राणि चक्रेऽध्वनि चक्रवर्त्ति-चिह्नन्तदंघ्रिप्रतिमासु चक्रम् ॥ ३९ ॥
तारुण्यपुण्यामवलोकयन्त्यो-रन्योन्यमेणेक्षणयोरभिख्याम् ।
मध्ये मुहूर्त्तं स बभूव गच्छन्नाकस्मिकाच्छादनविस्मयाय ॥ ४० ॥
पुरःस्थितस्य क्वचिदस्य भूषा-रत्नेषु नार्य्यः प्रतिविम्बितानि ।
व्योमन्यदृश्येषु निजान्यपश्यन् विस्मित्य विस्मित्य सहस्रकृत्वः ॥ ४१ ॥
तस्मिन्निषज्याङ्गपथात्तपातं तदङ्गरागच्छुरितं निरीक्ष्य ।
विस्मेरतामापुरपि स्मरन्त्यः क्षिप्तं मिथः कन्दुकमिन्दुमुख्यः ॥ ४२ ॥

पश्या इति। सान्द्रं निविड़ं यच्चन्द्ररजः कर्पूरपरागस्तेन कृता क्रीड़ा खेला येन तादृशं कुमाराणां बालानां चक्रं समूहो यस्मिन् तादृशेऽध्वनि पथि तदंघ्रेर्नलचरणस्य प्रतिमासु प्रतिकृतिषु वर्त्तमानं चक्रवर्त्तिचिह्नं सार्वभौमलक्षणं रेखारूपं चक्रं कर्तृ पश्या विलोकयन्तीः पुरन्ध्रीः कुटुम्बिनीः स्त्रियः प्रति लक्ष्यीकृत्य चित्राणि चक्रे आश्चर्यातिशयं जनयामास। बालक्रीड़नस्थाने केन सार्वभौमेन विचरितमिति साश्चर्याः पुरन्ध्रीश्चकारेत्यर्थः : चक्रचिह्नं हि चक्रवर्त्तिचरण एव वर्त्तते चक्रवर्त्तिचिह्नाभिज्ञानं विवेचिकानामेव प्राचीनस्त्रीणां भवतीति पुरन्ध्रीरित्युक्तम्। राजशिशूनां पार्थिवधूलिभिः क्रीड़नमनुचितमिति तदर्थं शुभ्रे रजसि झटिति चिह्नाभिव्यक्त्यर्थं वा चन्द्ररज इत्युक्तम्। पश्या इति 'अप्रादेश्चेत्येक' इति दृशः शः। 'स्यात्तु कुटुम्बिनी पुरन्ध्री' 'अथ कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञः' 'चक्रवर्त्ती सार्वभौमः' अ ॥ ३९ ॥

तारुण्येति। तारुण्येन यौवनेन पुण्यां चार्वीम् अन्योन्यं परस्परसम्बन्धिनीम् अभिख्यां शोभां अवलोकयन्त्योः पश्यन्त्योरेणेक्षणयोर्हरिणनयनयोः स्त्रियोर्मध्ये मुहूर्त्तं क्षणमात्रं गच्छन् स नलः आकस्मिकेन निष्कारणेन आच्छादनेन तिरोधानेन विस्मयाय आश्चर्य्याय बभूव अकस्मात्तिरोधानं दृष्ट्वा ते स्त्रियौ किमिदमेवं जातमित्याश्चर्यरसं प्राप्तवत्यौ इत्यर्थः। 'पुण्यन्तु चार्वपि' अ ॥४०॥

पुर इति। नार्य्यः काश्चिदन्तःपुरसुन्दर्यः क्वचिद्देशे पुरोऽग्रे स्थितस्यास्य नलस्य अदृश्येषु भूषारत्नेषु भूषणमणिषु निजानि स्वीयानि प्रतिविम्बितानि सहस्रकृत्वः सहस्रवारं विस्मित्य विस्मित्य पुनःपुनर्विस्मयं प्राप्य व्योमनि आकाशे अपश्यन् ददृशुः। प्रतिविम्बितं हि स्फटिकादिस्वच्छवस्तुनि दृश्यते न त्वाकाशे अस्माकं तत्तु आकाशेऽपि दृश्यते किमेतदिति साश्चर्यं पुनः पुनर्ददृशुरित्यर्थः। प्रतिविम्बितानीति भावे क्तः प्रतिविम्बितानि रूपाणीति वा ॥ ४१ ॥

तस्मिन्निति। इन्दुमुख्यश्चन्द्राननाः स्त्रियस्तस्मिन् विषज्य संसज्य तस्य नलस्य अङ्गरागेण विले-

सान्द्रेत्यादिपदार्थस्य अङ्घ्रिप्रतिमाः प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् छेकानुप्रासो वृत्त्यनुप्रासश्च ॥ ३९ ॥ "अत्र व्यवधानकारणं विना व्यवधानोक्तेरकारणे कार्योत्पत्तिलक्षणो विभावना" जी। "अत्र छेकानुप्रासः" सा ॥ ४० ॥ अत्रापि पूर्ववदकारणकार्योत्पत्तेर्विभावनालङ्कारः। अनाधाराधेयोक्ते विंशेषालङ्कारश्च ॥ ४१ ॥

पुंसि स्वभर्तृव्यतिरिक्तभूते भूत्वाप्यनीक्षानियमव्रतिन्यः।
छायासु रूपं भुवि वीक्ष्य तस्य फलन्दृशोरानशिरे महिष्यः॥ ४३॥
विलोक्य तच्छायमतर्कि ताभिः पतिं प्रति स्वं वसुधापि धत्ते।
यथा वयं किं मदनं तथैनं त्रिनेत्रनेत्रानलकीलनीलम्॥ ४४॥
रूपं प्रतिच्छायिकयोपनीत-मालोकि ताभिर्यदि नाम कामम्।
तथापि नालोकि तदस्य रूपं हारिद्रभङ्गाय वितीर्णभङ्गम्॥ ४५॥

पनेन छुरितं लिप्तं सत् अर्द्धपथे अर्द्धमार्ग एव आत्तो गृहीतः पातः पतनं येन तादृशं कन्दुकं निरीक्ष्य दृष्ट्वा मिथः परस्परं क्षिप्तं स्मरन्त्योऽपि। अपिः समुच्चये स च दर्शनक्रियापेक्षया अयमेवास्माभिः क्षिप्त इति स्मृत्वा चेत्यर्थः। विस्मेरतां सविस्मयताम् आपुः प्राप्तवत्यः यस्यै क्षिप्तस्तामप्राप्य मध्ये सङ्घट्टनयोग्यवस्तुनोऽभावादकस्मात् कथं पतितः कथं वाङ्गरागोऽस्मिँल्लग्न इति साश्चर्या जाता इति भावः॥ ४२॥

पुंसीति। महिष्यो नृपस्त्रियः स्वभर्त्ता भीमभूपस्तस्माद् व्यतिरिक्तभूते भिन्नरूपे पुंसि पुरुषे या अनीक्षा अदर्शनं तस्यां यो नियमोऽवश्यम्भावस्तल्लक्षणं व्रत विद्यते यासां तथाविधा भूत्वापि भुवि मणिवद्धायां भूमौ छायासु प्रतिविम्बेषु तस्य नलस्य रूपं सौन्दर्यं वीक्ष्य दृष्ट्वा दृशोश्चक्षुषोः फलं साफल्यम् आनशिरे प्रापुः। सुन्दरवस्त्ववलोकनान्नेत्रसाफल्यम् प्रतिविम्बस्य पुरुषत्वाभावात् व्रताभङ्गश्च तासां जात इति भावः। आनशिरे इति अशु व्याप्तौ लिट् इरे 'ऋच्छादौ नुर्दीर्घश्चे'ति नुर्दीर्घश्च॥ ४३॥

विलोक्येति। ताभिर्महिषीभिर्भुवि तच्छायं नलस्य छायां विलोक्य दृष्ट्वा अतर्कि उत्प्रेक्षितं तर्कितमाह यथा वयं स्वं स्वीयं पतिं स्वामिनं भीमं प्रति मदनं कामं दध्महे तथा वसुधापि पृथिव्यपि किं स्वं पतिं भीमं प्रति एनं मूर्त्तं मदनं धत्ते धारयति तर्हि श्यामत्वमस्य कथमिति मदनं विशिनष्टि। किम्भूतं त्रिनेत्रस्य त्रिलोचनस्य यो नेत्रानलो लोचनाग्निस्तस्य कीलेन ज्वालेन नीलं श्यामलं। यथास्माकं मनसि गाढः पतिं प्रति कामो वर्त्तते तथा पृथिव्या अपि भूस्वामिनं प्रति मूर्त्तिमान् कामोऽयं वर्त्तते अन्यथा कथमकस्मादियं मनोज्ञा छाया भूम्यां दृश्यत इति महिष्यस्तर्कयामासुरित्यर्थः। 'वह्नेर्द्वयोर्ज्वालकीलौ' अ॥ ४४॥

रूपमिति। ताभिर्महिषीभिः प्रतिच्छायिकया छायारूपप्रतिकृत्या उपनीतम् उपस्थापितं रूपं नलस्य स्वरूपं यदि नाम यद्यपि काममत्यर्थम् आलोकि दृष्टं तथापि तत् अतिप्रसिद्धम् अस्य नलस्य रूपं वर्णो नालोकि न दृष्टम्। किम्भूतं हारिद्रभङ्गाय हरिद्राच्छेदाय सुवर्णखण्डाय

---

अत्रापि पूर्ववदकारणाङ्गरागच्छुरितत्वमध्यपथपतनत्वरूपकार्योत्पत्तेर्विभावनालङ्कारश्छेकानुप्रासेन संसृज्यते॥ ४२॥ अनीक्षानियमव्रतिनीनां ईक्षणं विरुद्धं, छायासु रूपदर्शनात् तत्परिहारश्चेति विरोधाभासः॥ ४३॥ अत्र नलच्छाये मदनोत्प्रेक्षणमिति वाच्या क्रियोत्प्रेक्षा, यथा वयमिति आर्थी उपमा, लाटानुप्रासश्छेकानुप्रासश्च॥ ४४॥

भवन्नदृश्यः प्रतिबिम्बदेह-व्यूहं वितन्वन्मणिकुट्टिमेषु।
पुरं परस्य प्रविशन्वियोगो योगीव चित्रं स रराज राजा॥ ४६॥
पुमानिवास्पर्शि मया भ्रमन्त्या छाया मया पुंस इव व्यलोकि।
ब्रुवन्निवातर्कि मयापि कश्चि-दिति स्म स स्त्रैणगिरः शृणोति॥ ४७॥
अम्बां प्रणत्योपनता नतांगी नलेन भैमी पथि योगमाप।
स भ्रान्तिभैमीं विविचे न ताञ्च सा तञ्च नादृश्यतया ददर्श॥४८॥

वा वितीर्णो दत्तो भङ्गः पराजयो येन तादृशम् अतिगौरमित्यर्थः। केवलं छायामात्रं दृष्ट्वा ता अतितरां हृष्टा इत्यर्थः। अत्र रूपम् आलोकि रूपं नालोकीति विरोधः तद्भङ्गस्तु रूपशब्दयोः स्वरूपवर्णार्थकतया। 'हरिद्रारक्ते हारिद्रं सुवर्णेऽपि तथेष्यते' 'भङ्गस्तरङ्गरुग्भेदे भङ्गो जय-विपर्यये। भङ्गः खण्डेऽपि चाख्यातः' वि॥ ४५॥

भवन्निति। वियोगी विरहवान् स राजा नलः योगीव मुनिरिव अदृश्यो देवानां वरदाना-दप्रत्यक्षविषयो भवन् तथा मणिकुट्टिमेषु मणिबद्धभूमिषु प्रतिबिम्बदेहव्यूहं प्रतिकृतिरूपदेहसमूहं वितन्वन् विस्तारयन् तथा परस्य भीमस्य पुरं नगरं गृहोपरिगृहं वा प्रविशन् चित्रमाश्चर्यं रराज शुशुभे। अन्यो योगी च सिद्धिवशात् अदृश्यो भवति कायव्यूहं करोति परस्य च पुरं शरीरं प्रविशति विषयेभ्यो विरतत्वाद्वियोगी च भवति अथ च वियोगी भूत्वापि यत् योगीव संयोगीव रराज तच्चित्रमिति ध्वनिः। 'पुरं पाटलीपुत्रे स्याद् गृहोपरिगृहे पुरम्। पुरं पुरि शरीरे च' वि॥ ४६॥

पुमानिति। स नलः इति स्त्रैणगिरः स्त्रीवृन्दवचनानि शृणोति स्म श्रुतवान्। इति पदो-पस्थाप्यमाह भ्रमन्त्या अङ्गने विचरन्त्या मया पुमानिव कश्चित् पुरुष इव अस्पर्शि स्पृष्टः इत्येकस्या वचनम्। मया पुंस इव पुरुषस्येव छाया प्रतिबिम्ब व्यलोकि दृष्टा इत्यन्यस्या वचनम्। मयापि ब्रुवन्निव किञ्चित् कथयन्निव कश्चित् पुरुषोऽतर्कि तर्कित इत्यपरस्या वचनम्। पुंसां स्पर्शन-प्रतिबिम्बकथनानां स्त्रीणामपेक्षया वैलक्षण्याद्युज्यन्ते तासां तथाविधा गिरः॥ ४७॥

अथ भैमीनलौ पथि मिलितावपि परस्परं नावबुध्यतः स्मेत्याह। अम्बामिति। अम्बां मातरं प्रणत्य प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा उपनता प्रतिनिवृत्ता नताङ्गी सुन्दराङ्गी भैमी पथि स्वान्तःपुरगमनवर्त्मनि नलेन सह योगं सम्बन्धम् आप प्राप्तवती किन्तु स नलः भ्रान्तिभैमीं तन्मयताख्यकामदशया भ्रमविषयिणीं भैमीं ताञ्च तात्त्विकीं भैमीञ्च न विविचे न पृथक्कर्त्तुं

रूपशब्दस्य श्लेषात् वर्णस्वरूपयोर्भेदेऽपि तदभेदाध्यवसायात् अतिशयोक्तिः, रूप-मालोकि तथापि रूपं नालोकि इति विरोधस्य रूपशब्दस्यार्थभेदमाश्रित्य परिहाराद् विरोधा-भासश्छेकानुप्रासश्चेति सङ्करः॥ ४५॥ पूर्णोपमा, विरोधाभासश्छेकानुप्रासश्चेति सङ्करः॥ ४६॥ "अत्रोपमालङ्कारः" सा॥ ४७॥

प्रसूप्रसादाधिगता प्रसून-माला नलस्योद्भ्रमवीक्षितस्य ।
क्षिप्तापि कण्ठाय तयोपकण्ठ-स्थितं तमालम्बत सत्यमेव ॥ ५६ ॥
स्रग्वासनादृष्टजनप्रसादः सत्येयमित्यद्भुतमाप भूपः ।
क्षिप्तामदृश्यत्वमिताञ्च मालामालोक्य तां विस्मयते स्म बाला ॥५० ॥
अन्योन्यमन्यत्रवदीक्षमाणौ परस्परेणाध्युषितेऽपि देशे ।
आलिङ्गितालीकपरस्परान्त-स्तथ्यं मिथस्तौ परिषस्वजाते ॥ ५१ ॥

शशाक। मेलने जातेऽपि बहुशो भ्रान्त्या प्रतारिततया नलस्तात्त्विकभैम्यामपि न विश्वासं लब्धवानित्यर्थः। सा च भैमी च तं नलम् अदृश्यतया न ददर्श दृष्टवती ॥ ४८ ॥

प्रस्विति। तया भैम्या उद्भ्रमवीक्षितस्य भ्रान्त्या विलोकितस्यापि नलस्य कण्ठाय गलमुद्दिश्य क्षिप्ता प्रसूप्रसादाधिगता मातृप्रसादलब्धा प्रसूनमाला कुसुममाला सत्यमेव तात्त्विकमेव उपकण्ठं समीपे स्थितं तं नलं नलकण्ठं वा आलम्बत अभजत अतिमनोज्ञेयं मातृदत्ता माला नलयोग्येति निश्चित्य भैम्या भ्रान्तिविषयनलाय दत्तापि सा वास्तविकसमीपस्थनलकण्ठ एव लग्न त्यर्थः ॥ ४९ ॥

स्रगिति। भूपो नलः वासनादृष्टस्य मनोरथोपनीतस्य भ्रमविषयस्य वा भैमीलक्षणस्य जनस्य प्रसादरूपेयं स्रक् माला सत्या न त्वलीका इति अद्भुतम् आश्चर्यम् आप प्राप्तवान्, अलीकेन दत्तं वस्तु अलीकमेव भवतीति सर्वत्र दृष्टम् अत्र तु तद्विपरीतं दृश्यते किमेतदित्याश्चर्यं लभते स्मेत्यर्थः। बाला भैमी च अलीकनलकण्ठाय क्षिप्तां तां मालाम् अदृश्यत्वम् इतां प्राप्ताम् आलोक्य निश्चित्य विस्मयते स्म विस्मय लभते स्म। अलीकनलकण्ठक्षिप्ता माला भूमौ कथं न दृश्यते कुत्रालक्षिता गता किमिदं जातमित्याश्चर्यं प्राप्तवतीत्यर्थः ॥ ५० ॥

अन्योन्यमिति। तौ भैमीनलौ आलिङ्गितं यत् अलीकमसत्यरूपं परस्परं तस्यान्तर्मध्ये तथ्यमपि सत्यमपि मिथः परस्परं परिषस्वजाते आलिङ्गितवन्तौ द्वयोरपि तन्मयतया परस्परालीकालिङ्गनसक्तयोः सत्यरूपस्याप्यालिङ्गनं जातमिति भावः। ननु कथं वास्तविकेऽप्यलीकबुद्धिरिति विशेषणेन सङ्गमयति किम्भूतौ वास्तविकेन परस्परेण अध्युषितेऽधिष्ठिते देशेऽपि अन्यत्रवत् परस्परानध्युषितदेशे इव अन्योन्यं परस्परम् ईक्षमाणौ विलोकयन्तौ यथा अन्योन्यानधिष्ठिते देशे भ्रमवशात्तावन्योन्यं ददृशतुस्तथा अन्योन्याध्युषितेऽपि देशे पश्यन्तावित्यर्थः।

---

"अत्र रूपसाम्यादभ्रान्तभैम्याः भ्रान्तभैमीभिः सहाभेदाभिधानात् सामान्यालङ्कारः" जी। विवेकाभावं प्रति भ्रान्तिभैमीष्विति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम् छेकानुप्रासश्च ॥४८॥ मणिप्रभायां मणिबुद्धिन्यायात् सत्यनले माल्यालम्बनमितिभावः। अनाधारमाल्यलम्बनोक्तेर्विशेषो नामालङ्कारश्छेकानुप्रासोवृत्त्यनुप्रासश्च। 'प्रसूर्माता' 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' अ ॥ ४९ ॥ वासनादृष्टजनप्रसादस्य स्रजः सत्यत्वस्य विरुद्धत्वेऽपि तत्र यथार्थ भैमीनिक्षिप्तत्वेन तत्परिहाराद्विरोधाभासः, छेकानुप्रासश्चेति संसृष्टिः ॥ ५० ॥

स्पर्शन्तमस्याधिगतापि भैमी मेने पुनर्भ्रान्तिमदर्शनेन ।
नृपः स पश्यन्नपि तामुदीत-स्तम्भो न धर्त्तुं सहसा शशाक ॥ ५२ ॥
स्पर्शातिहर्षाद्दृतसत्यमत्या प्रवृत्तय मिथ्यामतिलब्धबाधौ ।
पुनर्मिथस्तथ्यमपि स्पृशन्तौ न श्रद्दधाते पथि तौ विमुग्धौ ॥ ५३ ॥
सर्वत्र संवाद्यमबाधमानौ रूपश्रियातिथ्यकरं परन्तौ ।
न शेकतुः केलिरसाद्विरन्तु-मलीकमालोक्य परस्परन्तु ॥ ५४ ॥

भ्रान्त्या बहुशः प्रतारितत्वात् सत्यरूपेऽपि न श्रद्दधतुरिति भावः। केचित्तु आलिङ्गितमाश्रितमलीकमसत्यं येन तादृशं परस्परस्य अन्तर्हृदयं यत्र क्रियायां तद्यथा स्यात्तथेति व्याचक्षते ॥ ५१ ॥

स्पर्शमिति। भैमी अस्य नलस्य तं स्पर्शम् अधिगतापि प्राप्ता सत्यपि अदर्शनेन नलस्यानवलोकनेन पुनर्भ्रान्तिं मेने निश्चिनोति स्म। यद्ययं नलस्पर्शः स्यात्तदा नलोऽपि चाक्षुषविषयः स्यात् उद्भूतस्पर्शवतस्तस्य चक्षुषापि ग्रहीतुं युक्तत्वात्तस्माद् भ्रम एवायमिति निश्चिकायेत्यर्थः। तथा नृपो नलस्तां सत्यभूतां भैमीं पश्यन्नपि सहसा झटिति उदीतः उद्गतः स्तम्भः सात्त्विकभावविशेषो यस्य तादृशः सन् तां धर्त्तुं गाढमालिङ्गय स्थगयितुं न शशाक न समर्थो बभूव। स्पर्शसुखमनुभूय सत्वोदयान्निश्चेष्टो बभूवेति भावः। उदीतेति ईंगतावित्यस्य रूपम् ॥ ५२ ॥

स्पर्शेति। तौ भैमीनलौ स्पर्शेन जनितो योऽतिहर्षो निरतिशयसुखं तेन आदृता अङ्गीकृता या सत्यमतिः अलीकस्येदृक्सुखजननसामर्थ्याभावात् सत्य एवायं स्पर्श इति सत्यबुद्धिस्तया पुनरप्यालिङ्गनादौ प्रवृत्तय जातप्रवृत्तिर्भूत्वा पथि पुनर्मिथः परस्परं तथ्यं सत्यं स्पृशन्तावपि अनन्तरं स्थानान्तरागमनादर्शनाभ्यां स्पर्शाभावे सति मिथ्यामत्या भ्रान्त्या लब्धो बाधः सत्यस्पर्शस्याप्रामाण्यं याभ्यां तदृशौ सन्तौ न श्रद्दधाते, तात्त्विकोऽयं स्पर्श इति श्रद्धां न प्राप्तवन्तौ। कथं वास्तविके मिथ्यात्वग्रह इति विशेषणेनोपपादयति, किम्भूतौ विमुग्धौ विशेषेण मूढौ अथच सुन्दरौ ॥ ५३ ॥

एवं सत्येऽप्यलीकभ्रान्तिं दर्शयित्वा संप्रत्यलीकेऽपि सत्यभ्रान्तिं दर्शयन्नाह। सर्वत्रेति। तौ भैमीनलौ अलीकन्तु अलीकमपि बाधितस्वरूपमपीति यावत् परस्परमन्योन्यं कर्मभूतमालोक्य सत्यत्वेन भ्रमविषयीकृत्य केलिरसात् आलिङ्गनादिक्रीड़ासुखाद्विरन्तुं विरतिं प्राप्तुं न शेकतुर्न समर्थौ बभूवतुः। कथमलीकेऽपि तयोर्विश्वास इति कर्तृकर्मणोर्विशेषणेनोपपादयति। सर्वत्र बहुषु विषयेषु संवाद्यं संवादार्हं दर्शनस्पर्शनादिना यथाश्रुतमुपपद्यमानं तथा रूपश्रिया यथाश्रुतं

---

"अत्र काव्यलिङ्गमलङ्कारः" सा ॥ ५१ ॥ "अत्र स्तम्भपदार्थस्य विशेषणगत्या धारणाशक्तिहेतुत्वात् पदार्थहेतुक काव्यलिङ्गमलङ्कारः" जी। "अत्र काव्यलिङ्गभावोदयालङ्कारौ" सा ॥ ५२ ॥ "अत्र सत्यस्पर्शे श्रद्धायाः कारणे सत्यपि अलीकत्वेन निमित्तप्रतिपादनादुक्तनिमित्तविशेषोक्तिरलङ्कारः" सा। श्रद्धाया अनुत्पत्तिं प्रति विमुग्धौ इति पदार्थस्य हेतुत्वात् काव्यलिङ्गम् वृत्त्यनुप्रासश्च ॥ ५३ ॥

परस्परस्पर्शरसोर्म्मिसेका-त्तयोः क्षणञ्चेतसि विप्रलम्भः ।
स्नेहातिदानादिव दीपिकार्च्चि-र्निमिष्य किञ्चिद्द्विगुणन्दिदीपे ॥ ५५ ॥
वेश्माप सा धैर्य्यवियोगयोगाद् बोधञ्च मोहञ्च मुहुर्द्दधाना ।
पुनःपुनस्तत्र पुरः स पश्यन् बभ्राम तां सुभ्रुवमुद्भ्रमेण ॥ ५६ ॥
पद्भ्यां नृपः सञ्चरमाण एष चिरं परिश्रम्य कथङ्कथञ्चित् ।
विदर्भराजप्रभवाभिरामं प्रासादमभ्रङ्कषमाससाद ॥ ५७ ॥

ज्ञायमानया सौन्दर्यशोभया परमतिशयेन आतिथ्यकरं सौख्यकरं तत्तद्रूपेण प्रत्यक्षविषयत्वमुपगतं वा परस्परं अबाधमानौ सत्यत्वेन मन्यमानौ । संवादमिति क्वचित् पाठस्तत्र संवादमबाधमाना-वित्यन्वयः । क्वचिच्च तथ्यकरमिति पाठस्तत्र रूपश्रिया तथ्यकरं सत्यबुद्धिजनकमित्यर्थः ॥ ५४ ॥

परस्परेति । परस्परस्पर्शेन अन्योन्यालिङ्गनेन जनितो यो रसोऽनुरागस्तस्योर्मिरुद्रेकस्तेन सेकात् सेचनात् अनुरागाधिक्यश्रयणादित्यर्थः । तयोर्भैमीनलयोश्चेतसि वर्त्तमानो विप्रलम्भः पूर्वरागाख्यशृङ्गारभेदो वियोगः क्षणं व्याप्य किञ्चिदीपन्निमिष्य मन्दीभूय पूर्वापेक्षाया द्विगुणं यथा तथा दिदीपे ववृधे । उपमिनीति स्नेहातिदानादिव स्नेहस्य तैलस्य अतिदानात् बहु-प्रक्षेपाद्यथा दीपिकार्च्चिर्दीपशिखा क्षणं व्याप्य किञ्चिन्निमिष्य द्विगुणं दीप्यते तथा । विप्र-लम्भो हि संयोगपूर्वकोऽतितरां दुःखयतीति भावः । 'स्नेहः स्यात् पुंसि तैलादिरसद्रव्ये च सौहृदे' मे ॥ ५५ ॥

वेश्मेति । सा दमयन्ती धैर्यवियोगयोर्योगात् सम्बन्धात् क्रमेण बोधं कथमेवं सम्भवतीति सम्यक् ज्ञानञ्च नल एवायमिति मोहं मिथ्याज्ञानञ्च मुहुः प्रतिक्षणं दधाना सती धैर्याद् बोधं वियो-गान्मोहञ्च धारयन्ती सती वेश्म निजगृहम् आप प्राप्तवती । स नलः उद्भ्रमेण उद्गतभ्रान्त्या तां सुभ्रुवं पुरोऽग्रे पुनःपुनर्वारंवारं पश्यन् सन् तत्रैव बभ्राम गतायामपि भैम्याम् अलीकरूपाया स्तस्या दर्शनादालिङ्गनादिप्रत्याशया तत्रैव सञ्चचारेत्यर्थः । चद्वयमुभयप्राधान्यसूचकम् ॥ ५६ ॥

अथ नलस्य भैमीगृहागमनमाह । पद्भ्यामिति । पद्भ्यां न तु वाहनेन सञ्चरमाणो विप्रलम्भमोह-वशादितस्ततः परिभ्रमन्नेष नृपो नलश्चरणसञ्चरणेन चिरं परिश्रम्य परिश्रमं प्राप्य कथं कथञ्चिद-तिकष्टेन विदर्भराजप्रभवाया भैम्या अभिरामः सख्यादिभिः सह क्रीडा यत्र तादृशं विदर्भराजप्रभ-वया अभिरामं सुशोभितं वा अभ्रंकषमत्युच्चतरत्वाद्गगनलग्नशिखरं प्रासादम् आससाद प्राप्तवान् ।

---

अत्र अबाधमानत्वं प्रति सवाद्यपदार्थस्य, आतिथ्यकरपदार्थस्य च हेतुत्वादेकं काव्य-लिङ्गम्, विरामाभाव प्रति अबाधमानपदार्थस्य हेतुत्वादपरं काव्यलिङ्गम्, द्वितीयार्द्धेऽन्त्यानु-प्रासश्छेकानुप्रासश्च ॥ ५४ ॥ श्रौतोपमालङ्कारश्छेकानुप्रासश्च । 'अर्चिः हेतिः शिखा स्त्रियाम्' अ ॥ ५५ ॥ अत्र धैर्यवियगयोः क्रमेण बोधमोहहेतुतयान्वयात् यथासंख्यमलङ्कारो भावशवलता, छेकानुप्रासः, वृत्त्यनुप्रासश्च । अत्र चपलतारूपः सञ्चारिभाव उक्तः । यदाह दर्पणकारः—'मात्-सर्यद्वेषरागादेश्चापल्य त्वनवस्थितिः । तत्र भर्त्सनपारुष्यस्वच्छन्दगमनादयः' इति ॥ ५६ ॥

सखीशतानां सरसैर्विलासैः स्मरावरोधभ्रममावहन्तीम्।
विलोकयामास सभां स भैम्या-स्तस्य प्रतोलीमणिवेदिकायाम्॥ ५८॥
कण्ठः किमस्याः पिकवेणुवीणा-स्तिस्रो जिताः सूचयति त्रिरेखः।
इत्यन्तरस्तूयत यत्र काचि-न्नलेन बाला कलमालपन्ती॥ ५९॥
एतं नलं तं दमयन्ति पश्य त्यजार्त्तिमित्यालिकुलप्रबोधात्।
श्रुत्वा स नारीकरवर्त्तिशारी-मुखात् स्वमाशङ्कत यत्र दृष्टम्॥ ६०॥

मोहवशेनेतस्ततः परिभ्रमणाद् भैमीगृहं प्राप्तवान् न तु बुद्धिपूर्वकमिति भावः। सञ्चरमाण इति 'सञ्चरस्तृतीयायुक्ताच्च'त्यात्मनेपदम्। अभ्रंकषमिति 'कूलाभ्रकरीषाच्च कष' इति खः॥ ५७॥

तत्र गतस्य नलस्य भैमीसभावलोकनमाह। सखीति। स नलस्तस्य प्रासादस्य प्रतोल्यां रथ्यायां परिसरदेशे वर्त्तमाना या मणिवेदिका मणिबद्धपरिष्कृतभूमिस्तस्यां भैम्याः सभां विलोकयामास ददर्श। किम्भूतां सखीशतानां सखीसमूहानां सरसैः शृङ्गाररसवद्भिर्विलासैर्विभ्रमैः स्मरावरोधभ्रमं कन्दर्पस्यान्तःपुरभ्रान्तिम् आवहन्तीं जनयन्तीम्। सखीनां रतितुल्यत्वात् कामान्तःपुरमिदमिति नलस्य भ्रांतिं कुर्वतीमित्यर्थः। स्मरोऽत्रैव अवरुद्ध इति नलस्य भ्रमम् आवहन्तीं वा॥ ५८॥

अथ पञ्चदशभिः श्लोकैः कुलकेन सभां विशिनष्टि। कण्ठ इति। यत्र सभायां कलं मधुरास्फुटं यथा तथा आलपन्ती रागालापं कुर्वती काचिद् बाला भैमीसखी नलेन अन्तर्मनसि इत्येवम् अस्तूयत स्तुता। इति किम् अस्या बालायास्तिस्रो रेखा यत्र तादृशः कण्ठो गलः तिस्रः पिकवेणुवीणाः जिताः स्वरामृतेन पराभूताः किं सूचयति ज्ञापयति। स्वावस्थितेन सुलक्षणरूपेण रेखात्रयेण कोकिलवंशीवीणानां त्रयं मया जितमिति किं कथयतीत्यर्थः एवमस्तूयत सभायां कम्बुग्रीवावतीं मधुरस्वरञ्चालपन्तीं काञ्चिद् दृष्ट्वा तुतोषेति भावः। 'रेखात्रयाञ्चितग्रीवा कम्बुग्रीवेति कथ्यते' इति सामुद्रकम्॥ ५९॥

एतमिति। यत्र सभायां स नलः नार्य्याः कस्याश्चिद्भैमीसख्याः करवर्त्तिनी हस्ते वर्त्तमाना या शारी शारिका पक्षिविशेषः तस्या मुखात् हे दमयन्ति यदर्थं पीड़िताऽसि तम् एतम् अग्रे वर्त्तमानम् आगतं वा नलं पश्य, आर्त्तिं पीड़ां मूर्च्छारूपां त्यज इति आलिकुलस्य सखीसमूहस्य प्रबोधात् सान्त्वनवादान् श्रुत्वा सखीभिः शारिकया वा दृष्टं दर्शनविषयतां गमितं स्वमात्मानम् आशङ्कत आशङ्कितवान्। किमेताभिर्दृष्टोऽहं, कथमन्यथा शारिका एवं कथयतीत्याशङ्कां कृतवानित्यर्थः। यदा

अत्र च्छेकानुप्रासोऽलङ्कारः। प्रसीदन्ति मनांसि अस्मिन्निति प्रासादः अधिकरणे घञ्प्रत्ययः॥ ५७॥ विलासो हि यौवने सत्त्वोदयजनितः स्त्रीपुंसोयोर्भावविशेषः। तथाचाह दर्पणकारः, 'यानस्थानासनादीनां मुखनेत्रादिकर्मणाम्। विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना' इति॥ ५८॥ "अत्र कण्ठरेखात्रयस्य विशेषणगत्या पिकादित्रयविजयसूचकत्वोत्प्रेक्षाहेतुकत्वात् काव्यलिङ्गसङ्कीर्णेयमुत्प्रेक्षा।" जी॥ ५९॥

यत्रैकयालीकनलीकृतालीकण्ठे मृषाभीमभवीभवन्त्या ।
तद्दृक्पथे दौहृदिकोपनीता शालीनमाधायि मधूकमाला ॥ ६१ ॥
चन्द्राभमाभ्रन्तिलकं ददाना तद्वन्निजास्येन्दुकृतानुबिम्बम् ।
सखीमुखे चन्द्रसखे ससर्ज्ज चन्द्रानवस्थामिव कापि यत्र ॥ ६२ ॥
दलोदरे काञ्चनकेतकस्य क्षणान्मसीभावुकवर्णलेखम् ।
तस्यैव यत्र स्वमनङ्गलेखं लिलेख भैमी नखलेखनीभिः ॥ ६३ ॥

यदा भैमीमूर्च्छिताऽभूत् तदा तदा कथमपि मूर्च्छामपनेतुमशक्ता भैमीसख्यो मिथ्याभूतानपि यान् एतं नलमित्यादिसान्त्वनवादानूचुस्तान् शिक्षित्वा शारिका अपि मध्ये मध्ये कथयन्ति स्म । सुतरामेवमजानतो नलस्य तादृशशारीवचनश्रवणात् स्वदर्शनाशङ्का भवितुमुचिता ॥ ६० ॥

यत्रेति । यत्र सभायां तस्यादृश्यस्य नलस्य दृक्पथे सम्मुखे मृषाभीमभवीभवन्त्या अलीकभैमीभवन्त्या भैमीरूपं धारयन्त्या एकया सख्या अलीकनलीकृता असत्यनलाकारीकृता नलरूपधारिणी या आली सखी तस्याः कण्ठे दौहृदिकेन अभिलाषेण उपनीता जनैरानीता यद्वा वृक्षाणां दोहदं वेत्तीति दौहृदिकेन मालाकारेण उपनीता मधूकस्य कुसुमविशेषस्य माला स्रक् शालीनं सलज्जं यथा तथा आधायि अर्पिता । भैमीसन्तोषाय सखीभिरेवं क्रीडा कृतेति भावः ॥ ६१ ॥

चन्द्राभमिति । यत्र सभायां कापि भैमीसखी चन्द्रसखे चन्द्रतुल्ये सखीमुखे चन्द्रस्येव आभा शोभा यस्य तादृशम् आभ्रम् अभ्रमतिस्वच्छवस्तुविशेषस्तत्सम्बन्धि तिलक ललाटाभरणं ददाना अर्पयन्ती सती चन्द्रस्य अनवस्थाम् इयत्तयानवधारणं बाहुल्यं वा अथ च दुरवस्थत्वं ससर्ज्जेव चकारेव । किम्भूतं तिलकं तद्वत् चन्द्राकाराभ्रतिलकयुक्तं निजं स्वीयं यदास्यं मुखं तल्लक्षणेनेन्दुना चन्द्रेण कृतमनुबिम्बं प्रतिबिम्बं यत्र तादृशं चन्द्राकारतिलकयुक्तस्वीयमुखचन्द्रे कृतमनुबिम्बं येनेति वा तिलकदात्रीमुखतिलकयोस्तत्सखीमुखतिलकयोश्च चन्द्रतुल्यत्वाद् बहवश्चन्द्रा भूता इत्यर्थः । यद्वस्तु बहुतरं भवति तल्लोके एतस्य दूरवस्था जातेत्युक्ता न बहुमन्यते ॥ ६२ ॥

दलोदर इति । यत्र सभायां भैमी काञ्चनकेतकस्य सुवर्णकेतककुसुमस्य दलोदरे पत्रगर्भे नखा एव लेखन्यस्ताभिः करणैस्तस्यैव नलस्यैव नलमुद्दिश्येत्यर्थः स्वं स्वीयम् अनङ्गलेखं कामोपदिष्टं लिखनं प्राणनाथ कियच्चिरयसि चिरविरहिण्याः खलु गतप्राया भवदेकशरणाः प्राणा इत्यादिरूपं लिलेख लिखति स्म । किम्भूतं लेखं क्षणाल्लिखनक्षण एव मसीभावुका श्यामीभवनशीला वर्णाना-

'अत्र भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः' जी । "अत्र शङ्काभावोदयालङ्कारः" सा । अनुप्रासश्च ॥ ६० ॥ छेकानुप्रासो वृत्त्यनुप्रासश्चालङ्कारः ॥ ६१ ॥ "चन्द्रानवस्थां ससर्जेवेत्युत्प्रेक्षा । अत्र तिलकक्रियोत्पत्तौ स्वच्छद्रव्यतया परस्पराभिमुखावस्थितदर्पणवदितरेतराभ्रतिलकसंक्रान्तेरितरेतरतिलकचन्द्रपरम्परानन्त्यादनवस्थाक्रियानिष्पत्तिश्चेति चित्रमिति भावः" जी । 'चन्द्राभं' 'चन्द्रसखे' इत्युपमाद्वयम् 'निजास्येन्दु' इति रूपकञ्च ॥ ६२ ॥

विलेखितुं भीमभुवो लिपीषु सख्यातिविख्यातिभृतापि यत्र।
अशाकि लीलाकमलं न पाणि-रपारि कर्णोत्पलमक्षि नैव ॥ ६४ ॥
भैमीमुपावीणयदेत्य यत्र कलिप्रियस्य प्रियशिष्यवर्गः।
गन्धर्ववध्वः स्वरमध्वरीण-तत्कण्ठनालैकधुरीणवीणः ॥ ६५ ॥
नावा स्मरः किं हरभीतिगुप्ते पयोधरे खेलति कुम्भ एव।
इत्यर्द्धचन्द्राभनखाङ्कचुम्बि-कुचा सखी यत्र सखीभिरूचे ॥ ६६ ॥

मक्षराणां रेखा यस्मिन् तादृशम्। विरहिणीभिः स्वीयभावसूचनार्थं प्राणेशाय पत्रिका प्रेष्यते मस्या च वर्णा लिख्यन्ते। केतकीपुष्पेषु नखलेखानां श्यामीभवनं स्वभावः ॥ ६३ ॥

विलेखितुमिति। यत्र सभायां लिपीषु चित्रलिखनव्यापारेषु अतिविख्यातिम् अत्यन्त-प्रसिद्धिं बिभर्त्तीति तादृश्या अतिकुशलयापीत्यर्थः भैमीसख्या भीमभुवो भैम्या लीलाकमलं क्रीड़ापद्मं विलेखितुं चित्रयितुम् अशाकि शक्तं, किन्तु पाणिर्भैम्याः करो विलेखितुं नाशाकि तथा कर्णोत्पलं कर्णपूरीकृतनीलकमलं विलेखितुम् अपारि पारितम्, नैव पुनरक्षि भैम्याश्चक्षु विलेखितुं अपारि दमयन्त्याः करनयनं लीलाकमलकर्णोत्पलापेक्षयाप्यतिसुन्दरमिति विशेषेण लेखितुं न शक्तमिति भावः ॥ ६४ ॥

भैमीमिति। यत्र सभायां गन्धर्वाणां वध्वः पत्न्य एव कलिप्रियस्य कलहसन्तोषस्य नारदस्य प्रियशिष्यवर्गः प्रियशिष्यसमूह एत्य आगत्य भैमीम् उपावीणयत् वीणया उपागायत्। किम्भूतः स्वरमधुना स्वरामृतेन अरीणम् अरिक्तं पूर्णं यत्तस्या भैम्याः कण्ठनालं तेनैकधुरं वहतीत्येकधुरीणा तत्सदृशी वीणा यस्य तादृशः। गन्धर्ववध्वः प्रथमं नारदेन वीणावादनमध्यापितास्तत्रातिनैपु-ण्याच्च तस्यातिप्रिया एवम्भूता अपि वीणावादने ततोऽप्यधिकं कौशलमभ्यसितुं तत्रागत्य भैमीं वीणयोपगायन्ति स्मेति भावः। एतेन वीणारवादपि भैम्याः स्वरस्यातिमाधुर्यं सूचितं, नालपदेन च भैमीमुखस्य कमलत्वं सूचितम्। उपावीणयदिति 'पाशादेर्मोचनादावि'ति णिङ् ॥ ६५ ॥

नावेति। यत्र सभायाम् अर्द्धचन्द्राभोऽर्द्धचन्द्रवद्वक्रो यो नखाङ्को नखचिह्नं तच्चुम्बी तत्संसर्गी कुचः स्तनो यस्यास्तादृशी कापि सखी सखीभिरिति ऊचे, सपरिहासमुक्ता। इति किं

---

अत्र नखलेखनीभिरिति निरङ्गं समस्तरूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ६३ ॥
चित्रकर्मनिपुणाः लोकसाधारणमेव वस्तु यथायथमङ्कयितुं शक्नुवन्ति, नतु अलौकिकम्। दमयन्त्याः पाणिः नेत्रञ्चातुलनीयत्वादलोकसाधारणमेव, तस्मात् न तत् सम्यक् चित्रयितुं शक्यते इतिभावः। एतेन दमयन्त्याः पाणिः कमलादपि, तथा नेत्रं नीलोत्पलादपि मनोरमम् इति उप-मानादुपमेयस्याधिक्यप्रतिपादनाद् व्यतिरेकालङ्कारश्छेकानुप्रासेन संसृज्यते "अत्र प्रतीपमल-ङ्कारः" सा। सच लीलाकमलकर्णोत्पलयोरुपमेयताकल्पनाभिप्रायमूलकः ॥ ६४ ॥ अतिशयो-क्तिः, आर्थोपमा चानयोः सङ्करः। अत्र कण्ठनालेतिनालपदप्रयोगेण स्वरे च मधुनः आरोपेण भैमीमुखस्य कमलत्वम्, कण्ठस्य च तन्नालत्वम्, तन्निःसृतभाषितस्य च मधुत्वं व्यज्यते ॥ ६५ ॥

स्मराशुगीभूय विदर्भसुभ्रू-वक्षो यदक्षोभि खलु प्रसूनैः ।
स्रजं सृजन्त्या तदशोधि तेषु यत्रैकया सूचिशिखां निखाय ॥ ६७ ॥
यत्रावदत्तामतिभीय भैमी त्यज त्यजेदं सखि साहसिक्यम् ।
त्वमेव कृत्या मदनाय दत्से बाणान् प्रसूनानि गुणेन सज्जान् ॥ ६८ ॥
आलिख्य सख्याः कुचपत्रभङ्गी मध्ये सुमध्या मकरीं करेण ।
यत्रालपत्तामिदमालि यानं मन्ये त्वदेकावलिनाकनद्याः ॥ ६९ ॥

हे सखि स्मरः कामो हराद्धरनयनानलाद्या भीतिर्दाहभयं तस्या हेतोरात्मानं गोपायतीति हरभीतिगुप् एवम्भूतः सन् ते तव पयोधरे स्तनलक्षणे अथच जलाधारभूतं कुम्भ एव कलश एव किं नावा नौकया खेलति क्रीडति इत्यूचे किं वितर्के। नखाङ्कस्य अर्द्धचन्द्राकारत्वान्नौकात्वं युक्तम्। अन्योऽनलदाहभीतो निभृतं जलप्रधानदेशम् आश्रित्य नौकामारुह्य खेलति। हरभीतिगुबिति क्विवन्तम् ॥ ६६ ॥

स्मरेति। प्रसूनैः पुष्पैः स्मराशुगीभूय कामस्य शरीभूय विदर्भभ्रुवो भैम्या वक्षो यदक्षोभि क्षोभितं तत् भैमीवक्षःक्षोभलक्षणं वैरं तत्र सभायां तेषु प्रसूनेषु सूचिशिखां सूच्यग्रं निखाय आरोप्य स्रजं मालां सृजन्त्या ग्रथ्नत्या एकया भैमीसख्या अशोधि शोधितं खलूत्प्रेक्ष्यते। तेषु सूचिशिखानिखननरूपशस्त्रप्रहाराद्वैरनिर्यातनं कृतमिवेत्यर्थः। यत्र काचिन्मालां जग्रन्थेति भावः ॥ ६७ ॥

यत्रेति। यत्र सभायां भैमी अतिभीय अत्यन्त भयं प्राप्य तां स्रजं स्रजन्तीं सखीम् अवदत् उवाच। किमुवाचेत्याह हे सखि इदं साहसिक्यं साहसकर्म मालाग्रथनलक्षणमनिष्टाचरणं त्यज त्यज मुञ्च मुञ्च। साहसिक्यमेवाह प्रसूनानि पुष्परूपान् बाणान् गुणेन सूत्रेण अथच मौर्व्या सज्जान् सन्नद्धान् कृत्वा त्वमेव मदनाय कामाय दत्से ददासि। मम सखी भूत्वापि मत्पीडकाय कामाय मौर्वीसन्नद्धान् बाणान् ददासीति महाननयस्तदिदं झटिति परित्याज्यमित्यर्थः। कुसुममालायां मौर्वीसन्नद्धकामबाणभ्रान्त्या भैम्या अतितरां भयं जातमिति भावः ॥ ६८ ॥

आलिख्येति। सुमध्या क्षीणमध्यभागा काचिद्भैमीसखी सख्याः कुचयोः स्तनयोर्वर्त्तमाना या पत्रभङ्गी पत्रावलिस्तस्या मध्ये करेण हस्तेन मकरीं जलजन्तुविशेषं स्त्रियम् आलिख्य सम्यक् लिखित्वा यत्र सभायां तां सखीमिति आलपत् अवदत्। इति किं हे आलि सखि

---

अत्र नखाङ्के नौत्वस्य पयोधरे कुम्भत्वस्यारोपस्य शाब्दत्वात् स्मरे च नाविकत्वारोपस्य आर्थत्वात् एकदेशविवर्त्तिरूपकम्, खेलति किमिति क्रियोत्प्रेक्षा, अर्द्धचन्द्राभेति आर्थोपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः॥ ६६। अत्र अशोधीवेति प्रतीतेः क्रियोत्प्रेक्षा, स्रक्कुसुमानां कामबाणाभेदाध्यवसायादतिशयोक्तिः छेकानुप्रासवृत्त्यनुप्रासौ च॥ ६७ ॥ गुणशब्दश्लेषेण ज्ययाभेदाध्यवसायाद् अतिशयोक्तिः साप्रसूनेषु बाणत्वरूपणोत्थापिता ॥ ६८ ॥

तामेव सा यत्र जगाद भूयः पयोधियादः कुचकुम्भयोस्ते ।
सेयं स्थिता तावकहृच्छयाङ्क-प्रियास्तु विस्तारयशः प्रशस्तिः ॥ ७० ॥
शारीश्चरन्तीं सखि मारयैता-मित्यक्षदाये कथिते कयापि ।
यत्र स्वघातभ्रमभीरुशारी-काकूत्थसाकूतहसः स जज्ञे ॥ ७१ ॥
भैमीसमीपे स निरीक्ष्य यत्र ताम्बूलजाम्बूनदहंसलक्ष्मीम् ।
कृतप्रियादूत्यमहोपकार-मरालमोहद्रढिमानमूहे ॥७२ ॥

तव या एकावलिरेकयष्टिकमुक्ताहारभेदस्तद्रूपाया नाकनद्या गङ्गाया इदं मकरीलक्षणं यानं वाहनं मन्ये उत्प्रेक्षे । इयमिति पाठे यानमिति प्रथमान्तं पदम् इयं मकरी यानम् इत्यहं मन्य इतीतिशब्दाध्याहारेणान्वयः । स्वच्छत्वादेकावल्या नाकनदीत्वं हारसमीपे मकर्या विद्यमानत्वात्तस्या नाकनदीवाहनत्वञ्चोत्प्रेक्षितम् । 'गङ्गा मकरवाहिनी'त्यागमः । 'एकावल्येकयष्टिका' अः ॥ ६९ ॥

तामिति । यत्र सभायां सा चित्रकारिणी सुमध्या भूयः पुनरपि तामेव सखीं जगाद उवाच । किं जगादेत्याह हे सखि ते तव कुचकुम्भयोरतिपीनस्तनयोर्विस्तारयशसः पीवरत्वकीर्त्तेः प्रशस्तिः प्रशंसिकेव स्थिता कुचयोर्मध्ये वर्त्तमाना पयोधेः समुद्रस्य यादो जलजन्तुभेदः सेयं मकरी तावकहृच्छयस्य त्वदीयहृदयस्थितस्य कामस्य अङ्कः चिह्नम् कामस्य मकरध्वजत्वात् ध्वजरूपो मकर इत्यर्थस्तस्य प्रिया प्राणेश्वरी अस्तु भवतु । मकरध्वजस्य हृदयस्थितत्वेन तद्ध्वजस्यापि मकरस्य हृदयस्थितत्वात् हृदयस्थितमकर्यास्तत्प्रियात्वसम्भावनं युज्यत एव । या हि समुद्रं वसति, सा त विहाय त्वत्कुचयोः स्थिता, तर्हि तदपेक्षया अनयोः पीवरत्वं स्पष्टतरमेवेति मकर्याः स्तनविस्तारयशःप्रशस्तित्वम् । प्राञ्चस्तु विस्तारयशःप्रशस्तेर्विधेयत्वं वदन्ति ॥ ७० ॥

शारीमिति । हे सखि चरन्तीं गृहाद् गृहान्तरं गच्छन्तीम् अथ च भक्षयन्तीम् एतां शारीम् अक्षोपकरणगुटिकाम् अथ च पक्षिविशेषं मारय निष्फलां कुरु अथ च विनाशय इत्यनेन कयाचित् भैमीसख्या अक्षदाये पाशकदाने कथिते सति यत्र सभायां स नलः स्वघातस्य निजमारणस्य यो भ्रमो द्वितीयार्थस्य ग्रहणात् मामेव हन्तुं कथयतीति भ्रान्तिस्तेन भीरुः सभया या शारी पक्षिविशेषस्तस्या या काकुर्दैन्योक्तिस्तया उत्थ उत्थितस्तस्या उत्थेन उत्थानेन वा साकूतः साभिप्रायो हसो हास्यं यस्य तादृशो जज्ञे जातः । 'शारी चाक्षोपकरणे तथा शाकुनिकान्तरे' 'दायो दाने यौतुकादिधने' वि । चरन्तीमिति 'चर गतौ भक्षणे चे'त्यस्य रूपम् ॥ ७१ ॥

भैमीति । यत्र सभायां स नलो भैमीसमीपे तांम्बूलस्य यो जाम्बूनदहंसः स्वर्णमयहंसः

एकावली एव नाकनदीतिरूपकानुप्राणिता 'यानं मन्ये' इति उत्प्रेक्षा छेकानुप्रासश्च ॥ ६९ ॥ स्तनयोश्चित्रितमकर्यां यशःप्रशस्तित्वारोपाद् रूपकं, वृत्त्यनुप्रासश्च ॥ ७० ॥ हास्यभावोदयाद् भावोदयाख्योऽलङ्कारः, वृत्त्यनुप्रासश्चेति संसृष्टिः । 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' अ । 'अक्षास्तु देवकाः पाशकाश्च ते' अ ॥ ७१ ॥

तस्मिन्नियं सेति सखीसमाजे नलस्य सन्देहमथ व्युदस्यन् ।
अपृष्ट एव स्फुटमाचचक्षे स एव रूपातिशयः स्वयन्ताम् ॥ ७३ ॥
भैमीविनोदाय मुदा सखीभि-स्तदाकृतीनां भुवि कल्पितानाम् ।
नातर्कि मध्ये स्फुटमप्युदीतं तस्यानुविम्बं मणिवेदिकायाम्॰॥ ७४ ॥

स्वर्णनिर्मितहंसाकारताम्बूलपात्रमित्यर्थः तस्य लक्ष्मीं शोभां निरीक्ष्य दृष्ट्वा कृतः प्रियावृत्य-लक्षणो महानुपकारो येन तादृशो यो मरालो राजहंसस्तस्मिन् यो मोहो भ्रान्तिस्तस्य द्रढिमानं दार्ढ्यम् ऊहे दधौ । नलस्य ताम्बूलजाम्बूनदहंसे मम दूतः स हंस एवायमिति दृढतरो भ्रमो जात इत्यर्थः । 'मरालो राजहंसे स्याद्धंसमात्रेऽपि दृश्यते' व ॥ ७२ ॥

अथ नलस्य भैमीनिश्चयमाह । तस्मिन्निति । अथानन्तरं स प्रसिद्धः कोऽपि लोकोत्तरो भैम्या रूपातिशयः इतरापेक्षया सौन्दर्याधिक्यम् अपृष्ट एव आसु कतमा भैमी कथ्यतामिति नलेनापृष्टोऽपि स्वयमात्मनैव तां भैमीं स्फुटं व्यक्तं यथा तथा आचचक्षे, इयं भैमीति ज्ञापयामास । तथाविधरूपातिशयेन नल इयमेव भैमीति निश्चिनोति स्मेत्यर्थः । निश्चयः संशयापनोदनपूर्वको भवतीति संशयापनोदनमाह किम्भूतो रूपातिशयः तस्मिन् सखीसमाजे सखीसमूहे सा भैमी इयम् इति नलस्य सन्देहं सखीसमाजाश्रयं भैमी इयमियं वेति संशयमित्यर्थः व्युदस्यन् निराकुर्वन् । नलस्य प्रथमं सखीसमूहदर्शनात्तासु भैमी इयमियं वेति सन्देहो जातः अनन्तरमलौकिकसौन्दर्यातिशयदर्शनाद्‌ भैम्या असाधारणरूपया भवितव्यमिति आसु मध्ये इयमेव भैमीति निश्चयो जात इत्यर्थः । एवकारोऽप्यर्थे । व्युदस्येति क्त्वायजन्तं क्वचिद् दृश्यते ॥ ७३ ॥

नन्वदृश्यस्यापि तस्य प्रतिविम्बसम्भवात् कथं तद्‌ दृष्ट्वा ताः सचकिता न जाताइत्यत आह । भैमीति । भैम्या विनोदाय मनोरञ्जनाय सखिभिर्मुदा हर्षेण मणिनिबद्धायां भुवि कल्पितानां लेखितानां तस्य नलस्य आकृतीनां प्रतिमूर्त्तीनां मध्ये मणिवेदिकायां मणिनिबद्धपरिष्कृतभूमौ स्फुटं सुव्यक्तं यथा तथा उदीतमपि उद्गतमपि तस्य नलस्य अनुविम्बं प्रतिविम्बं ताभि र्नातर्कि न तर्कितम् । चित्रप्रतिविम्बयोः समानतया पृथक्त्वेन ज्ञानाभावाद्‌ दृष्ट्वा न ताः सचकिता जाता इति भावः । मीलितालङ्कारोऽयं,--'मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा' इति लक्षणात् ॥ ७४ ॥

भ्रान्तिमानलङ्कारः, छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ७२ ॥ विश्वातिशायि-सौन्दर्यलिङ्गेन दमयन्तीत्वसाधनादनुमानम्, रूपातिशयस्य स्वयं कथनासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः ॥ ७३ ॥ अत्र सामान्यालङ्कारः, तेन च भ्रान्तिमान् व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः" जी । "अत्र मीलितमलङ्कारः" सा । अत्र प्रकृतनलानुविम्बस्य चित्रित-नलप्रतिकृतिभिः तादात्म्यविवक्षायां सामान्यालङ्कारः उक्तः जीवातौ, नलानुविम्बस्य गुप्त्यभिप्रायेण च मीलितमुक्तं टीकायां साहित्यविद्याधर्याञ्च ॥ ७४ ॥

हुताशकीनाशजलेशदूती-र्निराकरिष्णोः कृतकाकुयाच्ञाः।
भैम्या वचोभिः स निजान्तदाशां न्यवर्त्तयद्दूरमपि प्रयाताम्॥ ७५॥
विज्ञप्तिमन्तः सभयः स भैम्यां मध्येसभं वासवसम्भलीयाम्।
सम्भालयामास भृशं कृशाश-स्तदालिवृन्दैरभिनन्द्यमानाम्॥ ७६॥
लिपिर्न दैवी सुपठा भुवीति तुभ्यं मयि प्रेषितवाचिकस्य।
इन्द्रस्य दूत्यां रचय प्रसादं विज्ञापयन्त्यामवधानदानम्॥ ७७॥
सलीलमालिंगनयोपपीड़-मनामयं पृच्छति वासवस्त्वाम्।
शेषस्तदाश्लेषकथापनिद्रै-स्तद्रोमभिः सन्दिदिशे भवत्यै॥ ७८॥

वह्न्यादिभिर्गूढं प्रेषितासु दूतीषु भैम्या वैमत्यं दृष्ट्वा नलः समाश्वसिति स्मेत्याह। हुताशेति। कृता काकुभिर्दैन्योक्तिभिर्याच्ञा याभिस्तादृशीर्हुताशकीनाशजलेशानां वह्नियमवरुणानां दूतीर्निराकरिष्णोः साधु निराकुर्वत्या भैम्या वचोभिर्न तेषु मे प्रीतिरस्तीत्यादिनिराकरणवचनैः करणैः स नलः दूरमत्यन्तं प्रयातां गतां अथ च दूरदेशं प्राप्तामपि निजां स्वीयां तदाशां भैमीप्रत्याशां न्यवर्त्तयन्निवर्त्तयामास। भैम्या वह्न्यादित्रयदूतीनिराकरणं दृष्ट्वा दौत्याङ्गीकारात् परित्यक्तामपि भैमीलिप्सां पुनर्मनसि कृतवानित्यर्थः। अन्यमपि दूरं प्रयातं वचनैर्निवर्त्तयति। दूतीरित्यत्र इष्णुचः त्वादित्वान्न 'कर्त्तरी'त्यादिना षष्ठी। निराकरिष्णोरिति साध्वर्थे इष्णुच्॥ ७५॥

इन्द्रदूतीविज्ञापनं श्रुत्वा नलः सभयो जात इत्याह। विज्ञप्तिमिति। नलो मध्येसभं सभाया मध्ये तस्या भैम्या आलिवृन्दैः सखीसमूहैरभिनन्द्यमानां सम्यगियं कथयतीति स्तूयमानां वासवसम्भलीयाम् इन्द्रकुट्टिनीसम्बन्धिनीं भैम्यां विज्ञप्तिम् इन्द्रस्त्वामेवं वदतीति विज्ञापनं सम्भालयामास शुश्राव। किम्भूतः भैमी देवराजं वरिष्यतीति बुद्ध्वा अन्तर्मनसि सभयो भययुक्तः, तथा निजसखीवचनं भैमी करिष्यत्येवेति बुद्ध्वा भृशमतिशयं कृशा क्षीणा आशा भैमीलिप्सा यस्य तादृशः। मध्येसभमिति 'पारे मध्ये षष्ठ्या वे'त्यव्ययीभावनिपातितम्। सम्भालयामासेति 'भलभाषण' इत्यस्य चौरादिकस्य रूपम्। 'कुट्टिनी सम्भली समे' अ॥ ७६॥

इतः परमिन्द्रदूत्या विज्ञापनमनुवदति। लिपिरिति। विज्ञापयन्त्याम् इन्द्रवचनविज्ञापनं कुर्वत्याम् इन्द्रस्य दूत्यां मयि अवधानस्य चित्तैकाग्रत्वस्य दानमेव प्रसादं रचय कुरु, मया विज्ञाप्यमानमिन्द्रवक्तव्यं सावधाना शृण्वित्यर्थः। ननु त्वञ्चेदिन्द्रदूती तर्हि मदर्था इन्द्रस्य लिपिर्दर्शयितव्येत्याशङ्कामिन्द्रविशेषणेनापनयति किम्भूतस्य भुवि पृथिव्यां वर्त्तमानैर्जनैः दैवी देवसम्बन्धिनी लिपिर्न सुपठा न सुखेन पठितुं शक्या इति हेतोस्तुभ्यं त्वदर्थं मयि प्रेषितं वाचिकं सन्देशवचनं येन तादृशस्य। 'सन्देशवाग्वाचिकं स्या'दित्यमरः॥ ७७॥

सलीलमिति। हे भैमि वासव इन्द्रः सलीलं सविलासं यथा तथा आलिङ्गनया आश्लेषेण उप-

---

"अत्रानुप्रासालङ्कारः" सा॥ ७५॥ पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते॥ ७६॥

यः प्रेर्यमाणोऽपि हृदा मघोन-स्त्वदर्थनायां ह्रियमापदागः ।
स्वयंवरस्थानजुषस्त्वमस्य बधान कण्ठं वरणस्रजाशु ॥ ७९ ॥
नैनं त्यज क्षीरधिमन्थनाद्यै-रस्यानुजायोद्गमितामरैः श्रीः ।
अस्मै विमथ्येक्षुरसोदमन्यां श्राम्यन्तु नोत्थापयितुं श्रियन्ते ॥ ८० ॥
लोकस्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान्महेन्द्रः ।
किङ्कर्तुमर्थी यदि सोऽपि रागा-ज्जागर्त्ति कक्षा किमतः परापि ॥ ८१ ॥

पोड़म् उपपीड्य गाढ़मालिङ्ग्येत्यर्थः । त्वाम् अनामयम् आरोग्यं पृच्छति हे भैमि तव अनामयं विद्यते कच्चिदिति जिज्ञासत इत्यर्थः शेषः विशेषस्तु तस्येन्द्रस्य रोमभिः कर्तृभिस्तव आश्लेष-कथया आलिङ्गनकथावशादेव अपनिद्रैः रस्वप्नैरुद्गतैः सन्निर्भवत्यै तुभ्यं सन्दिष्टः। यदालिङ्गनकथा-मात्रेणैव सत्वोदयाज्जातेन रोमाञ्चेन त्वयि अतितरां सानुरागो जात इति सूचितमित्यर्थः तस्मात्त्वया सोऽनुग्राह्य इति भावः । दमयन्त्याः क्षत्रियपुत्रीत्वाद्युज्यत एवानामयशब्देनारोग्य-जिज्ञासा । तथा च मनुः 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रं पृच्छेदनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च' इति ॥ ७८ ॥

य इति। हे भैमि मघोन इन्द्रस्य यः कण्ठो हृदा मनसा प्रेर्यमाणोऽपि स दरीक्रियमाणोऽपि त्वद-र्थनायां याचनायां विषये ह्रियं लज्जालक्षणम् आगोऽपराधम् आपत् प्राप्तवान्, तं स्वयंवरस्थानजुषः स्वयंवरस्थानभागिनोऽस्येन्द्रस्य कण्ठं वरणस्रजा वरणमालया आशु शीघ्रं बधान बन्धनं प्रापय अप-राधकारिणो हि झटिति बन्धनं युज्यते । इन्द्रस्त्वयि अतितरां जातानुरागस्तत्त्वं वृणुष्वेति भावः अत्रानुकूलालङ्कारः। 'अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेदि'ति लक्षणात् ॥ ७९ ॥

नैनमिति। हे भैमि एनम् इन्द्रं न त्यज अङ्गीकुर्वित्यर्थः। यतः क्षीरधिमन्थनात् क्षीर-समुद्रविलोड़नात् यैरमरैरस्येन्द्रस्य अनुजाय उपेन्द्राय नारायणार्थं श्रीर्लक्ष्मीरुद्गमिता उत्थापिता, ते देवा अस्मै इन्द्रार्थम् इक्षुरसोदं इक्षुरससमुद्रं विमथ्य विलोड्य अन्यां श्रियम् उत्थापयितुम् उद्गमयितुं न श्राम्यन्तु न परिश्रमं प्राप्नुवन्तु । अतो देवेषु दयां प्रकाश्य इन्द्रं वृणुष्वेत्यर्थः। क्षीरसमुद्रं निर्मथ्य यैरमरैर्लक्ष्मीः उत्थाप्य इन्द्रानुजाय दत्ता, ज्येष्ठत्वात्तस्यापि पूज्याय इन्द्राय तैस्ततोऽप्यधिका दातव्या सा च क्षीरसमुद्रादुत्तमस्य इक्षुरससमुद्रस्य मन्थनं विना न प्राप्यत इति तन्मन्थने तेषां प्रयासः स्यात्, त्वत्प्राप्त्या तु स तेषां न भविष्यति । त्वं हि लक्ष्मीतोऽप्यति-सुन्दरीति भावः । अतिसौन्दर्येण त्वमेव इक्षुरससमुद्रसम्भवा लक्ष्मीरित्यर्थः ॥ ८० ॥

लोकेति । हे भैमि लोकस्रजि भुवनश्रेणीमध्ये द्यौः स्वर्गो महती, अनेन भूमिजान् राज्ञो मा

---

भावोदयो नामालङ्कारः ॥ ७८ ॥ "अत्र समासोक्तिरलंकारः" सा । प्रकृते इन्द्रेऽप्रस्तुतस्य अपराधिनो व्यवाहारप्रतीतेः ॥ ७९ ॥ अत्रामराणां लक्ष्म्यन्तरोत्पादनप्रयत्नासम्बन्धेऽपि तत्-सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः । दमयन्ती लक्ष्मीतोऽप्युत्कृष्टतरेति व्यतिरेको व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ८० ॥

पदं शतेनाप मखैर्यदिन्द्रस्तस्मै स ते याचनचाटुकारः।
कुरु प्रसादं तदलंकुरुष्व स्वीकारकृद्भ्रूनटनश्रमेण ॥ ८२ ॥
मन्दाकिनीनन्दनयोर्विहारे देवे भवेद्देवरि माधवे वा।
श्रेयः श्रियां यातरि यच्च सख्यां तच्चेतसा भाविनि भावयस्व ॥ ८३ ॥

विवहेति सूचितं। दिवि च स्वर्गे च आदितेया अदितिपुत्रा देवा महान्तः, अनेन च युद्धसम्मुखमरणादिना प्राप्तस्वर्गाणां राज्ञां गन्धर्वादीनाञ्च निषेधः सूचितः। तर्हि वह्न्यादिभिः किमपराद्धमित्यत आह आदितेयेष्वपि देवेष्वपि महेन्द्रो महान् उत्कृष्टः। सोऽप्येवंविधो महेन्द्रोऽपि रागादनुरागात् किंकर्त्तुं किङ्करीभवितुं तव दासत्वमङ्गीकर्त्तुं यदि अर्थी याचको भवति, तर्हि अतः परापि कक्षा स्पर्द्धा किं जागर्त्ति विद्यते, अपि तु नैवैतादृशी विद्यते। इन्द्रोऽपि तव किङ्करीभवितुमिच्छतीत्येतदेव महत् स्पर्द्धास्थानमित्यर्थः। तव सदृशी कापि सौभाग्यवती सौन्दर्य्यवती च नास्तीति भावः। 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे। स्पर्द्धापदे ना दोर्मूले कच्छवीरुत्तृणेऽपि च' मे ॥ ८१ ॥

पदमिति। हे भैमि इन्द्रः शतेन मखैर्यज्ञशतेन यत् पदम् आप प्राप्तवान्, तस्मै पदाय स इन्द्रस्ते तव याचने प्रार्थनायां चाटूनि प्रियवचनानि करोतीति तादृशो भवतीति शेषः। अतस्तस्मिन् प्रसादं कुरु प्रसन्ना भव, तत् ऐन्द्रपदञ्च स्वीकारकृदङ्गीकारसूचकं यद्भ्रुवो नटनं चालनं तत्र यः श्रम आयासस्तेन करणेन अलङ्कुरुष्व शोभय। इन्द्रेण यज्ञशतं कृत्वा महता परिश्रमेण यत् पदं लब्धं, तत्त्वं भ्रूभङ्गेनाङ्गीकुरुष्वेत्यर्थः। इन्द्रवरणे स्वर्गाधिपत्यं ते भविष्यतीति भावः चाटुकारेति चाटुशब्दस्य शब्दादिगणपाठादेव 'हेत्वादावशब्दादेरि'त्यादिना टङो निषेधात् 'कर्मणो णङिति'णट् ॥ ८२ ॥

मन्दाकिनीति। मन्दाकिनीनन्दनयोः स्वर्गङ्गानन्दनकाननयोर्विहारे जलक्रीडायां वनक्रीडायाञ्च यत् श्रेयः सुखं भवेत्, तथा देवे अस्माकं प्रभौ इन्द्रे च यच्छ्रेयो भवेत्, तथा देवरि भर्त्तुर्भ्रातरि माधवे वा नारायणे च यच्छ्रेयो भवेत्, तथा सख्यां सहचर्य्यां यातरि देवरपत्न्यां श्रियां लक्ष्म्यां यच्च श्रेयो भवेत्, हे भाविनि विचारचतुरे दमयन्ति तत् सर्वं चेतसा मनसा भावयस्व विचारय। इन्द्रवरणे तवेदृक् श्रेयःप्राप्तिर्भविष्यतीत्यर्थः। तस्मादन्यान् नृपतीन् देवादीन् वा परित्यज्य इन्द्रमेव वृणुष्वेति भावः। 'श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ' 'भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' ॥ ८३ ॥

---

"अत्र लोकादिषु पूर्वपूर्व्वापेक्षयोत्तरोत्तरस्योत्कर्षोक्तेः सारालङ्कारः" जी। द्यौरित्यादिषु सर्वेषु प्रकृतेषु एकस्य महत्त्वधर्मस्य सम्बन्धात् तुल्ययोगिता ॥ ८१ ॥ "नन्दनविहारक्रियायाः माधवदेवृकत्वश्रीयातृकत्वगुणयोश्च सामस्त्येन यौगपद्यात् समुच्चयालङ्कारभेदः" जी। नवीनमते देवेन्द्रवरणरूपकार्यस्य साधके एकस्मिन् मन्दाकिनि विहारे सति अन्येषां नन्दनविहारादीनां खलेकपोतन्यायात् तत्करत्वेन सन्निपातात् समुच्चयभेद इति विशेषः। "छेकानुप्रासरूपकालङ्कारौ" सा ॥ ८३ ॥

रज्यस्व राज्ये जगतामितीन्द्रा-द्याच्ञाप्रतिष्ठां लभसे त्वमेव ।
लघूकृतस्त्वं बलियाचनेन यत्प्राप्तये वामनमामनन्ति ॥ ८४ ॥
यानेव देवान्नमसि त्रिकालं न तत्कृतघ्नीकृतिरौचिती ते ।
प्रसीद तानप्यनृणान् विधातुं पतिष्यतस्त्वत्पदयोस्त्रिसन्ध्यम् ॥ ८५ ॥
इत्युक्तवत्या निहितादरेण भैम्या गृहीता मघवत्प्रसादः ।
स्रक् पारिजातस्य ऋते नलाशां वासैरशेषामपुपूरदाशाम् ॥ ८६ ॥

रज्यस्वेति । जगतां त्रयाणां भुवनानां राज्ये रज्यस्व अनुरक्ता भव इति इन्द्रात् सकाशात् याच्ञाप्रतिष्ठां प्रार्थनाजनितमाहात्म्यं त्वमेव लभसे प्राप्स्यसि न त्वन्येत्यर्थः । राज्यञ्च नावज्ञास्पदमित्याह यस्य राज्यस्य प्राप्तये बलियाचनेन लघूकृतः खर्वीकृतः अथ च अवमानास्पदीकृतः स्व आत्मा येन तं नारायणं वामनं खर्वम् आमनन्ति कथयन्ति पुराणज्ञा इति शेषः, याचनजन्यलाघवादेव तं वामनं कथयन्तीत्यर्थः । नारायणेन स्वलाघवमङ्गीकृत्यापि यद्राज्यमिन्द्रार्थं याचितं, तद्राज्ये त्वमेव रज्यस्वेतीन्द्रेण स्वयं प्रार्थितायास्तव प्रतिष्ठा कथं न भवति। तस्मात्तद्राज्यभोगाय इन्द्रमेव वृणुष्वेति भावः ॥ ८४ ॥

यानिति । हे भैमि त्वं त्रिकालं त्रिसन्ध्यं व्याप्य यानेव देवान् नमसि नमस्करोषि, तत्कृतघ्नीकृतिस्तेषां कृतघ्नीकरणं ते तव न औचिती उचितं, त्वया देवा अकृतज्ञा न क्रियन्तामित्यर्थः । तर्हि किं कर्त्तव्यमित्यत आह त्रिसन्ध्यं त्रिकालं त्वत्पदयोस्तव चरणयोः पतिष्यतस्तान् देवानपि अनृणान् ऋणशून्यान् विधातुं कर्त्तुं प्रसीद प्रसन्ना भव । एतावत्कालं त्वया देवाः प्रणताः संप्रति तेऽपि त्वयि प्रतिप्रणामेन कृतज्ञा भवितुमिच्छन्ति । तदिन्द्राणी भूत्वा प्रतिप्रणामस्वीकारेण देवेष्वप्यनुग्रहं प्रकाशयेत्यर्थः। किमधिकं वक्तव्यम् इन्द्रे वृते देवनमस्यापि भविष्यसीति भावः । त्रिकालं त्रिसन्ध्यमिति द्विगुसमासनिष्पन्नं पात्रादित्वान्न स्त्रीत्वम् ।। ८५ ॥

इतीति । इति पूर्वोक्तम् उक्तवत्या इन्द्रदूत्या निहिता समर्पिता मघवत इन्द्रस्य प्रसादः प्रसादरूपा पारिजातस्य स्रक् माला वासैः परिमलैः अथ च भैम्यामवस्थानैः करणैः नलस्य आशाम् अभिलाषम् ऋते विना अशेषां समस्ताम् आशाम् आशापदप्रतिपाद्यां दूत्यादिवाञ्छां दिशश्च अपुपूरत् पूर्णां चकार । किम्भूता आदरेण देवप्रसादोऽयमितिश्रद्धया भैम्या गृहीता । भैम्या आदरेण मालाया गृहीतत्वात् इयमिन्द्रेऽनुरक्ता जाता कथमन्यथा इन्द्रप्रसादं सादरं गृहीतवतीति निश्चित्य नलो भैमीप्राप्तौ शिथिलाशो जातः । इन्द्रदूत्यादीनाञ्चाशा तत एव संपूर्णा जातेति भावः । नलाशामिति 'ऋते युक्ताद्द्वितीया चे'ति द्वितीया । 'वासो गृहेऽप्य-

याच्ञाहेतुप्रतिष्ठालाभबलियाचनहेतुकलघूकृतसत्त्वयोः वैधर्म्येण दृष्टान्तालङ्कारः, चतुर्थपादार्थं प्रति तृतीयपादार्थस्य हेतुत्वात् काव्यलिङ्गम्, लघुत्वखर्वत्वयोरभेदाध्यवसात् अतिशयोक्तिः, त्वं याच्ञाप्रतिष्ठां लभसे विष्णुस्तु याच्ञालाघवमलभतेति व्यतिरेकालङ्कारो व्यज्यते ॥ ८४ ॥
"अत्र च्छेकानुप्रासोऽलङ्कारः" सा०॥ ८५ ॥

आर्ये विचार्य्यालमिहेति कापि योग्यं सखि स्यादिति काचनापि ।
ओङ्कार एवोत्तरमस्तु वस्तु मङ्गल्यमत्रे ति च काप्यवोचत् ॥ ८७ ॥
अनाश्रवा वः किमहं कदापि वक्तु विशेषः परमस्ति शेषः ।
इतीरिते भीमजया न दूती-मालिङ्गदालीश्च मुदामियत्ता ॥ ८८ ॥
भैमीञ्च दूत्यञ्च न किञ्चिदाप-मिति स्वयं भावयतो नलस्य ।
आलोकमात्राद्यदि तन्मुखेन्दो-रभून्न भिन्नं हृदयारविन्दम् ॥ ८९ ॥

वस्थाने सौरभेऽपि च कथ्यते' वि । 'आशा तृष्णादिशोः स्मृता' इति धरणिः ॥ ८६ ॥

अथेन्द्रवरणसम्मतानां सखीनां वचनमनुवदति । आर्ये इति । कापि सखी हे आर्ये मान्ये भैमि इह इन्द्रवरणविषये विचार्य विविच्य अलम् अविचार्यैव स्वीकर्त्तव्यमित्यर्थः इति अवोचत् उक्तवती । तथा काचनापि सखी हे सखि भैमि इन्द्रवरणं योग्यमुचितं स्यादित्यवोचत् । तथा कापि च सखी अत्र इन्द्रवरणविषये अङ्गीकारसूचकम् ओङ्कार एव वस्तु वास्तविकं मङ्गल्यं मङ्गलाय हितमेव उत्तरम् अस्तु भवतु ओमित्युच्चार्य स्वीक्रियतामित्यर्थः इत्यवोचत् । विचार्येति 'निषेधार्थालं खलु युक्त्वाद्वे'ति क्त्वा ततो यच् । ओङ्कारस्य मङ्गल्यत्वं यथा । 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ' इति स्मृतिः ॥ ८७ ॥

अथ भैमीवचनमाह । अनाश्रवेति । हे सख्यः अहं कदापि कदाचिदपि वो युष्माकं किम् अनाश्रवा वचनाकारिणी, अपि तु सर्वदैव भवतीनां वचनकारिणीत्यर्थः । परं किन्तु शेषोऽवशिष्टो विशेषोऽस्ति अत्र किञ्चिद्वक्तव्यं विद्यत इत्यर्थः । इति भीमजया दमयन्त्या ईरिते उक्ते सति मुदां हर्षाणाम् इयत्ता परिमितता दूतीम् इन्द्रदूतीम् आलीर्भैमीसखीश्च नालिङ्गत् न प्राप्नोति स्म अस्माकं वचनं करिष्यतीति बुद्ध्वा अपरिमितमेव हर्षं ताः प्रापुरित्यर्थः। पूर्वं भवतीनां सर्वं वचनं कृतम् अस्मिन् विषये तु तन्न करिष्यामीति मनसिकृत्य भैम्या अनाश्रवा व इत्याद्युक्त्वा वक्तुं विशेष इत्याद्युक्तं, तास्तु भैमी इन्द्रवरणं करिष्यत्येव किन्तु वक्तुं विशेष इत्यादिकथनात् कञ्चिन्नियमं कृत्वा तत् करिष्यतीति भ्रान्त्या हर्षातिशयं प्रापुरिति भावः ॥ ८८ ॥

नलस्य तात्कालिकीं चिन्तामाह । भैमीञ्चेति । अहं भैमीञ्च दूत्यञ्च किञ्चिदपि द्वयोरन्यतरमपि नापं न प्राप्तवानस्मि, इति स्वयं भावयतः इन्द्रे जातानुरागा भैमी कथं मया लभ्या मा भूद्वा तस्या लाभः कीर्त्तिकरं दूत्यमपि न कृतम् इन्द्रदूत्यैव तस्य कृतत्वादिति मनसि चिन्तयत इत्यर्थः। नलस्य हृदयारविन्दं हृदयकमलं यदि यन्न भिन्नं न विदीर्णम् अभूत् तत् तन्मुखेन्दोर्भैमीमुखचन्द्रस्य आलोकमात्राद्दर्शनादेव न त्वन्यस्माद्धेतोः । अत्र यदीति यदर्थे, यदि सम्भावनायां वा

---

आशाशब्दश्लेषात् द्वयोरपि आशयोरभेदाध्यवसायमूलातिशयोक्त्यनुप्राणितविनोक्तिरलंकारः ॥ ८६ ॥ "अत्र दीपकालङ्कारः" सा । सच चिन्त्यः । छेकानुप्रासः ॥ ८७ ॥ "स्वोक्तमङ्गीकृत्य तत्र किञ्चिद्वरदानमपेक्षते इति भ्रान्त्या महान्तमानन्दमविन्दतेत्यर्थः" जी । छेकानुप्रासः ॥ ८८ ॥

ईषत्स्मितक्षालितसृक्कभागा दृक्संज्ञया वारिततत्तदालिः ।
स्रजा नमस्कृत्य तयैव शक्रं तां भीमभूरुत्तरयाम्बभूव ॥ ९० ॥
स्तुतौ मघोनस्त्यज साहसिक्यं वक्तुं कियत्तं यदि वेद वेदः ।
वृथोत्तरं साक्षिणि हृत्सु नृणा-मज्ञातृविज्ञापि ममापि तस्मिन् ॥ ९१ ॥

तन्मुखेन्दोरालोकमात्रादेव नलस्य हृदयारविन्दं भिन्नं नाभूदिति सम्भाव्यते यद्यपि चिन्तातिशयवशात्तस्य हृदयस्फोटेन भवितव्यं तथापि स्वभावत एवानन्दजनकस्य भैमीमुखस्य दर्शनेन दुःखापगमात् इन्द्रानादरसूचकस्य दर्शनेनानन्दोदयाद्वा तेन न भूतमिति भावः । अथ च कमलं चन्द्रप्रकाशाद्भिन्नं विकसितं यन्न भवति तद्युक्तमिति ध्वनिः ॥ ८९ ॥

इतः परमसम्मतेन्द्रपरिग्रहाया भैम्या इन्द्रदूतीं प्रति वचनमनुवदितुमुपक्रमते। ईषदिति। ईषत्स्मितेन अत्यल्पहसनेन क्षालितौ धवलीकृतौ सृक्कभागौ ओष्ठप्रान्तभागौ यया तादृशी भीमभूः भैमी दृक्संज्ञया चक्षुर्भङ्ग्या वारिता निषिद्धास्तास्ताः आर्ये विचार्यालमित्यादिना प्रवर्त्तयन्त्य आलयः सख्यो यया तादृशी सती तयैव स्रजा पारिजातमालया शक्रमिन्द्रं नमस्कृत्य मालैव मे महान् प्रसाद इति कृत्वा तामिन्द्रदूतीम् उत्तरयाम्बभूव, तां प्रति उत्तरं कृतवती। एताश्चिरं नलानुरक्तामपि मामन्यार्थं प्ररोचयन्तीति कौतुकवशेनेषद्धसनं कृतम् । 'प्रान्तावोष्ठस्य सृक्वणी' अ ॥९०॥

उत्तरवचनमेवाह । स्तुताविति । हे इन्द्रदूति मघोन इन्द्रस्य स्तुतौ स्तवे साहसिक्यं साहसं त्यज मुञ्च । 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे'त्यादिश्रुतेः स्तोतुमशक्यस्य विशुद्धचैतन्यरूपस्य तस्य स्तवं माकार्षी रित्यर्थः । यतस्तमिन्द्रं वक्तुं वर्णयितुं यदि वेद जानाति, तर्हि वेदः कियत् किञ्चिद्वेद नान्यः । तथाच पुष्पदन्तः, -'अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपी'ति, अतस्तादृशस्य वर्णने तव महदेव साहसमित्यर्थः। तर्हि नासौ स्तूयतां, त्वया तु इन्द्राय वक्तव्यमुत्तरं कथ्यतामित्यत आह, नृणां मनुष्याणां हृत्सु अन्तःकरणेषु साक्षिणि द्रष्टरि अन्तःकरणवर्त्तिसकलविषयाभिज्ञे इत्यर्थः। मायोपहितचैतन्यरूपे ईश्वरसाक्षिणि वा वेदान्तिनां मतेऽपरोक्षज्ञानविषयस्येश्वरसाक्षिवेद्यत्वाभ्युपगमात् तथाविधे तस्मिन्निन्द्रे अज्ञातारमजानानं विज्ञापयितुं बोधयितुं शीलमस्य तादृशम् उत्तरं प्रतिवचनं वृथा निष्फलम् । उत्तरं हि अज्ञातारं प्रत्येव सार्थकं न तु सर्वज्ञं प्रतीत्यर्थः । नाहमिन्द्रं वरिष्यामि, किन्तु नलमेव वरिष्यामीति मम मनसि स्थितमुत्तरमिन्द्रो जानात्येव, किमर्थं तद्वक्तव्यमिति भावः । हृत्स्वित्यत्र साक्षिशब्दयोगे 'स्वाम्याद्यै रि'ति सप्तमी ॥ ९१ ॥

तन्मुखेन्दोः, हृदयारविन्दमितिरूपकद्वयं, तन्मूलाच भिन्नं नाभूत्किमिति उत्प्रेक्षा, प्रथमे पादे वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः "इन्दुप्रकाशात्कथमरविन्दविकाश इति विरोधो ध्वन्यते" जी ॥ ८९ ॥ विकाशे क्षालितत्वस्य स्मिते जलत्वस्य आरोपः व्यङ्गः । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना' अ ॥ ९० ॥ वाक्यार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ९१ ॥

आज्ञान्तदीयामनु कस्य नाम नकारपारुष्यमुपैति जिह्वा ।
प्रह्वा तु तां मूर्द्ध्नि निधाय मालां बालापराध्यामि विशेषवाग्भिः ॥ ९२ ॥
तपःफलत्वेन हरेः कृपेय-मिमन्तपस्येव जनं नियुङ्क्ते ।
भवत्युपायं प्रति हि प्रवृत्ता-वुपेयमाधुर्यमधैर्यकारि ॥ ९३ ॥
शुश्रूषिताहे तदहं तमेव पतिं मुदेऽपि व्रतसम्पदेऽपि ।
विशेषलेशोऽयमदेवदेह-मंशागतन्तु क्षितिभृत्तयेह ॥ ९४ ॥

आज्ञामिति । नाम सम्भावनायां कस्य नाम जिह्वा कर्त्री तदीयामिन्द्रसम्बन्धिनीम् आज्ञाम् अनु लक्ष्यीकृत्य नकारेण न करोमीति नकारघटितवाक्येन पारुष्यं काठिन्यम् उपैति गच्छति, अपि तु न कस्यापि, सर्वैरपि तदाज्ञा क्रियत एवेत्यर्थः । तर्हि त्वयापि क्रियतामित्यत आह तु पुनरर्थे बाला त्वहं प्रह्वा नम्रा सती तामिन्द्राज्ञां मालां मालामिव मालारूपां तां वा मूर्द्ध्नि निधाय गौरवात् शिरसि स्वीकृत्य विशेषवाग्भिर्विशेषवचनैर्वक्ष्यमाणप्रकारैरपराध्यामि अपराधयुक्ता भवामि । अज्ञत्वादाज्ञाया अकरणेऽप्यपराधो नाङ्गीकर्तव्य इति बालापदेन सूचितम् । भूमीन्द्रस्य वरिष्यमाणत्वान्मालापि शिरसि निहिता ॥ ९२ ॥

तप इति । इयमेतादृशी हरेरिन्द्रस्य कृपा अनुकम्पा तपःफलत्वेन पूर्वजन्मकृततपसः फलरूपतया इमं मल्लक्षणं जनं तपस्येव स्वकारणभूतायां तपस्यायामेव नियुङ्क्ते पुनः प्रेरयति । येन तपसेयं कृपा लब्धा तत्तपः पुनः कर्त्तुं मां प्रवर्त्तयतीत्यर्थः। ननु तपसः फले जाते किमर्थं ते पुनरपि तपसि प्रवृत्तिरित्याशङ्क्याह,—हि यस्मात् उपेयस्य फलस्य माधुर्यं वैचित्र्यं कर्तृ उपायं स्वसाधनं प्रति उद्दिश्य प्रवृत्तौ अधैर्यकारि भवति धैर्यं नाशयति तत्रैव पुनः प्रवर्त्तयितुं त्वरयतीत्यर्थः। यथा तपसोपायेनात्यन्तदुर्लभापीन्द्रकृपा प्राप्ता तथा तपसैवोपायेन नलः प्राप्स्यत इति निश्चित्य पुनस्तपःकरणे मम प्रवृत्तिर्जायत इति भावः । नाहमिन्द्रकृपालक्षणफललाभान्निस्पृहास्मि, किन्तु नलप्राप्तिलक्षणमुत्कृष्टफलान्तरमपि लब्धुकामास्मीति परमार्थः ॥ ९३ ॥

तर्हि किमितरदेवोपासनारूपां तपस्यां करिष्यसीत्यत आह । शुश्रूषिताहे इति । तत्तस्मादहं मुदेऽपि हर्षाय च व्रतसम्पदेऽपि नियमसम्पत्तये च तमेव इन्द्रमेव पतिं प्राणेशं शुश्रूषिताहे सेविष्ये, इन्द्रमेव पतिं कृत्वा तत्सेवारूपं तपः करिष्यामि, तेन मम हर्षो व्रतसम्पत्तिश्च भविष्यतीत्यर्थः। तर्हि अस्माकं मनोरथः सम्पूर्ण एवेत्यतआह, अयन्तु अयं पुनर्विशेषलेशोऽत्यल्पविशेषः, इह पृथिव्यां क्षितिभृत्तया क्षितिपालत्वेन अंशेन भागेनागतम् अदेवदेहं मनुष्यशरीरं भूमीन्द्रं नलमेव शुश्रूषिताहे न तु देवदेहं देवेन्द्रमिति । 'अंशेन लोकपालानां जायते पृथिवीपतिः' इति स्मरणादिन्द्रस्याप्यंशसत्त्वान्नलरूपमिन्द्रं वरिष्यामि, न तु युष्माकं प्रभुमिन्द्र-

---

आज्ञामेवमालामिति निरङ्गरूपकम् बालापदार्थस्य अपराधहेतुत्वात् काव्यलिङ्गम् छेकानुप्रासश्चेति संसृष्टिः ॥ ९२ ॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ९३ ॥

अश्रौषमिन्द्रादरिणीर्गिरस्ते सतीव्रतातिप्रतिलोमतीव्राः ।
स्वं प्रागहं प्रादिषि नामराय किन्नाम तस्मै मनसा नराय ॥ ६५ ॥
तस्मिन् विमृश्यैव वृते हृदैषा मैन्द्री दया मामनुतापिकाभूत् ।
निर्वातुकामम्भवसम्भवानां धीरं सुखानामवधीरणेव ॥ ६६ ॥

मित्यर्थः । शुश्रूषिताह इति 'स्मादेः सन्यनुज्ञाप्रत्याङ्श्रुव' इत्यात्मनेपदं लुट उत्तमपुरुषैकवचनं ताहे ॥ ९४ ॥

अश्रौषमिति । हे इन्द्रदूति अहम् इन्द्रस्य आदरः प्रशंसा विद्यते यासु तादृशीस्ते तव गिरो वचनानि अश्रौषं श्रुतवती । किम्भूता गिरः सतीव्रतस्य साध्वीव्रतस्य अतिप्रतिलोमा अत्यन्तप्रतिकूला अतएव तीव्रा अतिदुःसहाः । पतिव्रतायाः परपुरुषप्रशंसासूचकवचनश्रवणमतिदुःसहमनुचितञ्च, तस्मान्मया तव यादृग्वचनं यच्छ्रुतं तदनुचितमेव कृतमिति भावः । अनूढायास्ते कुतः पातिव्रत्यव्याघात इत्याशङ्क्याह,—अहं स्वमात्मानं मनसा अन्तःकरणेन प्राक् पूर्वं अमराय देवेन्द्राय न प्रादिषि न प्रदत्तवती, किन्नाम किन्तु नराय मनुष्याय तस्मै इन्द्राय भूमीन्द्राय प्रादिषि, अथच रलयोरेकरूपत्वात् तस्मै प्रसिद्धाय नराय नलाय प्रादिषि, अन्तःकरणेन पूर्वमेव नलस्य वृतत्वान्मम सतीत्वमित्यर्थः । केचित्तु इन्द्रादरिणीति प्रथमान्तं पाठं कल्पयित्वा अहमिन्द्रादरिणी इन्द्रगौरववती सती अश्रौषं त्वया यदुक्तं तदिन्द्रगौरवादेव मया श्रुतमित्यर्थः इति व्याचक्षते । द्वितीयान्तपाठस्य तु बहुषु पुस्तकेषु दृष्टत्वात् प्राचीनैर्व्याख्यातत्वाच्च स एव साधुः । प्रादिषीति प्रपूर्वदाञो लुङुत्तमपुरुषैकवचनरूपम् ॥ ९५ ॥

तस्मिन्निति । तस्मिन् नले विमृश्यैव विचार्यैव हृदा मनसा वृते सति एषा ऐन्द्री इन्द्रसम्बन्धिनी दया कृपा मामनुतापिका मामनुतापयितुं मा भूत् । यदि नलो मया मनसा न वृतः स्यात्तर्हि कथञ्चिदिन्द्रो वरणीयो वा स्यात्, वृते तु तस्मिन् कृतस्य नानुशोचनमिति बुद्ध्वा इन्द्रकृपामप्राप्यापि नाहमनुतापं प्राप्स्यामीत्यर्थः । अथ च मनसा नलवरणं मया विचार्यैव कृतमितीन्द्रमप्राप्य नाहं दुःखिनी भविष्यामीत्येतदेव उपमया दर्शयति,—इव यथा भवे संसार सम्भव उत्पत्तिर्येषां तादृशानां सुखानाम् आपातरमणीयत्वात् स्रक्चन्दनवनितासम्भोगादिजानां सुखाभासानाम् अवधीरणा अवज्ञा तस्मिन् तच्छब्दवाच्ये ब्रह्मणि हृदा विमृश्य तत्त्वतो विचार्य वृते स्वाभिन्नत्वेन ज्ञाते सति निर्वातुकामं मुमुक्षुं धीरं धैर्यशालिनं पण्डितं नानुतापयति तथा । यथा वैषयिकसुखाप्राप्तिर्ब्रह्मानन्दनिवृतं मुमुक्षुं न दुःखयति, तथा नलप्राप्तिनिवृतां मामिन्द्राप्राप्तिर्न दुःखयतीत्यर्थः । मोक्षसुखसंसारसुखयोर्यावदन्तरं तावन्नलप्राप्तिसुखेन्द्र-

शुश्रूषिताहे इतिविधेः निषेधे पर्यवसानात् विध्याभासरूपः आक्षेपो नामालङ्कारः । 'शुश्रूषा श्रोतुमिच्छायां परिचर्यावधानयोः' वि ॥ ९४ ॥ वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, वृत्त्यनुप्रासोऽन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ९५ ॥

वर्षेषु यद्भारतमार्य्यधूर्य्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु।
तत्रास्मि पत्युर्वरिवस्ययेह शर्म्मोर्म्मिकिर्म्मीरितधर्म्मलिप्सुः॥ ९७॥
स्वर्गे सतां शर्म्म परं न धर्म्मा भवन्ति भूमाविह तच्च ते च।
शक्या मखेनापि मुदोऽमराणां कथं विहाय द्वयमेकमीहे॥ ९८॥
साधोरपि स्वः खलु गामिताधो गामी स तु स्वर्गमितः प्रयाणे।
इत्यायती चिन्तयतो हृदि द्वे द्वयोरुदर्कः किमु शर्करे न॥ ९९॥

प्राप्तिसुखयोरिति भावः। अनुतापिकेति तुमर्थे णकस्तस्य 'णकस्तुमर्थे प्राय' इति त्वादित्वान्न मामित्यत्र 'कर्त्तु रि'त्यादिना षष्ठी॥ ९६॥

वर्षेष्विति। आर्यधुर्या आर्यश्रेष्ठा मन्वादयः आश्रमेषु ब्रह्मचर्यादिषु मध्ये गार्हस्थ्यमिव गार्हस्थ्याश्रमं यथा स्तुवन्ति तथा वर्षेषु इलावृतादिषु नवसु मध्ये यत् भारतं वर्षं स्तुवन्ति पुण्यभूमित्वात् प्रशंसन्ति, तत्र तस्मिन्निह भारतवर्षे पत्युः प्राणनाथस्य नलस्य वरिवस्यया शुश्रूषयाहं शर्म्मणः सुखस्य ऊर्मिभिः परम्पराभिः किर्मीरितो मिश्रितो यो धर्मस्तत्र लिप्सुरभिलाषुकाऽस्मि। भारतवर्षे स्थित्वा नलं शुश्रूषमाणाया मम सुखं जन्मान्तरभोग्यसुखजनकपुण्यञ्च द्वयमपि भविष्यति, इन्द्रवरणे तु केवलं भोगक्षयि सुखमेव भविष्यति, तस्मान्नल एव मया मनसि वृत इति भावः। 'यथा वायुं समाश्रित्य वर्त्तन्ते सर्वजन्तवः। तथा गृहस्थमाश्रित्य वर्त्तन्ते सर्व आश्रमाः। यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेनचान्वहम्। गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमी गृही' इति मनुः। 'गायन्ति देवाः किमु गीतकाले जातास्तु ये भारतभूमिभागे। स्वर्गापवर्गास्पदमार्गभूते भवन्ति ते नो पुरुषाः स्वधाभुज' इति स्मृतिः। 'वरिवस्या तु शुश्रूषा' अ॥ ९७॥

पूर्वोक्तमेव व्यक्तीकुर्वती ब्रूते। स्वर्ग इति। स्वर्गे सतां तिष्ठतां जनानां परं केवलं शर्म सुखं भवति न धर्मा न पुण्यानि भवन्ति, तस्य केवलं भोगभूमित्वात्, इह भारतभूमौ तच्च शर्म च ते च धर्माश्च भवन्ति भारतस्य कर्मभोगभूमित्वात्। नन्विन्द्रे वृते तत्प्रीतिः सुलभा इतरथा कथं सा भवेदित्याशङ्क्याह, अमराणां न केवलमेकस्येन्द्रस्य सकलानामपि देवानां मुदः प्रीतयो मखेनापि यज्ञेनापि शक्या साध्या। स्वर्गे केवलमिन्द्र एव वरणेन प्रीतो भविष्यति, अत्र तु यज्ञेन सर्व एव देवाः प्रीता भविष्यन्तीत्यर्थः। अतः सुखधर्मसकलामरप्रीतीनां तिसृणां मध्ये धर्मसकलामरप्रीत्योर्द्वयं विहाय त्यक्त्वा कथम् एकं सुखमात्रम् ईहे इच्छामि। तस्मान्नले वृते सुखादित्रयप्राप्तेर्नलवरणमेव ज्याय इति भावः। अन्योऽपि यत्र बहु प्राप्नोति तदेव गृह्णाति। केचित्तु द्वयमित्यत्र त्रयमिति पठित्वा व्याख्यायां व्याकुलीभवन्ति॥ ९८॥

ननु धर्मस्य देवनां प्रीतेर्वा सुखमेव फलं तच्च दिन्द्रवरणेनाल्पायासेन लभ्यं तत् किं यज्ञाद्यनु-

---

श्रौतोपमालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः॥ ९६॥ श्रौतोपमा, च्छेकानुप्रासः, वृत्त्यनुप्रासश्चेति संसृष्टिः। 'शर्मशातसुखानि च' 'चित्रं किर्मीरकल्माष-शवलैताश्च कर्बुरे' अ॥ ९७॥
"अत्र समुच्चयालङ्कारः" सा। व्यतिरेकध्वनिः॥ ९८॥

प्रक्षीण एवायुषि कर्मकृष्टे नरान्न तिष्ठत्युपतिष्ठते यः ।
बुभुक्षते नाकमपथ्यकल्पं धीरस्तमापातसुखोन्मुखं कः ॥ १०० ॥
इतीन्द्रदूत्यां प्रतिवाचमर्द्धे प्रत्युह्य सैषाभिदधे वयस्याः ।
किञ्चिद्विवक्षोल्लसदोष्ठलक्ष्मी-जितापनिद्रद्दलपङ्कजास्याः ॥ १०१ ॥

छानप्रयासेनेत्याशङ्क्य स्वर्गसुखमाक्षिपति । साधोरिति । साधोर्धार्मिकस्यापि स्वः स्वर्गात् प्रयाणे खलु निश्चितम् अधोगामिता अधःपातिता, 'अमुत्र कर्मचितो लोकः क्षीयते' इत्यादिश्रुतेः । 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति भगवद्गीतावचनाच्च । इतो मर्त्यलोकात्तु प्रयाणे स साधुः स्वर्गं गामी स्वर्गस्य गन्ता पुण्यवत्त्वात् । 'अनिर्वचनीयानि सप्त स्वः क्रमेण गच्छति पुण्यकृदि'त्यादि श्रुतेः । इति द्वयोः स्वर्गमर्त्ययोर्द्वे आयती उत्तरकालौ हृदि चिन्तयतो विचारयतो जनस्य तयोर्द्वयोरुदर्कं उत्तरफलं किमु द्वे शर्करे न कपालिकाखण्डविकृती न अपितु तद्रूपमेव । स्वर्गस्योत्तरफलं कपालिकारूपमतिनिकृष्टं, मर्त्यस्योत्तरफलं गुड़विकृतिरूपमत्युत्कृष्टम्, अधोगामित्वादूर्द्ध्वगामित्वाच्चेत्यर्थः । तस्मान्मर्त्यलोके नलपरिचर्यैव मम श्रेयस्करीति भावः । 'उत्तरः काल आयतिः' । 'उदर्कः फलमुत्तरम्' अ । 'शर्करा खण्डविकृतावुपले कर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि' मे । गामीति 'भविष्यति गमादेरि'ति णिनि तस्य च 'भविष्यदणिनोर्णिनि'ति त्वादित्वान्न कर्मणि षष्ठी ॥ ९९ ॥

सर्वथा स्वर्गलिप्सा न कर्त्तव्येत्याह । प्रक्षीण इति । यो नाकः कर्मकृष्टेः कर्मवशात् । सप्तम्यन्तपाठे कर्मकृष्टे कर्मोपार्ज्जिते । आयुषि जीवितकाले प्रक्षीण एव क्षीणे सत्येव नरान् मनुष्यान् उपतिष्ठते सङ्गच्छति किन्तु तिष्ठति विद्यमाने आयुषि नोपतिष्ठते, जीवतां प्रायेण स्वर्गगमनादर्शनात् यद्वा यो नाकः आयुषि स्वर्गभोगावच्छिन्नकाले कर्मवशात् प्रक्षीण एव प्रक्षीणमात्रे सति नरान् स्वर्गिणो नोपतिष्ठते न मैत्रीकरोति न स्वस्मिन् स्थापयतीत्यर्थः 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्युक्तवचनात् । किन्तु तिष्ठति आयुषि उपतिष्ठते स्वस्मिन् स्थापयतीत्यर्थः, न तिष्ठति स्वयं न स्थिरं भवतीति तु वहयः । तं नाकं स्वर्गं को धीरः पण्डितः बुभुक्षते भोक्तुमिच्छति अपि तु मूर्ख एव बुभुक्षत इत्यर्थः । किम्भूतम् अपथ्यकल्पम् अहिततुल्यं तथा आपातसुखोन्मुखं दुःखोदर्कत्वात् प्रथमत एव सुखाभासजनकम्, प्रथमान्त पाठे तु आपात एव सुखभोगोद्युक्त इत्यर्थः, आपातं पतनात् पूर्वं सुखोन्मुखं सुखदानप्रवृत्तमिति केचित् । तस्मान्नल एव वरणीयो नेन्द्र इति भावः । उपतिष्ठत इति 'सङ्गतिमैत्रीकरणयोश्चे'त्यात्मनेपदम् ॥ १०० ॥

अत्रान्तरे सखीनामिन्द्रानुकूलां विवक्षां निश्चित्य इन्द्रदूतीं प्रत्युत्तरदानमसमाप्यापि सखीरेव भैमीप्रत्यूचे इत्याह । इतीति । एषा दमयन्ती इन्द्रदूत्यां विषये इति पूर्वोक्तप्रकारां प्रतिवाचं प्रत्युत्तरम् अर्द्धे मध्ये एव प्रत्युह्य संविघ्नां कृत्वा असमाप्येत्यर्थः वयस्या निजसखीरभिदधे उवाच ।

---

शर्कराशब्दश्लेषात् भूस्वर्गयोरुदर्कस्य द्विविधशर्करासादृश्यप्रतीतेः निदर्शना । द्वे शर्करे न किमु इत्युत्प्रेक्षा । व्यतिरेकध्वनिः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ९९ ॥ "अत्रोपमालङ्कारः" सा ॥ १०० ॥

अनादिधाविस्वपरम्पराया हेतुस्रजः स्रोतसि वेश्वरे वा
आयत्तधीरेव जनस्तदार्य्याः किमीदृशः पर्य्यनुयुज्य कार्य्यः ॥ १०२ ॥
नित्यं नियत्या परवत्यशेपे कः संविदानोऽप्यनुयोगयोग्यः ।
अचेतना सा च न वाचमर्हेद्वक्ता तु वक्तुश्रमकर्म्म भुङ्क्ते ॥ १०३ ॥

किम्भूता वयस्याः किञ्चिद्विवक्षया इन्द्रानुकूलं किञ्चिद्वक्तुमिच्छया उल्लसन्तौ स्फुरन्तौ यावोष्ठौ तयोर्लक्ष्म्या शोभया जितं सदृशीकृतम् अपनिद्रद्दलम् ईपद्विकसत्पत्रं पङ्कजं पद्मं येन तादृशम् आस्यं मुखं यासां तादृशीः। इन्द्रदूत्याः प्रत्युत्तरं त्यक्त्वा सखीनां निपेधार्थमुवाचेत्यर्थः। तासामोष्ठौ पद्मदलसदृशौ मुखञ्च पद्मसदृशमित्यर्थः। अपनिद्रदिति अपनिद्रमिवाचरदिति 'कर्त्तुः क्यङ्' इत्यादिना आयस्तल्लुक् ततः शतृ। प्रत्युह्येति प्रपूर्वादूहतेः क्त्वायच् 'उपसर्गादूहो ह्रस्वश्च'ेति ह्रस्वः। 'विघ्नोऽन्तरायः प्रत्यूहः' अ ॥ १०१ ॥

यदभिदधे तदाह। अनादीति। अनादि आदिशून्यं यथा तथा धाविन्या भ्रमणशीलायाः पुनः पुनरावर्त्तमानाया इत्यर्थः स्वस्य जीवात्मनः परम्परायाः श्रेण्या हेतूनां नियामकानाम् आवर्त्तनकारणानां वा अदृष्टानां स्रजः परम्पराया स्रोतसि प्रवाहे वा सर्वेषां नियामके ईश्वरे वा एप सकलो जनो यस्मादायत्ता प्राक्तनशुभाशुभकर्म्माधीना ईश्वराधीना वा बुद्धिर्यस्य तादृशो भवति। तत्तस्माद् भो आर्य्याः बुद्धिमत्यः सख्यः भवतीभिरीदृशः पराधीनो मल्लक्षणो जनः पर्यनुयुज्य किमेवमविविच्य कर्त्तुमिच्छसीत्यादिना आक्षिप्य पृष्ट्वा वा किं कार्यः किं कारयितव्यः अपि तु न किमपि, अदृष्टमीश्वरो वा यथैव जनं प्रवर्त्तयति तथैव स प्रवर्त्तते न तु स्वाधीनो भूत्वा किञ्चित् करोति तथाच पूर्वोक्तमाक्षेपं प्रश्नं वा स नार्हति, स्वातन्त्र्याभावात्, तस्माददृष्टवशादीश्वरवशाद्वा नले जातानुरागाहं किमिति देवराजं नाङ्गीकरोपीति पर्यनुयोगार्हो न भवामीत्यर्थः। अस्मिन् विपये युष्माभिः किमपि न वक्तव्यमिति भावः। 'किं करोतु नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः' इति, 'किं करोतु सुधीरस्मिन्नीश्वराज्ञावशंवद' इति च वृद्धवचनमत्र प्रमाणमवगन्तव्यम्। अनादिधारीति रेफवत्पाठे अनादिधारिणी अनादिं दधाना या स्वेपामात्मनां परम्परा तस्या इत्यर्थः। अनादिधाविश्वेति तालव्यशकारवत्पाठे अनादिं दधातीति अनादिधा तादृशी या विश्वस्य जगतः परम्परा तस्या इत्यन्वयः ॥ १०२ ॥

पूर्वोक्तमेव द्रढयति। नित्यमिति। अशेपे समस्ते स्थावरजङ्गमात्मके जगति नित्यं सदा नियत्या दैवेन परवति पराधीने सति संविदानोऽपि विज्ञोऽपि को जनोऽनुयोगस्य किमेवं क्रियत इत्यादिप्रश्नस्याक्षेपस्य वा योग्योऽर्हः, अपि तु न कश्चिन्मूर्खोऽपि, नियत्या यथा प्रेर्यते तथैव सर्वोऽपि प्रवर्त्तत इत्यर्थः, तर्हि नियतिरेवानुयुज्यतामित्यत्राह साच नियतिरपि वाचम् अनुयोगवचनं नार्हेत् अनु-

---

किञ्चिद्विवक्षोल्लसदिति विशेषणेन स्वसखीनां पद्मिनीत्वं सूचितम्, किमुत स्वस्याः, इति भावः। आर्थोपमालङ्कारः ॥ १०१ ॥ पूर्वपादत्रयार्थस्य पर्यनुयोगाभावहेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं वृत्त्यनुप्रासश्छेकानुप्रासश्च ॥ १०२ ॥

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकं कण्टकलम्पटस्तम् ।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः ॥ १०४ ॥
गुणा हरन्तोऽपि हरेर्नरं मे न रोचमानं परिहापयन्ति ।
न लोकमालोकयथापवर्गात् त्रिवर्गमर्वाञ्चममुञ्चमानम् ॥ १०५ ॥

योगयोग्या न भवति, यतोऽचेतना चैतन्यशून्या। अनुयोगवचनं हि सचेतन एवार्हति, न तु पाषाणाद्यचेतनः, तस्मात् मम नियतिरपि युष्माभिर्धिक् नियतिं, या देवराजरूपवरलाभप्रतिबन्धिकेत्यादिना न निन्दनीयेत्यर्थः। अनुयोगे दोषमपि दर्शयति, तु पुनर्वक्ता अनुयोगकारी जनः वक्त्रस्य मुखस्य श्रमरूपं कर्म भुङ्क्ते अनुभवति, वक्त्रस्य श्रमहेतुकं कर्म शोषादिकम् अनुभवति वा। तद् युस्माभिरस्मिन् विषये तूष्णीं स्थातव्यं, दैवाधीना सती नलमेवाहं वरीष्यामीति भावः। संविदान इति 'समोऽकर्मगमादेरि'त्यात्मनेपदम् ॥ १०३ ॥

भवत्वस्माभिरत्र न किञ्चिद्वक्तव्यं किन्तु देवराजं परित्यज्य मानुषमभिलषन्त्यास्तव इन्द्रदूतीनिन्दा कथं हस्तपिधेयेत्याशङ्क्याह। क्रमेलकमिति। कोमलेच्छु मृदुवस्त्वभिलाषी जनः क्रमेलकं कठिनवस्त्वभिलाषिणम् उष्ट्रं निन्दति, तथा कण्टकलम्पटः कण्टकादिकठिनवस्तुलुब्धः क्रमेलकस्तं कोमलेच्छुं निन्दति। इष्टभुजोः स्वस्वेष्टभोजनशीलयोस्तयोः कोमलेच्छुक्रमेलकयोः समायां तुल्यायां प्रीतौ सत्याम् एकतरोपहासो द्वयोर्मध्ये एकतरस्योपहासो न मध्यस्थता न माध्यस्थ्यम्। द्वयोरपि स्वस्वाभिलषितभक्षित्वात् न मध्यस्थैरेकतरस्योपहासः कर्त्तव्यः। यद्यपि भिन्नविषयप्रवृत्तत्वात् द्वावपि परस्परनिन्दावादिनौ, तथापि मध्यस्थानामेकतरनिन्दा नोचितेत्यर्थः। तस्मान्मम नले पक्षपातः, इन्द्रदूत्यास्तु इन्द्रे पक्षपात इत्यावयोस्तुल्यायां प्रीतौ सत्यां भवतीभिरेव पक्षपातं विहाय माध्यस्थ्यं कार्यं, न त्वेकतरोपहासः कार्य इतिभावः। 'उष्ट्रे क्रमेलकमयमहाङ्गाः' अ ॥ १०४ ॥

ननु तथापि नलापेक्षया इन्द्रस्याधिकगुणवत्त्वाद् गुणवत्परित्यागो नोचित इत्याशङ्क्याह। गुणा इति। हरन्तोऽपि मनोहारिणोऽपि हरेरिन्द्रस्य गुणा अणिमादयः सौन्दर्यादयो वा मे मह्यं रोचमानं मम प्रीतिजनकं नरं मनुष्यम् अथच नलं न परिहापयन्ति न परित्याजयन्ति। ननु मनोहारित्वात्, किमिति न परिहापन्तीत्याशङ्क्यां दृष्टान्तदर्शनया परिहरति, अपवर्गान्मोक्षादर्वाञ्चं 'न स पुनरावर्त्तते' इत्यादिश्रुत्या मोक्षस्यैव नित्यत्वावगमादतिनिकृष्टं त्रिवर्गं धर्मार्थकामरूपं पुरुषार्थत्रयममुञ्चमानम् अपरित्यजन्तं लोकं जनं न आलोकयथ यूयं न पश्यथ। यथा लोकः परमनिर्वृतिप्राप्तिलक्षणं मोक्षं परित्यज्य क्षयोदर्कमपि त्रिवर्गं सेवते, तथेन्द्रं परित्यज्य नलमेवाहं सेवे, जनानां रुचिरेव प्रवर्त्तिका न तु गुणाः प्रवर्त्तका इति भावः ॥ १०५ ॥

---

पदार्थहेतुकं वाक्यार्थहेतुकं च काव्यलिङ्गद्वयम्, वृत्त्यनुप्रासश्छेकानुप्रासश्च ॥ १०३ ॥ अप्रस्तुतप्रशंसा, तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावेन सङ्करः ॥ १०४ ॥ "दृष्टान्तालङ्कारः" जी। विभावनाविशेषोक्ती छेकानुप्रासश्च ॥ १०५ ॥

आकीटमाकैटभवैरितुल्यः स्वाभीष्टलाभात् कृतकृत्यभावः।
भिन्नस्पृहाणां प्रति चार्थमर्थं द्विष्टत्वमिष्टत्वमपव्यवस्थम् ॥ १०६ ॥
अध्वाग्रजाग्रन्निभृतापदन्धु र्बन्धुर्यदि स्यात् प्रतिबन्धुमर्हः।
जोषं जनः कार्य्यविदस्तु वस्तु प्रच्छद्या निजेच्छा पदवीं मुदस्तु ॥ १०७ ॥
इत्थं प्रतीपोक्तिमतिं सखीनां विलुप्य पाण्डित्यबलेन बाला।
अपि श्रुतस्वर्पतिमन्त्रिसूक्तिं दूतीं बभाषेऽद्भुतलोलमौलिम् ॥ १०८ ॥

रुचिरपि व्यक्तिभेदेन नानेत्याह। आकीटमिति। आकीट कीटादारभ्य आकैटभवैरि विष्णु पर्यन्तं सर्वेषां स्वाभीष्टलाभात् निजनिजाभिलषितार्थप्राप्तेः कृतकृत्यभावः कृतकृत्यत्वं चरितार्थत्वं तुल्यः समानः। विष्णुर्यथा स्वाभीष्टलाभात् कृतकृत्यो भवति तथा कीटोऽपीत्यर्थः। हीनस्योत्कृष्टस्य वा स्वस्वाभिलषितप्राप्त्या कृतकृत्यतायां न कश्चिद्विशेषोऽस्तीति भावः। तर्हि एकस्मिन्नर्थे सर्वेषां समाना रुचिर्जायतामित्यत आह,—भिन्नस्पृहाणां विभिन्नरुचीनां सर्वेषामर्थमर्थं प्रति च द्विष्टत्वं द्वेषविषयत्वम् इष्टत्वमिच्छाविषयत्वम् अपव्यवस्थं व्यवस्था नियमस्तद्रहितम्। एकस्मिन् वस्तुनि सर्वेषामेवेच्छा द्वेषो वा भवतीति नियमो न विद्यत इत्यर्थः। तस्माद् यद्यस्मै रोचते तत्तस्येष्टं भवति, यन्न रोचते तत्तस्य द्विष्टं भवतीति नल एव मम रुचिजनकत्वादिष्ट इन्द्रस्तु तदजनकत्वात् द्विष्ट इति भावः ॥ १०६ ॥

नन्वसमीक्ष्यकारिणी भवती कथमस्माभिः सखीभिर्न निवारणीयेत्यत आह। अध्वाग्रेति। हे सख्यः बन्धुः सुहृत् अध्वाग्रे अग्रवर्त्मनि जाग्रत् वर्त्तमानो निभृतो गुप्त आपत् विपत्तिलक्षणोऽन्धुः कूपो यस्य तादृशो यदि स्यात्, तर्हि प्रतिबन्धुं सुहृद्भिर्निषेद्धुम् अर्हः उचितः स्यात्, अनेन पथा मा गच्छ यदि गमिष्यसि तर्हि कूपे पतिष्यसीति सुहृदां निषेधयोग्यो भवेदित्यर्थः। प्रकृते त्वहं न तादृशो, हितकरं ज्ञात्वैव तत्र जातानुरागा भवामीति निवारणं मा कुरुतेति भावः। नन्विन्द्रं परित्यज्य मानुषं प्राप्य त्वमपि कथं हर्षं प्राप्स्यसीत्याशङ्क्याह—कार्यवित् कार्यज्ञो हिताहिताभिज्ञो जनोऽस्मिन् विषये जोषं तूष्णीम् अस्तु भवतु मौनमवलम्बताम्, अकार्यज्ञो यथेच्छं वदतु कार्यज्ञस्तु न किञ्चिदत्र वदत्वित्यर्थः। युष्माभिस्तु पुनर्निजेच्छा स्वेच्छैव मुदो हर्षस्य पदवीं वर्त्मलक्षणं वस्तु प्रच्छद्या प्रष्टव्या। यथा युष्माकममि यस्मिन्निच्छा तल्लाभादेव हर्षो जायते न त्वनिष्टलाभात्, तथा ममापीत्यर्थः। तस्मान्नल एव इष्टत्वान्मम हर्षं जनयिष्यतीति नलमेव वरिष्यामि। युष्माभिरत्र तूष्णीं स्थातव्यमिति भावः। 'पुंस्येवान्धुः प्रहिः कूपः' 'तूष्णीमर्थे सुखे जोषम्' अ ॥ १०७ ॥

एवं स्वानभिमतं सखीनां वक्तव्यं निरस्य पुनरपीन्द्रदूतीं प्रति भैमी ब्रूते स्मेत्याह। इत्थमिति। बाला भैमी सखीनां प्रतीपोक्तिमतिं प्रतिकूलवचनविषयिणीं बुद्धिं पाण्डित्यस्य

---

पदार्थहेतुकं काव्यलिङ्गम्, अर्थान्तरन्यासः अप्रस्तुतप्रशंसा च्छेकानुप्रासश्च ॥ १०६ ॥ अप्रस्तुतप्रशंसालङ्कारः, निरङ्गं रूपकम्, वृत्त्यनुप्रासः, छेकानुप्रासोऽन्त्यानुप्रासोलङ्कारश्चेति संसृष्टिः ॥१०७॥

परेतभर्त्तुर्मनसेव दूतीं नभस्वतेवानिलसख्यभाजः ।
त्रिस्रोतसेवाम्बुपतेस्तदाशु स्थिरास्थमायातवतीं निरास्थम् ॥ १०९ ॥
भूयोऽर्थमेनं यदि मां त्वमात्थ तदा पदावालभसे मघोनः ।
सतीव्रतैस्तीव्रमिमन्तु मन्तु-मन्तर्वरं वज्रिणि मार्ज्जितास्मि ॥ ११० ॥
इत्थं पुनर्वागवकाशनाशान्-महेन्द्रदूत्यामपयातवत्याम् ।
विवेश लोलं हृदयं नलस्य जीवः पुनः क्षीवमिव प्रबोधः ॥ १११ ॥

बलेन सामर्थ्येन इत्थं पूर्वोक्तप्रकारेण विलुप्य अपनीय दूतीमिन्द्रदूतीं बभाषे अवशिष्टमुवाच । किम्भूतां दूतीं श्रुता स्वर्पतिमन्त्रिण इन्द्रपुरोहितस्य बृहस्पतेः सूक्तिः शोभनवचनं यया तादृशीमपि अद्भुतेन अहो बालाप्येवं वदतीत्याश्चर्यरसेन लोलश्चञ्चलो मौलिर्यस्यास्तादृशीम् ॥ १०८ ॥

यद्बभाषे तदाह । परेतेति । हे इन्द्रदूति यस्मात् पूर्वमेव मया मनसा नलो वृतस्तत्तस्मादहं स्थिरा निश्चला आस्था आग्रहो यत्र क्रियायां तद्यथा तथा परेतभर्त्तुर्यमस्य दूतीं तथा अनिलसख्यभाजो वायुसखस्याग्नेर्दूतीं तथा अम्बुपतेर्वरुणस्य दूतीं निरास्थं निराकृतवती । दूतीनां द्रुतगमने प्रत्येकमुत्प्रेक्षते किम्भूतां यमदूतीं मनसेव अतिवेगिना मनसा वाहनेनेव आशु शीघ्रं आयातवतीं आगताम् । अग्निदूतीं किम्भूतां नभस्वतेव अतिवेगिना वायुना वाहनेनेव आशु आयातवतीम् । वरुणदूतीं किम्भूतां त्रिस्रोतसेव अतिवेगिन्या वाहनभूतया गङ्गयेव आशु आयातवतीम् । यमस्य परेतभर्तृत्वात् परेतप्राणानां तदधीनत्वात् मनसश्च प्राणाधीनत्वात् मनसेव कृत्वा यमदूती शीघ्रमायाता । वह्नेरनिलमित्रत्वादनिलेनेव कृत्वा वह्निदूती शीघ्रमायाता । वरुणस्य च जलपतित्वान्मन्दाकिन्येव वरुणदूती शीघ्रमायातेत्युत्प्रेक्षा । न केवलं त्वमेव मया निराकृता किन्तु यमादिदूत्योऽपि पूर्वं निराकृता इतिभावः । त्वदाश्विति सवकारपाठे त्वत् त्वत्तोऽपि आशु शीघ्रमायातवतीमित्यर्थः । निरास्थमिति निर्पूर्वादस्यतेर्लुङो ङम् 'अस्यतेरस्थ् चे'त्वग् अस्थादेशश्च ॥ १०९ ॥

भूयइति । हे इन्द्रदूति त्वं यदि भूयः पुनरपि एवम् इन्द्रवरणलक्षणमर्थं माम् आत्थ ब्रवीषि तदा मघोन इन्द्रस्य पदौ चरणौ आलभसे स्पृशसि, एवं शपथदानात्त्वया भूयो न वक्तव्यमित्यर्थः । तर्हि इन्द्रेऽपराद्धासीत्याशङ्क्याह । तु पुनर्वज्रिणि इन्द्रे अन्तर्हृदयस्थितं तीव्रं कठोरं मन्तुम् अपराधं सतीव्रतैः पतिव्रतानियमैर्वर मार्जितास्मि अपनेष्यामि । अन्तर्हृदयस्थितैः सतीव्रतैरिति वा अन्तर्वरं वरस्य नलस्यान्तर्मध्ये वर्त्तमाने वज्रिणि राज्ञो लोकपालांशत्वादंशत्वेन स्थिते इन्द्रे इति वा । नले तुष्टे इन्द्रोऽपि तोषं गमिष्यतीति भावः । 'आगोऽपराधोमन्तुश्च' अ ॥ ११० ॥

एवं निरस्तायामिन्द्रदूत्यां नलस्य भैमीलाभसम्भावनामाह । इत्थमिति । इत्थं पूर्वोक्तप्रकारेण

वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः ॥ १०८ ॥ जात्युत्प्रेक्षात्रयम्, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ १०९ ॥

श्रवणपुटयुगेन स्वेन साधूपनीतं दिगधिपकृपयाप्तादीदृशः संविधानात् ।
अलभत मधु बालारागवागुत्थमित्थं निषधजनपदेन्द्रः पातुमानन्दसान्द्रः ॥ ११२ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।
षष्ठः खण्डनखण्डतोऽपि सहजात् क्षोदक्षमे तन्महा-
काव्येऽयं व्यगलन्नलस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ ११३ ॥

शपथदानेन पुनर्वाचोऽवकाशस्य अवसरस्य नाशाद्धेतोर्महेन्द्रदूत्यां अपयातवत्याम् अपगतायां सत्यां नलस्य जीवः प्राणाः लोलं भैमीञ्च दूत्यञ्च न किञ्चिदापमित्यादिचिन्तावशाच्चञ्चलं हृदयं पुनर्विवेश विशति स्म इव। यथा प्रबोधो ज्ञानं क्षीवं मत्तं विशति तथा। दूत्यामागतायां चिन्तावशान्नलस्य प्राणा गतप्राया एवाभवन् अपगतायान्तु तस्यां स्वस्यैव भैमीप्राप्तिर्दूत्यप्राप्तिर्वा भविष्यतीति निश्चयेन तस्य प्राणाः पुनरागता इवेत्यर्थः। मत्तोऽपि चञ्चलो भवति। क्षीवमिति क्षीवधातोः क्तः 'क्षीबुल्लाघकृशोऽद्प्रादावि'ति क्तस्य स्थानेऽत् ॥ १११ ॥

अथ च्छन्दोऽन्तरेण सर्गशेषं सूचयति। श्रवणेति। निषधजनपदस्य निषधदेशस्येन्द्रो नल आनन्दसान्द्रोऽतिहृष्टः सन् दिगधिपानां दिक्पालानामिन्द्रादीनां कृपया आप्तात् ईदृशात् दूतत्वादृश्यत्वलक्षणात् संविधानात् सङ्घटनाद्धेतोरित्थं पूर्वोक्तप्रकारं बालाया भैम्या रागवाचोऽनुरागवचनादुत्थमुत्थितं मधु अमृतायमानवचनमित्यर्थः पातुं सादरमाकर्णयितुम् अलभत लभते स्म। किम्भूत स्वेन स्वकीयेन श्रवणलक्षणेन पुटयुगेन पात्रयुगलेन साधु सम्यग् यथा तथा उपनीतम् आनीतं पूर्वं भैम्याः सानुरागवचनं हंसादिमुखेन श्रुतवान् अधुना तु इन्द्रादिकृपया प्राप्तादृश्यदूतत्वः सन् स्वयं श्रुतवानित्यर्थः। आनन्दसान्द्रमिति पाठे क्रियाविशेषणम्। मालिनीवृत्तमिदम् ॥ ११२ ॥

श्रीहर्षमित्यादि। सहजात् एकोत्पत्तिस्थानकतया सहोदरात् खण्डन षड्दर्शनमतनिराकरणग्रन्थविशेषस्तदेव खण्डोऽतिरमणीयत्वाद् गुडविकारस्तस्मादपि क्षोदक्षमे उपमर्द सहे विचारयोग्ये काव्यतया शृङ्गारभूयिष्ठत्वात् खण्डनग्रन्थापेक्षयाप्यतिरमणीये इत्यर्थः, नलस्य चरिते षष्ठः षण्णां पूरकः सर्गो व्यगलत् समाप्तः; अन्यत् सर्वं पुर्ववत्। खण्डनग्रन्थोऽप्यनेन कृत इति भावः ॥ ११३ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशभट्टाचार्यविरचितायामन्वयबोधिकासमाख्यायां
नैषधटीकायां षष्ठः सर्गः समाप्तः ॥

---

श्रौतोपमा, प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १११ ॥
निरङ्गं केवलं रूपकम्, अतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ॥ ११२ ॥

समाप्तोऽयं षष्ठः सर्गः।

# सप्तमः सर्गः ।

अथ प्रियासादनशीलनादौ मनोरथः पल्लवितश्चिरं यः ।
विलोकनेनैव स राजपुत्र्याः पत्या भुवः पूर्णवदन्वमानि ॥ १ ॥
प्रतिप्रतीकं प्रथमं प्रियाया-मथान्तरानन्दसुधासमुद्रे ।
ततः प्रमोदाश्रुपरम्परायां ममज्जतुस्तस्य दृशौ नृपस्य ॥ २ ॥

एवमिन्द्रादिदूतीनिराकरणेन भैमी मय्येवानुरक्तेति निश्चित्य हर्षातिशयान्नलस्तां प्रत्यङ्गं वर्णयति स्मेति तदनुवदितुं सप्तमं सर्गमारभते। अथेति। अथेन्द्रदूतीनिराकरणानन्तरं भुवः पत्या भूस्वामिना नलेन राजपुत्र्या भैम्या विलोकनेनैव दर्शनमात्रेणैव स मनोरथः पूर्णवत् परिपूर्ण इव फलितप्रायोऽन्वमानि मानितः। प्राप्तिं विनापि दर्शनमात्रेणैव प्राप्तिजन्यमानन्दं प्राप्तवानित्यर्थः। स कः यो मनोरथोऽभिलापः प्रियाया भैम्या आसादने प्राप्तिविषये शीलने विशेषरूपेण भावहावाद्याकलनविषये आदिपदात् सम्भोगादिविषये च चिरं प्रतिदिनं पल्लवितो जातपल्लवः, मया भैमी प्राप्यतां विशेषेण च तस्या भावादयोऽनुभूयन्तां सम्भोगादयश्च तस्या मया सह जायन्तामित्यादिना यः पूर्वप्रवृद्धोऽभूदित्यर्थः। अस्मिन् सर्गे पूर्वसर्गवदुपजातिच्छन्दः ॥ १ ॥

प्रत्यङ्गं भैमीमालोकयतस्तस्यानन्दोदयादश्रुधारा जातेत्याह। प्रतीति। तस्य नृपस्य नलस्य दृशौ चक्षुषी प्रथमं प्रतिप्रतीकं प्रत्यवयवं प्रियायां भैम्यां ममज्जतुर्निमग्ने, अथानन्तरं अन्तरानन्द एव सुधा अमृतं तस्याः समुद्रे ममज्जतुः आन्तरहर्षातिशयवशान्न किञ्चिद्ददृशतुरित्यर्थः। ततोऽनन्तरं प्रमोदाश्रुपरम्परायां आनन्दजनितनेत्रजलप्रवाहे ममज्जतुः। प्रथमं भैम्याः प्रत्यवयवसौन्दर्यदर्शनं तस्मादानन्दस्तस्माच्चाश्रुपरम्परा नलस्य जातेत्यर्थः। अन्योऽपि समुद्रजलप्रवाहे निमज्जति। 'अङ्गं प्रतीकोऽवयवः' अ ॥ २ ॥

---

मनोरथे वृद्धिरेव सम्भवति न तु पल्लवितता, अतो वृद्धिरूपविषयस्य निगरणेन तत्र पल्लविताऽभेदाध्यवसायादतिशयोक्तिः,पल्लवितत्वस्य अन्यथानुपपत्त्या च मनोरथे वृक्षत्वरूपणं पूर्णतायां च फलितत्वरूपणं व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः। तथा दमयन्तीविलोकनमात्रात् अल्पत्वगुणविशिष्टकारणात् मनोरथस्य पूर्णत्वरूपस्य कारणविरुद्धस्य महत्त्वगुणस्य समुत्पादात् विषमालङ्कारः, पूर्णवदित्युपमा। "अन्योऽपि आरोपितं पल्लवितं फलितं च दृष्ट्वा अत्यन्तं सन्तुष्यति। आसादनं च शीलनादि चेति समासे एकवद्भावः। अन्यथा शीलनशब्दस्य पूर्वनिपातापातात्" ना ॥ १ ॥ अत्र नेत्ररूपस्य एकस्याधेयस्य प्रियाप्रत्यङ्गप्रभृत्यनेकाधारवृत्तित्वभेदकथनात् पर्य्यायालङ्कारभेदः। लक्षणन्तु दर्पणे, 'क्रमेणैकमनेकस्मिन्नाधारे वर्त्तते यदि। एकस्मिन्नथवाऽनेकं पर्यायालङ्कृतिर्द्विधा' इति। आनन्दसुधासमुद्रे इति रूपकं, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ २ ॥

ब्रह्माद्वयस्यान्वभवत् प्रमोदं रोमाग्र एवाग्रनिरीक्षितेऽस्याः।
यथौचितीत्थं तदशेषदृष्टा-वथ स्मराद्वैतमुदन्तथासौ ॥ ३ ॥
वेलामतिक्रम्य पृथुं मुखेन्दो-रालोकपीयूषरसेन तस्याः।
नलस्य रागाम्बुनिधौ विवृद्धे तुङ्गौ कुचावाश्रयतः स्म दृष्टी ॥ ४ ॥
मग्ना सुधायां किमु तन्मुखेन्दो-र्लग्ना स्थिता तत्कुचयोः किमन्तः।
चिरेण तन्मध्यममुञ्चतास्य दृष्टिः कृशीयः स्खलनाद्भिया नु ॥ ५ ॥

एवं चक्षुःप्रमोदमुक्त्वा मनःप्रमोदमाह। ब्रह्मेति। असौ नलोऽस्या भैम्या रोमाग्र एव अग्रनिरीक्षिते प्रथमं दृष्टे सति ब्रह्माद्वयस्य ब्रह्मैक्यस्य प्रमोदं जीवाभिन्नतया ब्रह्मसाक्षात्कारजनितानन्दसदृशमानन्दमित्यर्थः, अन्वभवत् अनुभूतवान्। अथानन्तरं इत्थमनेन प्रकारेण तस्या भैम्या अशेषा सकलाङ्गविषयिणी या दृष्टिर्दर्शनं तस्यां सत्यां यथा यादृशी औचिती उचितं भवति तथा स्मराद्वैतमुदं मदनैक्यजनितमानन्दम् अन्वभवत् ब्रह्मानन्दापेक्षया कामानन्दोऽधिकतर इति कामिनामनुभवात्। यस्या रोमाग्रमात्रदर्शने ब्रह्माद्वैतानन्दोऽनुभूयते तस्या रमणीयसकलावयवदर्शने ब्रह्माद्वैतानन्दादधिकतरः कामानन्दो भवितुमुचित इत्यर्थः। तेषां रोम्णामशेषदृष्टौ सत्यामिति वा ॥ ३ ॥

वेलामिति। तस्या भैम्या मुखेन्दोर्मुखचन्द्रस्य आलोको दर्शनलक्षणो यः पीयूषरसोऽमृतरसस्तेन करणेन आलोकरूपं यत् पीयूषं तत्र यो रसः प्रीतिस्तेन वा नलस्य रागाम्बुनिधौ अनुरागसमुद्रे पृथुं महतीं वेलां दृत्यसमयरूपां मर्यादाम् अतिक्रम्य विवृद्धे उपचिते सति नलस्य दृष्टी द्वे चक्षुषी तुङ्गौ उच्चौ कुचौ स्तनौ आश्रयतः स्म। भैम्या मुखदर्शनेन दृत्यसमयविरोध्यनुरागाधिक्यात् उच्चस्तनावपि नलो विलोकयामासेति भावः, प्रथमं तस्या मुखं ततः स्तनौ ददर्शेति परमार्थः। अन्योऽपि चन्द्रामृतरसातिरेकेण वेलामतिक्रम्य समुद्रे विवृद्धे सति तुङ्गस्थानमाश्रयति। दृष्टिरित्येकवचनान्तः क्वचित् पाठः ॥ ४ ॥

मग्नेति। अस्य नलस्य दृष्टिश्चक्षुः स्खलनाद्भिया नु पतनाद्भयेनेव कृशीयोऽतितरां कृशं तस्या भैम्या मध्यं मध्यभागं चिरेण बहु विलम्ब्य अमुञ्चत तत्याज। अतिकृशमेतन्मध्यं यद्यहं त्यक्ष्यामि तर्हि पतिष्यामीति भयेनेव विलम्बेन तत्याजेत्यर्थः। क्षीणत्वादतिमनोज्ञं तस्या मध्यं चिरेण नलो ददर्शेति भावः। किम्भूता दृष्टिः तस्या भैम्या मुखेन्दोर्मुखचन्द्रस्य सुधायां किमु मग्ना निमग्नेव,

---

अत्र एकस्मिन्नेवाधारे नले ब्रह्मानन्दकामानन्दयोः क्रमेणाविर्भावात् 'एकस्मिन्नथवानेकम्' इति पर्यायालङ्कारभेदः। रोमाग्रनिरीक्षणरूपात् अल्पात् कारणात् महतो ब्रह्माद्वयप्रमोदरूपकार्यस्योत्पादात् विषमालङ्कारः अनुप्रासश्च। ब्रह्मानन्दात् स्मरानन्दस्याधिक्यसूचनात् व्यतिरेको ध्वन्यते ॥३॥ अत्र रसशब्दश्लेषेण जलानुरागयोरभेदाध्यवसायादतिशयोक्तिः, तन्मूलाच्च चन्द्रामृतरसातिरेकेण वेलामतिक्रम्य समुद्रे विवृद्धे कस्यचित् तुङ्गस्थानाश्रयरूपव्यवहारप्रतीतेस्तुल्यकार्यनिबन्धना समासोक्तिः सा च मुखेन्दोरिति, रागाम्बुनिधाविति च रूपकाभ्यामुज्जीविता इत्येतेषां सङ्करः। ततश्च अम्बुनिधिमज्जनभयादिवेत्युत्प्रेक्षा व्यज्यते इत्यलङ्कारेणालंकारध्वनिः ॥ ४ ॥

प्रियाङ्गपान्था कुचयोर्निवृत्य निवृत्य लोला नलदृग् भ्रमन्ती ।
बभौतमां तन्मृगनाभिलेप-तमःसमासादितदिग्भ्रमेव ॥ ६ ॥
विभ्रम्य तच्चारुनितम्बचक्रे दूतस्य दृक् तस्य खलु स्खलन्ती ।
स्थिरा चिरादास्त तदूरुरम्भा-स्तम्भावुपाश्लिष्य करेण गाढम् ॥ ७ ॥
वासः परं नेत्रमहं न नेत्रं किमु त्वमालिङ्ग्य तन्मयापि ।
उरोनितम्बोरु कुरु प्रसाद-मितीव सा तत्पदयोः पपात ॥ ८ ॥

तथा तस्या स्तनयोरन्तर्मध्ये लग्ना सम्बद्धा सती किं स्थिता। पूर्वं मुखे कुचयोरेव च दृष्टेर्गतत्वात् कुचान्तरालस्य संकुचिततया निर्गन्तुमशक्ता सती स्थितेवेत्यर्थः । उत्प्रेक्षाद्वयं दृष्टेर्विलम्बेन मध्यपरित्यागोत्प्रेक्षायां हेतुः । अन्योऽपि यदि प्रथमं ह्रदादिपङ्के निमज्जति अनन्तरं सङ्कुचितस्थाने च पतति, ततोऽतिदुर्बलतया क्षीणदेशमारुह्य पतनाशङ्कया विलम्बेन तं परित्यजति ॥ ५ ॥

प्रियाङ्गेति । प्रियाया भैम्या अङ्गे शरीरे पान्था नित्यपथिकी लोला चञ्चला अथ च स्पृहावर्ती तस्य नलस्य दृक् दृष्टिर्निवृत्य निवृत्य पुनः पुनः प्रतिनिवृत्य कुचयोः स्तनयोर्भ्रमन्ती पर्यटन्ती सती बभौतमाम् अतिशयेन शुशुभे । अत्रोत्प्रेक्षते किम्भूता दृक् तयोः कुचयोर्वर्त्तमानो यो मृगनाभिलेपः कस्तुरिकालेपः, स एव कृष्णवर्णत्वात्तमोऽन्धकारस्तेन समासादितः प्राप्तो दिग्भ्रमो दिङ्मोहो यया तादृशीव । अन्योऽपि पान्थस्तमसा प्राप्तदिङ्मोहो भ्रमन् निवृत्य निवृत्य पूर्वस्थानं प्राप्नोति । सर्वावयवालोकनतत्परोऽपि नलः अत्याह्लादकतया कुचावेव ददर्शेति भावः 'लोलश्चलसतृष्णयोः' अ ॥६॥

विभ्रम्येति । तस्य दूतस्य नलस्य दृक् दृष्टिस्तस्या भैम्याश्चारुणि सुन्दरे नितम्बलक्षणे चक्रे विभ्रम्य विशेषेण भ्रमित्वा अथ च विभ्रमं विलासं प्राप्य स्खलन्ती खलु भ्रमणायामात्पतन्तीव सती तस्या भैम्या ऊरू एव रम्भास्तम्भौ करेण रश्मिना अथ च हस्तेन गाढमतिशयम् उपाश्लिष्य आलिंग्य चिरात् बहुकालं स्थिरा निश्चला आस्त स्थिता । अन्योऽपि चक्रभ्रमणं प्राप्य ततः स्खलित्वा कदलीस्तम्भं हस्तेन गाढमालिङ्ग्य चिरं स्थिरो भवति । नलो भैम्या नितम्बं दृष्ट्वा आदरेण रम्भास्तम्भनिभावूरू ददर्शेति भावः । 'बलिहस्तांशवः कराः' अ ॥ ७ ॥

वास इति । सा नलस्य दृक् इतीव कारणात् तत्पदयोर्भैमीचरणयोः पपात प्रणाम चकार अथ च सन्निकर्षं प्राप । इति किं हे भैमि परं वासो वस्त्रं नेत्रम् आच्छादनम् अथ च नेत्रपदप्रतिपाद्यम् अहं किमु न नेत्रं अपि तु अहमपि नेत्रपदप्रतिपाद्यं यस्माद्भवामि तत्तस्मादुभयोरपि

अत्र उत्प्रेक्षाद्वयम्, निरङ्गं रूपकञ्चेति संसृष्टिः ॥ ५ ॥ प्रियाङ्गपान्था, तन्मृगनाभिलेपतम इति रूपकद्वयं, दिग्भ्रमेवेति उत्प्रेक्षा ॥ ६ ॥ अत्र करशब्दश्लेषेण हस्तकिरणयोरभेदाध्यवसायात् अतिशयोक्तिः तदुत्थापिता च प्रस्तुतायां दृशि समेन कार्येणाप्रस्तुतायाश्चक्रभ्रमणकारिण्याः कस्याश्चिद् व्यवहारसमारोपणात् समासोक्तिः सा च स्खलन्ती खलु (पतन्तीव) इति क्रियोत्प्रेक्षया अनुप्राणिता, तथा चारुनितम्बचक्रे, ऊरुरम्भास्तम्भेति रूपकद्वयमित्येतेषामलङ्काराणां सङ्करः छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ७ ॥

दृशोर्यथाकाममथोपहृत्य स प्रेयसीमालिकुलञ्च तस्याः।
इदं प्रमोदाद्भुतसम्भृतेन महीमहेन्द्रो मनसा जगाद ॥ ९ ॥
पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा।
तदा घटेतापि न वा तदेतत् प्रतिप्रतीकाद्भुतरूपशिल्पम् ॥ १० ॥
तरङ्गिणी भूमिभृतः प्रसूता जानामि शृङ्गाररसस्य सेयम्।
लावण्यपूरोऽजनि यौवनेन यस्यान्तथोच्चैस्तनता घनेन ॥ ११ ॥

नेत्रशब्दप्रतिपाद्यत्वात् कारणात् मयापि उरोनितम्बोरु आलिङ्ग्य वेष्ट्य। यथा नेत्रपदप्रतिपाद्येन वस्त्रेण वक्षो नितम्बम् ऊरू च आलिङ्गयसि, तथा मयापि तत्तदालिङ्ग्येत्यर्थः। अथ च वस्त्रमपसार्य तत्तद्गुप्ताङ्गं प्रदर्शय। प्रसादं कुरु तत्तदङ्गालिङ्गनार्थं मयि प्रसन्ना भव। अन्योऽपि स्वसजातीयस्य यस्मादुच्चपदप्राप्तिं पश्यति, मह्यमपीदं पदं दीयतामिति तच्चरणयोः पतति। नलो भैम्या ऊरू दृष्ट्वा चरणौ ददर्शेति भावः। 'नेत्रं मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च। रथे चक्षुषि नद्यान्तु नेत्री नेतरि वाच्यवत्' मे। उरो-नितम्बोर्विति प्राण्यङ्गत्वादेकवद्भावो नपुंसकत्वञ्च ॥ ८ ॥

दृशोरिति ॥' अथानन्तरं स महीमहेन्द्रो नलः यथाकामम् अभिलाषमनतिक्रम्य प्रेयसीं प्रियतमां भैमीं तस्या भैम्या आलिकुलं सखीसमूहञ्च दृशोः स्वचक्षुषोरुपहृत्य उपायनीकृत्य भैमीं तत्सखीश्च सादरं दृष्ट्वेत्यर्थः प्रमोदो भैमीविलोकनेनानन्दः अद्भुतं तत्सौन्दर्यदर्शनेनाश्चर्यं ताभ्यां सम्भृतेन व्याप्तेन मनसा इदं वक्ष्यमाणं जगाद उवाच मनसैव भैमीं वर्णयामासेत्यर्थः ॥ ९ ॥

यज्जगाद तदाह। पद इति। विधातुर्विश्वनिर्म्मातुर्ब्रह्मणः पदेऽधिकारे सृष्टिव्यापारे मन्मथो वा कन्दर्पो वा मम मनोरथोऽभिलाषो वा यदि अभिषिच्येत नियुज्येत, तदापि तदनिर्वचनीयम् एतत् पुरो दृश्यमानं तस्याः प्रतिप्रतीकं प्रत्यवयवम् अतिरमणीयत्वादद्भुतम् आश्चर्यकारि यद्रूपं लावण्यं तस्य शिल्पं निर्माणं घटेत युज्येत नवा घटेत नवा युज्येत। विधातुर्वेदजडत्वादीदृशरूपनिर्माणासमर्थतया कथञ्चित्तत्र कामो मदभिलाषो वा निर्मायकतया सम्भाव्यत इत्यर्थः मदिच्छानुरूपं कामोद्दीपकञ्च भैमीरूपमिति भावः ॥ १० ॥

तरङ्गिणीति ॥ भूमिभृतो भीमभूपतेः प्रसूता उत्पन्ना सेयं दमयन्ती शृङ्गाररसस्य तरङ्ग उद्रेकः तद्वती अथ च नदीति जानामि मन्ये। यस्यां दमयन्त्याम् उच्चैस्तनतया अत्युच्चकुचतया घनेन निविडेन यौवनेन तथाऽनिर्वचनीयप्रकारो लावण्यपूरः सौन्दर्यविवृद्धिरजनि जनितः। दमयन्त्याः

श्लोकेऽस्मिन् 'नेत्रालिङ्गनशब्दद्वयश्लेषेण अभेदमूलातिशयोक्तिद्वयोत्थापिता प्रस्तुतायां दृशि अप्रस्तुताया उत्तमपदस्थायाः कस्याश्चिदवलोकनेन तत्समानजातीयायाः जनिततत्पदप्राप्तिवाञ्छायाः तत्प्रभुचरणपतनरूपव्यवहारारोपणात् समासोक्तिः। प्रेक्षे इतीवेतिवाच्योत्प्रेक्षाचेति अङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥ महीमहेन्द्र इत्युपमा, छेकानुप्रासश्च ॥ ९ ॥ "अत्र भैमीरूपशिल्पस्य प्रसिद्धब्रह्मसम्बन्धेऽपि असम्बन्धोक्तेः तथा मन्मथासम्बन्धेऽपि संभावनया तत्सम्बन्धोक्तेश्च तद्रूपकातिशयोक्तिभेदौ" जी ॥ १० ॥

अस्यां वपुर्व्यूहविधानविद्यां किं द्योतयामास नवामवाप्ताम् ।
प्रत्यङ्गसङ्गस्फुटलब्धभूमा लावण्यसीमा यदिमामुपास्ते ॥ १२ ॥
जम्बालजालात् किमकर्षि जम्बू-नद्या न हारिद्रनिभप्रभेयम् ।
अप्यङ्गयुग्मस्य न सङ्गचिह्न-मुन्नीयते दन्तुरता यदत्र ॥ १३ ॥

प्रथमावतीर्णयौवनतया उच्चकुचत्वं सौन्दर्याधिक्यं शृङ्गाररसोद्रेकश्च जात इति भावः। अथ च भूमिभृतः पर्वतादुत्पन्नायां शृङ्गात्पर्वतोच्चभागादारोगमनं यस्य तादृशस्य रसस्य जलस्य तरङ्गिण्यां नद्याम् उच्चैर्यथा तथा स्तनता गर्जता घनेन मेघेन पूरो जलप्रवाहो जन्यते। यस्यां घनेन निविडेन यौवनेन लावण्यपूरोऽजनि तथा उच्चै स्तनता उच्चकुचत्वञ्च अजनीति प्राञ्चः। 'रसः स्वादे जले वीर्ये शृङ्गारादौ'। 'पूरोजलप्रवाहे स्यात्' वि॥ ११ ॥

अस्यामिति। किं वितर्के लावण्यसीमा सौन्दर्यपरमकाष्ठा कर्त्री नवां नूतनाम् अवाप्तां कुतश्चित् प्राप्तां वपुर्व्यूहविधानविद्यां शरीरसमूहकरणविद्याम् अस्यां भैम्यां किं द्योतयामास प्रकाशयामास यद्यस्मात्प्रत्यङ्गं प्रत्यवयवं सर्वावयवेषु यः सङ्गः सम्बन्धस्तेन स्फुटं व्यक्तं यथा तथा लब्धः प्राप्तो भूमा प्राचूर्यं यया तादृशी सती इमां भैमीम् उपास्ते आश्रयति। भैम्याः सर्वावयवानामपि लावण्यभूयिष्ठत्वाल्लावण्यसीमा किमस्यां कायविस्तारं चकारेति वितर्कः। अन्योऽपि योगी कायव्यूहं प्रकाशयति। नवामवाप्तामित्यनेन भैमी बाल्ये नैतादृगासीत् अधुनैव सर्वावयवावच्छेदेन लावण्यशालिनी जातेति सूचितम्। क्वचित्पुस्तके अवाप्तामित्यत्र स काम इति पाठस्तत्रायमर्थः स प्रसिद्धः कामः कन्दर्पो नवां तदैवाभ्यस्तां वपुर्व्यूहविधानविद्याम् अस्यां किं द्योतयामास यस्मात् प्रत्यङ्गसङ्गस्फुटलब्धभूमा लावण्यसीमा इमामुपास्ते लावण्यसीम्नः कामानुसारित्वादस्याः प्रत्यङ्गं कामः किं देहव्यूहेन अवतिष्ठत इत्यर्थः। भैम्या मुखस्तनाद्यङ्गं यथा काममुद्दीपयति तथेतराण्यप्यङ्गानीति भावः ॥ १२ ॥

जम्बालेति। हारिद्रनिभा हरिद्रारञ्जिततुल्या सुवर्णतुल्या या प्रभा कान्तिर्यस्यास्तादृशी इयं भैमी जम्बूनद्या जम्बूफलरसजातनद्या जम्बालजालात् पङ्कसमूहात् किं नाकर्षि नाकृष्टा न निर्मिता अपि तु तत एव आकर्षीत्यर्थः विधात्रेत्यर्थात्। यद्यस्मादत्रास्यां भैम्याम् अङ्गयुग्मस्य हस्ताद्यवयवयुग्मस्य सङ्गचिह्नं परस्पर-सन्धिचिह्नरूपा दन्तुरतापि निम्नोन्नततापि नोन्नीयते न ज्ञायते। भैम्याः सुवर्णवर्णत्वात् मांसलतयाऽलक्षिताङ्गसन्धिचिह्नत्वाच्च जम्बूनद्याः पङ्केन निर्माणमुत्प्रेक्षितम्। जम्बूनद्याः पङ्कं हि जाम्बूनदं सुवर्णं, यच्च पङ्कादाकृष्यते तस्योच्चावचप्रदेशेषु निम्नोन्नतता न संलक्ष्यते। भैमी अतितरां गौरी ईषन्मांसलतया चालिङ्गनसुखदेति भावः। 'निषद्वरस्तु जम्बालः पङ्कोऽस्त्री सादकर्दमौ' अ ॥ १३ ॥

---

"अत्रातिशयोक्तिरूपकश्लेषालङ्कारः" सा। "यौवनेन घनेन इति व्यस्तरूपकम्, उच्चैस्तनता घनेनेति शब्दश्लेषः, तदुत्थापिता च भैम्याः शृङ्गारतरङ्गिण्युत्प्रेक्षेति संकरः" जी। अन्त्यानुप्रासश्च ॥ ११ ॥ "अत्र उत्प्रेक्षानुप्रासोऽलङ्कारः" सा ॥ १२ ॥ "अत्रानुमानोपमा

सत्येव साम्ये सदृशादशेषाद्-गुणान्तरेणोच्चकृषे यदङ्गैः ।
अस्यास्ततः स्यात्तुलनापि नाम वस्तु त्वमीषामुपमापमानः ॥ १४ ॥
पुराकृति स्त्रैणमिमां विधातु-मभूद्विधातुः खलु हस्तलेखः ।
येयं भवद्भाविपुरन्ध्रिसृष्टिः सास्यै यशस्तज्जयजम्प्रदातुम् ॥ १५ ॥

सत्येवेति । अस्या भैम्या अङ्गैर्मुखाद्यवयवैः कर्तृभिः साम्ये वर्तुलत्वादिना सादृश्ये सत्येव विद्यमान एव अशेषात् समस्तात् सदृशात् सदृशत्वेनाभिमतात् चन्द्रादेर्गुणान्तरेण अत्याह्लादकत्वनिष्कलङ्कत्वादिना यत् उच्चकृषे उत्कृष्टैर्जातं, ततस्तस्मात् तुलनापि नाम स्यात् समानतापि भवेत् मा भूद्वाऽमीषां चन्द्राद्यपेक्षयाधिक्यम् उभयेषां न्यूनाधिकशून्यतापि स्वीक्रियतामित्यर्थः । वस्तु तु परमार्थतः पुनरमीषामङ्गानाम् उपमा उपमेयत्वम् अपमानस्तिरस्कारः, हीनस्यैवोपमेयत्वेन अधिकस्य तदभावात् । सर्वत्र हि उपमानस्याधिक्यम् उपमेयस्य न्यूनत्वं प्रसिद्धं, तथाचान्यरमणीमुखाद्यङ्गापेक्षया चन्द्रादीनामाधिक्यात्तत्र ते उपमानतां गच्छन्तु, अत्र तु भैमीमुखादीनामेव चन्द्राद्यपेक्षयोत्कृष्टत्वादुपमानत्वे वक्तव्ये उभयेषां समानतापि वा कथञ्चिद्वक्तव्या, न तु कदापि हीनानां चन्द्रादीनामुपमानतया आधिक्यमित्यर्थः । भैम्या अङ्गानि चन्द्रापेक्षयाप्याह्लादजनकानीति भावः । व्याख्यान्तराणि तु प्राचीनानामरमणीयतया परित्यक्तानि ॥ १४ ॥

पुरेति । खलूत्प्रेक्षे इमां भैमीं विधातुं निर्म्मातुं पुरा प्रथमं कृति निर्म्माणं यस्य तादृशं स्त्रैणं स्त्रीवृन्दं विधातुर्ब्रह्मणो हस्तलेखो हस्ताभ्यासोऽभूत् । भैमीजन्मनः प्राक् ब्रह्मणा यत् रम्भामेनकादिस्त्रीणां निर्म्माणं कृतं तदतिसुन्दरीं भैमीं निर्म्मातुं हस्ताभ्यास एव कृत इत्यर्थः । अन्योऽपि शिल्पी प्रथमं हस्ताभ्यासं कृत्वा पश्चात् सुन्दरं वस्तु निर्मिमीते । पूर्वसृष्टस्त्रीसमूहापेक्षया भैमी अतिसुन्दरीति भावः । नन्वेवं प्राक्तनस्त्रीसमूहसृष्टेर्हस्ताभ्यासमात्रप्रयोजनकत्वे भैम्याः समानकालीनानां पश्चाज्जातानां वा स्त्रीणां सृष्टौ किं प्रयोजनमित्याशङ्क्याह, या इयं भवन्ती वर्त्तमाना भाविनी भविष्यन्ती च पुरन्ध्रिसृष्टिः स्त्रीनिर्मितिः सा अस्यै भैम्यै तज्जयजं तस्या भवद्भाविपुरन्ध्रिसृष्टेर्भैमीकर्तृको यो जयस्तस्माज्जातं यशः प्रदातुं, नत्वन्यत् किमपि कर्तुं, यशोह्युत्कर्षप्रयुक्तम् उत्कर्षश्च सजातीयनिष्ठनिकर्षज्ञानापेक्षः । यदि विधाता अतिसुन्दरीं भैमीं निर्माय ततो निकृष्टानामितरस्त्रीणां निर्माणं न कुर्य्यात्तदा विधाता भैमीतोऽप्युत्कृष्टां निर्मातुं समर्थ इति जनानां सम्भावनया इयमेवैकसुन्दरीति यशो भैम्याः कथं स्यादित्यर्थः । भूतभविष्यद्वर्त्तमानेषु भैमीसदृशी न कापि सुन्दरीति भावः । 'तदभ्यासाय लिखनं हस्तलेखः स उच्यते' व । ह्रस्वेकारान्तः पुरन्ध्रिशब्दोऽप्यस्ति । भवद्भावीति स्त्रीत्वविवक्षायाः प्राक् द्वन्द्वं कृत्वा पुरन्ध्रिशब्देन यथाकथञ्चित् कर्मधारयः, अन्यथा भवन्तीभावीति स्यादिति प्राञ्चः । भवत् भावि च यथा तथा येयं पुरन्ध्रिसृष्टिरिति 'सञ्चारो रतिमन्दिरावधी'त्यादिवत् सृष्टिक्रियाविशेषणमिति

---

लङ्कारो अनुप्रासोऽपि" सा । किमकर्षि इत्युत्प्रेक्षा ॥ १३ ॥ "प्रसिद्धोपमानात् चन्द्रादेः भैमीमुखादेरवयवस्य उत्कर्षकथनात् व्यतिरेकः, भैमीमुखादेरेवोपमाबताकल्पनात् प्रतीपम् वा ॥ १४ ॥

भव्यानि हानीरगुरेतदङ्गाद् यथा यथानर्त्ति तथा तथा तैः।
तस्याधिकस्योपमयोपमाता दाता प्रतिष्ठां खलु तेभ्य एव ॥ १६ ॥
नास्पर्शि दृष्टापि विमोहिकेयं दोषैरशेषैः स्वभियेति मन्ये।
अन्येषु तैराकुलितस्तदस्यां वसत्यसापत्न्यसुखी गुणौघः ॥ १७ ॥
औज्झि प्रियाङ्गैर्घृणयेव रुक्षा न वारिदुर्गात्तु वराटकस्य।
न कण्टकैरावरणाच्च कान्ति-र्धूलीभृता काञ्चनकेतकस्य ॥ १८ ॥

गुरवः। वस्तुतस्तु सृष्टिपदप्रतिपाद्यत्वावच्छिन्ने भवत्त्वभावित्वयोरांशिकत्वेनाविरोधात् क्रमेण कर्मधारये 'उक्तपुंस्के'त्यादिना पुंवद्भावोऽविरुद्ध इति ध्येयम् ॥ १५ ॥

भव्यानीति। भव्यानि सुन्दराणि चन्द्रपद्माद्युपमानवस्तूनि एतस्या भैम्या अङ्गान्मुखाद्यवयवाद्यथा यथा हानीरपकर्षान् पराजयान् अगुः प्रापुः, तथा तथा तैर्भव्यैरनर्त्ति हर्षात् नृत्यं कृतम्, अपकर्षातिशयप्राप्तावपि कथं तेषां नृत्यमित्यत आह खलु यस्मादुपमाता उपमानकर्त्ता कविः अधिकस्य उत्कृष्टस्यापि तस्य भैम्यङ्गस्य उपमया सादृश्येन तेभ्य एव तुल्यकक्षाणामितरेषामभावात् चन्द्रपद्मादिभ्य एव प्रतिष्ठां माहात्म्यं दाता दास्यति। भैमीमुखं चन्द्रसमानकान्तीत्यादिना समानतया कविभिर्वर्ण्यमानत्वात् उत्कृष्टान्यपि भैम्या अङ्गानि अस्माकमुपमेयानीति वयं धन्या इत्यानन्दवशान्नृत्यं कृतमितिभावः। अतएवोक्तं 'पराभवोऽप्युत्तमतो हि कीर्त्तये' इति। अगुरिति इणगतावित्यस्माल्लुङोऽन् 'इणिकोर्गाः' इति इणो गादेशः, दातेति लुटस्ताङ् ॥ १६ ॥

नास्पर्शीति। इयं भैमी दृष्टापि दर्शनविषयतामात्रं गतापि सती विमोहिका कामविकारजनिका अथ च मूर्च्छाजनिका इति स्वस्य निजस्य भिया भयेन हेतुना अशेषैः समस्तैरपि दोषैः कर्तृभिरियं नास्पर्शि न स्पृष्टेत्यहं मन्ये उत्प्रेक्षे। या दर्शनमात्रेणापि मोहं जनयति सा दर्शनापेक्षयाप्यतिसन्निकृष्टेन स्पर्शेन किं करिष्यतीति भयेन दोषैर्न स्पृष्टेत्यहं मन्य इत्यर्थः। यस्मादियं दोषैर्न स्पृष्टा तत्तस्मात् अन्येषु भैमीभिन्नस्थानेषु तैर्दोषैराकुलितः सहवासाद्व्याकुलतां प्रापितो गुणौघः सौन्दर्य्यादिगुणसमूहः असापत्न्येन निःशल्यतया सुखी सन् अस्यां भैम्यां वसति अन्यत्र वैरिभिः सहवसतो महत् कष्टं अस्यान्तु तदभावात् सुखेन वसतीत्यर्थः। अन्यत्र तु गुणदोषाः सम्बलिताः सन्ति, अस्यान्तु दोषा न सन्त्येव, केवलं सर्वे गुणाः सन्तीतिभावः। अन्योऽपि सबाधस्थानं त्यक्त्वा निर्बाधस्थाने सुखेन वसति। अशेषैरित्यनन्तरमपिशब्दोऽध्याहर्त्तव्यः, अन्यथा सर्वैर्दोषैर्नास्पर्शि किन्तु कियद्भिर्दोषैरस्पर्शीति विरुद्धप्रतीतिप्रसङ्गः स्यात् ॥ १७ ॥

औज्झीति। प्रियाया भैम्या अङ्गैरवयवैः वराटकस्य पद्मबीजकोषस्य कान्ती रुक्षा स्निग्धत्व-

---

"अत्रोत्प्रेक्षालङ्कारः" सा ॥ १५ ॥ "हानिगमननर्त्तनक्रियाविरोधालङ्कारः" सा। व्यतिरेकः, नर्त्तनासम्बन्धेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः, परार्द्धवाक्यार्थस्य पूर्व्वार्द्धवाक्यार्थं प्रति हेतुत्वात् काव्यलिङ्गम्, अनुप्रासश्च ॥ १६ ॥ "अत्रोत्प्रेक्षालङ्कारः" सा। गुणानां वासं प्रति असापत्न्यसुखीति पदार्थस्य हेतुत्वात् काव्यलिङ्गम्, अनुप्रासश्च ॥ १७ ॥

प्रत्यङ्गमस्यामभिकेन रक्षां कर्त्तुं मघोनेव निजास्त्रमस्ति।
वज्रञ्च भूषामणिमूर्त्तिधारि नियोजितन्तद्द्युतिकार्मुकञ्च ॥ १९ ॥
अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप।
पक्षस्थताबद्दहुचन्द्रकोऽपि कलापिनां येन जितः कलापः ॥ २० ॥

रहिता इति कृत्वा घृणयेव जुगुप्सयेव औज्झि त्यक्ता, ननु न पुनर्वारिदुर्गात् जलरूपदुर्गसमाश्रयणेन ग्रहीतुमसामर्थ्यात् त्यक्ता अपितु कृपयैव त्यक्ता, अधिकस्य विरोधत्यागे कारणान्तराभावात्। तथा काञ्चनकेतकस्य सुवर्णकेतककुसुमस्य कान्तिश्च धूलीभिर्भृता पूर्णा इति कृत्वा घृणयेव औज्झि न पुनः कण्टकैस्तीक्ष्णाग्रावयवविशेषैरथ च क्षुद्रशत्रुसमूहैः कृत्वा यदावरणं वेष्टनम् अथ च रक्षणं तस्माद्धेतोर्न औज्झि, अपि तु जुगुप्सयैव औज्झि। वराटकसुवर्णकेतकाभ्यामपि अतिस्निग्धगौरवर्णेयमिति भावः। 'बीजकोषो वराटकः' अ ॥ १८ ॥

प्रत्यङ्गमिति। अस्यां भैम्यामभिकेन कामुकेन मघोना इन्द्रेण प्रत्यङ्गं प्रत्यवयवं दोषादेः सकाशात् रक्षां कर्त्तुं भैम्या रक्षणाय नियोजितमिव नियुक्तमिव निजास्त्रं स्वायुधं वज्रञ्च भूषामणिमूर्त्तिधारि सत् भूषणवज्राख्यरत्नशरीरतामापन्नं सत् भैम्यां प्रत्यङ्गम् अस्ति विद्यते, तथा तस्य वज्रस्य द्युतिः कान्तिस्तल्लक्षणं कार्मुकञ्च इन्द्रधनुश्च अस्ति, प्रत्यवयवमलङ्कारेषु हीरका विद्यन्ते तेषां द्युतिश्च शक्रचापवत् सर्वत्र प्रकाशते। अत्र वज्रशब्दच्छलेन श्लेषहेतुकोत्प्रेक्षा, इन्द्रधनुषश्च वज्रद्युतिरूपत्वं प्रसिद्धम्। अन्योऽपि स्वाभीष्टं वस्तु रक्षितुं कमपि निजं नियुङ्क्ते। प्रत्यङ्गमिति काकाक्षिगोलकन्यायादुभयत्र सम्बध्यते, चकारौ परस्परसमुच्चयार्थौ। 'वज्रं स्याद्धीरके पवौ' अ। 'अकाले शक्रचापानामुदयस्तु यतो भवेत्। असौ धन्यतरो ज्ञेयो बहुमूल्यो मणिः स्मृतः' इति रत्नपरीक्षा ॥ १९ ॥

एवं सामान्यतो वर्णयित्वा केशानारभ्यापादनखान्तं विशेषतः क्रमेण वर्णयितुमुपक्रममाणः सम्प्रति त्रिभिः श्लोकैः केशान् वर्णयति। अस्या इति। सपक्षो मित्रम् अथ च सदृश एकः केवलो विधुश्चन्द्रो यस्य तादृशस्य अस्या दमयन्त्या मुखस्य उपरि ऊर्द्ध्वं कचौघः केशपाशो यत् वासं वसतिम् आप प्राप्तवान्, तत् स्थाने युक्तं, यत्तदित्यर्थाद्गम्यते। कथमित्यत आह येन कचौघेन पक्षस्थाः पतत्रस्थिता अथ च मित्रभूतास्तावन्तो बहवश्चन्द्रका मेचका अथ च चन्द्र एव चन्द्रका यस्य तादृशोऽपि कलापिनां मयूराणां कलापः पिच्छभारो जितः। यो हि बहूनां चन्द्राणां मित्रं जितवान्, स एकचन्द्रसहायस्योपरि वस्तुमर्हत्येव। मयूरपिच्छापेक्षयाप्यति रमणीयो भैम्याः केश इति भावः। 'युक्ते द्वे साम्प्रतं स्थाने' अ। 'पक्षो मासार्द्धके पार्श्वगृहे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः चुल्लीरन्ध्रे पतत्रे च' मे ॥ २० ॥

---

न वारिदुर्गादित्यादिन्यापोहस्य शाब्दत्वेन शाब्दी परिसंख्या, अन्यकान्तेः अन्येन परित्यागायोगेन तत्सादृश्यबोधात् निदर्शना, घृणयैव किम् औज्झि इति प्रतीतिरुत्प्रेक्षा। "अतोत्प्रेक्षादीपकमलंकारः" सा। व्यतिरेको ध्वनिः ॥१८॥ "सापह्नवोत्प्रेक्षालंकारः" सा ॥१९॥ वाक्यार्थहेतुकं

अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम् ।
स्फुटं स्फुरद्भंगकचच्छलेन तदेव पश्चादिदमस्ति बद्धम् ॥ २१ ॥
अस्याः कचानां शिखिनश्च किन्तु विधिङ्कलापौ विमतेरगाताम् ।
तेनायमेभिः किमपूजि पुष्पै-रभर्त्सि दत्वा स किमर्द्धचन्द्रम् ॥ २२ ॥
केशान्धकारादथ दृश्यभाल-स्थलार्धचन्द्रा स्फुटमष्टमीयम् ।
एतां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥ २३ ॥

अस्या इति । अस्या भैम्या आस्येन मुखरूपेण शीतरुचा चन्द्रेण पुरोऽग्रे वर्त्तमानं तिरश्च तिर्यग्वर्त्तमानञ्च यत् अन्धकारं तिरस्कृतम् अपसारितं, स्फुटमुत्प्रेक्षे तदेवेदमन्धकारं स्फुरन् भङ्गः कौटिल्यं येषां तादृशा ये कचाः केशास्तेषां छलेन व्याजेन पश्चात् मुखस्य पश्चाद्भागे बद्धं संयतं सत् अस्ति विद्यते । नैते केशाः किन्तु मुखचन्द्रेण पुरस्तिरश्च तिरस्कृततया स्फुरद्भङ्गं विलसत्पराजयं पश्चाद्बद्धमन्धकारमेव । अन्यमपि पराजयिनं बद्धं कृत्वा पश्चाद्भागे स्थापयति अतिकुटिलोऽतिकृष्णश्च भैम्याः केशपाश इतिभावः ॥ २१ ॥

अस्या इति । किन्नु वितर्के अस्या भैम्याः कचानां केशानां कलापः समूहः तथा शिखिनो मयूरस्य च कलापो वर्हम् उभौ विमतेरहमेवोत्कृष्टो न त्वमिति परस्परविरोधाद्धेतोः उभयोर्निर्मायकत्वात्प्राचीनत्वाद्वा मध्यस्थत्वेन विधिं ब्रह्माणं किन्नु अगातां गतवन्तौ । तेन ब्राह्मणा अयं पुरोदृश्यमानो भैम्याः कचकलापः एभिर्दृश्यमानैः पुष्पैः किम् अपूजि उत्कर्षज्ञापनाय सम्मानितः, स मयूरकलापस्तु अर्द्धचन्द्रं गलहस्तं दत्त्वा किम् अभर्त्सि तिरस्कृतः । ब्रह्मणा मध्यस्थेन सता परस्परविवदमानयोस्तयोर्मध्ये केशकलापोऽत्युत्कृष्ट इति ज्ञापयितुं किं तस्य पुष्पैः पूजा कृता मयूरकलापस्तु अतितरां हीनोऽत्यधिकेन च केशकलापेन स्पर्द्धमानोऽनुचितकारी गलहस्तं प्रापित इत्यर्थः । अर्द्धचन्द्राकाराश्चन्द्रका मयूरकलापे विद्यन्ते । ततः शब्दच्छलेनेयमुत्प्रेक्षा। अन्योऽप्यधिको मध्यस्थेन पुष्पैः पूज्यते, यश्च हीनोऽपि उत्तमेन सह स्पर्द्धते स गलहस्तदानेन भर्त्स्यते । मयूरपिच्छादपि मनोहरो भैम्याः केशपाश इति भावः । अगातामिति इणधातोर्लुङस्ताम् । 'कलापो भूषणे वर्हे तूणीरे संहतेऽपि च' अ । 'तर्ज्जन्यङ्गुष्ठविस्तारे गलहस्तार्द्धचन्द्रकौ' वलः 'अर्द्धचन्द्रो बाणभेदे चन्द्रके च शिखण्डिनाम्' इति धरणिः ॥ २२ ॥

एकश्लोकेन भालं वर्णयति । केशेति । स्फुटमुत्प्रेक्षे इयं भैमी अष्टमी कृष्णाष्टमीरात्रिः । किम्भूता यतः केशलक्षणो योऽन्धकारस्तस्मादथानन्तरं दृश्यो मनोरमोऽथच अवलोकनीयो भालस्थलरूपोऽर्द्धचन्द्रो यस्यास्तादृशी । कृष्णाष्टमीरात्रिरपि प्रथमयामद्वयान्धकारा अनन्तरं दृश्यार्द्धचन्द्रा च भवति । अतएव एतां भैमीम् आसाद्य प्राप्य स्वयंवरे जगतो जयाय मनोभुवा कन्दर्पेण यत् जगद्वशीकरणलक्षणा सिद्धिरसाधि साधिता, तत्साधु युक्तमेव । अन्योऽपि साधकः कुलतिथिं

---

काव्यलिङ्गम् ॥ २० ॥ आस्येन शीतरुचेति रूपकम्, कचच्छलेनेति अपह्नुतिः, छेकानुप्रासश्च ॥ २१ ॥ "अत्रोत्प्रेक्षा प्रतीपमलङ्कारः" सा ॥ २२ ॥

पुष्पन्धनुः पुष्पशरस्य दाहे श्यामीभवत्केशरशेषमासीत् ।
व्यधाद् द्विधेशस्तदपि क्रुधा किं भैमीभ्रुवौ येन विधिर्व्यधत्त ॥ २४ ॥
भ्रूभ्यां प्रियाया भवता मनोभू-चापेन चापे घनसारभावः ।
निजां यदप्लोषदशामपेक्ष्य सम्प्रत्यनेनाधिकवीर्य्यताज्जि ॥ २५ ॥
स्मारन्धनुर्यद्विधुनोज्झितास्या-मास्येन भूतेन च लक्ष्मलेखा ।
एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभावम् ॥ २६ ॥

कृष्णाष्टमीं प्राप्य रात्रौ जगद्वशीकर्त्तुं गुटिकादिसिद्धिं साधयति । अर्द्धचन्द्राकारभालस्थलेयमिति भावः । 'भालं ललाटमहसोः' वि ॥ २३ ॥

श्लोकत्रयेण भ्रुवौ वर्णयति । पुष्पमिति । किमित्युत्प्रेक्षायां पुष्पशरस्य कन्दर्पस्य दाहे दाहसमये पुष्पं धनुः तत्र पुष्पमयं चापं श्यामीभवन्त ईषद्दग्धतया श्यामायमानाः केशराः किञ्जल्का एव शेषा यस्य तादृशं किम् आसीत् बभूव, अनन्तरम् ईशो महादेवः क्रुधा कोपेन तदपि केशरावशिष्टमपि धनुः किं द्विधा व्यधात् चकार मध्ये बभञ्ज, येन द्विधाभूतेन श्यामीभवत्केशरावशेषेण धनुषा करणेन विधिर्ब्रह्मा भैम्या भ्रुवौ व्यधत्त चकार । अन्यथा भ्रुवोरेतादृशमुद्दीपकत्वं न घटत इति भावः । भ्रुवोरतिश्यामपक्ष्मलत्वान्मध्यभग्नधनुराकारत्वाच्चेयमुत्प्रेक्षा ॥२४॥

भ्रूभ्यामिति । मनोभूचापेन कामधनुषा प्रियाया भैम्या भ्रूभ्यां भ्रूयुगलेन भवता भ्रूत्वं गच्छता सता घनो दृढः सारो बलं यस्य तस्य भावोऽतिदृढत्वञ्च आपे प्राप्यते स्म । न केवलं भ्रूत्वं प्राप्तं, किन्तु अतिदृढत्वमपि प्राप्तमिति चकारार्थः । पुष्पत्वदशायां निःसारस्यापि धनुषो भैमीभ्रूत्वदशायां ससारत्वं जातमित्यर्थः । कथमेवं ज्ञातमित्यत आह यद्यस्मात् निजां स्वीयाम् अप्लोषदशाम् अदाहावस्थाम् अपेक्ष्य संप्रति अनेन कामधनुषा अधिकवीर्यता अतिशयितबलत्वम् आर्जि अर्जिता । पुष्पमयत्वावस्थापेक्षया भ्रूत्वावस्थायां तस्यैव धनुषो जगद्वशीकरणेऽधिकसामर्थ्यदर्शनादेवमनुमीयत इत्यर्थः । अथ च घनसारत्वं कर्पूरत्वम् आपे । कर्पूरोऽपि निजामदाहावस्थामपेक्ष्य दाहावस्थायामधिकवीर्यतां प्राप्नोति । 'अथ कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञः' अ ॥२५॥

स्मारमिति ॥ स्मारं कन्दर्पसम्बन्धि यत् धनुः दग्धं चापं तथा भैम्या आस्येन मुखेन भूतेन मुखत्वं गतवता विधुना चन्द्रेण या च लक्ष्मलेखा कलङ्करेखा अस्यां भैम्याम् उज्झिता परित्यक्ता भैमीमुखचन्द्रस्य निष्कलङ्कत्वात् । तत् युग्मं कामधनुश्चन्द्रलक्ष्मलेखयोर्द्वयम् एतद्भ्रुवौ भैमीभ्रूरूपं जन्म आप लेभे । भैमीभ्रूस्वरूपेण तद्युगं परिणतमित्यर्थः । किम्भूतं जन्मर्लीलया विलासेन यच्चलत्वं चाञ्चल्यं तत्र उचितो बालभावः केशसत्ता अथ च शिशुत्वं यत्र तादृशम् । अन्योऽपि जन्म लब्ध्वा क्रीडोचितशैशवचापलं करोति । भैमीभ्रुवौ कामधनुश्चन्द्रलक्ष्मलेखाकारे

---

'जयदा विजिगीषूणां यात्रायामष्टमी तिथिः' इत्युक्तेः अष्टम्या जयहेतुत्वमुत्प्रेक्षितम्, उत्प्रेक्षा चेयं रूपकानुप्राणिता ॥ २३ ॥ "अत्रोत्प्रेक्षातिशयोक्तिरलङ्कारः" सा ॥ २४ ॥ "अत्रातिशयोक्तिरनुमानालङ्कारः" सा । आपे इवेति प्रतीतेरुत्प्रेक्षा वा ॥ २५ ॥

इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात् पुष्पमयाशुगेन ।
शेषा द्विवाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य ॥ २७ ॥
सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या ।
तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥ २८ ॥
आघूर्णितं पक्ष्मलमक्षियुग्मं प्रांशुद्युति श्वैत्यजितामृतांशु ।
अस्या इवास्याश्चलदिन्द्रनील-गोलामलश्यामलतारतारम् ॥ २९ ॥

सविलासचञ्चले पक्ष्मले कामजनिके चेति भावः ॥ २६ ॥

नवभिः श्लोकैश्चक्षुषी वर्णयति ॥ इष्विति ॥ पुष्पमया आशुगाः पञ्च वाणा यस्य तादृशेन कामेन इषुत्रयेणैव पुष्पमयेण वाणत्रयेणैव जगत्त्रयस्य भुवनत्रयस्य विनिर्जयात् एकैकेन वाणेन एकैकस्य भुवनस्य वशीकरणाद्धेतोः शेषा अवशिष्टा इयं दृश्यमाना द्विवाणी वाणद्वयं प्रियाया भैम्या दृगम्भोजपदे नयनकमलद्वयस्थाने अभिषिच्य आरोप्य सफलीकृता सार्थकीकृता । पञ्चसु वाणेषु मध्ये वाणत्रयस्यैव जगत्त्रयजयात् सार्थक्यं जातम्, अवशिष्टयोस्तु कथं सार्थक्यं भवेदिति विचिन्त्य कामेन प्रयोजनान्तरादर्शनात् भैमीनयनकमलपदेऽभिषिच्य सार्थक्यं कृतमित्यर्थः । अन्योऽपि निष्प्रयोजनं वस्तु उत्तमस्थाने समर्प्य सार्थकं करोति । भैमीनयनयोः पद्मपुष्पतुल्यत्वादुद्दीपकत्वाच्च पुष्पमयकामवाणत्वसम्भावना युज्यत एव । द्विवाणीति द्वयोर्वाणयोः समाहार इति द्विगुः ॥ २७ ॥

सेयमिति ॥ मुष्ट्या यद् ग्रहणं तत्र अर्हो योग्यो मध्यो यस्यास्तादृशी अतिक्षीणमध्या सा इयं भैमी स्मरस्य कामस्य कौसुमी पुष्पसम्बन्धिनी चापयष्टिर्धनुर्लता । यतो मृदुः सुकुमाराङ्गी, चापयष्टिरपि मध्ये मुष्ट्या ध्रियते सा का या भैमी नोऽस्माकं मोहाय कामविकाराय श्रीमता शोभाशालिना अपाङ्गेन चक्षुःप्रान्तेन मुक्तां त्यक्तां दृष्टयः कटाक्षनिरीक्षणान्येव शरा वाणास्तेषामोघस्य समूहस्य वृष्टिं तनोति विस्तारयति । चापयष्टिरपि अपाङ्गपर्यन्तमाकृष्टानां वाणानां वृष्टिं विस्तारयति । यथा कामवाणो जगत्त्रयं मोहयति, तथास्याः कटाक्षोऽपीत्यर्थः ॥ २८ ॥

आघूर्णितमिति ॥ अस्या भैम्या अक्षियुग्मं चक्षुर्द्वयम् अस्या इव नत्वन्यस्या नयनद्वयेन तुल्यं रामरावणयोर्युद्धं रामरावणयोरिवेतिवदनन्यसदृशमित्यर्थः । किम्भूतम् आघूर्णितम् ईषद्घूर्णायमाणं तथा पक्ष्मलं प्रशस्तपक्ष्मयुक्तं तथा प्रांशुरधिकतरा द्युतिः शोभा यस्य तादृशं

---

अत्र स्मारधनुषः, चन्द्रत्यक्तलक्ष्मलेखायाः, चन्द्रस्य च तथाविधभैमीमुखभ्रूद्वयरूपजन्मासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तित्रयम्, अनुप्रासश्च ॥ २६ ॥ अत्र दृगम्भोजेति रूपकम्, वाणद्वयस्य तथाविधाभिषेकाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, जगत्त्रयाहितकरयोरशोभनयोः कामवाणयोर्भैमीनेत्राम्भोजत्वरूपशोभनपदाभिषेकात् सफलीकरणरूपविरूपसंघटनावशात् विषमालङ्कारः ॥ २७ ॥ अत्र तस्यां भैम्यां कौसुमचापयष्टित्वारोपात् दृष्टौ शरौघवृष्टित्वारोपात् च रूपकद्वयम् ॥ २८ ॥

कर्णोत्पलेनापि मुखं सनाथं लभेत नेत्रद्युतिनिर्जितेन।
यद्येतदीयेन तदा कृतार्था स्वचक्षुषी किं कुरुते कुरंगी॥ ३०॥
त्वचः समुत्तार्य्य दलानि रीत्या-मोचात्वचः पञ्चपपाटनानाम्।
सारैर्गृहीतैर्विधिरुत्पलौघा-दस्यामभूदीक्षणरूपशिल्पी॥ ३१॥
चकोरनेत्रैणदृगुत्पलाना-न्निमेषयन्त्रेण किमेष कृष्टः।

तथा श्वैत्येन पार्श्वधावल्येन जितोऽमृतांशुश्चन्द्रो येन तादृशं, तथा चलन् चञ्चलो य इन्द्रनील-गोलो मारकतगुटिका तद्वदमला स्निग्धा या श्यामलता कृष्णता तां राति अङ्गीकरोतीति तादृशी तारा कनीनिका यस्य तादृशम्। भैम्याश्चक्षुषोर्यादृशी आघूर्णायमानता पक्ष्मलता अभितः पाण्डरता स्निग्धश्यामलकनीनिकावत्ता च तादृशी नान्यासां स्त्रीणामासीदिति भावः। अक्षि-युग्ममित्यत्र अक्षिपद्ममिति प्रांशुद्युतीत्यत्र प्रान्तद्युतीति पाश्चात्यानां पुस्तकेषु पाठः। अत्रास्या अक्षियुग्मम् अस्या इवेत्येकस्यैवोपमानोपमेयत्वकल्पनादनन्वयालङ्कारः। तथा च दर्पणः, 'उपमानोपमेयत्वमेकस्यैव त्वनन्वय' इति॥ २९॥

कर्णोत्पलेनेति॥ कुरङ्गी मृगी नेत्रद्युतिनिर्जितेन भैम्या नयनकान्तिपराभूतेन एतदीयेन भैमीसम्बन्धिना कर्णोत्पलेनापि का कथा भैमीनेत्रयुगलेन, तज्जितकर्णपूरीकृतनीलोत्पलेनापि सनाथं सहितम् अथ च नाथयुक्तं स्वस्य मुखं यदि लभेत प्राप्नुयात्। ततस्तर्हि कृतार्था चरितार्था सती स्वचक्षुषी निजनयनद्वयं किं कुरुते किं करिष्यति अपि तु न किमपि करिष्यति। निष्प्रयो-जनत्वात् परित्यक्ष्यतीत्यर्थः। धातूनामनेकार्थत्वात् किं किमर्थं करिष्यति धारयिष्यतीति। कुरङ्गीनेत्रा-पेक्षया भैम्याः कर्णोत्पलमुत्कृष्टं, तस्मादपि तस्या नयने उत्कृष्टे इति भावः॥ ३०॥

त्वच इति। पञ्च वा षड्वा याः पाटनास्तक्षणानि तासां रीत्या परिपाट्या त्वचो वहिर्वल्कलानि समुत्तार्य्य निस्तक्ष्य मोचात्वचः कदलीवल्कलात् गृहीतैः सारैः श्रेष्ठभागैः तथा पञ्चपपाटनानां रीत्या दलानि वाह्यपत्राणि समुत्तार्य उत्पलौघात् नीलोत्पलसमूहात् गृहीतैः सारैः कृत्वा विधिर्ब्रह्मा अस्यां भैम्याम् ईक्षणयोर्नयनयोर्यद्रूपम् अभितः पाण्डरतालक्षणसौन्दर्यं गोलकस्य श्यामलतालक्षण-सौन्दर्यञ्च तस्य शिल्पी निर्माता अभूत्। विधिर्महता परिश्रमेण पञ्च षट्पाटनाभिः कदलीवल्कलानि नीलोत्पलदलानि च निस्तक्ष्य तन्मध्यस्थ-सारभागं गृहीत्वा अभितः पाण्डरे अतिश्यामलगोलके भैमीचक्षुषी निर्मितवानित्यर्थः। इवादिप्रयोगाभावादर्थस्य सम्भाव्यमानत्वाच्च प्रतीयमानो-त्प्रेक्षेयम्। कदलीसारभागेण शुक्लभागो निर्मितः, नीलोत्पलसारभागेण च श्यामलभागो निर्मित इति भावः॥ ३१॥

अत्र अक्षिपद्ममितिरूपकम्, अस्याः इवास्याः इत्यादिना तदीयाक्षिसादृश्यं तत्रैवेति अनन्वयः, प्रान्तद्युतिश्वैत्यजितामृतांशु इति व्यतिरेकः॥ २९॥ अत्र यद्यर्थबलात् भेदेप्यभेदाध्यवसायात् अतिशयोक्तिः, मृगीनेत्रापेक्षया भैमीकर्णोत्पलमधिकं ततोऽपि भैमी नेत्रे अधिके इति व्यतिरेकः ध्वनिः, प्रतीपमिति केचित्, छेकानुप्रासश्च॥३०॥ "अत्र यथासंख्यमतिशयोक्तिरलंकारः" सा॰॥३१॥

सारः सुधोद्गारमयः प्रयत्नै-र्विधातुमेतन्नयने विधातुः ॥ ३२ ॥
ऋणीकृता किं हरिणीभिरासी-दस्याः सकाशान्नयनद्वयश्रीः ।
भूयोगुणेयं सकला बलाद्य-त्ताभ्योऽनयालभ्यत बिभ्यतीभ्यः ॥ ३३ ॥
दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् ।
न चेत् कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥ ३४ ॥

चकोरेति ॥ एतस्या भैम्या नयने चक्षुषी विधातुं निर्मातुं विधातुर्ब्रह्मणः प्रयत्नैः कर्तृभिः चकोरनेत्रैणदृगुत्पलानां चकोरस्य पक्षिविशेषस्य नेत्रयोः एणस्य हरिणस्य दृशोश्चक्षुषोः उत्पलाना-मिन्दीवराणाञ्च सम्बन्धी सुधोद्गारमयः पीयूषनिर्झररूपोऽतिरमणीय इत्यर्थः एष प्रत्यक्षविषयः सारः श्रेष्ठभागः निमेषलक्षणेन यन्त्रेण किं कृष्टः आकृष्य भैमीनयनयोः स्थापितः । यथायथं पक्ष्मसंकोचदलसङ्कोचलक्षणेन चकोरनयनादिवृत्तेन निमेषयन्त्रेण निष्पीड्य गृहीतेन श्रेष्ठभागेन कृत्वा विधात्रा किं भैमीनयने निर्मिते इत्यर्थः । अन्यत्रापि यन्त्रेण निष्पीड्य सारो गृह्यते । त्रयाणामपि सारस्य सुधोद्गाररूपत्वञ्च चकोरस्य चन्द्रिकापानशीलतया तन्नेत्रयोः सुधापरिणत-त्वात् एणस्य च चन्द्रोत्सङ्गावस्थायितया तन्नेत्रयोरपि सुधासम्बन्धात् उत्पलानाञ्च रात्रौ विकासि-तया तत्सम्बन्धात् ॥ ३२ ॥

ऋणीकृतेति ॥ हरिणीभिः अस्या भैम्याः सकाशान्नयनद्वयस्य श्रीः शोभा किम् ऋणीकृता ऋणत्वेन पूर्वं गृहीता आसीत् । यद्यस्मात् अनया भैम्या बिभ्यतीभ्यस्त्रस्यन्तीभ्यस्ताभ्यो हरिणीभ्यः सकला समग्रा अथच कलया वृद्ध्या सहिता भूयोगुणा प्रचुरसौन्दर्यादिगुणशालिनी अथ च वृद्ध्या द्विगुणा इयं नयनद्वयश्रीर्बलादलभ्यत बलात्कारेण गृहीता । उत्तमर्णो हि प्रतिश्रुतदेय-कालातिक्रमणात् त्रस्यद्भ्योऽधमर्णेभ्यो वृद्धिसहितां द्विगुणां सम्पदं बलात् गृह्णाति, तस्मात् पूर्वमृणस्वरूपेण गृहीतेति सत्यम् । हरिणीनयनापेक्षया भैमीनयने अतिसुन्दरे इति भावः । 'कला स्यान्मूलवृद्धौ शिल्पादावंशमात्रके । षोड़शांशे च चन्द्रस्य कलनाकालमानयोः' मे ॥ ३३ ॥

दृशाविति ॥ चपलस्वभावे स्वभावतश्चञ्चले अस्या भैम्या दृशौ चक्षुषी दूरमाक्रम्य गत्वा किं मिथः परस्परं न मिलेतां घाटायां मिलिते न भवेताम् अपि तु मिलेतामेव । तर्हि मेलने का बाधेत्याह,—अनयोर्दृशोः प्रयाणे गमनविषये श्रवसी कर्णावेव कूपौ तत्र यो निपातः पतनं तस्माद्या भीतिर्भयं तया चेद्यदि विघ्नोऽन्तरायो न कृतः स्यात् । चपलस्वभावाद्गन्तुमुद्यते अपि तस्या नयने श्रवणरूपकूपद्वयं दृष्ट्वा तत्र पतनशङ्कया मध्ये विरते इवेत्यर्थः । अन्योऽपि चपलः कूपपतनशङ्कया गमनाद्विरमति । भैम्या नयने कर्णान्तविश्रान्ते अतिचपले चेति भावः ॥ ३४ ॥

---

"अत्र छेकानुप्रासरूपकोत्प्रेक्षातिशयोक्तिरलङ्कारः यमकञ्च" सा ॥ ३२ ॥ "अत्र छेकानु-प्रासोत्प्रेक्षासमासोक्त्यलङ्कारः" सा ॥ ३३ ॥ "अत्रोत्प्रेक्षा समासोक्त्यलङ्कारः" सा । श्रवः-कूपेति रूपकम् ॥ ३४ ॥

केदारभाजा शिशिरप्रवेशात् पुण्याय मन्ये मृतमुत्पलिन्या ।
जाता यतस्तत्कुसुमेक्षणेयं यतश्च तत्कोरकदृक्चकोरः ॥ ३५ ॥
नासादसीया तिलपुष्पतूणं जगत्त्रयव्यस्तशरत्रयस्य ।
श्वासानिलामोदभरानुमेयां दधद्द्विबाणीं कुसुमायुधस्य ॥ ३६ ॥
बन्धूकबन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहाना ।
रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठलेखा ॥ ३७ ॥

केदारेति । उत्पलिन्या पद्मिन्या केदारभाजा क्षेत्रं भजमानया आलबालं भजमानया वा सत्या अथ च केदारनामकं शिवं भजमानया सत्या शिशिरप्रवेशात् शिशिरर्त्वागमनाद्धेतोः अथ च हिमे निमज्जनं प्राप्य पुण्याय मृतम् उत्तमफलसम्पादकपुण्यविशेषलाभार्थं मृतम् इत्यहं मन्ये सम्भावयामि । कुतस्तवेयं सम्भावनेत्याह यतो यस्मात् इयं भैमी तस्या उत्पलिन्या कुसुमे पुष्पे एव ईक्षणे चक्षुषी यस्या स्तादृशी जाता, यतश्च चकोरः पक्षिविशेषः तस्या उत्पलिन्याः कोरकौ कलिके एव दृशौ चक्षुषी यस्य तादृशो जातः, तस्मात् पुण्यार्थमेव पद्मिन्या तथाभूतया सत्या मृतमित्यहं मन्ये। न हि पुण्यातिशयं विना भैमीनयनत्वं चकोरनयनत्वं च तद्रूपत्वाभ्यां कुसुमकोरकाभ्यां प्राप्यते । अन्योऽपि केदाराख्यशिवसन्निधौ हिमप्रवेशेन प्राणांस्त्यक्त्वा उत्तमपदं प्राप्नोति । कोरकापेक्षया कुसुमस्योत्कृष्टत्वाच्चकोरनेत्रापेक्षयापि भैमीनयने उत्कृष्टे इति सूचितम् । 'केदारोऽद्रौ शिवे क्षेत्रे भूमिभेदालबालयोः' । 'शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु' मे ॥ ३५ ॥

अथैकेन श्लोकेन नासिकां वर्णयति । नासेति । असीया अमुष्या भैम्याः सम्बन्धिनी नासा नासिका जगत्त्रये व्यस्तं विक्षिप्तं शरत्रयं येन तादृशस्य कुसुमायुधस्य कामस्य द्विबाणीम् अवशिष्टबाणद्वयं दधत् धारयत् तिलपुष्पमयं तूणम् इषुधिरेव । किम्भूतां द्विबाणीं श्वासानिलस्य निश्वासवायोर्य आमोदभरः परिमलातिशयस्तेन अनुमेयाम् अनुमानयोग्यां, प्रतीयमानोत्प्रेक्षेयम् । कुसुमायुधस्य तूणस्यापि कुसुमत्वात् तिलकुसुमस्य च नासिकाकारत्वादियमुत्प्रेक्षा । कामः पञ्चसु बाणेषु मध्ये बाणत्रयव्ययेनैव जगत्त्रयं जित्वा अवशिष्टं बाणद्वयं भैमीनासालक्षणतिल-पुष्पतूणरन्ध्रद्वये स्थापितवानित्यर्थः । श्वासानिलामोदेत्यनेनास्याः पद्मिनीत्वं सूचितम् ॥ ३६ ॥

षड्भिः श्लोकैरधरोष्ठं वर्णयति । बन्धूकेति । अस्या भैम्या अनेन दृश्यमानेन मुखेन्दुना मुखचन्द्रेण सह उज्जिहाना उद्गच्छन्ती अधरोष्ठलेखा एतद्दृश्यमानं स्वमात्मानं शैशवयौवनीयां बाल्यतारुण्यसन्धौ वर्त्तमानां सन्ध्याम् आह । अहमेव द्वयोरवस्थयोः सन्ध्येति कथयति । किम्भूतं स्वं रागश्रिया रक्तिमशोभया बन्धूकस्य रक्तवर्णपुष्पविशेषस्य बन्धूभवत् सदृशीभवत् ।

---

अत्र समासोक्तिः वाच्या क्रियोत्प्रेक्षा च्छेकानुप्रासश्च ॥ ३५ ॥ दधद्द्विबाणीम् इति वाक्यार्थं प्रति श्वासानिलेत्यादिपदार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, नासायां तादृश-तिलपुष्पतूणत्वस्य सम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षा ॥ ३६ ॥

अस्या मुखेन्दोरधरः सुधाभू-बिम्बस्य युक्तः प्रतिबिम्ब एषः ।
तस्याथवा श्रीद्रुमभाजि देशे सम्भाव्यमानस्य तु विद्रुमे सा ॥ ३८ ॥
जानेऽतिरागादिदमेव बिम्बं बिम्बस्य तु व्यक्तमितोऽधरत्वम् ।
द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ ३९ ॥

वयः सन्धौ वर्त्तमानाया भैम्या अधरोष्ठावतितरां रक्तौ जाताविति भावः । अन्यापि दिनरजन्योः सन्धौ सति जायमाना सन्ध्या चन्द्रेण सह उदयते रक्ता च भवति ॥ ३७ ॥

अस्या इति । अस्या भैम्या मुखेन्दोर्मुखचन्द्रसम्बन्धी अधर ओष्ठप्रान्तभागः सुधाभू-बिम्बस्य अमृतभूम्यामुत्पन्नस्य बिम्बीफलस्य प्रतिबिम्बः सदृशो युक्तः, न तु यत्र कुत्राप्युत्पन्नस्य बिम्बस्य सदृशः, अधरस्य मुखचन्द्रसम्बन्धितया सुधाधारत्वात् । अतिरक्तेनापि बिम्बीफलेन सह भैम्या अधरस्य साम्यं नास्त्येव अमृतवत्त्वाभावात् । किन्तु यदि बिम्बीफलं सुधाभूमिजातं स्यात् तदा द्वयोरपि लौहित्यातिशयात् सुधाधारत्वाच्च तद्युक्तं भवेदित्यर्थः । अथ च सुधाबिम्ब-स्य चन्द्रमण्डलस्य प्रतिबिम्बः शोभा अस्या मुखेन्दोरधरः मुखचन्द्रप्रतिबिम्बापेक्षयातिहीनः । ननु तथापि भैम्यधरबिम्बफलयोः साम्यकल्पनमनुचितमेवेति पूर्वोक्तं दूषयति, अथवा तस्य बिम्बस्य श्रीः शोभा द्रुमभाजि वृक्षसहिते देशे विद्यत इति शेषः । तस्य द्रुमारूढलताफलत्वात्, अस्य तु अधरस्य पुनः सम्भाव्यमाना न तु तात्त्विकी तुल्यत्वात्मन्यमानापीत्यर्थः सा श्रीर्विद्रुमे रत्नविशेषे प्रवाले विद्यते, यद्यपि सुधाभूमिजत्वेन सुधाधारत्वाल्लौहित्यवत्त्वाच्च बिम्बीफलमेतदधरसाम्य लब्धुमर्हति तथापि निकृष्टदेशजत्वेन निकृष्टत्वात्तन्नार्हतीत्यर्थः । न हि निकृष्टापकृष्टयोः साम्यं युज्यते अथ च बिम्बीफलस्य शोभा द्रुमसहिते देशे वने विद्यते, अस्य तु विद्रुमे द्रुमरहिते देशे नगरे विद्यते, तस्मादारण्यकनागरिकयोर्न युज्यते साम्यकल्पनमिति भावः । सुधाया भूरवस्थिति-देशः तथा एषोऽधरो बिम्बस्य बिम्बीफलस्य प्रतिबिम्बः सदृशो युक्त इति व्याचक्षते मुखेन्दोरि-त्यत्र मुखेन्दाविति सप्तम्यन्तं क्वचित् पुस्तकेषु पाठः ॥ ३८ ॥

जाने इति । अतिरागादत्यन्तलौहित्याद्धेतोर्बिम्बम् अधरबिम्बमित्यादौ उपमानत्वेन प्रसिद्धं बिम्बपदप्रतिपाद्यम् इदमेव अग्रे दृश्यमानं भैमीरदच्छदनलक्षणमेव न तु बिम्बीफलम् इत्यहं जाने मन्ये, अथ च अतिरागादनुरागाधिक्यादेवं सम्भावयामि । बिम्बीफलस्य तादृग्लौहित्या-भावात् सर्वलोपमानस्याधिक्याच्च उपमानतया भैमीरदनच्छद एव बिम्बपदप्रतिपाद्य इत्यर्थः । तथा बिम्बस्य तु बिम्बीफलस्य पुनरितः पूर्वोक्ताद्धेतोः अधरत्वम् अधरपदप्रतिपाद्यत्वं व्यक्तं

अत्र बन्धूकबन्धूभवदिति आर्थी उपमा, मुखेन्दुनेति रूपकम्, रागेत्यर्थश्लेषात् सन्ध्यौष्ठर-क्तिम्नोरभेदाध्यवसायादतिशयोक्तिः, एतन्मूला च स्वं सन्ध्यामाहेति उत्प्रेक्षा, छेकानुप्रासश्चेति ॥ ३७ ॥ पाठान्तरे मुखेन्दौ इति रूपकं अधरतिरस्कारेण सुधाभूबिम्बस्य प्रतिबिम्बत्वाध्य-वसायात् अतिशयोक्तिः बिम्बादधरस्य उत्कर्षकथनात् व्यतिरेकः, अथवेत्यनेन पूर्वोक्तार्थस्याक्षेपा-दाक्षेपालङ्कारः ॥ ३८ ॥

मध्योपकण्ठावधरोष्ठभागौ भातः किमप्युच्छ्वसितौ यदस्याः।
तत्स्वप्नसम्भोगवितीर्णदन्त-दंशेन किंवा न मयापराद्धम् ॥ ४० ॥
विद्या विदर्भेन्द्रसुताधरोष्ठे नृत्यन्ति कत्यन्तरभेदभाजः।
इतीव रेखाभिरपश्रमस्ताः संख्यातवान् कौतुकवान्विधाता ॥ ४१ ॥
संभुज्यमानाद्य मया निशान्ते स्वप्नेऽनुभूता मधुराधरेयम्।
असीमलावण्यरदच्छदेत्थं कथम्मयैव प्रतिपद्यते वा ॥ ४२ ॥

रदनच्छदस्यैवातिलोहित्यात्, सर्वलोपमेयस्य न्यूनत्वाच्च विम्बीफलमेवाधरपदप्रतिपाद्यमित्यर्थः भैमीरदनच्छदस्यैवोपमानत्वं विम्बीफलस्यैवोपमेयत्वञ्च युक्तिमिति भावः। अथ च इतो भैमीरदनच्छदाद्बिम्बीफलस्य अधरत्वं निकृष्टत्वं व्यक्तम्। नन्वेवं सति लोके कथं संज्ञाविपर्यास इत्यत आह, द्वयोरुपमानोपमेययोरनयोर्दन्तच्छदबिम्बीफलयोर्विशेषावगमे तारतम्यज्ञाने अक्षमाणाम् असमर्थानां जनानां मूर्खाणां नाम्नि संज्ञायां भ्रमोऽभूत् विपर्यासो जातः। अतिलोहित्या-दधिके भमीरदनच्छदे उपमानवाचकविम्बपदं प्रयोक्तव्यम्, अल्पलोहित्यान्न्यूने विम्बीफले उपमेयवाचकमधरपदं प्रयोक्तव्यमिति विशेषापरिज्ञानान्मूर्खैरेव नाम्नो विपर्यासः कृत इत्यर्थः। विशेषावगमाक्षमाणां भेदग्रहासमर्थानां नाम्नि भ्रमो भ्रान्तिरभूदिति वा। 'अधरस्तु पुमानोष्ठे हीनेऽनूर्द्ध्वे च वाच्यवत्' मे ॥ ३९ ॥

मध्योपकण्ठाविति। अस्या भैम्या मध्योपकण्ठौ अधरोष्ठयोर्मध्यसमीपवर्तिनौ अधरोष्ठयो-र्भागौ अंशविशेषौ किमपि किञ्चित् उच्छ्वसितौ उच्छूनौ सन्तौ यद्यस्माद्भातः शोभेते, तत्तस्मा-द्धेतोः स्वप्ने यः सम्भोगस्तत्र वितीर्णो दत्तो दन्तदंशो दन्तक्षतं येन तादृशेन मया किंवा नापराद्धम् अपि तु तादृगपराधो मया वा कृतः स्यात्। अधरोष्ठयोर्मध्यसमीपवर्त्तिनोः पार्श्वदेशयोः किञ्चिदुच्छूनता सामुद्रिको गुणः, स एव स्वप्नसम्भोगदत्तदन्तक्षतत्वेन सम्भावितः। स्वप्नसम्भोगे वितीर्णेन दन्तदंशेन द्वारा अपराद्धमिति वा ॥ ४० ॥

विद्या इति। विदर्भेन्द्रसुताया भैम्या अधरोष्ठे अन्तरभेदभाजो विद्यात्वेनैकरूपा अपि काव्यत्वादिना अवान्तरभेदयुक्ताः कति विद्या नृत्यन्ति स्फुरन्ति जाग्रद्रूपेण वर्त्तन्ते इतीव एवं सन्दिहान इव लोकानां सन्देहनिवारणार्थमिव वा अपश्रमः श्रमशून्यो विधाता कौतुकवान् कुतूहली सन् रेखाभिः कृत्वा ता विद्याः संख्यातवान्। इयत्यो विद्या वर्त्तन्त इति गणितवान्। शोभाजनिका अधररेखा विद्यागणनार्थत्वेनोत्प्रेक्षिताः। अपश्रम इत्यनेन श्रमशून्यत्वादेव ब्रह्मा भैमीविद्याः संख्यातुं शक्तोऽभूदन्यथा न स्यादिति सूचितम् ॥ ४१ ॥

सम्भुज्यमानेति। अद्य निशान्ते रात्र्यवसाने स्वप्ने सम्भुज्यमाना कृतसम्भोगा इयं भैमी

---

"अत्रोत्प्रेक्षारूपककाव्यलिङ्गमलङ्कारः" सा। व्यतिरेकश्च ध्वन्यते ॥ ३९ ॥ "अत्रोत्प्रेक्षालङ्कारः" सा ॥ ४० ॥ अत्र अधरोष्ठस्य मध्यसमीपवर्त्तिनोः पार्श्वदेशयोः स्वाभाविको-च्छूनतायां स्वप्नसम्भोगजनितदन्तदंशनजन्यत्वोत्प्रेक्षा ॥ ४१ ॥

यदि प्रसादीकुरुते सुधांशो-रेषा सहस्रांशमपि स्मितस्य ।
तत् कौमुदीनां कुरुते तमेव निर्म्मञ्छ्य देवः सफलं स जन्म ॥ ४३ ॥
चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतन्तत्किरणाद्घनानाम् ।
पुरःसरस्रस्तपृषद्द्वितीयं रदावलिद्वन्द्वमिति बिन्दुवृन्दम् ॥ ४४ ॥

मया मधुराधरा सुन्दराधरा चुम्बनद्वारा अमृतायमानाधरा वा अनुभूता ज्ञाता, इत्थमेवमनिर्वचनीय-प्रकारेण असीमम् अवधिशून्यं लावण्यं सौन्दर्यं यत्र तादृशो रदच्छदोऽधरो यस्यास्तादृशीयं भैमी कथं वा कथञ्च मयैव प्रतिपद्यते ज्ञायते । स्वप्ने यादृशी सुन्दराधरानुभूता तादृश्येव जाग्रदवस्थायामपि कथं मयैवानुभूत इत्याश्चर्यमिदमित्यर्थः । स्वप्नदृष्टं हि प्रायेण न घटते घटते वा कालान्तरे किञ्चित्तद्विपरीतम् । निशान्तस्वप्नप्रदर्शनस्य शीघ्रफल-वान्निशान्तपदमुक्तं, तथाचोक्तम्, 'गोविसर्ज्जनवेलायां दृष्ट्वा सद्यः फलं लभेत्' इति । अथ च या मधुररसाधरा अनुभूता सा कथमधुना लवणरसाधरानुभूयते इति विरोधाभासः । मधुररसलवणरसयोः परस्परं विरोधात् ; तद्भञ्जनन्तु पूर्वव्याख्यानादेव ॥ ४२ ॥

एकश्लोकेन स्मितं वर्णयति । यदीति । एषा दमयन्ती स्मितस्य ईषद्धसनस्य सहस्रांशमपि सहस्रभागैकभागमपि यदि सुधांशोश्चन्द्रस्य प्रसादीकुरुते प्रसन्ना भूत्वा यदि चन्द्राय प्रसादत्वेन स्मितलेशमपि दद्यात् तत्तदा स देवः सुधांशुस्तमेव स्मितस्य सहस्रांशमेव निर्मञ्छ्य आदरातिशयात् नीराजितं कृत्वा कौमुदीभिः पूरयित्वा कौमुदीनां जन्म सफलं सार्थकं कुरुते कुर्यात्तस्य निर्मञ्छनसम्पर्केणापि कौमुदीनां जन्मसाफल्यं भवेदित्यर्थः । कौमुद्यो भैमीस्मितलेशस्यापि सदृश्यो नेति भावः ॥ ४३ ॥

त्रिभिः श्लोकैर्दन्तपंक्तिद्वयं वर्णयति । चन्द्रेति । तस्य चन्द्रस्य किरणात् घनानां निविडानां चन्द्रकिरणमपेक्ष्य गाढानां चन्द्राधिकं चन्द्रादप्युत्कृष्टम् एतन्मुखं भैमीमुखचन्द्रस्तस्य चन्द्रिकानां किरणानां दरायतम् ईषद्दीर्घं बिन्दुवृन्दं बिन्दुसमूहो रदावलिद्वन्द्वमिति दन्तश्रेणीद्वितयमिवाचरति । किम्भूतं पुरःसराणि अग्रसराणि स्रस्तानि निःसृतानि च यानि पृषन्ति बिन्दवस्तान्येव द्वितीयानि यस्य तादृशम्, अग्रनिःसृतबिन्दूनां सूक्ष्मत्वादधोदन्तत्वं ; पश्चादव्यवधानमेव निःसरतां बिन्दूनामीषदायतत्वादूर्ध्वदन्तत्वमित्यर्थः । नैतद्दन्तावलिद्वन्द्वं, किन्तु चन्द्रादप्यधिकस्य भैमीमुख-चन्द्रस्यामृताधिक्यात् पौर्वापर्येण निःसृतामृतबिन्दुवृन्दद्वितयमिति परमार्थः । यथा च वृष्टौ पटल-प्रान्तात् प्रथममेका बिन्दुपंक्तिः पतति, तदनु च द्वितीया ईषदायता पतित्वा तत्रैव लगति ; तथा बिन्दुपंक्तिद्वयमिति भैम्या दन्ता ईषदायता घनाः शुक्लाश्चेति भावः ॥ ४४ ॥

---

अत्र लावण्यशब्दे लवणरसविशिष्टत्वबोधात् विरोधः सौन्दर्य्यार्थत्वे पर्यवसानाच्च तत्-परिहारेण विरोधाभासः, छेकानुप्रासश्च ॥ ४२ ॥ अत्र यद्यर्थबलादाहृतया सम्भावनया कौमुदीनां स्मितांशत्वासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः ॥ ४३ ॥ "अत्रातिशयोक्तुरुपमारूपका-लङ्कारः" सा ॥ ४ ॥

सेयं ममैतद्विरहार्त्तिमूर्च्छा तमीविभातस्य विभाति सन्ध्या।
महेन्द्रकाष्ठागतरागकर्त्री द्विजैरमीभिः समुपास्यमाना ॥ ४५ ॥
राजौ द्विजानामिह राजदन्ताः सम्बिभ्रति श्रोत्रियविभ्रमं यत्।
उद्वेगरागादिमृजावदाता-श्चत्वार एते तदवैमि मुक्ताः ॥ ४६ ॥
शिरीषकोषादपि कोमलाया वेधा विधायाङ्गमशेषमस्याः।
प्रातःप्रकर्षैः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम् ॥ ४७ ॥

सेयमिति। सा इयं भैमी मम एतया सह विरहेण जनिता या अर्त्तिः पीडा तज्जनिता या मूर्च्छा सैव तमी रजनी तस्या विभातस्य प्रभातस्य सम्बन्धिनी सन्ध्या विभाति प्रकाशते इदानीं विरहावसानसमयत्वात्। किम्भूता महेन्द्रस्य काष्ठामुत्कर्षं गतः प्राप्तो यो रागोऽनुरागस्तस्य कर्त्री सम्पादयित्री, तथा अमीभिर्दृश्यमानैर्द्विजैर्दन्तैः समुपास्यमाना आश्रीयमाणा। प्रातःसन्ध्यापि महेन्द्रस्य काष्ठायां प्राच्यां दिशि गतो यो रागो लौहित्यं तस्य कर्त्री, द्विजैर्ब्राह्मणक्षत्रियवैश्यैरुपास्यमाना सेव्यमाना च भवति। 'रजनी यामिनी तमी' 'काष्ठोत्कर्षे स्थितौ दिशि' 'दन्तविप्राण्डजा द्विजाः' अ ॥ ४५ ॥

राजाविति॥ इह भैमीनिष्ठायां द्विजानां दन्तानां राजौ श्रेण्यां वर्त्तमाना एते चत्वारो राजदन्ताः सम्मुखीना दन्तश्रेष्ठाः। यद्यस्मात् श्रोत्रियाणां ब्राह्मणविशेषाणां विभ्रमं विलासं औज्ज्वल्यलक्षणं सम्बिभ्रति सम्यक् धारयन्ति, तत्तस्मादेते मुक्ता मौक्तिकान्येव इत्यवैमि तर्कयामि, औज्ज्वल्यसाम्यात् मुक्तातुल्यांस्तान् जानामीत्यर्थः। किम्भूताः उद्वेगरागो गुवाकजनितलौहित्यम् आदिर्यस्य एवम्भूतो यः खदिररागादिस्तस्य या मृजा मार्जनं क्षालनं तया अवदाता विशुद्धाः। भस्मीकृतेन उद्वेगेन या रागमृजा तया अवदाता वा। मुक्ता अपि भस्मीकृतेन गुवाकेन शुद्धाः क्रियन्ते, अथ च राजत् प्रकाशमानम् अन्तं स्वरूपं येषां तादृशानां द्विजानां ब्राह्मणानां पंक्तौ वर्त्तमानाः सन्तो ये श्रोत्रियविभ्रमं पंक्तिपावनत्व धारयन्ति। उद्वेगो दौर्मनस्यं रागो विषयासक्तिः आदिना अहङ्कारादयस्तेषां मृजया परित्यागेन निर्म्मलान्तःकरणाश्च भवन्ति ते जीवन्मुक्ता इति जनैः सम्भाव्यन्ते। 'चत्वारो राजदन्ताः स्युः सम्मुखीना रदास्तु ये' इति वलः, 'घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु फलमुद्वेगम्' अ ॥ ४६ ॥

चतुर्भिः श्लोकैर्वचनं वर्णयति। शिरीषेति। वेधा विधाता शिरीषकोषादपि शिरीषकुसुमाभ्यन्तरादपि कोमलायाः सुकुमाराङ्ग्या अस्या भैम्या अशेषं समस्तम् अङ्गं विधाय निर्माय

"अत्र मूर्च्छायां तमीत्वारोपः दमयन्त्यां सन्ध्यात्वारोपे निमित्तमिति परम्परितरूपकम् तच्च रागद्विजशब्दश्लेषमूलकम् इत्यङ्गाङ्गिभावेन सङ्करः। छेकानुप्रासश्च ।। ४५ ॥ अत्र द्विजादिपदश्लेषमूला मुक्ताब्राह्मणव्यवहारसमारोपलक्षणा समासोक्तिः, तदवैमि मुक्ताः इति दन्तचतुष्टये मुक्ताफलत्वसम्भावनारूपा उत्प्रेक्षा, श्रोत्रियविभ्रमस्य दन्तेऽसम्भवात् तत्सादृश्यबोधतः निदर्शना, छेकानुप्रासश्चेति ॥ ४६ ॥

प्रसूनबाणाद्वयवादिनी सा काचिद् द्विजेनोपनिपत्पिकेन ।
अस्याः किमास्यद्विजराजतो वा नाधीयते भैक्षभुजा तरुभ्यः ॥ ४८ ॥
पद्माङ्कसद्मानमवेक्ष्य लक्ष्मी-मेकस्य विष्णोः श्रयणात्सपत्नीम् ।
आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥ ४९ ॥

सुकुमारसर्गे मृदुतरवस्तुसृष्टौ प्राप्तः प्रकर्षो नैपुण्यं येन तादृशः सन् अस्या वाचि वचने मृदुत्वस्य सौकुमार्यस्य मुद्रां मर्यादां समापयत् समाप्तिं नीतवान् । सुकुमाराङ्गनिर्माणेन अभ्यासदार्ढ्या-दङ्गेभ्योऽप्यतिसुकुमारतां वचने स्थापयामासेत्यर्थः । अतिमधुरवचनेयमिति भावः । अन्योऽपि शिल्पी कुत्राप्यभ्यस्य अन्यत्र शिल्पं समापयति ॥ ४७ ॥

प्रसूनेति ॥ तरुभ्य आम्रादिवृक्षेभ्यो भैक्षभुजा फलपुष्पादिलक्षणभिक्षाकदम्बभोजिना द्विजेन पक्षिणा अथ च ब्राह्मणेन पिकेन कोकिलेन अस्या भैम्या आस्यद्विजराजतो मुखचन्द्रात् अथ च आस्यलक्षणात् ब्राह्मणश्रेष्ठात् प्रसूनबाणाद्वयवादिनी कामाद्वैतप्रतिपादिका काचिद्विलक्षणा सा भैमीवचनरूपा उपनिषत् रहस्यविशेषोऽथ च वेदान्तग्रन्थः किं वा नाधीयते न पठ्यते अपि तु पठ्यत एव । कोकिलस्वरादप्यतिमधुरो भैमीस्वरो झटिति कामाधिक्यमाविर्भावयतीति भावः । अन्येनापि भैक्षजीविना ब्राह्मणेन ब्राह्मणश्रेष्ठात् ब्रह्माद्वैतप्रतिपादिका उपनिषदधीयते । 'भवेदुप-निषद्धर्मे वेदान्ते च रहस्यपि' वि, 'भैक्षं भिक्षाकदम्बकम्' अ ॥ ४८ ॥

पद्माङ्केति । सरस्वती वाक् अथ च वागधिष्ठात्री, एकस्य विष्णोः श्रयणात् उभाभ्यामा-श्रयणात् सपत्नीं लक्ष्मीं पद्माङ्कसद्मानं पद्ममध्यनिवासाम् अवेक्ष्य दृष्ट्वा तस्या लक्ष्म्या विजिगीषया विशेषेण जेतुमिच्छया जिताब्ज पराजितपद्मम् अस्या भैम्या आस्येन्दुं मुखचन्द्रं किं भजते आश्रयति । सपत्नीगृहादुत्तमं गृहं भवत्विति मनसि कृत्वा अन्यत्र तदलब्ध्वा चन्द्रतुल्यत्वात् पद्मपराजयि भैमीमुखमेव किम् आश्रयतीत्यर्थः । चन्द्रोदये हि पद्मसङ्कोचात् चन्द्रोऽपि जिताब्जो भवति, अथवा जिताब्जं जितचन्द्रं भैम्या आस्येन्दुं भजते चन्द्रेण कमलं जितं, सोऽप्यनेन जित इति तदाश्रयणाल्लक्ष्मीः सरस्वत्या नितरां जितेत्यर्थः । अन्यापि सपत्नीगृहमुत्तमं विलोक्य ईर्ष्यया तद्गृहादुत्तमं स्वगृहं करोति सपत्नीत्वं विजिगीषायां हेतुः । 'अब्जो धन्वन्तरौ चन्द्रे शङ्खेऽब्जं पद्मशङ्खयोः' हे ॥ ४९ ॥

---

वाचि मृदुत्वमुद्रां किं समापयदिति सम्भावनप्रतीतेः प्रतीयमानोत्प्रेक्षा, "अतिशयोक्तिः" सा । वाचि एवेत्यन्यव्यावृत्तिप्रतीतेः आर्थी परिसंख्या च ॥ ४७ ॥ श्लेषघटितविशेषणेन कार्येण च पिके ब्राह्मणव्यवहारसमारोपात् समासोक्तिः, आस्यद्विजराजेत्यादि रूपकं, पिकस्वरात् दमयन्तीस्वरस्याधिक्यमिति व्यतिरेकश्च ॥ ४८ ॥ आस्येन्दुमितिरूपकम्, सरस्वती लक्ष्मीविजये-च्छया किं अस्या आस्येन्दुं भजते इति उत्प्रेक्षा, अब्जात् मुखस्य उत्कर्षकथनात् व्यतिरेकः, श्लेषमहिम्ना शोभावाण्योः लक्ष्मीसरस्वतीरूपसपत्नीव्यवहारसमारोपात् समासोक्तिश्च ॥ ४९ ॥

कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम्।
तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम्॥ ५० ॥
विलोकिता स्यान्मुखमुन्नमय्य किं वेधसेयं सुषमासमाप्तौ।
धृत्युद्भवा यच्चिबुके चकास्ति निम्नं मनागङ्गुलियन्त्रणेव॥ ५१ ॥
प्रियामुखीभूय सुखी सुधांशु-र्जयत्ययं राहुभयव्ययेन।
इमां दधाराधरबिम्बलीलां तस्यैव बालङ्करचक्रवालम्॥ ५२ ॥

कण्ठ इति। चतुरा वीणावादननिपुणा सरस्वती अस्या भैम्याः कण्ठे वसन्ती वासं कुर्वती सती यत् विपञ्चीं वीणां वादयते, तदेव विपञ्चीवादनमेव मृगाक्ष्या भैम्या मुखे वाग्भूय वाणीत्वेन परिणम्य श्रोतुर्जनस्य श्रुतौ श्रवणे सुधारसत्वं सुधावदास्वाद्यत्वं याति प्राप्नोति। नायं भैम्या मधुरालापः किन्तु कण्ठे निरन्तरं वसन्त्या सरस्वत्या वाद्यमानवीणारव एव, कथमन्यथा श्रूयमाणः श्रोतॄणाममृतास्वादवदानन्दं जनयतीत्यर्थः। अतिमधुरस्वरेयमिति भावः। वाग्भूयेति वाक्शब्दस्य च्विप्रत्ययान्तत्वेन 'च्व्यन्त' इति प्रादुरादित्वात् त्क्वा यप्॥ ५० ॥

एकश्लोकेन चिबुकं वर्णयति। विलोकितेति। सुषमासमाप्तौ मुखस्य परमशोभानिर्माणसमाप्तौ सत्यां वेधसा ब्रह्मणा इयं भैमी मुखम् उन्नमय्य कीदृशी शोभा जातेतिदिदृक्षया अस्या मुखं किञ्चिदूर्द्ध्वीकृत्य किं विलोकिता स्यात् दृष्टवदना भवेत्। कथमेवं त्वया ज्ञातमित्यत आह,—यद्यस्मात् मनागपिन्निम्नं अस्याश्चिबुके अधराधोभागे धृत्युद्भवा धारणजनिता अङ्गुलियन्त्रणेव अङ्गुल्या कृत्वा पीडनेव चकास्ति शोभते। अतिमार्दवादङ्गुलिधारणेनापि यन्निम्नत्वं जातं तदेव चिबुके वर्त्तते, नतूत्तमस्त्रीत्वात् स्वाभाविकश्चिह्नविशेष इत्यर्थः। अन्योऽपि शिल्पी किञ्चिन्निर्माय तन्मुखमूर्द्ध्वीकृत्य शोभां निरीक्षते, आमत्वाच्चाङ्गुलिनिवेशेन च तत्र निम्नत्वं जायते॥ ५१ ॥

पुनरपि नवभिः श्लोकैः सावयवं मुखं वर्णयति। प्रियेति। अयं सुधांशुश्चन्द्रः प्रियाया भैम्या मुखीभूय वदनरूपेण परिणम्य राहोर्यद्भयं ग्रासाशङ्का तस्य व्ययोऽपगमस्तेन हेतुना सुखी सन् जयति सर्वोत्कर्षेण वर्त्तते,चन्द्र एवास्या मुखमित्यर्थः। तर्हि अधरलौहित्यं कथमित्यत आह,तस्यैव चन्द्रस्य बालम् उदयसमयभावि करचक्रवालं किरणमण्डलं कर्तृ इमां प्रत्यक्षविषयाम् अधरबिम्बलीलां लौहित्यलक्षणम् ओष्ठाधरविलासं दधार धारयति स्म। उदितमात्रस्य चन्द्रस्य लोहितं किरणमण्डलमेव ओष्ठाधररूपेण परिणतमित्यर्थः। बालेन्दुकिरणा लोहिता भवन्तीत्येवमुक्तम्, अथ च बालो लीलां क्रीडां धारयत्येव। 'चक्रवालन्तु मण्डलम्' अ॥ ५२ ॥

"अत्रातिशयोक्तिरलंकारः" सा। छेकानुप्रासश्च॥ ० ॥ विलोकिता स्यात् किम्, अङ्गुलियन्त्रणेवेति उत्प्रेक्षाद्वयं, चिबुके उत्प्रेक्षिताङ्गुलिचिह्नलिङ्गेन मुखोन्नमनरूपसाध्यस्यानुमानादनुमानालङ्कारः। अनुप्रासश्च॥ ५१ ॥ सुधांशो भैमीमुखभवनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, प्रसिद्धोपमानात् चन्द्रात् मुखस्योत्कर्षकथनात् व्यतिरेकः, बालचन्द्रस्य अधरलीलाधारणासम्भवात् सादृश्यप्रतीतेः निदर्शना, छेकानुप्रासश्च॥ ५२ ॥

अस्या मुखस्यास्तु न पूर्णिमास्यं पूर्णस्य जित्वा महिमा हिमांशुम् ।
भ्रूलक्ष्मखण्डं दधदर्द्धमिन्दु-र्भालस्तृतीयः खलु यस्य भागः ॥ ५३ ॥
व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि ।
सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावतएव सेवाम् ॥ ५४ ॥
दिवारजन्योरविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम् ।
आस्ये यदास्या न तदा तयोः श्री-रेकश्रियेदन्तु कदा न कान्तम् ॥ ५५ ॥

अस्या इति । पूर्णिमाया आस्यं मुखमिव हिमांशुं पूर्णचन्द्रं जित्वा स्थितस्य पूर्णस्य सर्वावयवपरिपूर्णस्य अथ च वर्त्तुलस्य अस्या भैम्या मुखस्य महिमा महत्त्वकीर्तिरथ च चन्द्रापेक्षया अधिकपरिमाणवत्त्वं नास्तु किं न तिष्ठतु अपि तु अस्त्येवेत्यर्थः । कुतो महिमेत्यत आह खलु यस्मात् यस्य मुखस्य तृतीयो भागोऽंशो भालो ललाटम् अर्द्धं खण्डम् इन्दुः अर्द्धखण्डरूपश्चन्द्रः । किम्भूत इन्दुर्भ्रूवावेव लक्ष्म कलङ्कं दधत् धारयन् । यस्य तृतीयो भागो यस्यार्द्धं तत्ततोऽधिकं भवत्येव, भैम्या भालोऽर्द्धचन्द्रतुल्यस्तदधोभागः पूर्णचन्द्रतुल्य इति भावः । पौर्णमास्यमित्यपि क्वचित् पाठः । पूर्णिमास्यं हिमांशुं जित्वा स्थितस्यास्या मुखस्य महिमा नास्तु, हीनजयस्य महत्त्वप्रयोजकत्वाभावात् : चन्द्रस्य हीनत्वमेव ज्ञापयति भ्रूलक्ष्मेत्यादीत्यपि व्याचक्षते । भ्रूरूपं लक्ष्मखण्डं कलङ्कखण्डं दधत् धारयन् यस्य तृतीयो भागो भालोऽर्द्धमिन्दुरर्द्धचन्द्र इति केचित् ॥ ५३ ॥

व्यधत्तेति । धाता ब्रह्मा अखिलेऽपि समस्तेऽपि अम्भोजकुले पद्मवंशे अस्या भैम्या मुखपद्मं सम्राजं मण्डलेश्वरम् अथ च पद्मसमूहमध्ये सम्यक् राजते शोभत इति तादृशं व्यधत्त कृतवान् । अतएव हेतोर्नेत्राभिधेयौ नेत्रनामकौ सरोजराजौ पद्मानां राजानौ अथ च तेभ्यः श्रेष्ठे नेत्रे अदसीयाम् एतदीयां भैमीमुखपद्मरूपसम्राट्सम्बन्धिनीं सेवाम् अनुवृत्तिं सृजतः कुरुतः । यद्यस्य सरोजसम्राट्त्वं न स्यात्, तर्हि नेत्रसंज्ञकाभ्यां सरोजराजाभ्यां कथं सेवा क्रियत इत्यन्यथानुपपत्त्यास्य सम्राट्त्वं सिद्धमित्यर्थः । अन्योऽपि सम्राट् राजभिः सेव्यते । भैम्या नयने पद्मेभ्य उत्कृष्टे, मुखन्त्वत्युत्कृष्टमिति भावः । 'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः । शास्ति यश्चाज्ञया राज्ञः स सम्राट्' अ ॥ ५४ ॥

दिवेति । दिवारजन्योर्दिनरात्र्योर्यथाक्रमं रविसोमभीते चन्द्राम्बुजे । दिवसे सूर्यभीतश्चन्द्रः रात्रौ चन्द्रभीतं पद्ममित्युभे यदा अस्या भैम्या आस्ये मुखे स्वलक्ष्मीं निजशोभां निक्षिपतः स्थापयतः अथ च पुनर्ग्रहीतुं न्यासीकुरुतः, तदा तयोश्चन्द्राम्बुजयोः श्रीः शोभा न भवति । इदन्तु भैम्या मुखं पुनरेकश्रिया चन्द्रपद्मयोरन्यतरस्य शोभया दिवसे चन्द्रशोभया रात्रौ

---

"अत्र प्रतीपातिशयोक्त्यलंकारौ" सा । पूर्णिमास्यं हिमांशुमिति भ्रूलक्ष्मखण्डमितिच रूपकद्वयम् ॥ ५३ ॥ अत्र श्लेषमहिम्ना सम्राट् शब्दाभिधेयातिशयराजमानत्वे मण्डलाधिपतित्वरूपसम्राट्त्वाभेदाध्यवसायादतिशयोक्तिः, मुखे श्लेषवशात् राजसेवितसम्राड्व्यवहारारोपात् समासोक्तिः ॥ ५४ ॥

अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात्।
अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित्॥ ५६॥
अर्काय पत्ये खलु तिष्ठमाना भृङ्गैर्मितामक्षिभिरम्बुकेलौ।
भैमीमुखस्य श्रियमम्बुजिन्यो याचन्ति विस्तारितपद्महस्ताः॥ ५७॥

पद्मशोभया चेत्यर्थः। कदा कस्मिन् समये दिवसे रात्रौ च न कान्तं न सशोभम् अपि तु सर्वदैव। चन्द्रस्य शोभा रात्रावेव न तु दिने, पद्मस्य शोभा दिन एव न तु रात्रौ; भैमीमुखस्य तु दिवा रात्रौ च शोभा अक्षुण्णेत्यर्थः। अन्योऽपि धनी कुतश्चिद्भीतः सन् स्वधनं कस्मिंश्चिन्महिमशालिनि जने विन्यस्यति भयकारणापगमे च पुनस्तस्माद् गृह्णाति। दिवसे चन्द्रस्य सूर्यकिरणेनाभिभूतत्वात् रात्रौ पद्मस्य सङ्कोचात् मुखस्य च सर्वदा प्रफुल्लत्वादेवमुक्तम्॥ ५५॥

अस्या इति। खलूत्प्रेक्षे पद्मचन्द्रौ यथाक्रमं तातात् जनकात् जलाच्च मित्रात् बन्धोर्मुकुराद्दर्पणाच्च अभ्यर्थ्य भो जनक मित्र वा भवत्प्रतिबिम्बिता भैमीमुखशोभा मह्यं क्षणं दीयतां, पुनरपीमां प्रतिदास्यामीत्यादिना याचित्वा, अस्या भैम्या मुखश्रीप्रतिबिम्बमेव मुखशोभायाः प्रतिबिम्बलक्षणं याचितकं याच्ञाप्राप्तं विभूषणं कदाचित् दिने रात्रौ च धत्तो धारयतः। यदा जले भैमीमुखस्य प्रतिबिम्बो भवति, तदा पद्मं जनकत्वात् तातं जलं तं याचित्वा दिवसे शोभते। एवं दर्पणे च यदा तस्य प्रतिबिम्बो भवति, तदा चन्द्रः स्वच्छत्वादिसाम्यात् मित्रं दर्पणं तं याचित्वा रात्रौ शोभत इत्यर्थः। अन्योऽपि पितृमित्राभ्यां याचितकं गृहीत्वा शोभते। याचितकभूषणमपि कदाचिद्धार्यते न तु सर्वदा, इति कदाचिदित्युक्तम्। भैमीमुखं पद्मचन्द्रापेक्षयाप्यतिरमणीयमिति भावः। चद्वयमुभयप्राधान्यसूचकम्। 'दर्पणे मुकुरादर्शौ' 'याच्ञयाप्तं याचितकम्' अ॥ ५६॥

अर्कायेति। खलूत्प्रेक्षे पत्ये स्वामिने अर्काय सूर्याय तिष्ठमानाः स्वाभिप्रायं व्यञ्जयन्त्योऽम्बुजिन्यः पद्मिन्यः विस्तारिताः प्रसारिताः पद्मान्येव हस्ताः याभिस्तादृश्यः सत्यः अम्बुकेलौ जलविहारे भृङ्गैर्भ्रमररूपैरक्षिभिश्चक्षुर्भिर्मितां ज्ञातां भैमीमुखस्य श्रियं याचन्ति भैमीमुखश्रीरस्मभ्यं दीयतामिति स्वपतिं सूर्यं प्रार्थयन्ते। कमलभैमीवदनयोर्महदन्तरमिति भावः। अन्याप्यन्यदीयं भूषणं चक्षुषा दृष्ट्वा एवम्विधं त्वयापि मह्यं दीयतामिति हस्तं प्रसार्य स्वपतिं याचते।

---

अत्र दिवारजन्यो रविसोमभीते चन्द्राम्बुजे इति यथासंख्यं, निक्षेपासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, चन्द्राम्बुजयोः मुखे स्वशोभादानादानाभ्यां धनिनो धनन्यासादानव्यवहारप्रतीतेः समासोक्तिः, चन्द्राम्बुजापेक्षया मुखस्य सर्वदा कान्तत्वरूपाधिक्यप्रतीतेः व्यतिरेकः॥ ५५॥ अत्र पद्मचन्द्रयोः क्रमेण जलात् मुकुराच्च अभ्यर्थनान्वयात् यथासंख्यम्, अभ्यर्थ्य धत्तः खल्विति अभ्यर्थनापूर्वकधारणसम्भावनया उत्प्रेक्षा, तथाविधयाचकव्यवहारसमारोपात् समासोक्तिः पूर्ववत् मुखस्य पद्मचन्द्राभ्यामुपमानाभ्यामुत्कर्षबोधात्, व्यतिरेकः॥ ५६॥

अस्या मुखेनैव विजित्य नित्य-स्पर्द्धी मिलत्कुङ्कुमरोषभासा।
प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठत्परिवेशपाशः॥ ५८॥
विधोर्विधिर्विम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि।
अभङ्गुरश्रीकममुं किमस्या मुखेन्दुमस्थापयदेकशेषम्॥ ५९॥

अर्कोय पन्थे तिष्ठमाना हृद्गतं व्यञ्जयितुकामा अम्बुजिन्यो भैमीमुखस्य श्रियं याचन्ति, अस्मत्पतिः सूर्योऽधुना समागमिष्यतीति त्वन्मुखशोभया वयमपि रुचिरा भवाम इति भैमीमुखशोभां भैमीं प्रार्थयन्त इति वा। अर्कायेति 'श्लाघाद्येर्यज्ञीप्से'ति सम्प्रदानत्वं तिष्ठमानेति 'स्थोहृद्गतञ्जनादा-वि'त्यात्मनेपदम्॥ ५७॥

अस्या इति। नित्यस्पर्द्धी भैमीमुखेन सह सर्वदा स्पर्द्धमानश्चन्द्रः खलु निश्चितम् अस्या भैम्या मुखेनैव विजित्य पराभूय प्रसह्य हठात् नह्यमानो बध्यमान एव स्यात् भवेत्। यतोऽयम-द्यापि तिष्ठन् परिवेशः परिधिरेव पाशो बन्धनरज्जुर्यस्य तादृशः, किम्भूतेन मुखेन मिलल्लग्नं यत् कुङ्कुम तदेव रोषभाः क्रोधलौहित्यं यत्र तादृशेन भैमीमुखेन सह स्पर्द्धया सापराधश्चन्द्रो मुखेनैव क्रोधलोहितेन जित्वा परिवेशमिषात् पाशेन बद्ध इत्यर्थः। चन्द्रो भैमीमुखसदृशो न भवतीति भावः। अन्योऽपि स्पर्द्धमानं रोषारुणो भूत्वा विजित्य झटिति बध्नाति, सोऽपि बद्ध एव चिरं तिष्ठति। खलूत्प्रेक्षायां वा॥ ५८॥

विधोरिति। विधिर्विधाता मासि मासि प्रतिमासं कुहूरात्रिषु नष्टेन्दुकलामावस्यारात्रिषु विधोश्चन्द्रस्य विम्बशतानि मण्डलशतानि लोपं लोपं विलुप्य विलुप्य अभङ्गुरा अविनश्वरी श्रीः शोभा यस्य तादृशम् अस्या भैम्या अमुं दृश्यमानं मुखेन्दुं मुखचन्द्रम् एकश्चासौ शेषोऽवशिष्टश्चेति तादृशं किम् अस्थापयत् स्थापितवान्। चन्द्रमण्डलस्य क्षयित्वान्मुखचन्द्रस्य चाविनश्वरशोभ-त्वात्तत्कार्यकारित्वाच्च विधाता बुद्धिपूर्वकमेव चन्द्रं विलुप्य अद्वितीयं भैमीमुखचन्द्रं स्थापया-मासेत्यर्थः। कुह्वां चन्द्रस्य सर्वथाऽदर्शनादियमुत्प्रेक्षा। अन्योऽपि शिल्पी स्वनिर्मितानां बहूनां मध्ये अपकृष्टानि विनाश्य उत्कृष्टमेकं स्थापयति। क्षयित्वाच्चन्द्रो भैमीमुखसदृशो नेति भावः। लोपंलोपमिति आभीक्ष्णे क्त्वा णमु 'णमन्तमभिहितेऽप्याभीक्ष्ण' इति द्विरुक्तिः॥ ५९॥

---

अत्र भृङ्गैरक्षिभिरिति व्यस्तं रूपकं, विस्तारितपद्महस्तेति समस्तरूपकम्, भैमीं भैमीमुखं शोभां याचन्ते खल्विति उत्प्रेक्षा, प्रकृताम्बुजिनीषु अन्ययाचकस्त्रीव्यवहारप्रतीतेः समासोक्तिः। व्यतिरेकः व्यङ्गः॥ ५७॥ मिलत्कुङ्कुमरोषभासेति परिवेषपाशेति च रूपकं, नह्यमानः खल्विति उत्प्रेक्षा, भैमीमुखे प्रस्तुते नित्यस्पर्द्धिवैरिं प्रति क्रुद्धस्य प्रबलस्य तत्पराजयबन्धनव्यवहाररूपा-प्रस्तुतप्रतीतेः समासोक्तिः ततश्च मुखस्य चन्द्रादुत्कर्षबोधाद् व्यतिरेको व्यज्यते॥ ५८॥ अत्र अभङ्गुरश्रीकं मुखेन्दुमित्यधिकारूढवैशिष्ट्यरूपकं, अमुमित्यनेन इन्दोः परामर्शे मुखस्यनिगरणेन अभङ्गुरश्रीचन्द्राभेदाध्यवसाये अतिशयोक्तिरित्यनयोः सन्देहसङ्करः, एकशेषमस्थापयत् किमि-त्युत्प्रेक्षा, चन्द्रान्मुखस्योत्कर्षप्रतीतेः व्यतिरेकध्वनिः, शिल्पिव्यवहारप्रतीतेः समासोक्तिः॥ ५९॥

कपोलपत्रान्मकरात् सकेतु-र्भ्रूभ्यां जिगीषुर्द्धनुषा जगन्ति।
इहावलम्ब्यास्ति रतिं मनोभू-रज्यद्वयस्यो मधुनाधरेण ॥ ६० ॥
वियोगबाष्पाञ्चितनेत्रपद्म-च्छद्मार्पितोत्सर्गपयःप्रसूनौ।
कर्णौ किमस्या रतितत्पतिभ्यां निवेद्यपूपौ विधिशिल्पमीदृक् ॥ ६१ ॥
इहाविशद्येन पथातिवक्रः शास्त्रौघनिष्यन्दरसप्रवाहः।
सोऽस्याः श्रवःपत्रयुगे प्रणाली-लेखेव धावत्यभिकर्णकूपम् ॥ ६२ ॥

कपोलेति। मनोभूः कामो रतिं स्वप्रियाम् अथ च अनुरागम् अवलम्ब्य इह भैमीमुखे अस्ति वसति। किम्भूतः कपोलपत्रात् कपोललिखितपत्रवल्लिरूपात् मकरात् जलजन्तुविशेषात् सकेतुः सध्वजः, तथा भ्रूभ्यां भ्रूयुगललक्षणेन धनुषा जगन्ति जिगीषुर्जेतुमिच्छुः, तथा मधुना वसन्तरूपेण अथ च मधुवदास्वाद्येन अधरेण दन्तच्छदेन रज्यन् अनुरक्तीभवन् अथ च लोहितीभवन् वयस्यो मित्रं यस्य तादृशः। भैमीमुखे सकलकामचिह्नदर्शनादत्र सत्यमेव सपरिवारः कामो वसतीत्यनुमीयत इत्यर्थः। भैमीमुखमवलोकनमात्रेणैव सम्पूर्णकाममाविर्भावयतीति भावः। उप्रत्ययस्य त्वादित्वान्न जगन्तीत्यत्र 'कर्त्तरि' त्यादिना षष्ठी। रज्यदिति 'कुषिरञ्जोर्य-भित्यं परस्मै वेति परस्मैपदं शतृ यक्च ॥ ६० ॥

अथ श्लोकपञ्चकेन भैम्याः कर्णौ वर्णयति। वियोगेति। अस्या भैम्याः कर्णौ रतितत्पतिभ्यां कामपत्न्यै कामाय च निवेद्यपूपौ निवेदनीयपिष्टके ईदृक् एवम्विधं किं विधिशिल्पं ब्रह्मणो निर्माणं, रतिं कामञ्चोद्दिश्य निवेदनार्थं किमेतौ ब्रह्मणा निर्मितावित्यर्थः। निवेदनीयसाधर्म्यं घटयति,—किम्भूतौ वियोगबाष्पैर्विरहजनिताश्रुभिरञ्चिते ये नेत्रपद्मे नयनपङ्कजे तयोश्छद्मना व्याजेन अर्पिते समीपे दत्ते उत्सर्गाय दानार्थं पयःप्रसूने पद्मे ययोस्तादृशौ, भैमीनेत्रयोः कर्णान्त-स्पर्शित्वात्। नैवेद्यवस्तु हि जलाभ्युक्षितपुष्पयुक्तं कृत्वा देवाय निवेद्यते। केचित् पूपा अपि कर्णाकारा क्रियन्ते। भैम्याः कर्णदर्शनादपि कामोत्पत्तिर्जायत इति भावः। 'पूपोऽपूपः पिष्टकं स्यात्' अ ॥ ६१ ॥

इहेति। अतिवक्रो वैषम्यादतिकुटिलो दुर्बोधोऽथ च अनृजुः शास्त्राणामोघस्य समूहस्य निष्यन्दः

---

अत्र रतिशब्दवाच्ययोरनुरागरतिदेव्योः मधुशब्दवाच्ययोः मधुररसवसन्तयोश्च भेदेऽपि रतिमधुशब्दश्लेषमहिम्नाभेदाध्यवसायाद् अतिशयोक्तिद्वयं, भ्रूभ्यां धनुषेति व्यस्तरूपकं, इह दमयन्त्यां मनोभूरस्ति किमिति सम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षेति एषामङ्गाङ्गिभावेन सङ्करः। तेन च भैमीमुखं सर्वथा कामोद्दीपकमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६० ॥

नेत्रपद्मेति समासगतलुप्तोपमा, नतु रूपकं उपमेयस्य नेत्रस्यैव वियोगबाष्पाञ्चितत्वान्वययोग्य-त्वात्, पद्मच्छद्मेति अपह्नुतिः, कर्णौ निवेद्यपूपौ इति रूपकम्, ईदृक् किं ब्रह्मशिल्पमिति सम्भा-वनया वाच्योत्प्रेक्षेत्येतेषां सङ्करः। छेकानुप्रासश्च। ततश्च भैम्या सजलनयनयुगलस्पर्शिकर्ण-युगलं सरतिं काममुद्दीपयतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६१ ॥

अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्रतुरर्द्धमर्द्धम् ।
कर्णान्तरुत्कीर्णगभीररेखः किन्तस्य संख्यैव नवा नवाङ्कः ॥ ६३ ॥
मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण ।
एकाकिपाशं वरुणं विजिग्ये ऽनङ्गीकृतायासततो रतीशः ॥ ६४ ॥

सारभाग एव रसप्रवाहो येन पथा इह भैमीकर्णकूपे अविशत् प्रविष्टवान्, स पन्था अस्या भैम्याः श्रवःपत्रयुगे कर्णपत्रावलिद्वये प्रणाल्या जलगमनमार्गस्य लेखेव अभिकर्णकूपं कर्णकूपमभिमुखीकृत्य धावति गच्छति । नेयं कर्णरन्ध्रपर्यन्तवर्त्तिनी कर्णपत्रावलिस्थिता वक्ररेखा, किन्तु कर्णकूपं प्रविष्टवतः शास्त्रौघनिष्यन्दरसप्रवाहस्य वक्रप्रणालीचिह्नमित्यर्थः । भैम्याः कर्णौ वक्ररेखा-युक्तपत्रावलिशोभिताविति भावः । सोऽस्या इत्यत्र सास्या इति पाठो न मनोरमः ॥ ६२ ॥

अस्या इति । अस्या भैम्याः श्रुती कर्णौ अष्टादशविद्याः संविभज्य द्विधा कृत्वा यत् अर्द्धम् अर्द्धं प्रत्येकं दध्रतुर्धारयामासतुः । कर्णान्तः कर्णमध्ये उत्कीर्णा उद्गता गभीरा रेखा यस्य तादृशो नवाङ्कः नवसंख्याद्योतकोऽङ्कः किं तस्यैव धृतार्द्धस्यैव संख्या न वा, अपि तु तस्यैव संख्या-बोधकोऽङ्क इत्यर्थः । तस्य नवा अपूर्वाश्चर्यरूपा संख्यैव किम् इति वा सम्भावना । नव-संख्यका विद्या एकः कर्णो धारयति, अपरोऽपि तथेति द्योतनार्थं ब्रह्मणैव किं भैम्याः कर्णद्वयं नव-संख्याव्यञ्जकेनाङ्कविशेषेण प्रत्येकं चिह्नितमित्यर्थः । भैम्याः कर्णाभ्यन्तररेखा नवाङ्कतुल्यत्वा-दतिसुलक्षणेति भावः । अत्राष्टादशविद्याः पूर्वोक्ता अङ्गवेदादयः । द्विजातिस्त्रीणां वेदाद्यध्य-यनादिनिषेधेऽपि तेषामर्थश्रवणं न दोषायेति तथोक्तम् । काव्यकलादयोऽन्या एव वाष्टादश-विद्याः ॥ ६३ ॥

मन्य इति । रतीशः कामोऽमुना एतदीयेन कर्णलतामयेन कर्णवल्लीस्वरूपेण छिदुरेतरेण दृढतरेण पाशद्वयेन पाशरूपशस्त्रद्वयेन अनङ्गीकृता अस्वीकृता आयासततिः परिश्रमाधिक्यं येन तादृशः सन् एक एव एकाकी पाशो बन्धनशस्त्रविशेषो यस्य तादृशं वरुणं विजिग्ये विजितवान् इत्यहं मन्ये सम्भावयामि । पाशद्वयायुधो ह्येकपाशायुधमनायासेन जयत्येव । भैम्याः कर्णयुगं दृष्ट्वा वरुणादयः सर्वेऽपि कामवशा भवन्तीति भावः ॥ ६४ ॥

वक्रशब्दश्लेषेण दुर्बोधानृजुत्वयोरभेदाध्यवसायाद् अतिशयोक्तिः, शास्त्रौघनिष्यन्दे सुधा-प्रवाहत्वस्य कर्णयोश्च कूपत्वस्यारोपाद् रूपकद्वय, कर्णरन्ध्रपर्यन्तवर्त्तिनीं प्रकृतां वक्ररेखां प्रतिषिध्याप्रकृतशास्त्रौघनिष्यन्दरसप्रवाहस्य वक्रप्रणालीत्वस्य स्थापनादपह्नुतिः, धावति किमिति सम्भावनाप्रतीतेरुत्प्रेक्षा ॥ ६२ ॥ अत्रोत्प्रेक्षाच्छेकानुप्रासौ सा ॥ ६३ ॥ कर्णलतामयेनेति प्रकृतकर्णलतां प्रतिषिध्य पाशद्वयस्थापनात् अपह्नुतिः, मन्ये शब्दप्रयोगात् वाच्या कामस्य वरुणजयोत्प्रेक्षा, उक्तं च दर्पणे 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः उत्प्रेक्षावाचकाः शब्दा इवशब्दोऽपि तादृशः' इति । अत्युद्दीपक दमयन्त्याः कर्णलताद्वयं दृष्ट्वा देवो वरुणः कामाधीनतां गत इति वस्तु उक्तयोत्प्रेक्षया व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६४ ॥

आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि।
तच्चापयोः कर्णलते भ्रुवोर्द्वे वंशत्वगंशौ चिपिटे किमस्याः॥ ६५॥
ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम्।
आलिङ्गचतामप्यवलम्बमाना सरूपताभागखिलोर्द्धकाया॥ ६६॥

आत्मैवेति। स्मरोऽपि कामोऽपि चतुर्दोश्चतुर्भुज उचितो युक्तः, यतश्चतुर्भुजस्य तातस्य पितुर्नारायणस्य आत्मैव स्वरूपमेव जातः। 'आत्मा वै पुत्रनामासि' इति, 'यो यादृशाद्वै जायते स तादृशः' इति च श्रुतेः। तस्माच्चतुर्भुजस्य श्रीकृष्णस्य पुत्रः कन्दर्पश्चतुर्भुज एवेति सिद्धम्। नन्वेवं चतुर्भुजस्य जिगीषोर्द्वे धनुषी द्वे च मौर्व्यौ भवितुं युक्ते, अस्य तु न पश्यामीत्यत आह, अस्या भैम्याः भ्रुवोर्भ्रूलक्षणयोस्तस्य चतुर्भुजस्य कामस्य चापयोर्द्वयोर्धनुषोश्चिपिटे विस्तृते अस्या द्वे कर्णलत एव वंशत्वगंशौ किं वंशत्वग्भागनिर्मितमौर्व्यौ किम्। भैम्या भ्रुवौ कामधनुषी कर्णौ च मौर्व्यावित्यर्थः। वंशपृष्ठमयी च दृढतरा मौर्वी क्रियते। निर्व्यापारस्य धनुषोऽवतारिता मौर्वी सङ्कुचिता कोणे तिष्ठति। कर्णलते अपि भ्रूधनुषो कोणे विद्येते, भैमीकर्णलता कामवशीकरणहेतुरिति भावः। 'चिपिटः खाद्यभेदे ना त्रिषु पिट्टिकविस्तृते' मे॥ ६५॥

एकश्लोकेन ग्रीवां वर्णयति। ग्रीवेति। सा प्रसिद्धा या पूर्वं श्रुता सा वा इयं दृश्यमाना भैम्या ग्रीवा अद्भुतैव आश्चर्यरूपैव असाधारणसौन्दर्यशालित्वात्। अद्भुतत्वमेव विशेषणैर्दर्शयति, किम्भूता अवटुना घाटया शोभिता अलंकृता, अपिः समुच्चये, तथा माणवकेन अर्द्धहाराख्यहारविशेषेण प्रसाधिता शोभिता, अतएव आलिङ्गचताम् आलिङ्गनयोग्यताम् अवलम्बमाना आश्रयन्ती अत्राप्यपिः समुच्चये, तथा सरूपतां रूपवत्तां सौन्दर्यं भजत इति तादृशोऽखिलः समस्त ऊर्द्धकायः शरीरोर्द्धदेशो यस्यास्तादृशी अतएवाद्भुतैव भैम्या ग्रीवेत्यर्थः। अथ च वटुरुपनीतमात्रद्विजः माणवकोऽपि स एव अवटुना वटुभिन्नेन शोभितापि माणवकेन वटुनैव शोभितेति, तथा या आलिङ्गचतां वाद्यविशेषताम् अवलम्बमानापि सरूपताभाक् समानरूपतां भजमानोऽखिल ऊर्द्धको वाद्यविशेषो यस्यास्तादृशी भवतीति च विरोधाभासः। आलिङ्गचवाद्यभेदस्य हि ऊर्द्धकवाद्यभेदेन साम्यं विरुद्धमेव। 'हरीतक्याकृतिस्त्वङ्को यवमध्यस्तथोर्द्धकः। आलिङ्गचश्चैव गोपुच्छसमानः परिकीर्त्तित' इति पृथक्पृथक्लक्षणेन वैषम्यावगमात्। 'अवटुर्घाटाकृकाटिका' 'अर्द्धहारो माणवक' 'मृदङ्गा मुरजाभेदास्त्वङ्क्यालिङ्गचोर्द्धकास्त्रयः' अ। 'ब्रह्मचारी वटुः समौ' 'हारभेदे माणवको बाले कुपुरुषे वटौ' वि॥ ६६॥

"अत्र काव्यलिङ्गोत्प्रेक्षालङ्कारौ" सा॥ ६५॥ "अत्र विरोधाभासोलङ्कारः" सा। ऊर्द्ध्वशब्दो दीर्घादिः सवकारो निर्वकारश्च। यथाच उपरि धन्यते इति कृतनिरुक्तिरूर्द्ध्वशब्दो वकारवानिति सुभूत्यादयः। मृदङ्गभेदोर्द्धकशब्दस्य टीकायां भरतेनोक्तम्, –'अत्र ऊर्द्धशब्दः निर्वकारः, तदुक्तं वर्णदेशनायां, उज्जिहीते उद्गच्छति उदो हाङो ड प्रत्ययः, आदिवर्णस्य ऊरादेशः इति। 'ऊर्द्ध्वं शब्दो मकारान्तोऽव्ययो दीर्घादिर्वकारवान् तथादन्तोऽनव्ययोऽपीति' जयादित्यादयः॥६६॥

कवित्वगानप्रियवादसत्या-न्यस्या विधाता व्यधिताधिकण्ठम् ।
रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥ ६७ ॥
बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् ।
उच्चैस्तु तच्चित्रममुष्य भग्न-स्यालोक्यते निर्व्यथनं यदन्तः ॥ ६८ ॥
अजीयतावर्त्तशुभंयुनाभ्या दोर्भ्यां मृणालं किमु कोमलाभ्याम् ।
निःसूत्रमास्ते घनपङ्कमूर्तसु मूर्त्तासु नाकीर्त्तिषु तन्निमग्नम् ॥ ६९ ॥

एकश्लोकेन कण्ठं वर्णयति । कवित्वेति । विधाता अस्या भैम्या अधिकण्ठं कण्ठे कवित्वं काव्यं गानं गीतिः प्रियवादो मधुरवचनं सत्यं तथ्यम् एतानि चत्वारि व्यधित स्थापितवान् । ननु चतुर्णां वासे किं विनिगमकमित्यत आह,— सोऽयं विधातैव कण्ठे रेखात्रयन्यासस्य मिषाद्व्याजात् अमीषां चतुर्णां कवित्वादीनां वासाय पृथक्पृथगवस्थित्यर्थं चतस्रः सीमा विबभाज विभक्तवान् । रेखात्रयेण सीमाचतुष्टयसम्भवात् चत्वार्येवात्र तिष्ठन्तीत्यर्थः । कवित्वादिगुणवती कम्बुकण्ठी चेयमिति भावः ॥ ६७ ॥

श्लोकद्वयेन बाहुद्वयं वर्णयति । बाहू इति । प्रियाया भैम्या बाहू भुजौ मृणालं जयतां पराभवताम् । उचितमेवैतत्, यतोऽस्मिन् द्वन्द्वे बाहूद्वये यज्जयो नाम भवति स विस्मयो न आश्चर्यजनको न भवति, उत्कृष्टानां जयित्वौचित्यात्, अथ च द्वन्द्वे युद्धे यत् जयो नाम भवति अस्मिन् विस्मयो न । युद्धे एकतरजयस्य नियन्त्रितत्वात् तर्हि कुत्र विस्मय इत्यत आह तत्तु तत् पुनरुच्चैरतितरां चित्रम् आश्चर्यं यत् भग्नस्य पराजितस्य अमुष्य मृणालस्य अन्तर्हृदयं निर्व्यथनं व्यथाशून्यम् आलोक्यते ज्ञायते । पराजितस्यान्तःकरणं व्यथायुक्तं भवति, अस्य तु तन्नेत्याश्चर्यमित्यर्थः । अथ च भग्नस्य द्विधाकृतस्य मृणालस्यान्तर्मध्ये निर्व्यथनं छिद्रं दृश्यते । अस्या बाहू मृणालदपि सरलौ कोमलौ चेति भावः । विस्मयायेयि क्वचित्पाठः । 'द्वन्द्वं कलहयुग्मयोः' 'छिद्रं निर्व्यथनं रोकम्' अ ॥ ६८ ॥

अजीयतेति । किम्विति सम्भावनायाम् आवर्त्तवत् जलभ्रमवत् आवर्त्तेन दक्षिणावर्त्तेन कृत्वा वा शुभंयुः शुभान्विता नाभिर्यस्यास्तादृश्या भैम्याः कोमलाभ्यां दोर्भ्यां बाहूभ्यां मृणालं पङ्कान्तर्गतं विस' किमु अजीयत जितम् । अतएव निःसूत्रम् अपव्यवस्थं निरुपायम् अथ च तन्तुरहितं तत् मृणालं घनपङ्कमूर्तसु निविडपङ्कमृत्तिकालक्षणासु मूर्त्तासु मूर्त्तिमतीषु अकीर्त्तिषु

---

अत्र रेखात्रयमिषादित्यपह्नुत्यनुप्राणिता सीमा विबभाज किमिति प्रतीतेः प्रतीयमानोत्प्रेक्षा, च्छेकानुप्रासश्च ॥ ६७ ॥ अत्र निर्व्यथनशब्दश्लेषमूलिका व्यथाभावरन्ध्रयोरभेदारोपरूपातिशयोक्तिस्तदनुप्राणिता प्रकृतभैमीभुजद्वयमृणालयोः जेतृपराजेतृव्यवहारसमारोपरूपा समासोक्तिः, काव्यलिङ्गञ्च । अतिकोमलगौरसरलमृणालादपि कोमलौ सरलौ गौरौ च भैम्या बाहू इति मृणालात् प्रसिद्धोपमानात् उपमेयबाहुद्वयस्य उत्कर्षप्रतीतेः व्यतिरेको व्यज्यते ॥ ६८ ॥

रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपत्रतूणे।
हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य॥ ७०॥
अस्याः करस्पर्द्धनगर्द्धऋद्धि-र्बालत्वमापत् खलु पल्लवो यः।
भूयोऽपि नामाधरसाम्यगर्द्धं कुर्वन् कथं सोऽस्तु न वा प्रवालः॥ ७१॥

अयशःसु निमग्नं सत् आस्ते। अकीर्त्तेः श्यामत्वेन वर्णनीयत्वात् पङ्कमृद्रूपत्वम्। अतिकोमलं मृणालं तन्तुरहितं भवति। अन्योऽपि केनचिज्जितो निरुपायः सन्नकीर्त्तिषु निमज्ज्य तिष्ठति। कोमलमपि मृणालं भैम्या भुजसदृशं नेति भावः। 'सूत्रन्तु सूचनाग्रन्थे सूत्रं तन्तुव्यवस्थयोः' वि॥ ६९॥

श्लोकत्रयेन करौ वर्णयति। रज्यदिति। हैङ्गुलपत्रतूणे ताम्रपत्रमयेषुधिलक्षणे प्रियाया भैम्याः करे रज्यन्तः स्वयमेव रक्तीभवन्तो नखा यत्र तादृशस्य अङ्गुलिपञ्चकस्य मिषाद्व्याजात् असौ दृश्यमाना स्मरस्य कामस्य पञ्चशरी वाणपञ्चकम् अस्ति। किम्भूता—हैमाः सुवर्णमया एके श्रेष्ठाः पुङ्खा मुखानि यस्यास्तादृशी, तथा विशुद्धानि सरलानि पर्वाणि ग्रन्थयो यस्याः सा मदनस्य पुष्पायुधत्वादिषुधिरपि पुष्पमयः तच्च पुष्पं साम्याद्रक्तपद्ममेव। इषुधिश्च हिङ्गुलेन रज्यते। भैम्याः करः कामेषुधितुल्यः, तत्र पञ्चांगुलयः पञ्चवाणतुल्याः, रक्तनखाश्च सौवर्णपुङ्खतूल्या इत्यर्थः। अत्युत्तमं सुवर्णं रक्तं भवति। भैम्याः कराङ्गुलिदर्शनात्कामपादुर्भावो भवतीति भावः॥ ७०॥

अस्या इति। खलूत्प्रेक्षे यः पल्लवः किसलयम् भैम्याः करस्पर्द्धनस्य भैम्याः पाणितुल्योऽहमिति स्पर्द्धागर्द्धोऽभिलाषस्तेन ऋद्धिराधिक्यं यस्य तथाविधः सन् बालत्वं नवीनत्वम् आपत्प्राप्तवान्, अथ च बालत्वं मूर्खत्वं प्राप्तवान्। स्वापेक्षया उत्कृष्टेन भैमीपाणिना स्पर्द्धमानत्वात्। अथ च स्वयं यः पल्लवोऽपि पदश्चरणतो लवोऽल्पीयानपि पाणिना सह स्पर्द्धमानो मूर्खत्वं प्राप्तवान्। भूयोऽपि पुनरपि स पल्लवः अधरसाम्यगर्द्धं भैम्या अधरसदृशोऽहमित्यभिकाङ्क्षां कुर्वन् सन् कथं वा नाम प्रवालोऽतिनवीनो नास्तु न भवतु अपि तु तथाविध एव भवतु। अथ च प्रकृष्टो बालो मूर्खः कथं न भवतु। यः पाणिसाम्यमभिलषन् मूर्खो बभूव, स पुनरपि पाणितोऽप्युत्कृष्टेनाधरेण साम्यमभिलषन् अति मूर्खो भवत्येव नामेत्युपहासे। नवपल्लवादप्यतिरक्तौ भैम्याः कराधराविति भावः। अत्राधरवर्णनं प्रासङ्गिकम्। 'मूर्खेऽर्भकेऽपि बालः स्यात्' अ॥ ७१॥

---

अत्र मृणालजयं प्रति दोर्विशेषणीभूतशुभंयुकोमलपदार्थयोः हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, अकीर्त्तौ घनपङ्कमृत्त्वारोपात् निरङ्गं व्यस्तं रूपकम्, अजीयत किमु इति वाच्योत्प्रेक्षा, निःसूत्रशब्दश्लेषमूलकातिशयोक्तिमूला निमग्नमास्ते किमिति प्रतीतेः प्रतीयमाना उत्प्रेक्षा, केनचित् पराजितस्य निरुपायस्य कस्यचित् अप्रकृतस्य व्यवहारस्य प्रकृते भुजे मृणाले च समारोपात् समासोक्तिः छेकानुप्रासश्च। उत्प्रेक्षालङ्कारेण च पूर्ववत् व्यतिरेकालङ्कारो व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ६९॥ अत्र विशुद्धपर्वेत्यादिशब्दश्लेषात् अङ्गुलिपञ्चकस्य मिषादिति प्रकृताङ्गुलिपञ्चकं प्रतिषिध्य अन्यस्य स्मरस्य शरपञ्चकस्य स्थापनात् अपह्नुतिः प्रियाकरे हैङ्गुलपत्रतूणे इति व्यस्तरूपकं, तदुज्जीविता च अस्ति किमिति उत्प्रेक्षा॥ ७०॥ अत्र बालशब्दश्लेषात् नवीनत्वाज्ञतयो-

अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः।
इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम्॥ ७२॥
किं नर्मदाया मम सेयमस्या दृश्याभितो बाहुलतामृणाली।
कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरबाल्यवारः॥ ७३॥
तालं प्रभु स्यादनुकर्तुमेता-वुत्थानसुस्थौ पतितं न तावत्।
परश्च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्ग्याः स्वत एव तुङ्गौ॥ ७४॥

अस्यैवेति। हे भैमि अस्य भवत्करस्यैव भवत्याः पाणेरेव सर्गाय निर्माणाय सरोजानां पद्मानां सृष्टिर्मम हस्तलेखो हस्ताभ्यासलेखोऽभूत्। इति किं धाता विधाता हरिणेक्षणायां मृगनयनायामस्यां भैम्यां हस्ते लेखीकृतया लिखितया तया सरोजसृष्ट्या आह सूचयति स्म। सरोजादप्यतिरमणीयो भैम्याः कर इति भावः। हस्ते पद्मरेखा शुभलक्षणा, सैव तथोत्प्रेक्षिता। अन्योऽपि शिल्पी सुन्दरवस्तुनिर्माणार्थं तत्सजातीयान्यन्यानि निर्माय हस्ताभ्यासं करोति॥ ७२॥

श्लोकषट्केन स्तनौ वर्णयति। किमिति। मम नर्मदाया दर्शनमात्रेण सुखदायिन्या अथ च नर्मदाख्यनदीस्वरूपाया अस्या भैम्या अभितः पार्श्वद्वये सेयं दृश्या दर्शनयोग्यातिरमणीया बाहुलता भुजवल्लिरूपा मृणाली किम्। नर्मदानद्यास्तटद्वयेऽपि मृणाली दृश्यते। इयमपि मम नर्मदा, तस्मादस्याः पार्श्वद्वये विद्यमाना बाहुलता मृणाल्येवेति सम्भाव्यत इत्यर्थः। तथा स्मरोष्मणा कामोत्तापेन शुष्यत्तरम् अतितरां शोषं गच्छद् बाल्यमेव वार्जलं यस्यास्तादृश्या नर्मदाया अस्याः कुचौ स्तनरूपे अन्तरीपे द्वीपौ किम् उत्तस्थतुः उन्ममज्जतुः। नर्मदानद्या अपि उत्तापेन जलशोषादन्तरीपयोरुन्मज्जनं भवति। भैम्या बाहुलतातिसरला, कुचौ च द्वीपतुल्यत्वादतिपीनाविति भावः। 'द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्' 'वार्वारि सलिलं कमलं जलम्' अ॥ ७३॥

तालमिति। तावदिति वाक्यालङ्कारे तालं तालफलं कर्तृ उत्थानेन उद्गमनेन सुस्थौ सुन्दरौ एतौ दृश्यमानौ कृशाङ्ग्या भैम्याः कुचौ अनुकर्तुं पीवरतायां सदृशीकर्तुं न प्रभु स्यात् समर्थं न भवति। यतः पतितं भूमिष्ठं, नह्यधःपतितं वस्तु उद्गमनेन सुन्दरस्य वस्तुनः साम्यं लब्धुमर्हति, अधःपतितत्वेनापकृष्टत्वात् अनुकार्यस्य च उत्थानसुन्दरत्वेनोत्कृष्टत्वात्। अन्योऽपि पतितः

---

स्तथा प्रवालशब्दात् पल्लवप्रकृष्टाज्ञतयोरभेदाध्यवसायादतिशयोक्तिद्वयं, करस्पर्द्धेत्यादिपदार्थस्य बालत्वप्राप्तिहेतुत्वात् अधरसाम्येत्यादेश्च प्रबालत्वहेतुत्वात् काव्यलिङ्गद्वयं, तथा बालत्वमापत् खलु इति कथं न प्रबालो वास्तु इति च उत्प्रेक्षाद्वयम्, अप्रस्तुताज्ञादिव्यवहारारोपाच्च समासोक्तिः। वृत्त्यनुप्रासश्छेकानुप्रासश्च॥ ७१॥ अत्र इत्याह किमिति उत्प्रेक्षा, हरिणेक्षणेत्युपमा, हस्तलेखशब्दश्लेषात् हस्तरेखाभ्यासयोरभेदाध्यवसायादतिशयोक्तिः छेकानुप्रासश्च॥ ७२॥ अत्र नर्मदाशब्दश्लेषात् सुखदायिकानदीविशेषयोरभेदाध्यवसायादतिशयोक्तिः, बाहुलतामृणालीति कुचौ अन्तरीपौ, बाल्यवार इति च रूपकत्रयं, किमुत्तस्थतुरिति उत्प्रेक्षा, छेकानुप्रासश्च॥ ७३॥

एतत्कुचस्पर्द्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम्।
अस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः॥ ७५॥

पातित्यदोषयुक्तः पुण्यसमृद्ध्या सुस्थं जनं समीकर्त्तुं न शक्नोति। भैम्याः कुचौ भूमिस्थित-तालफलापेक्षयाप्यतिपीवराविति भावः। ननु मा भूत् भूमिष्ठतालफलेनास्याः कुचयोः साम्यं, वृक्षोपरिस्थितेन तु तालफलेन तद्भवितुमर्हतीत्यत आह। परं पतितादन्यत् तालं कर्तृ महान्तं तुङ्गं तरुं तालवृक्षम् आश्रित्य च तुङ्गतरवृक्षाश्रयणेन तुङ्गं भूत्वापि कृशाङ्ग्याः कुचौ अनुकर्त्तुं न प्रभु स्यात्। यतः कुचौ स्वत एव इतरमनपेक्ष्यैव तुङ्गौ उच्चौ। नह्यन्याश्रयणेनोन्नतं वस्तु स्वत-एवोन्नतं सदृशीकर्त्तुं शक्नोति। वृक्षोपरिस्थिततालफलादपि भैम्याः कुचावुच्चतराविति भावः। चकारो-ऽप्यर्थे आश्रित्येत्यनेन साकाङ्क्षः, परम् अन्यं तरुमिति वा परमतिशयेन महान्तमिति प्राञ्चः॥७४॥

एतदिति। एतस्या भैम्याः कुचस्पर्द्धितया भैमीकुचसदृशोऽहमिति स्पर्द्धया ख्यातस्य प्रसि-द्धस्य घटस्य शास्त्रेषु निदर्शनत्वम् अजनि। यद्यज्जन्यं तत्तदनित्यं यथा घट इति, यद्यन्नित्यं तत्तदज-न्यं यथा घट इत्यन्वयव्यतिरेकाभ्यां दृष्टान्तत्वं जातम्। अप्रसिद्धस्यापि घटस्य महतो भैमीकुचयोः स्पर्द्धयैव प्रसिद्धत्वात् शास्त्रेषु पण्डितैर्दृष्टान्तत्वेन पुनः पुनः कीर्त्तनं क्रियते। अन्यथा जगति विराजमानेषु सुरासुर-नर-करि-तुरगादि-वस्तुनिचयेषु निखिलविषयावलोकनरसिकानां शास्त्र-काराणां कथमेकतरममादरणमित्यर्थः। अन्योऽप्यप्रसिद्धः प्रसिद्धस्पर्द्धया प्रसिद्धो भवति। 'वरं विरोधोऽपि समं महात्मभिः' इति भारविवचनात्। तथा मणिकादिकारी अलिञ्जरादिकारकः कुलालश्च अस्मात् शिल्पात् भैमीकुचस्पर्द्धिकुम्भनिर्माणादेव कुम्भकार इति प्रसिद्धनामा अजनि। न खलु मणिकादिकरणेन कुम्भकरणात् कुलालस्य कुम्भकारत्वप्रसिद्धिः, किन्तु भैमी-कुचस्पर्द्धितया ख्यातस्य कुम्भस्य करणादेव कुम्भकारत्वप्रसिद्धिरित्यर्थः। कुम्भवद्भैमीकुचौ पीवराविति भावः शास्त्रेषु भारतादिषु निदर्शनत्वं कुम्भकुचा दमयन्तीति दृष्टान्तत्वमिति केचित्। 'अलिञ्जरः स्यान्मणिकः' अ॥ ७५॥

---

अत्र तालफलस्य कुचानुकरणसामर्थ्याभावे विशेषणविधया उत्थानसुस्थपतितपदार्थयोः, तथा पराश्रितत्वपदार्थस्य स्वतस्तुङ्गपदार्थानुकरणे सामर्थ्याभावे हेतुत्वात् काव्यलिङ्गद्वयम्, उत्थानसुस्थपदार्थयोरापाततः विरोधप्रतीतेः विरोधाभासः, पातित्यदोषयुक्तस्य सुकृतिजन-समीकरणसामर्थ्याभावव्यवहारस्य पराश्रयेण उन्नतस्य स्वतउन्नतसाम्यव्यवहाराभावस्य च प्रकृतयोः कुचतालयोः समारोपात् समासोक्तिः। उपमेयस्य कुचस्य तालफलादुपमानादाधिक्यप्रतीतेः व्यतिरेकध्वनिः॥ ७४॥ अत्र घटस्य भैमीकुचस्पर्द्धित्वेन शास्त्रप्रसिद्धत्वासम्बन्धेऽपि तत्सम्बन्धो-क्तेः तथा तच्छिल्पाच्च कुम्भकारप्रसिद्ध्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिद्वयम्। मणिका-दिकारित्वात् कुम्भकर्त्तृत्वेऽपि कुम्भकारस्य कुम्भकारत्वप्रसिद्धिर्न इति प्रकृतं प्रतिषिध्य भैमी-कुचस्पर्द्धया ख्यातस्य कुम्भस्य निर्माणात् कुम्भकारप्रसिद्धिरित्यन्यस्थापनात् अपह्नुतिः, ख्यात-पदार्थस्य शास्त्रनिदर्शनहेतुत्वात् काव्यलिङ्गम् च॥ ७५॥

गुच्छालयस्वच्छतमोदबिन्दु-वृन्दाभमुक्ताफलफेनिलाङ्के ।
माणिक्यहारस्य विदर्भसुभ्रू-पयोधरे रोहति रोहितश्रीः ॥ ७६ ॥
निःशङ्कसङ्कोचितपङ्कजोऽय-मस्यामुदीतो मुखमिन्दुबिम्बः ।
चित्रन्तथापि स्तनकोकयुग्मं न स्तोकमप्यश्चति विप्रयोगम् ॥ ७७ ॥
आभ्यां कुचाभ्यामिभकुम्भयोः श्री-रादीयतेऽसा वनयो र्न ताभ्याम् ।
भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥ ७८ ॥

गुच्छेति। विदर्भसुभ्रुवो भैम्याः पयोधरे स्तने माणिक्यहारस्य रोहितश्रीर्लोहिता दीप्तिः रोहति प्रादुर्भवति। किम्भूते पयोधरे गुच्छे हारविशेषे आलय आश्रयो येषां तादृशानि यानि स्वच्छतमानि अतिनिर्मलानि जलबिन्दुवृन्दाभानि जलबिन्दुवृन्दसदृशानि मुक्ताफलानि तैः फेनिलः फेनयुक्त इव अत्युज्ज्वलोऽङ्को मध्यभागो यस्य तादृशे। मुक्ताहारमाणिक्यहाराभ्यां भैमीकुचावतितरां शोभेते इति भावः। अथ च फेनिले पयोधरे जलाधारे तडागादौ रोहितस्य मत्स्यविशेषस्य शोभा प्रादुर्भवति। अथ च पयोधरे मेघे रोहितश्रीः ऋजुशक्रधनुःशोभा आविर्भवति। 'हारभेदा यष्टिभेदाद्गुच्छगुच्छार्द्धगोस्तनाः' 'रोहितोलोहितो रक्तः' 'अथो झषाः रोहितः' 'इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम्' अ। अयं श्लोको न बहुषु दृश्यते, भरतसेनादिभिरपि नायं व्याख्यातः ॥ ७६ ॥

निःशङ्केति ॥ अस्यां भैम्यां वर्त्तमानं मुखमेव इन्दुबिम्बोऽयम् उदीत उद्गतः। यतो निःशङ्कं यथा तथा सङ्कोचितानि सङ्कोचं प्रापितानि अथ च जितानि पङ्कजानि पद्मानि येन तादृशः। चन्द्रेण पद्मानि सङ्कोच्यन्ते, मुखेनापि जेतृत्वात्तानि तथा क्रियन्ते, तस्मान्नेदं मुखं किन्तु चन्द्रबिम्ब एवेत्यर्थः। तथापि पद्मसङ्कोचात् मुखस्य चन्द्रत्वे सिद्धेऽपि स्तनकोकयुग्मं स्तनद्वयरूपं चक्रवाकयुगं स्तोकमपि अल्पमपि विप्रयोगं विश्लेषं यत् नाञ्चति न प्राप्नोति मिलितमेव यत्तिष्ठति तच्चित्रम् आश्चर्य्यम्। चन्द्रोदये हि चक्रवाकमिथुनं वियोगं प्राप्नोति। स्तनरूपं तत्तु नेत्याश्चर्य्यं चक्रवाकाकारौ भैम्याः स्तनौ परस्परमतिसंश्लिष्टाविति भावः 'कोकश्चक्रश्चक्रवाकः' अ ॥ ७७ ॥

आभ्यामिति। आभ्यां प्रत्यक्षविषयाभ्यां भैम्याः कुचाभ्याम् इभकुम्भयोर्गजकुम्भयोः श्रीः शोभा

---

अत्र प्रस्तुतस्य दमयन्तीपयोधरस्याप्रस्तुतस्य जलधरादेश्च रोहितश्रीधारणरूपैकधर्माभिसम्बन्धाभिधानात् दीपकालङ्कारः, सच पयोधर इति लोहितश्रीरिति च श्लेषाभ्यामनुप्राणितः इत्यनयोः सङ्करः। रोहितश्रीरोहणसम्भावनया प्रतीयमानोत्प्रेक्षा, छेकानुप्रासश्च ॥ ७६ ॥ अत्र मुखमिन्दुबिम्ब इति स्तनकोकयुग्ममितिच समस्तं रूपकम्, तेन चोत्थापितः चन्द्रोदये कोकयुग्मवियोगाभावरूपविरोधस्य कुचरूपचक्रवाकार्थकल्पनेन परिहारात् विरोधाभासः, चक्रवाकयुग्मवियोगकारणे सत्यपि तदभावात् विशेषोक्तिः, वृत्त्यनुप्रासश्च। चक्रवाकादुपमानात् उपमेयस्य स्तनस्याधिक्यप्रतीतेः व्यतिरेकालङ्कारो व्यङ्ग्यः ॥ ७७ ॥

करा ग्रजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत् कुचौ चेत् ।
सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम् ॥ ७९ ॥
स्तनातटे चन्दनपङ्किलेऽस्या जातस्य यावद्युवमानसानाम् ।
हारावलीरत्नमयूखधारा-काराः स्फुरन्ति स्खलनस्य लेखाः ॥ ८० ॥

अथ च सम्पत्तिरादीयते बलाद् गृह्यते। ताभ्यामिभकुम्भाभ्यान्तु अनयोः कुचयोरसौ श्रीर्नादीयते। कुतस्त्वयेदं ज्ञातमित्यत आह। यद्यस्मात्तौ इभकुम्भौ भयेन कुचाभ्यां भीत्येव गोपायितं गुप्तीकृतं मौक्तिकं याभ्यां तादृशौ। इमौ कुचौ पुनः प्रव्यक्तं प्रकटं वहिर्वर्त्तमानं मुक्ताभरणं ययोस्तादृशौ। मुक्ता गजकुम्भाभ्यन्तरे विद्यते, मुक्ताहारस्तु स्तनयोरुपरि विद्यते, अत इयमुत्प्रेक्षा। यस्य श्रीरन्येन गृह्यते स तस्माद् भीतः सन् निजश्रियं भूम्याद्यभ्यन्तरे सङ्गोप्य स्थापयति, विजेता तु निर्भयः सन् स्वश्रियं वहिःप्रकटयति। गजकुम्भाभ्यामप्यतिरमणीयौ भैमीस्तनाविति भावः॥ ७८॥

करा ग्रेति। कराग्रे जाग्रत् शतकोटिर्वज्रं यस्य स इन्द्रो ययोर्भैम्याः कुचयोरर्थी मर्दनाभिलाषी, उन्मदिष्णु उन्मादकम् अर्थात् पक्वं सर्वं श्रीफलं विल्वफलं चेद्यदि ताविमौ कुचौ तुलयेत् सदृशीकुर्यात्, तदा तर्हि तत् श्रीफलम् अधुना इदानीं वटीमपि लक्षणया कुचलावण्यलेशमपि लब्धुं प्राप्तुं न जातं नोत्पन्नम्। इन्द्रोऽपि रम्भामेनकादीनां स्तनौ विहाय एतयोरभिलाषी, तस्मादतिमहत्तराभ्यामेताभ्यां साम्यं कथमुन्मादकत्वाद् भद्रजनैरप्रार्थनीयं विल्वफलं लब्धुमर्हतीत्यर्थः। अथ च कराग्रजाग्रत्यः शतं कोटयो यस्य सोऽपि ययोरर्थी ग्रहणाभिलाषी तावेतौ कुचौ सर्वं श्रीफलं यदि तुलयेत्, तर्हि उन्मदिष्णु उन्मादयुक्तं सत् वटीमपि वराटकमपि मूल्यं लब्धुं न जातम् अतीवावज्ञास्पदं जातमित्यर्थः। भैम्याः स्तनौ पक्वविल्वापेक्षयाप्यतिरमणीयाविति भावः। 'वटः कपर्दे न्यग्रोधे' वि ॥ ७९ ॥

स्तनातट इति। अस्या भैम्याश्चन्दनपङ्किले आर्द्रचन्दनरूपपङ्कयुक्ते स्तनावेव अत्युच्चत्वादतटः प्रपातस्थानं तत्र जातस्य उत्पन्नस्य यावद्युवमानसानां सकलयुवजनान्तःकरणानां स्खलनस्य पतनस्य हारावल्यां हारश्रेण्यां यानि रत्नानि तेषां या मयूखधाराः किरणपरम्परा स्ता एव आकारा मूर्त्तयो यासां तथाविधा लेखाश्चिह्नानि स्फुरन्ति भासन्ते। नैताः किरणपरम्पराः किन्तु चन्दनपङ्किलत्वात् पिच्छिलेऽत्युच्चस्तनलक्षणप्रपातस्थाने निरन्तरं सञ्चरतां विमुग्धयुवजनमानसानां पतनरेखा एवेत्यर्थः। अन्येषामपि पिच्छिलोच्चप्रदेशे सञ्चरतां पतनं तद्रेखाश्चोत्पद्यन्ते। अत्युच्चौ भैमीकुचौ दृष्ट्वा सर्वे युवानो मुह्यन्तीति भावः। स्तनातट इत्यत्र स्तनावट इति क्वचित् पाठः,

---

कुचकुम्भाभ्यां इभकुम्भयोः श्रियः आदानासम्भवात् तदीयशोभासदृशशोभाप्रतीतेः निदर्शना, भयेनेति प्रतीयमानोत्प्रेक्षा, अनया च उपमानादिभकुम्भात् उपमेयस्य कुचकुम्भस्य आधिक्यप्रतीतेः व्यतिरेकः, उत्तरार्द्धवाक्यार्थं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम् ॥७८॥ हस्ताग्रे शतकोटिधनविशिष्टजनः यस्य अर्थी ततः उन्मत्तजनः कपर्दकमपि लब्धुं नार्हतीति व्यवहारस्यानकृतस्य श्लेषवशात् प्रतीतेः श्लेषोत्थापिता समासोक्तिः, व्यतिरेकः, छेकानुप्रासश्च ॥ ७९ ॥

क्षीणेन मध्येऽपि सतोदरेण यत्प्राप्यते नाक्रमणं वलिभ्यः।
सर्वाङ्गशुद्धौ यदनङ्गराज्य-विजृम्भितं भीमभुवीह चित्रम् ॥ ८१ ॥
मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात् कमनीयमंशम्।

तत्र स्तनयोरवटे गर्त्ते गभीरे स्तनमध्ये इत्यर्थः। पङ्किले गर्त्ते लोकस्य पतनं भवत्येव। 'प्रपातस्त्व-तटो भृगुः' अ, 'अवटः स्यात् खिले गर्ते कूपे कुहकजीविनि' वि ॥ ८० ॥

एकश्लोकेन वलिसहितमुदरं वर्णयति। क्षीणेनेति। मध्येऽपि अवलग्नदेशेऽपि सता विद्यमानेन क्षीणेन कृशतरेणापि उदरेण जठरेण यत् वलिभ्यस्त्रिवलिभ्य आक्रमणं परितो वेष्टनं न प्राप्यते, तत् सर्वेषामङ्गानां मुखादीनां शुद्धिः सौन्दर्यं यस्यां तथाभुतायाम् इह भीमभुवि दमयन्त्यां चित्रमाश्चर्यरूपम् अनङ्गराज्यस्य कामराज्यस्य यौवनस्य विजृम्भितं विलसितम्। क्षीणत्वान्मध्य-स्थानोपरि स्थिततयातिसामीप्याच्च आक्रमणयोग्यमप्युदरं यत् त्रिवलिभिर्नाक्रान्तं तदङ्ग तयौवनवि-लसितमित्यर्थः। सर्वाङ्गशुद्धावित्यनेन यौवनवशान् मुखाद्यवयवानां सौन्दर्ये जाते यद्युदरं त्रिवलिभि-र्वेष्टितं भवेत्तदा महद्वैरूप्यं भवेदतः कामेन बुद्धिपूर्वकं तन्निवारितमित्यर्थः। अथ च मध्ये मध्य-सीमायामपि तिष्ठता क्षीणेन कोषबलादिरहितेन सता साधुना सर्वाङ्गानां स्वाम्यमात्यादीनां शुद्धौ सत्यामपि भीमभुवि भयानकायां भूमौ उदरेण युद्धे न बलिभ्यो बलवद्भ्यो यत् आक्रमणं पराभवो न प्राप्यते, तत् अनङ्गस्य सप्ताङ्गरहितस्य दुर्बलस्य राज्यविलसितमाश्चर्यरूपम्। शत्रोः सप्ताङ्गसहित-तयातिबलवत्त्वात् स्वस्य च सप्ताङ्गराहित्येनातिदुर्बलत्वादनुद्धतस्वभावात् मध्यसीमनि वर्त्त-मानत्वाच्च पराभवस्यावश्यम्भावेऽपि यत् पराभवो न जातस्तत्सप्ताङ्गरहितस्य तस्यैव आश्चर्यरूपं राज्यविलसितमित्यर्थः। अनङ्गस्य सप्ताङ्गरहितस्य कस्यचिन्मध्यस्थस्य राज्यविलसित-मिति वा। यद्वा अनङ्गस्य पक्षपातरहितस्य राज्यस्य विलसितम्। सुराज्ञि देशे हि दुर्बलो बल-वद्भिर्न बाध्यते, अथ च भीमस्य राज्ञो भुवि भूम्यां गृहे चित्रमाश्चर्यमतिरमणीयम् अनङ्गराज्यस्य भैमीलक्षणस्य कामराज्यस्य विजृम्भितं प्रकाशः। अथ च भीमस्य शिवस्य भुवि कामराज्यवि-जृम्भितमाश्चर्यम्। 'उदरं जठरे युद्धे' व ॥ ८१ ॥

---

अत्र स्तनयोः हारावलीकिरणपरम्परेयं न भवति किन्तु युवमानसानां पतनरेखा एवेति अप-ह्नुतिः, पङ्किलपदार्थस्य स्खलनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्। पङ्किले पथि गच्छतो जनस्य पतनं भवति तेन तत्र रेखा उत्पद्यते तादृशस्य अप्रस्तुतव्यवहारस्य प्रतीतेः समासोक्तिश्च ॥ ८० ॥
सीमायां वर्त्तमानो हीनाङ्गः दुर्बलः सर्वाङ्गशुद्धबलिभ्यः आक्रमणं न प्राप्नोतीति, तथा भीमस्य राज्ञो भुवि भीमस्य शिवस्य भुवि वा अनङ्गस्य विजृम्भितमिति विरोधस्य च क्षीण-मध्याङ्गभीमादिशब्दानां श्लेषमहिम्ना दमयन्त्याः सूक्ष्ममध्यभागसर्वाङ्गसौन्दर्यादिरूपार्थ-कल्पनया परिहाराद् विरोधाभासद्वयम्। सीमसु विद्यमानानां विजिगीषूनां दुर्बलानां बलिनां च तथाविधानां राज्ञामप्रस्तुतानां व्यवहारप्रतीतेः समासोक्तिः ॥ ८१ ॥

केन स्तनौ सम्प्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गदीप्तेः ॥ ८२ ॥
गौरीव पत्या सुभगा कदाचित् कर्त्रीयमप्यर्द्धतनूसमस्याम् ।
इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥ ८३ ॥
रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् ।
मद्‌दृष्टितृष्णा विरमेद्यदि स्यान्नैषां वतैषा सिचयेन गुप्तिः ॥ ८४ ॥

एकश्लोकेन मध्यं वर्णयति । मध्यमिति । वेधा विधाता यदि इदमीयम् एतदीयं मध्यं तनूकृत्य कृशीकृत्य कमनीयं सुन्दरं सारभूतम् अंशं भागं न दध्यात् पृथक् कृत्वा न कुत्रापि स्थापयेत्तर्हि सम्प्रति यौवने सति अनन्यप्रतिमा अनन्यसदृशी अङ्गदीप्तिर्यस्यास्तथाभूताया अस्या भैम्याः स्तनौ केन अंशेन प्रकारेण वा सृजेत् कुर्य्यात् । अतएव मध्यनिर्म्माणसमये शिल्प-चतुरो विधाता कमनीयं कियन्मध्यांशं संगृह्य स्थानान्तरे स्थापितवान्, अधुना तु तेनांशेनैव स्तनौ निर्मितवानित्यनुमीयते । कथमन्यथा मध्यस्य क्षीणता, स्तनयोश्चातिपीवरतेत्यर्थः । अतिकृश-त्वात् भैमीमध्योऽतिरमणीय इति भावः ॥ ८२ ॥

चतुर्भिः श्लोकैर्लोमावलीं वर्णयति ॥ गौरीवेति ॥ सुभगा सौभाग्यवती इयं दमयन्त्यपि गौरीव पार्वतीव कदाचित् पत्या स्वामिना सह अर्द्धतनूसमस्यां शरीरार्द्धसम्मेलनं कर्त्री साधु करिष्यति, इतीव इत्यभिप्रेत्येव विधाता अस्या भैम्या मध्यभागे रोमावलीरूपं मेचकसूत्रं कृष्णतन्तुं निदधे निहितवान् । नेयं रोमावली, किन्तु अर्द्धशरीरघटनार्थं विधात्रा कृष्णसूत्रं निहितमि-त्यर्थः अन्योऽपि शिल्पी पाटयितव्यकाष्ठादौ कृष्णसूत्रनिधानेन चिह्नं करोति । कर्त्रीति 'शीला-चारे'त्यादिना साध्वर्थे तृङिः, तस्य त्वादित्वान्न समस्यामित्यत्र कर्मणि षष्ठी । कर्त्तेति क्वचि-त्पाठस्तदा लुटोरूपम् । 'स्यात् समस्या सङ्घटनम्' ब ॥ ८३ ॥

रोमावलीति । मद्‌दृष्टितृष्णा मम दर्शनाभिलाषोऽस्या रोमावलीरूपं रज्जुम् उरोजौ स्तनलक्षणौ कुम्भौ गम्भीरं नाभिलक्षणं कूपञ्चासाद्य प्राप्य तदा विरमेत् शाम्येत्, वत खेदे यदि एषां रोमाव-ल्यादीनां सिचयेन वस्त्रेण एषा ईदृग्दृढतरा गुप्तिराच्छादनं न स्यात् न भवेत् । आच्छादना-भावश्चेत् एतदङ्गत्रयदर्शनेन चरितार्थत्वान् मम दृष्टितृष्णा निवृत्ता भवेदित्यर्थः । अथ च रज्जुं कुम्भ गम्भीरकूपञ्च प्राप्य पिपासा तदा शाम्येत् यदि असिचयेन लक्षणया खड्गधारिपुरुषनि-वहेन रक्षणं न भवेत् । अनावृष्टौ मरुदेशे च कूपादिकं खड्गधारिभी रक्ष्यते । दीर्घतररोमावली उच्चकुचा गभीरनाभी चेयमिति भावः । 'सिचय-प्रोथशाटका' इति त्रिकाण्डशेषः ॥ ८४ ॥

---

दमयन्तीशरीरे तादृशकमनीयस्थूलस्तननिर्म्माणलिङ्गेन विधातृकर्त्तृकक्कटितनूकरणपूर्वकरमणी-यांशग्रहणरूपसाध्यप्रतीतेरनुमानालङ्कारः । अङ्गयष्टेरिति रूपकंच ॥ ८२ ॥ अत्र गौरी-वेत्युपमा, रोमावलीमेचकसूत्रमिति रूपकम्, इतीव विदधे इत्युत्प्रेक्षा ॥ ८३ ॥ अत्र रोमा-वलीरज्जुम्, उरोजकुम्भौ, नाभिकूपमिति निरङ्गं रूपकत्रयम् । एषासिचयेनेति सभङ्गश्लेष-महिम्नाऽप्रस्तुतार्थध्वनिः तदुक्तं नारायणेन "अथच गोरकं, कुम्भौ, गम्भीरं कूपं च प्राप्य• पिपासा

उन्मूलितालानबिलाभनाभि-श्छिन्नस्खलच्छृङ्खलरोमदामा ।
मत्तस्य सेयं मदनद्विपस्य प्रस्वापवप्रोच्चकुचास्तु वास्तु ॥ ८५ ॥
रोमावलिभ्रूकुसुमैः स्वमौर्वी-चापेषुभिर्मध्यललाटमूर्ध्नि ।
व्यस्तैरपि स्थास्नुभिरेतदीयै-र्जैत्रः स चित्रं रतिजानिवीरः ॥ ८६ ॥
अस्याः खलु ग्रन्थिनिबद्धकेश-मल्लीकदम्बप्रतिबिम्बवेशात् ।
स्मरप्रशस्तो रजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम् ॥ ८७ ॥

उन्मूलितेति । सेयं भैमी मत्तस्य उद्भटस्य अथ च मदविशिष्टस्य मदनद्विपस्य कामरूपहस्तिनो वास्तु वसतिभूमिरस्तु भवतु । किम्भूता यत उन्मूलितमुत्पाटितं यदालानं बन्धनस्तम्भस्तत्सम्बन्धि यद्बिलं गर्त्तस्तदाभा तत्सदृशी नाभिर्यस्यास्तादृशी। नेयं नाभिः, किन्तु कामगजेनोत्पाटितस्यालानस्य गर्त्त इत्यर्थः । तथा छिन्नं त्रुटितं स्खलत् पतितञ्च यत् शृङ्खलं लौहमयगजबन्धनरज्जुस्तद्वत् रोमदाम रोमावलिर्यस्यां तादृशी। नेयं रोमावलिः, किन्तु कामगजच्छिन्नपतितशृङ्खलमित्यर्थः। बलीमध्यगतत्वाद्रोमावल्याश्छिन्नत्वं, तथा प्रस्वापाय गजशयनार्थं कृतौ यौ वप्रौ मृत्तिकास्तुपौ तद्वत् उच्चौ कुचौ यस्यास्तादृशी। नेतावुच्चकुचौ, किन्तु मत्तकामगजशयनार्थं द्वौ वप्रावित्यर्थः। मत्तगजस्योभयपार्श्वपरिवर्त्तनाय शय्योभयपार्श्वे वप्रद्वयं क्रियते । इमामेवालभ्य कामोऽतिमत्तो जात इति भावः । मत्तस्य गजस्य वसतिगृहमप्येतादृशं भवति ॥ ८५ ॥

रोमावलीति । स रतिजानिवीरो रतिर्जाया यस्य स चासौ वीरश्चेति स कामशूर एतदीयैर्भैमीसम्बन्धिभिः रोमावली च भ्रुवौ च कुसुमानि च तद्रूपैः स्वस्य मौर्वीचापेषुभिर्ज्याधनुर्वाणैः कृत्वा जैत्रो जेता, त्रिभुवनं जयति, एतच्चित्रमाश्चर्यम् । किम्भूतैर्यतो मध्यललाटमूर्ध्नि मध्ये ललाटे मूर्ध्नि च व्यस्तैः परस्परमसम्बद्धैः सद्भिः स्थास्नुभिरपि स्थिरैरपि । रोमावलीरूपा ज्या मध्यदेशे वर्त्तते, भ्रूरूपं धनुर्ललाटे वर्त्तते, कुसुमरूपा वाणाश्च मूर्ध्नि वर्त्तन्ते, एवं पृथक् पृथक् स्थितैरपि मौर्वीधनुर्वाणैः कामेन जगत्त्रयं यज्जितं तदाश्चर्यमित्यर्थः । इतरो वीरस्तु सम्बद्धैरेवैतैर्जेतुं शक्नोति, नत्वसम्बद्धैः, अत्र तद्विपरीतदर्शनादाश्चर्यम् । भैम्या रोमावलीभ्रूकुसुमानामन्यतमदर्शनादपि कामोद्रेको जायत इति भावः । मध्यललाटमूर्ध्नीति प्राण्यङ्गत्वादेकवद्भावः । रतिजानीति, 'जायाया इज्जानश्चे'ति इत् समासान्तः जायाया जानादेशश्च ॥ ८६ ॥

एकश्लोकेन पृष्ठस्थलीं वर्णयति । अस्या इति । खलूत्प्रेक्षे, अस्या भैम्याः पृष्ठस्थली पृष्ठदेशः एव

---

तदा शाम्येत् यद्येषां असिचयेन लक्षणया खड्गधारिपुरुषसमूहेन रक्षणं न स्यात्, राजैकभोग्यः कूपः खड्गपाणिभी रक्ष्यते, अतो जलहरणसामग्रीसद्भावेऽपि पिपासा न शाम्यतीति अतिगभीरनाभिरियमिति भावः" ॥ ८४ ॥ "अत्र च्छेकानुप्रासोपमारूपकालङ्काराः" सा ॥ ८५ ॥ अत्र जयसाधनरोमावल्यादिरूपमौर्वीप्रभृतीनां सङ्गतिराहित्यस्य जगज्जयरूपतत्कार्यस्य च विरूपयोः संघटनात् विषमालङ्कारभेदः । विरोधाभासः, व्यस्तरूपकञ्चेत्येतेषाम् अङ्गाङ्गिभावेन सङ्करः । छेकानुप्रासश्च ॥ ८६ ॥

चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन।
जगज्जिगीषत्यमुना नितम्ब-मयेन किं दुर्लभदर्शनेन ॥ ८८ ॥
रोमावलीदण्डनितम्बचक्रे गुणञ्च लावण्यजलञ्च बाला।
तारुण्यमूर्त्तेः कुचकुम्भकर्त्तुर्बिभर्त्ति शङ्के सहकारि चक्रम् ॥ ८९ ॥
अङ्केन केनापि विजेतुमस्या गवेष्यते किञ्चलपत्रपत्रम्।
न चेद्विशेषादितरच्छदेभ्य स्तस्यास्तु कम्पस्तु कुतोभयेन ॥ ९० ॥

हाटकपट्टिका सौवर्णपट्टा तस्यां ग्रन्थिनिबद्धाः केशाः संयतकचास्तत्र वर्त्तमानं यत् मल्लीकदम्बं मल्लिका-कुसुमसमूहस्तस्य प्रतिविम्बं प्रतिमा तस्य वेशाच्छलात् प्रवेशाद्वा इयं दृश्यमाना रजताक्षरा रौप्या-क्षरा स्मरस्य कामस्य प्रशस्तिः स्तुतिग्रन्थः। नेदं भैमीपृष्ठस्थल्यां धम्मिल्लस्थितमल्लीकदम्बप्रति-विम्बं, किन्तु सुवर्णपट्टिकारूपायामस्यां रजताक्षरलिखिता कामप्रशस्तिरित्यर्थः। अन्यापि नृपादिप्रशस्तिः सुवर्णपट्टिकायां रजताक्षरैर्लिख्यते। वेणीनिबद्धकेशमल्लीनां पृष्ठे प्रतिविम्बा-सम्भवात् ग्रन्थिनिबद्धेत्युक्तम्। सुवर्णपट्टिकातुल्या भैम्याः पृष्ठस्थली झटिति कामजनिकेति भावः। 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' अ ॥ ८७ ॥

श्लोकद्वयेन नितम्बं वर्णयति। चक्रेणेति। मत्स्यकेतुः कामः पितुः श्रीकृष्णस्य सुदर्शनेन सुदर्शननामकेन अथ च सुलभं दर्शनं यस्य तादृशेन चक्रेण युधि विश्वं जितं वीक्ष्य दृष्ट्वा वस्त्रावृतत्वात् दुर्लभं दर्शनं यस्य तादृशेन भैम्या नितम्बमयेन अमुना चक्रेण किं जगत् भुवनं जिगीषति जेतुमिच्छति। सुपुत्राणां पित्रनुकारित्वात् कामस्य चक्रजयित्वं पितृसाधर्म्यं विद्यत एव, परन्तु पितुश्चक्रं सुलभदर्शनत्वात् प्रतीकारयोग्यं, स्वस्य तु चक्रं दुर्लभदर्शनत्वात् प्रतीकारा-योग्यमित्ययं विशेषः। भैम्या नितम्बदर्शनाज्जनाः कामाधीना भवन्तीति भावः ॥ ८८ ॥

रोमावलीति। बाला भैमी रोमावलीदण्डनितम्बचक्रे रोमावलीरूपं दण्डं नितम्बरूपं चक्रं गुणं रूपादिकम् अथ च सूत्रं लावण्यरूपं जलञ्च एतच्चतुष्टयरूपं तारुण्यमूर्त्तेः यौवन-रूपस्य कुचकुम्भकर्त्तुः कुचरूपकुम्भकारस्य कुलालस्य सहकारिचक्रं सहकारिकारणसमूहं बिभर्त्ति धारयतीति शङ्के सम्भावयामि। अन्यः कुलालोऽपि कुम्भं करोति, तस्य च दण्डचक्रसूत्रसलिलानि सहकारीणि भवन्ति। अत्रापि यौवनमेव कुचरूपकुम्भकरणात् कुलालस्तस्य रोमावल्यादिलक्षणा दण्डादयः सहकारिण इत्यर्थः। यौवनोद्गमनाविर्भूता भैम्या रोमावल्यादयोऽतिरमणीया इति भावः। गुणशब्दोऽत्रोभयतात्पर्यकः। 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये। त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिरज्जुषु' मे ॥ ८९ ॥

एकश्लोकेन योनिं वर्णयति। अङ्केनेति। अस्या भैम्या केनापि सुरतप्रधानसाधनतयाति-

---

अत्र प्रतिविम्बवेषादित्यपह्नुतिः, पृष्ठस्थलीहाटकपट्टिकायामिति रूपकम्, राजताक्षरा स्मर-प्रशस्तिः किमितिप्रतीतेः उत्प्रेक्षा ॥ ८७ ॥ "अत्रोत्प्रेक्षाव्यतिरेकालङ्कारौ" सा ॥ ८८ ॥ अत्र रोमावल्यां चक्रभ्रामकदण्डस्य नितम्बे चक्रस्य गुणशब्दश्लेषात् शीलादिलक्षणगुणे

भ्रूश्चित्रलेखा च तिलोत्तमास्या नासा च रम्भा च यदूरुसृष्टिः ।
दृष्टा ततः पूरयतीयमेका-ऽनेकाप्सरःप्रेक्षणकौतुकानि ॥ ९१ ॥
रम्भापि किं चिह्नयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू ।
स्त्रस्यैव येनोपरि सा ददाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ९२ ॥

मनोज्ञत्वादनिर्वचनीयेन अथ च ग्राम्यत्वात् प्रकटं वक्तुमयोग्येन अङ्गेन योनिरूपावयवेन चलपलस्य अश्वत्थस्य पत्रं विजेतुं विशेषेण पराभवितुं किं गवेष्यते अन्विष्यते । कुतस्त्वया ज्ञातमित्यत आह । न चेत् यद्येवं न स्यात्तर्हि इतरच्छदेभ्योऽन्यवृक्षपलेभ्यो विशेषादाधिक्यात् तस्य चलपत्रपलस्य कुतः कस्मात्तु भयेन कम्पोऽस्तु भवतु, अपि तु भैमीवराङ्गकर्तृकपराभवशङ्कयैव तस्य कम्पो भवतीत्यर्थः । अन्यपलापेक्षया अश्वत्थपलस्याधिकतरः कम्पो दृश्यते, ततएवेयमुत्प्रेक्षा । आकारेणाश्वत्थपत्रतुल्यत्वात् भैमीवराङ्गमतिसुलक्षणान्वितमिति भावः । ग्राम्यत्वात् केनापीत्यनेन वराङ्गं गुप्तीकृत्योक्तम् । 'गुप्तीकृत्य वदेद् ग्राम्यमवश्यं वाच्यता यदि' इत्युक्तेः । 'योनिर्भवति वै यस्या बोधिद्रुमदलाकृतिः । सान्यलक्षणहीनापि सौख्यसौभाग्यमृच्छति' इति सामुद्रकम् । 'बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः । अश्वत्थ' अ ॥ ९० ॥

पञ्चभिः श्लोकैरूरू वर्णयति । भ्रूरिति । ततस्तस्मादियमेका भैमी दृष्टा सती अनेकाप्सरसां प्रेक्षणकौतुकानि दर्शनजनितकुतूहलानि पूरयति द्रष्टुर्जनयति । यद्यस्मादस्या भैम्या भ्रूश्चित्रलेखा अप्सरोविशेषः, अथ च चित्राश्चर्यरूपा रेखा विन्यासो यस्यास्तादृशी, तथास्या नासा नासिका च तिलोत्तमा अप्सरोविशेषः, अथ च तिलात्तिलकुसुमादप्युत्तमा मनोज्ञा, तथास्या ऊरुसृष्टिः कृदभिहितभावस्य द्रव्यपर्यवसायित्वात् विधिना सृष्ट ऊरुश्च रम्भा अप्सरोविशेषः, अथ च कदलीप्रकाण्डरूपा । तस्मादेवेयमनेकाप्सरोदर्शनकौतुकानि जनयति । शब्दच्छलमूलेयं वाक्यभङ्गी । भैम्या एकैकाङ्गदर्शनमपि सावयवाप्सरोदर्शनजन्यकौतुकं जनयतीत्यप्सरोभ्योऽप्यतिसुन्दरीयमिति भावः । चत्वयं परस्परसमुच्चायकम् ॥ ९१ ॥

रम्भापीति । रम्भापि कदल्यपि आत्मनः स्वस्य प्रकाण्डं स्तम्भं स्वेनात्मना न च नैव चिह्नयति किं, स्वीयत्वेन न जानाति किं ? तथा एतस्या भैम्या ऊरू च न चिह्नयति किम्, एतदूरुत्वेन न जानाति किं, सादृश्यातिशयमहिम्ना विशिष्य भेदग्रहासामर्थ्यात् स्वप्रकाण्डं भैम्यूरुत्वेन भैम्यूरू च स्वप्रकाण्डत्वेन जानातीत्यर्थः । लोको यथा न जानाति तथा रम्भापि न जानातीत्यपेरर्थः । कुत एवं ज्ञातमित्यत आह, येन हेतुना सा रम्भा अनयोर्भैम्यूर्वोर्भ्रमेण भ्रान्त्या भैम्या ऊरूरयमिति बुद्ध्वा

---

दोरकरूपगुणस्य लावण्ये जलस्य तारुण्ये कुम्भकारस्य रूपणात् रूपकालङ्कारः, सहकारिचक्रं बिभर्त्तीति शङ्के इत्युत्प्रेक्षा चेत्येतेषां सङ्करः । छेकानुप्रासश्च ॥ ८९ ॥ अत्र चित्रलेखातिलोत्तमादिशब्दश्लेषात् भ्रूनासादौ चित्रलेखातिलोत्तमाद्यप्सरोरूपतारूपणात् श्लेषमूलकरूपकालङ्कारः, एकस्याश्चानेकरूपेणोक्तेः विरोधाभासश्चेति सङ्करः । तेन चाप्सरोभ्योऽप्यतिसुन्दरीयमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । ९१ ॥

विधाय मूर्द्धानमधश्चरञ्चेन्मुञ्चेत्तपोभिः स्वमसारभावम्।
जाड्यञ्च नाञ्चेत् कदली वलीयस्तदा यदि स्यादिदमूरुचारुः॥ ९३॥
ऊरुप्रकाण्डद्वितयेन तन्व्याः करः पराजीयत वारणीयः।
युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः॥ ९४॥
अस्यां मुनीनामपि मोहमूहे भृगुर्महान् यत्कुचशैल शीली।
नानारदाह्लादि मुखं श्रितोरु-र्व्यासो महाभारतसर्गयोग्यः॥ ९५॥

स्वस्यैव निजप्रकाण्डस्यैव उपरि पत्राणि ददाना सती पत्रदानेन चिह्नविशेषं कुर्वती सती जागर्त्ति सावधाना तिष्ठति। अन्यस्तु जेता जेतव्यस्य परस्य उपरि पत्रं दत्वा चिह्नं करोति। नत्वात्मनः, रम्भा तु स्वप्रकाण्डैतदूर्वोर्विभागकल्पनावैधुर्य्येण परस्मिन् कर्त्तव्यमात्मन्येव करोति। रम्भास्तम्भोपरि पत्राणि जायन्ते, तत एवेयमुत्प्रेक्षा। रम्भास्तम्भनिभौ भैम्या ऊरू इति भावः॥ ९२॥

विधायेति। कदली मूर्द्धानं मस्तकम् अथ च अग्रभागम् अधश्चरम् अधोगत विधाय कृत्वा तपोभिस्तपस्याभिश्चान्द्रायणादिभिश्चेद्यदि स्वं स्वीयम् असारभावं निःसारत्वं मुञ्चेत् त्यजेत, यदि च तपोभिर्वलीयोऽत्यन्तं सार्वकालिकं जाड्यं शीतलत्वं नाञ्चेत् न प्राप्नुयात्, यदि सम्भावनायां, तदा इदमूरुचारुः अस्या भैम्या ऊरुवच्चारुर्मनोज्ञः स्यात् भवेदेवं सम्भाव्यते। कदली असारभागभूयिष्ठा, एतदूरू च तच्छून्यौ, तथा कदली सर्वकाले शीतला, एतदूरू च ग्रीष्म एव शीतलौ, शीतकाले तु उष्णौ। तस्माद्दोषद्वयदुष्टत्वात् कदली भैम्यूरुवच्चारुः कथं भवेत्। किन्तु तपोभिर्यदि दोषद्वयं परिहरेत्तदा कथञ्चित् भैम्यूरुतुल्या भवेदित्यर्थः। अन्योऽपि मूर्द्धानमधो विधाय तपसा स्वीयमसारत्वं पापं जाड्यं मूर्खत्वञ्च त्यक्त्वा उत्तमेन समानो भवति। कदलीस्तम्भापेक्षया भैम्यूरू सुन्दराविति भावः। विधायादितपोभिरितिपर्यन्तं जाड्यञ्च नाञ्चेदित्यत्राप्यनुषञ्जनीयम्। 'सुषीमः शिशिरो जड़ः' अ॥ ९३॥

ऊर्विति। तन्व्या भैम्या ऊरुप्रकाण्डद्वितयेन ऊरुस्तम्भयुगेन वारणीयो हस्तिसम्बन्धी करः शुण्डः पराजीयत पराजितः। अतएव स वारणकरः कुण्डलनच्छलेन मण्डलीकरणव्याजेन स्वं स्वीयं मुखपुष्करं मुखाग्रं ह्रिया लज्जया गोपायति अन्यान् न दर्शयति तद्युक्तम्। शुण्डाग्रकुण्डलीकरणं हस्तिस्वभावः। अन्योऽपि इतरस्मात् पराजितो भूत्वा लज्जया मुखसङ्गोपनं करोति, मुखरूपं पुष्करं वा। 'पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले। व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः' अ॥ ९४॥

अस्यामिति। अस्यां भैम्यां मुनीनामपि का कथा कामकिङ्कराणां मादृशां, जितेन्द्रियाणाम्

---

"अत्रातिशयोक्तिभ्रान्तिमदुत्प्रेक्षालङ्काराः" सा॥ ९२॥ अत्र कदल्यां अधःशिरस्त्वादि धर्मासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्तेरतिशयोक्तिः, अनुप्रासश्च॥ ९३॥ अत्र प्रकृतं कुण्डलनं प्रतिषिध्य मुखसंगोपनस्थापनादपह्नुतिः। अप्रकृतस्य लज्जितजनस्य मुखगोपनव्यवहारप्रतीतेः समासोक्तिः। व्यतिरेकश्च॥ ९४॥

क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढिं विदुषी किमस्याः ।
अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥ ९६ ॥

ऋषीणामपि मोहं स्तनादौ पर्वतादिभ्रान्तिं विषयभ्रान्तिञ्च अथ च कामजनितविकारम् ऊहं तर्कयामि, मुनयोऽप्यनया मोहिता इति तर्कयामीत्यर्थः । यद्यस्मात् महान् तापसश्रेष्ठो भृगुर्मुनिविशेषोऽस्या कुचशैलशीली स्तनपर्वताश्रयी, मुनीनां पर्वताश्रयित्वात् पर्वतबुद्ध्या स्तनावाश्रयतीत्यर्थः । अथ च कामपीडितत्वादत्युच्चौ भैमीकुचौ मर्दयितुमिच्छति, अथ च महानतिविस्तृतो भृगुरतटः कुचशैलसम्बन्धी कुचयोरत्युच्चतया पर्वततुल्यत्वात्तत्पार्श्वभागो विस्तृतत्वादतटदेशतुल्य इत्यर्थः । अतटदेशो हि पर्वतेऽवश्यं तिष्ठत्येव । यद्वा भृगुः पर्वतोच्चदेशः कुचयोः शीलमेव शैलं स्वभावं शीलयति अनुकरोतीति तादृशः, भैमीकुचौ पर्वतवदत्युच्चावित्यर्थः । तथा अस्याः मुखम् अनारदाह्लादि न नारदाह्लादं जनयतीति न अपितु नारदमुनेराह्लादजनकमेव भवति, गानादिना नारदमाह्लादयतीत्यर्थः । अथ च कामपीडितत्वात् चुम्बनाभिलाषिणं नारदमाह्लादयतीत्यर्थः । अथ च अस्या मुखं नानारदैर्बहुभिर्द्वात्रिंशत्संख्यकैर्दन्तैः दीर्घत्वह्रस्वत्वादिभेदेन बहुविधैर्दन्तैर्वा मादृशान् आह्लादयितुं शीलमस्य तादृशम् । तथा महाभारतस्य ग्रन्थविशेषस्य सर्गे निर्माणे योग्यः समर्थोऽपि व्यासो द्वैपायनः श्रितौ आश्रितौ ऊरू येन तादृशः । कदलीकाननप्रणयी व्यासः कदलीस्तम्भच्छायाभ्रान्त्या एतदूरू आश्रितवानित्यर्थः । अथ च कामपीडितत्वादेतदूरू समालिङ्ग्य वर्त्तते । अथ च महती भाः यस्य तादृशं यत् रतं सुरतं तस्य सर्गे सृष्टौ योग्य उपयुक्तो व्यासो विस्तारः, श्रितावूरू येन तादृशः, विशालोर्वोः सम्भोगस्य प्राशस्त्यात् विशालावस्या ऊरू इति भावः । महाभा इतिपृथक्पदं व्यासविशेषणं वा । 'भृगुः शुक्रे प्रपाते च जमदग्नौ पिनाकिनि' 'व्यासो मुनौ स्याद्विस्तारे' वि ॥ ९५ ॥

एकश्लोकेन जङ्घे वर्णयति । क्रमोद्गतेति । अस्या भैम्या अधिजङ्घं जङ्घयोर्वर्त्तमाना क्रमेणावरोहक्रमेण उद्गता निर्गता पीवरता पीनता वृक्षस्य अधिरूढिं वृद्धिप्रकारं विदुषी जानती किम् । यथा वृक्षविशेषस्य मूलतो यथोर्द्ध्वं पीवरता तथास्या जङ्घयोरित्यर्थः । अथ च वृक्षाधिरूढिम् आलिङ्गनविशेषं जानती किम् । तथा भ्रमीभङ्गिभिर्मण्डलाकारवेष्टनप्रकारैरावृतमङ्गं येन तथाविधमस्या वासोऽपि परिधानवस्त्रमपि लताया वेष्टितके प्रवीणं कुशलम् । यथा लता भ्रमीभङ्गिभिर्वृक्षं वेष्टयति, तथा परिधानवस्त्रमपि अस्या अङ्गं वेष्टयतीत्यर्थः । अथ च लतावेष्टितके आलिङ्गनविशेषे प्रवीणं निपुणम् । अधिजङ्घमिति सप्तम्यर्थेऽव्ययीभावः । वृक्षाधिरूढिलतावेष्टितके आलिङ्गनविशेषौ । यथाह भरतः । 'एकेन कान्तचरणं चरणेन कान्ताधिष्ठाय जानुमपरेण च चुम्बनार्थम् । आरोढुमिच्छति पतिं तरुवल्लताङ्गी वृक्षाधिरूढिमिति तत् कवयो वदन्ति' इति । 'वल्लीव वृक्षं दयितं मृगाक्षी संवेष्टयन्ती नमयेत्तदास्यम् । यच्चुम्बनार्थं भृशमूर्द्धकाया बुधा लतावेष्टितकं तदाहुः' इति

---

अत्र भृग्वादिशब्दश्लेषमूलिका भृग्वादिऋषीणां कुचशैलसेवित्वाद्युत्प्रेक्षा, अनया च मुनिभिरपि अस्यां मुह्यते का कथान्येषामिति वस्तुध्वनिः ॥ ९५ ॥

अरुन्धतीकामपुरन्ध्रिलक्ष्मी-जम्भद्विषद्दारनवाम्बिकानाम्।
चतुर्दशीयं तदिहोचितैव गुल्फद्वयात्ता यददृश्यसिद्धिः॥ ६७॥
अस्याः पदौ चारुतया महान्ता-वपेक्ष्य सौक्ष्म्याल्लवभावभाजः।
जाता प्रवालस्य महीरुहाणां जानीमहे पल्लवशब्दलब्धिः॥ ६८॥
जगद्वधूमूर्द्धसु रूपदर्पा-द्यदेतयादायि पदारविन्दम्।
तत्सान्द्रसिन्दूरपरागरागै-र्ध्रुवं प्रवालप्रबलारुणं तत्॥ ६९॥

च। अन्योऽप्याह। 'वृक्षारोहणवद्यत्र क्रमादाक्रम्यतेऽङ्कम्। वृक्षाधिरूढकं नाम बुधा आलिङ्गनं विदुः' इति, 'सव्यापसव्ययोगेन लतावत्परिवेष्टनैः। यत्र प्रत्यङ्गमाश्लिष्टं लतावेष्टितकन्तु तत्' इति च। अपरोऽप्याह। बाहुभ्यां कण्ठमालिङ्ग्य कामिनी कान्त उच्छ्रिते। अङ्कमारोपयति यद् वृक्षारूढं तदुच्यते' इति। उपविष्टं प्रियं कान्ता सुप्ता वेष्टयते यदि। तल्लतावेष्टितं ज्ञेयं कामानुभववेदिभिः' इति च॥ ९६॥

एकश्लोकेन गुल्फौ वर्णयति। अरुन्धतीति। इहास्यां भैम्यां यद्यस्मात् उचितैव युक्तैव अदृश्यसिद्धिरदर्शनसिद्धिः गुल्फद्वयेन चरणग्रन्थिद्वितयेन आप्ता प्राप्ता, तत्तस्मादियं भैमी अरुन्धतीकामपुरन्ध्रिलक्ष्मीजम्भद्विपद्दारनवाम्बिकानाम् अरुन्धती वशिष्ठपत्नी कामस्य पुरन्ध्री रतिः लक्ष्मीः श्रीः जम्भद्विपत इन्द्रस्य दाराः पत्नी शची नवसंख्यिका अम्बिका ब्रह्माण्याद्यः एतासां त्रयोदशानां चतुर्दशी चतुर्दशत्वसंख्यापूरणी। निमग्नगुल्फत्वं सामुद्रिकं सुलक्षणं, तदरुन्धत्यादीनां यथा विद्यते; तथा अस्या अपीत्यर्थः। अथ च चतुर्दश्यां तिथौ साधकेन अदृश्यस्य वस्तुनः सिद्धिः प्राप्यते। नवाम्बिका यथा। 'ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा। वाराही नारसिंही च माहेन्द्री चण्डिका तथा। महालक्ष्मीरिति प्रोक्ताः क्रमेणैता नवाम्बिका' इत्यागमः॥ ९७॥

षड्भिः श्लोकैः पादौ वर्णयति। अस्या इति। चारुतया सौन्दर्येण महान्तौ उत्कृष्टौ अस्याः भैम्याः पदौ चरणौ अपेक्ष्य सौक्ष्म्यादतिक्षुद्रत्वाल्लवभावभाजः पदशोभालवत्वं भजतो महीरुहाणां वृक्षाणां प्रवालस्य नवकिसलयस्य पल्लवशब्दलब्धिः पल्लव इति नामप्राप्तिर्जाता इति वयं जानीमहे सम्भावयामः। प्रवाले प्रवृत्तः पल्लवशब्दो न रूढः, किन्तु पदोऽतिसुन्दरभैमीचरणस्य लवः शोभालेशो यत्रेति व्युत्पत्त्या यौगिक इत्यर्थः। नवकिसलयापेक्षयाप्यतिसुन्दरौ भैमीचरणाविति भावः। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' अ॥ ९८॥

जगदिति। एतया दमयन्त्या रूपदर्पात् सौन्दर्यगर्वात् जगद्वधूनां त्रिभुवनरमणीनां मूर्द्धसु मस्तकेषु पदारविन्दं पादपद्मं यद्यस्मात् अदायि दत्तं, ध्रुवमुत्प्रेक्षे, तत्तस्मात् पदार-

---

अत्र श्लेषानुप्राणितोत्प्रेक्षा॥ ९६॥ अत्र दमयन्त्यां चतुर्दशीत्वारोपणात् रूपकम्॥ ९७॥ अत्र जानीमह इति वाच्या क्रियोत्प्रेक्षा, नवकिशलयापेक्षयाऽतिसुन्दरौ भैमीचरणौ इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तु ध्वनिः॥ ९८॥

रुषारुणा सर्वगुणैर्जयन्त्या भैम्याः पदं श्रीः स्म विधेर्वृणीते ।
ध्रुवं स तामच्छलयद्यतः सा भृशारुणैतत्पदभाग्विभाति ॥ १००
यानेन तन्व्या जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी ।
जाने न शुश्रूषयितुं स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः ॥ १०१ ॥
कर्णाक्षिदन्तच्छदबाहुपाणि-पदादिनः स्वाखिलतुल्यजेतुः ।
उद्वेगभागद्वयताभिमाना-दिहैव वेधा व्यधित द्वितीयम् ॥ १०२ ॥

विन्दं तेषु जगद्वधूमूर्द्धसु वर्त्तमानाः सान्द्रा निविडा ये सिन्दूराणां परागा रजांसि तेषां रागः तैः कृत्वा प्रवालात् विद्रुमात् नवकिसलयाद्वा प्रबलमत्यन्तम् अरुणम् आरक्तं जातम्। भैमी त्रिजगद्वधूभ्योऽतिसुन्दरी, तस्याश्चरणौ चातिरक्ताविति भावः ॥ ९९ ॥

रुषेति । रुषा कोपेन अरुणा आरक्ता श्रीर्लक्ष्मीः अथ च शोभा सर्वगुणैः सौन्दर्यादिभिर्जयन्त्याः श्रियं पराजयमानाया भैम्याः पदम् व्यवसायं स्वरूपत्वं विधेर्ब्रह्मणः सकाशात् वृणीते स्म, विधिं याचते स्म । स विधिर्ध्रुवं निश्चितं तां श्रियम् अच्छलयत् प्रतारितवान् । यतो भृशारुणा अद्यापि क्रुद्धत्वादतिरक्ता सा श्रीः एतस्या भैम्याः पदं चरणं भजत इति तादृशी भैमीचरणसेविनी सती विभाति शोभते । श्रीरतिसुन्दरीं भैमीं दृष्ट्वा ईर्ष्यया स्वस्य तत्स्वरूपत्वं भैमीपदशब्देन विधिं याचितवती, विधिस्तु भैम्या अनन्यसाधारणत्वभङ्गभिया तद्दातुमशक्ततया चरणरूपं पदं दत्त्वा तां प्रतारितवानित्यर्थः । अतिमनोज्ञं भैम्याश्चरणारुण्यमिति भावः ॥ १०० ॥

यानेनेति । यानेन गमनेन जितो दन्तिनाथो हस्तिश्रेष्ठो याभ्यां तौ परिशुद्धौ विपादिकादिरहितः पार्ष्णिश्चरणाधोभागो ययोस्तादृशौ तन्व्या भैम्याः पदाब्जराजौ श्रेष्ठकमलतुल्यौ चरणौ कतरस्य राज्ञः कस्य नृपश्रेष्ठस्य प्रणयकलहे नमस्कारार्थं नतेन नम्रेण मूर्ध्ना प्रयोज्यभूतेन स्वमात्मानं शुश्रूषयितुं सेवयितुम् इच्छू अभिलाषुकौ जातौ इत्यहं न जाने । एतादृङ्महत्तपः केन राज्ञा कृतमित्यहं न जानामीत्यर्थः । गजगमनेयमिति भावः । अथ च यानेन विजययात्रया जितो दन्तिनाथो गज-पतिनामा नृपविशेषो याभ्यां तौ परिशुद्धोऽविरुद्धः पार्ष्णिः पश्चाद्वर्त्तिनृपो ययोस्तादृशौ तन्व्याः पदाब्जे पादपद्मे एव राजानौ तौ कतरस्य कस्यापि राज्ञो नतेन मूर्ध्ना स्वं शुश्रूषयितुं न इच्छू अपि तु सर्वस्यैव राज्ञ इत्यहं जाने । अन्योऽप्येवम्विधो राजा गूढमन्त्रत्वात् केन राज्ञा स्वसेवां न कारयतीति ध्वनिः ॥ १०१ ॥

कर्णेति । स्वस्य आत्मनोऽखिलं समस्तं यत्तुल्यं सदृशं तस्य जेतु जैत्रस्य कर्णः श्रवणं च,

---

उत्प्रेक्षालङ्कारः, तेन च भैमी त्रिजगद्वधूभ्योऽतिसुन्दरी तस्याश्चरणौ चातिरक्तौ इति वस्तुद्वयं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । छेकानुप्रासश्च । पदारविन्दमिति रूपकम् ॥९९॥ पदशब्दश्लेषेण चरणस्वरूपयोरभेदाध्यवसायाद् अतिशयोक्तिः, वाच्या क्रियोत्प्रेक्षालङ्कारश्च । तेनातिमनोज्ञं भैम्याश्चरणारुण्यमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०० ॥ अत्र श्लेषानुप्राणितोरूपकालङ्कारः उपमा वा । तेन चातिमनोहरौ भैमीचरणौ इत्यपि च वस्तु व्यज्यते

तुषारनिःशेषितमब्जसर्गं विधातुकामस्य पुनर्विधातुः।
पञ्चस्विहास्याङ्घ्रिकरेष्वभिख्या-भिक्षाधुना माधुकरीसदृक्षा ॥ १०३ ॥
एष्यन्ति यावद्गणनादिगन्ता-न्नृपाः स्मरार्त्ताः शरणे प्रवेष्टुम्।
इमे पदाब्जे विधिना निसृष्टा स्तावत्य एवाङ्गुलयोऽत्र रेखाः ॥ १०४ ॥

अक्षि चक्षुश्च दन्तच्छद ओष्ठश्च बाहुः पाणिश्च पदं चरणश्च एतेषां समाहारस्तत्तथा तदादिर्यस्य आदिना स्तनाद्यङ्गस्य परिग्रहः, तस्य भैम्या अवयवस्य अद्वयताभिमानात् मत्सदृशं सुन्दरान्तरं नास्ति अहमेवैकं सुन्दरमित्यद्वैतगर्वात् उद्वेगभाक् क्रुद्धो वेधा ब्रह्मा इहैव अस्यामेव भैम्यां नत्वन्यत्र द्वितीयं द्वयोः पूरणं कर्णादि व्यधित कृतवान्। विधाता प्रथममेकमेकं कर्णाद्यङ्गं भैम्यां निर्मितवान्, अनन्तरं तेषामनन्यसदृशत्वगर्वं दृष्ट्वा क्रोधात्तन्निवारणार्थं द्वितीयकर्णादि कृतवानित्यर्थः। अतिक्रुद्धो हि दर्पनिवारणार्थं तत्रैव तत्प्रतिद्वन्द्विनं रचयति। अत्र भैमीकर्णौ भैमीकर्णाविवेत्याद्यनन्वयालङ्कारो व्यङ्ग्यः ॥ १०२ ॥

तुषारेति। इहास्यां भैम्यां वर्त्तमानेषु आस्याङ्घ्रिकरेषु वदनचरणद्वय-पाणिद्वयेषु पञ्चसु विधातुर्ब्रह्मणोऽधुना इदानीं वसन्तप्रारम्भे माधुकरी भिक्षाविशेषस्तत्सदृक्षा तत्तुल्या अभिख्याभिक्षा शोभायाच्ञा भवतीति शेषः। किम्भूतस्य तुषारेण हिमेन निःशेषितं विनाशितम् अब्जसर्गं सरोजसृष्टिं पुनर्विधातुं पुनर्निर्मातुं कामोऽभिलाषो यस्य तादृशस्य। माधुकरीभिक्षापि गृहपञ्चक एव भवति। अन्योऽपि विनष्टस्य स्वनिर्मितोत्तमवस्तुनः पुनर्निर्माणार्थं गृहपञ्चकात् किञ्चित् किञ्चित् तदुपादानसामग्रीं याचते। भैम्या वदनाद्यङ्गानि पद्मेभ्योऽप्युत्कृष्टानीति भावः ॥ १०३ ॥

एकश्लोकेन पादाङ्गुलीर्वर्णयति। एष्यन्तीति। स्मरार्त्ताः कामपीड़िता नृपा राजान इमे दृश्यमाने भैम्याः पदाब्जे चरणकमलद्वयरूपे शरणे रक्षके प्रवेष्टुम् आश्रयितुं यावद्गणनाद्यावत्संख्यकात् दिगन्तात् एष्यन्ति समागमिष्यन्ति, विधिना ब्रह्मणा अत्र पदाब्जयोस्तावत्यस्तावत्संख्यिका एव अङ्गुलयोऽङ्गुलिलक्षणा रेखा निसृष्टा निर्मिताः। नृपाः कामपीड़िताः सन्तोऽस्याश्चरणद्वयं शरणीकर्त्तुं दशभ्योऽपि दिग्भ्यः समागमिष्यन्तीति सूचनार्थं ब्रह्मणा दशाङ्गुलिच्छलेन दशरेखा एवात्र निर्मिताः इत्यर्थः ॥ १०४ ॥

---

इत्यलङ्कारेण वस्तुध्वनिः ॥ १०१ ॥ प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। सौन्दर्यविषये दमयन्तीकर्णादय ते इवेत्यनन्वयालङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः ॥ १०२ ॥ मधुकरो यथा प्रतिपुष्पं किञ्चित् किञ्चित् मधु आहृत्य वृत्तिं वर्त्तयते, तथा ब्रह्मचारिप्रभृतयः स्वपोषणार्थं पञ्चभ्य एव गृहेभ्यः, किञ्चित् किञ्चित् भिक्षित्वा वृत्तिं सम्पादयन्ति, एषैव माधुकरी वृत्तिरित्युच्यते। अर्थगतोपमा, यमकम्, छेकानुप्रासः, प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषां संसृष्टिः। तथा च भैम्याः मुखाद्यङ्गपञ्चकलावण्यं पद्मेषु किञ्चिदस्तीति भैम्या वदनाद्यङ्गानि पद्मेभ्योऽप्यत्युत्कृष्टानीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०३ ॥ पदाब्जे इति समासगतोपमालङ्कारः। प्रतीयमानोत्प्रेक्षालङ्कारश्चेति संसृष्टिः। अनया च दमयन्त्याश्चरणयोः दशसंख्यका

प्रियानखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः ।
एतत्पदच्छद्मसरागपद्म-सौभाग्यभाग्यं कथमन्यथा स्यात् ॥ १०५ ॥
यशः पदाङ्गुष्ठनखौ मुखञ्च बिभर्त्ति पूर्णेन्दुचतुष्टयं या ।
कलाचतुःषष्टिरुपैतु वासं तस्यां कथं सुभ्रुवि नाम नास्याम् ॥ १०६ ॥
स्पृष्टातिविश्वा विधिनैव तावत्तस्यापि नीतोपरि यौवनेन ।
वैदग्ध्यमध्याप्य मनोभुवेय-मवापिता वाक्पथपारमेव ॥ १०७ ॥

एकश्लोकेन चरणनखान् वर्णयति। प्रियेति । विधिर्ब्रह्मा मुदा स्वेच्छया प्रियाया भैम्या नखीभूतवतश्चरणनखत्वं प्राप्तवत इन्दोश्चन्द्रस्य इदं प्रत्यक्षसिद्धं साधुदशत्वं सुन्दरावस्थत्वम् अथ च साधु सम्यग्यथा तथा दशत्व दशसंख्यायोगित्वं व्यधात् कृतवान् । भैम्याश्चरणनिर्माणसमये स्वयमागत्य तन्नखत्वमङ्गीकृतवन्तं चन्द्रं दृष्ट्वा विधाता परितोषात् तं शोभनावस्थान्वित कृतवानित्यर्थः । कथमेवमित्यत आह। अन्यथा यद्यस्य साधुदशत्वं न विदध्यात्तदा स इन्दुः एतस्या भैम्याः पदच्छद्मना चरणव्याजेन सरागं लोहितं यत्पद्मं तत्र यत् सौभाग्यं सुभगत्वं तस्य भाग्यं भाजनं कथं स्यात् कथं भवेत्, अपि तु न भवेदेव । पूर्वं चन्द्रस्य पद्मसौभाग्यलाभो दुर्घट एवासीत्, अधुना तु यद्भूतस्तत्र भैमीचरणनखत्वाङ्गीकारपरितोषितेन विधात्रा विधीयमानं साधुदशत्वमेव कारणमित्यर्थः। अन्योऽपि साधुदशत्वेन दुर्लभमपि वस्तु प्राप्नोति । दशापि भैमीचरणनखाश्चन्द्रतुल्या इति भावः॥ १०५ ॥

पुनरप्येकश्लोकेनाङ्गुष्ठनखा पृथक्कृत्वा वर्णयति । यश इति । या इयं भैमी यशः सौन्दर्यादिकीर्त्तिः पादाङ्गुष्ठनखौ मुखञ्च एतच्चतुष्टयलक्षणं पूर्णेन्दुचतुष्टयं षोडशकलचन्द्रचतुष्टयं बिभर्त्ति धारयति । तस्यामस्यां सुभ्रुवि दमयन्त्यां कलानां चन्द्रांशानाम् अथ च शिल्पादिविद्यानां चतुःषष्टिः कथं नाम वासमवस्थानं न उपैतु न उपगच्छतु अपितु उपैत्वेव । पूर्णचन्द्रो हि षोडशकलश्चन्द्रस्य चतुष्टयस्य प्रत्येकं षोडशकलाश्चतुर्गुणिताश्चतुःषष्टिर्भवन्तीति । चन्द्रचतुष्टयाधिकरणे चतुःषष्टिकलावस्थानं युज्यत एवेत्यर्थः । 'कला स्यान्मूलरैवृद्धौ शिल्पादावंशमात्रके षोडशांशे च चन्द्रस्य कलनाकालमानयोः' मे ॥ १०६ ॥

इत्थं प्रत्यङ्गवर्णनजनितस्वचापल्यमपहरन् सम्प्रति लावण्याद्यतिशयेन वर्णयितुमशक्येयमिति

---

अङ्गुलयः सन्ति, ताश्च मनोज्ञत्वात् राज्ञामुपास्या इति वस्तुद्वय व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०४ ॥ अत्र प्रकृतं पदं प्रतिषिध्य सरागपद्मस्थापनेनापह्नुतिरलङ्कारः। साधुदशत्वं व्यधादिति साध्ववस्थत्वदशसंख्यावत्त्वयो र्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः, श्लेषमूला प्रतीयमानोत्प्रेक्षा वा। इन्दोः नखीभूतत्वासम्बन्धेऽपि तत्सम्बन्धकथनादतिशयोक्तिश्छेकानुप्रासश्चेति मिथो निरपेक्षतया संसृष्टिः। तथा च भैमीचरणनखा अतिरक्ताश्चन्द्रतुल्याश्चेति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ १०५ ॥ व्यस्त रूपकम्, इन्दुकलासङ्गीतादिकलाविषययोर्भेदेऽपि कलापदश्लेषेणाभेदप्रतिपादनादतिशयोक्तिश्चेति निरपेक्षतया संसृष्टिः। तया चेयं दमयन्ती चतुःषष्टिकामकलापूर्णा सुन्दरीति वस्तु व्यज्यते इत्यलङ्कारेण

इति स चिकुरादारभ्यैतां नखावधि वर्णयन् हरिणरमणीनेत्रां चित्राम्बुधौ तरदन्तरः।
हृदयभरणोद्वेलानन्दः सखीवृतभीमजा-नयनविषयीभावे भावं दधार धराधिपः ॥१०८॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
गौडोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत्सप्तमः ॥ १०९ ॥

सूचयति। सृष्टेति। इयं भैमी विधिनैव ब्रह्मणैव तावदादौ अतिविश्वा लोकातीता सृष्टा निर्मिता, त्रिलोकीवस्तुभ्योऽप्यतिसुन्दरी निर्मितेत्यर्थः। अनन्तरं यौवनेन तस्यापि विधिसर्ज्जनस्यापि उपरि ऊर्द्धं नीता प्रापिता, यौवनजनितसौन्दर्य्यातिशयस्य विधेरपि स्रष्टुमशक्यत्वात् विधिनिर्मितशैशवसौन्दर्य्यापेक्षयाऽधिकं सौन्दर्य्यं प्रापितेत्यर्थः। ततोऽप्यनन्तरञ्च मनोभुवा कामेन वैदग्ध्यं लीलाचातुरीम् अध्याप्य उपदिश्य वाक्पथस्य वचनवर्त्मनः पारमेव अवापिता प्रापिता अनिर्वचनीयैव कृतेत्यर्थः। अथ च वाक्पथस्य पारं विद्यापारं प्रापिता। अन्योऽपि बुद्धिमान् केनचिदध्यापितो वाङ्मयपारं प्राप्नोति। सर्वथा वर्णयितुमशक्येयमिति भावः ॥ १०७ ॥

एवं नलकर्तृकभैमीवर्णनं समाप्य छन्दोऽन्तरेण सर्गसमाप्तिं सूचयति। इतीति। स धराधिपो नल इति पूर्वोक्तप्रकारेण चिकुरात् केशादारभ्य नखावधि पादनखपर्यन्तं हरिणरमणीनेत्रां मृगीलोचनाम् एतां भैमीं वर्णयन् सन् सखीभिर्वृताया वेष्टिताया भीमजाया नयनविषयीभावे नयनगोचरत्वे भावम् अभिप्रायं दधार, सम्प्रत्यहं सखीगणसहिताया भैम्या दृश्यो भवेयमित्यभिलाषं कृतवान् किम्भूतः, चित्राम्बुधौ भैम्या अद्भुतसौन्दर्यदर्शनादेवाश्चर्यरससमुद्रे तरत् प्लवमानमन्तरमन्तःकरणं यस्य सः। तथा चिरमनोरथगोचरीभूतायाः भैम्या दर्शनादेव हृदयस्य मनसो भरणेन परिपूरणेन उद्वेल उल्लङ्घितसीम आनन्दो यस्य तादृशः, उल्लङ्घितवेलत्वादानन्दस्य समुद्रतुल्यत्वेनाधिक्यं सूचितम्। समुद्रोऽपि कदाचिद्वेलामतिक्रम्य वहिर्निर्गच्छति। हरिणीवृत्तमिदम्। रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ १०८ ॥

श्रीहर्षमिति। गौडोर्वीशकुलस्य गौडभूमीन्द्रवंशस्य प्रशस्तिः स्तुति स्तस्या भणिते रचनाया भ्रातरि एकजनकत्वात् सहोदरे साम्यनेन कृतेति भावः। अन्यत् सर्वं पूर्ववत्। प्रशस्तिभगिनीभ्रातर्ययमिति क्वचित्पाठः, प्रशस्तेः स्त्रीलिङ्गत्वाद्भगिनीत्वम् ॥ १०९ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायां सप्तमः सर्गः समाप्तः ॥

---

वस्तुध्वनिः ॥ १०६ ॥ अत्र एकस्यैव दमयन्तीरूपवस्तुनः क्रमेणानेकधर्मसम्बन्धकथनात् पर्यायालङ्कारः। तदुक्तं दर्पणे,—'क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्। भवति क्रियते वा चेत्तदा पर्याय इष्यते' ॥ १०७ ॥ अत्र हरिणरमणीनेत्रामिति लुप्तोपमा, चित्राम्बुधाविति रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १०८ ॥ ७म सर्गः समाप्तः ॥

# अष्टमः सर्गः।

अथाद्भुतेनास्तनिमेषनिद्रमुन्निद्ररोमाणममुं युवानम्।
दृशा पपुस्ताः सुदृशः समस्ताः सुता च भीमस्य महीमघोनः॥ १॥
कियच्चिरं दैवतभाषितानि निह्नोतुमेतं प्रभवन्तु नाम।
पलालजालैः पिहितः स्वयं हि प्रकाशमासादयतीक्षुडिम्भः॥ २॥

अस्य नलस्येन्द्रादिदौत्यकर्त्तव्यतां वर्णयितुमष्टमं सर्गमारभमाणः प्रथमं सखीवृतभीमजा-नयनविषयीभावे भावं दधार धराधिप इत्यनेनैकवाक्यतार्थमिन्द्रादिवरदानेन दृश्यत्वादृश्यत्वयो-र्द्वयोरपि स्वायत्तत्वाद् दृश्यतामुपगतं नलं सखीसहिता दमयन्ती ददर्शेत्याह। अथेति। अथ नलस्य दमयन्तीदर्शनविषयीभावाभिलापानन्तरं समस्ताः सकलाः सुदृशो दीर्घनयना नलदर्शनेन सार्थकनयना वा ताः सख्यस्तथा महीमघोनो भूमीन्द्रस्य भीमस्य सुता दमयन्ती च उन्निद्ररोमाणं चिरम् विश्रब्धभैमीविलोकनजनिताह्लादाधिक्यादुद्गतरोमाञ्चम् अमुं युवानं नलम् अद्भुतेन कथमेतादृशः सुन्दरः पुरुष इत्याश्चर्येण अस्ता त्यक्ता निमेषनिद्रा नेत्रसङ्कोचधारा यत्र क्रियायां तद्यथा स्यात्तथा दृशा चक्षुषा पपुः सादरं ददृशुः। अद्भुतेन भैमीसौन्दर्यदर्शन-जनिताश्चर्येण अस्तनिमेषनिद्रम् अतएव सत्वोदयात् उन्निद्ररोमाणम् अमुं युवानं नलमिति वा। दृशेतिजात्याश्रयत्वादेकवचनम्। अस्मिन् सर्गे पूर्वसर्गवदिन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः॥ १॥

देवतावचनजनितमपि नलस्य प्रकाशमन्यथाध्यवस्यति। कियदिति। देवतानामिन्द्रादीनां भाषितानि 'भूयादन्तर्द्धिसिद्धे'रित्यादीन्यन्तर्द्धानविधायकानि वचनानि कियच्चिरं कियन्तं चिर-कालं व्याप्य एतं नलं निह्नोतुम् आवरितुं प्रभवन्तु नाम समर्थानि भवन्तु, अपि तु अतिचिरं सङ्गोपयितुं न पारयन्तीत्यर्थः। दृष्टान्तयति हि प्रसिद्धौ पलालानां तृणविशेषाणां जालैः समूहैः पिहित आच्छादित इक्षुडिम्भ इक्षुकडम्बः स्वयं प्रकाशं प्रकटताम् आसादयति प्राप्नोति। सार्द्र-वालुकामयप्रदेशे झटित्यङ्कुरप्ररोहार्थमिक्षुकडम्बाः पलालैराच्छाद्यन्त इति कृषिव्यवहारः। यथा पलालाच्छन्नोऽपीक्षुकडम्बस्तथाविधस्थानसम्पर्कात् प्रकाशतां याति, तथा देवतावचनेन विहिता-न्तर्द्धिसिद्धिरपि नलो भैमीसम्पर्कात् व्यक्तीबभूवेति दृष्टान्तः। आङ्पूर्वः सद्धातुश्चुरादौ पठ्यते॥ २॥

---

अत्र महीमघोनः इति समासगता लुप्तोपमा, भावोदयो नामालङ्कारश्च छेकानुप्रासेन संसृज्यते। "भैम्याः पृथगुपादानं दर्शनस्यानुरागपूर्वकत्वलक्षणविशेषद्योतनार्थः" जी॥ १॥ "अत्र नलेक्षुडिम्भयोः बिम्बप्रतिबिम्बभावेन समानधर्मनिर्देशाद् दृष्टान्ताऽलङ्कारः" जी। यदाह दर्पणकारः, —'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति॥ २॥

अपाङ्गमप्याप दृशो न रश्मि-र्नलस्य भैमीमभिलष्य यावत्।
स्मराशुगः सुभ्रुवि तावदस्यां प्रत्यङ्गमापुङ्खशिखं ममज्ज ॥ ३ ॥
यदक्रमं विक्रमशक्तिसाम्या-दुपाचरद् द्वावपि पञ्चबाणः।
कृतं न वैमुख्यममुष्य कस्मात् बाणैरनर्द्धार्द्धविभागभाग्भिः ॥ ४ ॥
तस्मिन्नलोऽसाविति साऽन्वरज्यत् क्षणं क्षणं क्वेह स इत्युदास्त।
पुरः स्म तस्यां वलतेऽस्य चित्तं दौत्यादनेनाथ पुनर्न्यवर्त्ति ॥ ५ ॥

नलस्य दर्शनमात्रेणापि भैमी कामवशा जातेत्याह। अपाङ्गमिति। नलस्य दृशोश्चक्षुषो- रश्मिर्ज्योति भैमीम् अभिलष्य विषयीकर्तुमना भूत्वा यावत् अपाङ्गमपि अतिसान्निध्यादविलम्ब- प्राप्यं नयनप्रान्तमपि न आप,तावत् प्रथममेव स्मरस्य कामस्य आशुगो वाणोऽस्यां सुभ्रुवि भैम्यां प्रत्यङ्गं प्रत्यवयवम् आपुङ्खशिखं पुङ्खाग्रपर्यन्तं ममज्ज मग्नो बभूव। नलकर्तृकदर्शनात्प्रागेव भैमी झटिति नलं दृष्ट्वा कामपीड़िता जातेत्यर्थः। अभिलाषे नयनरश्मेरौपचारिकं कर्तृत्वं, भैमीम् अभिलष्य स्थितस्य नलस्येति वा। आपुङ्खशिखमिति 'अपपरिवहिरञ्चवः पञ्चम्या वे'त्यव्ययी- भावः। शिखा शाखा वर्हिचूड़ा लाङ्गलिक्यग्रमात्रके' मे ॥ ३ ॥

अनन्तरं द्वावपि युगपत् कामाधीनौ जातावित्याह। यदिति। पञ्चवाणः कामो विक्रमरूपायाः शक्तेः साम्यात द्वयोरुपरि तुल्यत्वात् विक्रमस्य उत्साहस्य शक्तेः सामर्थ्यस्य च तुल्यत्वाद्वा यद्य- स्मात् अक्रमं क्रमरहितं युगपत् द्वावपि भैमीनलौ उपाचरत् उपगतवान् स्वाधीनौ चकार। तस्मा- दमुष्य पञ्चवाणस्य वाणैः सम्मोहनादिभिः पञ्चभिः शरैः कस्मात् कुतोऽपि वैमुख्यं पराङ्मुखत्वं न कृतं, यतः कामेन शरव्यभूतयोर्द्वयोरपि भैमीनलयोरुपरि युगपदेव विक्रमशक्तिप्रकाशः कृतस्ततस्तस्य पञ्चभिर्वाणैरपि खले कपोतिकान्यायात् युगपदेव तौ भिन्नावित्यर्थः। ननु कामवाणाः सम्मोहना- दयो वहवस्तत् तेषामर्द्धं भैम्यां पततु, अर्द्धञ्च नले पततु,कथं सर्व एव द्वयोरुपरि युगपत् पतिताः, इत्यतो वाणान् विशिनष्टि, किम्भूतैः अनर्द्धार्द्धविभागभाग्भिः अर्द्धार्द्धभागमनर्हद्भिः पञ्चानां वाणानां समभागद्वयकरणाशक्यत्वात्। द्वावपि समकालमेव परस्परमनुरक्तौ जाताविति भावः। कस्मादित्यनन्तरमपिकारो बोध्यः। पूर्ववाक्ये यच्छब्दस्योपादानादुत्तरवाक्ये तच्छब्दस्यार्थत्वम्। वैमुख्यमित्यत्र वैमत्यमिति पठित्वा अन्यथा व्याचक्षते प्राञ्चः ॥ ४ ॥

उभयोर्भावमाह। तस्मिन्निति। सा दमयन्ती तस्मिन् पुरुषे असौ नल इति निश्चित्य क्षणम् अन्वरज्यत् अनुरक्ता बभूव। स महानुभावो नल इह अतिसुरक्षिते कन्यान्तःपुरे क्व कुत इति विचिन्त्य क्षणम् उदास्त उदासीना बभूव। क्षणं क्षणं प्रतिक्षणमिति द्विरुक्तपदं वा। अस्य नलस्य चित्तं पुरः प्रथमं तस्यां भैम्यां वलते स्म चञ्चलमभूत् अनुरक्तं जातम्। अथानन्तरम् अनेन

---

अत्र श्लोके दृष्टिपातस्मराशुगपातयोः समकालिकत्वेनोक्तेः कार्यकारणयोः पौर्वापर्यव्यत्यय- रूपातिशयोक्तिरलङ्कारः ॥ ३ ॥ अत्र विषमैः पञ्चभिः शरैर्युगपदुभयत्रसमप्रहारात् विरोधस्य स्मरमहिम्ना समाधानाद् विरोधाभास श्छेकानुप्रासश्चेति संसृष्टिः ॥ ४ ॥

कयाचिदालोक्य नलं ललज्जे कयापि तद्भासि हृदा ममज्जे ।
तं कापि मेने स्मरमेव कन्या भेजे मनोभूवशभूयमन्या ॥ ६ ॥
कस्त्वं कुतोवेति न जातु शेकु-स्तं प्रष्टुमप्यप्रतिभातिभागात् ।
उत्तस्थुरभ्युत्थितिवाञ्छयेव निजासनान्नैकरसाः कृशाङ्ग्यः ॥ ७ ॥

नलेनास्य चित्तेन वा दौत्याद्धेतोर्न्यवर्ति । दौत्यमङ्गीकृतवतो मम ईदृगभिलाषोऽनुचित इति निवृत्तम् । पुर इत्यत्र पुनरिति क्वचित्पाठः ॥ ५ ॥

श्लोकद्वयेन तात्कालिकीं सखीनां चेष्टामाह । कयाचिदिति । कयाचिन्मुग्धया भैमीसख्या नलम् आलोक्य ललज्जे प्रकाशितलज्जाख्यव्यभिचारिभावया जातम् । कयापि मध्यया भैमीसख्या तद्भासि नलस्य कान्तौ हृदा मनसा ममज्जे मग्नम्, अहो किमिदं सौन्दर्यमित्याश्चर्यनिमग्नमनसा कामाधीनया जातमित्यर्थः । कापि कन्या कुमारी अतिमुग्धा भैम्यीसखी तं नलं स्मरमेव काममेव मेने निश्चिकाय, यः स्मरोऽतिसुन्दरत्वेन प्रतिक्षणं सखीभिः कथ्यते स एवायमित्यतिमौग्ध्यान्निश्चिकायेत्यर्थः । अन्या काचित्प्रगल्भा भैमीसखी नलं दृष्ट्वा मनोभूवशभूयं कामवशत्वमेव भेजे जगाम । अननुभूतसम्भोगरसापि नलसौन्दर्यातिशयदर्शनात् तेन सह सम्भोगाभिलाषिणी जातेत्यर्थः । तं वीक्ष्य काचित् कुलजा ललज्जे इति क्वचित्पाठः वशभूयमिति भुवो भावे सुप्यप्रादावि'ति भावे क्यः ॥ ६ ॥

कस्त्वमिति । कृशाङ्ग्यस्तन्वङ्ग्यो भैमीसख्योऽप्रतिभाया अप्रतिपत्त्या अप्रागल्भ्यस्य अतिभारात् आधिक्यात् तं नलं त्वं कः किन्नामधेयोऽसि कुतो देशाद्वाऽऽगत इति प्रष्टुमपि जातु कदाचित् नलस्य दर्शनावधि तावत्कालपर्यन्तमपि न शेकुः न समर्था बभूवुः । तर्हि किं चक्रुरित्यत आह, नैको रसो यासां तादृश्यः शृङ्गाराद्भुताद्यनेकरसयुक्ताः सख्यः केवलमभ्युत्थितिवाञ्छयेव अभ्युत्थानचिकीर्षयेव निजासनात् स्वीयस्वीयासनात् उत्तस्थुः उत्तिष्ठन्ति स्म । अत्राप्रतिपत्तिजनितमुत्थानमभ्युत्थानत्वेनोत्प्रेक्षितम् । अभ्युत्थानं दूरागतजनसम्मानायोत्थानम् । अपरिचितं पुरुषं दृष्ट्वा लज्जादिना जडीभूय तं किञ्चिदपृष्ट्वैव तस्माद्देशादपसरन्तीति कुमारीणां व्यवहारः । वाञ्छयैवेति पाठे एवकारोऽप्यर्थे, अभ्युत्थानेच्छयापि निजासनान्नोत्तस्थुः यतः

---

अत्र भावोदयोऽलङ्कारः । प्रथमार्द्धे भैम्याः परार्द्धे च नलस्य प्रागानन्दोदयस्ततश्च विषाद इति द्वयोर्भावयोः सन्धी उक्तौ । भावलक्षणमाह दर्पणकारः, 'सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते" इति । अत्र प्रधानतयाभिव्यक्तौ आनन्दविषादौ सञ्चारिणाविति । तथाहि द्वयोरपि सम एव हर्षविषादयोरुदय आसीदिति तात्पर्यम्, रागस्तु समप्ररूढ एवानयो रिति भावः ॥ ५ । अत्र भावोदयोऽलङ्कारः, भ्रान्तिमान्, अन्त्यानुप्रासश्चेति संसृष्टिः । अत्र ललज्जे इति लज्जारूपस्य सञ्चारिभावस्य स्वशब्देनोक्तत्वात् रसगतोऽयं दोषः । उक्तञ्च दर्पणे, 'रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि दोषा रसगता मता' इति ॥ ६ ॥

स्वाच्छन्द्यमानन्दपरम्पराणां भैमी तमालोक्य किमप्यवाप।
महारयं निर्झरिणीव वारा-मासाद्य धाराधरकेलिकालम्॥ ८॥
तत्रैव मग्ना यदपश्यदग्रे नास्या दृगस्याङ्गमयास्यदन्यत्।
नादास्यदस्यै यदि बुद्धिधारां विच्छिद्य विच्छिद्य चिरान्निमेषः॥ ९॥
दृशापि सालिङ्गितमङ्गमस्य जग्राह नाग्रावगताङ्गहर्षैः।
अङ्गान्तरेऽनन्तरमीक्षिते तु निवृत्य सस्मार न पूर्वदृष्टम्॥ १०॥

एकस्मिन् नले रसो दर्शनानुरागो यासां तादृश्यः नलसौन्दर्यदर्शने विस्मिताः सख्यः केवलं चित्र-पुत्तलिकावत्तस्थुरित्यर्थः॥ ७॥

अथ नलावलोकनेन दमयन्त्या हर्षाधिक्यमाह। स्वाच्छन्द्यमिति। भैमी तं नलम् आलोक्य किमपि वक्तुमशक्यम् आनन्दपरम्पराणां हर्षधाराणां स्वाच्छन्द्यं निष्प्रतिबन्धकत्वम् आधिक्यम् अवाप प्राप्ता, उपमिनोति—निर्झरिणीव नदी यथा धाराधराणां मेघानां केलिकालं क्रीडासमयं वर्षाकालम् आसाद्य प्राप्य किमपि वारां जलानां महारयं वेगातिशयं प्राप्नोति, तथा प्राप। नलस्य दर्शनमात्रेणैव भैमी लोकोत्तरमानन्दं प्राप्तवतीति भावः। स्वाच्छन्द्यमिति 'छन्दो वशेऽप्यभिप्राये' इत्यभिधानात् स्व आत्मीयः छन्दोऽभिप्रायो यस्य स स्वच्छन्दः प्रतिबन्धकशून्यस्तस्य भावस्त-त्त्वम्॥ ८॥

षड्भिः श्लोकैर्नयनप्रीतिं वर्णयति। तत्रैवेति। अस्या भैम्या दृक् चक्षुरस्य नलस्य यत् अग्रे प्रथमम् अपश्यत्, तत्रैवाङ्गे मग्ना निमग्ना सती अस्य अन्यदङ्गं तदा न अयास्यत् न प्राप्स्यत्, यदि चिराच्चिरकालात् परं जातो निमेषो नेत्रसङ्कोचो विच्छिद्य विच्छिद्य मध्ये मध्ये पूर्वदृष्टाङ्ग-दर्शनविच्छेदं कृत्वा अस्यै दमयन्त्यै बुद्धिधारां बुद्धिपरम्पराम् अङ्गान्तरदर्शनेऽवधानवत्तां न अदास्यत्। निमेषाद् बुद्धिं प्राप्यैव अङ्गान्तरमपश्यदित्यर्थः। अतिसुन्दराङ्गदर्शनस्य निमेषेण विच्छेदे जनिते सति अनन्तरं तस्यैवाङ्गस्य पुनर्दर्शनेच्छया अङ्गान्तरं ददर्श, न तु प्रथमदृष्टाङ्गदर्शनविर-क्तेति भावः। अयास्यददास्यदिति क्रियाऽनिष्पत्तौ लृङ्॥ ९॥

दृशेति। सा दमयन्ती दृशा चक्षुषा आलिङ्गितमपि सन्निकृष्टीकृतमपि अस्य नलस्य अङ्गं कर्म, अग्रे प्रथमम् अवगतम् आलोकितं यदङ्गं तस्माज्जातैः हर्षैर्हेतुभिः न जग्राह न प्रत्यक्षविषयी-चकार। दृष्टमप्यंगं पूर्वदृष्टांगदर्शनजनितहर्षवशान्न ज्ञातवतीत्यर्थः। अनन्तरं हर्षानुभवात्परं अङ्गान्तरे ईक्षिते प्रत्यक्षेण गृहीते सति हर्षानुभवात् निवृत्त्य तु पुनः पूर्वदृष्टमङ्गं न सस्मार न स्मृत-वती। यथा पूर्वदृष्टांगजन्यहर्षातिशयात् सन्निकृष्टमप्यंगान्तरं न जग्राह, तथा परक्षणदृष्टांगजन्य-हर्षातिशयात् पूर्वदृष्टमंगं न सस्मारेत्यर्थः। नलस्य सर्वेऽप्यवयवा अतिसुन्दरा इति भावः॥ १०॥

---

वाच्या क्रियोत्प्रेक्षालङ्कारः॥ ७॥ श्रौती पूर्णोपमा, छेकानुप्रासश्चेति संसृष्टिः॥ ८॥ निमेषस्य बुद्धिधारादानासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, वृत्त्यनुप्रासश्चेति संसृष्टिः॥ ९॥ अत्राङ्गस्य दृगालिङ्गने कारणे सत्यपि तद्ग्रहणकार्यं नोत्पन्नं, तत्र च प्रथमावलोकितावयवहर्षः

हित्वैकमस्यापघनं विशन्ती तद्दृष्टिरङ्गान्तरभक्तिसीमाम् ।
चिरं चकारोभयलाभलोभात् स्वभावलोला गतमागतञ्च ॥ ११ ॥
निरीक्षितञ्चाङ्गमवीक्षितञ्च दृशा पिबन्ती रभसेन तस्य ।
समानमानन्दमियं दधाना विवेद भेदं न विदर्भसुभ्रूः ॥ १२ ॥
सूक्ष्मे घने नैषधकेशपाशे निपत्य निष्पन्दतरीभवद्भ्याम् ।
तस्यानुबन्धं न विमोच्य गन्तुमपारि तल्लोचनखञ्जनाभ्याम् ॥ १३ ॥

हित्वेति। स्वभावेन लोला चञ्चला तस्या भैम्या दृष्टिश्चक्षुरस्य नलस्य एकं प्रथमदृष्टम् अपघनम् अङ्गं हित्वा त्यक्त्वा अंगान्तरभक्तिसीमाम् अंगान्तरविभागमर्यादां विशन्ती भजन्ती सती उभयोः प्रथमदृष्टपश्चाद्दृष्टयोरंगयोर्यो लाभो विषयीकरणं तत्र लोभात् लुब्धत्वाद्धेतोश्चिरं बहुकालं व्याप्य गतमागतञ्च गमनागमने चकार। द्वयोरप्यंगयोरतिसुन्दरतयाह्लादातिशयजनकत्वात् द्वयमपि त्यक्तुं न शशाकेत्यर्थः। स्वभावेन चपलो हि गमनागमने करोत्येव। अन्योऽपि वणिक् लाभलोभात् स्वदेशविदेशयोः क्रयविक्रयार्थं गमनागमने करोति। भक्तीत्यत्र भुक्तीति क्वचित्पाठः अंगान्तरस्य भुक्तिरालोकनं तस्या सीमां मर्यादां विशन्ती, अंगान्तरमवलोकयन्तीत्यर्थः। अपघनेति अपपूर्व्वाद्धन्तेः 'अपादंग' इति डः हनोघनादेशश्च। 'अंगं प्रतीकोऽवयवोऽपघनः' अ ॥ ११ ॥

निरीक्षितमिति। निरीक्षितं प्रथमदृष्टम् अवीक्षितं प्रथममदृष्टं पश्चाद्दृष्टञ्च तस्य नलस्य अंगं दृशा चक्षुषा रभसेनोत्सुकेन पिबन्ती सादरमालोकयन्ती इयं विदर्भसुभ्रूर्भैमी समानं दृष्टांगदर्शनादृष्टांगदर्शनयोस्तुल्यमानन्दं दधाना धारयन्ती सती भेदम् इदं पूर्वदृष्टत्वान्नानन्दकरम् इदन्त्वपूर्वदृष्टत्वादानन्दातिशयजनकमित्युभयोरंगयोस्तारतम्यं न विवेद न निश्चिकाय। लोकस्य हि दृष्टवस्तुनि अनादरो भवति, अदृष्टे चौत्सुक्यं भवति, तथात्र न। द्वयोरप्यंगयोर्लोकातिशयसौन्दर्यशालित्वात्, तुल्यानुरागा भूत्वा द्वयमपि ददर्शेति भावः ॥ १२ ॥

सूक्ष्मे इति। तस्या भैम्या लोचने चक्षुषी एव खञ्जनौ पक्षिविशेषौ ताभ्यां, सूक्ष्मेऽतिश्लक्ष्णे घने निविड़े नैषधस्य नलस्य केशपाशे केशसमूहे अथ च केशश्लक्ष्णे पाशे पक्षिधारणरज्जुविशेषे निपत्य सन्निकर्षं प्राप्य अथ च नितरां पतित्वा निष्पन्दतरीभवद्भ्यां निमेषरहिताभ्याम् अथ च पाशबद्धतया निश्चलीभवद्भ्यां सद्भ्यां तस्य केशपाशस्य अनुबन्धं सम्बन्धं विमोच्य त्यक्त्वा अथ च अनु पश्चात् बन्धं बन्धनं त्यक्त्वा गन्तुं विपर्यासकरणं परिहर्त्तुम् अथ च उड्डयितुं नापारि

---

हेतुरुक्तः तेनोक्तनिमित्तविशेषोक्तिः, द्वितीयार्धे स्मरणकारणे सत्यपि तदभावात् अपरा विशेषोक्तिः, स्मरणसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिश्छेकानुप्रासश्चेति ॥ १० ॥ अत्र गतागतं प्रति स्वभावलोलेति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ११ ॥ अत्र भेदज्ञानसम्बन्धेऽपि तदसम्बन्धकथनादतिशयोक्तिः, भेदाज्ञानं प्रति समानमानन्दं दधानेति पदानां हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेति सङ्करः ॥ १२ ॥

भूलोकभर्त्तुर्मुखपाणिपाद-पद्मैः परीरम्भमवाप्य तस्य ।
दमस्वसुर्दृष्टिसरोजराजि-श्चिरं न तत्याज सबन्धुबन्धम् ॥ १४ ॥

तत्कालमानन्दमयी भवन्ती भवत्तरानिर्वचनीयमोहा ।
सा मुक्तसंसारिदशारसाभ्यां द्विस्वादमुल्लासमभुङ्क्त मिष्टम् ॥ १५ ॥

दूते नलश्रीभृति भाविभावा कलङ्किनीयं जनि मेति नूनम् ।
न संव्यधान्नैषधकायमायं विधिः स्वयं दूतमिमां प्रतीन्द्रम् ॥ १६ ॥

न शक्तम् । अतिमनोज्ञं नलकेशपाशं भैमी चिरं ददर्शेत्यर्थः । खञ्जनोऽपि सूक्ष्मत्वात् झटिति दर्शनाविषये निविड़े पाशे पतित्वा पाशबद्धत्वान्निश्चलीभूत्वा तद्बन्धनं त्यक्त्वा पदमपि उड्डयितुं न शक्नोति । भैम्या नयने खञ्जनपक्षितुल्यत्वादतिचञ्चले, नलस्य च केशाः सूक्ष्मत्वान्निविड़त्वाच्च सुलक्षणाः सुदृश्याश्चेति भावः । 'सूक्ष्मास्तु पाणिदशनाङ्गुलिपर्वकेशाः' इति सामुद्रकम् । विमोच्येति स्वार्थे णिङ्, क्वचिद्विमुच्येति पाठः ॥ 'पाशः कचान्ते सङ्घार्थः कर्णान्ते शोभनार्थकः' वि ॥ १३ ॥

भूलोकेति । दमस्वसुर्दमयन्त्या दृष्टिश्चक्षुरेव सरोजराजिः कमलश्रेणी तस्य भूलोकभर्त्तुः राज्ञो नलस्य मुखपाणिपादपद्मैर्मुखपद्मेन पाणिपद्माभ्यां पादपद्माभ्याञ्च परीरम्भं सम्बन्धम् अवाप्य प्राप्य सबन्धुबन्धं सगोत्रसम्बन्धं सजातीयस्नेहं चिरं न तत्याज । अन्योऽपि चिरात् बन्धुभिरालिङ्गनं प्राप्य स्नेहं न त्यजति । भैमी अतिसुन्दरान् नलस्य मुखपाणिचरणान् चिरेण सादरमालोकयामासेति भावः ॥ १४ ॥

इत्थं प्रत्यङ्गं नलमालोकयन्त्या भैम्या आनन्दमोहौ द्वावपि युगपज्जातावित्याह । तत्काल-मिति । सा भैमी मुक्तसंसारिणोर्ये दशे अवस्थे तयोर्यौ रसौ ताभ्यां द्विस्वादं द्विविधरसं मिष्टं अतिस्वादु बहुतरम् उल्लासं हर्षम् अभुङ्क्त अनुभूतवती । किम्भूता-यतस्तत्कालं नलदर्शनसमये आनन्दमयी आनन्दाभिन्नब्रह्मरूपा अथ च आनन्दबहुला भवन्ती, तथा भवत्तरोऽतिशयेन भवन् अनिर्वचनीयो लोकोत्तरो मोहः कामविकारविशेषो यस्याः स्तादृशी, अतिसुरक्षितेऽन्तःपुरे नलागमनं कथमित्यस्माद्धेतोर्भवत्तरोऽनिर्वचनीयो मोहो भ्रान्तिर्यस्याः सेति वा । आनन्दस्वरूपत्वं मुक्त-दशा, 'आनन्दो ब्रह्मणो रूपम्' इति श्रुतेः । अनिर्वचनीयमोहत्वं संसारिदशा । नलं दृष्ट्वा मोहसम्भिन्नमानन्दातिशयं सानुबभूवेति भावः ॥ १५ ॥

ननु नल एवायमिति निश्चयं विना तस्मिन् जातानुरागाया भैम्याः कथं न पातिव्रत्यभङ्गोऽभू-

---

पाशशब्दश्लेषमहिम्ना केशकलापे पक्षिबन्धनरज्जुत्वारोपणात् तथा लोचने खञ्जनत्वारोपात् श्लिष्टं साङ्गं रूपकमलङ्कारः ॥ १३ ॥ अत्र दमयन्त्या दृष्टिसरोजराजौ बन्धुव्यवहारारोपणात् समासोक्तिः, मुखपाणिपद्मैरिति दृष्टिसरोजेतिच रूपकद्वयंचेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ १४ ॥ "अत्र भावोदयातिशयोक्त्यलंकारौ" सा । मुक्तिदशायामानन्दमयी संसारिदशायाञ्चानिर्वचनीय-मोहेति यथासंख्यनिर्देशात् यथासंख्यमलङ्कारश्च ॥ १५ ॥

पुण्ये मनः कस्य मुनेरपि स्यात् प्रमाणमास्ते यदघेऽपि धावत् ।
तच्चिन्ति चित्तं परमेश्वरस्तु भक्तस्य हृष्यत्करुणो रुणद्धि ॥ १७ ॥
सालीकदृष्टे मदनोन्मदिष्णु-र्यथापशालीनतया न मौनम् ।
तथेव तथ्येऽपि नले न लेभे मुग्धेषु कः सत्यमृषाविवेकः ॥ १८ ॥

दित्याशङ्कां कविरपहरति । दूत इति । इय दमयन्ती नलश्रीभृति हंसादिमुखेन श्रुतस्य नलस्य कान्तिधारिणि दूते भाविभावा नलबुद्ध्या भविष्यदनुरागा सती कलङ्किनी पापयुक्ता अकीर्त्तिमती च मा जनि मा भवतु, इति नूनम् इतीव हेतोर्विधिर्ब्रह्मा इमां भैमीं प्रति उद्दिश्य नैषधस्य नलस्य कायो देह एव माया यस्य तादृशं कपटनलवेशधारिणम् इन्द्रमेव स्वयं दूतं न संव्यधात् न चकार । नूनमुत्प्रेक्षायां, कपटनलवेशधारणयोग्यतायां सत्यामपि इन्द्रो नलरूपं धृत्वा स्वीयदूत्यार्थं यन्नागतवान्, तत्रैवंविधो विधेरभिप्राय उत्प्रेक्षितः । नलनिश्चयाभावेऽपि सत्य एव नलेऽनुरागान्न भैम्याः पातिव्रत्यभङ्गोऽभूदिति भावः ॥ १६ ॥

ननु माभूद्भैम्याः पातिव्रत्यभङ्गः किन्तु नलत्वनिश्चयमन्तरेण पतिव्रतायास्तस्याः परपुरुषानुरागोऽनुचित एवेत्याशङ्कामपनयन्नाह । पुण्य इति । आस्तां तावत्कामवशंवदाया राजपुत्र्या भैम्याः कथा, मुनेरपि कस्य मनोऽन्तःकरणं पुण्ये विषये प्रमाणं निश्चितं स्थिरतरं स्यात् भवेत्, अपि तु न कस्यापि । यद्यस्मात् अघेऽपि परदारगमनादौ पापकर्मण्यपि धावत् आस्ते शीघ्रं गच्छत् भवति । मुनेर्मनः पुण्यविषय एव नियतं प्रवर्त्तत इति न, किन्तु पापविषयेऽपि प्रवर्त्तते । तत्राप्ययं विशेषः, पापविषये शीघ्रमविचार्यैव प्रवर्त्तते, अपिकारेण शीघ्रगमनार्थकधावधातुनिष्पादितेन धावदिति पदेन चायमर्थो लब्धः । सर्वस्यापि प्रायेणैवं भवतीति भैम्यास्तथाविधो मानसानुरागो न दूषणावहो जात इति भावः । नन्वेवं तर्हि सर्वेऽपि मुनयः पापिनो भवेयुरित्याशङ्कां परिहरति । तु किन्तु परमेश्वरो हृष्यत्करुण उद्यत्कृपः सन् तच्चिन्ति पापचिन्तनशीलमपि भक्तस्य निजसेवकस्य चित्तं रुणद्धि पातकान्निवर्त्तयति । पापचिन्तनस्वभावमपि भक्तजनान्तःकरणं परमेश्वरकृपया पापकर्मणि न प्रवर्त्तत इत्यर्थः । तच्चिन्तिपरमेश्वरचिन्तीति वा । ननु पुण्यश्लोको नलोऽपि इन्द्रादिदौत्यमङ्गीकृत्य कथं भैम्यामनुरागं प्राप्तवान्, यद्दर्शने कामुकजन इव तस्याः स्तनाद्यङ्गानि वर्णयामासेत्याशङ्कां परिहरतीति वास्य श्लोकस्यावतारणिका ॥ १७ ॥

इत्थमनौचित्यं परिहृत्य प्रकृतमनुसरन् भैमी कथयामासेत्याह । सेति । सा भैमी अलीकदृष्टे तन्मयतायाम् असत्यावलोकिते नले मदनेन उन्मदिष्णुरुन्मत्ता सती अपशालीनतया निर्लज्जतया यथा पूर्वं मौनं न लेभे, सम्प्रलापाख्यदशायां किमप्यवादीत्तथैव तथ्येऽपि सत्येऽपि नले मौनं न लेभे प्राप्तवती अवादीदित्यर्थः । कथमेवमित्यत आह, मुग्धेषु मोहं प्राप्तेषु जनेषु सत्यमृषाविवेकस्तथ्यातथ्ययोर्विचारः कः, अपि तु नैव ; मुग्धानां तथ्यातथ्यविवेचनाशून्यत्वात्तद्वचनं

"अत्रोत्प्रेक्षालङ्कारः" सा । "नूनमिति वितर्के वस्तुविचारत्वान्नायमुत्प्रेक्षालङ्कारः" जी ॥ १६ ॥ "अत्रार्थान्तरन्यासोऽलङ्कारः" सा । छेकानुप्रासश्च ॥ १७ ॥

व्यर्थीभवद्भावपिधानयत्ना स्वरेण साथ श्लथगद्गदेन ।
सखीचये साध्वसबद्धवाचि स्वयं तमूचे नमदाननेन्दुः ॥ १९ ॥
नत्वा शिरोरत्नरुचापि पाद्यं सम्पाद्यमाचारविदातिथिभ्यः ।
प्रियाक्षरालीरसधारयापि वैधी विधेया मधुपर्कतृप्तिः ॥ २० ॥
आत्मापि शीलेन तृणं विधेयं देया विहायासनभूर्निजापि ।
आनन्दबाष्पैरपि कल्प्यमम्भः पृच्छा विधेया मधुभिर्वचोभिः ॥ २१ ॥

न दोषायेति भावः । शालीनतमेति पाठे स्वभावतः शालीनतमा अधृष्टापि मदनोन्मदिष्णुः सती यथा पूर्वम् अलीकदृष्टे नले मौनं नाप न प्राप्तवतीत्यन्वयः । 'विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयो' मे ॥ १८ ॥

व्यर्थीभवदिति । सा दमयन्ती सखीचये सखीसमूहे साध्वसेन आकस्मिकपुरुषदर्शनजनितभयेन बद्धवाचि मूकतां प्राप्ते सति अथानन्तरं स्वयमात्मना तं नलम् ऊचे । किम्भूता श्लथो विरलश्वासौ गद्गदोऽस्पष्टश्चेति तथाभूतेन स्वरेण कृत्वा व्यर्थीभवन् विफलीभवन् भावपिधानयत्नः सात्विकभावगोपनप्रयासो यस्या स्तादृशी, तथा नमन् नम्रीभवन् आननेन्दुर्मुखचन्द्रो यस्याः सा । एकस्यापि गद्गदस्वरलक्षणस्य सात्विकभावस्य प्रकाशनादेव भावान्तराणामनुमानात् तद्गोपनप्रयासस्य वैयर्थ्यम् । अनुरक्तमपि पुरुषं लज्जाधिक्यान्मुखमानमय्य कथयन्तीति मुग्धानां स्वभावः । 'स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदश्च वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृता' मदसम्मदपीडाद्यैर्वैस्वर्यं गद्गदं विदुः' द ॥ १९ ॥

अथेतः परं भैमीवचनमनुवदति । नत्वेति । त्रिभिर्विशेषकम् । हे पुरुषश्रेष्ठ आचारविदा विधिज्ञेन शिष्टाचारवेदिना वा जनेन अतिथिभ्यो गृहागतेभ्यो जनेभ्यो नत्वा प्रणम्य शिरोरत्नरुचापि जलस्यानुपस्थितौ चूडामणिकिरणेनापि पाद्यं पादाय वारि सम्पाद्यं देयम् । अतिथिभ्यश्चरणक्षालनाय पाद्यदानस्यावश्यकत्वादुदकानुपस्थितौ तुल्यतया नतशिरोमणिकिरणेनापि तद्दातव्यमित्यर्थः । अतिथिं त्वां प्रणमामीति भावः । आचारविदेति प्रतिवाक्यं श्लोकत्रयेऽप्यनुषञ्जनीयम् । तथा प्रियाक्षराली प्रियवचनाक्षरपङ्क्तिस्तस्या रसो माधुर्यं तस्य धारयापि परम्परयापि वैधी विधिबोधिता अवश्यानुष्ठेया नतु स्वारसिकी अतिथीनां मधुपर्कजन्या तृप्तिर्विधेया करणीया । मधुपर्कोपकरणासम्भवेऽपि प्रियवचनमपि वक्तव्यमित्यर्थः । मम प्रियवचनं श्रुत्वा मधुपर्कजन्यतृप्तिं लभस्वेति भावः । मधुपर्कतृप्तिरिति सम्बन्धषष्ठ्यास्तृतीयाया वा तत्पुरुषः ॥ २० ॥

आत्मेति । आचारविदा शीलेन सद्वृत्तेन आत्मापि शरीरमपि तृणं विधेयं कर्त्तव्यम् ।

---

अर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ १८ ॥ स्वभावोक्तिः, आननेन्दुरित्युमा, भावोदयश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १९ ॥ अत्र आचारविदेति पदार्थस्य पाद्यादिसम्पादनहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, शिरोरत्नरुचा पाद्यमिति पाद्याद्यारोपस्य प्रकृतातिथिसत्कारोपयोगित्वात् परिणामालङ्कार श्छेकानुप्रासश्चेति संसृष्टिः ॥ २० ॥

पदोपहारेऽनुपनम्रतापि सम्भाव्यतेऽपां त्वरयापराधः।
तत्कर्त्तुमर्हाञ्जलिसञ्जनेन सुसंभृतिप्राञ्जलतापि तावत् ॥ २२ ॥
पुरः परित्यज्य मयात्यसर्ज्जि स्वमासनं तत् किमिति क्षणन्न।
अनर्हमप्येतदलंक्रियेत प्रयातुमीहा यदि चान्यतोऽपि ॥ २३ ॥

अतिथीनामग्रे सेवार्थं शरीरमपि तृणवदतिनम्रं कर्त्तव्यमित्यर्थः। अथ च आस्तरणतृणस्याप्यभावे उपवेशनार्थम् आत्मापि तृणस्थाने विधेय इत्यर्थः। तथा निजापि स्वीयापि आसनभूरुपवेशनभूमिर्विहाय त्यक्त्वा अतिथिभ्यो देया। परिष्कृतभूमेरभावे स्वाधिष्ठानभूमिरपि झटिति त्यक्त्वा दातव्येत्यर्थः। तथा आचमनीयजलानुपस्थितौ आनन्दवाष्पैरपि प्रमोदाश्रुभिरपि अम्भो जलं कल्प्यम्। अतिथिदर्शनमात्रेण प्रमुदितमनसा भवितव्यमित्यर्थः। अथ च आचमनीयादिजलस्थाने आनन्दवाष्पा एव विधेया इत्यर्थः। तथा मधुभिः प्रियैर्वचोभिः पृच्छा कच्चित् कुशलं ते महानुभावेति कुशलजिज्ञासा विधेया कर्त्तव्या। अन्योपकरणाभावे तृणादिभिरपि अतिथय सम्भावनीयाः। तथा च स्मृतिः। 'तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता। एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन' इति। 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' अ। शीलं स्वभावे सद्वृत्ते' वि ॥ २१ ॥

पदोपहार इति। पदोपहारे चरणक्षालनविषये त्वरया झटिति अपां जलानाम् अनुपनम्रतापि अनानयनमपि यस्मादाचारविदा अपराधः सम्भाव्यते, जलानयनस्य विलम्बान्ममायमपराधो जात इति संशय्यते। तत्तस्मात् अञ्जलिसञ्जनेन अञ्जलिबन्धेन सुसम्भृतौ सम्यगातिथ्यसामग्रीस्थाने विधेया. प्राञ्जलतापि ऋजुतापि तावत् प्रथमं कर्त्तुम् अर्हा योग्या, तावतापि तदपराधशान्तिर्भवतीति भावः। यद्वा अपां त्वरया जलाहरणार्थसम्भ्रमेण अनुपनम्रता नमस्काराभावलक्षणोऽपराधो यस्मात् सम्भाव्यते तस्मात् प्रथमम् अञ्जलिसञ्जनेन सुसम्भृतिरूपा प्राञ्जलता कर्त्तव्या। वाक्यद्वयेऽप्यपिकारौ निश्चितार्थौ। जलाहरणादिव्यग्रतां त्यक्त्वा प्रथमं नमस्कारः कर्त्तव्यस्तेनैव सकलसम्भारजनितातिथीनां तुष्टिर्भवति, तस्मात् प्रथमं प्रणामेन अतिथिं त्वां सम्भावयामीति भावः। सुसम्भृतिरित्यसमस्तप्रथमान्तपाठे यावत् सुसम्भृतिर्भवति तावत् अञ्जलिसञ्जनेन प्राञ्जलतापि कर्त्तुमर्हेत्यन्वयः। पदोपहार इत्यत्र यदोपहार इति क्वचित्पाठः यदा उपहारे अतिथ्युपढौकनविषये तत्तदा अन्यत्सर्वं पूर्ववत् ॥ २२ ॥

पुर इति। पुरः प्रथममेव मया स्वं स्वीयमासनं परित्यज्य अत्यसर्ज्जि भवते दत्तं, तदेतदासनम् अनर्हमपि स्त्रीजनसम्बन्धित्वाद्भवादृशामयोग्यमपि क्षणमल्पकालं व्याप्य किमिति कुतो हेतोर्भवता नालंक्रियेत, भूषितं न क्रियताम् अपि त्वलंक्रियतामित्यर्थः। यदि च यद्यपि अन्य-

---

स्वात्मा तृणमिति आनन्दवाष्पैरम्भ इत्याद्यारोपस्य प्रकृतातिथिसत्कारोपयोगित्वात् परिणामालङ्कारः ॥ २१ ॥ प्रथमार्द्धगतवाक्यार्थस्य द्वितीयार्द्धगतवाक्यार्थहेतुत्वात् काव्यलिङ्गम् वृत्त्यनुप्रासश्च ॥ २२ ॥

निवेद्यतां हन्त समापयन्तौ शिरीषकोषम्रदिमाभिमानम्।
पदौ कियद्दूरमिमौ प्रयासे निधित्सते तुच्छदयं मनस्ते ॥ २४ ॥
अनायि देशः कतमस्त्वयाद्य वसन्तमुक्तस्य दशां वनस्य।
त्वदाप्तसङ्केततया कृतार्थां श्रव्यापि नानेन जनेन संज्ञा ॥ २५ ॥
तीर्णः किमर्णोनिधिरेव नैष सुरक्षितेऽभूदिह यत् प्रवेशः।
फलं किमेतस्य तु साहसस्य न तावदद्यापि विनिश्चिनोमि ॥ २६ ॥

तोऽपि अन्यत्र देशेऽपि प्रयातुं गन्तुम् ईहा चेष्टा वर्त्तते, तथापि क्षणमात्रमलंक्रियतामित्यर्थः। यद्यपि स्वस्य देशान्तरगमनोत्सुकत्वादासनस्य चानर्हत्वादवस्थातुं नेच्छसि, तथापि क्षणमात्रावस्थाने का बाधेत्यर्थः। क्रियेतेति प्रार्थनायां लिङ् ॥ २३ ॥

निवेद्यतामिति। हे सुन्दर तुच्छदयं निष्कृपं ते तव मनः कर्तृ कियद्दूरं कियद्दूरदेशपर्यन्तं प्रयासे गमनायासविषये इमौ अति कोमलतया प्रत्यक्षविषयीभवन्तौ भवदीयौ पदौ निधित्सते नियोक्तुमिच्छति, हन्तेति खेदे इदं निवेद्यतां कथ्यताम्। किम्भूतौ पदौ शिरीषाणां शिरीषपुष्पाणां कोषः समूहस्तस्य म्रदिमाभिमानं मार्दवगर्वं समापयन्तौ नाशयन्तौ, शिरीषकोषादप्यतिसुकुमारौ चरणौ कियद्दूरगमनेन परिश्रमयितुमिच्छसि, तत् कथ्यतामित्यर्थः। अन्योऽपि निर्दयः सुकुमारं जनं प्रयासे प्रेरयति। यस्मिन् देशे गमिष्यसि स देशो वक्तव्य इति भावः ॥ २४ ॥

अनायीति। हे सुन्दर अद्य अस्मिन् दिवसे त्वया कतमः किन्नामको देशो वसन्तेन मुक्तस्य परित्यक्तस्य वनस्य दशामवस्थां अनायि नीतः। यथा वसन्तरहितं वनं निःशोभं भवति, तथा भवद्रहितः कतमो देशो निःशोभो जात इत्यर्थः। किन्नामकाद्देशादागतोऽसि, कथ्यतामिति भावः। तथा त्वयि वाच्ये आप्तः प्राप्तः सङ्केतो वाचकत्वसम्बन्धो यया तस्या भावस्तत्ता तया हेतुना कृतार्थां सफला संज्ञापि नामापि अनेन मद्रूपेण जनेन न श्रव्या न श्रोतुमर्हा, अपि तु नामश्रवणे बाधा नास्तीत्यर्थः। किं ते नाम कथ्यतामिति भावः ॥ २५ ॥

तीर्ण इति। हे सुन्दर सुरक्षिते दौवारिकैरतिसावधानतया रक्षिते इहान्तःपुरे यत् तव प्रवेशोऽभूत्, एष किं अर्णोनिधिरेव समुद्र एव त्वया न तीर्णः, अपि तु अत्र प्रवेशः समुद्रोत्तरण-

---

आसनालङ्करणकारणाभावेऽपि तत्कार्योक्तेः "अत्र विभावनालङ्कारः" सा। छेकानुप्रासश्च ॥ २३ ॥ समापयन्तौ इवेति प्रतीतेः प्रतीयमानोत्प्रेक्षा, च्छेकानुप्रासश्चेत्यनयोः संसृष्टिः। तथा शिरीषकोषम्रदिमाभिमानं समापयन्तावित्यनेन पदयोस्ततोऽपि मृदुत्वप्रतीतेर्व्यतिरेकालङ्कारो व्यज्यते इति प्रतीयमानोत्प्रेक्षया वस्तुध्वनि ॥ २४ ॥ अन्यस्य धर्मं कथमन्यो वहतु इति न्यायेन वनस्य दशायाः अन्यदेशकर्त्तृकानयनासम्भवात् तद्दशामिव दशामिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारः, संज्ञायाः श्रव्यतां प्रति तदाप्तसङ्केततया कृतार्थेति वाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च ॥ २५ ॥

तव प्रवेशे सुकृतानि हेतु-र्मन्ये मदक्ष्णोरपि तावदत्र ।
न लक्षितो रक्षिभटैर्यदाभ्यां पीतोऽसि तन्वा जितपुष्पधन्वा ॥ २७ ॥
यथाकृतिः काचन ते यथा वा दौवारिकान्धङ्करणी च शक्तिः ।
रुच्योरुचोभिर्जितकाञ्चनीभि-स्तथासि पीयूषभुजां सनाभिः ॥ २८ ॥
न मन्मथस्त्वं स हि नास्तिमूर्त्ति-र्नवाश्विनेयः स हि नाद्वितीयः ।
चिह्नैः किमन्यैरथवा तवेयं श्रीरेव ताभ्यामधिका विशेषः ॥ २९ ॥

तुल्य इत्यर्थः । तु पुनरेतस्य अन्तः पुरप्रवेशलक्षणस्य साहसस्य अविचार्यकारित्वस्य किं फलं प्रयोजनं, तदद्यापि एतत्ममयपर्यन्तमपि तावन्न विनिश्चिनोमि नावधारयितुं शक्नोमि। किमर्थ-मन्तःपुरप्रवेशरूपमतिदुर्घटं कर्म स्वीकृतवान्, कथ्यतामित्यर्थः ॥ २६ ॥

तवेति । अत्रान्तःपुरे तव प्रवेशे मदक्ष्णोरपि अपिकार एवार्थे मम चक्षुषोरेव सुकृतानि पुण्यानि तावद्धेतुः कारणमित्यहं मन्ये सम्भावयामि, तावदिति वाक्यालङ्कारे । जन्यत्वावच्छिन्नं प्रत्यदृष्टस्य कारणतया तव प्रवेशलक्षणं कार्यम् प्रति मम चक्षुषोरेव शुभादृष्टं हेतुरित्यर्थः । कथमेवं ज्ञातमित्यत आह यद्यस्मात् तन्वा शरीरेण जितः पुष्पधन्वा कामो येन तादृशोऽतिसुन्दरो ऽसि त्वं, रक्षिभटैर्दौवारिकैर्न लक्षितो न दृष्टः । आभ्यां मदक्षिभ्यां पीतो यथेच्छमवलोकितः। तस्मा-न्मदक्ष्णोरेव पुण्यानि तवात्र प्रवेशे हेतुरिति मन्ये । यदिभवान् रक्षिगणैर्दृष्टो भवेत्तदा तैर्निवार्य-माणस्य भवतोऽत्र प्रवेशः कथं भवेत्, अतो मदीयपुण्यातिशयबलादेव तैरलक्षितप्रवेशो भवान् मया दृश्यत इति भावः । चक्षुषोः पुण्यातिशयवत्त्वमौपचारिकम् ॥ २७ ॥

यथेति । हे सुन्दर यथा ते तव काचन लोकोत्तरातिरमणीया आकृतिः शरीरं, यथा वा तव दौवारिकाणां द्वारपालानां अन्धङ्करणी अनन्धा अन्धाः क्रियन्तेऽनयेति तथाविधा शक्तिः सामर्थ्यञ्च, यथा च त्वं जितकाञ्चनाभिस्तिरस्कृतसुवर्णाभिरतिगौरीभी रुचोभिर्दीप्तिभी रुच्योऽभिलापयोग्यस्तथा त्वं पीयूषभुजां देवानां सनाभिः ज्ञातिरसि। देवत्वमन्तरेणैतत्त्रितयं न घटतेऽतस्त्वं कश्चन देवोऽसीति मन्ये इत्यर्थः । रुच्यो रुचीभिरित्यत्रापि यथावेत्यनुषञ्जनीयम् । अन्धङ्करणीति 'नग्ना-न्धाढ्यस्थूलपलितप्रियसुभगान् कर्मणः कृञोऽभूततद्भावे करणे ख्युन्डिति ख्युन् । 'सपि-ण्डास्तु सनाभयः' अ ॥ २८

इत्थमस्य देवत्वं निश्चित्य वितर्कयति । नेति । हे सुन्दर त्वं मन्मथः कन्दर्पो न हि यतः स

"अत्रान्तःपुरप्रवेशार्णवतरणलक्षणवाक्यार्थयोर्निर्दिष्टसामानाधिकरण्यान्यथानुपपत्त्या तत् तुल्य-मिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धो वाक्यार्थनिष्ठनिदर्शनाभेदः" जी । सुरक्षिते इत्यादि-वाक्यार्थस्य तीर्णः किमित्यादिवाक्यार्थहेतुत्वात् काव्यलिङ्गम् ॥ २६ ॥ जितपुष्पधन्वेति उपमा, प्रथमार्द्धगतवाक्यार्थं प्रति द्वितीयार्धगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, आदरेण दर्शनस्य पीतत्वाभेदाध्यवसायादतिशयोक्तिः ॥ २७ ॥ अत्र चतुर्थपादवाक्यं प्रति पादत्रयवाक्यानां हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ २८ ॥

आलोकतृप्तीकृतलोक यस्त्वा-मसूत पीयूखमयूखमेतम्।
कः स्पर्द्धितुं धावति साधु सार्द्ध-मुदन्वता नन्वयमन्ववायः॥ ३०॥
भूयोऽपि बाला नलसुन्दरं तं मत्वाऽमरं रक्षिजनाक्षिबन्धात्।
आतिथ्यचाटून्यपदिश्य तत्स्थां श्रियं प्रियस्यास्तुत वस्तुतः सा॥ ३१॥
वाग्जन्मवैफल्यमसह्यशल्यं गुणाधिके वस्तुनि मौनिता चेत्।
खलत्वमल्पीयसि जल्पितेऽपि तदस्तु वन्दिभ्रमभूमितैव॥ ३२॥

मन्मथो नास्त्यविद्यमाना मूर्त्तिर्यस्य तादृशः। न वा त्वं आश्विनेयोऽश्विनीकुमारः, हि यतः स आश्विनेयोऽद्वितीयो न अपि तु द्वितीयसहित एव। अतिरमणीयाकृतित्वाद् द्वितीयरहितत्वाच्च त्वं कन्दर्पाश्विनीकुमाराभ्यां भिन्नः कश्चिदेव इत्यर्थः। अथवेति पूर्वापरितोषे अथवा अन्यैरनङ्गत्वा-दिभिश्चिह्नैः किम् अपि तु अन्यैश्चिह्नैर्न किमपि प्रयोजनं, यतस्ताभ्यामनङ्गाश्विनेयाभ्यामधिका इयं दृश्यमाना तव श्रीरेव शोभैव विशेषस्तदन्यत्वज्ञापिका। मन्मथाश्विनेयाभ्यामपि त्वमतितरां सुन्दर इति भावः। अस्तीति तिङन्तप्रतिरूपकमव्ययम्॥ २९॥

आलोकेति। आलोकेन दर्शनेन तृप्तीकृतः सन्तोषितो लोको येन ननु हे तथाविध, एतं पीयूषमयूखं त्वां योऽन्ववायोऽसूत जनयामास। स कोऽयमन्ववायो वंश उदन्वता समुद्रेण सार्द्धं सह साधु युक्तं यथा तथा स्पर्द्धितुम् अहमपि भवत्सदृश इति स्पर्धां कर्त्तुं धावति सत्वरो भवति। समुद्रोऽप्यालोकेन उद्योतेन तृप्तीकृतलोकं चन्द्रमसूत, अतस्तेन सह स्पर्द्धा युक्तैव। कस्मिन् वंशे जातोऽसीत्यपि कथ्यतामिति भावः। 'आलोकौ दर्शनोद्योतौ' 'वंशोऽन्ववायः सन्तानः' अ॥ ३०॥

अथ पुनरपि भैमी तं स्तौति स्मेत्याह। भूय इति। सा बाला भैमी तं नलं रक्षिजनानां दौवारिकाणाम् अक्षिबन्धात् चक्षुःप्रतिरोधनात् नलसुन्दरं नलवन्मनोहरम् अमरं देवं मत्वा निश्चित्य आतिथ्यचाटूनि अतिथिषु प्रयोज्यानि प्रियवचनानि अपदिश्य व्याजीकृत्य वस्तुतो याथार्थ्येन तत्स्थां तस्मिन्दूते विद्यमानां प्रियस्य नलस्य श्रियं शोभां भूयः पुनरपि अस्तुत स्तौति स्म। दौवारिकाणामन्धीकरणान्नायं नलः, किन्तु तत्सदृशः कश्चिद्देव इति निश्चित्य आतिथ्यप्रियवचन-व्याजेन नलशोभासदृशीं तस्य शोभां स्तौति स्मेत्यर्थः।॥ ३१॥

स्तुतिप्रकारमाह। वाग्जन्मेति। गुणैरद्भुते आश्चर्यभूते वस्तुनि मौनिता मूकीभावश्चेत्, गुणाद्भुतं वस्तु न स्तूयते चेत्, तर्हि असह्यशल्यं दुःसहशल्यतुल्यं वाग्जन्मनो वचनोत्पत्तेः वैफल्यं निष्फलत्वं भवति। मूकेन सह तस्य न कोऽपि विशेष इत्यर्थः। तर्ह्यल्पमेव वक्तव्य-मित्याशङ्क्याह, - बहुगुणेषु अल्पीयसि अत्यल्पे गुणे जल्पितेऽपि कथितेऽपि खलत्वं क्रूरत्वमायाति

"निश्चयगर्भसन्देहो व्यतिरेकालङ्कारः" सा॥ २९॥ स्पर्द्धतेरुपमावाचकत्वात् उदन्वता स्पर्द्धितुमित्युपमा, पीयूषमयूखमितिरूपकं तच्च आलोकेति असूतेति शब्दयोः श्लेषेण अनुप्राणितम्, छेकानुप्रासः, वृत्त्यनुप्रासश्च॥ ३०॥ "अत्रान्यधर्मस्य अन्यसम्बन्धासम्भवेन प्रियस्य श्रियमिव श्रियमिति सादृश्याक्षेपान्निदर्शना भेदः" जी। नलसुन्दरमित्युपमा, छेकानुप्रासश्चेति संसृष्टिः॥३१॥

कन्दर्प एवेदमविन्दत त्वां पुण्येन मन्ये पुनरन्यजन्म ।
चण्डीशचण्डाक्षिहुताशकुण्डे जुहाव यन्मन्दिरमिन्द्रियाणाम् ॥ ३३ ॥
शोभायशोभिर्जितशैवशैलम् करोषि लज्जागुरुमौलिमैलम् ।
दस्रौ हठश्रीहरणादुदस्रौ कन्दर्पमप्युज्झितरूपदर्पम् ॥ ३४ ॥

खला हि बहुगुणस्य किञ्चिद्गुणं कथयन्ति । तत्तस्मात् वन्दिनः स्तुतिपाठकस्य यो भ्रमो वावदूकत्वात् स्तुतिपाठकोऽयमिति भ्रान्तिस्तस्य भूमिता आश्रयतैव अस्तु भवतु । वरं लोकाः स्तुतिपाठकोऽयमिति कथयन्तु स दोषो लघुरेवेत्यर्थः । गुणाद्भुतं त्वां स्तोष्यामि, तत्र मम वावदूकता मर्षयितव्येति भावः ॥ ३२ ॥

कन्दर्प इति । कन्दर्प एव पुण्येन त्वां त्वद्रूपं इदं दृश्यमानम् अन्यत् जन्म जन्मान्तरं पुनरविन्दत लेभे, इत्यहं मन्ये सम्भावयामि । किं तस्य पुण्यमित्यत आह, यद्यस्मात् चण्डीशस्य शिवस्य चण्डं दुःसहं यदक्षि तृतीयं चक्षुस्तदेव हुताशस्य वह्नेः कुण्डं तस्मिन् इन्द्रियाणां मन्दिरं गृहं शरीरं जुहाव हुतवात् । शिवस्य तृतीयनयनरूपे वह्निकुण्डे शरीरविसर्जनजनितपुण्यातिशयेनैव कामः पूर्वापेक्षयातिसुन्दरं त्वामेव जन्म प्राप्तवानित्यर्थः । अन्योऽपि कामनया वह्निकुण्डे शरीरं परित्यज्य पूर्वजन्मापेक्षया उत्तमं जन्म प्राप्नोति । कन्दर्पापेक्षयातिसुन्दरोऽसीति भावः ॥ ३३ ॥

शोभेति । हे सुन्दरोत्तम त्वं शोभा च यशांसि च तैः कान्तिकीर्त्तिभिः शोभाजनितयशोभिर्वा कृत्वा जितः शैवः शिवसम्बन्धी शैलोऽतिधवलकैलासपर्वतो येन तादृशं ऐलं इलातनयं पुरूरवसं हठेन बलात्कारेण श्रियः शोभाया हरणाद् ग्रहणात् लज्जया गुरुरवनतो मौलिर्मस्तको यस्य तादृशं करोषि । यस्य बलवतोऽपि श्रीरन्येन हठाद् गृह्यते, स लज्जया नतशिरा भवति । स्वापेक्षयाधिकशोभाशालिनं भवन्तमनुस्मृत्य पुरूरवा लज्जया मस्तकं नमयतीत्यर्थः । तथा शोभायशोभिर्जितशैवशैलौ दस्रौ अश्विनीकुमारौ हठश्रीहरणात् उदस्रौ उद्गतनयनजलौ दुःखाधिक्याद्रोदनयुक्तौ करोषि । यस्य च दुर्बलस्य श्रीरन्येन बलाद् गृह्यते, स किञ्चित् कर्त्तुमक्षमतया दुःखाधिक्याद् रोदिति । स्वापेक्षयाधिकशोभाशालिनं भवन्तं श्रुत्वा अश्विनीकुमारावपि दुःखिनौ भवत इत्यर्थः । तथा शोभायशोभिर्जितशैवशैलं कन्दर्पमपि काममपि हठश्रीहरणात् उज्झितस्त्यक्तो रूपदर्पः सौन्दर्यगर्वो येन तादृशं करोषि। यस्य चाहङ्कारिणः श्रीरन्येन बलाद् गृह्यते, स विगताहङ्कारो भवति। भवन्तमनुस्मृत्य कामः सौन्दर्यगर्वं परित्यक्तवानित्यर्थः । चतुर्भ्योऽप्यधिकसुन्दरस्त्वमितिभावः ॥ ३४ ॥

---

गुणाद्भुतवस्तुरूपाप्रस्तुतसामान्यात् प्रस्तुतविशेषप्रतीतेः अप्रस्तुतप्रशंसालङ्कारः, असह्यशल्यमित्यन्तं निरङ्गं रूपकम्, चतुर्थपादार्थं प्रति पूर्वपादत्रितयार्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ३२ ॥ वाच्या क्रियोत्प्रेक्षा, वृत्त्यनुप्रासश्छेकानुप्रासः, समेन कार्येण प्रस्तुते कन्दर्पे अप्रस्तुतस्य वह्निकुण्डपातिनः कस्यचिद् व्यवहारारोपणात् समासोक्तिश्चेत्येतेषां संसृष्टिः ॥ ३३ ॥ लज्जागुरुत्वाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तित्रयम्, ततश्च व्यतिरेको व्यज्यते, तुल्ययोगिता, वृत्त्यनुप्रासश्छेकानुप्रासः श्रुत्यनुप्रासोन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ३४ ॥

अवैमि हंसावलयो वलक्षा-स्त्वत्कान्तिकीर्त्तेश्चपलाः पुलाकाः ।
उड्डीय युक्तं पतिताः स्रवन्ती-वेशन्तपूरं परितः प्लवन्ते ॥ ३५ ॥
भवत्पदाङ्गुष्ठमपि श्रिता श्री-र्ध्रुवं न लब्धा कुसुमायुधेन ।
जेतुस्तमेतत् खलु चिह्नमस्मि-न्नर्धेन्दुरास्ते नखवेशधारि॥ ३६ ॥
राजा द्विजानामनुमासभिन्नः पूर्णां तनूकृत्य तनूं तपोभिः ।
कुहूषु दृश्येतरतां किमेत्य सायुज्यमाप्नोति भवन्मुखस्य ॥ ३७ ॥

अवैमीति । हे सुन्दरोत्तम वलक्षा धवला हंसावलयो राजहंसपङ्क्तयस्त्वत्कान्तिकीर्त्तेस्तव शोभाकीर्त्तेश्चपलाश्चञ्चलाः प्रसरणशीलाः पुलाकास्तुच्छधान्यांशा इत्यहमवैमि जानामि । पुलाकत्वं समर्थयति, अतएव हंसावलय उड्डीय स्रवन्तीनां नदीनां वेशन्तानां पल्वलानाञ्च पूरं प्रवाहं परितः सर्वतः पतिताः सत्यो युक्तम् उचितं प्लवन्ते तरन्ति । पुलाकतुल्यत्वात्तासां प्लवनमुचितमेवेत्यर्थः । पुलका अत्यतिलघुत्वाद्वायुसम्पर्केणोड्डीय नद्यादौ पतिताः सत्यो गौरवाभावात् प्लवन्ते । जगति त्वमेवैकः सुन्दर इति भावः । पूरं परित इति 'हादियुक्तादि'ति द्वितीया । 'वलक्षो धवलोऽर्ज्जुनः' 'स्यात्पुलाकस्तुच्छधान्ये,' 'स्रवन्ती निम्नगापगा' 'वेशन्तः पल्वलश्चाल्पसरः' अ ॥ ३५ ॥

भवदिति । कुसुमायुधेन कामेन भवत्पदस्य तव चरणस्याङ्गुष्ठमङ्गुलिविशेषमपि श्रिता आश्रिता श्रीः शोभा न लब्धा न प्राप्ता, ध्रुवमित्यहमुत्प्रेक्षे । कथमेवं ज्ञातमित्यत आह खलु यस्मात् अस्मिन् भवत्पदाङ्गुष्ठे नखवेशधारि नखरूपग्राहि एतत् दृश्यमानम् अर्द्धेन्दुरर्द्धचन्द्रलक्षणं तं कुसुमायुध जेतुः शिवस्य चिह्नम् आस्ते विद्यते । स्वजेतृचिह्नं नखरूपमर्द्धेन्दुं दृष्ट्वा तन्निष्ठश्रियं ग्रहीतुं कामो न शशाकेत्यर्थः । अन्योऽपि स्वजेतृचिह्नमन्यत्रापि दृष्ट्वा तद्गतां श्रियं हर्त्तुं भयान्न शक्नोति । कामस्त्वत्पदाङ्गुष्ठसदृशोऽपि नेति भावः । त्वत्पदाङ्गुष्ठः कामस्य जेता, अर्द्धचन्द्राङ्कितत्वात् यथा शिव इत्यनुमानप्रमाणमूलेयमुक्तिरित्यवधेयम् ॥ ३६ ॥

राजेति । अनुमासं मासि मासि भिन्नः पुनरुत्पन्नत्वादन्य एव द्विजानां राजा चन्द्रस्तपोभिश्चान्द्रायणादिभिः पौर्णमासीरात्रौ पूर्णां तनूं शरीरं तनूकृत्य कृशीकृत्य कुहूष्वमावास्यारात्रिषु दृश्येतरताम् अदृश्यत्वम् एत्य प्राप्य च किं भवन्मुखस्य तव वदनस्य सायुज्यमैक्यं प्राप्नोति, किमित्युत्प्रेक्षायां, चन्द्रो बहुजन्मसञ्चिततपःफलादेव त्वन्मुखत्वं प्राप्नोतीत्यर्थः । चन्द्रवदनोऽसीति भावः अन्योऽपि द्विजानां ब्राह्मणानां राजा श्रेष्ठो बहूषु जन्मसु चान्द्रायणादितपोभिः शरीरं कृशीकृत्य दृश्ये-

---

वाच्या जात्युत्प्रेक्षा च्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥ ३५ ॥ अत्र प्रथमार्द्धे वाच्या क्रियोत्प्रेक्षा, तदनुप्राणितः कामदेवान्नलस्याधिक्यरूपो व्यतिरेकः, पूर्वार्द्धं प्रति उत्तरार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, तथा प्रकृतनखप्रतिषेधेन ततोऽन्यस्यार्द्धचन्द्रस्य स्थापनादपह्नुतिरलङ्कारश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ३६ ॥

कृत्वा दृशौ ते बहुवर्णचित्रे किं कृष्णसारस्य तयोर्मृगस्य ।
अदूरजाग्रद्विदरप्रणाली-रेखामयच्छद्विधिरर्धचन्द्रम् ॥ ३८ ॥
मुग्धः स मोहात् सुभगान्नदेहा-द्ददद्भवद्भ्रूरचनाय चापम् ।
भ्रूभङ्गजेयस्तव यन्मनोभू-रनेन रूपेण यदा तदाभूत् ॥ ३९ ॥
मृगस्य नेत्रद्वितयं त्वदास्ये विधौ विधुत्वानुमितस्य दृश्यम् ।
तस्यैव च त्वत्कचपाशवेशः पुच्छः स्फुरच्चामरगुच्छ एषः ॥ ४० ॥

तरताञ्च प्राप्य ब्रह्मसायुज्यलक्षणं मुक्तिविशेषं प्राप्नोति। क्वचिद् इयेतरतामिषेणेति पाठः। 'द्विजराजः शशधरः' अ ॥ ३७ ॥

कृत्वेति। विधिर्ब्रह्मा ते तव दृशौ चक्षुषी बहुभिर्वर्णैः शुक्लकृष्णरक्तैश्चित्रे नानावर्णे आश्चर्यरूपे वा कृत्वा निर्माय कृष्णसारस्य कृष्णसाराख्यजातिविशेषस्य अथ च कृष्णः कृष्णवर्णः सारः श्रेष्ठो यस्य तादृशस्य मृगस्य तयो र्दृशोरदूरे निकटे जाग्रतीं स्फुरन्तीं या विदररूपा नेत्राधोगर्त्तरूपा प्रणाली रेखा तामेव अर्द्धचन्द्रं गलहस्तं किम् अयच्छत् दत्तवान्। नेयं मृगनयनयोः समीपवर्त्तिनी विदरप्रणालीरेखा किन्तु सौन्दर्यविवेचकेन ब्रह्मणा भवन्नयनसादृश्याभिलाषिणोस्तयोर्दत्तो गलहस्त एवेत्यर्थः। मृगनयनाभ्यामप्युत्कृष्टे भवन्नयने इति भावः। 'विदरः स्फुटनं भिदा' अ ॥ ३८ ॥

मुग्धइति। स मनोभूः कामो मोहादज्ञानादेव मुग्धो मुग्धशब्दव्यपदेश्योऽर्थात् मूर्खः, न पुनः सुभगात् सुन्दराद्देहाच्छरीराद्धेतोर्मुग्धः सुन्दरः। यद्यस्मात् स मनोभूर्भवद्भ्रूरचनाय तव भ्रुवो र्निर्म्माणाय चापं निजधनुर्ददत् ब्रह्मणे प्रयच्छन् सन् अनेन दृश्यमानेन रूपेण सौन्दर्येण हेतुना यदा तदा सर्वदैव तव भ्रुवोर्भङ्गः कौटिल्यं तन्मात्रेणैव जेयो जेतुं योग्योऽभूत्। यो हि निजायुधं शत्रवे ददाति, स निरायुधत्वादनायासेनैव शत्रुणा जेतुं शक्यते, तस्मात् कामो मूर्ख एवेत्यर्थः। तव भ्रुवौ धनुराकारे कामोद्दीपके चेति भावः। 'मुग्धः सुन्दरमूढयोः' वि ॥ ३९ ॥

मृगस्येति। त्वदास्ये तव मुखरूपे विधौ पूर्णचन्द्रे विधुत्वेन साधनेन अनुमितस्य तव मुखचन्द्रो मृगवान् चन्द्रत्वाद्यथा गगनचन्द्र, इत्यनुमानगोचरीभूतस्य मृगस्य नेत्रद्वितयं चक्षुर्द्वयं दृश्यं दृश्यते एते त्वन्मुखचन्द्रनिमग्नमृगस्यैव चक्षुषी इत्यर्थः। तथा तस्यैव मृगस्य त्वत्कचपाश एव तव केशसमूह एव वेश आकारो यस्य तादृश एष दृश्यमानः पुच्छो बालधिः, किम्भूतः पुच्छः,

अत्र द्विजानां राजेति श्लेषेणोत्थापितया ब्राह्मणचन्द्रयोरभेदाध्यवसायरूपातिशयोक्त्यानुप्राणिता किं सायुज्यमाप्नोतीत्युत्प्रेक्षा, समेन कार्येण प्रकृते चन्द्रे अप्रकृतस्य ब्राह्मणश्रेष्ठस्य व्यवहारसमारोपात् समासोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ॥ ३७ ॥ अत्र प्रकृतरेखाप्रतिषेधेनाप्रकृतार्द्धचन्द्रस्थापनादपह्नुतिस्तया चानुप्राणितोत्प्रेक्षालङ्कारः ॥ ३८ ॥ अत्र सुभगान्नदेहादिति शाब्दी परिसंख्या, मुग्धशब्दश्लेषात् अज्ञसुन्दरयोरभेदाध्यवसायादतिशयोक्तिरेका मनोभूकर्तृकचापदानासम्बन्धेऽपि तत्सम्बन्धकथनाच्चापरा, आभ्यामेतयोरङ्गाङ्गिभावेन सङ्करः, अनुप्रासश्च ॥ ३९ ॥

आस्तामनङ्गीकरणाद्भवेन दृश्यः स्मरो नेति पुराणवाणी।
तवैव देहं श्रितया श्रियेति नवस्तु वस्तु प्रतिभाति वादः॥ ४१॥
त्वया जगत्युञ्चितकान्तिसारे यदिन्दुनाशीलि शिलोञ्छवृत्तिः।
आरोपि तन्माणवकोऽपि मौलौ स यज्वराज्येऽपि महेश्वरेण॥ ४२॥

स्फुरन् विलसन् चामरगुच्छो यस्य सः। नायं तव केशपाशः, किन्तु त्वन्मुखचन्द्रनिमग्नस्य मृगस्य निबद्धचामरगुच्छः पुच्छ एवेत्यर्थः। मृगपुच्छे विलासिभिः कौतुकाच्चामरगुच्छो निबध्यते। चामरगुच्छो मृगविशेषो वा बोद्धव्यः तव मुखं पूर्णचन्द्रसदृशं, चक्षुषी मृगचक्षुस्तुल्ये, केशाश्च चामरसदृशा इति भावः॥ ४०॥

आस्तामिति। भवेन महादेवेन अनङ्गीकरणाच्छरीरशून्यीकरणात् स्मरः कामो दृश्यो दर्शनगोचरो न इति पुराणानां प्राचीनानां वाणी पुराणा जीर्णा वाणी वा आस्तां तिष्ठतु, नेदानीं पुरातनवाक्याः समादरोऽस्तीत्यर्थः। तर्हि नवीना वाणी केत्याह, तु पुनः शिवभक्तत्वात्तवैव देहं शरीरं श्रितया श्रिया लोकातीतया शोभया कर्त्र्या अनङ्गीकरणात् तपोभङ्गे न शिवापराधकारितया स्मरस्यास्वीकारात् दृश्यो नयनगोचरो न अथच सुन्दरो न इति नवो नूतनो वादो वचनं वस्तु सत्यभूतः प्रतिभाति स्फुरति। कामो दग्धत्वाददृश्यो न जातः, किन्तु त्वां प्राप्य सुखितया श्रियै वास्वीकाराददृश्यो जात इतिवचनमेव नवीनं तथ्यमित्यर्थः। साक्षात्कामदेव एवासीतिभावः। अनङ्गीकरणशब्दादृश्यशब्दयोः श्लिष्टत्वाद्दीदृश्युक्तिः। 'दृश्य' दर्शनयोग्ये स्यात् सुन्दरे चाभिधेयवत्' व॥ ४१॥

त्वयेति। त्वया उञ्चितो गृहीतः कान्तिसारः शोभाश्रेष्ठांशो यस्मात् यस्य वा तादृशे जगति भुवने इन्दुना चन्द्रेण शिलोञ्छलक्षणा जीविका यत् अशीलि कृता, तत्तस्माद्धेतोर्महेश्वरेण महादेवेन माणवकोऽपि बालोऽपि कलारूपोऽपीति यावत् स इन्दुर्मौलौ मस्तके आरोपि स्थापितः। तथा यज्वनां याज्ञिकद्विजानां राज्येऽपि राजत्वेऽपि आरोपि अभिषिक्तः। तस्मादेव द्विजराजोऽपि कृत इत्यर्थः। त्वया गृहीतात् कान्तिसारादवशिष्टं कान्तिभागं कथञ्चित् स्वसौन्दर्यार्थं मेलयता चन्द्रेण यच्छिलोञ्छजीविमुनिनेवाचरितं, तस्मात् कलामात्रोऽपि सः परितुष्टेन भगवता शिवेन शिरसि धृतो, ब्राह्मणानां मध्ये श्रेष्ठश्च कृत इत्यर्थः। चन्द्रे त्वच्छोभालेशमात्रं विद्यतेऽतस्त्वत्सदृशः

अत्र 'त्वदास्ये विधौ' इति व्यस्तरूपकम्, विधुत्वेन साधनेन मृगवत्त्वरूपसाध्यस्य ज्ञानादनुमानम्, तथा प्रकृतं केशपाशं प्रतिषिध्य ततोऽन्यस्याप्रकृतस्य चामरगुच्छस्य स्थापनादपह्नुतिश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः। तव मुखं पूर्णचन्द्रसदृशम्, चक्षुषी मृगचक्षुस्तुल्ये, केशाश्च चामरसदृशा इति वितयं वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ४०॥ अत्र भवकर्तृकानङ्गीकरणरूपादृश्यत्वहेतुं प्रतिषिध्य तदन्यस्य नलदेहाश्रितश्रिया अनङ्गीकरणस्य तद्धेतुत्वस्थापनात् अपह्नुतिः, अनङ्गीकरणशब्दश्लेषेण अशरीरिकरणानङ्गीकरणयोरभेदाध्यवसायादेकातिशयोक्तिः, तादृश्याः श्रियः तथाविधानंगीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरपरा, छेकानुप्रासश्चेति। "पराजयलज्जानिमित्तमस्यादृश्यत्वमित्युत्प्रेक्षा।" जी॥ ४१॥

आदेहदाहं कुसुमायुधस्य विधाय सौन्दर्यकथादरिद्रम् ।
त्वदङ्गशिल्पात्पुनरीश्वरेण चिरेण जाने जगदन्वकम्पि ॥ ४३ ॥
मही कृतार्था यदि मानवोऽसि जितं दिवा यद्यमरेषु कोऽपि ।
कुलं त्वयालङ्कृतमौरगञ्चे-न्नाधोऽपि कस्योपरि नागलोकः ॥ ४४ ॥
सेयं न धत्ते ऽनुपपत्तिमुच्चै-र्मच्चित्तवृत्तिस्त्वयि चिन्त्यमाने ।
ममौ स भद्रं चुलुके समुद्र-स्त्वयात्तगाम्भीर्यमहत्त्वमुद्रः ॥ ४५ ॥

सुन्दरो न कोऽप्यस्तीति भावः । अन्योऽपि शिलोञ्छजीवी माणवकोऽप्यचिरोपनीतोऽपि महेश्वरेण महता राज्ञा मस्तके आरोप्यते नमस्क्रियते, द्विजानां राजत्वे च स्थाप्यते । अथ च माणवको हारविशेषः कण्ठ एव धार्यते, नतु मौलाविति इलेषमूलो विरोधश्चात्र व्यङ्ग्यः ॥ ४२ ॥

आदेहेति । कुसुमायुधस्य कामस्य आदेहदाहं शरीरभस्मीकरणमारभ्य जगत् सौन्दर्यकथायां दरिद्रं दीनं सुन्दरप्रस्तावरहितं विधाय कृत्वा इदानीं त्वदङ्गस्य शिल्पात् निर्म्माणात् ईश्वरेण पुनरपि चिरेण बहुकालात्परम् अन्वकम्पि कृपाविषयीकृतम् इत्यहं जाने उत्प्रेक्षे । कामदेहदाहान्तरं जगति सौन्दर्यवार्त्तापि नासीत्, अधुना तु कामस्थाने त्वदभिषेककरणात् पुनरपीश्वरेण तस्मिन् कृपा कृतेत्यर्थः । कामवन्मनोज्ञोऽसीति भावः । अन्योऽपीश्वरो राजा दारिद्र्यपीड़ितानां जनानां दयते ॥ ४३ ॥

महीति । यदि त्वं मानवोऽसि कश्चन मनुष्योऽसि तर्हि मही पृथ्वी कृतार्था धन्या त्वयाधिष्ठितत्वात्, अथ च कृतः सत्योऽर्थो मह्यते पूज्यते या सा महीति महीशब्दाभिधेयो यस्याः सा, किंवा यदि अमरेषु देवेषु मध्ये त्वं कोऽपि कश्चन देवोऽसि, तर्हि दिवा स्वर्गेण जितं सर्वोत्कृष्टया भूतं, पूर्वमिन्द्रादिदेवाद्याधारतया दिवो भूम्यादिजिगीषा स्थिता, इदानीन्तु त्वदाधारतया जितमित्यर्थः । किंवा त्वया औरगं कुलं नागानां वंशश्चेद्यदि अलङ्कृतं कश्चन नागोऽसि तर्हि नागलोकः पातालम् अधोऽपि अधोदेशे वर्त्तमानोऽपि कस्य लोकस्य उपरि ऊर्द्ध्वदेशे न, अपि तु सर्वस्यापि उपरि वर्त्तते, त्वदाधारो भूत्वा स्वर्गमर्त्याभ्यामप्युत्कृष्ट इत्यर्थः । देवोरगमनुष्येषु मध्ये कतमोऽसीति कथ्यतामिति भावः ॥ ४४ ॥

सेयमिति । अतिगम्भीरो महांश्च समुद्रः कथमगस्त्यपाणिपुटके परिमाति स्मेत्यतिमहतीमनुपपत्तिं या पूर्वं दधार, सेयं मम चित्तवृत्तिस्त्वयि चिन्त्यमानेऽतिगाम्भीर्येणातिमहत्त्वेन च

---

अत्र समेन कार्येण श्लिष्टविशेषणेन च चन्द्रे तादृशब्राह्मणव्यवहारसमारोपात् समासोक्तिः, चन्द्रस्य तादृशवृत्तिशीलनासम्बन्धेऽपि तत् सम्बन्ध कथनादतिशयोक्तिः, छेकानुप्रासश्चेति संसृष्टिः । "अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य तु मूर्द्धन्यस्तेन सिध्यति माणवः ।" इति मनोरपत्यमित्यर्थे माणवइत्यत्र णत्वम् ॥ ४२ ॥ छेकानुप्रासः, वाच्या क्रियोत् प्रेक्षा । तया च द्वितीयः कामोऽसीति वस्तुव्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ४३ ॥ अत्र अधोगतस्य उपरिस्थितिविरोधेऽपि तस्य नलसम्पर्कात् परिहाराद् विरोधाभासोऽलङ्कारः ॥४४॥

संसार सिन्धावनुविम्बमत्र जागर्त्ति जाने तव वैरसेनिः ।
विम्बानुविम्बौ हि विहाय धातु-र्न जातु दृष्टातिसरूपसृष्टिः ॥ ४६ ॥
इयत्कृतं केन महीजगत्या-महो महीयः सुकृतं जनेन ।
पादौ यमुद्दिश्य तवापि पद्या-रजःसु पद्मस्रजमारभेते ॥ ४७ ॥
ब्रवीति मे किं किमियं न जाने सन्देह दोलामवलम्ब्य संवित् ।
कस्यापि धन्यस्य गृहातिथिस्त्व-मलीकसम्भावनयाथवालम् ॥ ४८ ॥

विचार्यमाणे सति उच्चैरतिमहतीं तामनुपपत्तिमसम्भवम् इदानीं न धत्ते न धारयति । यतस्त्वया आत्ते गृहीते गम्भीर्यमहत्त्वे गम्भीरताविशालत्वे एव मुद्रा चिह्नं यस्य तादृशः सन् स समुद्रो भद्रमनायामेन चुलके अगस्त्यस्य पाणिपुटके ममौ परिमाति स्म । त्वया गृहीतगाम्भीर्यमहत्त्वस्य समुद्रस्य पाणिपुटके परिमाणे न काप्यनुपपत्तिरित्यर्थः । त्वं समुद्रादप्यतिगम्भीरो महांश्चेति भावः ॥ ४५ ॥

संसारेति । अत्रास्मिन् संसारसिन्धौ अनवधित्वात् संसाररूपे समुद्रे वैरसेनिर्नलस्तव अनुविम्बं प्रतिविम्बं जागर्त्ति स्फुरति इत्यहं जाने सम्भावयामि, नलस्तव सदृश इत्यर्थः । संसारस्य सिन्धुत्वेन रूपणं प्रतिविम्बसम्भावनार्थम् । ननु नलेनाभेदं मम कथं नांगीकरोषीत्यत आह, -हि यस्मात् विम्बानुविम्बौ विम्बप्रतिविम्बौ विहाय त्यक्त्वा धातुर्ब्रह्मणोऽतिसरूपयोरतिसमानसौन्दर्ययोः सृष्टिर्निर्म्माणं जातु कदाचिदपि न दृष्टा । एकं वस्तु विम्बं अपरं तत्प्रतिविम्बं तत्सदृशं, नत्वेकमेव वस्तु द्वयमिति विधातुः सृष्टिक्रम इत्यर्थः । नलसादृश्यादेव मामतितरां सुखयसीति भावः ॥ ४६ ॥

इयदिति । महीजगत्यां भूलोके केन जनेन इयदिदंपरिमणं महीयोऽतिमहत् सुकृतं पुण्यं कृतम्, अहो आश्चर्यं यं विहितवहुतरपुण्यं जनम् उद्दिश्य तव अतिसुकुमारस्यापि पादौ पद्यारजःसु मार्गधूलिषु पद्मस्रजं कमलमालाम् आरभेते रचयतः । स्वर्ग एव महापुण्य-शालिनो वर्त्तन्ते, भूलोके तु क एवंविधः पुण्यवान्, यमुद्दिश्य त्वमपि कार्य्यार्थं पादचारी गच्छसि, तं कथयेति भावः चरणयोः पद्माङ्कितत्वात्तद्विन्यासचिह्नं पद्मतुल्यं, तस्य चानेकत्वात् पद्ममालात्वम् । 'सरणिः पद्धतिः पद्या' अ ॥ ४७ ॥

ब्रवीतीति । इयं मे मम संविद् बुद्धिरन्तःकरणमिति यावत् सन्देहरूपां दोलां अवलम्ब्य आरुह्य संशयसहचारिणी भूत्वा किं किं ब्रवीति प्रकाशयतीति न जाने,किं नल एवासि तदन्यो वे-

"अत्र विरोधातिशयोक्तिरलंकारः" सा । "अत्र मानहेतोरात्तेत्यादिविशेषणगत्या निर्द्देशात् पदार्थहेतुकं काव्यलिंगमलङ्कारः । तत्सङ्कीर्णेयमुत्प्रेक्षा, भद्रमिति व्यञ्जकप्रयोगाद् वाच्या ॥ ४५ ॥ अत्र जाने इति वाच्योत्प्रेक्षा कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, निरगं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ४६ ॥ अत्र गमननिगरणेन तत्र पद्मस्रगारम्भाध्यवसायाद् अतिशयोक्ति श्छेकानुप्रासश्चेति संसृष्टिः ॥ ४७ ॥

प्राप्तैव तावत् तव रूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे ।
अपि श्रुती नामृतमाद्रियेतां तयोः प्रसादीकुरुषे गिरं चेत् ॥ ४९ ॥
इत्थं मधूत्थं रसमुद्गिरन्ती तदोष्ठबन्धूकधनुर्विसृष्टा ।
कर्णात् प्रसूनाशुगपञ्चबाणी वाणीमिषेणास्य मनो विवेश ॥ ५० ॥

त्यादिसंशयवशात् सत्यं किमिति निश्चेतुं न शक्नोमीत्यर्थः । अथवा अलीकसम्भावनया किं, नलोऽस्मि, मामुद्दिश्यागत इत्यादिनिरर्थकसम्भावनया अलं, तादृशी सम्भावना न कर्त्तव्या । अतस्त्वं कस्यापि धन्यस्य सौभाग्यशालिनो जनस्य गृहेऽतिथिर्भविष्यसीत्यर्थात्, त्वां पश्यन्त्या मम नानाविधः संशयो जायते स तु न कर्तव्यः मादृशां तदनुकूलसौभाग्याभावादतस्त्वं कस्यापि लोकोत्तरभागधेयस्य गृहातिथिर्भविष्यसीत्येतदेव निश्चेयमित्यर्थः ॥ ४८ ॥

प्राप्तैवेति । मे मम दृष्टिश्चक्षुस्तव रूपस्य सौन्दर्य्यस्य सृष्टिं कृदभिहितभावत्वात् विधात्रा सृष्टं तव सौन्दर्य्यं निपीय सादरमालोक्य जनुषो जन्मनः फलं साफल्यं तावत् प्रथमं प्राप्तैव, त्वां विलोक्य मम चक्षुषोस्तृप्तिः केवलं जातेत्यर्थः । सम्प्रति मम श्रुती अपि कर्णावपि अमृतं नाद्रियेतां न बहुमन्येतां चेद्यदि तयोः श्रुत्योः सम्बन्धे गिरं वचनं प्रसादीकुरुषे, प्रसन्नो भूत्वा यदि किमपि वदसि, तर्ह्यमृतपानजन्यतृप्तेरप्यधिकां तृप्तिं मम कर्णौ लभेतामित्यर्थः । मत्कृतानां प्रश्नानामुत्तरं प्रयच्छेति भावः । 'जनुर्जननजन्मानि' अ ॥ ४९ ॥

एवं भैमीवचनमाकर्णयन् नलोऽतितरां कामवशगोऽभूदित्याह । इत्थमिति । प्रसूनाशुगस्य कामस्य पञ्चबाणी बाणपञ्चकं वाणीमिषेण भैमीवचनव्याजेन अस्य नलस्य कर्णात् कर्णं प्रविश्य मनोऽन्तःकरणं विवेश । नेयं भैम्या वाणी नलस्य कर्णद्वारा मनः प्रविष्टा, किन्तु कामस्य पञ्चबाणीत्यर्थः । किम्भूता वाणी पञ्चबाणी च, इत्थं पूर्वोक्तप्रकारेण मधूत्थं अमृतोद्भूतं रसं आस्वादं उद्गिरन्ती, प्रकटयन्ती अथच कामबाणानां पुष्पमयत्वात् मधूत्थं रसं पौष्पं रसं क्षरन्ती, तथा तस्या भैम्या ओष्ठो बन्धूकधनुरिव सरागत्वात् कामोद्दीपकत्वाच्च बन्धूकपुष्पमयकामचाप इव तत्तथा तस्माद्विसृष्टा विमुक्ता अथच तस्या ओष्ठ एव बन्धूकधनुस्तस्माद्विसृष्टा । पञ्चबाणीति समाहारात् युगपन्मुक्तानां कामबाणानां युगपदन्तःप्रवेशे यथा कामव्यथा भवति, तथा तद्वचनश्रवणेन नलस्य कामव्यथा अभूदिति भावः । कर्णादिति यजगर्भे पञ्चमी ॥ ५० ॥

---

अत्र अथवा त्वं ममैव गृहस्यातिथिरिति वक्तुमिष्टस्य वस्तुन आत्मनो निकृष्टरूपविशेषप्रतिपत्तये निषेधाभासादाक्षेपो नामालङ्कारः सन्देहदोलामिति निरङ्गं रूपकञ्चेति संसृष्टिः ॥ ४८ ॥ 'अत्रातिशयोक्तिरलंकारः' सा । अमृतापेक्षया वचनस्य माधुर्यप्रतिपादनाद् व्यतिरेकश्छेकानुप्रासश्चेति संसृष्टिः ॥ ४९ ॥ अत्र द्वितीयपादे रूपकम्, वाणीमिषेणेत्यपह्नुतिश्छेकानुप्रासो वाणीबाणीति यमकञ्च ॥ ५० ॥

अमज्जदाभज्जमसौ सुधासु प्रियं प्रियाया वचनं निपीय ।
द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टता नेष्टमुखे प्रमेया ॥ ५१ ॥
पौरस्त्यशैलं जनतोपनीतां गृह्णन् यथाह्नः पतिरर्घ्य-पूजाम् ।
तथातिथेयीमथ सम्प्रतीच्छ-न्नस्या वयस्यासनमाससाद ॥ ५२ ॥
अयोधि तद्धैर्यमनोभवाभ्यां तामेव भूमीमवलम्ब्य भैमीम् ।
आह स्म यत्र स्मरचापमन्त-श्छिन्नं भ्रुवौ तज्जयभङ्गवार्त्ताम् ॥ ५३ ॥

अतिहृष्टोऽपि बभूवेत्याह । अमज्जदिति । असौ नलः प्रियं मधुरं प्रियाया भैम्या वचनं स्वीयस्तुतिरूपं पूर्वोक्तं निपीय सादरमाकर्ण्य आमज्जं अस्थिस्नेहपर्यन्तं आकण्ठमितिपाठे कण्ठ-पर्यन्तं सुधासु अमृतेषु अमज्जत् मग्नो बभूव, सर्वाङ्गेणानन्दमयोऽभूदित्यर्थः । अत्र हेतुमाह,-- या स्तुतिर्द्विषन्मुखेऽपि शत्रोर्मुखे विद्यमानापि स्वदते रोचते, तस्याः स्तुतेर्मिष्टता स्वादुता प्रीतिजनकता इष्टस्य प्रियजनस्य मुखे प्रमेया परिमिता न भवति, अपि तु बहुलैव भवतीत्यर्थः । आमज्जमिति 'अनन्ताच्चे'त्यनूसमासान्तः तस्य तद्धिताचत्वात् 'अर्नीतद्धिताच्चयोश्चे'तिनलुक् ॥५१॥

अथ भैम्या दत्तमपि निजासनं स्वस्य दौत्यात् परित्यज्य नलस्तत्सख्यासनमुपविशति स्मेत्याह । पौरस्त्येति । अथानन्तरं स नल आतिथेयीम् अतिथिषु साध्वीं पूजां भैमीकृतां प्रतीच्छन् स्वीकुर्वन् अस्या भैम्या वयस्यासनं सख्यासनं तथा आससाद भेजे, यथा अह्नो दिवसस्य पतिः सूर्यो जनतया जनसमूहेन उपनीतां वितीर्णां अर्घपूजां गृह्णन्नङ्गीकुर्वन् पौरस्त्यशैलं पुरः पूर्वा दिक् तत्र भवं शैलम् उदयाचलम् आसीददिति ॥ ५२ ॥

तदानीं जातमपि कामविकारं नलः स्वधैर्येण निवारयामासेत्याह । अयोधीति । तस्य नलस्य धैर्यमनोभवाभ्यां धैर्यकामाभ्यां, तां भैमीमेव भूमीं युद्धस्थानम् अवलम्ब्य आश्रित्य अयोधि युद्धं कृतम् । तर्हि तयोर्मध्ये कस्य जयः कस्य वा पराजयो जात इत्याह यत्र भैमीलक्षणायां युद्धभूम्यां पतितम् अन्तर्मध्ये छिन्नं भ्रुवौ भैम्या भ्रूयुगलक्षणं स्मरचापं कामधनुः कर्तृ तयोर्धैर्य-मनोभवयोर्जयभङ्गवार्त्तां जयपराजययोर्वृत्तान्तम् आह स्म सूचयामास । धैर्यस्य जयं कामस्य च पराजयं सूचयामासेत्यर्थः । यस्य हि धनुर्मध्ये छिन्नं सत् युद्धभूम्यां पतति, तस्य पराजयो भवति । अन्यस्य च जयो भवतीति लोकप्रसिद्धिः । भैम्या भ्रुवोर्मध्ये किञ्चिद्व्यवधानवत्त्वात् उद्दीपकत्वाच्चैवमुक्तम् । भैम्यामुत्पन्नमपि कामं नलो धैर्येण निवारयामासेति भावः ॥ ५३ ॥

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोलङ्कारः, आनन्दानुभवं तिरस्कृत्य सुधा-मज्जनाध्यवसायात् अतिशयोक्तिः "अत्रेष्टमुखस्तुतेः द्विषन्मुखस्तुत्यपेक्षया कैमुत्येन स्वादुत्वोत्कर्ष-प्रतिपादनादर्थापत्त्यलङ्कारः । तस्य वाक्यभूतस्य आमज्जं सुधामज्जनहेतुत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गमितिसङ्करः जी।" ॥ ५१ ॥ अत्र यथाशब्दप्रयोगादार्थी पूर्णोपमालङ्कार-श्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥ ५२ ॥ अत्र धैर्यमनोभवयोः कार्येण योधद्वयव्यवहार-समारोपात् समासोक्तिः, 'भैमीं भूमिम्' इति, 'भ्रुवौ स्मरचापम्' इति च व्यस्तं रूपकद्वयम्,

अथ स्मराज्ञामवधीर्य धैर्या-दूचे स तद्वागुपवीणितोऽपि ।
विवेकधाराशतधौतमन्तः सतां न कामः कलुषीकरोति ॥ ५४ ॥
हरित्पतीनां सदसः प्रतीहि त्वदीयमेवातिथिमागतं माम् ।
वहन्तमन्तर्गुरुणादरेण प्राणानिव स्वःप्रभुवाचिकानि ॥ ५५ ॥
विरम्यतां भूतवती सपर्या निविश्यतामासनमुज्झितं किम् ।
या दूतता नः फलिनी विधेया सैवातिथेयी पृथुरुद्भवित्री ॥ ५६ ॥

इत्थं धैर्येण कामविकारमपनीय नलस्तां प्रत्यूचे इत्याह । अथेति । अथानन्तरं स नलस्तस्या भैम्या वाचा वाणीरूपया वीणया उपवीणितोऽपि उपगीतः सन्नपि धैर्याद्धेतोः स्मरस्य कामस्य आज्ञाम् अवधीर्य अवज्ञाय ऊचे भैमीं प्रत्युवाच । वीणयोपगायने हि कामाधीनत्वं भवति अस्य तु धैर्यात्तन्न जातमित्यर्थः एतदेव कथमित्यत आह, कामो विवेकधाराया विचारप्रवाहस्य शतेन धौतं क्षालितं सतां साधूनामन्तरन्तःकरणं न कलुषीकरोति न मलिनीकरोति, तस्मादुचितमेतदित्यर्थः । अन्यदपि वस्तु क्षालितं सत् मलिनं न भवति ॥ ५४ ॥

इतः परं नलेन यदूचे तदेवानुवदति । हरिदिति । हे भैमि हरित्पतीनां दिक्पालानाम् इन्द्रादीनां सदसः सभात आगतं त्वदीयमेव अतिथिं मां प्रतीहि जानीहि । किम्भूतं मां गुरुणा महता आदरेण प्राणानिव स्वःप्रभूणां स्वर्गस्वामिनामिन्द्रादीनां वाचिकानि सन्देशवचनानि अन्तर्हृदये वहन्तं धारयन्तम् । अहमिन्द्रादिदूतो भूत्वा त्वदर्थमेवात्रागत इत्यर्थः । कुत आगतः कस्यातिथिरसीति प्रश्नोत्तरं दत्तम् । गुरुणादरेण प्राणानिवेति दूतधर्मो दर्शितः । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' अ ॥ ५५ ॥

विरम्यतामिति । हे दमयन्ति त्वया विरम्यताम् अव्यग्रया भूयताम् । यतः सपर्या पूजा भूतवती जातैव, मया पूजाजन्यतृप्तिः प्राप्तैवेत्यर्थः। निविश्यतामुपविश्यतां, किं किमर्थम् आसनम् उज्झितं परित्यक्तं, दूतस्य मम दर्शनमात्रेणासनपरित्यागो न कार्य इत्यर्थः । नोऽस्माकं या दूतता फलिनी फलवती विधेया कर्त्तव्या, सैव पृथुर्महती आतिथेयी अतिथिपूजा उत् उच्चैस्तरां भवित्री भविष्यति । मदुपचारार्थं सम्भ्रमेणालं, यदर्थमागतोऽस्मि तदेव सफलयेत्यर्थः । 'पूजा नमस्यापचितिः सपर्याचर्हिणाः समाः' अ ॥ ५६ ॥

---

यथाक्रमेण धैर्यमनोभवद्वयेन जयभङ्गद्वयस्य सम्बन्धात् यथासंख्यम्, एषामङ्गाङ्गिभावेन सङ्करः ॥ ५३ ॥ "अत्र पूर्वार्धे स्मरधैर्ययोर्भावितचित्तस्य धैर्यनियमनात् परिसंख्यालङ्कारः, तस्योत्तरार्द्धे सामान्येन समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास इति सङ्करः" जी। सत्यपि स्मरोद्रेककारणे तत् कार्याभावाद्विशेषोक्तिः । छेकानुप्रासश्च । वाचि वीणात्वारोपरूपं रूपकं व्यज्यते इति वस्तुनालङ्कारध्वनिः । परिसंख्यालक्षणं दर्पणे 'प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् । तादृगन्यव्यापोहश्चेच्छाब्द आर्थोऽथवा तदा । परिसंख्या' इति ॥ ५४ ॥ श्रौतोपमालङ्कार श्छेकानुप्रासश्चेति संसृष्टिः ॥ ५५ ॥ अत्र प्रथमपादार्थस्य द्वितीयपादार्थं प्रति-

कल्याणि कल्यानि तवाङ्गकानि कच्चित्तमां चित्तमनाविलं ते।
अलं विलम्बेन गिरं मदीया-माकर्णयाकर्णतटायताक्षि ॥ ५७ ॥
कौमारमारभ्य गणा गुणानां हरन्ति ते दिक्षु धृताधिपत्यान्।
सुराधिराजं सलिलाधिपञ्च हुताशनञ्चार्यमनन्दनञ्च ॥ ५८ ॥
चरच्चिरं शैशवयौवनीय-द्वैराज्यभाजि त्वयि खेदमेति।
तेषां रुचश्चौरतरेण चित्तं पञ्चेषुणा लुण्ठितधैर्यवित्तम् ॥ ५९ ॥
तेषामिदानीं किल केवलं सा हृदि त्वदाशा विलसत्यजस्रम्।
आशास्तु नासाद्य तनूरुदाराः पूर्वादयः पूर्ववदात्मदाराः ॥ ६० ॥

कल्याणीति। हे कल्याणि मङ्गलालये भैमि तव अङ्गकानि कोमलान्यङ्गानि कल्यानि नीरोगाणि कच्चित्तमाम्, अतिशयेन नीरोगाणि किम्। तथा ते तव चित्तं मनः कच्चित्तमामनाविलम् अकलुषं, पापेषु न धावति। विलम्बेनालं, प्रकृतकार्यविरोधादेतावानेव कुशलप्रश्नोऽस्तु। हे आकर्णतटायताक्षि कर्णान्तपर्यन्तविस्तृतलोचने मदीयां गिरं वक्ष्यमाणवचनम् आकर्णय शृणु। 'वार्त्तो निरामयः कल्यः' अ ॥ ५७ ॥

प्रथमं त्रिभिः श्लोकैश्चतुर्णां साधारण्येन दूत्यं करोति। कौमारमिति। हे भैमि कौमारं बाल्यमारभ्य ते तव गुणानां सौन्दर्यादीनां गणाः समूहाः दिक्षु धृतमाधिपत्यं यैस्तान् दिक्पालान् हरन्ति सन्तोषयन्ति। ननु दिक्पाला बहवस्तेषु कं कं हरन्तीत्यपेक्षायामाह, सुराधिनाथमिन्द्रं सलिलाधिपञ्च वरुणं हुताशनञ्चाग्निम् अर्यम्णः सूर्यस्य नन्दनं यमञ्च हरन्ति। त्वत्सौन्दर्याद्याकर्णनेनेन्द्रादयश्चत्वारस्त्वय्यनुरक्ता जाता इति भावः ॥ ५८ ॥

चरदिति। हे भैमि शैशवयौवनीयं बाल्यतारुण्यसम्बन्धि द्वैराज्यं सन्धिं भजत इति तथाभूतायां वयःसन्धौ वर्त्तमानायामित्यर्थः त्वयि चिरं बहुकालावधि चरत् भ्रमत् अनुक्षणं चिन्ताविषयत्वं जनयत् तेषामिन्द्रादीनां चित्तं पञ्चेषुणा कामेन लुण्ठितमपहृतं धैर्यमेव वित्तं धनं यस्य तादृशं सत् खेदं त्वदप्राप्तिजन्यदुःखम् एति प्राप्नोति। किम्भूतेन पञ्चेषुणा तेषां रुचः कान्तेश्चौरतरेण अत्यन्तमपहारकेण, विरहपीड़ितानां विवर्णत्वात्।अन्योऽपि राजद्वयसीमायां भ्रमन् चौरतरेण केनचिद्धनुर्धरेणापहृतधनो दुःखं प्राप्नोति। बहुकालावधि त्वदासक्तचित्ततया गतधैर्या इन्द्रादयस्त्वामप्राप्य दुःखिनो भवन्तीत्यर्थः ॥ ५९ ॥

तेषामिति। हे भैमि इदानीं तव यौवनदशायां तेषामिन्द्रादीनां हृदि केवलं सा त्वदाशा त्वत्प्राप्तितृष्णैव किल निश्चितम् अजस्रं प्रतिक्षणं विलसति स्फुरति। केवलपदव्यवच्छेद्यमाह तु

हेतुत्वाद् वाक्यार्थहेतुकं काव्यलिङ्गम् ॥ ५६ ॥ छेकानुप्रासोऽलाटानुप्रासश्चालङ्कारः। कच्चिदिति प्रश्नार्थमव्ययम्। 'कच्चित् काम प्रवेदने' अ ॥ ५७ ॥ छेकानुप्रासोऽलङ्कारः ॥ ५८ ॥ "अत्र वयोद्वयद्वैराज्ये पञ्चेषुणा चौरेण तेषां धैर्यवित्तं हृतमितिरूपकम्, तद्धेतुत्वात् खेदस्य वाक्यार्थहेतुकं काव्यलिङ्गमिति सङ्करः" जी। छेकानुप्रासोऽन्त्यानुप्रासश्चेति ॥ ५९ ॥

अनेन सार्द्धं तव यौवनेन कोटिं परामच्छिदुरोऽध्यरोहत् ।
प्रेमापि तन्वि त्वयि वासवस्य गुणोऽपि चापे सुमनःशरस्य ॥ ६१ ॥
प्राचीं प्रयाते विरहं दधत्ते तापाच्च रूपाच्च शशाङ्कशङ्की ।
पापराधैर्निदधाति भानौ रुषारुणं लोचनवृन्दमिन्द्रः ॥ ६२ ॥

पुनरुदारा महतीरथ च सुन्दरीस्तनूः शरीराणि आसाद्य गृहीत्वा आत्मदारा रक्षणीयत्वात् स्वीयाः स्त्रियः पूर्वादय आशा दिशः पूर्ववत न विलसन्ति । यथा पूर्वं पूर्वादिदिशः पालितवन्तस्तथेदानीं त्वय्येवासक्तचित्तत्वात् सुन्दरीरपि ताः न पालयन्तीत्यर्थः । अतिसुन्दर्यः पूर्वादिदिगधिष्ठातृदेवता विद्यन्ते, एकया त्वदाशया बह्वीरप्याशास्त्यक्तवन्त इति भावः । 'आशातृष्णादिशोः स्त्रियाम्' मे ॥ ६० ॥

एवं सामान्यतः सर्वेषां दूत्यं कृत्वा इन्द्रस्य मुख्यत्वात् प्रथमं तस्य दूत्यं करोति । अनेनेति । हे तन्वि भैमि अनेन दृश्यमानेन तव यौवनेन सार्द्धं सह अच्छिदुरोऽविच्छिन्नोऽसीमो निरवधिस्त्वयि विषये वासवस्य इन्द्रस्य प्रेमापि अनुरागोऽपि परां परमां कोटिमुत्कर्षम् अध्यरोहत् प्राप । यथा तव यौवनमुत्कर्षं प्राप्तं तथा वासवस्यानुरागोऽपीत्यर्थः । तव यौवनप्रारम्भावधि इन्द्रस्त्वय्यनुरक्तो जात इति भावः । न केवलमिन्द्रप्रेमैव किन्तु सुमनःशरस्य कामस्य अच्छिदुरोऽच्छेद्योऽसीमो विस्तृतो गुणोऽपि मौर्व्यपि अनेन तव यौवनेन सार्द्धं चापे धनुषि परां कोटिमटनिम् अध्यरोहत् । यथा तव यौवनमुत्कृष्टं भवति, तथा कामः स्वमौर्वीमपि धनुष्यारोप्य उत्कर्षयतीत्यर्थः । तव यौवनावधि इन्द्रः कामेन पीड्यत इति भावः । 'कोटिरस्त्री च चापाग्रे संख्याभेदप्रकर्षयोः' मे ॥६१॥

प्राचीमिति । ते तव विरहं दधद्धारयन्निन्द्रः प्राचीं पूर्वां दिशं प्रयाते गते प्राच्यामुदिते भानौ

"अपूर्वनायिकानुरक्ते हृदि पूर्वनायिकाश्चतुरा अपि न लगन्ति । तथा महत्यो दिशः परमाणौ हृदि न लगन्तीति भावः । तदाशापरवशास्ते स्वकीयं प्राच्याद्याशापरिपालनाधिकारमपि विस्मृत्य स्थिता इति तात्पर्यार्थः । अत्रोभयोराशयोरेकत्र हृदि प्राप्तौ एकस्या भैम्याशाया एव तन्नियमनात् परिसंख्या, यद्यप्येकस्य उभयत्र प्राप्तौ एकत्र नियमनं परिसंख्येत्यालङ्कारिकाणां लक्षणं तथापि मीमांसकैरुभयोरेव प्राप्तावेकस्यैव नियमनमित्यङ्गीकारात् चमत्कारित्वाविशेषाच्च उपलक्षणत्वेनोभयाङ्गीकारे को विरोधः? अथवा एकस्य हृदयस्य आशाद्वयप्राप्तावेकत्रैव नियमनाद्वापि लभ्यते इति सर्वथा परिसंख्या समस्त्येव। सच श्लिष्टशब्दोपात्तयोराशयोरभेदाध्यवसायाच्छ्लेषभित्तिकाऽभेदरूपातिशयोक्त्युत्थापितेति सङ्करः।" जी । अन्त्यानुप्रासेन च संसृष्टिः ॥ ६० ॥ "अत्र प्रेमगुणयोः प्रकृतयोरेव विशेषणसाम्येनौपम्योपगमात् केवलप्रकृतविषया तुल्ययोगिता तयोरेव परां कोटिम् इति श्लेषभित्तिकाभेदाध्यवसायरूपातिशयोक्तिमूला यौवनेन सार्द्धमिति सहार्थसम्बन्धोक्तेः सहोक्तिरित्यनयोः सङ्करः" जी । अनयोः लक्षणन्तु दर्पणे, – 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता' । 'सहार्थस्य बलादेकं यत्र स्याद् वाचकं द्वयोः । सा सहोक्तिर्मूलभूतातिशयो-

त्रिनेत्रमात्रेण रुषा कृतं य-त्तदेव योऽद्यापि न संवृणोति।
न वेद रुष्टेऽस्य सहस्रनेत्रे गन्ता स कामः खलु कामवस्थाम्॥ ६३॥
पिकस्य वाङ्मात्रकृताद् व्यलीकान्-न स प्रभु-र्नन्दति नन्दनेऽपि।
बालस्य-चूडाशशिनोऽपराधा-दाराधनं शीलति शूलिनोऽपि॥ ६४॥

सूर्ये तापादुत्तापजनकत्वाच्च रूपाद्रक्तवर्णत्वाच्च हेतोः शशाङ्कशङ्की चन्द्र एवायमुदेतीति चन्द्रशङ्कां कुर्वन् सन् परस्य चन्द्रस्य अपराधे रुषा कोपेनारुणं रक्तं लोचनवृन्दं नयनसमूहं तादृशे भानौ निदधाति निक्षिपति उदितमात्रं सूर्यं चन्द्र एवायमिति मन्यमानः सन् क्रोधरक्तैर्लोचनैस्तं पश्यतीत्यर्थः। भ्रमस्य साधारणधर्मधीहेतुकत्वादत्र सूर्ये चन्द्रभ्रान्तौ उत्तापकत्वरक्तवर्णत्वलक्षणं साधारणधर्मद्वयं हेतुः। चन्द्रस्त्वद्विरहादतितरामिन्द्रं तापयतीति भावः। चद्वयमुभयप्राधान्यसूचकम्॥ ६२॥

त्रिनेत्रेति। त्रिनेत्रमात्रेण नेत्रत्रयमात्रवता शिवेन रुषा कोपेन यत् अनङ्गत्वं कृतं, तदेव अनङ्गत्वमेव कर्म्म यः कामोऽद्यापि एतावद्दिनपर्यन्तमपि न संवृणोति न वरीतुं शक्नोति न प्रतिकरोति स कामोऽस्य सहस्रनेत्रे नयनसहस्रशालिनि इन्द्रे रुष्टे क्रुद्धे सति खलु निश्चितं काम् अवस्थां दशां गन्ता गमिष्यति इत्यहं न वेद न जानामि, कामो न जानाति वा। शिवस्तावत्त्रिनेत्रस्तस्य नेत्रत्रयेण यत् कृतं तदेवाद्यापि न प्रतिकर्त्तुं शक्तः। इन्द्रः पुनः सहस्रनेत्रः अस्य नेत्रसहस्रैर्यत्कर्त्तव्यं तत् कथं प्रतिकरिष्यतीत्यर्थः। कामस्तमतितरां पीडयतीति भावः॥ ६३॥

पिकस्येति। स प्रभुरिन्द्रः पिकस्य कोकिलस्य वाङ्मात्रेण वचनमात्रेण द्वारा कृतात् व्यलीकाद्प्रियाद्धेतोर्नन्दनेऽपि नन्दनवनेऽपि न नन्दति न सन्तुष्यति। नन्दयतीति नन्दनमानन्दजनकस्वभावं, तत्रापि न नन्दतीत्याश्चर्यम्। अन्योऽपि प्रभुर्वाङ्मात्रकृताद्विप्रियान्नन्दनेऽपि पुत्रेऽपि न नन्दति। तथा बालस्य कलामात्रस्य न तु पूर्णस्य चूडाशशिनः शिरश्चन्द्रस्य अपराधाद्धेतोः शूलिनोऽपि अवश्यपूज्यस्य शिवस्यापि आराधनं पूजां न शीलति न करोति। पूर्वं प्रतिदिनं शिवपूजायै गतवान्, इदानीं त्वद्विरहाच्चन्द्रपीडाभयेन अवश्यानुष्ठेयां शिवपूजामपि परित्यक्तवानित्यर्थः। अन्योऽपि स्वरिपुमिलिताच्छूलपाणेरपि शङ्कते। अथ च वचनमात्रजनितमपि विप्रियं बालस्याप्यपराधञ्च गृह्णातीत्यतोवास्य त्वद्विरहान्मौग्ध्यं जातमिति सूचितम्। कोकिलरुतं चन्द्रकिरणश्चातितरामिमं पीडयतीति भावः॥ ६४॥

---

क्तिर्यदा भवेत्' इति॥ ६१॥ "अत्र कविसम्मतसादृश्येन भानौ शशाङ्कभ्रमाद् भ्रान्तिमानलङ्कारः" जी। कारणरूपोऽपराधः शशाङ्के रोपारुणदृष्टिपातस्तु भानौ इति कार्यकारणयोर्भिन्नदेशत्वादसङ्गतिः, सूर्ये रोपारुणदृष्टिपातासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्छेकानुप्रासश्चेत्येतेषां मिथोनिरपेक्षयावस्थानात् संसृष्टिः। इन्दुस्त्वद् विरहादतितरामिन्द्रं तापयतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः॥ ६२॥ अत्र न वेद न जाने खलु इत्युत्प्रेक्षा, छेकानुप्रासश्चेति॥ ६३॥ "अत्रानन्दशिवाराधनसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्तिभेदः" जी।

तमोमयीकृत्य दिशः परागैः स्मरेषवः शक्रदृशां सृजन्ति ।
कुहूगिरश्चञ्चुपुटं द्विजस्य राकारजन्यामपि सत्यवाचम् ॥ ६५ ॥
शरैः प्रसूनैस्तुदतः स्मरस्य स्मर्त्तुं स किं नाशनिना करोति ।
अभेद्यमस्याहह वर्म्म न स्या-दनङ्गता चेद्गिरिशप्रसादः ॥ ६६ ॥

तमोमयीति । स्मरेषवः पुष्पमयाः कामबाणाः परागैः स्वरजोभिर्दिशस्तमोमयीकृत्य अन्धकारबहुलाः कृत्वा कुहू इति गीर्वचनं यस्य तादृशस्य द्विजस्य पक्षिणः कोकिलस्य चञ्चुपुटम् ओष्ठपुटं शक्रदृशां इन्द्रस्य चक्षुषां सम्बन्धे राकारजन्यामपि पूर्णचन्द्रायां पूर्णिमारात्रावपि सत्या वाक् यस्य तादृशं सृजन्ति कुर्वन्ति । पुष्पमयकामबाणरजोभिर्दिशामन्धकारबहुलतया किमपि द्रष्टुमशक्तत्वात् पूर्णिमारात्रिममावास्यारात्रिरियमिति मन्यमान इन्द्रः स्वाभाविकं कुह्विति शब्दं कुर्वन्त कोकिलम् अद्य सत्यमेव कुहूः नष्टेन्दुकलामावस्या इति बुद्ध्या सत्यवादिनं मन्यत इत्यर्थः । इन्द्रस्त्वद्विरहात्कामान्धो जात इति भावः । अन्योऽपि वाक्सिद्धो द्विजो ब्राह्मणः पूर्णिमायामद्य अमावस्येति कथयन्नपि सत्यवाग्भवति । 'पूर्णे राका निशाकरे' अ । 'कुहूः स्यात् कोकिलारावनष्टेन्दुकलदर्शयोः' वि ॥ ३५ ।

शरैरिति । स इन्द्रः प्रसूनैः पुष्पमयैरपि शरैर्बाणैस्तुदतो व्यथयतः स्मरस्य कामस्य स्मर्त्तुं कामं स्मरणमात्रावशेषितं कर्त्तुं अशनिना वज्रेण किं न करोति, किं न कुर्य्यात् अपितु वज्रेणैव मारयेदित्यर्थः अहह खेदे चेद्यदि गिरिशस्य शिवस्य प्रसादोऽस्य कामस्य अनङ्गतारूपम् अभेद्यं भेत्तुमशक्यं वर्म कवचं न स्यात् । अङ्ग एव प्रहारसम्भवात् यद्यस्याङ्गं स्यात्तदातिक्रुद्ध इन्द्रो वज्रेण प्रहृत्य तं मारयेदित्यर्थः । शिवेन कृतोऽस्यानङ्गतारूपो निग्रहोऽप्यनुग्रह एव जातः यतो द्रष्टुमशक्यत्वात् वज्रप्रहारेण मारयितुं न शक्यते । त्वद्विरहात् काम एवमपराध्यति, यथा-मारणार्हो भवतीति भावः । स्मरस्येति 'स्मृत्यर्थस्य चे' ति कर्मणि षष्ठी ॥ ६६ ॥

अन्यापराधेन क्रुद्धस्य अन्यं प्रति अन्यथाव्यवहारिणः व्यवहारसमारोपात् समासोक्तिश्च तेन च देवराजस्तव विरहेण मनोरमाणि नाभिनन्दति, अवश्यकर्त्तव्यमपि नानुतिष्ठतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६४ ॥ अत्र परागैर्दिशां तमोमयीकरणासम्बन्धेऽपि तत्-सम्बन्धोक्ते रतिशयोक्तिः, श्लेषबलादुपात्तयोरुभयोरपि कुह्वोर्द्विजयोश्चाभेदेनाध्यवसायादपरातिशयोक्तिः, पूर्णिमारात्राविन्द्रस्यामावस्यारात्रिभ्रमाद् भ्रान्तिमान्, तथाविधभ्रान्तिं प्रति 'तमोमयीकृत्य' इति पदस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, कुहूत्वसत्यवादित्वस्य विरुद्धस्य पूर्वोक्तातिशयोक्त्या परिहाराद् विरोधाभासः, ततश्चापरं वाक्यार्थहेतुकं काव्यलिङ्गम्, इत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ तथा च शक्रस्तव विरहेण स्मरान्धो जात इति वस्तुप्रतीतेर्वस्तुध्वनिः ॥ ६५ ॥ अत्र द्वितीयपादार्थं प्रति प्रथमपादार्थस्य हेतुत्वात् काव्यलिङ्गम् अनंगता अभेद्यं वर्मेति निरंगं रूपकमलङ्कारः तेन च दूर्वारोऽयमनङ्गः सुरपतिमतिमात्रं पीड़यतीति व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ६६ ॥

धृताधृतेस्तस्य भवद्वियोगा-न्नानार्द्रशय्यारचनाय लूनैः।
अप्यन्यदारिद्र्यहराः प्रवालै-र्जाता दरिद्रास्तरवोऽमराणाम्॥ ६७॥
रवैर्गुणास्फालभवैः स्मरस्य स्वर्नाथकर्णौ बधिरावभूताम्।
गुरोः शृणोतु स्मरमोहनिद्रा-प्रबोधदक्षाणि किमक्षराणि॥ ६८॥
अनङ्गतापप्रशमाय तस्य कदर्थ्यमाना मुहुरामृणालम्।
मधौ मधौ नाकनदीनलिन्यो वरं वहन्तां शिशिरेऽनुरागम्॥६९॥

धृतेति। अमराणां देवानां तरवः कल्पवृक्षादयोऽन्येषां दारिद्र्यहरा अपि दारिद्र्यनाशकाः सन्तोऽपि भवत्या वियोगाद्विच्छेदाद्धृता अधृतिरधैर्यं येन तादृशस्य तस्येन्द्रस्य नाना प्रतिक्षणं नूतना नूतना या आर्द्राः कोमलाः शय्यास्तासां रचनाय निर्म्माणाय लूनैश्छिन्नैः प्रवालैर्नवकिसलयैर्दरिद्रा जाताः, पल्लवरहिता जाता इत्यर्थः। अन्यदारिद्र्यहराणां दारिद्र्यमाश्चर्यम्। त्वद्विरहादिन्द्रस्यातितरां कामज्वरो जात इति भावः। नाना इत्यत्र अन्यान्येति क्वचित् पाठः अन्या अन्या भिन्नाः भिन्नाः प्रतिक्षणं नूतना याः शय्यास्तासां रचनायेत्यर्थः॥ ६७॥

रवैरिति। स्वर्नाथस्य इन्द्रस्य कर्णौ स्मरस्य कामस्य गुणास्फालभवैर्मौर्व्याकर्षणजनितै रवैः टङ्कारैर्बधिरौ श्रवणाक्षमौ अभूतां जातौ। अतएव इन्द्रः स्मरस्य मोहः कामजनिता मूर्च्छा स एव निद्रा तस्याः सकाशाद्यः प्रबोधो जागरणं तत्र दक्षाणि निपुणानि काममोहनिवारणकुशलान्यपि गुरोर्बृहस्पतेरक्षराणि उपदेशवचनानि किं कथं शृणोतु, अपितु बधिरत्वाच्छ्रोतुं न शक्नोतीत्यर्थः। गुरोर्वचनं हि कामव्यथानिवृत्तौ न स्वरूपसत्कारणं, किन्तु श्रूयमाणं सदेवेति सत्यपि कामव्यथानिवारणकुशले बृहस्पतिवचने इन्द्रस्य कामव्यथाव्यपगमाभावे न व्यभिचार इत्यर्थः। प्रबलकामव्यथतया इन्द्रो बृहस्पतेरप्युपदेशवचनं न शृणोतीति भावः॥ ६८॥

अनङ्गेति। तस्येन्द्रस्य अनङ्गतापप्रशमाय कामजनितसन्तापशान्तये मधौ मधौ प्रतिवसन्तम् आमृणालं पुष्पादारभ्य मृणालपर्यन्तं मुहुर्वारं वारं कदर्थ्यमानाः पीड्यमानाः समुत्पाट्यमाना नाकनदीनलिन्यः स्वर्गङ्गापद्मिन्यो वरं शिशिरे ऋतौ अनुरागं प्रमोदं वहन्तां धारयन्तु नतु वसन्ते। शिशिरर्त्तौ हिमेन पद्मिन्याः केवलं पत्रपुष्पमात्रं नश्यति, मृणालन्त्ववशिष्यते। वसन्तर्त्तौ तु तस्य कामसन्तापशान्त्यर्थं मृणालानामप्युन्मूलनेन कालान्तरेऽप्युत्पत्त्यसम्भवादतितरां

---

दारिद्र्यहरा अपि दरिद्रा जाता इति विरोधाभासः। अमरतरूणां प्रवालदारिद्र्योत्पत्तेरसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चेत्यनयोरंगांगिभावेन संकरः। देवराजस्तथा कामेन सन्तप्तः, यथा बहुविधशीतलोपचारेणापि न शीतलतामेतीति वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः॥ ६७॥ अत्र श्रवणासामर्थ्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, परार्द्धवाक्यं प्रति पूर्वार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलंकारः। स्मरमोहनिद्रेति निरंगं रूपकञ्चेति संसृष्टिः। प्रबलकामव्यथतया इन्द्रो बृहस्पतेरप्युपदेशवचनं न शृणोतीति वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः॥ ६८॥

दमस्वसः सेयमुपैति तृष्णा जिष्णोर्जगत्यग्रिमलेख्यलक्ष्मीम् ।
दृशां यदब्धिस्तव नाम दृष्टि-त्रिभागलोभार्त्तिमसौ बिभर्त्ति ॥ ७० ॥
अग्न्याहिता नित्यमुपासते यां देदीप्यमानां तनुमष्टमूर्त्तेः ।
आशापतिस्ते दमयन्ति सोऽपि स्मरेण दासीभवितुं न्यदेशि ॥ ७१ ॥
त्वद्गोचरस्तं खलु पञ्चबाणः करोति सन्ताप्य तथा विनीतम् ।
स्वयं यथास्वादिततत्प्रभूयः परं न सन्तापयिता स भूयः ॥ ७२ ॥

कदर्थनं जातमित्यर्थः । वसन्ते कामपीडा भूयसीति भावः ॥ ६९ ॥

दमस्वसरिति । हे दमस्वसर्दमयन्ति सेयमतिप्रसिद्धा जिष्णो रिन्द्रस्य तृष्णा लोभो जगति जगत्त्रयमध्ये अग्रिमलेख्यस्य आदिमगणनीयस्य लक्ष्मीं शोभाम् उपैति प्राप्नोति । लोभगणनायां प्रथममिन्द्रलोभ एव गणनीय इत्यर्थः । यद्यस्मात् दृशां चक्षुषाम् अब्धिर्नाम समुद्रोऽपि सहस्रनयनः सन्नपि असौ इन्द्रस्तव दृष्टेश्चक्षुषस्त्रिभागस्य तृतीयांशस्य कटाक्षस्य यो लोभोऽभिलाषस्तज्जन्यामर्त्तिं पीड़ां बिभर्त्ति धारयति । सत्स्वपि स्वस्य बहुषु नेत्रेषु अन्यदीयनेत्रतृतीयांशमपि लब्धुं वाञ्छतीत्यतितरामिन्द्रो लुब्ध इति भावः । इन्द्रस्तव कटाक्षं प्रार्थयते इति वाक्यार्थः । नामशब्दोऽप्यर्थे । 'अश्वयुक्कृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा' इत्यत्र त्रिशब्दस्य तृतीयार्थवदत्रापि तथार्थो बोध्यः । एवञ्च त्रिस्त्रितीयश्चासौ भागश्चेति कर्मधारयः । तृतीयो भागस्त्रिभाग इति शाकपार्थिवादित्वात् कर्मधारय इत्यन्ये ॥ ७० ॥

अथ वह्नेर्दूत्यं करोति । अग्न्याहिता इति । हे दमयन्ति अग्न्याहिता आहिताग्नयो द्विजा देदीप्यमानामतिदीप्ताम् अष्टमूर्त्तेः स्मरहरस्य याम् अग्निरूपां तनुं नित्यं प्रतिदिनम् उपासते सेवन्ते, सोऽपि स्मरहरतनुरूपोऽपि आशापतिर्दिक्पालोऽग्निः स्मरेण कामेन ते तव दासीभवितुं न्यदेशि, त्वं भैम्या दासो भवेत्याज्ञप्तः अग्निः कामवशीभूतः सन् तव दासतामिच्छतीति भावः । स्मरहरमूर्त्तित्वात् स्वयमेव स्मरस्य दग्धत्वाच्च सत्यपि स्मरवैरित्वे स्मराज्ञाकारित्वमाश्चर्यमित्यपिकारेण ध्वनितम् । अपिरिन्द्रापेक्षया समुच्चये इति केचित् । अग्न्याहिता इति आहितोऽग्निर्यैरिति बहुब्रीहिः । 'आहितादिर्वाग्न्यादेरि'ति आहितस्य पाक्षिकः परनिपातः ॥ ७१ ॥

त्वद्गोचर इति । खलूत्प्रेक्षे त्वमेव गोचरो विषय उद्देश्यो यस्य तादृशः पञ्चबाणः कामस्तमग्निं सन्ताप्य सम्यक् तापयित्वा तथा विनीतं शिक्षितं करोति, यथा सोऽग्निः स्वयम् आस्वादितमनु-

---

अत्र शिशिरे अनुरागधारणासम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः, 'कदर्थ्यमाना' इति पदार्थस्य अनुरागधारणं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिंगञ्चेत्यनयोरंगांगिभावेन संकरः ॥ ६९ ॥ दृशामब्धेः दृष्टित्रिभागार्त्ते विरुद्धकार्यस्योत्पादाद् विषमालंकारभेदः । तल्लक्षणं दर्पणे 'गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्ययोः यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः । विरूपयोः संघटना या च तद्विषमं मतम्' स च च्छेकानुप्रासेन संसृज्यते ॥ ७० ॥ अत्र कामदाहकतनोः कामदासीभावस्य विरुद्धत्वस्य मदनप्रभावात् परिहारात् विरोधाभासः ॥ ७१ ॥

अदाहि यस्तेन दशार्द्धबाणः पुरा पुरारे र्नयनालयेन ।
स निर्दहंस्तं भवदक्षिवासो न वैरशुद्धेरधुनाधमर्णः ॥ ७३ ॥
सोमाय कुप्यन्निव विप्रयुक्तः स सोममाचामति हूयमानम् ।
नामापि जागर्त्ति हि यत्र शत्रो स्तेजस्विनस्तं कतमे सहन्ते ॥ ७४ ॥

भूतं तप्तभूयं तप्तत्वं येन तादृशः सन् भूयः पुनः परमन्यं न सन्तापयिता न सन्तापयिष्यति। अहो तप्तानामीदृग्दुःखं, इतः प्रभृति नाहं कमपि सन्तापयिष्यामीति बुद्धिशाली यथा भवति, तथा कामेन शिक्षित इत्यर्थः। कामस्त्वद्विरहादग्निमतितरां तापयतीतिभावः ॥ ७२ ॥

अदाहीति। पुरारेः शिवस्य नयनं ललाटचक्षुरालय आश्रयो यस्य तादृशेन सता तेनाग्निना पुरा पूर्वं यो दशार्द्धबाणः पञ्चशरोऽदाहि दग्धः। स पञ्चबाणः कटाक्षविक्षेपमात्रजन्यत्वात् भवत्यास्तव अक्षिवासो नेत्रालयः सन् अधुना इदानीं तं निजदाहकम् अग्निं निर्दहन्नतितरां तापयन् वैरशुद्धे-र्वैरनिर्यातनस्य अधमर्णो न ऋणी न भवति। अन्यनयनालयस्यात्मदाहकस्यान्यनयनालयेनात्मनैव दाहाद्वैरप्रतीकारः कृत इत्यर्थः। पुरुषमाश्रित्य दाहकात् स्त्रियमाश्रित्य दाहकस्य प्राधान्यात् कामस्य महाप्रभावः सूचितः। तव कटाक्षमभिलषन्नग्निरत्यन्तं कामव्यथामनुभवतीति भावः ॥ ७३ ॥

सोमायेति। विप्रयुक्तो वियोगी अथ च विप्रैर्ब्राह्मणैर्युक्तः सोऽग्निः सोमाय सोमं चन्द्रं मनसिकृत्य कुप्यन्निव सोमलतारसं प्रति क्रोधयुक्त इव हूयमानं सोमयागादौ होतृभिः प्रक्षिप्य-माणं सोमं सोमाख्यलताविशेषरसम् आचामति पिबति। सोमलतारसं दृष्ट्वा नामसाम्येन संस्कारोद्बोधात् चन्द्रं मनसिकृत्य तदीयोद्दीपकतामनुस्मृत्य च सोमलतारसाय क्रुध्यन्निव तं पिब-तीर्थः। नन्वेकस्य सोमस्यापराधेनान्यस्मै सोमाय कथं क्रुद्ध इत्याशङ्कामर्थान्तरन्यासेनापनयति। हि यस्मात् यत्र पदार्थे शत्रोर्नामापि जागर्त्ति, वाचकतया स्फुरति, तं कतमे के तेजस्विनः सहन्ते सोढुं शक्नुवन्ति, अपितु न केऽपि। स्ववैरिचन्द्रस्य सोमेतिनाम्नो लताविशेषेऽपि सम्भवात् तेजस्विना अग्निना सोढुमशक्ततया तस्मै क्रुद्ध इत्यर्थः। अग्निस्त्वद्विरहपीड़िततया यज्ञे देवानामु-पादेयमपि सोमरसं हृष्टचित्ततया न पिबतीति भावः। सोमायेति 'यदभिप्रेत्य धात्वर्थ' इति संप्रदानसंज्ञायां चतुर्थी। क्रुध्यन्नित्यस्य योगे 'क्रुधद्रुहेर्ष्ये'त्यादिना संप्रदानसंज्ञायां चतुर्थीं कृत्वा व्याचक्षणानामितरेषां व्याख्यनमहृद्यतयास्माभिरुपेक्षितम्। 'सोमस्तु हिमदीधितौ। वानरे च कुबेरे च पितृदेवे समीरणे। वसुप्रभेदे कर्पूरे नीरे सोमलतौषधौ' मे ॥ ७४ ॥

---

अत्र वाच्याक्रियोत्प्रेक्षा, अतिशयोक्तिः, छेकानुप्रासो यमकञ्चेति संसृष्टिः ॥ ७२ ॥ शिव-नयनश्रितेन वह्निना कामो दग्धः, स काम इदानीं दमयन्तीनयनमाश्रित्य अग्निं दहतीति व्याघातो नामालङ्कारः, तल्लक्षणं तु दर्पणे 'व्याघातः स तु केनापि वस्तु येन यथा कृतम्। तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा।' सच च्छेकानुप्रासेन संसृज्यते ॥ ७३ ॥ सोमशब्दश्लेष-महिम्ना चन्द्रसोमरसयोरभेदाध्यवसायादतिशयोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः सोमाय कुप्यन्निवेति वाच्या क्रियोत्प्रेक्षा चेति सङ्करः ॥ ७४ ॥

शरैरजस्रं कुसुमायुधस्य कदर्थ्यमानस्तव कारणाय।
अभ्यर्चयद्भिर्विनिवेद्यमाना-दप्येष मन्ये कुसुमाद् बिभेति ॥ ७५ ॥
स्मरेन्धने वक्षसि तेन दत्ता सम्वर्त्तिका शैवलवल्लिचित्रा।
चकास्ति चेतोभवपावकस्य धूमाविला कीलपरम्परेव ॥ ७६ ॥
पुत्री सुहृद्येन सरोरुहाणां यत्प्रेयसी चन्दनवासिता दिक्।
धैर्यं विभुः सोऽपि तवैव हेतोः स्मरप्रतापज्वलने जुहाव ॥ ७७ ॥
तं दह्यमानैरपि मन्मथैधं हस्तैरुपास्ते मलयः प्रवालैः।
कृच्छ्रेऽप्यसौ नोज्झति तस्य सेवां सदा यदाशामवलम्बते यः ॥ ७८ ॥

शरैरिति तव कारणाय त्वदर्थं कुसुमायुधस्य कामस्य शरैः पुष्पमयैर्बाणैरजस्रं कदर्थ्यमानः पीड्यमान एषोऽग्निरभ्यर्चयद्भिः पूजकैर्जनैर्निवेद्यमानाद्दीयमानादपि कुसुमाद् बिभेति, कामशरबुद्ध्या त्रस्यति इत्यहं मन्ये सम्भावयामि। अतितरां कामव्यथामनुभवतीति भावः। तव कारणायेत्यत्र तरुणि त्वदर्थे इति क्वचित् पाठः तरुणीति सम्बोधनम् ॥ ७५ ॥

स्मरेन्धन इति। तेनाग्निना स्मरस्य कामानलस्य इन्धने दह्यमानत्वात्काष्ठभूते वक्षसि निजहृदये दत्ता निहिता शैवलवल्ल्या शैवाललतया चित्रा चित्रीकृता आश्चर्यरूपा वा सम्वर्त्तिका पद्मनवदलं चेतोभवपावकस्य मदनानलस्य धूमाविला धूममिश्रिता कीलपरम्परेव ज्वालाश्रेणीव चकास्ति शोभते। कामानलजनितसन्तापशान्त्यर्थं हृदये शैवालयुक्तनवकमलदलं निहितं, तत्र शैवालस्य श्यामत्वात् नवकमलदलस्य चारक्तत्वात् तत् कामानलस्य धूमाविलकीलत्वेनोत्प्रेक्षितं पूर्व एव भावः। 'सम्वर्त्तिका नवदलम्' 'वह्नेर्द्वयोर्ज्वालकीलौ' अ ॥ ७६ ॥

अथ यमस्य दूत्यं करोति। पुत्रीति। सरोरुहाणां पद्मानां सुहृत् प्रकाशकारित्वान्मित्रं सूर्यो येन विभुना पुत्री प्रशस्तपुत्रवान्, तथा चन्दनेन वासिता सुरभीकृता दक्षिणा दिक् यस्य विभोः प्रेयसी प्रियतमा, सोऽपि विभुः प्रभुर्यमस्तवैव हेतोः स्मरस्य कामस्य प्रतापज्वलने प्रतापानले धैर्यं जुहाव हुतवान्। त्वद्विरहाद्यमोऽप्यधैर्यो जात इत्यर्थः। पितृमित्रत्वाच्छीतलानि कमलानि प्रियासम्बन्धित्वात् चन्दनानि च यद्यप्यायत्तानि सन्ति, तथापि त्वद्विरहजनितसन्तापस्यात्यन्तिकतयाऽनिवार्य्यत्वादधैर्य्यो जात इत्यपिकारेण ध्वनितम्। इन्द्राग्न्योः समुच्चायकोऽत्रापिकार इत्यन्ये। तवैव हेतोरिति 'हेतुयुक्ताद्धेतोरि'तिषष्ठी ॥ ७७ ॥

तमिति। मलयो दक्षिणदिग्वर्ती पर्वतविशेषो मन्मथैधं दह्यमानत्वात् कामानलस्य काष्ठ-

---

अत्र पूजकनिवेदितपुष्पे कामपुष्पशरभ्रमाद् भ्रान्तिमानलङ्कारः, मन्ये इति वाच्योत्प्रेक्षा चेत्यनयोः संसृष्टिः ॥ ७५ ॥ अत्र वक्षसि ईन्धनत्वारोपे चेतोभवे पावकत्वारोपस्य हेतुत्वात् 'स्मरेन्धने' इत्यत्र स्मरेऽग्नित्वारोपस्यार्थत्वेन च स्वाङ्गं एकदेशविवर्त्ति परम्परितरूपकम् तदनुप्राणिता च कीलपरम्परेवेति वाच्या जात्युत्प्रेक्षेति सङ्करः ॥ ७६ ॥ अत्र 'स्मरप्रतापज्वलने' इति रूपकमलङ्कारः। तेन चासौ यमस्त्वयि अतिमात्रमनुरक्त इति वस्तु व्यज्यते इति वस्तुध्वनिः ॥ ७७ ॥

स्मरस्य कीर्त्त्येव सितीकृतानि तद्दोःप्रतापैरिव तापितानि ।
अङ्गानि धत्ते स भवद्वियोगात् पाण्डूनि चण्डज्वर जर्जराणि ॥ ७९ ॥
यस्तन्वि भर्त्ता घुसृणेन सायं दिशः समालम्भनकौतुकिन्याः ।
तदा स चेतः प्रजिघाय तुभ्यं यदा गतो नैति निवृत्य पान्थः ॥ ८० ॥

भूतं तं यमं दह्यमानैरपि अतितप्ततदङ्गसम्पर्केण जातदाहैरपि प्रवालैर्नवकिसलयरूपैर्हस्तैरुपास्ते सेवते । अन्योऽपि सेवको हस्ताभ्यां सेवते । उचितञ्चैतदित्यर्थान्तरं न्यस्यति । यो जनो यदाशां यत्सम्बन्धिनीं तृष्णां सदा अवलम्बते धारयति, यो यदधीनजीविको भवति, अथच यस्य आशां दिशम् अवलम्बते आश्रित्य वसति, असौ जन कृच्छ्रेऽपि सेवया उत्पद्यमाने कष्टेऽपि तस्य सेवां न उज्झति न त्यजति, कष्टमङ्गीकृत्यापि तस्य सेवां करोतीत्यर्थः । मलयोऽपि तस्य आशां दिशं अवलम्बते, अतस्तस्य उचितमेव तथा सेवनम् । आशाशब्दस्य श्लिष्टत्वादेवमर्थान्तरमुपन्यस्तं, यमस्त्वद्विरहजनितसन्तापशान्त्यर्थं नवपल्लवान् शरीरे निक्षिपति । तेऽपि सन्तापाधिक्यात् क्षणात् दग्धतां यान्तीति भावः । 'आशा ककुभि तृष्णायाम्' हे ॥ ७८ ॥

स्मरस्येति । स यमो भवद्वियोगात् तव विरहाद्धेतोः पाण्डूनि पाण्डुवर्णानि चण्डज्वरेण अतितीव्रकामज्वरेण जर्ज्जराणि विशीर्णानि च अङ्गानि धत्ते धारयति । पाण्डुत्वे जर्ज्जरत्वे यथा-क्रममुत्प्रेक्षते । किम्भूतानि स्मरस्य कीर्त्त्या यशसा सितानीव श्वेतीकृतानीव, तस्य कामस्य दोष्णो भुजस्य प्रतापैस्तापितानीव तापितं हि जर्जरं भवति । कामस्तमतितरां पीडयतीति भावः ॥ ७९ ॥

अथ वरुणस्य दूत्यं करोति । य इति । हे तन्वि कृशाङ्गि भैमि सायं सायाह्ने घुसृणेन कुङ्कुमसदृशसन्ध्यारागेण कृत्वा यत् समालम्भन विलेपन तत्र विषये कौतुकिन्याः कुतूहलवत्याः दिशः प्रतीच्या यो भर्त्ता स्वामी वरुणः स तदा तस्मिन् समये भाद्रपदमासादौ तुभ्यं त्वामुद्दिश्य चेतः स्वीय मनः प्रजिघाय प्राहिणोत् । यदा यस्मिन् समये गतो गृहात् प्रस्थितः पान्थः पथिको निवृत्य परावृत्य नैति न पुनर्गृहमागच्छति । तस्य चित्तं त्वय्येवानुरक्तीभूय नान्यत्र गच्छ-तीत्यर्थः । वरुणोऽपि त्वामभिलषतीति भावः । 'सिंहे धनुषि मीने च यो गतो गत एव सः' इत्यादि ज्योतिषम् । प्रजिघायेति हिनोतेर्लिडण् 'द्विरुक्तिहेतावननि हेरि'ति हस्य घत्वम् । 'रक्त-

---

मन्मथैधमिति यमे शाब्दैधत्वारोपहेतुकः मन्मथे अग्नित्वारोपः आर्थः, अत एकदेश-विवर्त्तिसाङ्गरूपकं, प्रवालैः हस्तैरिति व्यस्तरूपकं तदनुप्राणिता च मलयपर्वते कार्येण अप्रस्तुत-सेवकजनव्यवहारसमारोपात् समासोक्तिः । आशाशब्दश्लेषात् दिक्तृष्णयोरभेदाध्यवसायाद् अति-शयोक्तिः तदनुप्राणितश्च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तेन यमस्त्वद्विरहेण तथा कामसन्तप्तो जातः यथा मलयपर्वतसमुद्भवचन्दनपल्लवेनापि न सन्तापशान्तिमाप्नोतीति वस्तु व्यज्यते इति वस्तुध्वनिः ॥ ७८ ॥ अत्र यथासंख्यम्, उत्प्रेक्षाद्वयम्, छेकानु-प्रासश्चेति संसृष्टिः यमस्तव विरहेण पाण्डुः विशीर्णश्च जात इति वस्तुध्वनिः ॥ ७९ ॥

तथा न तापाय पयोनिधीना-मश्वामुखोत्थः क्षुधितः शिखावान् ।
निजः पतिः सम्प्रति वारिपोऽपि यथा हृदिस्थः स्मरतापदुःस्थः ॥ ८१ ॥
यत्प्रत्युत त्वन्मृदुबाहुवल्ली-स्मृतिस्रजं गुम्फति दुर्विनीता ।
ततो विधत्तेऽधिकमेव तापं तेन श्रिता शैत्यगुणा मृणाली ॥ ८२ ॥
न्यस्तं ततस्तेन मृणालदण्ड-खण्डं बभासे हृदि तापभाजि ।
तच्चित्तमग्नैर्मदनस्य बाणैः कृतं शतच्छिद्रमिव क्षणेन ॥ ८३ ॥

संज्ञन्तु कुङ्कुमम् । जागुडं दीपनं घस्रं सौरभं घुसृणञ्च तत्' त्रि ॥ ८० ॥

तथेति । यतः स्मरदाहेन कामजनितसन्तापेन दुःस्थो दुःखितः अतो वारीणि जलानि पाति रक्षतीति तथाविधोऽपि जलरक्षकोऽपि हृदिस्थः स्मरणगोचरोऽथच अभ्यन्तरे वर्त्तमानो निजः स्वीयः पतिर्वरुणः संप्रति त्वद्विषयविरहदशायां यथा पयोनिधीनां समुद्राणां तापाय भवति तथा क्षुधितो दाह्येन्धनाद्यभावाद् बुभुक्षितो हृदिस्थो मध्ये विद्यमानत्वादतिसन्निहितो वारि पिबतीति तादृशोऽपि अश्वामुखोत्थो वडवामुखोत्थितः शिखावान् अग्निर्वाडवानलः पयोनिधीनां तापाय न भवति । वारिपत्वेन हृदिस्थत्वेन च साम्येऽपि स्मरदाहदुःस्थत्वाभावान्न तथा वाडवानलस्य तापकारित्वमित्यर्थः । त्वद्विरहानलदुःखिनं स्वप्रभुं वरुणं स्मृत्वापि समुद्रा दुःखिनो भवन्तीत्यतो वरुणस्त्वद्विरहात् कामेनातितरां पीड्यते इति भावः अन्येऽपि प्रभुदुःखं स्मृत्वा दुःखिनो भवन्ति । वाडवानलापेक्षया कामानलोऽधिक इति व्यतिरेको व्यङ्ग्यः ॥ ८१ ॥

यदिति । शैत्यं शीतलत्वमेव गुणो यस्यास्तादृशी अतएव तेन वरुणेन श्रिता सन्तापशान्त्यर्थं शरीरे निक्षिप्ता मृणाली अल्पम् अभिनवं मृणालं यद्यस्मात् त्वन्मृदुबाहुवल्ल्यास्तव कोमलभुजलतायाः स्मृतिस्रजं गुम्फति, मृदुत्वलक्षणसाधर्म्यज्ञानेन संस्कारोद्बोधनात् स्मरणपरम्परां जनयति । ततस्तस्मात् प्रत्युत वैपरीत्येन अधिकमेव तापं विधत्ते करोति । अतएव दुर्विनीता विनयरहिता दुष्टा । सन्तापशान्त्यर्थमाश्रितस्य शीतलवस्तुनः सन्तापकारित्वमेव वैपरीत्यं, तत्राप्याधिक्यमित्यतीवास्या दुर्विनीतत्वम् । अन्योऽपि दुर्विनीतो यदर्थमाश्रीयते, तद्विपरीतमेव करोति । तापशान्तिर्दूरे तिष्ठतु, प्रत्युत सदृशतया त्वत्कोमलभुजलतायाः स्मारकत्वात् मृणाली तमतितरां पीडयतीति भावः ॥ ८२ ॥

न्यस्तमिति । यतस्त्वद्भुजलतास्मारकतया तापकरीं संपूर्णमृणालीं धारयितुं न शक्नोति,

अत्र वरुणदिशोर्लिङ्गसाम्येन पतिपत्नीव्यवहारारोपात् समासोक्तिः, प्रतीयमानोत्प्रेक्षा चेति संसृष्टिः । वरुणस्य चित्तमनुरक्तीभूय त्वय्येव विहरतीति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८० ॥ अत्र तथाविधतापासम्बन्धेऽपि तत् सम्बन्धकथनादतिशयोक्ति श्छेकानुप्रासश्चेति संसृष्टिः ॥ ८१ ॥ "अत्र मृणाल्याः कविसम्मतसादृश्याद् बाहुवल्लीस्मारकत्वोक्तेः स्मरणालङ्कारः । तदुपजीवनेन तस्यास्तापशान्तिहेतोस्तद्विपरीततापकार्योत्पत्तिकथनाद्विरुद्धकार्योत्पत्तिलक्षणो विषमालङ्कारभेदः इत्यनयोरङ्गाङ्गिभावेन सङ्करः" जी ॥ ८२ ॥

इति त्रिलोकीतिलकेषु तेषु मनोभुवो विक्रमकामचारः।
अमोघमस्त्रं भवतीमवाप्य मदान्धतानर्गलचापलस्य ॥ ८४ ॥
सारोत्थधारेव सुधारसस्य स्वयंवरः श्वो भविता तवेति।
सन्तर्पयन्ती दमयन्ति तेषां श्रुतिः श्रुती नाकसदामयासीत् ॥ ८५ ॥
समं सपत्नीभवदुःखतीक्ष्णैः स्वदारनासापथिकैर्मरुद्भिः।
अनङ्गशौर्यानलतापदुःस्थै-रथ प्रतस्थे हरितां मरुद्भिः ॥ ८६ ॥

ततस्तस्मात् पूर्वोक्तात् संपूर्णमृणालीधारणाशक्तत्वाद्धेतोस्तेन वरुणेन तापभाजि विरहानल-सन्तापिते हृदि वक्षसि न्यस्तं निक्षिप्तं मृणालदण्डस्य खण्डं बभासे शुशुभे। अत्रोत्प्रेक्षते, किम्भूतमिव तस्य वरुणस्य चित्ते मग्नैर्मदनस्य कामस्य बाणैः क्षणेन विन्यासक्षण एव शतच्छिद्रं बहुरन्ध्रं कृतमिव। मृणालखण्डस्य स्वाभाविकमपि बहुच्छिद्रत्वं कामबाणकृतत्वेनोत्प्रेक्षितम्। कामबाणैर्वरुणो जर्ज्जरीकृत इति भावः ॥ ८३ ॥

इत्थमेकैकस्य दूत्यं कृत्वा पुनरपि युगपत् सकलानां दूत्यं करोति। इतीति। हे भैमि भवतीं त्वामेव अमोघम् अव्यर्थमस्त्रम् अवाप्य प्राप्य मदान्धतया गर्वान्धत्वेन अनर्गलं निष्प्रतिबन्धम् उच्छृङ्खलं चापलम् औद्धत्यं यस्य तादृशस्य मनोभुवः कामस्य तेषु त्रिलोकीतिलकेषु त्रिभुवनालङ्कारभूतेषु इन्द्रादिषु इति पूर्वोक्तप्रकारो विक्रमस्य पराक्रमस्य कामचारः स्वेच्छाचारो वर्त्तत इति शेषः। त्वदर्थमेव ते कामेन पूर्वोक्तरीत्या पीड्यन्त इति भावः। अवाप्य स्थितस्येति योज्यम् ॥८४॥

सारोत्थेति। हे दमयन्ति श्वोभाविनि दिने तव स्वयंवरो भविता इति श्रुतिः प्रसिद्धि-र्वार्त्ता तेषां नाकसदां देवानामिन्द्रादीनां श्रुती कर्णौ अयासीत् प्राप्तवती। किम्भूता सुधारसस्य अमृतरसस्य सारोत्थधारेव सारभागोत्थितप्रवाह इव सन्तर्पयन्ती इन्द्रादीन् हर्षयन्ती। यथा सुधारससारभागधारा तेषां हर्षं जनयति, तथा श्रूयमाणा तव स्वयंवरवार्त्तापि हर्षं जनयतीत्यर्थः। तव स्वयंवरवार्त्तां श्रुत्वा इन्द्रादयोऽतितरां हृष्टा जाता इति भावः ॥ ८५ ॥

सममिति। अथ तव स्वयंवरवृत्तान्तश्रवणानन्तरं हरितां दिशां मरुद्भिर्देवैरिन्द्रादिभिः स्वदाराणां निजस्त्रीणां नासासु नासिकासु पथिकैः पान्थैर्मरुद्भिर्निश्वासवायुभिः समं सह प्रतस्थे प्रस्थितम्। किम्भूतैर्देवैः अनङ्गस्य कामस्य यत् शौर्यं शूरत्वं तदेव अनल उत्तापकत्वादग्निस्त-ज्जनितो यस्तापस्तेन दुःस्थैर्दुःखितैः। किम्भूतैर्निश्वासवायुभिः सपत्नीभवेन सपत्नीजनितेन, अस्माकं भैमी सपत्नी भविष्यतीति बुद्ध्युत्पन्नेन दुःखेन तीक्ष्णैरत्युष्णैः। कामानलसन्तप्तैरिन्द्रा-दिभिस्त्वामुद्दिश्य प्रस्थितम्। तद् दृष्ट्वा तेषां स्त्रीभिरपि दीर्घमुष्णञ्च निश्वसितमित्यर्थः। अन्येऽपि

अत्र क्षणेन शतच्छिद्रकृतमिवेति वाच्या क्रियोत्प्रेक्षा, छेकानुप्रासेन संसृज्यते। त्वयि आसक्तचित्तो वरुणः कामबाणैर्जर्जरीकृत इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ८३ ॥ अत्र 'भवतीममोघमस्त्रम्' इति व्यस्तं 'त्रिलोकीतिलकेषु' इति समस्तं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ८४ ॥ अत्रोपमालङ्कारश्छेकानुप्रासेन संसृज्यते ॥ ८५ ॥

अपास्तपाथेयसुधोपयोगै-स्त्वच्चुम्बिनेव स्वमनोरथेन ।
क्षुधश्च निर्वापयता तृषश्च स्वादीयसाध्वा गमितः सुखं तैः ॥ ८७ ॥
प्रिया मनोभूशरदावदाहे देवीस्त्वदर्थेन निमज्जयद्भिः ।
सुरेषु सारैः क्रियतेऽधुना तैः पादार्पणानुग्रहभूरियं भूः ॥ ८८ ॥
अलङ्कृतासन्नमहीविभागै-रयं जनस्तैरमरैर्भवत्याम् ।
अवापितो जङ्गमलेख्यलक्ष्मीं निक्षिप्य सन्देशमयाक्षराणि ॥ ८९ ॥

पथिकाः पथिकैः सह प्रस्थानं कुर्वन्ति । वायुभिः सह प्रस्थितमिति सत्वरता सूचिता, अथ च चण्डवायुभिः सह प्रस्थितमित्यमङ्गला यात्रा सूचिता । प्रतस्थे इति भावे लिट् । 'मरुतौ पवनामरौ' अ ॥ ८६ ॥

अपास्तेति । त्वच्चुम्बिना त्वद्विषयिणा स्वमनोरथेन निजाभिलाषेणोपलक्षितैस्तैरिन्द्रादिभिः सुखमक्लेशं यथा तथा अध्वा पन्था गमितोऽतिवाहितः । किम्भूतेन स्वादीयसा अतितरां स्वादुना हर्षाधिक्यं जनयता अतएव क्षुधं बुभुक्षां तृषं पिपासाञ्च निर्वापयता शमयता । किम्भूतैस्तैः अतएव अपास्तः परित्यक्तः पाथेयो वर्त्मशम्बलरूपः सुधोपयोगोऽमृतोपयोगो यैस्तादृशैः । त्वद्विषयकमनोरथजनिताह्लादनिमग्नान्तःकरणतया क्षुधा तृष्णा च नाभूदतो वर्त्मशम्बलोऽमृतोपयोगोऽपि परित्यक्त इत्यर्थः । मनोरथेनेति उपलक्षणे तृतीया करणे वा गमित इति णिजन्तात् क्तः ॥ ८७ ॥

प्रिया इति । सुरेषु देवेषु मध्ये सारैः श्रेष्ठैरिन्द्रादिभिः प्रियाः स्वस्वस्त्रिय इन्द्राणीप्रमुखा देवीस्त्वदर्थेन त्वन्निमित्तेन मनोभुवः कामस्य शरा बाणा एव दावो वनाग्निस्तज्जनिते दाहे सन्तापे निमज्जयद्भिः पातयद्भिः सद्भिः कामपीडिताः कुर्वद्भिरित्यर्थः अधुना इदानीम् इयं भूः पृथिवी पादानामर्पणं निधानं तदेवानुग्रहः कृपा तस्य भूः स्थानं क्रियते । इन्द्रादयस्त्वदर्थमिन्द्राणीप्रमुखा अपि स्वस्वस्त्रियस्त्यक्त्वा संप्रति भूलोके आगतवन्त इत्यर्थः ॥ ८८ ॥

अलङ्कृतेति । तैरमरैरिन्द्रादिभिरलङ्कृतो भूषित आसन्नमहीविभागः सन्निहितभूप्रदेशो यैस्तादृशैर्भीमनगरीसमीपमुपस्थितैः सद्भिः भवत्यां त्वयि विषये अयं मल्लक्षणो जनः सन्देशमयाक्षराणि वाचिकरूपवर्णान् निक्षिप्य अर्पयित्वा जङ्गमलेख्यलक्ष्मीं चलत्पत्रिकाशोभां अवापितः प्रापितः,

---

. अत्र प्रागिन्द्रादीनां प्रस्थानं, ततश्च तद्विरहेण तत्पत्नीनां निश्वासः, परन्तु वर्णनावैचित्र्येन समकालीनताप्रकाशेन कार्यकारणयोः पौर्वापर्यात्ययरूपातिशयोक्तिः, तया चोत्थापिता सहोक्तिरलङ्कारः, मरुद्भिर्मरुद्भिरित्यन्तयमकञ्चेति संसृष्टिः ॥ ८६ ॥ अत्र क्षुधायास्तृष्णायाश्चोपशमनं प्रति स्वादीयःपदार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः । क्षुत्तृषोर्निर्वापयतेत्येकया क्रिययाभिसम्बन्धात्तुल्ययोगिता, मनोरथेनेवेत्युत्प्रेक्षालङ्कारश्चेति सङ्करः ॥ ८७ ॥ अत्र 'मनोभूशरदावदाहे' इति निरङ्गं रूपकम्, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः । तेन रूपकालङ्कारेण च शचीप्रभृतयो विरहसन्तापेन नितरां व्यथिता इति वस्तु व्यज्यते, इत्यलङ्कारेण वस्तु ध्वनिः ॥ ८८ ॥

एकैकमेते परिरभ्य पीन-स्तनोपपीडं त्वयि सन्दिशन्ति ।
त्वं मूर्च्छतां नः स्मरभल्लशल्यै-र्मुदे विशल्यौषधिवल्लिरेधि ॥ ९० ॥
त्वत्कान्तिमस्माभिरयं पिपासु-र्मनोरथाश्वासनयैकयैव ।
निजः कटाक्षः खलु विप्रलभ्यः कियन्ति यावद्भण वासराणि ॥ ९१ ॥
निजे सृजास्मासु भुजे भजन्त्या-वादित्यवर्गे परिवेशवेशम् ।
प्रसीद निर्वापय तापमङ्गै-रनङ्गलीलालहरीतुषारैः ॥ ९२ ॥

अहं चलत्पलिकासदृशः कृत इत्यर्थः। त्वां प्रार्थयितुमहं प्रेषित इति भावः। अन्यस्मिन्नपि लेख्ये अक्षराणि निक्षिप्यन्ते ॥ ८९ ॥

एकैकमिति। हे दमयन्ति एते इन्द्रादय एकैकं प्रत्येकं पीनस्तनोपपीडं पीनस्तनयोः पीडयित्वा तव पीनस्तनाभ्यामात्मानं पीडयित्वा वा परिरभ्य आलिङ्ग्य त्वयि सन्दिशन्ति वदन्ति। सन्देशमेवाह हे भैमि स्मरस्य कामस्य भल्लैः शल्यैश्च अस्त्रविशेषैः स्मरलक्षणैर्भल्लशल्यैर्वा मूर्च्छतां मोहम् प्राप्नुवतां नोऽस्माकं मुदे हर्षाय शल्योद्धारान्मूर्च्छापहाराय त्वं विशल्यौषधिवल्लिर्विशल्यकरणीनाम्नी ओषधिलता एधि भव। त्वां विनाऽस्माकं काममोहो न शाम्यति, अतोऽस्मान् वृणीष्वेति भावः। विशल्यकरणी हि शल्यमूर्च्छितानां शल्योद्धारद्वारा मूर्च्छामपनयति। पीनस्तनोपपीडमिति सप्तम्यन्तात् तृतीयान्ताद्वा पीनस्तनशब्दादुपपीडयतेः कृत्वा, 'कषादिषु यथाविध्यनुप्रयोगः' इति तस्य स्थाने णम्। एधीति असधातोर्हि 'हुझल्भ्यो हेर्धिः' इति हेर्धिः, 'घ्वसोरेद्धावभ्यासलोपश्च' इति अकारस्य एत् 'शासस्तरोर्भौलुगि'ति सकारलुक् ॥ ९० ॥

त्वत्कान्तिमिति। अस्माभिस्त्वत्कान्तिं तव सौन्दर्यं पिपासुः सादरं सन्निकृष्टीकर्त्तुमिच्छुरयं निजः स्वीयः कटाक्ष एकया अद्वितीयया मनोरथाश्वसनयैव मनोराज्यलक्षणसान्त्वनेनैव कियन्ति वासराणि यावत् कियद्दिवसपर्यन्तं खलु निश्चितं विप्रलभ्यः प्रतारणीयः भण कथय। प्रतारणा हि द्वित्रिदिवसानि कर्त्तुं शक्यते, न तु सुचिरमतो भैमि स्वसौन्दर्यदर्शनयास्माकं कटाक्षं सन्तोषय : येन वयं प्रतारका न भवेमेत्यर्थः। बहुकालावधि कटाक्षेण त्वामवलोकयितुमिच्छामस्तज्झटित्यस्मान् वृणीष्वेति भावः। वासराणीति यावच्छब्दयोगे 'हादियुक्तादि' ति द्वितीया ॥ ९१ ॥

निजे इति। हे भैमि निजे स्वकीये भुजे द्वौ बाहू आदित्यवर्गे देवगणे अस्मासु परिवेशस्य वेष्टनस्य वेशम् आकारं भजन्त्यौ सृज, बाहुभ्यां कण्ठं धृत्वास्मान् परिष्वजस्वेत्यर्थः। अथच

---

जङ्गमलेख्यलक्ष्मीमित्यत्र अन्यस्य जङ्गमलेख्यस्य लक्ष्म्याः अन्येन नलेन अवाप्तसम्भवात् तल्लक्ष्मीमिव लक्ष्मीमवाप्तः इतिसादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, छेकानुप्रासेन संसृज्यते ॥ ८९ ॥ अत्र दमयन्त्यामारोप्यमानस्य विशल्यौषधिवल्लित्वस्य प्रकृतमूर्च्छापनयनोपयोगितया परिणामालङ्कारश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ९० ॥ अत्र कटाक्षे विप्रलभ्यशिशुव्यवहारारोपणात् समासोक्तिः ॥ ९१ ॥

दयस्व नो घातय नैवमस्मा-ननङ्गचाण्डालशरैरदृश्यैः ।
भिन्ना वरं तीक्ष्णकटाक्षबाणैः प्रेमस्तव प्रेमरसात् पवित्रैः ॥ ९३ ॥

त्वदर्थिनः सन्तु परःसहस्राः प्राणास्तु नस्त्वच्चरणप्रसादः ।
विशङ्कसे कैतवनाटितञ्चे-दन्तश्चरः पञ्चशरः प्रमाणम् ॥ ९४ ॥

आदित्ये सूर्ये परिवेशस्य परिधेर्वेशो युज्यते। तथा अनङ्गस्य कामस्य लीला विलासः सैव लहरी जलतरङ्गस्तया तुषारैः शीतलैरङ्गैरवयवैः अस्माकं तापं कामज्वरं निर्वापय शमय। प्रसीद प्रसन्ना भव। त्वदङ्गसम्पर्कादस्माकं कामज्वरः शान्तिं प्राप्स्यतीत्यतोऽस्मिन् विषयेऽनुग्रहः कर्त्तव्य इत्यर्थः। अङ्गैरिति बहुवचनात् सर्वाङ्गसम्पर्कलक्षणालिङ्गनाभिलाषः सूचितः। आकारान्तो भुजा-शब्दोऽप्यस्ति। आदित्यवर्गेऽस्मास्विति वर्गशब्दस्य बहुत्ववाचित्वान्न सामानाधिकरण्यविरोधः। न हि तत्र तुल्यवचनताया नियमः उद्देश्यविधेयभावादौ व्यभिचारदर्शनात्। 'परिवेशो रवेः पार्श्वे मण्डले वेष्टने तथा' अज ॥ ९२ ॥

दयस्वेति। हे दमयन्ति नोऽस्माकं दयस्व अस्मासु दयां कुरु। एवमनेन प्रकारेण अदृश्यै-र्दर्शनायोग्यैः अनङ्गः काम एवातिहिंस्रत्वाच्चाण्डालस्तस्य शरैर्बाणैरस्मान् न घातय न मारय। तव तीक्ष्णैरत्युद्दीपकैरथच शितैः कटाक्षा अपाङ्गदर्शनान्येव बाणास्तैर्भिन्ना विदारिता सन्तो वरं प्रेमः प्राणांस्त्यक्ष्यामः। किम्भूतैर्यतस्तव प्रेमरसात् प्रीतिरूपाद्रसात् पवित्रैः शुद्धैः। अदृश्यात् चाण्डालबाणान्मरणापेक्षया वरं पवित्रबाणान्मरणं श्रेय इति, तव कटाक्षबाणा एवास्मासु पत-न्त्वित्यर्थः। कटाक्षैरस्मानाश्वासय, वृणीष्वेतिभावः। न इति 'कर्मणो वा दयादेरि' ति कर्मणि षष्ठी ॥ ९३ ॥

त्वदर्थिन इति। हे दमयन्ति परःसहस्राः सहस्राधिका बहवो जनास्त्वदर्थिनस्तव याचकाः सन्तु भवन्तु। नस्तु अस्माकं पुनः प्राणास्त्वच्चरणप्रसादः तव चरणयोरनुगृहीताः। त्वच्चरणौ चेत् प्रसन्नौ भवेतां, तर्ह्येवास्माकं प्राणनं भवेदित्यर्थः। चेद्यदि इदं कैतवनाटितम् अलीकभाषितं विशङ्कसे आशङ्कसे, तर्हि अन्तश्चरस्तव अस्माकञ्च अन्तर्वर्त्ती पञ्चशरः कामः प्रमाणं साक्षी भवत्वि-त्यर्थात्, त्वद्विरहाद्वयं संशयितप्राणा जाताः इति स्वान्तर्वर्त्ती काम एव पृच्छ्यतामित्यर्थः। वयमेवानुग्राह्या इति भावः। परःसहस्रा इति 'पराच्छतसहस्रयोरि' ति सुट् ॥ ९४ ॥

अत्र अन्यवेशस्यान्येन भजनासम्भवात् 'परिवेशवेशम्' इति परिवेशस्य वेशमिव वेशमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धा निदर्शनालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ९२ ॥ अत्र अनङ्गचाण्डालेति प्रेमरसेति च रूपकम्, छेकानुप्रासः, कटाक्षबाणैर्मरणस्य अनुकूलानु-बन्धित्वात् अनुकूलं नामालङ्कारः, रसशब्दश्लेषात् आस्वादजलयोरभेदाध्यवसायात् श्लेषमूलाति-शयोक्तिश्च, रूपकेण तद्बाणस्यातीव तीक्ष्णत्वं, कटाक्षस्य च बाणत्वरूपणेन तीक्ष्णत्वं तथा प्रेमरसात् पवित्रैरिति विशेषणेन मधुरत्वञ्च गम्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ९३ ॥ "अत्र अतिशयोक्तिः" सा ॥ ९४ ॥

अस्माकमध्यासितमेतदन्त-स्तावद्भवत्या हृदयं चिराय।
वहिस्त्वयालङ्क्रियतामिदानी-मुरो मुरं विद्विषतः श्रियेव॥ ९५॥
दयोदयश्चेतसि चेत्तवाभू- दलङ्कुरु द्यां विफलो विलम्बः।
भुवः स्वरादेशमथाचरामो भूमौ धृतिं यासि यदि स्वभूमौ॥ ९६॥
धिनोति नास्मान् जलजेन पूजा त्वयान्वहं तन्वि वितन्यमाना।
तव प्रसादाय नते तु मौलौ पूजास्तु नस्त्वत्पदपङ्कजाभ्याम्॥ ९७॥

अस्माकमिति। हे भैमि भवत्या त्वया अस्माकमेतदन्तर्हृदयं मनश्चिराय चिरकालं तावदध्यासितं अधिष्ठितमेव चिरकालं त्वमस्माभिर्मनसि धृतासीत्यर्थः। इदानीं त्वयाऽस्माकं वहिर्हृदयं वक्षोऽलङ्क्रियतां भूष्यतां श्रियेव, यथा श्रिया लक्ष्म्या मुरं विद्विषतो नारायणस्य उरो वक्षोऽलङ्क्रियते तथा। बहुकालावधि विप्रलम्भमनुभूय वयमतिदुःखिनो जाताः, संप्रति सम्भोगेनानुग्राह्या इति भावः। यद्यपि पूर्ववाक्यस्थस्य भवत्येत्यस्यानुषङ्गेणैव उत्तरवाक्यस्यान्वयोपपत्तौ त्वयेति पदं व्यर्थं, तथाप्यनुषङ्गेणान्वयकल्पनापेक्षया साक्षात्पदप्रयोग एव झटित्यन्वयोपस्थापकत्वाच्छ्रेयानिति बोध्यम्। भवत्या दीप्तिमत्येति वा। भवत्यामिति सप्तम्यन्तपाठं कल्पयित्वा व्याख्यानन्तु न मनोरमम्। विद्विषत इति 'द्विषः शत्रावि' ति शतृः। 'हृदयं वक्षसि स्वान्ते बुक्कायाम्' हे॥ ९५॥

दयोदय इति। हे भैमि चेद्यदि तव चेतसि मनसि दयायाः करुणाया उदय उद्रेकोऽभूत्, तदा द्यां स्वर्गम् अलङ्कुरु स्वावस्थानेन भूषय। विलम्बः कालक्षेपो विफलो निष्प्रयोजनः। शीघ्रमेवास्मान् वरयित्वा स्वर्गं गच्छेत्यर्थः। अथेति पूर्वापरितोषे यदि त्वं स्वस्य भूमौ उत्पत्तिस्थाने भूमौ भूलोके धृतिं प्रीतिं यासि प्राप्नोषि, तदा वयं भुवः पृथिव्याः स्वरादेशं स्वर्गसंज्ञाम् आचरामः कुर्मः। यत्र वयं वत्स्यामः स एव स्वर्गः, तवानुरोधात् स्वर्गं परित्यज्य भूलोके एव वत्स्याम इति भावः। 'भूमिः पृथ्व्यां वासदेशे स्थानमात्रेऽपि च स्त्रियाम्' व। क्ष्मामेव देवालयतां नयामः। 'भूमौ रतिश्चेत्तव जन्मभूमावि'ति क्वचिदुत्तरार्द्धम्॥ ९६॥

धिनोतीति। हे तन्वि क्षीणाङ्गि भैमि त्वया अन्वहं प्रतिदिनं जलजेन पद्मेन वितन्यमाना विशेषेण क्रियमाणा पूजा अस्मान् न धिनोति न प्रीणयति। तु किन्तु प्रणयकुपितायास्तव प्रसादाय प्रसन्नताकरणार्थं नते नम्रीभूते अस्माकं मौलौ मस्तके त्वत्पदपङ्कजाभ्यां तव पादपद्माभ्यां नोऽस्माकं पूजा अस्तु भवतु। इतरकमलापेक्षया त्वच्चरणकमलयोरुत्कृष्टत्वात् ताभ्यामेव पूजास्माकं प्रीतिकरी भवत्वित्यर्थः। त्वच्चरणयोः प्रणिपातेन यथा वयं सुखिनो भवामस्तथा कुर्विति भावः॥ ९७॥

---

उपमालङ्कारश्छेकानुप्रासेन संसृज्यते। तेन च नारायणस्य लक्ष्मीरिव त्वमस्माकं हृदयस्थिता सुभगत्वस्य परमोत्कर्षं प्राप्स्यसीत्यलङ्कारेण वस्तुध्वनिः॥ ९५॥ अत्र धृतिप्राप्तिं प्रति स्वभूमिपदार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारश्छेकानुप्रासेन संसृज्यते॥९६॥ अत्र पदयोः पङ्कजत्वारोपस्य

स्वर्णैर्वितीर्णैः करवाम वाम-नेत्रे भवत्या किमुपासनासु ।
अङ्ग त्वदङ्गानि निपीतपीत-दर्पाणि पाणिः खलु याचते नः ॥ ९८ ॥
वयं कलादा इव दुर्विदग्धं त्वद्गौरिमस्पर्द्धि दहेम हेम ।
प्रसूननाराचशरासनेन सहैकवंशप्रभवभ्रु बभ्रु ॥ ९९ ॥
सुधासरःसु त्वदनङ्गतापः शान्तो न नः किं पुनरप्सरःसु ।
निर्वाति तु त्वन्ममताक्षरेण सूनाशुगेषोर्मधुशीकरेण ॥ १०० ॥

स्वर्णैरिति। हे वामनेत्रे सुलोचने भैमि भवत्या त्वया उपासनासु आराधनासु वितीर्णैर्दत्तैः स्वर्णैः स्वर्णनिर्मितपुष्पादिभिर्वयं किं करवाम अपितु तैः किमपि प्रयोजनं नास्तीत्यर्थः। कुत इत्यत आह,—अङ्ग हे भैमि खलु यस्मात् नोऽस्माकं पाणिर्हस्तो निपीतो भक्षितो विनाशित इति यावत् पीतस्य स्वर्णस्य दर्पो गर्वो यैस्तादृशानि त्वदङ्गानि याचते प्रार्थयते। यैः सुवर्णादि पराजितं, तदभिलाषिणः कथं सुवर्णेन प्रीतिर्भवेदित्यर्थः। 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे' वि। 'पीतं वर्णे सुवर्णे च' व। अङ्गेति सानुनयसम्बोधने ॥ ९८ ॥

वयमिति। प्रसूननाराचः कामस्तस्य शरासनेन धनुषा सह एकवंशे एकवेणौ अथ च एककुले प्रभव उत्पत्तिर्ययो स्तादृश्यौ भ्रुवौ यस्याः सा, हे तथाभूते कामचापसदृशभ्रूयुगे भैमि वयं कलादा इव स्वर्णकारा इव त्वद्गौरिमस्पर्द्धि तव गौरत्वसाम्याभिलाषि अतएव उत्तमेन सह स्पर्द्धाकरणात् दुर्विदग्धं दुर्विनीतं बभ्रु पिंगलं हेम सुवर्णं दहेम अग्नौ प्रक्षिपाम। वयं त्वदीयास्त्वदपराधकारिणः सुवर्णस्य वह्निप्रक्षेपरूपं दण्डं कुर्म इत्यर्थः, अस्माकं सुवर्णेन प्रयोजनं नास्ति, सुवर्णवर्णां त्वामेवाभिलषाम इति भावः। 'नाडिन्धमः स्वर्णकारः कलादो रुक्मकारके'। 'बभ्रुः स्यात्पिङ्गले त्रिषु' अ। एकवंशप्रभवभ्रु इत्यत्र 'वामभ्रु वाम्यं त्यजे' त्यादिवत् 'द्वन्जम्बार्थादेश्च' त्यत्रादिपदेन संगृहीतत्वाद् ह्रस्वत्वम्। तथाच गोयीचन्द्रः 'आदिपदेन शिष्टप्रयोगदर्शनाभ्युपगतह्रस्वविधानानां ग्रहणमि' ति ॥ ९९ ॥

सुधेति। हे भैमि नोऽस्माकं त्वदनङ्गतापस्त्वन्निमित्तः कामज्वरः सुधासरस्सु अमृतसरसीष्वपि निमज्जनेन न शान्तः न शान्तिं प्राप्तः, किं पुनरपां जलानां सरस्सु सरसीषु, अथ च रम्भामेनकादिदेवाङ्गनासु शाम्यति। तर्हि कथं शान्तो भविष्यतीत्याकाङ्क्षायामाह। तु पुनः सूनाशुगस्य कामस्य इषोः पुष्पमयबाणस्य मधुशीकरेण मधुलवरूपेण त्वन्ममताक्षरेण इन्द्रादयो मदीया

---

प्रकृतपूजायामुपयोगित्वात् परिणामालङ्कार श्छेकानुप्रासः, जलजपङ्कजपूजया प्रीणनसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिश्च ॥ ९७ ॥ अत्राङ्गानां स्वर्णदर्पलोपासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, स्वर्णादङ्गस्याधिक्याद् व्यतिरेक श्छेकानुप्रासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ९८ ॥ अत्र वेणु कुलयोर्भेदेऽपि वंशपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, 'कलादा इवे'त्युपमा, दुर्विदग्धत्वं प्रति त्वद्गौरिमस्पर्द्धिपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेत्येतेषां निरपेक्षतया संसृष्टिः ॥ ९९ ॥

खण्डः किमु त्वद्गिर एव खण्डः किं शर्करा तत्पथशर्करैव ।
कृशाङ्गि तद्भङ्गिरसोत्थकच्छ-तृणन्नु दिक्षु प्रथितं तदिक्षुः ॥ १०१ ॥
ददाम किन्ते सुधयाधरेण त्वदास्य एव स्वयमास्यते यत् ।
विधुं विजित्य स्वयमेव भावि त्वदाननं तन्मखभागभागि ॥ १०२ ॥

इति तव वचनेन निर्वाति शान्तिं गमिष्यति । वर्त्तमानसामीप्ये लट् । त्वद्विरहदुःखिनामस्माकममृतसरोऽवगाहनमप्सरःसम्भोगश्च न सुखाय भवतीति भावः । यो हि अमृतसरोवरेषु न शान्तः सोऽमृतशीकरेण शाम्यतीत्याश्चर्यम् ॥ १०० ॥

खण्ड इति । हे कृशाङ्गि भैमि त्वद्गिरस्तव वाचः खण्डो भाग एव खण्डो गुडविकारविशेषः किमु, नत्वतिरिक्तः । तथा तस्या गिरः पन्था गमनमार्गस्तत्र वर्त्तमाना शर्करैव कर्परांश एव शर्करा सिता किम् । तथा तस्या गिरो या भङ्गिर्वक्रता परिपाटी तस्या यो रसस्तदुत्थो यः कच्छो जलप्रायदेशस्तस्य तृणं नु दिक्षु इक्षुः प्रथितम् । तथाविधं तृणमेव किं इक्षुरूपेण दिक्षु प्रथितमित्यर्थः । वयमतितरां त्वद्वचनश्रवणाभिलाषिणो जाता इति भावः । 'खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः' 'शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च' मे । 'जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः' अ ॥ १०१ ॥

ददामेति । हे भैमि वयं ते तुभ्यं किं ददाम अपितु त्वद्दानोपयुक्तमस्माकं किमपि वस्तु नास्तीत्यर्थः । ननु देवानां युष्माकममृतं वर्त्तते, तदेव दीयतामित्याशङ्क्य तदपि न ते दुर्लभमित्याह, हि यस्मात् अधरेण अधररूपया सुधया अमृतेन त्वदास्य एव तव मुखे एव स्वयं आस्यते स्थीयते । यतोऽधरीभूय तव मुख एव अमृतं वर्त्तते, अतोऽमृतान्तरदानं न ते प्रीतिकरं भविष्यतीत्यर्थः । ननु मा दीयताममृतं किन्त्वमृतवद्युष्माकं यज्ञभागो वर्त्तते, स एव दीयतामित्याशङ्क्य सोऽपि न ते दुर्लभ इत्याह, यस्माच्च त्वदाननं तव मुखं कर्तृ विधुं चन्द्रं विजित्य स्वयमेव तस्य चन्द्रस्य मखभागभागि यज्ञांशग्राहि भावि भविष्यति, अतस्तद्दानमपि न ते प्रीतिकरं भविष्यतीत्यर्थः । यो हि जीयते तस्य धनं जयिना गृह्यत एव, अमृतयज्ञभागद्वारा वयं त्वत्प्रीतिं जनयितुं न शक्नुम इति भावः ॥ १०२ ॥

---

स्वर्गवेश्याजलाशययोर्भेदेऽपि अप्सरःपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, अर्थापत्तिः, सत्यपि सुधासरोवररूपे कारणे तापशान्तिरूपकार्यानुदयाद् विशेषोक्तिः, बहुषु सुधासरःसु योऽनङ्गतापः न शान्तः तस्य ममताक्षरमात्रादेव शान्ततोक्ते "स्व कार्यकरणविरोधाद्विषमालङ्कारः" सा । अन्त्यानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १०० ॥ अत्र वाच्योत्प्रेक्षात्रयम् । तेन च वयमतितरां तव वचनामृतं पिपासव इति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः छेकानुप्रासश्च ॥ १०१ ॥ अत्र प्रथमार्द्धे सुधयाधरेणेति रूपकम्, उत्तरार्द्धे च 'विधुं विजित्य' इति व्यतिरेकः छेकानुप्रासश्च ॥ १०२ ॥

प्रिये वृणीष्वामरभावमस्म-दिति त्रपोदश्चि वचो न किन्नः ।
त्वत्पादपद्मे शरणं प्रविश्य स्वयं वयं येन जिजीविषामः ॥ १०३ ॥
अस्माकमस्मान्मदनापमृत्यो-स्त्राणाय पीयूषरसोऽपि नासौ ।
प्रसीद तस्मादधिकं निजन्तु प्रयच्छ पातुं रदनच्छदन्नः ॥ १०४ ॥
प्लुष्टश्चापेन रोपैरपि सह मकरेणात्मभूः केतुनाभूद्-
धत्तां नस्त्वत्प्रसादादथ मनसिजतां मानसो नन्दनः सन् ।
भ्रूभ्यान्ते तन्वि धन्वी भवतु तव सितैर्जैत्रभल्लः स्मितैः स्ता-
दस्तु त्वन्नेत्रचञ्चत्तरशफरयुगाधीनमीनध्वजाङ्कः ॥ १०५ ॥

अमरत्वमपि न ते दातुं योग्यमित्याह । प्रिये इति । हे प्रिये भैमि अस्मत् सकाशात् अमरभावम् अमरत्वम् अविनाशित्वं वृणीष्व प्रार्थय इति नोऽस्माकं वचः किं त्रपोदश्चि न लज्जावहं न अपि तु लज्जावहमेव भवतीत्यर्थः । कथमित्यत आह येन हेतुना अमरा अपि वयं त्वत्पादपद्मे तव चरणकमलद्वयलक्षणं शरणं रक्षकं प्रविश्य प्राप्य स्वयमेव जिजीविषामः जीवितुमिच्छामः स्वयमसिद्धो हि कथं परान् साधयति,त्वच्चरणयुगलं शरणीकृत्य जिजीविषतामस्माकं तुभ्यममरत्वप्रदानकथनं केवलमुपहासाय भवतीत्यमरत्वमपि नास्माभिर्दातुं शक्यमित्यर्थः । कथञ्चिदपि तवोपकर्त्तुमसमर्थानस्मान् केवलं दयां विधाय वृणीष्वेति भावः । अस्मदिति अस्मच्छब्दात् पञ्चमीबहुवचनम् 'पञ्चमी भ्यसस्त' इति भ्यसः स्थाने तकारः । अस्मानिति पाठे तु वृङो द्विकर्म्मकत्वविवक्षया 'कर्म्महेतुर्दुहादेरि'ति कर्म्मसंज्ञायां द्वितीया ॥ १०३ ॥

अस्माकमिति । अस्माकम् अस्मादुपस्थितात् मदनापमृत्योः कामजनिताकस्मिकमरणात् त्राणाय रक्षणाय असौ प्रतिदिनं सेव्यमानः पीयूषरसोऽपि अमृतरसोऽपि न समर्थो भवतीति शेषः, प्रसीद अस्माकमुपरि प्रसन्ना भव । तु पुनस्तस्मात् पीयूषरसात् अधिकम् अतितरां स्वादुम् अधिकसामर्थ्यञ्च निजं स्वीयं रदनच्छदम् अधरं पातुं नोऽस्मभ्य प्रयच्छ देहि । अनेनैव मदनापमृत्युः शान्तिं प्राप्स्यतीति भावः । अन्यत्रापि सामान्यौषधेनापमृत्योरप्रतीकारं दृष्ट्वा अधिकवीर्य्यमौषधं पातुं ददाति ॥ १०४ ॥

अथ च्छन्दोऽन्तरेण सर्गसमाप्तिं सूचयति । प्लुष्ट इति । य आत्मभूः कामश्चापेन धनुषा रोपैर्बाणैर्मकरेण मकररूपेण केतुना ध्वजेन सह प्लुष्टो हरनयनाग्निना दग्धोऽभूत् । अथानन्तरं इदानीं स कामस्त्वत्प्रसादान्नोऽस्माकं मानसो मनःसम्बन्धी नन्दनो हर्षकः सन् अथच मनसः पुत्रः

---

प्रिये इति सम्बोधनपदार्थस्य वरणयोग्यतासम्पादकहेतुत्वेन साहित्यविद्याधर्युक्तंकाव्यलिङ्गं समर्थनीयम् नतु परार्द्धवाक्यार्थस्य पूर्व्वार्द्धवाक्यहेतुत्वेन, तत्र येनेति पदेन हेतुत्वस्य स्फुटमुक्तत्वाद्वैचित्र्याभावेन तदलङ्काराभावात् वैचित्र्यस्यैवालंकारत्वात् । तादृशजिजीविषाऽसम्बन्धेऽपि तत् सम्बन्धोक्तेरतिशयोक्तिः, तत्पादपद्मे इति रूपकञ्च ॥ १०३ ॥ अत्र व्यतिरेकश्छेकानुप्रासेन संसृज्यते । "अत्र अतिशयोक्तिः" सा ॥ १०४ ।

स्वप्नेन प्रापितायाः प्रतिरजनि तव श्रीषु मग्नः कटाक्षः
श्रोत्रे गीतामृताब्धौ त्वगपि ननु तनूमञ्जरीसौकुमार्ये।
नासा श्वासाधिवासेऽधरमधुनि रसज्ञा चरित्रेषु चित्तं
तन्नस्तन्वङ्गि कैश्चिन्न करणहरिणैर्वागुरा लङ्घितासि॥ १०६॥

सन् मनसिजतां मनोभवतां धत्तां धारयतु। त्वत्सङ्गमवशादानन्दको मदनोऽस्मिन् मनसि पुनरुत्पद्यताम्। अतएव मनसिजत्वमपि धारयत्वित्यर्थः। तस्य धनुरादिकमपि दग्धं, तद्वत्तास्य कथं भवेदित्यत आह,—हे तन्वि भैमि स कामस्ते तव भ्रूभ्यां धन्वी धनुष्मान् भवतु। तथा तव सितैः श्वेतैः स्मितैर्हास्यैर्जैत्रं जयशीलं भल्लमस्त्रं यस्य तादृशः स्तात् भवतु। तथा तव नेत्रे एव चञ्चत्तरम् अतिशयेन शोभमानं चञ्चलतरं वा शफरयुगं प्रोष्ठीयुगलं तस्याधीनो मीनध्वजरूपोऽङ्कश्चिह्नं यस्य तादृशोऽस्तु भवतु। त्वमस्माकं सम्पूर्णकामास्पदं भविष्यसीति झटित्यस्मान् वृणीष्वेति भावः। मकरमीनावेकार्थाविति काव्यज्ञाः। 'पत्नी रोप इषुर्द्वयोः' अ। 'नन्दनो हर्षके पुत्रे' वि। स्तादिति अस्धातोर्लोटस्तुङ् 'तोस्तातङ्ङाशिषी'ति तुङस्तात्, 'श्नसोरल्लोपः' इत्यकारलुक्। स्रग्धरावृत्तमिदम्॥ १०५॥

स्वप्नेनेति। ननु भो भैमि प्रतिरजनि रात्रौ रात्रौ स्वप्नेन प्रापिताया ज्ञानविषयीकृतायास्तव श्रीषु शोभासु नोऽस्माकं कटाक्षो मग्नः। तथास्माकं श्रोत्रे कर्णौ तथाभूतायास्तव गीतामृताब्धौ गानरूपामृतसमुद्रे मग्ने। अथास्माकं त्वगपि तव तनुः शरीरमेव मञ्जरी वल्लरी तस्याः सौकुमार्ये कोमलत्वे मग्ना। अस्माकं नासा तव श्वासाधिवासे निश्वासपरिमले मग्ना। अस्माकं रसज्ञा जिह्वा तव अधर एव मधु अधरस्य मधु वा तस्मिन् मग्ना। अस्माकं चित्तं तव चरित्रेषु विलासादिसर्वव्यापारेषु मग्नम्। तत्तस्मात् हे तन्वङ्गि कृशाङ्गि भैमि अस्माकं कैश्चित् कैरपि करणानि इन्द्रियाण्येव हरिणास्तैर्वागुरा मृगबन्धनीरूपा त्वं न लङ्घिता नातिक्रान्ता असि। वागुराख्यया त्वया सौन्दर्यादिना बद्धानि अस्माकं चक्षुरादीन्द्रियाणि त्वामतीत्य गन्तुं न शक्नुवन्तीत्यर्थः। स्वप्नेऽप्यस्माभिरन्या न स्पृश्यत इति त्वय्येवात्यन्तमनुरागिणोऽस्मान् झटिति वृणीष्वेति भावः। यद्यपि देवानामस्वप्नत्वात् स्वप्नेत्यादिकथनमनुचितं, तथाप्यत्र स्वप्नपदेन गौण्या लक्षणया उन्मा-

---

"अत्र च्छेकानुप्राससहोक्त्यतिशयोक्त्यलंकाराः" सा। चापरोपमकरैः सह पुष्पत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेः, अथवा आत्मभूवः दाहक्षणात् रोपादीनां दाहक्षणानां भेदेऽपि तदभेदोक्तेरतिशयोक्तिः, तन्मूला च सहार्थबलात् चापादीनां सर्वेषामेकदा दाहवचनात् सहोक्तिरलङ्कारः। मदनस्य तच्चापादीनां च हरनयनानले एकदा दाहस्य वास्तवत्वे नानयोरलंकारयोः सम्भवः। मानसनन्दन इति शब्दद्वयश्लेषात् आत्मभूत्वमनःसम्बन्धित्वयोः हर्षकत्वपुत्रत्वयोश्च भेदेऽपि तदभेदाध्यवसायादपरातिशयोक्तिः। कामे मानसनन्दनत्वस्य, भ्रूद्वये धनुषः, स्मिते जैत्रभल्लस्य, नेत्रयोः चञ्चलशफरयुगस्य चारोपात् रूपकालङ्काराः, चापरोपमकरशब्देन पूर्वमुद्दिष्टानां भ्रूभ्यां ते तन्वि धन्वी इत्यादिना क्रमेण अनूद्देशात् यथासंख्यमलङ्कारः॥ १०५॥

इति धृतसुरसार्थवाचिकौघ-स्वरसनवल्लरिपत्रहारकस्य ।
सफलय मम दूततां वृणीष्व स्वयमवधार्य दिगीशमेकमेषु ॥ १०७ ॥
आनन्दयेन्द्रमथ मन्मथमग्नमग्निं केलीभिरुद्धर तनूदरि नूतनाभिः ।
असादयोदितदयं शमने मनो वा नो वा यदीत्थमथ तद्वरुणं वृणीथाः ॥१०८॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

दावस्था लक्ष्यते, रजन्याश्चोद्दीपकतया उन्मादाधिक्यजनकत्वात् प्रतिरजनीति पदमपि सार्थकं यद्वा प्रति प्रतिकूला रजनी हरिद्रा यस्याः सा तथा हे तादृशि अतिगौराङ्गि इति सम्बोधनपदमिदमिति प्राञ्चः ॥ १०६ ॥

इत्थमिन्द्रादिसन्दिष्टमुक्त्वा उपसंहरन्नलः पुनरपि दौत्यं प्रकटयति । इतीति । हे भैमि एषु इन्द्रादिषु दिगीशेषु मध्ये एकं यं कमपि अन्यतमं दिगीशं दिक्पालं स्वयमात्मनैव अवधार्य वृणीष्व, मम दूतताञ्च सफलय एतेषां स्वीकारात् फलवतीं कुरु । किम्भूतस्य मम, इति पूर्वोक्तप्रकारेण धृतः सुरसार्थस्य देवसमूहस्य इन्द्रादेर्वाचिकौघः सन्देशवचनसमूहो यया तादृशी या स्वरसनवल्लरिर्निजजिह्वामञ्जरिः सैव पत्रं लेख्यं तस्य हारकस्य वाहकस्य । अन्योऽपि पत्रवाहकस्याभिलषितस्वीकारात् दूत्यं सफलयति । रसनशब्दोऽकारान्तोऽप्यस्ति । इतिधृतसुरसार्थवाचिकस्त्रग्निजरसनातलपत्रहारकस्येति क्वचित् पाठः । पुष्पिताग्रावृत्तमिदम् ॥ १०७ ॥

आनन्दयेति । हे तनूदरि कृशोदरि दमयन्ति इन्द्रम् आनन्दय वरणद्वारा सन्तोषय, अथ अथवा मन्मथमग्नं कामजनितपीडानिमग्नम् अग्निं नूतनाभिर्नवनवाभिः केलीभिः सुरतक्रीडाभिरुद्धरः, कामपीडासकाशादुत्तोलय अग्निं वा सुरतक्रीडाभिरानन्दय । वा किंवा शमने यमे मनः उदिता उद्गता दया यस्य तादृशम् आसादय कुरु, यमं वा वृणीष्वेत्यर्थः । वाऽथवा यदि इत्थं नो इन्द्रादित्रयमपि यदि वरीतुं नेच्छसि, अथ तर्हि वरुणं वृणीथा वृणीष्व इन्द्रादीनां चतुर्णां मध्ये यस्य कस्यापि वरणेन मदीया दूतता सफलीक्रियतामिति भावः । वसन्ततिलकावृत्तमिदम् ॥ १०८ ॥

---

"अत्र चतुर्थपादार्थस्य पूर्वपङ्क्त्यवाक्यार्थहेतुकत्वात् वाक्यार्थहेतुकं काव्यलिंगं, तच्च करणहरिणैरित्यादिरूपकेण सङ्कीर्यते" जी । एषु रूपकेषु गीते अमृताब्धित्वस्य तन्वां मञ्जरीत्वस्य अधरे मधुत्वस्य आरोपः शाब्दः, श्रीषु चरित्रेषु च अमृतवापीत्वाद्यारोपः आर्थः, ततश्च रूपकस्य एकदेशविवर्त्तिता । प्रकृतेषु कटाक्षादिषु सर्वत्र मग्नत्वधर्म्माभिसम्बन्धात् तुल्ययोगिता च ॥ १०६ ॥ अत्र दौत्यसफलतां प्रति वरणवाक्यार्थस्य हेतुत्वात् काव्यलिंगम् स्वरसनवल्लरिपत्रेति रूपकञ्चेत्यनयोः सङ्करः ॥ १०७ ॥ अत्र च्छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः ॥ १०८ ॥

तस्यागादयमष्टमः कविकुलादृष्टाध्वपान्थे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १०९ ॥

श्रीहर्षमिति । कविकुलैरितरकविसमूहैरदृष्टोऽपरिशीलितो योऽध्वा पन्थास्तत्र पान्थे नित्य-पथिके अभिनवयैव रीत्या निर्मिते इत्यर्थः अगात् समाप्तिं गतः ॥ १०९ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायामष्टमः सर्गः समाप्तः ॥

८मः सर्गः समाप्तः ॥

## नवमः सर्गः ।

इतीयमक्षिभ्रुवविभ्रमेङ्गितैःस्फुटा-मनिच्छां विवरीतुमुत्सुका ।
तदुक्तिमात्रश्रवणेच्छयाऽशृणो-द्दिगीशसन्देशगिरं न गौरवात् ॥ १ ॥
तदर्पितामथ तथाद्विधाय तां दिगीशसन्देशमयीं सरस्वतीम् ।
इदं तमुर्वीतलशीतलद्युतिं जगाद वैदर्भनरेन्द्रनन्दना ॥ २ ॥

अथ नवमं सर्गमारभमाणः प्रथमं पूर्वसर्गेण सहैकवाक्यत्वाय पूर्वसर्गोक्तनलवचनं भैमी शृणोति स्मेत्याह । इतीति । इयं भैमी इति पूर्वसर्गोक्तं नलवचनं तस्य नलस्य उक्तिमात्रस्य केवलोक्तेः श्रवणेच्छया श्रवणवाञ्छया अशृणोत् शुश्राव, न पुनर्दिगीशानां दिक्पालानामिन्द्रा-दीनां याः सन्देशगिरो वाचिकानि तासां गौरवात् इन्द्राद्याज्ञाऽवश्यं श्रोतव्येत्यादरातिशयात् शुश्राव । किम्भूता अक्ष्णोश्चक्षुषो भ्रुवोश्च यो विभ्रमः सङ्कोचनविक्षेपादिरूपविलासस्तल्लक्षणै-रिंगितैरभिप्रायसूचकचेष्टितैः स्फुटां व्यक्ताम् अनिच्छां दिक्पालेष्वनादरं विवरीतुं विशेषेण प्रकटीकर्तुम् उत्सुका उद्युक्ता । एकस्मिन्नेवानुरक्तमनसां पतिव्रतानां पुरुषान्तरविषयकवचन-श्रवणं दुःखकरं भवतीति नलानुरक्तया भैम्या इन्द्रादिवाचिकं दुःखितयैव श्रुतमित्यर्थः । क्वचि-द्दिगीशसन्देशगिरमिति द्वितीयान्तः पाठः । अक्षिभ्रुवेति अक्षिणी च भ्रुवौ चेति प्राण्यङ्गत्वा-देकवद्भावः 'अक्ष्णोर्भ्रुव' इत्यत्समासान्तः । अस्मिन् सर्गे वंशस्थं वृत्तम् । १ ॥

एवमिन्द्रादिसन्दिष्टमनास्थया श्रुत्वा भैमी नलं वक्तुमारभते । तदर्पितामिति । वैदर्भनरेन्द्र-नन्दना दमयन्ती तेन नलेन अर्पितां ज्ञापितां तां दिगीशानां दिक्पालानामिन्द्रादीनां सन्देश-

---

अत्र तदुक्तिमात्रेति मात्रशब्दापोहस्य दिगीशगिरो नेति शब्देनोक्तत्वात् शाब्दी परिसंख्या, विवरीतुमुत्सुकेति पदार्थस्य निषेधस्य ज्ञानपूर्वकत्वे न ज्ञानार्थं श्रवणं प्रतिहेतुत्वात् काव्यलिङ्गम् । तदुक्तिमात्रश्रवणेच्छया इत्यनेन रागाख्यभावोदयोक्ते भावोदयालङ्कारः, छेकानुप्रासश्चेति ॥ १ ॥

मयाङ्ग पृष्टः कुलनामनी भवा-नमू विमुच्यैव किमन्यदुक्तवान् ।
न मह्यमत्रोत्तरधारयस्य किं ह्रियेऽपि सेयं भवतोऽधमर्णता ॥ ३ ॥

अदृश्यमाना क्वचिदीक्षिता क्वचि-न्मयानुयोगे भवतः सरस्वती ।
क्वचित्प्रकाशां क्वचिदस्फुटार्णसं सरस्वतीं जेतुमनाः सरस्वतीम् ॥ ४ ॥

मयीं वाचिकरूपां सरस्वतीं वाणीम् अश्रुतवत् अनाकर्णितामिव विधाय कृत्वा वैमत्यात् तस्या उत्तरदानप्रयत्नमकृत्वेत्यर्थः उर्वीतलशीतलद्युतिं पृथिवीचन्द्रं तं नलम् इदं वक्ष्यमाणं जगाद उक्तवती ॥ २ ॥

किं जगादेत्याहाग्रिमश्लोकचतुष्टयपर्यन्त्यम् । मयेति । अङ्ग हे सुन्दर मया कुलनामनी पृष्टः कस्मिन् कुले जातः किन्नामधेयश्चासीति पूर्वं जिज्ञासितो भवान् अमू कुलनामनी विमुच्यैव त्यक्त्वैव अकथयित्वैव किं किमर्थम् अन्यदप्रस्तुतम् इन्द्रादिसन्दिष्टम् उक्तवान् उवाच, अनुचितमेत-दित्यर्थः अत्र कुलनामप्रश्नविषये मह्यम् उत्तरधारयस्य मत्प्रश्नप्रत्युत्तरकरणरूपर्णवतो भवतः सेयं प्रस्तुता अधमर्णता ऋणिता ह्रियेऽपि लज्जायै अपि किं न भवति, अपि तु ऋणापरिशोधनात् तव लज्जा युज्यते । पृष्टस्योत्तरमददानोऽपृष्टञ्च प्रयुञ्जानो भवान् कथं न लज्जते इत्यर्थः । तस्मात् कुलनामनी कथयेति भावः । अन्यस्यापि ऋणमपरिशोधयतो लज्जा जायते । उत्त-रधारयस्येति धारेर्णिजन्तात् 'साह्यादेरप्रादेरि'ति शङ् । उत्तरस्य धारय उत्तरधारय इति तत्पुरुषः । मह्यमिति 'साधुर्धारयतेरि'ति सम्प्रदानसंज्ञया चतुर्थी ॥ ३ ॥

अदृश्यमानेति । भवतस्तव सरस्वती वाणी सरस्वतीं सरस्वतीनाम्नीं सरस्वतीं नदीं जेतुमनाः पराभवितुकामा तत्सदृशी भवतीत्यर्थः । सादृश्यमेव द्वयोर्विशेषणोपन्यासेनाविष्करोति । किम्भूता वाणी क्वचित् कस्मिंश्चित् कुलनामविषये मम अनुयोगे प्रश्ने अदृश्यमाना उतराप्रतिपादना-दलक्षिता, तथा क्वचित् कुत आगतोऽसीत्यादौ अनुयोगे ईक्षिता हरित्पतीनां सदसः प्रतीहि त्वदीयमेवातिथिमागतं मामित्याद्युत्तरकथनादुपलब्धा । किम्भूतां सरस्वतीं क्वचिद्देशविशेषे प्रकाशां प्रकटजलां क्वचिच्च अस्फुटमप्रकटं अर्णो जलं यस्याः सा तथा तां अन्तःसलिलामित्यर्थः, अतएव सरस्वतीनदीतुल्या तव वाणीत्यर्थः । कुलनामविषयकप्रश्नस्याप्युत्तरं प्रयच्छेति भावः । 'प्रश्नोऽनुयोगः पृच्छा च' 'अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्' अ। 'सरस्वती सरिद्भेदे सरिन्माले च वाचि च । सरस्वती गवि क्वापि सरस्वानुदधौ नदे' ध ॥ ४ ॥

---

अत्र नलरूपविषयनिगरणेन अत्र अप्रसिद्धस्य उर्वीतलशीतलद्युतेरभेदाध्यवसायादतिशयोक्तिर-लङ्कारः तेन च नलस्य भूतलवासिनामानन्ददायकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ २ ॥ अत्र उत्तरधारयत्वं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् । अधमर्णतां प्रति उत्तरधारयस्येति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोः सङ्करः ॥ ३ ॥ "अत्र नलवाचः सरस्वतीनदीधर्मसम्बन्धात् तज्जिगीषोत्प्रेक्षा व्यञ्जकाप्रयोगात् गम्या । तया च उपमा व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः" जी । यमकञ्च ॥ ४ ॥

गिरः श्रुता एव तव श्रवःसुधाः श्लथाभवन्नाम्नि तु न श्रुतिस्पृहा ।
पिपासुता शान्तिमुपैति वारिजा न जातु दुग्धान्मधुनोऽधिकादपि ॥ ५ ॥
बिभर्त्ति वंशः कतमस्तमोऽपहं भवादृशं नायकरत्नमीदृशम् ।
तमन्यसामान्यधियावमानितं त्वया महान्तं बहु मन्तुमुत्सहे ॥ ६ ॥
इतीरयित्वा विरतां पुनः स तां गिरानुजग्राहतरां नराधिपः ।
विरुत्य विश्रान्तवतीं तपात्यये घनाघनश्चातकमण्डलीमिव ॥ ७ ॥

किन्ते नाम कथ्यतामित्याह । गिर इति । श्रवसोर्मत्कर्णयोः सुधा अतितृप्तिजनकत्वाद्-मृतरूपास्तव गिरो वाचः श्रुता एव आकर्णिता एव, तु पुनर्भवतो नाम्नि विषये श्रुतिस्पृहा श्रवणेच्छा न श्लथा न शान्ता, तव नामापि श्रोतुमिच्छामि, तत्कथ्यतामित्यर्थः ननु नाम्नोऽप्यधिकानि वचनानि श्रुत्वापि कथं ते नाम शुश्रूषेत्याशङ्कामर्थान्तरन्यासेनापनयति । वारिजा जलसम्बन्धिनी पिपासुता पानेच्छा अधिकात् जलापेक्षयातिमधुरात् अधिकपीताद्वा दुग्धात् मधुनोऽपि अपिर्वाकारार्थः मधुनो वा जातु कदाचिदपि शान्तिं नापैति न प्राप्नोति, अपि तु जलादेव शाम्यति । इच्छा हि यद्विषयिणी भवति, तस्यैवोपस्थानात् सा निवर्त्तते । तस्मादनिष्टस्येन्द्रादिसन्दिष्टस्य श्रवणात् कथं त्वन्नामशुश्रूषा शाम्यतीत्यर्थः ॥ ५ ॥

कस्मिन् कुले जातोऽसि कथ्यतामित्याह । बिभर्तीति । कतमो वंशः कुलं तमोऽपहं पापरहितम् अज्ञानविनाशकं शोकानुपदं वा ईदृशमनिर्वचनीयसौन्दर्यादियुतं भवादृशं त्वादृशं नायकरत्नं पुरुषश्रेष्ठं बिभर्त्ति धारयति, कस्मिन् वंशे उत्पन्नोऽसीत्यर्थः । तं वंशम् अहं बहु सादरं यथा तथा मन्तुं ज्ञातुम् उत्सहे उद्युक्तास्मि । किम्भूतम् अन्यसामान्यधिया इतरवंशतुल्यत्वबुद्ध्या अवमानितं पूर्वं तिरस्कृतं पश्चाच्च उत्पद्यमानेन त्वया हेतुना महान्तम् सर्वोत्कृष्टं, यस्मिन् वंशे जातोऽसि तं कथयेति भावः । अथ च वंशो वेणुस्तमोऽपहं स्वकान्त्या अन्धकारनिवारकं लोकोत्तरं हारमध्ययोग्यं रत्नं मणिं धारयति । वेणोरपि रत्नोत्पत्तिर्वृद्धैरुच्यते । 'तमो राहौ गुणे पापे ध्वान्ते' हे । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि', वि 'रत्नं स्वजातिश्रेष्ठेऽपि' अ ॥ ६ ॥

एवं कथयन्तीं भैमीं प्रति नल उवाचेत्याह । इतीति । स धराधिपो नल इति पूर्वोक्तं ईरयित्वा उक्त्वा विरतां विश्रान्तां तां भैमीं पुनर्गिरा वाचा अनुजग्राहतराम् अतिशयेन अनुगृहीत-

---

गीर्षु अप्रसिद्धस्य श्रवःसुधात्वाध्यवसायादतिशयोक्तिः नतु रूपकम् अप्रसिद्धस्योपमानतयारोपायोगात्, तयाच गिरां अमृतत्वत् माधुर्यं व्यज्यते, इत्यलङ्कारेण वस्तुध्वनिः, अल्पाक्षरस्य नाम्नः श्रवणस्पृहायाः दिगीशसन्देशवचनविस्तरश्रवणादश्लथीभावस्य जलपानेच्छायाः जलापेक्षया उत्-कृष्टात् दुग्धात् मधुनो वा शान्तिप्राप्त्यभावेन सादृश्यावगमात् दृष्टान्तालङ्कारः ॥ ५ ॥ वेणोरपि रत्न योनित्वे प्रमाणं, 'करीन्द्रजीमूत वराहशङ्ख मत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव भूरि' इति । महान्तमिति पदार्थस्य बहुमानं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः। शब्दशक्तिमूल उपमाध्वनिरयम् ॥६॥

अये ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने।
गरो गिरः पल्लवनार्थलाघवे मितञ्च सारञ्च वचो हि वाग्मिता ॥ ८ ॥
वृथा कथेयं मयि वर्णपद्धतिः कयानुपूर्व्या समकेति केति च।
क्षमे समक्षव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी ॥ ९ ॥

वान् उवाचेत्यर्थः। उपमिनोति इव यथा तपात्यये ग्रीष्मावसाने वर्षाकाले घनाघनो वर्षुकमेघो विहत्य विरावं शब्दं कृत्वा विश्रान्तवर्तीं विश्रान्तां चातकमण्डलीं चातकसमूहं गिरा गर्जितेन अनुगृह्णातितरां, तथानुजग्राहतरामित्यर्थः। 'शक्रघातुकमत्तेभवर्षुकाब्दा घनाघनाः' अ ॥ ७ ॥

यदुवाच तदाह। अये इति। अये इति सानुनयसम्बोधने अये भैमि मम जिह्वया तस्मिन् कुलनामरूपे द्वयेऽपि द्वितयेऽपि उदासितमेव उदासीनयैव भूतम्। किम्भूते, यतोऽनतिप्रयोजने अतिशयितप्रयोजनशून्ये। भवत्या पृष्टमपि कुलनामद्वय निष्प्रयोजनत्वान्मया नोक्तमित्यर्थः। ननु सत्यपि निष्प्रयोजनत्वे पृष्टस्योत्तरं दातव्यमेवेत्याशङ्कायामाह, पल्लवनं अत्यल्पे प्रमेये वृथा शब्द-प्रपञ्चन अर्थलाघवं बहुषु वक्तव्येषु किञ्चिदर्थप्रकाशनञ्च द्वे गिरो वाण्या गरो विषौ विषतुल्यदोषौ। यथा विषमविचार्यैव त्यज्यते, तथा एते अपि त्याज्ये इत्यर्थः। तस्मान्निरर्थकं न प्रष्टव्यं, पृष्टमपि नोत्तरदानार्हमिति मयोदासितमिति भावः। दोषत्वमेव समर्थयति हि यस्मात् मितं परिमित-शब्दघटितञ्च सारं च अवश्यवक्तव्यप्रकाशकञ्च वचो वाग्मिता प्रशस्तवक्तृत्वम्। चद्वयमुभयप्राधान्य-सूचकम्। गरइत्येकवचनान्तपाठे अर्थलाघवे पल्लवना शब्दविस्तरो गिरो गर इति योज्यम्। उदासितमिति भावे क्तः ॥ ८ ॥

नामजिज्ञासा निष्प्रयोजनेत्याह। वृथेति। आनुपूर्वी उत्तरोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्ण-वत्ता कया आनुपूर्व्या उपलक्षिता कीदृगानुपूर्व्यवच्छिन्ना का वर्णपद्धतिरक्षरपङ्क्तिर्मयि सम-केति सङ्केतिता गृहीतशक्तिका इतीयं कथा कथनं पृच्छा वृथा निष्प्रयोजना, नामपृच्छा विफले-त्यर्थः। अत्र चकारः पादपूरणार्थः। ननु नाम्नोऽपरिज्ञाने व्यवहारसिद्धिः कथमित्यत आह, खलु यस्मात् आवयोस्तव मम च समक्षं प्रत्यक्षं व्यवहारं विधातुं सम्पादयितुं युष्मदस्मदी युष्म-दस्मच्छब्दाभ्यां निष्पन्ने त्वं अहं इति पदे क्षमे योग्ये। त्वमहमितिपदाभ्यामेवावयोः प्रत्यक्षव्यव-हारसिद्धिर्भवतीत्यतो नामजिज्ञासा विफलेत्यर्थः। अत्र सङ्केतो भगवदिच्छाविषयतावन्नलपित्रा-दीच्छाविषयतारूपोऽपि बोध्यः। आवयोरिति षष्ठीत्वादस्मदः शेषः युष्मदस्मदी इति स्वरूपवाचक-त्वादादेशाभावः ॥ ९ ॥

उपमा, वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः। मेघगर्जनश्रवणे चातक्याः यादृशी प्रीतिर्नलवचन-श्रवणे दमयन्त्या अपि तादृशी प्रीतिर्व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ॥ ७ ॥ कुलनाम्नोर्युगले जिह्वायाः औदासीन्यं प्रति अनतिप्रयोजने इति विशेषणपदार्थस्य हेतुत्वात् काव्यलिङ्गम्, सामान्यगिरां गरत्ववाग्मित्वद्वारेण विशेषस्य नलवचनस्य समर्थनात् सामान्येन विशेषसमर्थन-रूपोऽर्थान्तरन्यासः ॥ ८ ॥ कथायाः वृथात्वं प्रति परार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थं हेतुकं

यदि स्वभावान्मम नोज्ज्वलं कुलं तदा तदुद्भावनमौचिती कुतः।
अथावदातं तदहो विडम्बना तथा कथा प्रेष्यतयोपसेदुषः॥ १०॥
इति प्रतीत्यैव मयावधीरिते तवापि निर्बन्धरसो न शोभते।
हरित्पतीनां प्रतिवाचिकं प्रति श्रमो गिरां ते घटते हि संप्रति॥ ११॥
तथापि निर्बन्धति तेऽथवा स्पृहा-मिहानुरुन्धे मितया न किं गिरा।
हिमांशुवंशस्य करीरमेव मां निशम्य किं नासि फलेग्रहिग्रहा॥ १२॥
महाजनाचारपरम्परेदृशी स्वनाम नामाददते न साधवः।
ततोऽभिधातुं न तदुत्सहे पुन-र्जनः किलाचारमुचं विगायति॥ १३॥

कुलजिज्ञासापि नोचितेत्याह। यदीति। यदि मम कुलं वंशः स्वभावात् उज्ज्वलं निर्मलं प्रशस्तं न भवेत्, तदा तस्य अप्रशस्तकुलस्य उद्भावनं कथनं मम कुतः कस्मात् औचिती, अपि तु अनौचित्यमेव। अप्रशस्तस्वकुलकथनमनुचितमेवेत्यर्थः। अथ यदि तत्कुलं अवदातं प्रशस्तं भवेत्, तत्तदा प्रेष्यतया परदूतत्वेन उपसेदुषस्त्वत्समीपमागतस्य मम तथा तादृशी प्रशस्तवंश-परिचयरूपा कथा अहो कष्टं विडम्बना धिक्कारः, नीचकर्मप्रवृत्तस्य स्वकुलोत्कर्षकथनमुपहासाय भवतीत्यर्थः। अवदातमिति दैपशोधने क्तः, उपसेदुष इति वस्वन्तात् सीदतेः षष्ठी॥ १०॥

उपसंहरति। इतीति। हे भैमि इति पूर्वोक्तं वैयर्थ्यमनौचित्यञ्च प्रतीत्यैव विचार्यैव मया अवधीरिते उपेक्षिते कुलनामप्रश्नोत्तररूपे विषये तवापि निर्बन्धे आग्रहे रसोऽनुरागो न शोभते न युज्यते। संप्रति इदानीं हरित्पतीनां दिक्पालानामिन्द्रादीनां प्रतिवाचिकं प्रत्युत्तरं प्रति उद्दिश्य ते तव गिरां वाचां श्रम आयासो हि निश्चितं घटते युज्यते। निरर्थककुलनामजिज्ञासायामाग्रहं त्यक्त्वा तव दिक्पालानां वचनप्रत्युत्तरकथनं युक्तमित्यर्थः॥ ११॥

इत्थमुक्त्वा भैम्या दौर्मनस्यमाशङ्क्याह। तथापीति। अथवा पूर्वाक्षेपे हे तथापिनिर्बध्नति कुलनामकथनस्यानुचितत्वेऽपि निर्बन्धम् आग्रहं कुर्वति भैमि अहम् इह मत्कुलनामश्रवणविषये ते तव स्पृहाम् इच्छां मितया स्वल्पया गिरा वाचा किं न अनुरुन्धे नावृणोमि, अपि तु तव स्पृहाया अनुरोधं करोम्येवेत्यर्थः। संक्षेपेण कथयामीति भावः। मितगिरमेवाह, हे भैमि त्वं हिमांशुवंशस्य चन्द्रवंशस्य करीरमङ्कुरं चन्द्रवंशे जातं मां निशम्यैव आकर्ण्यैव फलेग्रहिः सफलो ग्रहो निर्बन्धो यस्या स्तादृशी किं नासि न भवसि, अपि तु चन्द्रवंशे जातोऽयमिति मत्त्वा सफल-निर्बन्धा भव। 'स्यादबन्ध्यः फलेग्रहिः' अ॥ १२॥

तर्हि नाम कथं न वदसीत्यत्राह। महाजनेति। नाम प्रसिद्धौ साधवो महान्तः स्वनाम

---

काव्यलिङ्गम् छेकानुप्रासश्च॥ ९॥ अत्र 'विडम्बनां' प्रति 'प्रेष्यतयोपसेदुषः' इति पदयोरर्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्चेति संसृष्टिः। "अत्र हेतुरलङ्कारः सा॥ १०॥ अत्र छेकानुप्रासवृत्त्यनुप्रासयोः संसृष्टिः। "अत्र काव्यलिङ्गमलंकार" सा॥ ११॥ अत्र च्छेकानुप्रासः वंशेतिश्लेषमहिम्नान्ववाये वेणुत्वारोपस्य नले करीरत्वारोपहेतुत्वाच्छ्लिष्टपरम्परित-

अदोऽयमालप्य शिखीव शारदो बभूव तूष्णीमहितापकारकः ।
अथास्यरागस्य दधा पदे पदे वचांसि हंसीव विदर्भजाददे ॥ १४ ॥
सुधांशुवंशाभरणं भवानिति श्रुतेऽपि नापैति विशेषसंशयः ।
कियत्सु मौनं वितता कियत्सु वाङ्-महत्यहो वञ्चनचातुरी तव ॥ १५ ॥

निजसंज्ञां न आददते न कथयन्ति, इतीदृशी महाजनानां साधूनाम् आचारपरम्परा व्यवहारधारा । ततो हेतोस्तत् स्वनाम अभिधातुम् कथयितुम् अहं नोत्सहे न शक्नोमि । किल यस्मात् जनो लोक आचारमुचं व्यवहारत्यागिनं जनं पुनर्विगायति निन्दति । 'आत्मनाम गुरोर्नाम नामापि कृपणस्य च । आयुष्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' इति महाजनव्यवहारः ॥ १३ ॥

एवमुक्त्वा तूष्णीम्भूते नले भैम्युवाचेत्याह । अद इति । अयं नलोऽदः पूर्वोक्तम् आलप्य उक्त्वा तूष्णीं बभूव मौनीभूतः । किम्भूतः शारदः शारदा सरस्वती तत्सम्बन्धी वचनपण्डित इत्यर्थः । तथा अहितानां शत्रूणाम् अपकारको हिंसकः । क इव शारदः शरत्कालीनः शिखी मयूर इव मयूरो हि वर्षासु रुतं कृत्वा शरदि तूष्णीं भवति, सोऽपि अहीनां सर्पाणां भक्षकत्वात् तापं करोतीति तादृशः । अथानन्तरं विदर्भजा दमयन्ती अस्य नलस्य पदे पदे प्रतिसुप्तिङन्तं मधुरत्वात् रागस्य अनुरागस्य दधा धारयित्री सती स्वप्रयुक्ते पदे पदे नलस्य अनुरागस्य दधा जनयित्री वा वचांसि वचनानि आददे उवाच । उपमिनोति हंसीव, हंसी हि शरदि मयूरे तूष्णीं-भूते मधुरं रौति, हंस्यपि पदे पदे चरणद्वये आस्यरागस्य मुखस्येव रक्तताया दधा धारयित्री लोहितास्यचरणेत्यर्थः । शरदि हंसा मधुरस्वरा भवन्ति, न मयूराः । तथा च 'शरदि हंसरवाः परुषीकृतस्वरमयूरमयुरमणीयताम्' इति माघः । रागस्येति कर्मणि षष्ठी, दधेति 'ददाति-दधात्योर्विभाषे' ति श इति पाणिनीयाः ॥ १४ ॥

भैमीवचांस्येवाह । सुधांश्विति । भवान् सुधांशुवंशाभरणं चन्द्रवंशालङ्कारश्चन्द्रवंशे जात इति सामान्ये श्रुतेऽपि मम विशेषसंशयः नलो वाऽन्यो वा कश्चनेति विशेषविषयः सन्देहो नापैति, नामाकथनान्नापगच्छति, अहो आश्चर्यकारिणी तव वञ्चने प्रतारणायां चातुरी चातुर्यं महती । यतः कियत्सु द्वित्रेषु नामादिप्रश्नेषु मौनं प्रत्युत्तरादानं, कियत्सु कुतः किमर्थमागतोऽसीत्यादि-प्रश्नेषु वाक् दिक्पालसन्देशकथनरूपा वाणी वितता विस्तृता । प्रस्तुतं सम्यगनुक्त्वा अप्रस्तुतं पल्लवयसीति त्वमतितरां प्रतारणाकुशल इति भावः ॥ १५ ॥

---

रूपकञ्च ॥ १२ ॥ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारश्छेकानुप्रासश्चेति संसृष्टिः ॥ १३ ॥ अत्र श्लेषानुप्राणितपूर्णोपमाद्वयमन्त्यानुप्रासवृत्त्यनुप्रासभ्यां संसृज्यते उपमयाचास्य नलस्य शिखिवन्मधुरालापित्वं दमयन्त्याश्च हंसीवत् मिष्टभाषित्वमिति वस्तु व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । "शरदि निःशब्दाः शिखिनः राजहंसाः शब्दायन्ते तद्वदिति भावः" जी ॥ १४ ॥ अत्र भवान् सुधांशुवंशाभरणमिति निरङ्गकेवलरूपकम्, छेकानुप्रासश्च ॥ १५ ॥

मयापि देयं प्रतिवाचिकं न ते स्वनाम मत्कर्णसुधामकुर्वते।
परेण पुंसा हि ममापि सङ्कथा कुलाबलाचारसहासनासहा॥ १६॥
हृदाभिनन्द्य प्रतिबन्ध्यनुत्तरः प्रियागिरः सस्मितमाह स स्म ताम्।
वदामि वामाक्षि परेषु माक्षिप स्वमीदृशं माक्षिकमाक्षिपद्वचः॥ १७॥
करोषि नेमं फलिनं नम श्रमं दिशोऽनुगृह्णासि न कञ्चन प्रभुम्।
त्वमित्थमर्हासि सुरानुपासितुं रसामृतस्नानपवित्रया गिरा॥ १८॥

मयापीति। स्वनाम निजाख्यां मम कर्णयोः सुधाममृतरूपामकुर्वते मम श्रवणसुखदं स्वनाम न कथयते ते तुभ्यं मयापि प्रतिवाचिकं प्रत्युत्तरं न देयं न दातुमुचितम्। अत्र हेतुमाह हि यस्मात् परेण पुंसा परपुरुषेण सह ममापि सङ्कथा संलापः कुलाबलानां कुलाङ्गनानाम् आचारेण सहासनं एकस्मिन्नासने उपवेशनं तत् न सहते इति तादृशी। कुलाङ्गनाचारपरपुरुषसङ्कथयोः सामानाधिकरण्यमत्यन्तमनुचितमित्यर्थः। यथा त्वया सदाचारभङ्गभिया नाम न कथ्यते, तथा मयापि कुलाङ्गनाचारभङ्गभिया स्वाभिप्रायो न कथ्यते इति भावः॥ १६॥

इत्थमुक्तवतीं भैमीं नलः प्रत्युवाचेत्याह। हृदेति। स नलः हृदा मनसा प्रियाया भैम्या गिरो वचनानि अभिनन्द्य स्तुत्वा प्रतिबन्ध्या कुलाङ्गनाचारानुचितां परपुरुषसङ्कथामहमपि न करोमीत्येवरूपया अनुत्तरः प्रतिवचनासमर्थः सन् सस्मितं सहास्यं यथा तथा तां भैमीम् आह स्म उवाच। किमुवाचेत्याह, हे वामाक्षि वक्रनयने कुटिलविलोकनशीले इत्यर्थः मनोरमनयने वा भैमि माक्षिकं मधु आक्षिपत् तिरस्कुर्वत् अतिमधुरं स्वं स्वीयमीदृशमेवंविधं प्रतिबन्ध्यादिरूपं वचः परेष्विन्द्रादिव्यतिरिक्तेषु मद्विधेषु मा क्षिप मा कथय इति वदामि। इन्द्रादीन् प्रत्येव एवं वक्तुमुचितं, नतु मां प्रति। प्रतिबन्धीं त्यक्त्वा ऋजुमार्गेणैव प्रत्युत्तरं देहीति भावः। यद्वा हे वामाक्षि त्वां माक्षिकमाक्षिपदतिमधुरं हितकरं वचो वदामि, त्वं ईदृशं स्वं इन्द्रादिदूतत्वे नात्मीयं पुरुषं मां परेषु पुरुषेषु मध्ये माक्षिप मा गणय, येन सह सङ्कथया पातिव्रत्यभङ्गो भवेत्। किन्त्विन्द्रादिदूतत्वात् त्वदीय एवाहमिति मह्यमुत्तरे दत्ते कापि न ते पातिव्रत्यक्षतिरिति भावः। अथवा माक्षिकमाक्षिपद्वचः परेषु माक्षिप, किन्तु मयि क्षिप, मयि परबुद्धिं मा कुर्विति त्वदीयो नल एवाहमिति भावः। व्याख्यान्तराणि तु ग्रन्थगौरवभयान्न लिखितानि॥ १७॥

करोषीति। हे भैमि इमं श्रमं दौत्यायासं फलिनं सफलं न करोषि अपितु सफलं कुरु, तथा दिशः कञ्चन प्रभुं इन्द्रादिषु चतुर्षु मध्ये अन्यतमं दिक्पालं न अनुगृह्णासि अपि तु स्वयंवरेणानुगृहाण, इत्थं पूर्वोक्तया रसः शृङ्गार एव अमृतं सुधा तत्र यत् स्नानं निमज्जनं रसामृतस्न-

---

अत्र मत्कर्णसुधामिति निरङ्गं रूपकमलङ्कारः, कर्णसुधायाः अप्रसिद्धेः स्वनाम्नि तत्सम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षा स्वनाम्ना कर्णसुधाया अभेदाध्यवसादतिशयोक्तिर्वा। अन्त्यपादे वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः। "काव्यलिङ्गमपि" सा॥ १६॥ अत्र माक्षिकमाक्षिपदिति आर्थोपमा, च्छेकानुप्रासश्चेति संसृष्टिः॥ १७॥

सुरेषु सन्देशयसीदृशीं बहुं रसस्रवेण स्तिमितां न भारतीम् ।
मदर्पिता दर्पकतापितेषु या प्रयाति दावार्दितदावबृष्टिताम् ॥ १६ ॥
यथा यथेह त्वदपेक्षयानया निमेषमप्येष जनो विलम्बते ।
रुषा शरव्यीकरणे दिवौकसां तथा तथाद्य त्वरते रतेः पतिः ॥ २० ॥
इयच्चिरस्यावदधन्ति मत्पथे किमिन्द्रनेत्राण्यशनिर्न निर्ममौ ।
धिगस्तु मां सत्वरकार्यमन्थरं स्थितः परः प्रेष्यगुणोऽपि यत्र न ॥ २१ ॥

अनमितियावत् तेन पवित्रया शुद्धया गिरा वाचा सुरानिन्द्रादीन् उपासितुं आराद्धुम् अर्हसि योग्या भवसि । यथा गिरा मां तोषयसि, तथा तानपि तोषयेत्यर्थः । एवंभूतां वाणीं तान् प्रति सन्दिशेतिभावः । अथच अमृतसिक्तवस्तुद्वारा देवानामाराधना युज्यते ॥ १८ ॥

सुरेष्विति । हे भैमि ईदृशीं पूर्वोक्तप्रकारां बहुं विपुलार्थां रसस्य शृङ्गारस्य स्रवेण क्षरणेन व्यञ्जनेन स्तिमितां स्निग्धां भारतीं वाणीं सुरेषु इन्द्रादिषु न सन्देशयसि न सन्दिष्टां करोषि अपितु सन्देशय । या भारती मदर्पिता मयि उक्ता सती दर्पकेण कन्दर्पेण तापितेषु पीड़ितेषु दावो वनाग्निस्तेन अर्दितः पीड़ितो यो दावो वनं तस्य बृष्टितां प्रयाति गमिष्यति । यथा दह्यमानस्य वनस्य बह्वी वृष्टिः सुखाय भवति, तथा मदर्पिता वाणी कामपीड़ितानामिन्द्रादीनां सुखाय भविष्यतीत्यर्थः । अतो झटिति प्रतिसन्दिश्यतामिति भावः । 'कन्दर्पोदर्पकोऽनङ्गः' अ, 'दवदावौ तु वनवह्नौ वनेऽप्यभौ' मे ॥ १९ ॥

यथेति ॥ हे भैमि एष मल्लक्षणो जनोऽनया त्वदपेक्षया त्वत्तः प्रत्युत्तरश्रवणाकाङ्क्षया इह त्वत्सन्निधौ यथा यथा निमेषमपि निमेषपरिमितमल्पकालमपि विलम्बते कालक्षेपं करोति । तथा तथा रतेः पतिः कामो रुषा कोपेन दिवौकसां देवानामिन्द्रादीनां शरव्यीकरणे लक्ष्यीकरणे अद्य अस्मिन् दिवसे त्वरते सत्वरो भवति । मम विलम्बेन तेषां कामपीड़ाऽधिकतरा जायते, ततः सत्वरं प्रत्युत्तरं देहीति भावः। त्वदुपेक्षयेति पाठे त्वया कृतया उपेक्षया प्रत्युत्तरादानरूपया अवज्ञयेत्यर्थः ॥ २० ॥

इयदिति । इयच्चिरस्य एतावद्बहुकालपर्यन्तं मत्पथे मम प्रत्यागमनवर्त्मनि अवदधन्ति निर्निमेषं सावधानानि इन्द्रस्य नेत्राणि अशनिर्वज्रं निर्ममौ न जनयामास, अपि तु वज्रमेव तानि निर्मितवत् । अन्यथा तेषां विलम्बसहनदार्ढ्यं कथमित्यर्थः । आत्मानमपि निन्दयन्नाह, सत्वरे कार्ये मन्थरं मन्दं अशीघ्रकारिणं मां धिक् अस्तु, अहमपि निन्दनीयो भवेयमित्यर्थः । यतो यत्र मयि परः श्रेष्ठः प्रेष्यस्य दूतस्य गुणोऽपि क्षिप्रकारित्वादिर्न स्थितो न विद्यते । शीघ्रं कार्ये

---

रसामृतेति रूपकालङ्कारः ॥ १८ ॥ अत्र दावार्दितदावबृष्टितामित्यत्र अन्यस्य धर्मं कथमन्यो वहतु इति न्यायात् भारत्यां दावबृष्टिताधर्मस्य असम्भवेन तत्सादृश्याक्षेपात् असम्भवद्वस्तुसम्बन्धरूपनिदर्शनालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ १९ ॥ अत्र चतुर्थपादे च्छेकानुप्रासः । "अतिशयोक्तिरलङ्कारः" सा ॥ २० ॥

इदं निगद्य क्षितिभर्त्तरि स्थिते तयाऽभ्यधायि स्वगतं विदग्धया।
अधिस्त्रि तं दूतयतां भुवः स्मरं मनो दधत्या नयनैपुणव्यये ॥ २२ ॥
जलाधिपस्त्वामदिशन्मयि ध्रुवं परेतराजः प्रजिघाय स स्फुटम्।
मरुत्वतैव प्रहितोऽसि निश्चितं नियोजितश्चोर्ध्वमुखेन तेजसा ॥ २३ ॥

निष्पाद्य प्रभुसन्निधौ गन्तव्यमिति दूतगुणः, मयि तु तस्याभावान्निन्दनीयो भवेयमित्यर्थः। झटिति प्रत्युत्तरं दत्त्वा मां प्रेषयेति भावः ॥ २१ ॥

इत्थमुक्त्वा तूष्णीम्भूते नले भैमी मनसा चिन्तयति स्मेत्याह। इदमिति। क्षितिभर्त्तरि नले इदं पूर्वोक्तं निगद्य उक्त्वा स्थिते तूष्णीभावं प्राप्ते सति विदग्धयातिचतुरया तया भैम्या स्वगतम् अप्रकाशं यथा तथा अभ्यधायि अवादि, मनसि चिन्तितमित्यर्थः। तया किम्भूतया,— भुवो भूलोकस्य स्मरं कन्दर्पम् अतिसुन्दरं तं नलम् अधिस्त्रि स्त्रियमधिकृत्य दूतयतां दूतं कुर्वतामिन्द्रादीनां नये नीतौ यत् नैपुणं कौशलं तस्य व्यये अभावे मनो दधत्या धारयन्त्या। स्त्रीषु अभव्यः सामान्यो दूतः प्रेषणीय इति नीतिः, तैस्तु अतिसुन्दरोऽयं प्रेषित इति ते नीतिशास्त्रं न जानन्तीति मनसि चिन्तयन्त्येत्यर्थः। नोज्ज्वलं रूपवन्तञ्च नार्थवन्तं नचातुरं, दूतं वापि हि दूतीं वा बुधः कुर्य्यात् कदाचन' इति नीतिः, 'सुन्दरं तरुणं जन्तुं न स्त्रियां दूतयेत् सुधीः' इति च। अधिस्त्रीति सप्तम्यर्थेऽव्ययीभावः ॥ २२ ॥

तं प्रति तया स्वगतं यदुक्तं तदेवाह। जलाधिप इति। जलानामधिपो वरुणो मयि विषये ध्रुवं निश्चितं त्वाम् अदिशत् आदिष्टवान्, तथा स प्रसिद्धः परेतराजो यमः स्फुटं निश्चितं त्वां प्रजिघाय प्रेरितवान्, एवं मरुत्वता इन्द्रेण निश्चितं प्रहितोऽसि प्रेरितोऽसि, ऊर्ध्वमुखेन तेजसा वह्निना च त्वं नियोजितः प्रेरितः। सत्यमेव त्वं वरुणादिभिः प्रेषितोऽसीत्यर्थः। अथच अतिसुन्दर्य्यां मयि अतिसुन्दरं त्वां यः समादिशत्, स पूर्वोक्तनीतिलङ्घनात् निश्चितं जडानां स्वामी अतिमूर्ख इत्यर्थः, यश्च तादृश्यां मयि तादृशमेव त्वां प्रेषितवान्, स परेतानां मृतानामेव राजा न सचेतनानाम् इत्यर्थः। येन तादृश्यां मयि तादृशस्त्वं नियोजितः, स मरुत्वान् वातुलः, येन च तादृश्यां मयि तादृशस्त्वं नियोजितः स ऊर्द्ध्वमुखः पिशाचः। पिशाचो हि ऊर्द्ध्वमुखो भवति। ऊर्द्ध्वमुखत्वेन त्वन्मुखसौन्दर्यं तेन न दृष्टमित्यपि सूचितम्। देवेष्ववज्ञया मनसैव नलं सम्बोध्येयमुक्तिः ॥ २३ ॥

---

अत्र अर्थापत्तिः, इन्द्रचक्षुषां वज्रकर्त्तृकनिर्माणासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, धिगित्यादिवाक्यार्थं प्रति सत्वरेत्यादिवाक्यस्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गञ्चेति संसृष्टिः ॥ २१॥ सर्वश्राव्यं प्रकाशं स्यात् अश्राव्यं स्वगतं मतम् इति प्रकाशस्वगतयोर्लक्षणम्। भुवःस्मरस्य अप्रसिद्धतया तस्य उपमानत्वायोगात् तदारोपासम्भवेन नात्र रूपकमपितु अयमपरः पाकशासन इतिवदभेदाध्यवसायादतिशयोक्तिः, नयनैपुणव्ययपदार्थं प्रति तृतीयपादवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्च ॥ २२ ॥ जलाधिप इत्यादिवचनभङ्ग्या निष्फलोऽयमारम्भ इति गमस्याभिधानात्

अथ प्रकाशं निभृतस्मिता सती सतीकुलस्याभरणं किमप्यसौ।
पुनस्तदाभाषणविभ्रमोन्मुखं मुखं विदर्भाधिपसम्भवा दधौ ॥ २४ ॥
वृथा परीहास इति प्रगल्भता न नेति च त्वादृशि वाग्विगर्हणा।
भवत्यवज्ञा च भवत्यनुत्तरा-दितः प्रदित्सुः प्रतिवाचमस्मि ते ॥ २५ ॥
कथं नु तेषां कृपयापि वागसा-वसावि मानुष्यकलाञ्छने जने।
स्वभावभक्तिप्रवणं प्रतीश्वराः कथा न वाचा मुदमुद्गिरन्ति वा ॥ २६ ॥

अथेति। अथ स्वगतचिन्तनानन्तरं सतीकुलस्य पतिव्रतासमूहस्य किमपि लोकोत्तरम् आभरणम् अलङ्कारोऽतिसाध्वीत्यर्थः, असौ विदर्भाधिपसम्भवा भीमनृपतनया दमयन्ती निभृतं संवृतं स्मितमीषद्धसनं यया तादृशी सती भवन्ती प्रकाशं व्यक्तं यथा तथा तेन नलेन सह यदाभाषणमालापस्तत्र यो विभ्रमस्तल्लक्षणो वा विभ्रमो विलासस्तत्रोन्मुखम् उत्सुकं मुखं पुनर्दधौ धारयति स्म नलं प्रति पुनरुवाचेत्यर्थः। निभृतस्मितेति अहो अयोग्या अपीन्द्रादयो मां वाञ्छन्तीति जायमानमपि स्मितं सतीस्वभावाद् वारितवतीत्यर्थः। तदाभाषणेति नलबुद्ध्या तेन सहाभाषणं मुख्यम्, उत्तरदानन्तु प्रासङ्गिकमिति सूचितम् ॥ २४ ॥

वृथेति। हे देवदूत इतोऽस्माद्धेतोस्ते तुभ्यं प्रतिवाच प्रत्युत्तरं प्रदित्सुरस्मि प्रदातुमिच्छामि। इतः कुतः, यतो वृथा निष्प्रयोजनोऽयं परीहास उपहासः भवान् वृथा परीहासं करोतीत्युक्ते प्रगल्भता धाष्ट्र्यं भवति। यतश्च त्वादृशि महानुभावशालिनि जने न नेति वाक् नाहं त्वदुक्तं करिष्यामीति पुनः पुनर्निषेधवचनञ्च विगर्हणा विशेषेण निन्दैव भवति। भद्रजनो हि सोपपत्तिकवचनेनैव निरसनीयो, नतु निषेधाक्षरेण, अन्यथा निरासकस्याधिकतरा निन्दा भवतीति त्वयि निषेधवचनमनुचितमित्यर्थः। यतश्च भवति महापुरुषे त्वयि अनुत्तरात् उत्तरादानात् अवज्ञा अनादरश्च भवति, इत एव हेतोस्तुभ्यमुपपत्तियुतां प्रतिवाचं प्रदातुमिच्छामीत्यन्वयः। एतादृक् पृष्टं परीहासबुद्ध्यैवोपेक्षणीयं, निषेधाक्षरेणैव वा निरसनीयं, किंवा तूष्णीम्भावेनानादरणीयं, किन्तु तथात्वेन महामहिम्नस्तव दौर्मनस्यं भवेदिति तवैवानुरोधात् प्रतिवक्तुमारभ्यते नत्विन्द्रादीनामित्यर्थः। ननेति देवानां पृथक्पृथङ्निषेधसूचनार्थं द्विर्वचनम्। परीहास इति 'प्राद्वेर्वणि बहुलमि'त्युपसर्गस्य दीर्घः ॥ २५ ॥

कथमिति। नु प्रश्ने विस्मये वा मानुष्यकं मनुष्यत्वरूपं लाञ्छनं कलङ्को यस्य तादृशे मल्लक्षणे जने तेषामिन्द्रादीनां कृपयापि दययापि असौ ईदृशी वाक् भैमि अस्मान् वृणीष्वेति वचनं कथम् असावि प्रसूता निःसारिता। यद्यपि देवा मयि कृपालवो जातास्तथापि मानव्या देवानर्हत्वात् मानव्यां मयि देवानां तेषामेवं कथनमनुचितमित्यर्थः। वा अथवा स्वभावाद्या भक्तिस्तया

---

पर्यायोक्तं नामालङ्कारः ॥ २३ ॥ "अत्र च्छेकानुप्रासरूपकालङ्कारः" सा ॥ २४ ॥ त्वादृशीति पदार्थस्य वाग्विगर्हणां प्रति हेतुत्वात् काव्यलिङ्गम्, तृतीये पादे भवत्य भवत्येति यमकञ्चेति संसृष्टिः ॥ २५ ॥

अहो महेन्द्रस्य कथं मयोचिती सुराङ्गनासङ्गमशोभिताभृतः ।
ह्रदस्य हंसावलिमांसलश्रियो बलाकयेव प्रबला विडम्बना ॥ २७ ॥
पुरः सुरीणां भण केव मानुषी न यत्र तास्तत्र तु सापि शोभिका ।
अकाञ्चनेऽकिञ्चननायिकाङ्गके किमारकूटाभरणेन न श्रियः ॥ २८ ॥
यथा तथा नाम गिरः किरन्तु ते श्रुती पुनर्मे बधिरे तदक्षरे ।
पृषत्किशोरी कुरुतामसङ्गतां कथं मनोवृत्तिमपि द्विपाधिपे ॥ २९ ॥

प्रवणं नम्रं जनं प्रति उद्दिश्य ईश्वराः प्रभवः कया वा वाचा मुदं हर्षं न उद्गिरन्ति, अपितु यया कयापि वाचा हर्षं प्रकटयन्तीत्यर्थः । तेषां हर्षप्रकटन एव तात्पर्यं, न तु मद्वचने इति सोल्लुण्ठनमितिभावः ॥ २६ ॥

अहो इति । अहो विषादे सम्बोधने वा सुराङ्गनानामुर्वश्यादीनां सङ्गमेन सम्भोगेन शोभितुं शीलमस्य तस्य भावस्तत्ता तां बिभर्ति धारयतीति तादृशस्य महेन्द्रस्य मानव्या मया कृत्वा प्रबला अतिमहती विडम्बना, सम्भोगवाञ्छारूपा चातुरी कथम् उचिता योग्या, अपितु अनुचितेत्यर्थः । उपमिनोति, हंसावलिभिर्हंसानां श्रेणीभिर्मांसला अतिबहुला श्रीः शोभा यस्य तादृशस्य ह्रदस्य सरोविशेषस्य बलाकयेव बक्येव । यथा हंसश्रेणीशोभितस्य ह्रदस्य बलाकया कृत्वा प्रबला विडम्बना अनुचिता भवति तथेत्यर्थः । महेन्द्रस्य सुराङ्गना विहाय मानवीवरणाभिलाषोऽनुचित इति इन्द्रवरणनिषेधे स्वस्य तात्पर्यं सूचितम् ॥ २७ ॥

पूर्वोक्तमेव द्रढयति । पुर इति । हे देवदूत सुरीणां देवीनां पुरोऽग्रे मानुषी केव भण कथय अपितु न कापि कुत्सितैवेत्यर्थः । तर्हि मानवी कुत्र शोभत इत्याह, यत्र तु ताः सुर्यो न विद्यन्ते, तत्र पृथिव्यां सापि मानव्यपि शोभिका शोभाशालिनी । मानुष्यपेक्षयाहं सुन्दरी ननु देव्यपेक्षयेत्यर्थः । अत्रैव दृष्टान्तमुपन्यस्यति अकाञ्चने स्वर्णाभरणशून्ये अकिञ्चनस्य दरिद्रस्य नायिकायाः स्त्रियोऽङ्गके अल्पावयवे कस्मिंश्चिदप्यङ्गे इत्यर्थः । आरकूटाभरणेन पित्तलालङ्कारेण किं श्रियः शोभा न भवन्ति, अपि तु भवन्त्येव । पूर्वोक्तमेव तात्पर्यम् । 'रीतिः स्त्रियामारकूटः' अ ॥ २८ ॥

देवानां वाचिकमपि मे श्रवणायोग्यमित्याह । यथा तथेति । ते देवा यथा तथा येन तेन

---

अप्रस्तुतभक्तिप्रवणजनेश्वरसामान्यात् प्रस्तुतभैमीन्द्रादिदेवतारूपविशेषप्रतीतेरप्रस्तुतप्रशंसा, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च ॥ २६ ॥ अत्र उपमा, अनौचित्यं प्रति सुराङ्गनेत्यादिरूपस्य विशेषणस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्च । हंसश्रेणीशोभितो जलाधारो यथा तत्परित्यागेन एकया बलाकया न शोभते, तथा तिलोत्तमाप्रभृतीः सुन्दरीः सुराङ्गनाः परित्यज्य देवराजो मया नैव शोभिष्यते इति वस्तु व्यज्यते इत्युपमालङ्कारेण वस्तुध्वनिः, "अहो सति सुरस्त्रीजने मानुषीमनुसरतो महेन्द्रस्य अमृतमप्यवधीर्य उदकपानप्रवृत्तिरपि सम्भाव्यते एवेति भावः" जी ॥ २७ ॥ अत्र अप्रकृतमानुषीसामान्यतो दमयन्तीरूपमानुषीविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कारः, मानुषीभ्यः सुरीणामाधिक्यप्रतिपादनाद् व्यतिरेकः,

अदो निगद्यैव नतास्ययानया श्रुतौ लगित्वाभिहितालिरालपत् ।
प्रविश्य यन्मे हृदयं ह्रियाह त-द्विनिर्यदाकर्णय मन्मुखाध्वना ॥ ३० ॥
बिभेमि चिन्तामपि कर्त्तु-मीदृशीं चिराय चित्तार्पितनैषधेश्वरा ।
मृणालतन्तुच्छिदुरा सतीस्थिति-र्लवादपि त्रुट्यति चापलात् किल ॥ ३१ ॥

प्रकारेणाभिलापेण कृपया वा गिरः प्रार्थनावचनानि नाम किरन्तु क्षिपन्तु, यथासुखेन वदन्त्वित्यर्थः। मे मम श्रुती कर्णौ पुनस्तदक्षरे तासां गिरामेकस्मिन्नप्यक्षरे विषये बधिरे श्रोतुमशक्ते, अयोग्यत्वात्तद्गिरो नाकर्णयामीत्यर्थः। अत्र दृष्टान्तयति, पृषतो हरिणस्य किशोरी बाला द्विपाधिपे ऐरावते हस्तिश्रेष्ठे वा असङ्गतामयोग्यां मनोवृत्तिमपि मनोरथमात्रमपि कथं कुरुताम्, अपितु नैव करोतीत्यर्थः। पशुरपि बालापि हरिणी योग्यायोग्यविभागं जानाति, ततोऽप्यधिकज्ञानवती मादृशी कथमेवमयोग्ये विषये प्रवर्त्ततामिति भावः ॥ २९ ॥

अनन्तरं भैमीसखीवचनमनुवदति। अद इति। अद एतावन्मात्रं निगद्यैव उक्त्वैव नतं लज्जया नम्रीकृतम् आस्यं मुखं यया तथाभूतया सत्या अनया भैम्या श्रुतौ कर्णसमीपे लगित्वा लग्नया भूत्वा अभिहिता ममाभिप्रायं त्वमपि जानास्यतस्त्वयैव कथ्यतामित्युक्ता आलिर्भैमीसखी आलपत् व्यक्तमुवाच। किमालपदित्याह—हे देवदूत इयं ह्रिया लज्जया मे मम हृदयं प्रविश्य यदाह लज्जयैव स्वाभिप्राय व्यञ्जयन्ती यत् कथयति, त्वं मम मुखमेव अध्वा पन्थास्तेन विनिर्यदागच्छत् तत् आकर्णय शृणु। लज्जावशाद् यदभिप्रेतमनया कथयितुं न शक्यते, तदेव मया उच्यते। ननु स्वारसिकं किमपीति श्रूयतामिति भावः ॥ ३० ॥

बिभेमीति। ईदृशीं इन्द्रादिवरणं मदिष्टसाधनं नवेत्येवंविधां चिन्तामपि विचारमपि कर्त्तुम् अहं बिभेमि भयं प्राप्नोमि, किमुत निश्चयं कर्त्तुमित्यर्थः। यतोऽहं चिराय बहुकालमेव चित्ते मनसि अर्पितः पतित्वेन वृतो नैषधेश्वरो नलो यया तादृशी। पातिव्रत्यभङ्गभिया विचारयितुमपि नोत्सहे इत्यर्थः। अथ च मम पतिर्नलो मनस्येव वर्त्तते विचारोऽपि मानसव्यापारस्तस्मात्तच्छ्रवणमाशङ्क्य बिभेमीत्यर्थः। ननु विचारे का बाधेत्यत आह किल यस्मात् मृणालतन्तुवच्छिदुरा भिदुरा सतीस्थितिः पतिव्रतामर्य्यादा लवादपि अल्पादपि चापलात् मानसव्यभिचारात् त्रुट्यति नश्यति, यथा मृणालतन्तुः स्पर्शमात्रादपि छिद्यते, तथा अन्यविषयकथयापि सतीस्थितिर्भज्यत इत्यर्थः 'पतिं या नाभिचरति मनोवाक्कायकर्म्मभिः' इत्यादिस्मृतेर्मानसव्यभिचारमाशङ्क्य विचारयितुमपि बिभेमीति भावः ॥ ३१ ॥

---

समानधर्मवत्त्वेन प्रतिबिम्बनाद् दृष्टान्तः, छेकानुप्रासश्चेत्येतेषां निरपेक्षतया संसृष्टिः ॥ २८ ॥ अत्र दृष्टान्तालङ्कारः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ २९ ॥ अत्र मुखाध्वनेतिरूपकम्, "छेकानुप्रासोऽलङ्कारः" सा ॥ ३० ॥ अत्र मृणालतन्तुच्छिदुरेति समासगतोपमा, प्रथमपादार्थं प्रति द्वितीयपादार्थस्य हेतुत्वात् काव्यलिङ्गम् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ३१ ॥

ममाशयः स्वप्नदशाज्ञयापि वा नलं विलङ्घ्येतरमस्पृशद्यदि ।
कुतः पुनस्तत्र समस्तसाक्षिणी निजैव बुद्धिर्विबुधैर्न पृच्छ्यते ॥ ३२ ॥
अपि स्वमस्वप्नमसूषुपन्नमी परस्य दाराननवैतुमेव माम् ।
स्वयं दुरध्वार्णवनाविकाः कथं स्पृशन्तु विज्ञाय हृदापि तादृशीम् ॥ ३३ ॥
अनुग्रहः केवल एष मादृशे मनुष्यजन्मन्यपि यन्मनो जने ।
स चेद्विधेयस्तदमी तमेव मे प्रसद्य भिक्षां वितरीतुमीशताम् ॥ ३४ ॥

अत्रेन्द्रादीनामपि विवेचना नास्तीत्याह । ममेति । मम आशयोऽभिप्रायः स्वप्नदशायाः स्वप्नावस्थाया आज्ञयापि वशेनापि वा यदि नलं विलङ्घ्य त्यक्त्वा इतरं पुरुषम् अस्पृशत् विषयीचकार, तर्हि विबुधैर्देवैरिन्द्रादिभिः अथ च विशेषेण बुद्ध्यन्तीति विबुधैः पण्डितैस्तैस्तत्र तस्मिन् विषये समस्तसाक्षिणी निखिललोकवृत्तग्राहिणी निजैव आत्मीयैव बुद्धिः कुतः कस्माद्धेतोः पुनर्न पृच्छ्यते अपितु पृच्छ्यतामित्यर्थः । स्वप्नावस्थायामपि नाहं नलादन्यं चिन्तयामीति सर्वज्ञत्वाज्जानद्भिरपि देवैः कथं तवात्र नियोगः कृत इति भावः ॥ ३२ ॥

देवानुपहसन्त्याह । अपीति । अमी देवा मां परस्य दारान् स्त्रियं अनवैतुम् अज्ञातुमेव अस्वप्नमपि स्वभावतः स्वप्नशून्यमपि स्वमात्मानं असूषुपन् निद्रापयामासुः । जागरणावस्थायाम् इयं परस्य दारा इति ज्ञातुं शक्नुयुरतस्तदज्ञानायैव अस्वप्ना अपि स्वप्नमङ्गीचक्रुरित्यर्थः । अपिः सम्भावनायां वा एतदर्थमेव स्वप्नमङ्गीचक्रुरिति सम्भावयामीत्यर्थः । अत्रान्यथानुपपत्तिं प्रमाणयति अन्यथा स्वयमात्मनैव दुष्टोऽध्वा दुरध्वः परदारप्रार्थनमार्गः स एव अर्णवः समुद्रस्तत्र नाविकास्तदुत्तारयितुं कर्णधारा अमी देवा मां तादृशीं परदारान् विज्ञाय हृदापि मनसापि कथं स्पृशन्तु अभिलषन्तु अपि तु न कथमपि । दुष्पथप्रस्थाननिवारकाणामेतदनुचितमित्यर्थः । अतः स्वप्नवशादेव मां ते प्रार्थयन्तीति भावः । एवं विधा अपि परदारानभिलषन्तीत्युपहासः । असूषुपन्निति णिङन्तात् स्वपितेर्लुङ् अन् 'स्वपः सुष्सननोश्चे'ति सुमादेशः ॥ ३३ ॥

स्तुवन्त्याह । अनुग्रह इति । मनुष्यजन्मन्यपि मनुष्याज्जन्म यस्य तथाविधेऽपि मादृश मल्लक्षणे जने यत् एवं मनोऽनुरक्तमिति शेषः । एष केवलोऽनुग्रहोऽनुकम्पैव, नतु दोषायेत्यर्थः । चेद्यदि सोऽनुग्रहो विधेयः कर्त्तव्यस्तर्हि अमी देवाः प्रसद्य प्रसन्ना भूत्वा मे मह्यं तमेव नलमेव भिक्षां वितरीतुं दातुम् ईशतां शक्नुवन्तु । देवैः प्रसन्नीभूय नल एव दीयतां, नत्वभिलापः कर्त्तव्य इत्यर्थः । वितरीतुमिति 'वृङ्वृञ्भ्यामि'त्यादिना ईङ् ॥ ३४ ॥

---

अत्र स्वप्नदशाज्ञयापीत्यनेन का कथा जाग्रद्दशाया इति बोधात् अर्थापत्तिः । "छेकानुप्रासहेत्वलङ्कारः" सा ॥ ३२ ॥ अत्र अस्वप्नस्य स्वापनकर्मत्वविरोधस्य स्वापनतुल्याज्ञानार्थत्वकल्पनया परिहाराद् विरोधाभासः, असूषुपन्निवेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, दुरध्वार्णवनाविका इति परम्परितं रूपकम्, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च ॥३३॥ अत्र च्छेकानुप्रासश्रुत्यनुप्रासयोः संसृष्टिः ॥ ३४ ॥

अपि द्रढीयः शृणु मे प्रतिश्रुतं स पीडयेत् पाणिमिमं नचेन्नृपः ।
हुताशनोद्बन्धनवारिवारितां निजायुषस्तत् करवै स्ववैरिताम् ॥ ३५ ॥
निषिद्धमप्याचरणीयमापदि क्रिया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यते ॥ ३६ ॥
स्त्रिया मया वाग्मिषु तेषु शक्यते न जातु सम्यग्वितरीतुमुत्तरम् ।
तदत्र मद्भाषितसूत्रपद्धतौ प्रबन्धृतास्तु प्रतिबन्धृता न ते ॥ ३७ ॥

नलस्याप्राप्तौ न जीविष्यामीत्याह । अपीति । अपि किञ्च हे दूत द्रढीयो दृढतरं केनाप्यनिवार्यं मे मम प्रतिश्रुतं प्रतिज्ञानं शृणु, तदेवाह स नृपो नलश्चेद्यदि इमं मदीयं पाणिं न पीडयेत् इन्द्राद्युपरोधान्न गृह्णीयात्, तत्तदा हुताशनेन वह्निदाहेन उद्बन्धनेन गलरज्ज्वादिना वारिणा जलप्रवेशेन च वारितां निवारितां धर्मशास्त्रादौ निषिद्धामपि निजायुषः स्वजीवनकालस्य स्ववैरितां स्वेनैव शत्रुतां करवै करिष्यामि । नलाप्राप्तौ निषिद्धमपि आत्मघातयत्नं करिष्यामीत्यर्थः ॥ ३५ ॥

नन्वात्मघातोऽनुचित इत्यत्राह । निषिद्धमिति । यत्र यस्यां आपदि सती शोभना श्रुत्यादौ विहिता क्रिया सर्वथा सर्वप्रकारेणापि न अवति न रक्षति आत्मानमित्यर्थात् । तत्र आपदि सत्यां निषिद्धमपि श्रुत्यादौ प्रतिषिद्धमपि कर्म आचरणीयम् अनुष्ठेयं गत्यन्तराभावात् । इदमेवार्थान्तरन्यासेन द्रढयति हि यस्मात् घनाम्बुना मेघजलेन निविडजलेन वा राजपथे राजमार्गे पिच्छिले पङ्किले सति बुधैरपि न केवलं मूर्खैः पण्डितैरपि क्वचित् किञ्चिदुद्दिश्य अपथेन कुमार्गेण गम्यते। तस्मान्नलाप्राप्तौ ममात्मघातोऽपि न दोषाय भविष्यतीति भावः । अपथेनेति नञः 'पथोवे'ति पक्षेऽत्समासान्तः ॥ ३६ ॥

बहुजल्पनेनालमेतावतैवात्र निरस्तो भवेत्युपसंहरन्नाह । स्त्रियेति । स्त्रिया स्त्रीत्वादल्पमतिकया मया वाग्मिषु तेषु देवेषु सम्यक् समीचीनम् उत्तरं वितरीतुं दातुं जातु कदाचिदपि न शक्यते तत्तस्मादत्रास्यां मम भाषितमेव संक्षिप्तत्वात् सूत्रं तस्यां विषये ते तव प्रबन्धृता प्रबन्धकर्तृत्वं टीकाकारत्वम् अस्तु भवतु, नतु प्रतिबन्धृता प्रतिकूलत्वम् अस्तु । अन्यत्रापि एकस्य सूत्रोपरि अपरेण प्रबन्धः क्रियते । संक्षेपेणैव मया उक्तम्, अत्र मदभिप्रायं ज्ञात्वा इदमेव स्वकल्पितैर्विवरणपदैर्बहुलीकृत्य देवा बोधनीयाः, न पुनर्मद्वचनोपरि दोषारोपेण देवानां समीपे प्रतिकूलत्वमाचरणीयमित्यर्थः । इयदेव तत्प्रश्नस्योत्तरं, पल्लवितेनालमिति भावः ॥ ३७ ॥

---

अत्र वृत्त्यनुप्रासोऽलङ्कारः । 'अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः' इत्यादिश्रुतेः, 'व्यापादयेद्वृथात्मानं स्वयं योऽग्न्युदकादिभिः । विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम् । इत्यादिस्मृतेश्च आत्मघातस्य निषिद्धत्वं बोध्यम् ॥ ३५ ॥ अत्र अर्थान्तरन्यास इति टीकायामुक्तम् । जीवातौ तु निषिद्धाचरणापथगमनयोः बिम्बप्रतिबिम्बभावप्रतीतेः दृष्टान्तालङ्कार इति ॥३६॥ अत्र उत्तरदानासमर्थतां प्रति स्त्रिया इति पदस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, मद्भाषितसूत्रपद्धताविति निरङ्गं रूपकम्, शाब्दीपरिसंख्या च्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ३७ ॥

निरस्य दूतः स्म तथा विसर्जितः प्रियोक्तिरप्याह कदुष्णमक्षरम् ।
कुतूहलेनेव मुहुः कुहूरवं विडम्ब्य डिम्भेन पिकः प्रकोपितः ॥ ३८ ॥
अहो मनस्त्वामनु तेऽपि तन्वते त्वमप्यमीभ्यो विमुखीति कौतुकम् ।
क्व वा निधिर्निर्धनमेति किञ्च तं स वाक्कवाटं घटयन्निरस्यति ॥ ३९ ॥
सहाखिलस्त्रीषु वहेऽवहेलया महेन्द्ररागाद् गुरुमादरं त्वयि ।
त्वमीदृशि श्रेयसि संमुखेऽपि तं पराङ्मुखी चन्द्रमुखि न्यवीवृतः ॥ ४० ॥

अथ नलः किञ्चिज्जातरोष इव कथयति स्मेत्याह । निरस्येति । तथा तेन पूर्वोक्तप्रकारेण निरस्य निराकृत्य विसर्जितः प्रस्थापितो दूतो नलः प्रियोक्तिरपि मधुरवचनोऽपि कदुष्ण सन्तापकरं परुषम् अक्षरं वचनम् आह स्म । यथा प्रियोक्तिरपि कदुष्णमक्षरम् आह स्म, तथा निरस्य विसर्जित इति वा योजना । अत्रोपमिनोति डिम्भेन मनुष्यबालकेन कुतूहलेन कौतुकेन मुहुर्वारंवारं कुहू इति शब्दं विडम्ब्य अनुकृत्य प्रकोपितः क्रोधितः पिकः कोकिल इव । यथा प्रियोक्तिरपि कोकिलः प्रकोपितः सन् परुषं रौति, तथेत्यर्थः ॥ ३८ ॥

परुषवचनमेवाह । अहो इति । अहो आश्चर्ये हे भैमि तेऽपि देवा अपि मानुषीं त्वाम् अनुलक्षीकृत्य मनो मनोरथं तन्वते विस्तारयन्ति । देवा अपि मानुषीमभिलषन्तीत्याश्चर्यमित्यर्थः । आस्तां तावत् तत्, त्वमपि मानुष्यपि त्वम् अमीभ्योऽभिलषद्भ्यो देवेभ्योऽपि विमुखी पराङ्मुखीत्यहो कौतुकं, महदाश्चर्यम् । उत्तमा अपि अधमं कामयन्त इत्याश्चर्यं, तत्रापि अधमस्यानङ्गीकार इति महदाश्चर्यम् । अत्रासम्भवे दृष्टान्तमाह —निधिः पद्मशङ्खादिर्निर्धनं दरिद्रम् एति दैवादागच्छति, किञ्चान्यच्च स वा दरिद्रो वा तं निधिं वागेव त्वया नात्रागन्तव्यमिति निषेधवचनमेव प्रतिबन्धकत्वात् कवाटं तत् घटयन् योजयन् सन् निरस्यति निराकरोतीति क्व वा कुत्र वा दृष्टमिति शेषः, अपि तु न कुत्रापि दृष्टम् । एतद्द्वयमतीवासम्भवमित्यर्थः । इदं परुषवचनम् ॥ ३९ ॥

नेदं त्वया सम्यगाचरितमित्याह । सहेति । हे चन्द्रमुखि चन्द्रवदने भैमि त्वयि महेन्द्रस्य रागाद् अन्या स्त्रियो विहाय त्वय्येवानुरक्तत्वाद्धेतोः अखिलस्त्रीषु त्वदितरासु शचीप्रभृतिरमणीषु अवहेलया अनादरेण सह त्वयि गुरुं महान्तम् आदरं सम्मानं वहे धारये । त्वय्येव महेन्द्रस्यानुरागात् त्वदितरा न बहु मन्ये, त्वामेव बहुमन्ये इत्यर्थः । ईदृशि एवंविधे सम्मुखेऽपि स्वयमागन्तुमुन्मुखेऽपि महेन्द्रानुरागरूपे श्रेयसि अभ्युदये विषये त्वं पराङ्मुखी तदनङ्गीकुर्वाणा सती तम् आदरं न्यवीवृतः निवर्त्तितवती, स्वयमेव नाशितवती । तमित्यत्र किमिति पाठे किं किमर्थं न्यवीवृतः आदरमित्यर्थात् । अतस्त्वत्सदृशी कापि निर्बुद्धिर्नास्तीति भावः ॥ ४० ॥

---

उपमालङ्कारश्छेकानुप्रासश्चेत्येतयोः संसृष्टिः ॥ ३८ ॥ अत्र यथा निधेर्दरिद्रागमनेच्छा दरिद्रस्य च निधेरवज्ञा, तथा देवानां त्वल्लाभेच्छा तव च देवानामवज्ञा इति साधर्म्याद् बिम्बप्रतिबिम्बभावप्रतीतेर्दृष्टान्तालङ्कारः, वाक्कवाटमिति निरङ्गं रूपकञ्चेति सङ्करः॥ ३९ ॥ अत्र दमयन्त्यां गुरोरादरस्य अखिलस्त्रीषु अवहेलाकारणत्वात् काव्यलिङ्गम्, तादृशकार्यकारणयोः यौग-

दिवौकसं कामयते न मानवी नवीनमश्रावि तवाननादिदम् ।
कथं न वा दुर्ग्रहदोष एव ते हितेन सम्यग्गुरुणापि शाम्यते ॥ ४१ ॥
अनुग्रहादेव दिवौकसां नरो निरस्य मानुष्यकमेति दिव्यताम् ।
अयोऽधिकारे स्वरितत्वमिष्यते कुतोऽयसां सिद्धरसस्पृशामपि ॥ ४२ ॥
हरिं परित्यज्य नलाभिलाषुका न लज्जसे वा विदुषीब्रुवा कथम् ।
उपेक्षितेक्षोः करभाच्छमीरता-दुरुं वदे त्वां करभोरु भो इति ॥ ४३ ॥

अश्रुतपूर्वञ्चेदमित्याह । दिवौकसमिति । मानवी मानुषी दिवौकसं देवं न कामयते नाभिलषति इतीदं नवीनं नूतनं तवाननात् तव मुखान्मया अश्रावि श्रुतम्, उत्तमस्यानभिलाषादिदमाश्चर्यमित्यर्थः, एष ते तव दुर्ग्रहदोषः दुष्टनिर्बन्धरूपो दोषः सम्यगतितरां हितेन आप्तेन गुरुणापि पित्रादिनापि कथं वा न शाम्यते नापनीयते, अपि तु तेनापनेतुं युज्यते । अपत्यहितमिच्छता पित्रा ह्यपत्यदुराग्रहः केनाप्युपायेनापनीयते । तत्र तु नेत्याश्चर्यमित्यर्थः । अथच दुष्टग्रहा मङ्गलादयस्तज्जनितो दोषोऽरिष्टं सम्यग्हितेन केन्द्रस्थानस्थितत्वादनुकूलतरेण गुरुणा बृहस्पतिना शाम्यत एव, न शाम्यत इत्याश्चर्यम् । 'किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्री बृहस्पतिः' इति ज्योतिषम् । सर्वथा दुर्ग्रहं परित्यज्य इन्द्रादिषु मध्ये यं कमपि देवं वृणीष्वेति भावः ॥ ४१ ॥

देवानुग्रहेण किं न भविष्यतीत्याह । अनुग्रहादिति । नरो मनुष्यो दिवौकसां देवानामनुग्रहादेव मानुष्यकं मनुष्यत्वं निरस्य विहाय दिव्यतां देवत्वम् एति प्राप्नोति, अतस्त्वं देवपत्नी भव तदनुग्रहात् देवत्वं प्राप्स्यसीति भावः । ननु देवपत्नीत्वाज्जातेऽपि देवत्वे मानवशरीरवत्त्वान्मानवीमध्ये गणनीया भविष्यामि,नतु देवीमध्ये इत्याशङ्कामपनयन्नाह सिद्धरसस्पृशाम् औषधसाधितपारदसम्पर्केण सुवर्णभूतानाम् अयसां लौहानामपि अयोधिकारे लौहप्रस्तावे कुतः कस्मात् स्वरितत्वम् आक्षिप्तत्वम् इष्यते, अपि तु न कुतोऽपि । अयोविकारे इति पाठे अयोविकारे लौहविकारमध्ये इत्यर्थः । सिद्धपारदस्पर्शेन सुवर्णभूतानां लौहानां लौहमध्ये गणना न क्रियते, किन्तु सुवर्णमध्य एव । तथा मानव्यास्तवापि देवपत्नीत्वाद्देवतामध्य एव गणना भविष्यतीत्यर्थः । स्वरितत्वमिति स्वर आक्षेपे इति चौरादिकात् क्तः, स्पृशामिति 'स्पृशोऽनुदके सुपी'ति क्विप् ॥ ४२ ॥

ग्राह्याग्राह्यविवेचनाविधुरासीत्याह । हरिमिति । हे भैमि विदुषीब्रुवा आत्मानं विदुषीं

पद्यरूपातिशयोक्तिमूला सहाखिलस्त्रीष्विति सहोक्तिः, चन्द्रमुखीति उपमा च्छेकानुप्रासश्च ॥ ४० ॥ अत्र दिवौकसः कामनाकारणे सत्यपि तदभावाभिधानाद् विशेषोक्तिः, "अत्राभिधायाः प्रकृतार्थनियन्त्रणादप्रकृतार्थदुष्टग्रहबृहस्पतिरूपयोः प्रतीतिर्ध्वनिरेव न श्लेषः" जी । छेकानुप्रासश्च ॥ ४१ ॥ अत्र नरस्य मनुष्यभावनिरासेन देवत्वप्राप्तिः अयसां लौहत्वपरित्यागेन सुवर्णत्वप्राप्तिरिवेति प्रतीतेः वाक्यार्थयोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः । "अत्रार्थान्तरन्यासोऽलङ्कारः" सा । स तु न मनोरमः, अनयोर्वाक्यार्थयोः सामान्यविशेषकार्यकारणभावविरहात् ॥ ४२ ॥

विहाय हा सर्वसुपर्वनायकं त्वया धृतः किं नरसाधिमभ्रमः ।
मुखं विमुच्य श्वसितस्य धारया वृथैव नासापथधावनश्रमः ॥ ४४ ॥
तपोऽनले जुह्वति सूरयस्तनू-र्दिवे फलायान्यजनुर्भविष्णवे ।
करे पुनः कर्षति सैव विह्वला बलादिव त्वां बलसे न वालिशे ॥ ४५ ॥

पण्डितां ब्रुवाणा पण्डितम्मन्या त्वं हरिमिन्द्रं परित्यज्य नलाभिलाषुका नलनामकं राजानं अथच तृणविशेषम् अभिलषन्ती सती कथं वा न लज्जसे,अपितु त्वया लज्जितुं युक्तम्। अहमेव बुद्धिमतीत्यभिमन्यसे, इन्द्रं परित्यज्य तृणतुल्यं नरञ्च प्रियमिच्छसीत्यतीव निर्लज्जासीत्यर्थः। त्वादृशी मूर्खा निर्लज्जा च न काप्यस्तीतिभावः। भोः करभोरु हे करिकरतुल्योरुयुगे, कं सुखं राति ददाति या सा करा तादृशी भा दीप्तिर्ययोस्तादृशौ ऊरू यस्याः तथाविधे इति वा,पूर्वार्द्धोक्ताद्धेतोस्त्वाम् उपेक्षित स्त्यक्त इक्षुर्येन तादृशात् शमीरतात् शमीकण्टकलम्पटात् करभात् उष्ट्रादपि उरुं महतीं वदे ज्ञानपूर्वकं वदामि। उष्ट्रस्यापि कदाचित्तारतम्यज्ञानं भवति, तव तु तन्नास्त्येवेति उष्ट्रापेक्षयापि त्वमतिनिर्बुद्धिरित्यर्थः। वदे इति 'ज्ञाने' इत्यात्मनेपदम्। केचित्तु करभादुष्ट्रादुरुं महतीं त्वां भोः करभोरु इति वदे सम्बोधयामि। उष्ट्राधिक्येन करभादुरुरिति व्युत्पत्त्या करभोरु इति सम्बोधयामि, नतु करिकरस्य करवहिर्भागस्य वा सदृशावूरू यस्या इति व्युत्पत्त्या इति व्याचक्षते, तत्र सम्बुद्धौ गुणाभावे उपायान्तरं चिन्तनीयम्। 'करभः करिहस्ते स्यात् करभः करिशावके। करभोमणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' बः ॥ ४३ ॥

सर्वथा भ्रान्तासीत्याह। विहायेति। हे भैमि त्वया सर्वेषां सुपर्वणां देवानां नायकं प्रभुम्-इन्द्रं विहाय त्यक्त्वा हा कष्टं नरे मनुष्यमात्रे साधिमभ्रमः साधुत्वभ्रान्तिः किं धृतः वृथैव धृत इत्यर्थः। अथच रलयोरैक्यात् नल एव साधुरिति भ्रमो वृथैव धृतः। उक्तमर्थं लोकोक्त्या समर्थयति, श्वसितस्य निश्वासानिलस्य धारया परम्परया कर्त्र्या मुखं विमुच्य अनायासगमनोपायभूतं मुखमार्गं विहाय नासापथेन नासिकामार्गेण धावनं शीघ्रगमनं तत्र श्रमः प्रयासो वृथैव क्रियते। यथा निश्वासानिलधारया ऋजुमार्गं मुखं त्यक्त्वा नसिकारूपेण वक्रमार्गेण वृथैव गम्यते तथा त्वयेत्यर्थः। अथवा त्वया इन्द्रं विहाय किनरे कुत्सितमनुष्ये साधुत्वभ्रमो धृतः, हा कष्टम् एतदनुचितमित्यर्थः ॥ ४४ ॥

मूर्खैवासीत्याह। तप इति। सूरयः पण्डिता अन्यजनुषि जन्मान्तरे भविष्णवे भाविने दिवे स्वर्गलक्षणाय फलाय तप एव शरीरशोषकत्वादनलस्तस्मिन् चान्द्रायणादौ तनूः शरीराणि जुह्वति क्षिपन्ति। यदर्थं शरीरपीडामप्यङ्गीकृत्य तपः कुर्वन्ति, सैव द्यौरेव विह्वला त्वत्ग्रहणाय व्याकुला सती बलादिव बलात्कारेणेव पुनस्त्वां करे धृत्वा कर्षति नेतुमिच्छति। हे वालिशे

---

अत्र विदुषिब्रुवापदार्थस्य लज्जां प्रतिहेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, उष्ट्रतो दमयन्त्याः न्यूनताप्रतिपादनात् व्यतिरेकश्छेकानुप्रासश्चेति संसृष्टिः ॥ ४३ ॥ अत्र इन्द्रं विहाय नरे साधुत्वबुद्धिः मुखपरित्यागेन श्वासधाराया नासिकाधावनश्रमवदिति वाक्यार्थयो र्बिम्बप्रतिबिम्बभावपर्यवसानाद् दृष्टान्तालङ्कारश्छेकानुप्रासवृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ४४ ॥

यदि स्वमुद्बन्धुमना विना नलं भवेर्भवन्तीं हरिरन्तरिक्षगाम् ।
दिविस्थितानां प्रथितः पतिस्ततो-हरिष्यति न्याय्यमुपेक्षते हि कः ॥ ४६ ॥
निवेक्ष्यसे यद्यनले नलोज्झिता सुरे तदस्मिन्महती दया धृता ।
चिरादनेनार्थितयापि दुर्लभं स्वयं त्वयैवाङ्ग यदङ्गमर्प्यते ॥ ४७ ॥
जितं जितं तत् खलु पाशपाणिना विना नलं वारि यदि प्रवेक्ष्यसि ।
तदा त्वदाख्यान् बहिरप्यसूनसौ पयःपतिर्वक्षसि वक्ष्यतेतराम् ॥ ४८ ॥

मूर्खे त्वं पुनर्न बलसे नोन्मुखीभवसि। पण्डिता जन्मान्तरप्राप्यं यत्फलमुद्दिश्य शरीरमपि पीडयन्ति, तत्फलं स्वयमेवास्मिन्नेव जन्मनि विना शरीरक्लेशदानं त्वां प्राप्तुमिच्छति। त्वन्तु तन्नाङ्गीकरोषीति मूर्खतरासीति बालिशपदसम्बोधनेन सूचितम् ॥ ४५ ॥

हुताशनोद्बन्धनेत्यादि यदुक्तं तच्छ्लोकत्रयेण दूषयति । यदीति । हे भैमि त्वं यदि नलं विना स्वम् आत्मानम् उद्बन्धुम् उद्बन्धनविषयतां नेतुं मनो यस्यास्तादृशी भवेः उद्बन्धनेन मर्तुमना यदि भविष्यसीत्यर्थः। ततस्तर्हि अन्तरिक्षगाम् उद्बन्धनार्थमाकाशस्थां भवन्तीं त्वां हरिरिन्द्रो हरिष्यति नेष्यति। यस्मात्स दिविस्थितानाम् अन्तरिक्षस्थानां पतिः प्रभुः प्रथितः ख्यातः। युक्तञ्चैतत् हि यतो न्याय्यं न्यायादनपेतं स्वीयं भागं को जन उपेक्षते तुच्छत्वेन परिगृह्णाति, अपितु सर्व एव स्वांशं बहु मत्वा गृह्णाति। इन्द्रस्य अन्तरिक्षपतित्वादुद्बन्धनार्थमन्तरिक्षस्थायास्तव हरणं न्याय्यम्। एतावतापि तस्य हस्तगता भविष्यसि। तस्मादधुना स्वयमेव तं वृणीष्वेति भावः ॥ ४६ ॥

निवेक्ष्यसे इति। नलेन उज्झिता त्यक्ता सती यदि त्वम् अनले वह्नौ निवेक्ष्यसे प्रवेक्ष्यसि, तदा त्वया अस्मिन् सुरे देवेऽनले महती दया धृता कृता। कुत इत्याह, यद्यस्मात् अङ्ग हे भैमि अनेन अनलेन चिरात् बहुकालं व्याप्य अर्थितयापि प्रार्थनयापि दुर्लभं दुष्प्रापम् अङ्गं त्वया स्वयमेव अर्प्यते अनलाय दीयते। यच्चिरकालं याचितमपि दुष्प्रापमासीत्, तत् यदि स्वयमेव दात्रा दीयते, तत्र दयैव निमित्तमिति ज्ञायते। एतावता वह्निप्रवेशोऽपि त्वया कर्तुं न शक्यते इति भावः। अङ्गेति सोपहाससम्बोधने। कस्मिन् कृते किं भविष्यतीति न जानासीत्युपहासः ॥ ४७ ॥

जितमिति। हे भैमि त्वं नलं विना पूर्वोक्ताद्द्वेतोरनलप्रवेशं विना वा यदि वारि जलं प्रवे-

---

अत्र तपोऽनले इति निरङ्गं रूपकम्, बलादिवेति हेतूत्प्रेक्षा, बालिशेइतिपदार्थस्य बलनाभावहेतुत्वात् काव्यलिङ्गम् वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ४५ ॥ अत्र हरणं प्रति तृतीयपादगतवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, ततइत्यस्य हेत्वर्थत्वे तु नायमलङ्कारः। न्याय्यसामान्येन दमयन्त्याः हरणरूपस्य विशेषन्याय्यस्य समर्थनरूपोऽर्थान्तरन्यासः, आरब्धवैफल्यानर्थोत्पत्तिरूपः विषमालङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ४६ ॥ "अत्र नलालाभे जीवितजिहासोरनलग्रहणबुद्धिरूपानर्थोक्तेर्विषमप्रभेदः" जी। छेकानुप्रासश्च ॥ ४७ ॥

करिष्यसे यद्यत एव दूषणा-दुपायमन्यं विदुषि स्वमृत्यवे।
प्रियातिथिः स्वेन गता गृहान् कथं न धर्मराजं चरितार्थयिष्यसि॥ ४९॥
निषेधवेशो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता।
विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः॥ ५०॥

क्ष्यसि, तर्हि खलु निश्चितं पाशपाणिना वरुणेन जितं जितम् अतिशयेन जितं, चिरमीप्सिताया अतिदुर्लभायाश्च तव अनायासेन लाभात् सर्वोत्कृष्टत्वेन वृत्तमित्यर्थः। कुत इत्याह यतस्तदा त्वयि वारिप्रविष्टायां सत्यां असौ पयःपतिर्वरुणस्त्वदाख्यान् त्वन्नामकान् असून् प्राणान् प्राणसमां त्वामित्यर्थः बहिरपि वक्षसि हृदयोपर्यपि वक्ष्यतेतराम् अतिशयेन धारयिष्यति। इदानीमन्तः-करणे धारयति, तदानीन्तु आलिङ्गनवशात् बहिरपि धारयिष्यति; अतस्ते नातितरां जितमित्यर्थः। पयस्यपि प्रवेष्टुं नार्हसि, तथात्वे पयसः पत्युर्हस्तगता भविष्यसीति भावः॥ ४८॥

अन्यमपि मरणोपायं कर्त्तुं नार्हसीत्याह। करिष्यस इति। हे भैमि अतएव पूर्वोक्तादेव दूषणात् उद्बन्धनादिना मरणेऽपि इन्द्रादिहस्तगता भविष्यसीत्येवंरूपात् दोषात् यदि स्वमृत्यवे स्वमरणाय विदुषी पण्डिता त्वम् अन्यं विषपानादिरूपम् उपायं करिष्यसे तर्हि स्वेन स्वयमेव गृहान् गता प्रिया प्राणेश्वरी अतिथिरभ्यागता त्वं धर्मराजं यमं कथं न चरितार्थयिष्यसि कृतार्थं न करिष्यसि, अपितु चरितार्थयिष्यस्येव। येन केनाप्युपायेन त्वया मर्त्तव्यं, सर्वथा यमस्याधीना भविष्यस्येवेत्यर्थः। तस्मान्मरणोपायान्तरमपि कर्त्तुं नार्हसीति भावः॥ ४९॥

इन्द्रादिवरणे सम्मतापि वा मामेवं प्रतारयसीत्याह। निषेधेति। हे भैमि अथवा ते तव एषः अहमिन्द्रादीन् न वरीष्यामीति निषेधो वेशो रूपं यस्य तादृशो विधिरेव इन्द्राद्यन्यतममेव वरीष्याम्येतद्रूप एव। यथाश्रुतार्थग्राहिणा मया पूर्वं निषेध एव ज्ञातः, अधुना तु इन्द्रादीनपि का नाङ्गीकरोतीति परमपर्यालोचनया विधिरेव ज्ञात इत्यर्थः। कथं सरलायाः स्त्रिया वचनमेवं सम्भावय-सीत्याशङ्क्याह, खलु यस्मात् विदग्धायास्तवैव वाचि वक्रता युक्ता, वक्रता त्वादृशवचनविषयैवेति युक्तम् इत्यर्थः। एतदपि कथमित्याह, किल यस्मात् यस्य ध्वनेरुत्तमकाव्यस्य इदं निषेधस्य विधिरूपतया पर्यवसानलक्षणं विजृम्भितं विलसितं, तस्य ध्वनेराकार उत्पत्तिस्थानं विदग्धनारी-वदनं चतुरवनितामुखमेव। विदग्धनारीवदनादेव वक्रोक्तिरूपं काव्यं निःसरतीत्यर्थः। 'इदमुत्तम-मतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः' इति काव्यप्रकाशः। विदग्धनारीप्रतिपादितं काव्यं हि विधिरूपं सत् क्वचिन्निषेधरूपतया पर्यवस्यति, क्वचिच्च निषेधरूपं विधिरूपतया। यथा 'वापीं स्नातु-मितो गतासि न पुनस्तस्याधमस्यान्तिकम्' इत्यादि, अत्र तदन्तिकमेव रन्तुं गतासीति निषेधस्य विधिरूपतया पर्यवसानम्। 'भम धम्मिअ वीसत्थो सो सुणहो अज्ज मारिओ देण' इत्यादि च, अत्र

---

अत्रापि आरब्धस्य वैफल्यम् अनर्थस्योत्पत्तिश्चेतिविषमालङ्कारः, प्रथमार्द्धं प्रति उत्तरार्द्ध-वाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् त्वदाख्यान् असूनिति निरङ्गं रूपकम्, छेकानु-प्रासश्चेति संसृष्टिः॥ ४८॥ अत्रापि पूर्ववत् विषमालङ्कारः, काव्यलिङ्गद्वयञ्चेति संसृष्टिः॥ ४९॥

भ्रमामि ते भैमि सरस्वतीरस-प्रवाहचक्रेषु निपत्य कत्यदः ।
त्रपामनादृत्य मनाक् कुरु स्फुटं कृतार्थनीयः कतमः सुरोत्तमः ॥ ५१ ॥
मतः किमैरावतकुम्भकैतव-प्रगल्भपीनस्तनदिग्धवस्तव ।
सहस्रनेत्रान्न पृथक् मते मम त्वदङ्गलक्ष्मीमवगाहितुं क्षमः ॥ ५२ ॥
प्रसीद तस्मै दमयन्ति सन्ततं त्वदङ्गसङ्गप्रभवैर्जगत्प्रभुः ।
पुलोमजालोचनतीक्ष्णकण्टकै-स्तनुं घनामातनुतां स कण्टकैः ॥ ५३ ॥

भ्रमेतिविधेर्न भ्रमेति निषेधरूपतया पर्यवसानम् । अत्र विदग्धनायिकैव प्रतिपादिका ॥ ५० ॥

इन्द्राद्यन्यतमः कश्चित् त्वया मनसि वृत एव, लज्जां परितज्य स कथ्यतामित्याह । भ्रमामीति । हे भैमि ते तव सरस्वत्या वाण्या यो रसो माधुर्यं तस्य प्रवाहो धारा तस्य चक्रेषु वक्रोक्त्यादिरूपचक्राकारावर्त्तेषु निपत्य अहं कति कियन्तं कालं कतिवारान् वा अद एवंप्रकार भ्रमामि भ्रान्तो भवामि, निषेधरूपेण विधिरूपेण वा कथयसि निश्चयाभावात् कियन्तं कालं मया भ्रमितव्यमित्यर्थः । अथच अन्योऽपि सरस्वतीनामनदीजलप्रवाहावर्त्तेषु निपत्य बहुकालं भ्राम्यति । तस्मात् त्वया त्रपां लज्जां मनाक् ईषत् अनादृत्य निराकृत्य इन्द्रादिषु मध्ये कतमः सुरोत्तमो दिक्पालत्वात् देवश्रेष्ठः कृतार्थनीयः कृतार्थः कर्त्तव्य इति स्फुटं व्यक्तं कुरु । को देवश्रेष्ठस्त्वया स्वीकर्त्तव्यस्तं वदेत्यर्थः । मनाक् स्फुटं कुर्विति वा । यद्यपि लज्जावशात्त्वया अभिप्रेतं पतिं व्यक्तीकर्त्तुं न शक्यते, तर्हि कयाचिद्भङ्ग्या वक्तव्यम् । मया सर्वं बोद्धुं शक्यत इत्यर्थः ॥ ५१ ॥

इन्द्रमेव वा त्वमङ्गीकृतवतीत्याह । मत इति । किल सम्भावनायाम् ऐरावतस्य कुम्भयोः कैतवेन च्छलेन ऐरावतकुम्भावेव प्रगल्भौ प्रौढौ पीनौ स्तनौ यस्यास्तादृशी या दिक्पूर्वा दिक् तस्या धवः स्वामी इन्द्रस्तव मतोऽभिप्रेतः, प्रायेणैवं त्वया विचारितं स्यादित्यर्थः । युक्तमेवैतत्, यतस्त्वदङ्गलक्ष्मीं तव शरीरशोभाम् अवगाहितुं साकल्येन द्रष्टुं सहस्रनेत्रादिन्द्रात् पृथक् अन्यो द्विनेत्रो मम मते ज्ञाने न क्षमो न योग्यः । नेत्रद्वयेन सर्वं तव शरीरसौन्दर्यं द्रष्टुं न शक्यते । सहस्रनेत्रत्वादिन्द्र एव तद्दर्शनयोग्य इति मयाप्येतत् सम्भावितमित्यर्थः ॥ ५२ ॥

तमर्थमेव द्रढयन्नाह । प्रसीदेति । हे दमयन्ति त्वं तस्मै इन्द्राय प्रसीद प्रसन्ना भव, तं वृणीष्वेत्यर्थः । अनन्तरं त्वदङ्गसङ्गात् प्रभव उत्पत्तिर्येषां तादृशैः कण्टकैरोमाञ्चैः करणैः स

---

अत्र अथवा इत्यनेन पूर्ववाक्यस्य निषेधाक्षेपादाक्षेपालङ्कारः, वक्रतायाः युक्ततां प्रति विदग्धेत्यादिवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्च ॥ ५० ॥ सरस्वतीरसप्रवाहचक्रशब्दानां श्लेषात् वक्रवाक्यरसधारासु सरस्वतीनदीस्रोतआवर्त्तारोपात् श्लिष्टपरम्परितरूपकम्, वृत्त्यनुप्रासच्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ५१ ॥ पूर्ववाक्यार्थं प्रति उत्तरवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, ऐरावतकुम्भकैतवेति प्रकृतौ गजकुम्भौ प्रतिषिध्य अप्रकृतयोः स्तनयोः स्थापनादपह्नुतिः प्राच्यां दिशि नायिकाव्यवहारस्य इन्द्रे च नायकव्यवहारस्य समारोपात् समासोक्तिः छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ५२ ॥

असंशयं रज्यसि जातवेदसि स्वयं खलु क्षत्रियगोत्रजन्मनः।
विना तमोजस्विनमन्यतः कथं मनोरथस्ते वलते विलासिनि ॥ ५४ ॥
त्वयैकसत्या तनुतापशङ्कया ततो निवर्त्यं न मनः कथञ्चन।
हिमोपमा तस्य परीक्षणक्षणे सतीषु वृत्तिः शतशो निरूपिता ॥ ५५ ॥
स धर्मराजः खलु धर्मशीलया त्वयास्ति चित्तातिथितामवापितः।
ममापि साधुः प्रतिभात्ययं क्रम-श्चकास्ति योग्येन हि योग्यसङ्गमः ॥ ५६ ॥

जगत्प्रभुरिन्द्रस्तनु शरीरं घनां निविडां सन्ततम् आतनुतां करोतु। किम्भूतैः पुलोमजायाः शच्या लोचनयोर्नयनयोस्तीक्ष्णकण्टकैः अत्यर्थं पीडकत्वात् तीक्ष्णाग्रवृक्षावयवविशेषतुल्यैः। इन्द्रस्त्वया वृतश्चेत् इन्द्राणीं परित्यज्य त्वय्येवानुरक्तो भविष्यतीति भावः ॥ ५३ ॥

वह्निरेव वा त्वया मनसा वृत इत्याह। असंशयमिति। हे भैमि त्वमसंशयं निश्चितमेव जातवेदसि वह्नौ स्वयम् आत्मबुद्धयैव विचार्य रज्यसि अनुरक्ता भवसि। खलु यस्मात् हे विलासिनि क्षत्रियगोत्रे क्षत्रियवंशे जन्म यस्या स्तथाविधायाः तव मनोरथ ओजस्विनं तेजस्विनं तं वह्निं विना त्यक्त्वा अन्यतः अन्यस्मिन् पुरुषे कथं वलते धावति, अपि तु नैव वलते। सदृशं सदृशेनैव युज्यते। त्वं हि क्षत्रियवंशोद्भवत्वात्तेजस्विनी, वह्निरपि स्वभावतस्तेजस्वी, अतस्तस्मिंस्तव मनोरथो युज्यत एवेत्यर्थः ॥ ५४ ॥

ननु वह्निरत्यन्तमुत्तापजनकस्तत् कथं तद्वरणं सम्भाव्यत इत्याशङ्क्याह। त्वयेति। हे भैमि एकसत्या अद्वितीयपतिव्रतया त्वया तनुतापशङ्कया देहतापसम्भावनया अतनुरतिमहान् यस्तापस्तच्छङ्कया वा ततो वह्नेः सकाशात् कथञ्चन कथमपि मनो न निवर्त्त्यं, न निवर्त्तनीयम्। कुत इत्याह सतीषु पतिव्रतासु स्त्रीषु यत् परीक्षणं पातिव्रत्यपरीक्षा तत्क्षणे तत्समये तस्य वह्नेर्वृत्तिः स्थितिः हिमोपमा हिमतुल्या शतशो बहुशो निरूपिता रामायणादौ सीतापरीक्षणादिसमये वाल्मीकादिभिर्वर्णिता। ततः पतिव्रतायास्तव वह्निजनितसन्तापाशङ्का नास्तीत्यर्थः ॥ ५५ ॥

यमो वा त्वया मनसि वृत इत्याह। स इति। खलु सम्भावनायां हे भैमि स प्रसिद्धो धर्म-

अत्र रोमाञ्चेषु कण्टकत्वरूपणात् व्यस्तरूपकम्, कण्टकं कण्टकमिति, यमकम्, छेकानुप्रासश्चेति संसृष्टिः। भाविसपत्नीतः शचीतोऽपि तवाधिकसौभाग्यमिति वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥ ५३ ॥ स्वयं खलु क्षत्रियगोत्रजन्मनः इति विना तमोजस्विनमन्यतः इत्यनयोर्वाक्ययोरर्थेन "उभयोरग्निदमयन्त्योरोजस्वित्वेन समागमानुरूप्याद् दहनानुरागित्वं ते युक्तमिति समर्थनाद् वाक्यार्थहेतुकं काव्यलिङ्गं व्यक्तमेव" जी। प्रकृताग्निदमयन्तीव्यवहारादप्रकृतयोः कयोश्चित् तेजस्विनोर्मिलनव्यवहारप्रतीतेः समासोक्तिः, छेकानुप्रासश्चेति संसृष्टिः ॥ ५४ ॥ एकपत्न्येति पदार्थस्य तनुतापशङ्काजनितमनोनिवर्त्तनाभावहेतुत्वेन पदार्थहेतुकमेकं काव्यलिङ्गं तस्यापि उत्तरवाक्यार्थहेतुकत्वात् वाक्यार्थहेतुकञ्चापरमित्यनयोः सङ्करः छेकानुप्रासेन च संसृष्टिः ॥ ५५ ॥

अजातविच्छेदलवैः स्मरोत्सवै-रगस्त्यभासा दिशि निर्मलत्विषि ।
धृतावधिं कालममृत्युशङ्किता निमेषवत्तेन नयस्व केलिभिः ॥ ५७ ॥
शिरीषमृद्वी वरुणं किमीहसे पयःप्रकृत्या मृदुवर्गवासवम् ।
विहाय सर्वान् वृणुते स्म किन्नसा निशापि शीतांशुमनेन हेतुना ॥ ५८ ॥

राजो यमस्त्वया चित्तातिथितां मनोरथविषयताम् अवापितः प्रापितोऽस्ति । त्वया यमो मनसि वृत इति सम्भावयामीत्यर्थः । हेतुगर्भविशेषणमाह, किम्भूतया त्वया धर्मशीलया धर्मसाधनं शीलं स्वभावो यस्याः सा तथा एवंभूतया अयं साधुः समीचीनः क्रमः । धर्मशीला धर्मशील-एवानुरज्यते इति परिपाटी ममापि प्रतिभाति एतन्ममापि सम्मतमित्यर्थः । हि यतः योग्येन सदृशेन सह योग्यस्य सदृशस्य सङ्गमः चकास्ति शोभते । तस्मात् धर्मराजेन सह धर्मशीलायास्तव सङ्गमो युक्त इति भावः ॥ ५६ ॥

अजातेति । हे भैमि अगस्त्यभासा दक्षिणदिक्स्थितागस्त्यनक्षत्रकान्त्या निर्मला त्विट् कान्तिर्यस्यास्तथाविधायां दक्षिणस्यां दिशि अमृत्युशङ्किता यमस्य पत्नीत्वात् मृत्युशङ्काशून्या सती त्वं तेन यमेन सह अजातो विच्छेदस्य लवो लेशोऽपि यत्र तथाविधैः स्मरोत्सवैः कामोत्सवरूपाभिः केलिभिः क्रीडाभिः कृत्वा धृतावधिम् अनवधिम् आचन्द्रार्कं कालं निमेषवत् बहुकालस्य सुखेनाल्पतया भासमानत्वात् निमेषमिव नयस्व अतिवाहय । अन्यवरणे विच्छेदः सम्भाव्यते, एतद्वरणे मरणा-भावात् आचन्द्रार्कं कालं कामसुखमनुभवेतिभावः ॥ ५७ ॥

वरुणो वा त्वया मनसा वृत इत्याह । शिरीषमृद्वीति । हे भैमि शिरीषमृद्वी शिरीषपुष्प-वदतिकोमला त्वं पयःप्रकृत्या जलस्वभावेन पयोलक्षणया प्रकृत्या उपादानकारणेन वा मृदु-वर्गाणां कोमलवस्तुसमूहानां वासवम् इन्द्रम् अतिकोमलं वरुणं किम् ईहसे इच्छसि । त्वं मृद्वी वरुणोऽपि मृदुतरस्तस्मात्तं किं मनसा प्रार्थयसीत्यर्थः । युक्तञ्चेदमिति दृष्टान्तेनाह, सा मृदुतरतायां प्रसिद्धा निशापि रात्रिरपि अनेन हेतुना मृदुना मृदुसयोगो युक्त इति कारणेन सर्वान् देवान् विहाय शीतांशुं चन्द्रं किं न वृणुते स्म अपितु एतेनैव कारणेन वृतवतीत्यर्थः ॥ ५८ ॥

---

धर्मराज इति धर्मशीलयेति च पदार्थयो श्चित्तातिथितावापनहेतुत्वात् पदार्थहेतुकं काव्य-लिङ्गम्, सामान्ययोग्येन सामान्ययोगद्वारेण धर्मराजदमयन्तीरूपविशेषयोः योग्ययोः योगस्य साधुत्व-समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, अप्रकृतसामान्ययोग्येन प्रस्तुतविशेषयोग्य-धर्मराजदमयन्त्योः प्रतीतेः अप्रस्तुतप्रशंसा चेति सङ्करः, छेकानुप्रासेन संसृष्टिः ॥ ५६ ॥ निमेषवदि-त्युपमालङ्कारः ॥ ५७ ॥ शिरीषमृद्वीति मृदुवर्गवासवमितिच उपमाद्वयं, कोमलायाः दमयन्त्याः कोमलवरुणवरणं तथाविधायाः निशायाः तथाविधशीतांशुवरणमिवेति बिम्बानुबिम्बनप्रतीतेः दृष्टान्तालङ्कारः, वरुणेहां प्रति शिरीषमृद्वीति पयःप्रकृत्येति च पदार्थयोः हेतुत्वात् काव्य-लिङ्गम्, शीतांशुनिशयोः लिङ्गसादृश्येन पतिपत्नीव्यवहारसमारोपात् समासोक्तिश्च ति । ५८ ॥

असेवि यस्त्यक्तदिवा दिवानिशं श्रियः प्रियेणानणुरामणीयकः ।
सहामुना तत्र पयःपयोनिधौ कृशोदरि क्रीड यथामनोरथम् ॥ ५९ ॥
इतिस्फुटं तद्वचसस्तयादरात् सुरस्पृहारोपविडम्बनादपि ।
कराङ्कसुप्तैककपोलकर्णया श्रुतञ्च तद्भाषितमश्रुतञ्च तत् ॥ ६० ॥
चिरादनध्यायमवाङ्मुखी मुखे ततः स्म सा वासयते दमस्वसा ।
कृतायतश्वासविमोक्षणाथ तं क्षणाद् बभाषे करुणं विचक्षणा ॥ ६१ ॥

असेवीति । त्यक्ता द्यौः स्वर्गो येन तादृशेन श्रियो लक्ष्म्याः प्रियेण स्वामिना नारायणेन अनणु-महत् रामणीयक सौन्दर्यं यस्य तादृशो यो वरुणो दिवानिशं रात्रिन्दिवं असेवि सेवितः । नारायणोऽपि स्वर्गं त्यक्त्वा सौहार्द्यात् यमुपास्थितेत्यर्थः । हे कृशोदरि भैमि अमुना वरुणेन सह तत्र पयसो दुग्धस्य पयोनिधौ समुद्रे यथामनोरथं यथेच्छं क्रीड़ विहर। स्वर्गं परित्यज्य नारायणेनाश्रितत्वात् क्षीरसमुद्रः स्वर्गापेक्षयापि रमणीयः, वरुणोऽपि नारायणादृतत्वादितरदेवापेक्षयाऽभ्यर्हितस्तस्मात्तेनैव सार्द्धं विहरेत्यर्थः । श्रियः प्रियेणेत्यनेन श्रीरपि तव प्रतिवेशिनी भविष्यतीति सूचितम् ॥ ५९ ॥

इत्थं नलवचनं श्रुत्वा करतलनिहितैककपोलतया भैमी विषण्णा आसीत् तत्र कविरुत्प्रेक्षते । इतीति । स्फुटम् उत्प्रेक्षे कराङ्के करमध्ये सुप्तं स्थितम् एकं कपोलकर्णं यस्यास्तथाभूतया तया भैम्या तत् इति पूर्वोक्तं तद्भाषितं नलवचनं श्रुतञ्च अश्रुतञ्च । एकतरकर्णस्यानावरणात् श्रुतम्, अन्यतरस्यावरणादश्रुतमित्यर्थः । श्रवणे कारणमाह तद्वचसो नलवचनस्य आदरात् गौरवात् श्रुतम् । अश्रवणे कारणमाह, सुरेषु इन्द्रादिषु स्पृहारोपोऽभिलापाय प्रलोभनं तद्रूपात् विडम्बनाद्दूषणात्, पतिव्रतायाः परपुरुषाभिलापारोपवचनं दुष्टमिति न श्रुतमिति भावः ॥ ६० ॥

भैमी बहुक्षणं मौनमवलम्ब्य दीर्घं निश्वस्य च नलं प्रत्युवाचेत्याह । चिरादिति । ततोऽनन्तरं सा दमस्वसा भैमी चिरात् बहुक्षणम् अवाङ्मुखी अधोमुखी सती अनध्यायं वचनाभावं मौनं मुखे वासयते स्म स्थापयामास। बहुक्षणमधोमुखीभूत्वा चिन्तयन्ती किञ्चिन्नोवाचेत्यर्थः। अथानन्तरं विचक्षणाऽतिचतुरा सा कृतमायतस्य दीर्घस्य श्वासस्य निश्वासस्य विमोक्षणं परित्यागो यया तादृशी सती तं नलं क्षणात् मुहूर्त्तादनन्तरम् अकरुणं कठोरं बभाषे उवाच । करुणं करुणरसप्रधानं वचो बभाषे इत्यपरे। विचक्षणेति उत्तरदाने हेतुः । अविचक्षणा हि अत्यन्तानिष्टविषये मौनमवलम्ब्यैव तिष्ठन्ति, नतु किमपि वक्तुं शक्नुवन्ति । अनया तु विचक्षणत्वात् प्रत्युत्तरं दत्तमिति भावः । चिरान्मौनमवलम्ब्य दीर्घं च निश्वस्य कथनं सचिन्तानां स्वभावः । वासयत इति

---

अनणुरामणीयकपदार्थस्य विष्णो र्दिवः त्यागं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासेन संसृज्यते । ५९ ॥ अत्र आदरस्य विडम्बनस्य च श्रुतेन अश्रुतेन च सह हेतुहेतुमद्भावेन यथासंख्यसम्बन्धाद् यथा संख्यमलङ्कारः ॥ ६० ॥

विभिन्दता दुष्कृतिनीं मम श्रुतिं दिगिन्द्रदुर्वाचिकसूचिसञ्चयैः ।
प्रयातजीवामिव मां प्रतिस्फुटं कृतं त्वयाप्यन्तकदूततोचितम् ॥ ६२ ॥
त्वदास्यनिर्यन्मदलीकदुर्यशो-मसीमयं सल्लिपिरूपभागिव ।
श्रुतिं ममाविश्य भवद्दुरक्षरं सृजत्यदः कीटवदुत्कटा रुजः ॥ ६३ ॥
तमालिरूचेऽथ विदर्भजेरिता-प्रगाढमौनव्रतयैकया सखी ।
त्रपां समाराधयतीयमन्यया भवन्तमाह स्वरसज्ञया मया ॥ ६४ ॥

अकर्मकाण्णिङन्ताद्धसतेश्चेतनप्रयोज्यकत्वाभावेन बुधादित्वाभावा'ण्णिङोऽबुधादेरि' त्यात्मनेपदम् ॥ ६१ ॥

अकरुणवचनमेवाह । विभिन्दतेति । हे दूत दिगिन्द्राणां दिक्पालानां दुर्वाचिकान्येव दुष्टसन्देशवचनान्येव सूचयो लौहशलाकास्तासां सञ्चयैः समूहैः कृत्वा दुष्कृतिनीं परपुरुषप्रलोभनवाक्यश्रवणात् पापकारिणीं मम श्रुतिं कर्णं विभिन्दता विशेषेण विदारयता त्वयापि अति सुन्दरेण नलसदृशाकारेणापि भवता अतएव प्रयातजीवामिव मृतप्रायां मां प्रति लक्ष्मीकृत्य स्फुटं सुव्यक्तम् अन्तकस्य दूततायां दौत्ये उचितं युक्तं कर्म कृतम् । चतुर्णां दूतत्वेऽपि यमदौत्योचितं कर्माचरितमित्यर्थः । दुष्कृतिनीं मामिति वा । यमदूतो हि परपुरुषप्रलोभनवचनं श्रुतवत्याः पापिन्या मृतायाः स्त्रियाः कर्णौ लौहशलाकाभिर्भिनत्ति । त्वयापि तथा करणाद्यमदूततोचितं कृतमित्यर्थः । अतिसुन्दरस्य विशेषतो नलसदृशस्य तव मां प्रतिपीडकत्वमयुक्तमित्यपिकारेण सूचितम् ॥ ६२ ॥

त्वद्वचनं केवलं मम दुःखायैव जातमित्याह । त्वदास्येति । अद इदं भवद्दुरक्षरं भवता उक्तं दुष्टमक्षरं मम श्रुतिं कर्णम् आविश्य प्रविश्य कीटवत् कर्णकीट इव उत्कटा दुःसहा रुजः पीडाः सृजति जनयति । किम्भूतं त्वदास्यात् तव मुखात् निर्यन्निर्गच्छत् यन्मम अलीकम् असत्यं दुर्यश इन्द्राद्यनुरागरूपं मिथ्यापयशस्तदेव मसी कज्जलं तन्मयं तत्प्रचुरं सत् भवत् अतएव लिपिरूपभागिव लेखनस्वरूपं भजमानमिव । अन्यदप्यक्षरं मसीभाजननिर्गच्छन्त्या मस्या लिख्यते । यथा कर्णकीटः कर्णं प्रविश्य पीडयति, तथा नलवचनं श्रूयमाणं संपीडयतीत्यर्थः ॥ ६३ ॥

तमिति । अथानन्तरं विदर्भजया भैम्या ईरिता मदभिप्रायं त्वमेव प्रकाशयेति प्रेरिता आलिर्भैमीसखी तं ऊचे उवाच । किमूचे इत्याह हे देवदूत इत्थं सखी भैमी प्रगाढं दृढतरं

---

अत्र छेकानुप्रासः वृत्त्यनुप्रासेन संसृज्यते । "मौनश्वासावाङ्मुखत्वादयश्चिन्तानुभावः" जी ॥ ६१ ॥ अत्र दुर्वाचिकसूचिरिति रूपकम्, प्रयातजीवितमिवेति । मृतं पापिनं सर्वत्र अङ्गे सूचिसंघैर्यमदूतो यथा पीडयति तथेत्युपमा, अन्योऽपि बौद्धादिरदुष्कृतकारिणीं दोषरहितां श्रुतिं वेदं दुष्टवचनैर्दूषयति इति समेन कार्येण प्रस्तुते नले अप्रस्तुतबौद्धव्यवहारसमारोपात् समासोक्तिश्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ६२ ॥ 'अलीकदुर्यशोमसीमयम् रूपकं, लिपिरूपभागिवेति क्रियोत्प्रेक्षा, कीटवदिति उपमा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ६३ ॥

तमर्च्चितुं संवरणस्रजा नृपं स्वयंवरः सम्भविता परेद्यवि ।
ममासुभिर्गन्तुमनाः पुरःसरै-स्तदन्तरायः पुनरेष वासरः ॥ ६५ ॥
तदद्य विश्रम्य दयालुरेधि मे दिनं निनीषामि भवद्विलोकिनी ।
नखैः किलाख्यायि विलिख्य पत्रिणा तवैव रूपेण समः स मत्प्रियः ॥ ६६ ॥
दृशोर्द्वयी ते विधिनास्ति वञ्चिता मुखस्य लक्ष्मीं तव यन्न वीक्षते ।
असावपि श्वस्तदिमां नलानने विलोक्य साफल्यमुपैतु जन्मनः ॥ ६७ ॥

मौनव्रतं यस्यास्तथाविधया एकया स्वस्य रसज्ञया जिह्वया त्रपां लज्जां समाराधयति सम्यक् सेवते । अन्यया अपरया स्वरसज्ञया स्वकीयजिह्वास्वरूपया अथच स्वस्य रसमभिप्रायं जानातीति तादृश्या मया भवन्तं त्वामाह वदति । इयं लज्जावशात् स्वाभिप्रायं न कथयति अतोऽहमेवैतत्-प्रेरिता एतदभिप्रायं कथयामि श्रूयतामित्यर्थः । अन्योऽपि मौनी भूत्वा देवतामाराधयति । अकारप्रश्लेषेण अप्रगाढमौनव्रतयेति मयेत्यस्यापि विशेषणमिति केचित् ॥ ६४ ॥

किमाहेत्याह । तमिति । संवरणस्रजा वरणमालया तं नृपं नलम् अर्च्चितुं परेद्यवि परस्मिन्नहनि स्वयंवरः संभविता सम्यक् भविष्यति । एष वासरो दिवसः पुनस्तस्य स्वयंवरस्य अन्तरायो विघ्नः, एतावानेव विलम्बोऽस्तीत्यर्थः । किम्भूतः - पुरःसरैरेतद्दिवसात् पूर्वमेव गन्तुकामैर्मम असुभिः प्राणैः सह गन्तुमनाः प्रयातुमिच्छुः । नललाभे केवलमेतद्दिवसमात्रं विलम्बो वर्त्तते, औत्सुक्यात्तदपि सोढुं न शक्नोमि । एतावता इन्द्रादिसन्दिष्टश्रवणे मम यावानादरो वर्त्तते विवेचनीय इति भावः ॥ ६५ ॥

तदद्येति । यस्मादेतद्दिवसमतिवाहयितुमशक्यं, तत्तस्मात् अद्य अत्र विश्रम्य विश्रामं कृत्वा मे मम दयालुरेधि कृपावान् भव, यतो भवद्विलोकिनी भवन्तमालोकयन्ती सती अहं दिनं वर्त्तमानं दिवसं निनीषामि अतिवाहयितुमिच्छामि । कथं पतिव्रतायास्ते परपुरुषदर्शनलालसेत्याशङ्क्याह—किल यस्मात् स मत्प्रियो मम पतिर्नलः पत्रिणा हंसेन नखैः करणैः पद्मिनीपत्रे विलिख्य विशेषेण लिखित्वा रूपेण सौन्दर्येण तवैव समस्तुल्य आख्यायि दर्शितः । तस्मात् नलबुद्ध्या तत्-सदृशस्य तव दर्शनान्न मे पतिव्रतात्वव्याघात इति भावः ॥ ६६ ॥

अद्यात्रावस्थाने तवापि महत् कार्य्यं भवेदित्याह । दृशोरिति । ते तव दृशोर्द्वयी चक्षुर्द्वयं

अत्र स्वरसज्ञाशब्दस्य निजरसनाभैम्यभिलाषाभिज्ञत्वरूपयोरुभयार्थयोः प्रकृतत्वात् श्लेषालङ्कारः, मया रसज्ञयेति निरङ्गं रूपकम्, अप्रकृतायाः मौनव्रतधारिण्याः कस्याश्चिद् देवताराधिकायाः व्यवहारप्रतीतेः समासोक्तिश्च ॥ ६४ ॥ अत्र वासरस्य गन्तुमनस्त्वासम्बन्धेऽपि तत्सम्बन्धादतिशयोक्तिः, गन्तुमना इवेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा वा, असुभिः सहेति सहोक्तिरित्येतेषां सङ्करः ॥ ६५ ॥ अत्र प्रथमपादार्थं प्रति द्वितीयपादार्थस्य हेतुत्वात् तत्रापि उत्तरार्द्धवाक्यस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गद्वयम्, तवैवरूपेण समः इति आर्थोपमा च्छेकानुप्रासश्चेति संसृष्टिः ॥ ६६ ॥

ममैव पाणौकरणेऽग्निसाक्षिकं प्रसङ्गसम्पादितमङ्ग सङ्गतम् ।
न हा सहाधीतवतः स्पृहा कथं तवार्यपुत्रीयमजर्यमर्जितुम् ॥ ६८ ॥
दिगीश्वरार्थं न कथञ्चन त्वया कदर्थनीयास्मि कृतोऽयमञ्जलिः ।
प्रसद्यतां नाद्य निगाद्यमीदृशं दधे दृशौ वाष्परयास्पदे भृशम् ॥ ६९ ॥

विधिना वञ्चिता विफलीकृता अस्ति भवति यद्यस्मात् तव मुखस्य लक्ष्मीं शोभां न वीक्षते साक्षान्न पश्यति, दर्पणादौ मुखप्रतिविम्बस्य दर्शने जातेऽपि साक्षाद्दर्शनाभावाद्विधिना प्रतारितेत्यर्थः तत्तस्मात् असावपि नेत्रद्वय्यपि श्वो भाविदिने नलानने नलस्य वदने इमाम् एतत्सजातीयां लक्ष्मीं विलोक्य जन्मनः साफल्यं सफलत्वम् उपैतु प्राप्नोतु,तव नलतुल्यत्वान्नलमुखे एतावतीं शोभां विलोक्य कृतार्था भविष्यति । अतः स्वकार्य्यार्थमपि अद्य त्वया स्थातव्यमित्यर्थः । अथच नलमदृष्ट्वैव त्वमिन्द्रादीन् स्तौषि, अद्यात्र स्थित्वा श्वो नलो द्रष्टव्यः पश्चात् इन्द्रादयो मया वरणीया नलो वेति त्वया विवेचनीयमिति भावः ॥ ६७ ॥

मम नलवरणे तवापि सहायता भवितुमुचितेत्याह । ममैवेति । अङ्ग हे इन्द्रादिदूत पाणौकरण एव विवाहसमय एव अग्निसाक्षिकं अग्निसमक्षम् अतएव अजर्य्यम् अविनाशि मम आर्य्यपुत्रीयम् आर्य्यस्य अतिमान्यस्य वीरसेनस्य पुत्रो नलस्तन्निष्ठं सङ्गतं प्रेम अर्जितुं संपादयितुं कथं तव स्पृहा वाञ्छा न भवति, अपितु भवितुं युज्यते । इन्द्रादिवरणार्थमेव भवता यत्नः क्रियते, नलवरणार्थन्तु किमर्थं न क्रियत इत्यर्थः । नन्विन्द्रादयो देवास्तेषामर्थे यत्नः कर्त्तुं युज्यते, नलेन सार्द्धं विशिष्ट-सम्बन्धाभावात् कथं तदर्थं यतनीयमित्याशङ्क्याह—तव किम्भूतस्य, हा खेदे सहाधीतवतः लक्षणया सौन्दर्य्यादिभिर्नलसदृशस्य, सादृश्यसम्बन्धादेव नलस्तव सुहृत्, अतस्तदर्थमपि त्वया यतनीयमित्यर्थः । भवतु अन्यार्थमागतेन मया किमर्थमन्यस्मिन् एतावान् प्रयासः कर्त्तव्य इत्याशङ्क्याह किम्भूतं सङ्गतं, प्रसङ्गेन नतु बहुतरप्रयासेन सम्पादितं सम्पाद्यम्, आवयोर्मेलनं जात-प्रायमेव, त्वया केवलं निमित्तमात्रेण भवितव्यमित्यर्थः। अतोऽद्य स्थित्वा श्वो मम नलेन सह पाणि-ग्रहणे किञ्चिदानुकूल्यं भजस्वेति भावः । आर्य्यपुत्रः स्वामीति वा अथवा मम पाणौकरण एव अग्निसाक्षिकम् अग्निसाक्षिकत्वाद् दृढतरं प्रसङ्गसम्पादितम् अजर्य्यम् आर्य्यपुत्रीयं सङ्गतं नलेन सार्द्धं स्वस्य मैत्रीम् अर्जितुं सहाधीतवतः सदृशस्य तव कथं न स्पृहा भवति । अन्यार्थमागतेनापि त्वयाद्यात्र स्थितेन प्रासङ्गिकी नलेन सह मैत्र्यपि सम्पादिता स्यात् । तस्मादत्र स्थातव्यमिति भावः । पाणौशब्दः सप्तम्यन्तप्रतिरूपकोऽव्ययः । अजर्य्यमिति 'जिरश्च सङ्गमे कर्त्तरी'ति यङ् । 'सङ्गतं प्रेम्णि युक्तं च' व ॥ ६८ ॥

पुनः कथनावकाशनिरासायाह । दिगिति । हे दूत त्वया दिगीश्वरार्थम् इन्द्राद्यर्थं कथञ्चन

---

"अत्र दूते सुरबुद्ध्या दूतनलमुखलक्ष्म्योर्भेदेप्यभेदोक्तेरतिशयोक्तिभेदः" जी ॥ ६७ ॥ अत्र विशेषणानां साभिप्रायत्वात् परिकरोऽलङ्कारः, आद्यचरणत्रये वृत्त्यनुप्रासः, अन्त्यचरणे च श्रुत्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ६८ ॥

वृणे दिगीशानिति का कथा तथा त्वयीति नेक्षे नलभामपीहया ।
सतीव्रतेऽग्नौ तृणयामि जीवितं स्मरस्तु किं वस्तु तदस्तु भस्म यः ॥ ७० ॥
न्यवेशि रत्नत्रितये जिनेन यः स धर्मचिन्तामणिरुज्झितो यया ।
कपालिकोपानलभस्मनः कृते तदेव भस्म स्वकुले स्तृतं तया ॥ ७१ ॥

केनापि प्रकारेण उपरुध्य अस्मि अहं न कदर्थनीया न पीडनीया । अयम् अञ्जलिः कृतो बद्धः, प्रसद्यतां मयि प्रसन्नेन भूयताम् । अद्य ईदृशम् एवंविधम् इन्द्रादिवरणविषयकं किमपि न निगाद्यं न कथनीयं, तथात्वे किं करिष्यसीत्याह,—दृशौ चक्षुषी भृशम् अतितरां वाष्परयस्य अश्रुवेगस्य आस्पदे स्थाने दधे करिष्यामि । पुनरुक्तौ अतिशयं रोदिष्यामीत्यर्थः ॥ ६९ ॥

स्वस्य पातिव्रत्यप्रकटनेन च पुनर्वचनावकाशं निरस्यति । वृणे इति । अहं दिगीशान् दिक्पालान् इन्द्रादीन् वृणे वरिष्यामि, इति कथा का अपितु ईदृक् कथापि न युज्यते । याहं त्वयि वर्त्तमानां तथा हंसोक्तेन संवदमानाम् इति इमां नलभामपि नलकान्तिमपि ईहया कटाक्षविक्षेपादिचेष्टयापि नेक्षे साभिलाषं न पश्यामि । पातिव्रत्यभङ्गभिया नलकान्तितुल्यां त्वत्कान्तिमपि न पश्यामि, इन्द्रादीन् वरीष्यामीति का कथेत्यर्थः । ननु यदि इन्द्राद्युपरोधात् नलस्त्वां न ग्रहीष्यति तर्हि कामानलेन दग्धा भविष्यसीत्याशङ्क्याह । अहं सतीव्रते पतिव्रताव्रतरूपेऽग्नौ अथच तीव्रतया सह वर्त्तमानेऽतितीक्ष्णेऽग्नौ जीवितं प्राणानपि तृणयामि तृणवत् गणयामि । सतीव्रतरक्षार्थं जीवनादरमपि न करोमीत्यर्थः । स्मरस्तु कामः पुनः किं वस्तु अस्तु भवतु अपितु न किमपि, यः स्मरस्तत्प्रसिद्धं हरनेत्रानलजनितं भस्म, हरनेत्रानलजनितभस्मीभूतत्वान्निःसारः । कामः पतिव्रताया मम किमपि न कर्त्तुं शक्नोतीत्यर्थः । माम् ईदृशीं पतिव्रतां ज्ञात्वा इन्द्रादिवरणप्रस्तावाद्विरमेति भावः ॥ ७० ॥

कामसुखार्थं पातिव्रत्यं नैव त्याज्यमित्याह । न्यवेशीति । जिनेन धर्मद्रोहिणा बुद्धेनापि रत्नत्रितये सम्यग्दर्शन-सम्यग्ज्ञान-सम्यक्चारित्रलक्षणधर्मरूपरत्नत्रितयमध्ये यो न्यवेशि निवेशितः, स सम्यक्चारित्ररूपधर्मचिन्तामणिर्धर्मश्रेष्ठो यया स्त्रिया कपालिनः शिवस्य कोप एव अनलस्तस्य भस्मनः कामस्य कृते कामसुखनिमित्तम् उज्झितस्त्यक्तः ; तया स्त्रिया स्वकुले निजपित्रादिवंशे तदेव भस्म स्तृतं विस्तारितं प्रक्षिप्तम् । या कामार्थं चारित्रं परित्यजति, सा केवलं कुलमेव कलङ्कयतीत्यर्थः । अथच मूर्खेणापि भस्मार्थं चिन्तामणिर्न त्यज्यते । 'सद्दृष्टिज्ञानवृत्तानि धर्मं धर्मेश्वरा जगुः' इति बौद्धसिद्धान्ते रत्नत्रितयमुक्तम् ॥ ७१ ॥

---

अत्र दैन्यभावोदयालङ्कारः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ६९ ॥ नलभामपि नेक्षे का कथा दिगीशान् वृणे इति अर्थापत्तिः, 'सतीव्रतेऽग्नौ' इति रूपकम्, स्मरस्य किञ्चित्करत्वाभावे भस्मपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ७० ॥ अत्र कोपानलेति रूपकमलङ्कारः, स्तृतमिवेति प्रतीयमाना क्रियोत्प्रेक्षा, अप्रस्तुतस्त्रीसामान्येन दमयन्तीरूपप्रस्तुतविशेषप्रतीतेरप्रस्तुतप्रशंसा, छेकानुप्रासश्च ॥ ७१ ॥

निपीय पीयूषरसौरसीरसौ गिरः स्वकन्दर्पहुताशनाहुतीः ।
कृतान्तदूतं न तया यथोदितं कृतान्तमेव स्वममन्यतादयम् ॥ ७२ ॥
स भिन्नमर्मापि तदर्त्तिकाकुभिः स्वदूतधर्मान्न विरन्तुमैहत ।
शनैरशंसन्निभृतं विनिश्वसन् विचित्रवाक्चित्रशिखण्डिनन्दनः ॥ ७३ ॥
दिवो धवस्त्वां यदि कल्पशाखिनं कदापि याचेत निजाङ्गनालयम् ।
कथं भवेरस्य न जीवितेश्वरी न मोघयाच्ञः स हि भीरु भूरुहः ॥ ७४ ॥

इत्थं भैमीवचनं श्रुत्वा नल आत्मानं गर्हयामासेत्याह । निपीयेति । असौ नलः पीयूषरसस्य सुधारसस्य औरसीः पुत्रीः सुधारसोत्पन्नवदतिमधुरा अतएव स्वस्य आत्मनः कन्दर्पहुताशनस्य कामानलस्य आहुतीरुद्दीपिका गिरो भैम्याः पूर्वोक्तवचनानि निपीय सादरं श्रुत्वा स्वमात्मानं तया भैम्या यथा येन प्रकारेण उदितं विभिन्दता दुष्कृतिर्ना मम श्रुतिमित्यादिना उक्तं, कृतान्तदूतं तथा न अमन्यत ; किन्तु अदयं निष्कृपं स्वं कृतान्तमेव यममेव, यमदूतस्य कदाचिदुपेक्षा भवेत्, तस्माद्यमदूतो नाहं किन्तु निर्दयत्वात्साक्षाद्यम एवाहमिति मन्यते स्मेत्यर्थः ।। ७२ ॥

इत्थं जातनिर्वेदोऽपि नलो दूतधर्मत्वात् पुनरपि तामुवाचेत्याह । स इति । स नलस्तस्या भैम्या अर्त्तिः पीडा तया काकुभिर्दैन्यभाषणैर्भिन्नमर्मापि विदीर्णहृदयोऽपि स्वस्य दूतधर्माद्विरन्तुं विरतो भवितुं न एहत नेच्छति स्म । तर्हि किं चकारेत्याह, निभृतं माऽनया ज्ञातव्यमिति गुप्तं विनिश्वसन् निर्विण्णहृदयत्वात् निश्वासं परित्यजन् शनैर्मन्दम् अशंसत् कथयामास । यतः स विचित्रवाचि नानाविधवचनचातुर्ये चित्रशिखण्डिनन्दनः बृहस्पतिरिव । 'वाचस्पतिश्चित्रशिखण्डिजः' अ ॥ ७३ ॥

यदशंसत्तदाह । दिव इति । हे भैमि दिवः स्वर्गस्य धवः स्वामी इन्द्रः निजाङ्गनमेव आलयो यस्य तादृशं स्वप्राङ्गनावस्थायिनम् अतिसन्निहितं कल्पवृक्षं कदापि त्वां यदि याचते, मह्यं भैमी दीयतामिति प्रार्थयेत्, तदा त्वम् अस्य इन्द्रस्य जीवितेश्वरी कथं न भवेः । हे भीरु भयशीले हि यस्मात् स भूरुहः कल्पवृक्षो मोघा विफला याच्ञा यस्य तादृशो न भवति, अपितु अवश्यमेव याचितं ददातीत्यर्थः । अभीष्टदः सदासन्निहितः स्वामिना च याचितः कल्पवृक्षस्त्वामवश्यमेवास्मै दास्यतीति भावः ॥ ७४ ॥

---

अत्र गीर्षु पीयूषरसौरसीसम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षा, कन्दर्पे हुताशनत्वारोपो गीर्षु आहुतित्वारोपे निमित्तमिति परम्परितं रूपकम्, अदयपदार्थस्य आत्मनि कृतान्तत्वमननं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, आरोप्यमाणस्य कृतान्तत्वस्य प्रकृतपीडनानुकूलतया परिणामः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ७२ ॥ अत्र विचित्रवाक्चित्रशिखण्डिनन्दनः इत्युपमा, उपमेये अन्वितस्य दूतधर्माद्विरामाभावस्य उपमासाधकत्वात् तु न रूपकम् । सत्यपि भिन्नमर्मत्वरूपे कारणे विरामरूपकार्यानुत्पत्ते र्विशेषोक्तिः, लुप्तोपमा, छेकानुप्रासश्चेति संसृष्टिः । भिन्नमर्मत्वाभावेऽपि तत्सम्बन्धोक्ते रतिशयोक्तिः ॥७३॥ जीवितेश्वरीत्वाभवनं

शिखी विधाय त्वदवाप्तिकामनां स्वयं हुतस्वांशहविः स्वमूर्त्तिषु।
क्रतुं विधत्ते यदि सार्वकामिकं कथं स मिथ्यास्तु विधिस्तु वैदिकः॥ ७५॥
सदा तदाशामधितिष्ठतः करं वरं प्रदातुं बलिताद् बलादपि।
मुनेरगस्त्याद् वृणुते स धर्मराड्-यदि त्वदाप्तिं भण का तदा गतिः॥ ७६॥
क्रतोः कृते जाग्रति वेत्ति कः कति प्रभोरपां वेश्मनि कामधेनवः।
त्वदर्थमेकामपि याचते स चेत् प्रचेतसः पाणिगतैव वर्त्तसे॥ ७७॥

वह्निरपि त्वामनायासेन लब्धुमर्हतीत्याह। शिखीति। शिखी वह्निः त्वदवाप्तिकामनां त्वत्प्राप्त्यभिलाषं विधाय भैमीलाभकामोऽहमिति संकल्प्य स्वमूर्त्तिषु दक्षिणाग्न्यादिषु स्वयमात्मनैव हुतम् अग्नये स्वाहेति मन्त्रेण प्रक्षिप्तं स्वांशं यज्ञेषु यजमानैर्दत्तं स्वांशभूतं हविर्येन तादृशः सन् यदि सार्वकामिकं सर्वकामदं क्रतुं यज्ञं विधत्ते कुरुते, तदा स वैदिकः श्रौतो विधिस्तु पुनः कथं मिथ्या असत्योऽस्तु; अपितु सत्य एव भविष्यतीत्यर्थः। अन्येनानुष्ठितो यज्ञः सर्वान् कामान् ददाति, किंपुनः स्वयं वह्निनानुष्ठितः। तस्माद्वह्निना त्वमसुलभा न भविष्यसीति भावः॥ ७५॥

यमोऽपि त्वामनायासेन लब्धुमर्हतीत्याह। सदेति। स प्रसिद्धो धर्मराड् यमो यदि अगस्त्यान्मुनेः सकाशात् त्वदाप्तिं भैमी मह्यं दीयतामिति त्वल्लाभं वृणुते, तदा का गतिः क उपायः भण कथय; अपितु न कापि गतिरस्तीत्यर्थः। किम्भूतात् सदा तदाशां तस्य यमस्य दिशम् अधितिष्ठतः अध्यासीनात्, तथा अतएव बलादपि बलेनापि अनिच्छतेऽपि यमाय वरं वरलक्षणं करं राजग्राह्यं भागं प्रदातुं बलितात् स्वयमेव प्रवृत्तात्। यमस्याधिकारे वसामि, तदस्मै राजभागोऽवश्यं देय इति विचार्य मुनित्वात् वररूपं राजभागं स्वयमेव दातुमुत्सुकादित्यर्थः। यमेनापि त्वमसुलभा न भविष्यसीति भावः॥ ७६॥

वरुणोऽपि त्वामनायासेन लब्धुमर्हतीत्याह। क्रतोरिति। हे भैमि अपां प्रभोर्वरुणस्य वेश्मनि गृहे क्रतोः कृते यज्ञहविरर्थं कतिसंख्यकाः कामधेनवो जाग्रति विद्यन्ते इति को वेत्ति जानाति अपितु न कोऽपि। बह्व्यस्तिष्ठन्तीत्यर्थः। एतदहमेव निगूढं जानामीति भावः। तेन किमत आह स वरुणश्चेत् यदि तासु मध्ये एकामपि कामधेनुं मह्यं भैमी दीयतामिति त्वदर्थं त्वल्लक्षणं वस्तु याचते, तर्हि त्वं प्रचेतसो वरुणस्य पाणिगतैव हस्तप्राप्तैव वर्त्तसे भविष्यसि। यो हि यद्वस्तु कामधेनुं याचते, सा तद्वस्तु तत्क्षणादेव तस्मै ददाति। तस्मात् वरुणेन याचिता

---

प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गं, छेकानुप्रासश्च॥ ७४॥ "अत्र स्वशब्दत्रयेण क्रमादग्नेरेव कर्त्तृदेवताहवनीयादिरूपताप्रतिपादनात् कर्मणि प्रमादानवकाशः सूचितः।" जी। मिथ्यात्वाभावे पूर्ववाक्यानां वैदिक इतिपदार्थस्य च हेतुत्वादुभयहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्च॥ ७५॥ वरे करत्वारोपस्य प्रकृतभैमीलाभोपयोगित्वात् परिणामः, तदाशामधितिष्ठतः इति पदार्थस्य वरवरणं प्रति हेतुत्वात्, पूर्ववाक्यार्थानां च गत्यभावे हेतुत्वात् पदार्थहेतुकमेकं वाक्यार्थहेतुकञ्चापरं काव्यलिङ्गम्, छेकानुप्रासश्च॥ ७६॥

न सन्निधात्री यदि विघ्नसिद्धये पतिव्रता पत्युरनिच्छया शची ।
स एव राजव्रजवैशसात् कुतः परस्परस्पर्द्धिवरः स्वयंवरः ॥ ७८ ॥
निजस्य वृत्तान्तमजानतां मिथो मुखस्य रोषात् परुषाणि जल्पतः ।
मृधं किमच्छत्रकदण्डताण्डवं भुजाभुजि क्षौणिभुजां दिदृक्षसे ॥ ७९ ॥
अपार्थयन् याजकफुत्कृतिश्रमं ज्वलेद्रुषा चेद्वपुषा तु नानलः ।
अलं नलः कर्त्तुमनग्निसाक्षिकं विधिं विवाहे तव सारसाक्षि कम् ॥ ८० ॥

सा अवश्यमेव त्वामस्मै दास्यतीत्यर्थः । तस्मादधुनैव एतत् सर्वं विचार्य इन्द्राद्यन्यतमं वृणीष्वेति भावः ॥ ७७ ॥

भीषयन्नप्याह । नेति । भर्त्तुरन्यासक्तत्वेऽपि पतिव्रता सती इन्द्राणी पत्युरिन्द्रस्य अनिच्छया अननुमत्या हेतुना विघ्नसिद्धये मदनागमनात् स्वयंवरे विघ्नो जायतामिति विघ्नोत्पादाय यदि न सन्निधात्री सन्निहिता न भविष्यति, स्वयंवरे न गमिष्यति,तर्हि राजव्रजानां नृपतिसमूहानां वैशसात् परस्परकलहाद्धेतोः स स्वयंवर एव कुतः कस्मात्, अपितु न कुतोऽपि । नलप्राप्तिर्दूरे तिष्ठतु स्वयंवर एव न भविष्यतीत्यर्थः । किम्भूतः परस्परमन्योऽन्यं स्पर्द्धिनो वरा वरयितारो यत्र स तथा तादृशः । शच्याः सान्निध्याभावात् वराणामहमहमिकया कलहरूपः स्वयंवरस्य विघ्नो भविष्यतीत्यर्थः । शची पूजिता सती सन्निधाय स्वयंवरस्य विघ्नं नाशयतीति वार्त्ता । अतएव कालिदासः "सान्निध्ययोगात् किल तत्र शच्याः" इत्यादि । विवाहादौ षोडशमातृकामध्ये च शची पूज्यते, तथाच -'गौरी पद्मा शची मेधा सावित्री विजया जया' इत्यादि ॥ ७८ ॥

तमर्थमेव द्रढयति । निजस्येति । हे भैमि त्वं शच्याः सान्निध्याभावात् क्षौणिभुजां राज्ञां भुजैश्च भुजैश्च प्रहृत्य इदं युद्धं प्रवृत्तमिति भुजाभुजि हस्ताहस्ति मृधं युद्धं किं दिदृक्षसे द्रष्टुमिच्छसि । किम्भूतं मृधं अच्छत्रकदण्डताण्डवं स्वयंवरेऽस्त्रान्तरसमवधानाभावात् अच्छत्रकाश्छत्रशून्यीकृता ये दण्डास्तेषां ताण्डवं नृत्यं यत्र तादृशम् । किम्भूतानां क्षौणिभुजां रोषात् क्रोधात् मिथोऽन्योऽन्यं परुषाणि रूक्षाणि जल्पतो, निजस्य स्वीयस्य मुखस्य वृत्तान्तं व्यापारम् अजानतां, कं प्रति किमहं कथयामीत्यविदुषाम्, अतीव क्रोधान्धानामित्यर्थः । प्रायेण त्वं राजसमूहयुद्धदर्शनार्थिनी, नतु स्वयंवराकाङ्क्षिणीत्यर्थः । शचीसान्निध्याभावेन राज्ञां परस्परविरोधात् तव स्वयवरो दुर्घटो भविष्यतीति भावः । 'ताण्डवं नटनं नाट्यम्' अ ॥ ७९ ॥

वह्निरपि क्रुद्ध्वा स्वयंवरे प्रतिकूलतामाचरिष्यतीत्याह । अपार्थयन्निति । अनलो वह्निश्चेत् यदि त्वयाऽनादृतत्वात् रुषा क्रोधेन ज्वलेत् अति क्रुद्धो भवेत् । तु पुनर्याजकानां पुरोधसां फुत्कृति-

---

अत्र चतुर्थपादार्थं प्रति पूर्वपादत्रयार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्च ॥ ७७ ॥ 'विवाहे गौर्याः सान्निध्यम्, स्वयंवरे शच्याः' इतीतिहासः । सन्निधानाभावं प्रति पतिव्रतेति पदस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ७८ ॥ स्वभावोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ॥ ७९ ॥

पतिंवरायाः कुलजं वरस्य वा यमः कमप्याचरितातिथिं यदि।
कथं न गन्ता विफलीभविष्णुतां स्वयंवरः साध्वि समृद्धिमानपि ॥ ८१ ॥
अपः प्रति स्वामितया परः सुरः स ता निषेधेद्यदि नैषधक्रुधा।
नलाय लोभाततपाणयेऽपि तत् पिता कथं त्वां वद स प्रदास्यति ॥ ८२ ॥
इदं महत्तेऽभिहितं हितं मया विहाय मोहं दमयन्ति चिन्तय।
सुरेषु विघ्नैकपरेषु को नरः करस्थमप्यर्थमवाप्तुमीश्वरः ॥ ८३ ॥

श्रमं निर्वाणवह्निसन्धुक्षणार्थं फुत्कारायासम् अपार्थयन् विफलीकुर्वन् सन् वपुषा ज्वालारूपेण शरीरेण न ज्वलेत्। हे सारसाक्षि कमलनयने भैमि तर्हि नलस्तव विवाहे विषये अग्निः साक्षी यत्र स तथा तद्व्यतिरिक्तं कं विधिं वैवाहिकानुष्ठानं कर्त्तुम् अलं समर्थो भवेत्। अपितु न कमपि। अग्निज्वलनं विना वैवाहिकहोमाभावेन विशिष्टसंस्कारभङ्गलक्षणं दोषमवेक्ष्य नलोऽपि न त्वां परिणेष्यतीति भावः। 'सारसं सरसीरुहम्' अ ॥ ८० ॥

यमोऽपि तथा कर्त्तुं शक्नोतीत्याह। पतिंवराया इति। यमो यदि पतिंवरायाः पतिवरणार्थमुद्यतायाः कन्यायास्तव वरस्य वा जामातुर्नलस्य वा कमपि कुलजं सपिण्डम् अतिथिं स्वगृहागतम् आचरिता करिष्यति, त्वयाऽनादृतत्वात् क्रोधेन यमो यदि तव नलस्य वा कमपि सपिण्डं मारयिष्यतीत्यर्थः। तर्हि हे साध्वि पतिव्रते भैमि समृद्धिमानपि अतिसमृद्धोऽपि स्वयंवरो विफलीभविष्णुतां निस्फलत्वं कथं न गन्ता न गमिष्यति, अपितु सपिण्डमरणेनाशौचात् स्वयंवरोऽपि विफलो भविष्यतीत्यर्थः। पतिंवरेति 'सहादेः संज्ञायामि'ति खशङ् ॥ ८१ ॥

वरुणोऽपि प्रतिबन्धको भवितुं शक्नोतीत्याह। अप इति। परः एतेभ्योऽन्यः स प्रसिद्धः सुरो देवो वरुणः अपो जलं प्रति लक्षीकृत्य स्वामितया प्रभुत्वेन यदि नैषधक्रुधा नलं प्रति कोपेन ता अपो निषेधेत्, मा भवतीभिस्तत्र गन्तव्यमिति प्रतिषेधेत्, तत्तर्हि ते तव पिता भीमः लोभेन आततः प्रसारितः पाणिर्येन स तथा एवंविधायापि नलाय त्वां कथं केन प्रकारेण संप्रदास्यति वद कथय, अपितु जलं विना कथमुत्सर्गो भवेदिति विविच्य नैव दास्यतीत्यर्थः। यद्यप्यतिसुन्दर्यां त्वयि लुब्धत्वात् जलरूपाङ्गासमवधानप्रयुक्तवैधोत्सर्गवैगुण्यमङ्गीकृत्यापि नलो हस्तं प्रसार्य याचेत, तथाप्यतिधार्मिकस्तव पिता त्वां न दास्यतीत्यपिना सूचितम्। अप इति स्वामिशब्दयोगात् षष्ठीसप्तम्योः प्राप्तावपि 'द्वितीयावर्जं नान्या विभक्तिः प्रत्यादावि'ति निषेधात् लक्षणेऽभिपतीत्यादिना द्वितीया ॥ ८२ ॥

इत्थं देवानां प्रातिकूल्यप्रकारमुक्त्वा उपसंहरन्नाह। इदमिति। हे दमयन्ति मया ते तव तुभ्यं वा इदं महत् हितम् अभिहितम् उक्तं, त्वं मोहम् अज्ञानं विहाय त्यक्त्वा चिन्तय। अनेनेदं

अत्र सारसाक्षीति लुप्तोपमा, अनग्निसाक्षिकमिति पदार्थस्य विवाहविध्यभावे हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति सङ्करः॥ ८० ॥ अत्र च्छेकानुप्रासोऽलङ्कारः ॥ ८२ ॥

इमा गिरस्तस्य विचिन्त्य चेतसा तथेति संप्रत्ययमाससाद सा ।
निवारितावग्रहनीरनिर्झरे नभोनभस्यत्वमलम्भयदृशौ ॥ ८४ ॥
स्फुटोत्पलाभ्यामलिदम्पतीव तद्विलोचनाभ्यां कुचकुड्मलाशया ।
निपत्य विन्दू हृदि कज्जलाविलौ मणीव नीलौ तरलौ विलेसतुः ॥ ८५ ॥

हितमुक्तमहितं वेति विचारय। अत्र प्रतीकारोपायोऽपि नास्तीत्याह सुरेषु देवेषु विघ्नैकपरेषु केवलं विघ्नं कर्त्तुमिच्छत्सु सत्सु को नरो मनुष्यः करस्थमपि हस्तस्थितमप्यर्थं वस्तु अवाप्तुं लब्धुं ईश्वरः प्रभुः भवेत्, अपितु न कोऽपि। देवेषु रुष्टेषु हस्तस्थमपि वस्तु दुष्प्रापं, किं पुनर्मनोरथमात्र-विषयोऽतिदूरस्थो नल इत्यपेरर्थः। तस्मादधुनैव सर्वं विचारयेति भावः ॥ ८३ ॥

इत्थं भीषिता भैमी नलोक्तिं सत्यत्वेनाङ्गीकृत्य रुरोदेत्याह। इमा इति। सा भैमी तस्य नलस्य इमाः पूर्वोक्ता गिरश्चेतसा विचिन्त्य विचार्य तथेति संप्रत्ययं यदयं वदति तत्सत्यमिति सम्यक् प्रतीतिम् आससाद प्राप। ततश्च दृशौ चक्षुषी नभोनभस्यत्वं बह्वश्रुजलत्वात् श्रावण-भाद्रमासतुल्यत्वम् अलम्भयत् प्रापयामास। किम्भूते दृशौ—निवारितो निरस्तोऽवग्रहो वृष्टिप्रतिबन्धो यस्य एवंविधो नीरनिर्झरो जलप्रवाहो ययोस्तादृश्यौ, अतिशयं रुरोदेत्यर्थः। 'आषाढे श्रावणस्तु स्यान्नभाः श्रावणिकश्च सः। स्युर्नभस्यप्रोष्ठपदभाद्रभाद्रपदाः समाः' 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' अ ॥ ८४ ॥

रोदनमेव विशिष्याह। स्फुटोत्पलेति। अलिदम्पतीव भ्रमरस्त्रीपुंसाविव विन्दू अश्रुजल-विन्दुद्वयं स्फुटोत्पलाभ्यां प्रफुल्लनीलोत्पलतुल्याभ्यां तस्या भैम्या विलोचनाभ्यां नेत्रयोः सकाशात् कुचौ स्तनौ कुड्मलौ कलिके इवेति कुचकुड्मलौ तयोराशया प्राप्तीच्छयेव हृदि वक्षसि निपत्य मणीव इन्द्रनीलमणीव विलेसतुः शोभितवन्तौ। किम्भूतौ, कज्जलाविलौ कज्जलेन कलुषौ, अतएव नीलौ नीलवर्णौ तथा तरलौ चञ्चलौ। भ्रमरावपि नीलौ तरलौ च भवतः। इन्द्रनीलमणी अपि नीलौ तरलौ हारमध्यगौ च भवतः। अत्र चक्षुषी परित्यज्य कुचयोः पततोर्विन्द्वोर्भ्रमरमिथुन-सादृश्यम्, भ्रमरमिथुनं हि विकसितकमलं बहुक्षणमुपभुज्य किञ्चिद्विरक्तीभूय नवीनमध्वाशया-विकसिष्यत्कमलकोरके निपतति। अनन्तरञ्च वक्षसि पतितयोस्तयोर्मणिसादृश्यम्। मणी हि हार-मध्यगौ भूत्वा वक्षसि तिष्ठतः। दम्पतीवेत्यत्र मणीवेत्यत्र च 'मणीवादेर्वे'त्यनेन सन्धिनिषेधस्य पाक्षिकत्वात् सन्धिः ॥ ८५ ॥

---

अत्र नरसामान्येन दमयन्तीरूपविशेषस्य समर्थनाद् अर्थान्तरन्यासश्छेकानुप्रासोऽन्त्यानु-प्रासश्चेति संसृष्टिः ॥ ८३ ॥ 'अवग्रहनीरनिर्झरे' इति रूपकालङ्कारः। दृशोः नभोनभस्य-त्वसम्बन्धाभावेऽपि तत्सम्बन्धकथनादतिशयोक्तिश्छेकानुप्रासश्चेति संसृष्टिः ॥ ८४ ॥ कुच-कुट्मलेति रूपकम्, तयोराशया प्राप्तीच्छयेवेति सम्भावनया प्रतीयमानोत्प्रेक्षा, अलिदम्पती-वेति मणीवेति च उपमा, नीलत्वं प्रति कज्जलाविलाविति पदार्थस्य हेतुत्वात् पदार्थ-हेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्च ॥ ८५ ॥

धुतापतत्पुष्पशिलीमुखाशुगैः शुचेस्तदासीत् सरसी रसस्य सा।
रयाय बद्धादरयाश्रुधारया सनालनीलोत्पलनीललोचना॥ ८६॥
अथोद्भ्रमन्ती रुदती गतक्षमा ससम्भ्रमा लुप्तरतिः स्खलन्मतिः।
व्यधात् प्रियप्राप्तिविघातनिश्चया-न्मृदूनि दूना परिदेवितानि सा॥ ८७॥
त्वरस्व पञ्चेषुहुताशनात्मन-स्तनुष्व मद्भस्ममयं यशश्चयम्।
विधे परेहाफलभक्षणव्रती पताद्य तृप्यन्नसुभिर्ममाफलैः॥ ८८॥

धुतेति। सा दमयन्ती तदा तस्मिन् समये शुचे रसस्य विप्रलम्भश्रृङ्गारस्य सरसी सर इव आसीत् अधिकतरं विप्रलम्भं बभारेत्यर्थः। किम्भूता—आपतन्त आगच्छन्तो ये पुष्पशिलीमुखस्य कामस्य आशुगा वाणास्तैर्धुता कम्पिता अतिशयं पीडितेत्यर्थः। पुनः किम्भूता, रयाय वेगाय बद्धादरया कृताभिनिवेशया अधिकतरयेत्यर्थः, अश्रुधारया सनालं नालसहितं यत् नीलोत्पलं तद्वन्नीलं लोचनं यस्याः सा, अत्यर्थं रुदतीत्यर्थः। अथच शुचेर्ग्रीष्मसम्बन्धिनी रसस्य जलस्य सरसी आसीत्, शुचेर्निर्मलस्य जलस्य सरसीति वा। किम्भूता सरसी, पतन्ति श्लथवृन्तत्वात् निष्पतन्ति पुष्पाणि यैस्तादृशा ये शिलीमुखा भ्रमरा आशुगा वायवश्च तैर्धुता कम्पिता। यद्वा पतद्भिः पक्षिभिर्हंसादिभिः पुष्पेषु स्थितैः शिलीमुखैर्भ्रमरैः आशुगेन वायुना च धुता। तथा ग्रीष्मसमये जलस्याल्पत्वाद्दृश्यमाननालनीलोत्पला भवति। शुचेः शोकस्य सरसी बभूवेति वा। 'शुचिः शुद्धेऽनुपहते श्टङ्गाराषाढयोः स्मृतः। ग्रीष्मे हुतवहेऽपि' वि। शोकपक्षे शुचधातो 'र्ब्रूआदेरि'ति भावे इः॥ ८६॥

इत्थमत्यर्थं रुदती भैमी विललापेत्याह। अथेति। अथानन्तरं सा भैमी प्रियस्य नलस्य प्राप्तेर्विघातस्य निश्चयात् नलप्राप्तिः सर्वथा न भविष्यतीति निर्णयाद्धेतोर्दूना उत्तप्ता सती मृदूनि श्रोतुः कारुण्यजनकानि परिदेवितानि विलापवचनानि व्यधात् कृतवती। किम्भूता, उद्भ्रमन्ती उन्मादवती, तथा रुदती रोदनं कुर्वती, गतक्षमा गतधैर्या ससम्भ्रमा सभया लुप्तरतिर्नष्टानुरागा स्खलन्मतिर्मोहं गच्छन्ती॥ ८७॥

परिदेवितान्येवाह। त्वरस्वेति। हे पञ्चेषुहुताशन कामानल त्वं त्वरस्व सत्वरो भव, कस्मिन्

---

अत्र आशुगशिलीमुखशब्दयोरुभयोः वाणार्थकत्वेन आपाततः पुनरुक्तयावभासनात् पर्यवसाने च पुष्पशिलीमुखशब्देन कामस्य, आशुगशब्देन च वायुरूपार्थस्य बोधात् पुनरुक्तवदाभासालङ्कारः, भैम्यां सरसीत्वारोपस्य श्लेषबलात् शुचौ (श्रृङ्गारे) ग्रीष्मत्वारोपे, रसे जलत्वारोपे, पुष्पशिलीमुखे (कामवाणे) पुष्पस्थितभ्रमरत्वारोपे, धुतशब्दवाच्ये पीड़ायां कम्पारोपे, आशुगशब्दाभिधेये वाणे वायुत्वारोपे च निमित्तत्वात् श्लिष्ट-स्वाङ्गपरम्परितरूपकम्, सनालनीलोत्पलनीललोचनेति उपमेति सङ्करः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते॥ ८६॥ अत्र चिन्ताविषादोद्भ्रमादीनां विविधभावानामुदयाद् भावोदयनामालङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते॥ ८७॥

भृशं वियोगानलताप्यमान किं विलीयसे न त्वमयोमयं यदि ।
स्मरेषुभिर्भेद्य न वज्रमप्यसि ब्रवीपि न स्वान्त कथं न दीर्य्यसे ॥ ८९ ॥
विलम्बसे जीवित किं द्रव द्रुतं ज्वलत्यदस्ते हृदयं निकेतनम् ।
जहासि नाद्यापि मृषा सुखासिका-मपूर्वमालस्यमहो तवेदृशम् ॥ ९० ॥

कर्मणीत्याह, मां दग्ध्वा मद्भस्ममयम् आत्मनो निजस्य यशश्चयं कीर्त्तिसमूहं तनुष्व विस्तारय। अन्योऽपि हुताशनः काष्ठादिकं दग्ध्वा भस्म करोति। हे विधे हे विधातः परस्य ईहाया वाञ्छायाः फलस्य यद्भक्षणं विनाशनं तल्लक्षणं व्रतम् अवश्यनिर्वाह्यं विद्यते यस्य तादृशस्त्वम् अफलैर्नलालाभान्निष्प्रयोजनैर्मम असुभिः प्राणैस्तृप्यन् तृप्तः सन् पत पतितो भव। अनपराधां मां मारयित्वा पतितो भवेत्यर्थः। अन्योऽपि अन्यफलभक्षणव्रती पतितो भवति ॥ ८८ ॥

भृशमिति। हे भृशमत्यर्थं वियोगानलताप्यमान विरहाग्निना दह्यमान स्वान्त मनस्त्वं यदि अयोमयं लोहमयं तर्हि किं कथं न विलीयसे न द्रवो भवसि। अयो हि अनलताप्यमानं सत् द्रवीभवति, तव तु तदभावात् अयसोऽप्यतिकठिनमसीत्यर्थः। तथा हे स्मरेषुभिः कामबाणैर्भेद्य स्वान्त वज्रमपि नासि। स्मरस्य पुष्पमयैरपि बाणैर्भेद्यत्वात्त्वं वज्रमित्यपि वक्तुं न शक्यस इत्यर्थः। तर्हि कथं न दीर्यसे स्वयमेव विदीर्णं न भवसि ; न ब्रवीपि न कथयसि, अपितु विदाराभावकारणं कथयेत्यर्थः ॥ ८९ ॥

विलम्बस इति। हे जीवित किं किमर्थं विलम्बसे विलम्बं करोपि, द्रुतं शीघ्रं द्रव पलायस्व। यतस्ते तव अद एतत् हृदयं निकेतनं हृदयलक्षणं वासस्थलं ज्वलति कामाग्निना दह्यते। अद्यापि निकेतने दह्यमानेऽपि मृषा मिथ्या सुखासिकां सुखावस्थानं न जहासि न त्यजसि ; अपितु शीघ्रं त्यज। अहो आश्चर्यं तव ईदृशं निकेतने दह्यमानेऽपि सुखावस्थानलक्षणम् आलस्यम् अलसत्वम् अपूर्वं लोकोत्तरम्। अन्यो हि अलसो निकेतने दह्यमाने सुखावस्थानं त्यक्त्वा झटिति तस्मात् पलायते। त्वन्तु ज्वलत्यपि गृहे तन्मध्ये एव तिष्ठसि, तस्मात्तव लोकोत्तरमाश्चर्यजनकमालस्यमित्यर्थः। त्वं शीघ्रं निर्गच्छ, तथा सति मम एतावद्दुःखं न भविष्यतीति भावः ॥ ९० ॥

---

पञ्चेषुहुताशनेति मद्भस्ममयं यशश्चेति रूपकद्वयं संसृष्टं, परेहाफलभक्षणव्रतीति पदार्थस्य पतनहेतुत्वात् काव्यलिङ्गम्, विधौ प्रकृते अप्रकृतस्य भग्नव्रतस्य स्त्रीवधपातकिनः स्वर्गपातिनो व्यवहारस्य समारोपात् समासोक्तिः, विधेः परेहाफलभक्षणव्रतित्वासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरित्येतेषां सङ्करः वृत्त्यनुप्रासेन च संसृष्टिः ॥ ८८ ॥ अत्र सत्यपि अनलसन्तापरूपे कारणे विलयरूपकार्याभावाद् विशेषोक्तिः, वज्रमयत्वाभावं प्रति स्मरेषुभिर्भेद्येति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गञ्चेति संसृष्टिः। "निश्चयगर्भसन्देहालङ्कारः" सा ॥ ८९ ॥ अत्र पलायनं प्रति द्वितीयचरणगतवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः। "व्यतिरेकालङ्कारः" सा ॥ ९० ॥

दृशौ मृषा पातकिनो मनोरथाः कथं पृथू वामपि विप्रलेभिरे।
प्रियश्रियः प्रेक्षणघाति पातकं स्वमश्रुभिः क्षालयतं शतं समाः॥ ९१॥
प्रियं न मृत्युं न लभे त्वदीप्सितं तदेव न स्यान्मम यत्त्वमिच्छसि।
वियोगमेवेच्छ मनः प्रियेण मे तव प्रसादान्न भवत्यसावपि॥ ९२॥
न काकुवाक्यैरतिवाममङ्गजं द्विषत्सु याचे पवनन्तु दक्षिणम्।
दिशापि मद्भस्म किरत्वयं तया प्रियो यया वैरविधिर्वधावधिः॥ ९३॥

दृशाविति। हे दृशौ चक्षुषी मृषा मिथ्यामयाः पातकिनः परस्य प्रतारकत्वात् पातकयुक्ता मनोरथाः पृथू अपि अतिविशाले अपि वां युवां विप्रलेभिरे प्रतारयन्ति स्म। मनसोऽणुत्वात् तैः प्रतारणा युज्यते, युवान्तु पृथू, तद्युवयोरपि यत्तैः प्रतारणं कृतं तदाश्चर्य्यमित्यर्थः। अथच पृथुरतिमहान् जनो हि प्रतार्य्यो न भवति। संप्रति युवां प्रियश्रियो नलशोभायाः प्रेक्षणघाति दर्शनप्रतिबन्धकं स्वं स्वीयं पातकं शतं समाः शतवत्सरान् व्याप्य यावज्जीवमित्यर्थः अश्रुभिः करणैः क्षालयतं संमार्जयतम्। युवयोरपि नलशोभादर्शनप्रतिबन्धकं दुरदृष्टं वर्त्तते, तद्यावत्तावन्नलशोभादर्शनं न भवतीति, तदेव तावन्निराकुरुतमित्यर्थः। अन्यदपि मलिनं जलेन क्षालयति। नलदर्शनाभावाद्यावज्जीवमपि रोदनं युवयोः प्राप्तमिति भावः॥ ९१॥

प्रियमिति। हे मनस्त्वदीप्सितं त्वया लब्धुमिष्टं प्रियं नलं तदभावे मृत्युञ्च द्वयमपि अहं न लभे न प्राप्नोमि। कुत इत्याह, त्वं यत् इच्छसि मम तदेव न स्यात् न भवेत्। संप्रति प्रियेण नलेन सह मे मम वियोगमेव इच्छ अभिलष, तव प्रसादात् असावपि वियोगोऽपि मम न भवतु। त्वया वियोगे प्रार्थिते तद्विपरीतः प्रियलाभो भविष्यतीति भावः॥ ९२॥

नेति। अहं द्विषत्सु विरहिशत्रुषु चन्द्रचन्दनरोलम्बादिषु मध्ये काकुवाक्यैः दैन्यवचनैः कृत्वा अङ्गजं कामं न याचे न किमपि प्रार्थये। किम्भूतं – यतोऽतिवामं विरहिषु अतिप्रतिकूलं, विरहिप्रतिकूलत्वादेव कामो न याचितुं योग्य इत्यर्थः, अथच अतिक्रान्ता वामाः स्त्रियो येन तादृशं स्त्रीणां वचनाकारिणमित्यर्थः। अथच रतौ प्रीतौ वामं वक्रं, विरहिप्रीतिविरोधिनमित्यर्थः। तस्मात् कामं न याचे। तु किन्तु पवनं काकुवचनैर्याचे वक्ष्यमाणं प्रार्थये। यतो दक्षिणम् अवामम्

अत्र पातकिनः इति पदार्थस्य विप्रलम्भनहेतुत्वात् काव्यलिङ्गं, दृशोः पृथुत्वेन प्रतार्यत्वे कारणाभावेऽपि तत्कार्यप्रतार्यत्वसत्त्वात् विभावना, पृथुशब्दश्लेषात् उदारत्वविस्तृतत्वयोरभेदाध्यवसायादतिशयोक्तिः, प्रकृते मनोरथे प्रतारकत्वव्यवहारस्य, दृशोश्च पातकिनो गङ्गादिपवित्रसलिलस्नानेन प्रायश्चित्तमनुतिष्ठतः व्यवहारस्य समारोपात् समासोक्तिः छेकानुप्रासश्च॥ ९१॥
अत्र संयोगलाभाय तद्विरुद्धस्य वियोगस्य प्रार्थनाद् विचित्रालङ्कारः। तथा प्रस्तुताप्रस्तुतयोः प्रियमृत्योः 'लभे' इत्येकया क्रियया सह सम्बन्धाद् दीपकमलङ्कारश्चेति संसृष्टिः। 'विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत्' इति साहित्यदर्पणे विचित्रालङ्कारलक्षणम्॥ ९२॥

अमूनि गच्छन्ति युगानि न क्षणः कियत् सहिष्ये नहि मृत्युरस्ति मे ।
स मां न कान्तः स्फुटमन्तरुज्झिता न तं मनस्तच्च न कायवायवः ॥ ९४ ॥
मदुग्रतापव्ययशक्तशीकरः सुराः स वः केन पपे कृपार्णवः ।
उदेति कोटिर्न मुदे मदुत्तमा किमाशु सङ्कल्पलवश्रमेण वः ॥ ९५ ॥

अथच दाक्षिणात्यम् अवामत्वात् दाक्षिणात्यतया उत्तरदिगवस्थितनलराजधान्यभिगामित्वाच्च पवन एव याचितुं योग्य इत्यर्थः। अथच अङ्गजः पुत्रोऽपि अतिवक्रत्वान्न याचितुमर्हः। द्विषन्नपि अवामत्वात् याचितुमर्हः। याच्यमानमर्थमेवाह,—अयं पवनो यया दिशा उपलक्षितः प्रियो नलः, यस्यां दिशि मम प्रियो नलो वर्त्तते, तया दिशोपलक्षितं तस्यां दिशि मद्भस्म अपि किरतु विक्षिपतु। दक्षिणानिलः कुण्डिनपुरादुत्तरस्यां दिशि वर्त्तमानां नलराजधानीं प्रति मद्भस्म नयतु। तथात्वे मम भस्मनोऽपि नलसम्बन्धो भवेदित्यर्थः। ननु मलयानिलोऽपि विरहिणां वैरी, तत्कथं विरहिण्यास्तव वचनं स करिष्यतीत्याशङ्‌क्याह, यतो वैरविधि-वैरकरणं बधावधिः मारणपर्यन्तः। एतच्च कारणं सर्वत्र साधारणं, वैरत्वन्तु असाधारणमिति बोध्यम्। वैरिणामनेकत्वेऽपि प्राधान्यात् कामपवनयोरेव याच्यत्वायाच्यत्वाभ्यामुल्लेखः कृतः ॥ ९३ ॥

अमूनीति। अमूनि युगानि सुखमया बहुसङ्ख्यकाः कालविशेषा गच्छन्ति। क्षणो दुःखमयोऽल्पोऽपि कालो न गच्छति। दुःखमयो ह्यल्पकालोऽपि बहुयुगतुल्यो भवतीति भावः। कियत् किंपरिमाणं दुःखमहं सहिष्ये अनुभविष्यामि। जीवनावध्येव सहनीयमेतदित्याह, यतो मे मम मृत्युर्नास्ति, मृत्योरभावादेव अनवधिकालमेतत् सहनीयमित्यर्थः। मरणाभावः कथमित्यत आह—स्फुटं यतोऽन्तर्मनसि स्थितः स कान्तो नलः मां न उज्झिता न त्यक्ष्यति। कायवायवश्च प्राणाश्च तत् मनो नोज्झितारः। ममैतत्स्थूलशरीरनाशेऽपि लिङ्गशरीरं स्थास्यति, तत्रापि अन्तःकरणादयः परस्परशृङ्खलाबद्धा इव स्थास्यन्ति। नलस्तु लिङ्गशरीरस्थमप्यन्तःकरणं नैव त्यक्ष्यति। तस्मान्मरणाभावान्ममैतावद्दुःखं चिरसहनीयमिति भावः ॥ ९४ ॥

मदुग्रेति। हे सुरा इन्द्रादयः स प्रसिद्धो वो युष्माकं कृपार्णवः कारुण्यसमुद्रः केन पपे पीतः। किम्भूतः, मम य उग्रतापो नलविरहजनितसन्तापः तस्य व्यये नाशे शक्तो योग्यः शीकरः कणमात्रं यस्य तादृशः। अन्यो जलसमुद्रोऽगस्त्येन पीतः। अयं केन पीतः। यूयं ईदृशा

---

अत्र वैरविधेर्बधावधित्वरूपसामान्येन दक्षिणानिलनिष्ठवैरत्वस्य मद्बधावधित्वरूपविशेषसमर्थनाद् अर्थान्तरन्यासोऽलङ्कारः, अतिसुन्दरत्वातिप्रतिकूलत्वयोः दक्षिणदिगागतत्वसरलत्वयोश्च भेदेऽपि वामदक्षिणशब्दयोः श्लेषेण तदभेदाध्यवसायादतिशयोक्तिद्वयम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ९३ ॥ अमूनि गच्छन्ति युगानि न क्षणः इत्यत्र प्रकृतक्षणप्रतिषेधेनाप्रकृतयुगस्थापनादपह्नुतिः, गच्छन्तीति सम्भावनया प्रतीयमाना क्रियोत्प्रेक्षा, मृत्योरभावं प्रति तृतीयचतुर्थपादवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, प्रस्तुतानां कान्त-मनः-प्राणादीनाञ्च 'उज्झिता' इत्येकया क्रियया सम्बन्धात् तुल्ययोगिता, छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ९४ ॥

ममैव वार्हर्दिवमश्रुदुर्दिनैः प्रसह्य वर्षासु ऋतौ प्रसञ्जिते ।
कथं नु शृण्वन्तु सुषुप्य देवता भवन्त्वरण्ये रुदितं न मे गिरः ॥ ९६ ॥
इयं न ते नैषध दृक्पथातिथि-स्त्वदेकतानस्य जनस्य यातना ।
ह्रदे ह्रदे हा न कियद्गवेषितः स वेधसागोपि खगोऽपि वक्ति यः ॥ ९७ ॥
ममापि किं नो दयसे दयाधन त्वदङ्घ्रिमग्नं यदि वेत्थ मे मनः ।
निमज्जयन् सन्तमसे पराशयं विधिस्तु वाच्यः क्व तवागसः कथा ॥ ९८ ॥

निष्कृपाः कथं भवथ, कथयतेत्यर्थः। ननु त्वदभिलापादेवैवं क्रियते इत्याशङ्क्याह—वो युष्माकं सङ्कल्पलवश्रमेण इच्छालेशमात्ररूपेणैव श्रमेण मदुत्तमा मत्त उत्कृष्टा अर्थात् स्त्रीणां कोटिर्मुदे युष्माकं प्रीतये आशु शीघ्रं किं न उदेति नोत्पद्यते, अपितु युष्माकम् इच्छामात्रेणैव मदपेक्षयातिसुन्दर्य्यो जायन्ते। तत्किमर्थं मदभिलापविडम्बनया मयि निष्कृपा भवथेत्यर्थः॥ ९५ ॥

ममैवेति। वा अथवा अहर्दिवं दिवानिशं ममैव अश्रूण्येव दुर्दिनानि मेघच्छन्नदिनजा वृष्टयस्तैः कृत्वा प्रसह्य अकस्मात् वर्षासु ऋतौ प्रसञ्जिते प्रवर्त्तिते सति देवता इन्द्रादयो देवाः सुषुप्य अस्माकं शयनकालोऽयमिति ज्ञात्वा सुखेन सुप्ताः कथं नु शृण्वन्तु मत्परिदेवनगिर इत्यर्थात्। तस्मात् मे मम गिरः परिदेवनवचनानि अरण्ये रुदितं न भवन्तु। अरण्यरुदितवन्निष्फलतां न व्रजन्तु। इतः परं देवानुद्दिश्य वृथाविलापं न करिष्यामीत्यर्थः। अरण्ये रुदितं न भवन्तु अपितु अरण्ये रुदितमेव भवन्त्विति बहवः। वर्षास्विति 'आपो दाराः' इत्यादिना एकत्वे बहुवचनम् ॥ ९६ ॥

चतुर्भिः श्लोकैर्नलमुद्दिश्य विलपति। इयमिति। हे नैषध नल त्वदेकतानस्य त्वदनन्यवृत्तेस्त्वय्येव बद्धभावस्य मल्लक्षणस्य जनस्य इयं यातना तीव्रवेदना ते तव दृक्पथातिथिर्न नयनविषयो न भवति, ईदृशीं यातनां त्वं न पश्यसीत्यर्थः। ननु दूतद्वारा नलः कथं न विज्ञाप्यत इत्यत आह। हा कष्टं यो वक्ति नलसमीपं गत्वा यातनां विज्ञापयति, स खगोऽपि हंसोऽपि वेधसा ब्रह्मणा अगोपि गोपितः। कुतो गोपनं ज्ञातमित्यत आह, ह्रदे ह्रदे प्रतिह्रदं कियत् कतिवारं न गवेषितोऽन्विष्टः अपितु बहुवारमेवान्विष्टः, किन्तु ब्रह्मणा गोपितत्वान्न दृष्ट इत्यर्थः॥ ९७ ॥

ममापीति। हे दयाधन कृपानिधे नल यदि त्वं मे मम मनस्त्वदङ्घ्रिमग्नं तवैव चरणे

---

अत्र प्रथमपादपदार्थस्य कृपार्णवपानयोग्यतासम्पादकहेतुत्वात् काव्यलिङ्गम्, कृपार्णव इति कृपायामर्णवत्वारोपस्य कृपांशे शीकररूपजलबिन्दुत्वारोपहेतुत्वात् साङ्गपरम्परितरूपकालङ्कारश्छेकानुप्रासेन संसृज्यते ॥ ९५ ॥ 'वर्षर्त्तुर्देवरजनी' इति ज्योतिःशास्त्रम्। तस्यां च देवानां निद्रा युक्ता। अत्र तु तत्कालस्य अवर्षात्वेन तत्सम्बन्धोक्तेः, तथा देवानां स्वापसम्बन्धाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिद्वयम्। गिरामरण्यरुदितासम्भवेन तत्सादृश्याक्षेपात् निदर्शना, अश्रवणं प्रति सुषुप्येति पदार्थस्य हेतुत्वात् काव्यलिङ्गम्, अश्रुणि दुर्दिनत्वारोपात् निरङ्गं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ९६ ॥ अत्र स वेधसा अगोपि

कथावशेषं तव सा कृते गते-त्युपैष्यति श्रोत्रपथं कथं न ते।
दयाणुना मां समनुग्रहीष्यसे तदापि तावद्यदि नाथ नाधुना ॥ ९९ ॥
ममादरीदं विदरीतुमान्तरं तदर्थिकल्पद्रुम किञ्चिदर्थये।
भिदां हृदि द्वारमवाप्य मैव मे हतासुभिः प्राणसमः समङ्गमः ॥ १०० ॥

बद्धभावं वेत्थ जानासि। तर्हि ममापि किं किमर्थं नो दयसे मां प्रति दयां न कुरुषे। भक्तजनो हि दयितुं युज्यते। किंवा तवात्र दोषो नास्तीत्याह, – अथवा परस्य आशयम् अन्तःकरणं सन्तमसे मोहे निमज्जयन् क्षिपन् सम्मोहयन् विधिस्तु दैवमेव विधातैव वा वाच्यो गर्हणीयो भवति। तत्र आगसोऽपराधस्य कथा क्व कुत्र। मदीयदुरदृष्टस्य इन्द्राद्यनुरोधाद् ब्रह्मणो वा अत्रापराध इत्यर्थः। ममेति दयधातुयोगे 'कर्म्मणो वा दयादेरि'ति कर्म्मणि षष्ठी ॥ ९८ ॥

कथेति। सा भैमी तव कृते त्वदनुरक्ता सती त्वामलब्ध्वा कथावशेषं गता मृता इति ते तव श्रोत्रपथं श्रुतिविषयतां कथं न उपैष्यति, अपितु जनमुखात् त्वमप्येतत् श्रोष्यस्येवेत्यर्थः। ननु तदानीं श्रवणेऽपि कस्ते लाभ इत्याशङ्क्याह,—हे नाथ प्राणेश यदि अधुना नानुगृह्णासि, तर्हि तदापि मन्मरणवार्त्ताश्रवणसमयेऽपि तावत् दयाणुना कृपालेशेनापि मां समनुग्रहीष्यसे। हा भैमी मदर्थं मृतेति किञ्चिद्दयालुर्मयि भविष्यस्येवेत्यर्थः। तेनैव कृपालेशेनाहं धन्या भविष्यामीति भावः। समनुग्रहीष्यसे इति स्वरितेत्त्वादात्मनेपदं, 'ग्रहेरीड् ङितिथङ्वर्जमि'तीड् ॥ ९९ ॥

ममेति। हे अर्थिनां याचकानां कल्पद्रुम अभीष्टदातृत्वात् कल्पवृक्षतुल्य यस्मात् मम इदम् आन्तरं हृदयं विदरीतुं विदीर्णीभवितुम् आदरि आदरयुक्तम्। तत्तस्मात् त्वां किञ्चित् अर्थये याचे। कल्पवृक्षतुल्यत्वात् त्वया तद्दातव्यमित्यर्थः। किन्तदित्याह – मम हृदि भिदां विदारणमेवद्वारम् अवाप्य हतासुभिरनीप्सितप्राणैः समं सह प्राणसम प्राणतुल्यस्त्वं मैव गमः नैव याहि। मम प्राणा हृदयाद्गच्छन्तु, त्वं मा याहि। जन्मान्तरेऽपि मम त्वय्येवानुरागो भवेदिति भावः। प्राणतुल्यत्वात् प्राणैः सह गमने शङ्केयम्। विदरीतुमिति 'वृङ्वृअॄतामि'त्यादिना ईड्, आन्तरमिति स्वार्थे टण् ॥ १०० ॥

---

किमिति सम्भावनाप्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासेन संसृज्यते ॥ ९७ ॥ अत्र पराशयस्य विधिकर्तृकसन्तमसमज्जनाभावेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः सामान्यपराशयादप्रस्तुतात् प्रस्तुतनलाशयप्रतीतेरप्रस्तुतप्रशंसालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ९८ ॥ "अत्र च्छेकानुप्रासोऽलङ्कारः"। सा ॥ ९९ ॥ अत्र 'अर्थिकल्पद्रुम' इति निरङ्गं रूपकम्, याचनं प्रति कल्पद्रुमपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, 'दरी दरी' इति यमकम्, छेकानुप्रासः, वृत्त्यनुप्रासश्च त्येतेषां संसृष्टिः। श्लोकस्यास्य तात्पर्यार्थस्तु "प्राणोत्क्रमणकाले त्वया जन्मान्तरेऽपि त्वत्प्राप्तिकामायाः मे हृदयान्नापयातव्यम्। 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' इति भगवद्वचनादिति भावः।" जी ॥ १०० ॥

इति प्रियाकाकुभिरुन्मिषन् भृशं दिगीशदूत्येन हृदि स्थिरीकृतः।
नृपं स योगेऽपि वियोगमन्मथः क्षणं तमुद्भ्रान्तमजीजनत् पुनः॥ १०१॥
महेन्द्रदूत्यादि समस्तमात्मन-स्ततः स विस्मृत्य मनोरथस्थितैः।
क्रियाः प्रियाया ललितैः करम्बिता विकल्पयन्नित्थमलीकमालपत्॥ १०२॥
अयि प्रिये कस्य कृते विलप्यते विलिप्यते हा मुखमश्रुबिन्दुभिः।
पुरस्त्वयालोकि नमन्नयन्न किं तिरश्चलल्लोचनशीलया नलः॥ १०३॥

इत्थं भैमीवचनमाकर्ण्य नलस्य विप्रलम्भाधिक्यं जातमित्याह। इतीति। स पूर्वसम्भृतो वियोगमन्मथो विरहजनितकामो योगेऽपि भैमीसान्निध्ये सत्यपि तं नृपं नलं क्षणं व्याप्य पुनरुद्भ्रान्तम् उन्मत्तम् अजीजनत् कृतवान्। पूर्वमप्यनेकवारं कृतवान् इति पुनःपदार्थः। किम्भूतः, दिगीशानाम् इन्द्रादीनां दूत्येन हृदि मनसि स्थिरीकृतः अत्रापिकारो बोध्यः इन्द्रादिदूततया स्थिरीकृतोऽपि नियन्त्रितोऽपि दौत्याङ्गीकारेण भैम्यां निराशत्वात् लुप्तप्रायोऽपि इति पूर्वोक्तरूपैः प्रियाया भैम्याः काकुभिर्दैन्यभाषणैः भृशमत्यर्थम् उन्मिषन् बहुलीभवन्। उन्मादवशान्नलोऽपि प्रलपति स्मेति भावः॥ १०१॥

तदेव विशिष्याह, महेन्द्रेति। स नलस्ततोऽनन्तरम् आत्मनः समस्तं महेन्द्रदूत्यादि आदिना वह्निदूत्यादिकञ्च विस्मृत्य मनोरथस्थितैः पूर्वं मनोरथकल्पितैर्ललितैः भैमीविलासैः करम्बिता मिश्रिताः प्रियाया भैम्याः क्रिया विलापादिरूपा विकल्पयन् तर्कयन् सम्भावयन्निति यावत् इत्थं वक्ष्यमाणप्रकारम् अलीकम् अबुद्धिपूर्वकम् आलपत् उक्तवान्। यथा पूर्वं विप्रलम्भावस्थायां भैमीं मानिनीत्वेन मनसि कल्पयित्वा तदभिमानवचनोचितमलीकमुक्तवान्, तथा उक्तविलाप-वचनमपि प्रणयकलहवचनत्वेन सम्भाव्य उक्तवानित्यर्थः॥ १०२॥

यदालपत् तदाह। अयीति। अयीति सानुनयसम्बोधने। अयि प्रिये भैमि त्वया कस्य कृते निमित्तं विलप्यते विलापः क्रियते। हा कष्टं कस्य कृते च अश्रुबिन्दुभिः करणैर्मुखं विलिप्यते विशेषेण लिप्तं क्रियते अतिशयं रुद्यत इत्यर्थः, एतदुभयममङ्गलत्वान्नैव कर्त्तव्यमित्यर्थः। तिर-श्चलन्ती तिर्यग्गामिनी वक्रे लोचनशीले चक्षुःस्वभावौ यस्याः सा तथा तथाभूतया वक्रलोचनया वक्र-स्वभावया चेत्यर्थः, लोचनलीलयेति पाठे तिरश्चलतोर्लोचनयोर्लीलया विलासेन कटाक्षेणेत्यर्थः, त्वया पुरोऽग्रे नमन् त्वच्चरणयोः पतितुमुद्यमं कुर्वन् अयं नलः किं नालोकि न दृष्टः। तव लोचनमिव स्वभावोऽपि वक्रः। कथमन्यथा चरणपतनाय कृतोद्यममपि मामदृष्ट्वैव रोदिषि, संप्रति प्रणय-कलहं परित्यज्य चरणपतनोद्यतं मामवलोकनेनानुगृहाण, रोदनं माकार्षीरिति भावः। अत्र उन्मादवशात् रोदनं प्रणयकोपजनितत्वेन सम्भावितम्॥ १०३॥

अत्र योगेऽपि वियोगमन्मथ इति विरोधाभासः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृ-ज्यते॥ १०१॥ वृत्त्यनुप्रासोऽलङ्कारः॥ १०२॥ अत्र वृत्त्यनुप्रासश्छेकानुप्रासालङ्कारः॥ १०३॥

चकास्ति विन्दुच्युतकातिचातुरी घनास्रुविन्दुस्रुतिकैतवात्तव ।
मसारताराक्षि ससारमात्मना तनोषि संसारमसंशयं यतः ॥ १०४ ॥
अपास्तपाथोरुहि शायितं करे करोषि लीलानलिनं किमाननम् ।
तनोषि हारं कियदस्रुणः स्रवै-रदोषनिर्वासितभूषणे हृदि ॥ १०५ ॥

चकास्तीति । मसाराविन्द्रनीलाविव तारे कनीनिके ययोस्तादृशी अक्षिणी चक्षुषी यस्याः सा तथा हे तथाविधे प्रिये तव घना निविडा येऽस्रुविन्दवस्तेषां स्रुतिः क्षरणं तस्याः कैतवाद्व्याजात् विन्दुच्युतके प्राचीनोक्तशब्दालङ्कारविशेषेऽतिचातुरी अतिनैपुण्यं चकास्ति भाति । त्वं विन्दुच्युतकालङ्कारं सम्यग् जानासीत्यर्थः । अथच विन्दूनां च्युतमेव च्युतकं तत्रातिचातुरी शोभते, त्वं सम्यगलीकरोदनं कर्तुं जानासीत्यर्थः । यतस्त्वम् असंशयं निश्चितं संसारं सकलं जगत् आत्मना ससारं श्रेष्ठवस्तुयुक्तं तनोषि करोषि । अस्मिन् संसारे त्वादृशी कापि कुशला नास्ति, यतस्त्वं रोदनेऽप्यतितरां शोभसे इत्यर्थः । अथच विन्दोरनुस्वारस्य च्यवनचातुर्यात् सानुस्वारसंसारशब्दं विन्दुच्यवनेन ससारं तनोषि । अनुस्वारच्यवनाद्यत्र अर्थान्तरं भवति तद्विन्दुच्युतकम्, यथा — "काले तडिल्लताजाले घनपीनपयोधरे । कान्तः सर्वगुणोपेतो बालेन्दुः खेन लभ्यते" इति । अत्र बालेन्दुर्नवीनचन्द्रः खे आकाशे न लभ्यते, पक्षेऽनुस्वारच्यवनेन हे बाले कान्तो दुःखेन लभ्यत इत्यर्थः । नीलमणिर्मसारः स्यात्' इति हारावली ॥ १०४ ॥

अपास्तेति । हे प्रिये अपास्तं परित्यक्तं पाथोरुट् लीलापद्मं यस्मात् तादृशे करे पाणौ शायितं स्थापितम् आननं मुखं किं किमर्थं लीलानलिनं लीलापद्मं करोषि, लीलापद्मस्थाने मुखं किमर्थं करोषीत्यर्थः । अपितु तन्मा कुरु । लीलापद्मं गृहाण, चिन्तां मा कार्षीरिति भावः । तथा अदोषेण वैधव्यादिदोषाभावेन अथच मदीयापराधं विना निर्वासितान्यपनीतानि भूषणानि हारादीनि यस्मात् तादृशे हृदि वक्षसि कियदस्रुणः स्रवैः क्षरणैरस्रुविन्दुभिर्हारं मुक्तावलीं किं तनोषि किमित्यत्रापि सम्बध्यते, यद्वा कियदिति क्रियाविशेषणम् । हारस्थानेऽस्रुविन्दून् किमर्थं करोषीत्यर्थः । हृदि हारं धारय, रोदनं माकार्षीरिति भावः ॥ १०५ ॥

---

अत्र अश्रुविन्दुस्रवणविन्दुच्युतालङ्कारयोर्भेदेऽपि विन्दुच्युतकशब्दश्लेषेणाभेदाध्यवसायादतिशयोक्तिः, कैतवशब्देन अश्रुविन्दूनां स्रुतिं निषिध्य वर्णात्मकविन्दुच्युतकत्वस्य स्थापनादपह्नुतिः, ससारमिति श्लिष्टपदेनोपात्तस्य प्रागुक्तस्य अर्थद्वयस्याभेदाध्यवसायेन विन्दुच्युतकाख्यकार्यकरणोत्प्रेक्षणात् श्लेषमूला सापह्नवोत्प्रेक्षा, सा च असंशयमिति व्यञ्जकप्रयोगाद् वाच्या, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ १०४ ॥ अत्र प्रथमार्द्धे लीलानलिनमित्यत्र अन्यस्य अन्यकरणासम्भवेन लीलानलिनमिवेति सादृश्याक्षेपान्निदर्शनालङ्कारः, उत्तरार्द्धे च अश्रुविन्दुभिर्हारमिति वैयधिकरण्येन रूपकमलङ्कारश्छेकानुप्रासोवृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ १०५ ॥

दृशोरमङ्गल्यमिदं मिलज्जलं करेण तावत् परिमार्जयामि ते।
अथापराधं भवदङ्घ्रिपङ्कज-द्वयीरजोभिः सममात्ममौलिना ॥ १०६ ॥
मम त्वदच्छाङ्घ्रिनखामृतद्युतेः किरीटमाणिक्यमयूखमञ्जरी।
उपासनामस्य करोतु रोहिणी त्यज त्यजाकारणरोषणे रुषम् ॥ १०७ ॥
तनोषि मानं मयि चेन्मनागपि त्वयि श्रये तद् बहुमानमानतः।
विनम्य वक्त्रं यदि वर्त्तसे कियन्नमामि ते चण्डि तदा पदावधि ॥ १०८ ॥

दृशोरिति। हे प्रिये ते तव दृशोश्चक्षुषोर्मिलत् सङ्गच्छमानम् इदं जलम् अस्रूरूपं तावत् प्रथमं करेण निजपाणिना परिमार्जयामि प्रोञ्छामि, यतोऽमङ्गल्यं मङ्गलार्हं न भवति अथ पश्चात् भवत्यास्तव अङ्घ्रिपङ्कजद्वय्याश्चरणकमलद्वयस्य रजोभिर्धूलीभिः समम् सह अपराधं निजदोषम् आत्ममौलिना स्वकीयमस्तकेन परिमार्जयामि। यदि मदीयमपराधं सम्भाव्य अस्रुजलं परित्यजसि, तर्हि अमङ्गल्यं तत् प्रथमं प्रोञ्छामि, पश्चात् त्वच्चरणे पतित्वा स्वापराधमपनयामीत्यर्थः, परिमार्जयामीति वर्त्तमानसामीप्ये लट् ॥ १०६ ॥

ममेति। हे प्रिये मम रोहिणी लोहितवर्णा किरीटमाणिक्यस्य किरीटस्थितपद्मरागमणेर्मयूखमञ्जरी दीर्घाकारत्वात् किरणरूपा वल्लरी अस्य पुरोवर्त्तिनः तव यतोऽच्छो निर्मलोऽङ्घ्रेश्चरणस्य नखः ततः स एव अमृतद्युतिश्चन्द्रस्तस्य उपासनां सेवां करोतु। हे अकारणरोषणे, अकारणं कारणं विना रोषणं कोपो यस्याः सा तथा हे एवंविधे रुषं कोपं त्यज त्यज मुञ्च मुञ्च। एषोऽहं तव चरणे प्रणतो भवामि, कोपं मुञ्च मुञ्चेत्यर्थः। अथच रोहिणी चन्द्रप्रिया तारकाविशेषश्चन्द्रस्य उपासनां समीपेऽवस्थानं करोति। "रोहिणी कटुरोहिण्यां रोहिणी लोहितागवोः। कण्ठरोगान्तरे भे च" वि ॥ १०७ ॥

तनोषीति। हे प्रिये चेद्यदि त्वं मयि मनागपि स्वल्पमपि मानं प्रणयकोपम् ईर्ष्याकोप वा तनोषि कुरुषे, तर्हि अहम् आनतः सन् त्वयि बहुमानं बह्वादरं श्रये कुर्वे। तथा हे चण्डि कोपने भैमि यदि त्व कियत् किञ्चित् वक्त्रं मुखं विनम्य नमयित्वा वर्त्तसे, तदा अहं पदावधि चरणपर्य्यन्तं ते

---

अत्र दृशोर्जलमार्जनं प्रति अमङ्गल्यपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, रजःशब्दश्लेषबलात् परागधूल्योरभेदाध्यवसायादतिशयोक्तिः, मौलिकरणकपदधूलिमार्जनस्यैव अपराधमार्ज्जनहेतुत्वात् तस्य च अङ्घ्रिरजसा एव अन्वयार्हत्वात् उपमितसमाससाधकसत्वेन पङ्कजद्वयीत्यत्र समासगतलुप्तोपमा, नतु प्राचीनाभिमतरूपकमत्र नवीनसम्मतम्। सहोक्तिबलात् पूर्वोक्तकार्यकारणयोः पदधूलिमार्जनापराधमार्जनयोः यौगपद्योक्तिमूलकातिशयोक्तिमूला सहोक्तिरलङ्कारः, प्रकृतयोः नयनजलरजसोः एकमार्जनाक्रियारूपधर्मसम्बन्धात् तुल्ययोगिता। एतेषां सङ्करः ॥ १०६ ॥ अत्र क्रोधत्यागं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, नखे अमृतद्युतिरिति रूपकस्य रोहिणीतिशब्दश्लेषेण लोहितायां चन्द्रपत्नीत्वारोपं प्रति निमित्तत्वात् श्लिष्टपरम्परितरूपकमिति एतेषां संसृष्टिः ॥ १०७ ॥

प्रभुत्वभूम्नानुगृहाण वा नवा प्रणाममात्राधिगमेऽपि कः श्रमः ।
क याचतां कल्पलतासि मां प्रति क दृष्टिदाने तव बद्धमुष्टिता ॥ १०९ ॥
स्मरेषुमाथं सहसे मृदुः कथं हृदि द्रढीयःकुचसंवृते तव ।
निपत्य वैसारिणकेतनस्य वा व्रजन्ति बाणा विमुखोत्पतिष्णुताम् ॥ ११० ॥

तुभ्यं नमामि, दण्डवत्प्रणामेन तव कोपमपनयामीत्यर्थः । बहुमानेन अल्पं मानं बहुना नमनेनाल्पं नमनञ्च अपनेष्यामीति भावः । विनम्येति अत्रान्तर्भूतण्यर्थोनमिर्बोध्यः । "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः" इति साहित्यदर्पणः ॥ १०८ ॥

प्रभुत्वेति । हे प्रिये त्वं मम प्राणेश्वरीत्वात् प्रभुत्वभूम्ना प्रभुत्वशक्तेर्बाहुल्येन माम् अनुगृहाण वा, मां प्रति अनुग्रहं वा कुरु, वा किंवा नानुगृहाण, अत्र न कापि विप्रतिपत्तिरस्तीत्यर्थः । किन्तु प्रणाममात्राधिगमेऽपि केवलं मदीयप्रणामाङ्गीकारेऽपि तव कः श्रमः प्रयासः । प्रभवो हि स्वतन्त्रत्वात् कदाचित् वैकमनुगृह्णन्ति, नानुगृह्णन्ति वा, किन्तु तत्प्रणाममङ्गीकुर्वन्त्येव । त्वन्तु तदपि न करोषीति मया किमपराद्धमिति कथयेति भावः । अतएव याचतां प्रार्थयमानानां कल्पलतासि अभीष्टप्रदानसामर्थ्यात् कल्पलतातुल्या त्वं क, तथा मां प्रति दृष्टिदानेऽपि अवलोकनमात्रेऽपि तव बद्धमुष्टिता कृपणता क, अपितु कल्पलतात्वकृपणत्वयोरतीवासामानाधिकरण्यमस्तीत्यर्थः । नाहं बहुतरं याचे किन्तु कटाक्षावलोकनमात्रेणापि मामनुगृहाणेति भावः ॥ १०९ ॥

स्मरेष्विति । हे प्रिये मृदुरतिकोमला त्वं स्मरेषुभिर्माथं विलोडनं कामबाणजनितव्यथां कथं सहसे अङ्गीकरोषि । मृदूनां कामबाणव्यथा असह्यैव, तत् कथं मानमाश्रित्य तां स्वीकरोषीत्यर्थः । वेति पूर्वापरितोषे अथवा वैसारिणकेतनस्य मीनकेतनस्य कामस्य बाणा द्रढीयोभ्यां कठिनतराभ्यां कुचाभ्यां संवृते पिहिते हृदि वक्षसि निपत्य लगित्वा तत्रानिमज्ज्यैव विमुखोत्पतिष्णुतां पराङ्मुखीभूय उत्पतनशीलतां व्रजन्ति प्राप्नुवन्ति । यथा कठिनवस्तूनि पाषाणादौ बाणादयो निपत्य अनिमज्ज्यैव पराङ्मुखीभूय उत्पतन्ति तथेत्यर्थः । अतः कामबाणपीडा तव न जायते इति मानमाश्रयसीति भावः । 'मीनो वैसारिणोऽण्डजः' अ ॥ ११० ॥

---

अत्र मानप्रतिकाराय बहुमानाश्रयणस्य तथा मुखनमनप्रतिकाराय पदावधिनमनस्य विरोधात् पूजानमस्कारार्थत्वेन च तत्परिहारात् विरोधाभासः, श्लेषवशात् बहुमानपूजयोः नमननमस्कारयोश्चाभेदाध्यवसायादतिशयोक्ति श्छेकानुप्रासो, वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः । दर्पणोक्तामानभञ्जनोपाया यथा,—"सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् । तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात् । तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम् । दानम् व्याजेन भूषादेः पादयोः पतनं नतिः" इति । अत्र प्रथमचतुर्थौ उपायौ दर्शितौ ॥ १०८ ॥ अत्र दानशीलताकृपणतयोः विरूपयोः सङ्घटनाद् विषमालङ्कारभेदः, 'याचतां कल्पलता' इति रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १०९ ॥ अत्र मृदोः स्मरेषुमाथसहनस्य विरुद्धत्वात् विरोधाभासः, वाशब्दस्य कामबाणविमुखोत्पतिष्णुतासम्भावनरूपोत्प्रेक्षाद्योतकत्वात् वाच्योत्प्रेक्षालङ्कारः ॥ ११० ॥

स्मितस्य संभावय सृक्कणा कणान् विधेहि लीलाचलमञ्चलं भ्रुवः ।
अपाङ्गरथ्यापथिकीञ्च हेलया प्रसद्य सन्धेहि दृशं ममोपरि ॥ १११ ॥
समापय प्रावृषमश्रुविप्रुषां स्मितेन विश्राणय कौमुदीमुदः ।
दृशाचितः खेलतु खञ्जनद्वयी विकाशिपङ्केरुहमस्तु ते मुखम् ॥ ११२ ॥
सुधारसोद्वेलनकेलिमक्षर-स्रजा सृजान्तर्मम कर्णकूपयोः ।
दृशौ मदीये मदिराक्षि कारय स्मितश्रिया पायसपारणामपि ॥ ११३ ॥

स्मितस्येति । हे प्रिये सृक्कणा ओष्ठप्रान्तेन स्मितस्य कणान् लेशान् सम्भावय कृतार्थान् कुरु ईषद्धसनं किञ्चित् कुर्वित्यर्थः । तथा भ्रुवोऽञ्चलं प्रान्तं लीलया विलासेन चलं चञ्चलं विधेहि कुरु, भ्रूभङ्गमपि किञ्चित्कुर्वित्यर्थः । तथा अपाङ्गो नेत्रप्रान्त एव रथ्या प्रतोली तत्र पथिकीम् अध्वन्यां दृशं दृष्टिञ्च प्रसद्य प्रसन्नीभूय हेलया अनादरेणापि विलासेनेति वा ममोपरि सन्धेहि प्रक्षिप किञ्चित् कटाक्षेण मां विलोकयेत्यर्थः प्रसद्येत्यत्र प्रसादेति क्वचित् पाठः । 'प्रान्तावोष्ठस्य सृक्कणी' अ ॥ १११ ॥

समापयेति । हे प्रिये त्वम् अश्रुविप्रुषां नयनजलविन्दूनां प्रावृषं वर्षणम् अथच वर्षाकालं समापय शान्तिं नय, रोदनं मा कार्षीरित्यर्थः । तथा स्मितेन ईषद्धसनेन कौमुदीमुदो ज्योत्स्नाजन्यहर्षान् विश्राणय, मह्यं वितर । ईषद्धास्येनापि मां तोषयेत्यर्थः । तथा तव दृशौ चक्षुषी एव खञ्जनद्वयं खञ्जनपक्षियुगलम् इतोऽस्मिन् मल्लक्षणे जने खेलतु क्रीडतु कटाक्षेण मां विलोकयेत्यर्थः । तथा ते तव मुखं विकाशिपङ्केरुहं प्रफुल्लकमलतुल्यम् अस्तु भवतु मुखं प्रसन्नं कुर्वित्यर्थः । अथच वर्षाकालेऽतीते कौमुदी खञ्जनक्रीडा कमलविकाशश्च भवति ॥ ११२ ॥

सुधेति । हे प्रिये त्वं मम कर्णावेव कूपौ तयोरन्तर्मध्ये अक्षरस्रजा वर्णश्रेण्या सुधारसस्य उद्वेलनं वेलां तीरमतिक्रम्य वर्तनं वर्द्धनमिति यावत् तदेव केलिः क्रीडितं तां सृज कुरु, मम कर्णसुखदं किमपि कथयेत्यर्थः । तथा हे मदिराक्षि मदिरो मत्तखञ्जनः तद्वत् अक्षिणी यस्याः सा तथा तत्सम्बुद्धिः हे अतिचञ्चलनयने इत्यर्थः, मदीये दृशौ चक्षुषी स्मितश्रिया ईषद्धसनशोभया पायसेन परमान्नेन या पारणा उपवासानन्तरभोजनं तामपि कारय । यथा उपोषितस्य पायसपारणया तृप्तिर्भवति, तथा तवादर्शनेन उपोषिततुल्ययोर्मम नयनयोस्त्वत्स्मितशोभादर्शनेन तृप्तिर्भवत्वित्यर्थः । स्मितपूर्वं किमपि ब्रूहीति भावः ॥ ११३ ॥

अत्र सम्भावयेत्याद्यनेकक्रियासु एकस्य युष्मदर्थस्य कर्त्तृत्वात् दीपकम्, दृशि पथिकीत्वारोपस्य अपाङ्गे रथ्यात्वारोपहेतुत्वात् परम्परितरूपकम् उपमा वा साधकबाधकाभावात्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ १११ ॥ अत्र अतिवृष्टिरूपविषयनिगरणेन विषयिण्याः प्रावृषोऽभेदाध्यवसायादतिशयोक्तिः, स्मितेन कौमुदीति वैयधिकरण्येन, दृशौ खञ्जनद्वयीति, मुखं विकासिपङ्केरुहमिति च सामानाधिकरण्येन रूपकम्; छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ११२ ॥ रसशब्दश्लेषात् सुधायां जलत्वारोपस्य कर्णे कूपत्वारोपहेतुत्वात् श्लिष्ट-

ममासनार्द्धे भव मण्डनं न न प्रिये मदुत्सङ्गविभूषणं भव।
भ्रमाद् भ्रमादालपमङ्ग मृष्यतां विना ममोरः कतमत्तवासनम्॥ ११४॥
अधीतपञ्चाशुगबाणवञ्चने स्थिता मदन्तर्बहिरेपि चेदुरः।
स्मराशुगेभ्यो हृदयं बिभेतु न प्रविश्य तत्त्वन्मयसंपुटे मम॥ ११५॥
परिष्वजस्वानवकाशबाणता स्मरस्य लग्ने हृदयद्वयेऽस्तु नौ।
दृढा मम त्वत्कुचयोः कठोरयो-रुरस्तटीयं परिचारिकोचिता॥ ११६॥

ममेति। हे प्रिये त्वं मम आसनार्द्धे मण्डनम् अर्थात् आसनस्य भूषणं भव, ममासनार्द्धे वसेत्यर्थः। न न एवं मया अनुचितमेवोक्तं, हे प्रिये मदुत्सङ्गस्य मम क्रोडस्य विभूषणं भव, आसनार्द्धापेक्षया क्रोडस्योत्कृष्टत्वात् तव चातिप्रियत्वात् तत्रैव वसेत्यर्थः। एतदपि मया समीचीनं नोक्तमित्यभिप्रेत्याह — अङ्ग हे प्रिये अहं भ्रमात् आलपम्, एतदपि भ्रान्त्या उक्तवानस्मि मृष्यतां; भ्रमेणोच्चरितत्वात् क्षम्यताम्। तर्हि किं वक्तव्यं ब्रूहीत्याह हे प्रिये मम उरो वक्षःस्थलं विना कतमत् बहुषु मध्ये श्रेष्ठं किं तव आसनं भवेत्, अपितु न किमप्युत्सङ्गादि। उत्सङ्गा-पेक्षयापि वक्षसः श्रेष्ठत्वात् तत्रैव वसेत्यर्थः। न नेति भ्रमाद्भ्रमादिति च सम्भ्रमे द्विरुक्तिः। अङ्गेति सानुनयसम्बोधने॥ ११४॥

अधीतेति। हे अधीतपञ्चाशुगबाणवञ्चने अधीता शिक्षिता पञ्चाशुगबाणानां कामशराणां वञ्चना प्रतारणा यया सा तथा हे एवंविधे भैमि मदन्तर्मम मनसि स्थिता त्वं चेद्यदि बहिर्वर्त्तमानम् उरो वक्ष एषि आगच्छसि तत् तर्हि मम हृदयं त्वन्मयसपुटे प्रविश्य तव बहिरन्त-श्चोभयत्र वर्त्तमानत्वात् त्वल्लक्षणसंपुटे तिरोभूय स्मराशुगेभ्यः कामबाणेभ्यो न बिभेतु भयं न प्राप्नोतु। त्वं बहुकालं मनसि तिष्ठस्येव, अधुना तु यदि वक्षसि तिष्ठेस्तदा कामज्वरः शान्तिं गच्छेदित्यर्थः। अन्योऽपि बाणवारकजनद्वयमध्यस्थितो बाणभीतिं न प्राप्नोति॥ ११५॥

परिष्वजस्वेति। हे प्रिये त्वं परिष्वजस्व आलिङ्ग्य तथा सति नौ आवयोर्हृदयद्वये लग्न गाढालिङ्गनवशान्निरन्तरं मिथो मिलिते सति स्मरस्य कामस्य अनवकाशोऽप्राप्तलक्ष्यप्रदेशो बाणो यस्य स तथा तस्य भावस्तत्ता निष्फलशरता अस्तु भवतु। कामबाणो हि विरहिणां हृदय एव पतति, गाढालिङ्गनेन निरन्तरे आवयोर्हृदये तु स कामेन प्रक्षिप्तोऽप्यवकाशमपि न प्राप्नोति। तस्माद्दृढतरमालिङ्गयेति भावः। ममैव हृदयं तवालिङ्गनयोग्यमित्याह मम वीरत्वात् दृढा

---

परम्परितरूपकम्, स्रक्शब्दश्लेषेण अक्षरश्रेणीनिगरणेन तत्र स्रगभेदाध्यवसायात्, तथा केलिसर्ज्जनासम्बन्धे तत्सम्बन्धोक्तेः, स्मितश्रिया पायसपारणाविधिकरणासम्बन्धे तत्सम्बन्धो-क्तश्चातिशयोक्तिद्वयम्, वृत्त्यनुप्रासः छेकानुप्रासश्च॥ ११३॥ "अत्र भैम्याः क्रमेणानेकाधार-वृत्तित्वकथनात् पर्यायालङ्कारः" जी। दमयन्त्यां मण्डनविभूषणारोपात् रूपकद्वयं, वृत्त्यनु-प्रासश्च॥ ११४॥ अत्र सम्पुटे प्रविश्येति पदार्थस्य भयाभावं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः॥ ११५॥

तवाधराय स्पृहयामि यन्मधु-स्रवैः श्रवःसाक्षिकमाक्षिका गिरः।
अधित्यकासु स्तनयोस्तनोतु ते ममेन्दुलेखाभ्युदयाद्भुतं नखः ॥ ११७ ॥
न वर्त्तसे मन्मथनाटिका कथं प्रकाशरोमावलिसूत्रधारिणी।
तवाङ्गहारे रुचिमेति नायकः शिखामणिश्च द्विजराड्विदूषकः ॥ ११८ ॥

अतिकठोरा इयं उरस्तटी वक्षस्थली कठोरयोस्त्वत्कुचयोरुचिता योग्या परिचारिका सेविका। कठिनमेव कठिनस्य योग्यं परिचारकं भवतीति मदीयहृदयमेव तवालिङ्गनयोग्यमित्यर्थः ॥ ११६ ॥

तवेति। हे प्रिये अहं तव तस्मै अधराय ओष्ठाय स्पृहयामि तमधरं चुम्बितुमिच्छामि। यस्य अधरस्य मधुस्रवैः मधुक्षरणैस्तव गिरो वाण्यः श्रवःसाक्षिकमाक्षिका श्रवसी कर्णौ साक्षिणी ग्राहिके यस्य तच्छ्रवःसाक्षिकं माक्षिकं मधु यासु तादृश्यो भवन्ति, अधरस्यामृतमयत्वात् तदुत्पन्ना वाण्यः कर्णयोरमृतरूपा भवन्तीत्यर्थः। तथा मम नखः ते तव स्तनयोरधित्यकासु ऊर्ध्वभागेषु इन्दुलेखाया चन्द्रकलाया अभ्युदयेन प्रकाशेन जनितम् अद्भुतम् आश्चर्यं तनोतु सखीनां जनयतु। इन्दुलेखापि उदयशैलस्याधित्यकायाम् उदिता सती जनानामाश्चर्यं तनोति। एतेन कुचयोरुच्चत्वं सूचितम्। तव अधरं पातुं कुचौ च करेण पीडयितुमिच्छामीति भावः। अधरायेति 'ईप्सितादि स्पृहादेः' इति संप्रदानसंज्ञायां चतुर्थी ॥ ११७ ॥

नेति। हे प्रिये त्वं मन्मथं कामं नाटयति वर्द्धयतीति तादृशी कथं न वर्त्तसे अपितु कामोद्दीपिकैव भवसि। किम्भूता, यतः प्रकाशते शोभत इति प्रकाशा या रोमावलिः सैव सूत्रं नीलतन्तुः तद्धारयितुं शीलमस्या इति तादृशी, तथा अङ्ग हे भैमि तव हारे नायको मध्यमणिः रुचिं दीप्तिम् एति प्राप्नोति, तथा तव शिखामणिः शिरस्थितमणिर्द्विजराजं चन्द्रं विशेषेण दूषयति निन्दयतीति तादृशः चन्द्रादप्युत्कृष्ट इत्यर्थः। ईदृशीं त्वां विलोक्य मम कामो वर्द्धत इति भावः। अथच त्वं मन्मथस्य नाटिका उपरूपकविशेष इव। सापि सूत्रधारः पूर्वरङ्गप्रयोक्ता प्रधाननटस्तद्वती भवति, तथा तस्यां नायकः प्रधानपात्रम् अङ्गहारे अङ्गविक्षेपे रुचिम् एति, एवं शिखायां मणिर्यस्य तादृशो द्विजराट् ब्राह्मणश्रेष्ठो विदूषकः प्रधानपात्रानुचरो भवति। 'कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः हास्यकरः। कलहरतिर्विदूषकः स्यात् स्वकर्मज्ञः' इति साहित्यदर्पणः। 'अङ्गहारोऽङ्गविक्षेपः' अ। ११८ ॥

अत्र दृढत्वेन कठोरत्वेन चानुरूपयोरुरस्तटीकुचयोः श्लाघाकरणात् समं नामालङ्कारः, 'समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः' इति लक्षणात् ॥ ११६ ॥ अत्र अधरस्य मधुस्रावासम्बन्धेऽपि तत्सम्बन्धोक्तेः, तथा नखक्षतं तिरस्कृत्य तत्र चन्द्रलेखाध्यवसायात्, स्तनोच्चस्थाननिगरणेन च तत्राधित्यकाध्यवसायादतिशयोक्तिरियं, तेन च ओष्ठस्यामृतरूपत्वं स्तनयोश्च उदयशैलरूपत्व व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ११७ ॥ अत्र दमयन्ती एव मन्मथनाटिकेति दमयन्त्यां मन्मथनाटिकात्वारोपे सूत्रधाराङ्गहारनायकरुचिद्विजराजविदूषकशब्दश्लेषात् लोमावलिरेव सूत्रधारः, अङ्गहार एव नृत्यं, नायकमणिरेव नायकः, रुचिरेव प्रीतिः, शिखामणिरेव द्विजरा-

गिरानुकम्पस्व दयस्व चुम्बनैः प्रसीद शुश्रूषयितुं मया कुचौ ।
निशेव चान्द्रस्य करोत्करस्य यन्मम त्वमेकासि नलस्य जीवितम् ॥ ११९ ॥
मुनिर्यथात्मानमथ प्रबोधवान् प्रकाशयन्तं स्वमसावबुध्यत ।
अपि प्रपन्नां प्रकृतिं विलोक्य तामवाप्तसंस्कारतयाऽसृजद्गिरः ॥ १२० ॥

गिरेति। हे प्रिये त्वं गिरा वाक्येन अनुकम्पस्व मयि अनुकम्पां कुरु, कृपया किमपि कथये-त्यर्थः। तथा चुम्बनैर्दयस्व दयया चुम्बनानि देहीत्यर्थः। मया प्रयोज्येन कुचौ शुश्रूषयितुं पत्रावलीलिखनादिना सेवयितुं प्रसीद प्रसन्ना भव। यद्यस्मात् त्वम् एका केवला नलस्य मम जीवितम् असि भवसि, त्वदन्या न कापि मे प्रियतमास्तीत्यर्थः। उपमिनोति, चन्द्रस्य चन्द्रसम्ब-न्धिनः करोत्करस्य किरणसमूहस्य निशेव रात्रिरिव। यथा एका रात्रिश्चन्द्रसम्बन्धिकिरणसमूहस्य जीवितं तथा ममापि त्वमित्यर्थः। त्वदधीनजीवितं मां वचनादिना अनुगृहाणेति भावः ॥११९॥

नल इत्थं मोहात् प्रलप्य मोहापगमेन प्रकाशितमात्मानमुपलभ्य निर्विण्ण इव पुनः किञ्चिद्-वाचेत्याह। मुनिरिति। अथानन्तरं प्रबोधवान् विगतमोहोऽसौ नलः स्वम् आत्मानं प्रकाशयन्तं नलोऽहमिति नलत्वेन व्यक्तीकुर्वन्तम् आत्मानम् अबुध्यत, आत्मानं कथयता मया दूतधर्मः परि-त्यक्त एतदनुचितं कृतमिति ज्ञातवानित्यर्थः। तथा अवाप्तसंस्कारतयापि मोहापगमेन दूतोऽहमिति उद्बुद्धदूत्यसंस्कारतया च तां भैमीं प्रकृतिं प्रपन्नां नलोऽयमिति ज्ञात्वा रोदनात् पूर्वावस्थां प्राप्तां विलोक्य गिरो वक्ष्यमाणप्रकारवचनानि असृजत् उवाच। त्यक्तरोदनां भैमीं दृष्ट्वा स्वात्मानमेवो-द्दिश्य दूतधर्मोचितमाह स्मेत्यर्थः। उपमिनोति, मुनिर्यथा मुनिर्मननशीलो यतिरिव। सोऽपि प्रबोधवान् शमदमादिना जाततत्त्वज्ञानः सन् स्वं प्रकाशयन्तं स्वप्रकाशम् आत्मानं प्रकृतिभिन्नतया बुद्ध्यति, तथा तां प्रसिद्धां संसारजनिकां प्रकृतिं गुणत्रयसाम्यावस्थारूपां प्रकर्षेण आपन्नां पृथितां

---

ड्विदूषक इत्येतेषामारोपाणां हेतुत्वात् श्लिष्टपरम्परितसाङ्गरूपकम् ॥ ११८ ॥ एतदन्तरं मल्लिनाथनारायणाभ्यां व्याख्यातोऽयं श्लोक उपलभ्यते,—

शुभाष्टवर्गस्त्वदनङ्गजन्मनस्तवाधरेऽलिख्यत यत्र लेखया ।
मदीयदन्तक्षतराजिरञ्जनैः स भूर्जतामर्जतु बिम्बपाटलः ॥ ११८ क ॥

"यत्र यस्मिन् तवाधरे लेखया रेखाभिरित्यर्थः जातावेकवचनम्। तदनङ्गजन्मनः तदीयमन्मथो-दयस्य सम्बन्धी शुभाष्टवर्गः शुभसूचकाष्टवर्गः ज्योतिःशास्त्रप्रसिद्धः अलिख्यत रेखारूपेण लिखितः। रेखारूपस्यैव शुभावेदकत्वात् बिन्दुरूपस्य वैपरीत्याच्चेति भावः मदीयदन्तक्षतानां राज्या रञ्जनैः बिम्बवत् बिम्बफलवत् पाटलः सोऽधरः भूर्जतां भूर्जपत्रत्वम् अर्जतु भजतु। अर्जे-र्भौवादिकाल्लोट्। अत्राधररेखानामष्टवर्गरेखात्वमधरस्य भूर्जपत्रत्वं चोत्प्रेक्ष्यते। तेन च कामो-दयस्य शुभोदर्कत्वं व्यज्यते। जन्मकालग्रहाधीनभाविशुभावेदकः रेखाबिन्दुलेख्यश्चक्रविशेषोद्धार्यः ग्रहसन्निवेशविशेषोऽष्टवर्गः" जी ॥११८क॥ अत्र निशेवेति उपमा, त्वं नलस्य जीवितमितिरूपकम्, छेकानुप्रासश्च "चन्द्रस्य दिवापि जीवनसम्भवात् करग्रहणं तस्य निशैकशरणत्वात्" जी ॥ ११९ ॥

अये मयात्मा किमनिह्नुतीकृतः किमत्र मन्ता स तु मां शतक्रतुः ।
पुरः स्वभक्तयाथ नमन् ह्रियाविलो विलोकिताहे न तदिङ्गितान्यपि ॥ १२१ ॥
स्वनाम यन्नाम मुधाभ्यधामहं महेन्द्रकार्यं महदेतदुज्झितम् ।
हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ॥ १२२ ॥
धियाऽऽत्मनस्तावदचारु नाचरं परस्तु यद्वेद स तद्वदिष्यति ।
जनावनायोद्यमिनं जनार्दनं क्षये जगज्जीवपिवं वदन् शिवम् ॥ १२३ ॥

विलोक्य आत्मभिन्नत्वेन ज्ञात्वा अवाप्तसंस्कारतया उद्बुद्धपूर्वपूर्वजन्मान्तरीणसंस्कारतया अनयाहमेवमेवं कृत इति पूर्वजन्मवृत्तान्तमनुस्मृत्य वागादिव्यवहारानपि सृजति मुञ्चति ॥ १२० ॥

यदुवाच तदाह । अये इति । अये विषादे मया किं किमर्थम् आत्मा अनिह्नुतीकृतः नलोऽहमिति किमर्थं प्रकाशितः, एतदनुचितमेव कृतमित्यर्थः । स तु स पुनः शतक्रतुरिन्द्रः मां किं कीदृशं कुत्सितं वा मन्ता ज्ञास्यति । असाधुरेवायमिति ज्ञास्यतीत्यर्थः । तथा आविलो गर्हिताचरणेन कलुषितोऽहं पुरः प्रथमं स्वभक्त्या नमन् अथानन्तरं ह्रिया लज्जया नमन् सन् तस्य शतक्रतोरिङ्गितान्यपि भ्रूभङ्गादिकोपचिह्नान्यपि न विलोकिताहे, नम्रमुखहेतुत्वात् न विलोकयिष्यामि क्रोधेङ्गितानां दर्शनाभावेन क्रोधमार्जनासम्भावनापि नास्तीत्यर्थः । 'अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च' मे ॥ १२१ ॥

स्वनामेति । नाम खेदे अहं मुधा मिथ्या स्वनाम नलोऽहमिति निजसंज्ञां यत् अभ्यधाम् अवोचं, तत् एतत् महत् महेन्द्रकार्यं दूत्यरूपम् उज्झितं त्यक्तं विनाशितमित्यर्थः । एतेन च मम निन्दा भविष्यतीत्याह, हनूमदाद्यैः रामादिदूतैः प्रभुकार्य्यनिर्वाहकत्वात् यशसा दूतपथः दूतानां मार्गः सितीकृतः । मया पुनरिन्द्रादिदूतेन द्विषां शत्रूणां हसैर्हास्यैः सितीकृतः । हनूमदादिभिर्यशो लब्धं, मया तु वैरिहास्यं लब्धमित्यर्थः । अत्र उपमानादुपमेयस्य न्यूनत्वरूपो व्यतिरेकः ॥ १२२ ॥

धियेति । अहम् आत्मनो धिया आत्मबुद्ध्या अचारु अशोभनं स्वनामकथनरूपेन्द्रादिप्रतिकूलं तावत् नाचरं न कृतवान् । किन्तु उन्मादादेव तत् कृतवानित्यर्थः । परस्तु अन्यो जनः पुनर्यद्वेद यथाश्रुतं यत् ज्ञास्यति स तत्तथा वदिष्यति । अन्यो जनो हि एतद् बुद्धिपूर्वकमबुद्धिपूर्वं वेति अविविच्यैव यथाश्रुतं वक्ष्यतीत्यर्थः । यद्वा तु पुनः स प्रसिद्धः परोऽन्यो दुर्जनो यद्वदिष्यति, तदहं वेद जाने । दुर्जनो हि यथावृत्तं न वदति, किन्तु विपरीतमेव वदतीति जाने इत्यर्थः । तदेव

अत्र प्रबोधादिशब्दश्लेषमूलार्थीपूर्णोपमा ॥ १२० ॥ अत्र विलोकनाभावं प्रति 'नमन्' इति पदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासेन संसृज्यते ॥ १२१ ॥ अत्र हनूमत्प्रभृतिभ्य उपमानेभ्यः आत्मन उपमेयस्य न्यूनत्वप्रतिपादनाद् व्यतिरेकालङ्कारः, प्रस्तुताप्रस्तुतयोः आत्मनः हनूमदाद्यस्य च सितीकृत इत्येकक्रियाकर्तृतयाभिसम्बन्धाद्दीपकम्, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १२२ ॥

स्फुटत्यदः किं हृदयं त्रपाभरात् यदस्य शुद्धिर्विबुधैर्विबुध्यताम्।
विदन्तु ते तत्त्वमिदन्तु दन्तुरं जनानने कः करमर्पयिष्यति ॥ १२४ ॥
मम श्रमश्चेतनयानया फली बलीयसालोपि च सैव वेधसा।
न वस्तु दैवस्वरसाद्विनश्वरं महेश्वरोऽपि प्रतिकर्त्तुमीश्वरः ॥ १२५ ॥

विशेषणेनाह, किम्भूतः परः जनानाम् अवनाय रक्षणाय उद्यमिनं कृतोद्यमं विष्णुं जनार्दनं, जनानां पीडकं वदन्, तथा क्षये प्रलये जगज्जीवपिवं जगतां जीवापहारकं हरं शिवं मङ्गलं वदन्। निरङ्कुशाः खलु दुर्जना इति भावः। 'विष्णुः प्रजाः पालयति हरः संहरति क्षये' इति पुराणवार्त्ता ॥ १२३ ॥

स्फुटतीति। त्रपाभरात् आत्मप्रकाशनेन कार्यासम्पादनेन च अदो हृदयं किं किमर्थं स्फुटति विषण्णं भवति। यद्यस्मात् अस्य हृदयस्य शुद्धिर्निर्दोषता विबुधैः देवैः विबुध्यतां ज्ञायताम्। अत्राप्यपरितोषेणाह ते देवास्तत्त्वं यथार्थं विदन्तु जानन्तु तु किन्तु इदं दन्तुरं विषमं यत् जनानामानने मुखे को जनः करं हस्तम् अर्पयिष्यति, हस्तेन तेषां मुखं पिधास्यति. अपितु न कोऽपि, त्वयेदं न वक्तव्यमिति तान् वारयिष्यतीत्यर्थः। बुद्धिपूर्वकमेव एतदनेन कृतमिति जना वदिष्यन्त्येवेति भावः ॥ १२४ ॥

ममेति। अनया एतत्काले पुनः उत्पन्नया चेतनया दूतोऽहमिति स्वधर्मिकदूतत्वप्रकारकबुद्ध्या मम श्रमो दूत्यायासः फली सफलः स्यात्। किन्तु बलीयसा अतिप्रबलतरेण वेधसा दैवेन च सैव चेतनैव अलोपि विनाशिता, दैववशादेव मया दूतत्वबुद्धिं त्यक्त्वा स्वनाम कथितमित्यर्थः। ननु चेतनारक्षणं किमिति यत्नो न कृत इत्यत आह—दैवस्वरसात् दैववशात् विनश्वरं नाशोन्मुखं वस्तु प्रतिकर्त्तुं चिकित्सितुं रक्षितुं महेश्वरोऽपि शिवोऽपि स ईश्वरः समर्थो न भवति, का कथा मादृशानामित्यर्थः। दैववशात् अबुद्धिपूर्वकमेव मया आत्मप्रकाशनं कृतमिति भावः ॥ १२५ ॥

अत्र उत्तरार्द्धे विरोधाभासद्वयम्, शिवजनार्दनयोः 'वदन्' इत्येकया क्रियया कर्मतयाऽभिसम्बन्धात्तुल्ययोगिता, परस्य मन्निन्दनं जनपालकस्य विष्णोर्जनार्दनोक्तिरिव, जगन्नाशकस्य शिवत्वाभिधानवच्चेति एकस्मिन् वाक्ये सादृश्यबोधात्, अन्यथा वाक्यार्थापर्य्यवसानाच्च निदर्शना। वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १२३ ॥ अत्र हृदयस्य स्फुटनासम्बन्धेऽपि तत् सम्बन्धोक्तेः, जननिन्दावारणनिगरणपूर्वकं मुखे करार्पणाध्यवसायाच्चातिशयोक्तिद्वयं, स्फुटनस्य आशास्यत्वाभिप्राये तु प्रथमातिशयोक्तिः न भवति। छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १२४ ॥ अत्र दैवहेतुकविनष्टसामान्यवस्तुना विशेषनलप्रयासवैफल्यस्य समर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १२५ ॥

इति स्वयं मोहमयोर्मिनिर्मितं प्रकाशनं शोचति नैषधे निजम्।
तथान्यथामग्नतदुद्दिधीर्षया दयालुरागाल्लघु हेमहंसराट्॥ १२६॥
नलं स तत्पक्षरवोर्ध्ववीक्षिणं स एष पक्षीति भणन्तमभ्यधात्।
नयाद्ययैनामति मा निराशता-मसून् विहातेयमतःपरं परम्॥ १२७॥
सुरेषु पश्यन्निजसापराधता-मियत्प्रयस्यापि तदर्थसिद्धये।
न कूटसाक्षीभवनोचितो भवान् सतां हि चेतःशुचितात्मसाक्षिका॥ १२८॥
इतीरिणापृच्छ्य नलं विदर्भजा-मपि प्रयातेन खगेन सान्त्वितः।
मृदुर्बभाषे भगिनीं दमस्य स प्रणम्य चित्तेन हरित्पतीन्नृपः॥ १२९॥

इत्थं शोचति नले हंसस्तत्रागतवानित्याह। इतीति। नैषधे नले स्वयमात्मनैव मोहमयोर्मिनिर्मितं भ्रमबाहुल्यात् कृतं प्रकाशनं स्वनामकथनादिरूपम् इति पूर्वोक्तप्रकारेण शोचति तद्विषयमनुतापं कुर्वति सति हेमहंसराट् सुवर्णमयहंसानां राजा दयालुः कृपावान् सन् तथा तादृशी अनुतापरूपा या व्यथा पीडा तस्यां मग्नस्य तस्य नलस्य उद्दिधीर्षया उद्धरणेच्छया लघु झटिति आगात् तत्र आगतवान्। अन्योऽपि नद्यादौ मग्नस्य उद्धरणाय दयालुर्भूत्वा झटित्यागच्छति॥ १२६॥

हंस आगत्य यदुवाच तदाह। नलमिति। तस्य हंसस्य पक्षयो रवेण शब्देन ऊर्ध्ववीक्षिणं ऊर्द्ध्वं दत्तदृष्टिं तथा यो मम पूर्वं दूतत्वं कृतवान् स एव पक्षी हंस इति भणन्तं कथयन्तं नलं स हंसोऽभ्यधात् उवाच। किमभ्यधादित्याह, हे अदय निष्कृप नल एनां भैमीम् अति अत्यन्तं निराशतां नैराश्यं मा नय मा प्रापय। यत इयं भैमी परं केवलम् अतःपरं असून् प्राणान् विहाता त्यक्ष्यति। स्त्रीबधजन्यं पातकं तव भविष्यतीति एवं मा कार्षीरिति भावः॥ १२७॥

सुरेष्विति। हे नल भवान् तेषां देवानाम् अर्थसिद्धये प्रयोजनसिद्ध्यर्थम् इयत् प्रयस्यापि एतावत् प्रयासं प्राप्यापि निजसापराधतां स्वीयमनुचितकारित्वं पश्यन् सन् कूटसाक्षीभवनोचितः अकूटसाक्षिणः कूटसाक्षिणो भवन तत्र उचितो योग्यो न भवति। अत्र कापट्याभावात् कपटसाक्षितुल्यो न भवतीत्यर्थः। हि यतः सतां साधूनां चेतःशुचिता आत्मसाक्षिका आत्मैव साक्षी यत्र तादृशी भवति। मया निष्कपटं दूत्यं कृतमिति त्वं तावत् जानासि, देवा अपि सर्वज्ञत्वात् एतत् सर्वं ज्ञास्यन्ति। तस्माद्विषादेनालमिति भावः॥ १२८॥

इत्थमुक्त्वा हंसे गते नलः शिथिलीकृतदौत्यो भैमीं पुनरुवाचेत्याह। इतीति। इतीरिणा इत्थं भाषमाणेन तथा नलं विदर्भजामपि भैमीञ्च आपृच्छ्य सम्बोध्य आगच्छामीति विज्ञाप्य प्रयातेन प्रस्थितेन खगेन हंसेन सान्त्वित आश्वासितः स नृपो नलः हरित्पतीन् इन्द्रादीन् दिक्पालान्

---

अत्र मोहमयी भ्रान्तिबहुला ऊर्मिरिति भ्रान्तिपरम्परासु ऊर्मिरभेदाध्यवसायादतिशयोक्तिश्छेकानुप्रासश्च॥ १२६॥ अत्र वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः॥ १२७॥ अत्र सामान्येन सतां शुचित्वेन विशेषनलशुचित्वस्य समर्थनादर्थान्तरन्यासश्छेकानुप्रासश्चेति संसृष्टिः॥ १२८॥

दददेऽपि तुभ्यं कियतीः कदर्थनाः सुरेषु रागप्रसवावकेशिनीः ।
अदम्भदूत्येन भजन्तु वा दयां दिशन्तु वा दण्डममी ममागसा ॥ १३० ॥
अयोगजामन्वभवं न वेदनां हिताय मेऽभूदियमुन्मदिष्णुता ।
उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनसः ॥ १३१ ॥
तवेत्ययोगस्मरपावकोऽपि मे कदर्थनात्यर्थतयागमद्दयाम् ।
प्रकाशमुन्माद्य यदद्य कारयन्मयात्मनो मामनुकम्पते स्म सः ॥ १३२ ॥

चित्तेन प्रणम्य अतःपरं मम कर्त्तव्यं किमपि नावशिष्टं क्षम्यतामिति मनसैव नमस्कृत्य मृदुः सदयः सन् दमस्य भगिनीं भैमीं बभाषे उवाच ॥ १२९ ॥

यद् बभाषे तदाह। ददे इति। हे भैमि अहं तुभ्यमपि निर्दयदूत्यकरणात् कियतीः कतिसंख्यकाः कदर्थनाः पीडा ददे। किम्भूताः, यतः सुरेषु इन्द्रादिषु विषये यो रागोऽनुरागः स एव प्रसवः फलं तत्र अवकेशिनीः बन्ध्याः अनुरागानुत्पादिका इत्यर्थः, यथेच्छं विधेहि, इतः परं देवादिविषयं किमपि न वक्ष्यामीति भावः। तव कदर्थनादाने ममापि सा भवेदित्यपिशब्दार्थः। एवं सति अमी देवा अदम्भदूत्येन निश्छलदूततया मयि दयां वा भजन्तु, भैम्यैव नलानुरक्तत्वात् वयं नाङ्गीकृता अस्य तु कोऽपराध इति कृपां वा कुर्वन्तु। मम आगसा अस्मदीयकार्यमकृत्वा स्वीयं कार्यं कृतमित्यपराधेन दण्डं शास्तिं वा दिशन्तु कुर्वन्तु। मयि देवास्तुष्टा रुष्टा वा भवन्तु तत् सर्वं सहनीयं, किन्तु तुभ्यं दुःखदानमसह्यमिति भावः। 'बन्ध्योऽफलोऽवकेशी च' अ ॥ १३० ॥

अयोगजामिति। मे मम इयम् उन्मदिष्णुता उन्मादो हिताय अभूत्। यतोऽयोगजां वियोगजनितां वेदनाम् अहं न अन्वभवं नानुभूतवान्। उन्मादवशात् विरहपीडा मया नानुभूता, तस्मात् उन्मादोऽपि मम हितकरो जात इत्यर्थः। इदमर्थान्तरेण द्रढयति—दोषादपि दोषभूतादप्येकस्मात् दोषस्य दोषभूतस्यान्यस्य लाघवम् अल्पत्वरूपं गुण उदेति जायते। उपमिनोति अज्ञानवशादिव यथा अज्ञानरूपदोषवशात् एनसः पापरूपदोषस्य कृशत्वम् अल्पत्वम् उदेति तथा। अज्ञानकृतपापस्य ज्ञानकृतपापापेक्षया अल्पत्वं धर्मशास्त्रे प्रायश्चित्ते विवेचितम्। प्रकृते उन्मादोऽपि दोष एव, किन्तु विरहवेदनानुभवस्य प्रतिबन्धकत्वात् गुणोत्पादकोऽपि जात इत्यर्थः ॥ १३१ ॥

तवेति। हे भैमि तव अयोगस्मरपावकोऽपि त्वत्सम्बन्धिविरहजनितकामानलोऽपि कदर्थनात्यर्थतया पीडाधिक्येन अतिपीडाकारित्वेनापि इति पूर्वोक्तप्रकारेण मे मम दयाम् अगमत्, मयि

---

अत्र प्रसवशब्दश्लेषेण अङ्कुरस्य उत्पत्तेश्च बोधात् रागोत्पत्तौ अङ्कुरत्वारोपस्य कदर्थनासु बन्ध्यात्वारोपहेतुत्वात् श्लिष्टपरम्परितरूपकमलङ्कारः ॥ १३० ॥ अत्र 'अज्ञानवशादिवैनस' इत्युपमानुप्राणितः सामान्यदोषजनितदोषलाघवेन विशेषनलीयोन्माददोषजनितवेदनादोषानुभवरूपविशेषस्य समर्थनरूपोऽर्थान्तरन्यासः, द्वितीयपादार्थं प्रति प्रथमपादवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ १३१ ॥

अमी समीहैकपरास्तवामराः स्वकिङ्करं मामपि कर्त्तुमीशिषे।
विचार्य कार्यं सृज मा विधान्मुधा कृतानुतापस्त्वयि पार्ष्णिविग्रहम् ॥१३३॥
उदासितेनेव मयेदमुच्यसे भयान्न तेभ्यः स्मरतानवान्न वा।
हितं यदि स्यान्मदसुव्ययेन ते तदा तव प्रेमणि शुद्धिलब्धये ॥ १३४ ॥

कृपालुर्जातः। यद्यस्मात् स स्मरपावकः अद्य त्वद्विलापसमये उन्माद्य उन्मत्तीकृत्य मया प्रयोज्यभूतेन आत्मनो ममैव प्रकाशं कारयन् नलोऽहमिति मां व्यक्तीकुर्वन् माम् अनुकम्पते स्म अनुगृहीतवान्। कामोन्मादं विना अहं दूतधर्म्मान्न कथमपि आत्मप्रकाशनेन विरतो भवेयम्। अतो विरहानल एव ममातितरामुपकारको जात इत्यर्थः ॥ १३२॥

अमी इति। हे भैमि अमी अमरा इन्द्रादयस्तव समीहैकपरास्त्वदभिलाषैकपरायणाः त्वामेवाभिलषन्तीत्यर्थः। त्वञ्च मामपि अपिकारादिन्द्रादींश्च स्वकिङ्करं निजदासं कर्त्तुम् ईशिषे समर्था भवसि। इन्द्रादिवरणे मम वरणेऽपि उभयत्रापि तव सामर्थ्यं वर्त्तत इत्यर्थः। अतो विचार्य्य विचिन्त्य कार्यं विधेयं सृज कुरु। इन्द्रादिवरणं मद्वरणं वा निजेष्टसाधनम् इति अधुनैव विचार्य्य यद्विधेयं तत् कुर्वित्यर्थः। विचारे कारणमाह, यतः कृतस्य अनुतापः पश्चात्तापः त्वयि पार्ष्णिविग्रहं पार्ष्णेः पाश्चात्यस्य शत्रोर्विग्रहं कलहं तद्वद्दुःखमिति यावत् मुधा मिथ्या मा विधात् कार्षीत्। अविचार्य्य इन्द्राद्यन्यतमे वृते किमिति नलमहं नावरिषं, तथा मयि वृते किमिति कञ्चन देवं नावरिषमिति पश्चात्तापो भविष्यति स यथा न भवेत् तथा विचार्य्य क्रियतामिति भावः। सन्धिमकृत्वा वहिर्निर्गते विजिगीषौ पार्ष्णिग्राहो वैरायते ॥ १३३ ॥

उदासितेनेवेति। हे भैमि उदासितेनेव उदासीनेनेव मया इदं पूर्वोक्तं त्वम् उच्यसे कथ्यसे किन्तु तेभ्यो देवेभ्यो भयात् नोच्यसे, नवा स्मरतानवात् कामजनितस्वीयकार्श्यात् भयात् उच्यसे। अहं देवभीत्या 'अमी समीहैकपरास्तवामराः' इति न कथयामि, नवा स्वस्य कामपीडाभीत्या 'स्वकिङ्करं मामपि कर्त्तुमीशिषे' इति कथयामि. किन्तूदासीनो भूत्वा पूर्वोक्तं सर्वं कथयामीत्यर्थः। ननु देवे वृते कामपीडया तव मृतिरेव स्यादित्यत इष्टापत्तिमङ्गीकुर्वन्नाह यदि मदसुव्ययेन मम प्राणापगमेन ते तव हितं स्यात, तदा तव प्रेमणि अनुरागे विषये शुद्धिलब्धये आनृण्यलाभाय स्यात् प्राणत्यजनमेवेति शेषः। तव हिताय प्राणानपि त्यजामीत्यर्थः ॥ १३४ ॥

अत्र स्मराग्नेः कदर्थनात्यर्थतया दयागमनस्य विरोधात् प्रकाशेत्यादिना तत्परिहारोक्तेश्च विरोधाभासः, स्मरपावक इतिरूपकम्, छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १३२ ॥ अत्र च्छेकानुप्रासोवृत्त्यनुप्रासश्चेति संसृष्टिः। स्वकिङ्करकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः ॥ १३३ ॥ उदासितेनेवेति पाठे श्रौती उपमा उत्प्रेक्षा वा, वस्तुतः इवशब्दस्यात्र अवधारणार्थता एव न्याय्या, तथाच उदासीनेनैव नतु द्वेषेण रागेण वेति व्यावृत्तिप्रतीतेः परिसंख्यालङ्कारः, एवकारपाठे तु सः अर्थः स्फुट एव। छेकानुप्रासश्च ॥ १३४ ॥

इतीदृशैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास सा ।
ऋतोरधिश्रीः शिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा ॥ १३५ ॥
नलं तदावेत्य तमाशये निजे घृणां विगानञ्च मुमोच भीमजा ।
जुगुप्समाना हि मनोधृतं तदा सतीधिया दैवतदूतधावि सा ॥ १३६ ॥
मनोभुवस्ते भविनां मनः पिता निमज्जयन्नेनसि नैव लज्जसे ।
अमुद्रि सत्पुत्रकथा त्वयेति सा स्थिता सती मन्मथनिन्दिनी धिया ॥ १३७ ॥

इत्थं नलवचनमाकर्ण्य भैमी अत्यर्थं तुतोषेत्याह । इतीति । ईदृशैः पूर्वोक्तैः 'ददेऽपि तुभ्यम्' इत्यादिरूपैः नैषधस्य नलस्य सूनृतानि प्रियसत्यवचनानि अमृतानीवेति तैः कृत्वा सा विदर्भजन्मा भैमी इति वक्ष्यमाणप्रकारेण भृशमत्यर्थम् उल्ललास हर्षं प्राप । उपमिनोति यथा शिशिरानुजन्मनः शिशिरर्त्तुमनु लक्ष्यीकृत्य जन्म यस्य तादृशस्य वसन्तस्य ऋतोरधिश्रीरधिका श्रीः दूरविकस्वरैरत्यन्तविकासिभिः पिकानां कोकिलानां स्वरैर्भृशमुल्लसति, तथा उल्ललास । कोकिलस्वरसाम्येन नलवचनानामुद्दीपकत्वं सूचितम् ॥ १३५ ॥

उल्लासप्रकारमेवाह । नलमिति । सा भीमजा तदा तस्मिन् समये निजे स्वीये आशये मनसि तं नलम् अवेत्य सोऽयं नल इति प्रत्यभिज्ञाय घृणां नलप्राप्त्यभावनिश्चयात् निजशरीरे जुगुप्सां विगानञ्च परपुरुषसंलापात् निन्दाञ्च मुमोच तत्याज । किम्भूता, दैवतदूतधावि देवदूताभिलापि तथा तया सतीधिया पातिव्रत्यबुद्ध्या धृतं नियमितं कथमपि तस्मान्निवर्त्तितं मनो जुगुप्समाना निन्दन्ती । जुगुप्समाना जुगुप्सां मुमोचेति विरोधाभासः । शरीरमनोरूपविषयभेदात्तद्भङ्गः ॥ १३६ ॥

मनोभुव इति । सती पतिव्रता सा भैमी धिया बुद्ध्या इत्येवंप्रकारेण मन्मथनिन्दिनी स्थिता कन्दर्पं निन्दितवती । इति किं, हे मन्मथ मनसो भूरुत्पत्तिर्यस्य तादृशस्य ते तव भविनां जन्तूनां मनोऽन्तःकरणं पिता जनकः । तत् मन एनसि पापे निमज्जयन् निमग्नीकुर्वन् न लज्जसे सलज्जो न भवसि । अपितु तव लज्जैव युज्यते इति काकुः । अन्यो हि सत्पुत्रः पितरं पुण्यलोकं नयति, त्वन्तु पापे प्रक्षिपसीति त्वमतिदुश्चरित्र इत्यर्थः । तथा त्वया सती शोभना पुत्रकथा पुत्रेण लोकान् जयतीत्यादिरूपा अमुद्रि विलोपिता इति निन्दितवतीत्यर्थः ॥ १३७ ॥

---

सूनृतानि अमृतानीवेति समासगता लुप्तोपमा, शेषार्द्धे आर्थी पूर्णोपमा, छेकानुप्रासश्चेति संसृष्टिः । कोकिलस्वरसाम्येन नलवचसामुद्दीपकत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः । "अत्र सूनृतानामुपमानभूतकोकिलालापवत् तादात्विकत्वेन अतिश्राव्यत्वद्योतनार्थं वसन्तस्य शिशिरानुजन्मत्वेन व्यपदेशः" । जी ॥ १३५ ॥ अत्र घृणाविगानयोः मोचनं प्रति देवदूतस्य नलत्वेन ज्ञानस्य सम्पादकहेतुतया पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १३६ ॥ अत्र सत्पुत्रकथालोपं प्रति पूर्वपादद्वयवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, लज्जाकारणे सत्यपि तदभावाद्विशेषोक्ति-श्छेकानुप्रासश्चेति ॥ १३७ ॥

प्रसूनमित्येव तदङ्गवर्णना न सा विशेषात् कतमत्तदित्यभूत्।
तदा कदम्बं तदवर्णि रोमभि-र्मुदश्रुणा प्रावृषि हर्षमागतैः ॥ १३८ ॥
मयैव संबोध्य नलं व्यलापि यत् स्वमाह मद्बुद्धमिदं विमृश्य तत्।
असाविति भ्रान्तिमशाद्दमस्वसुः स्वभाषितस्वोद्भ्रमविभ्रमक्रमः ॥ १३९ ॥
विदर्भराजप्रभवा ततःपरं त्रपासखी वक्तुमलं न सा नलम्।
पुरस्तमूचेऽभिमुखं यदत्रपा ममज्ज तेनैव महाह्रदे ह्रियः ॥ १४० ॥

इत्थं परामृशन्त्यास्तस्या हर्षातिशयात् आनन्दाश्रुरोमाञ्चौ जाताविल्याह। प्रसूनमिति। प्रसूनं सौकुमार्य्यातिशयात् पुष्पमित्येव तस्या भैम्या अङ्गवर्णना सामान्याकारेण पूर्वमभूत्। परन्तु तत् प्रसूनं कतमत् किंजातीयम् इति विशेषाकारेण सा तदङ्गवर्णना नाभूत्। तदा तस्मिन् नलत्वनिश्चयसमये मुदश्रुणा आनन्दजनितनयनजलेन प्रावृषि सत्यां वर्षाकाले उपस्थिते सति हर्षम् उन्निद्रत्वम् आगतैः प्राप्तैः रोमभिः कर्तृभिस्तत् भैम्या अङ्गं कदम्बं कदम्बपुष्पम् अवर्णि विशेषेण वर्णितम्। प्रावृट्काले हि कदम्बकुसुमानि जायन्ते। तानि च सकण्टकानि भवन्ति। भैम्या अङ्गम् उन्निद्ररोमभिः कदम्बकुसुमसदृशं जातमित्यर्थः। हर्षातिशयात् सा अस्रूणि मुमोच, पुलकिता च जातेति भावः ॥ १३८ ॥

मयैवेति। मयैव नलं सम्बोध्य 'इयं न ते नैषध' इत्यादिश्लोकचतुष्टयेन नलसम्बोधनान्युक्त्वा यद्व्यलापि विलपितम्, असौ नलस्तदिदं विलपितं विमृश्य विभाव्य मद्बुद्धं मया ज्ञातं स्वम् आत्मानम् आह 'अयि प्रिये कस्य कृते विलप्यते' इत्यादिश्लोकैः कथयति स्म इति एवंरूपां दमस्वसुर्दमयन्त्या भ्रान्तिं स्वेन नलेनैव भाषितः 'अये मयात्मा किमनिर्ह्नुतीकृतः' इत्यादिश्लोकैः कथितो यः स्वोद्भ्रमविभ्रमस्य स्वकीयोन्मादरूपविलासस्य क्रमः परिपाटी सः अशात् खण्डितवान्। मया ज्ञातमात्मानं बुद्ध्वैव नल आत्मानं प्रकाशितवानिति भैम्या भ्रान्तिरासीत्। अनन्तरम् 'अये मयात्मा किमनिह्नुतीकृतः' इत्यादिनलवचनं श्रुत्वा सा तां भ्रान्तिं तत्याजेत्यर्थः ॥ १३९ ॥

अथ भैमी लज्जावशात् किमपि नोवाचेत्याह। विदर्भेति। सा विदर्भराजप्रभवा भैमी ततः परं नलत्वनिश्चयादनन्तरं ततः पूर्वोक्तादन्यदिति केचित्। त्रपासखी लज्जासहिता सती नलं वक्तुं किमपि कथयितुं नालं न समर्थाभूत्। लज्जापि कथमित्याह, पुरो नलत्वनिश्चयात् पूर्वं अत्रपा निर्लज्जा सती अभिमुखं समक्षं तं नलं यदूचे उक्तवती, तेनैव समक्षवचनेनैव हेतुना ह्रियो लज्जाया महाह्रदे लज्जासमुद्रे ममज्ज मग्ना बभूव अतितरां लज्जामापेत्यर्थः। अपरिचितं नायकं समक्षमाभाष्य पश्चात् नायकत्वेन निश्चित्य अधिकतरां लज्जां प्राप्नुवन्तीति स्त्रीणां स्वभावः। अथच

---

अत्र तदङ्गरूपविषयस्य निगरणेन विषयिणः कदम्बप्रसूनस्य निश्चिततयाऽभेदाध्यवसायादतिशयोक्तिः, तथा मुदश्रुवर्षणे प्रावृड्रूपताध्यवसायादपरातिशयोक्तिः, अवर्णीति प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गितया सङ्करः। हर्षाख्यभावस्य उदयाद् भावोदयालङ्कारश्चेति ॥ १३८ ॥
अत्र छेकानुप्रासवृत्त्यनुप्रासालङ्कारौ ॥ १३९ ॥

यदापत्राप्यापि न दातुमुत्तरं शशाक सख्याः श्रवसि प्रियाय सा।
विहस्य सख्येव तमब्रवीत्तदा ह्रियाधुना मौनधना तव प्रिया ॥ १४१ ॥
पदातिथेयाँल्लिखितस्य ते स्वयं वितन्वती लोचननिर्झरानियम्।
जगाद यां सैव मुखान्मम त्वया प्रसूनबाणोपनिषन्निशम्यताम् ॥ १४२ ॥
असंशयं स त्वयि हंस एव मां शशंस न त्वद्विरहाप्तसंशयाम्।
क्व चन्द्रवंशस्य वतंस मद्बधा-न्नृशंसता संभविनी भवादृशे ॥ १४३ ॥

महाह्रदे निमग्नायाः कथं वचनसामर्थ्यम्। त्रपासखीति सखीपदेन लज्जा क्षणमपि तां न परित्यजतीति सूचितम् ॥ १४० ॥

अथ भैमीं लज्जया वक्तुमशक्तां दृष्ट्वा तत्सखी नलमुवाचेत्याह। यदेति। सा भैमी यदा अपवार्यापि परावृत्यापि मुखं तिर्य्यग्वलितं कृत्वापीत्यर्थः सख्याः श्रवसि कर्णे लगित्वा प्रियाय नलाय उत्तरं दातुं न शशाक समर्था नाभूत्। तदा सख्येव विहस्य तं नलम् अब्रवीत् उवाच। किमब्रवीदित्याह, अधुना इदानीं तव प्रिया भैमी ह्रिया लज्जया मौनधना मौनमेव धनं यस्यास्तादृशी। लज्जावशात् तुभ्यमुत्तरं दातुं न शक्नोतीत्यर्थः ॥ १४१ ॥

किञ्च। पदेति। हे नल इयं भैमी लोचननिर्झरान् नयनजलप्रवाहान् स्वयमात्मनैव लिखितस्य चित्रितस्य ते तव पदातिथेयान् अतिथिभूतस्य तव चरणप्रक्षालनार्थान् वितन्वती कुर्वती सती यां प्रसूनबाणोपनिषदं जगाद उक्तवती। सैव प्रसूनबाणस्य कामस्य उपनिषत् कामाद्वैतप्रतिपादकं रहस्यं मम मुखात् त्वया निशम्यतां श्रूयताम्। कामपीडितया रुदत्या अनया पूर्वं यदुक्तं, तत् मयैव उच्यते, श्रूयतामित्यर्थः ॥ १४२ ॥

का सा कामोपनिषदित्याह। असंशयमिति। स हंस एव त्वद्विरहेण आप्तः प्राप्तः संशयो जीवनसन्देहो यया तादृशीं माम् असंशयं निश्चितमेव त्वयि न शशंस नोक्तवान्। यतः हे चन्द्रवंशस्य वतंस शिरोमणे भवादृशे अतिदयाशालिनि त्वयि मद्बधात् मम मारणात् नृशंसता क्रूरता निर्दयता वा क्व कुतः सम्भविनी सम्भविष्यति, अपितु नैव सम्भविनी। हंसेनैव ममैतादृगवस्था तव पुरस्तान्नोक्ता, तव तु न कोऽप्यपराधो विद्यत इत्यर्थः ॥ १४३ ॥

---

अत्र त्रपायाः ह्रीमहाह्रदे मज्जनरूपस्य विरोधस्य कालभेदेन परिहाराद् विरोधाभासः, ह्रियः महाह्रदे इति भेदषष्ठ्याः राहोः शिरः इतिवत् अभेदे पर्य्यवसानात् ह्रीरूपे महाह्रदे इति प्रतीते रूपकम्, छेकानुप्रासश्चेति ससृष्टिः ॥ १४० ॥ अत्र ह्रियैव नतु वैराग्यात् द्वेषाद्वा मौनधनेति अन्यव्यावृत्तिप्रतीतेः आर्थी परिसंख्या च्छेकानुप्रासश्चालङ्कारः ॥ १४१ ॥ रहस्यप्रतिपादको ग्रन्थविशेष उपनिषत्। अत्र लोचननिर्झरेषु पदातिथेयत्वस्य ( पाद्यजलत्वस्य ) आरोपाद् रूपकम्। भैमीवचने उपनिषदभेदाध्यवसायरूपातिशयोक्तिश्चेति संसृष्टिः, निर्झरपदेनाश्रुबाहुल्यं सूचितम् ॥ १४२ ॥ अत्र अतिदयावतश्चन्द्रवंशावतंसस्य एवंविधस्त्रीबधरूपाकार्य्यकरणस्य च विरूपयोः सङ्घटनाद् विषमालङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १४३ ॥

जितस्त्वयास्येन विधुः स्मरः श्रिया कृतप्रतिज्ञौ मम तौ बधे कुतः।
तवेति कृत्वा यदि तज्जितं मया न मोघसङ्कल्पधराः किलामराः॥ १४४॥
निजांशुनिर्दग्धमदङ्गभस्मभि-र्मुधा विधुर्वाञ्छति लाञ्छनोन्मृजाम्।
त्वदास्यतां यास्यति तावतापि किं वधूबधेनैव पुनः कलङ्कितः॥ १४५॥
प्रसीद यच्छ स्वशरान् मनोभुवे स हन्तु मां तैर्धृतकौसुमाशुगः।
त्वदेकचित्ताहमसून् विमुञ्चती त्वमेव भूत्वा तृणवज्जयानि तम्॥ १४६॥

जित इति। त्वया आस्येन मुखेन विधुश्चन्द्रो जितः, श्रिया कान्त्या च स्मरः कामो जितः, तौ त्वयैव जितौ विधुस्मरौ अनपराधाया मम बधे कुतः कस्मात् कृतप्रतिज्ञौ, भैमीं बधिष्याव एवेति प्रतिज्ञां कृतवन्तौ कथयेत्यर्थात्। त्वयैव जितौ तौ त्वामेव पीडयेतां, मया तु किमपराद्धं यत्तौ मामपि पीडयत इति त्वं कथयेत्यर्थः। स्वयमेव हेतुमाशङ्क्याह,— तवेति कृत्वा अहं तव प्रिया इति बुद्ध्वा यदि मद्बधे कृतप्रतिज्ञौ, तर्हि मया जितम्। ताभ्यां पीडितयापि उत्कृष्टया भूतम्। किल यस्मात् अमरा देवाः मोघसंकल्पधराः विफलसङ्कल्पधारिणो न भवन्ति। देवा यद्यत् मनसि संकल्पयन्ति, तत्तत्सत्यमेव भवति। देवौ चन्द्रस्मरावपि अहं तव प्रियेति यदि मनसि सङ्कल्पितवन्तौ, तर्हि तव प्रियैवाहं भविष्यामीति मया जितमित्यर्थः। अत्र पूर्वार्द्धे प्रत्यनीकालङ्कारः। 'प्रत्यनीकमशक्तेन प्रतिकारे रिपोर्यदि। तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः' इति लक्षणात्॥ १४३॥

निजांश्विति। विधुश्चन्द्रः निजांशुभिः स्वकीयकिरणैर्निर्दग्धं निःशेषेण भस्मीकृतं यत् मदङ्गं मम शरीरं तस्य भस्मभिः कृत्वा मुधा मिथ्या लाञ्छनोन्मृजां स्वकीयकलङ्कप्रोञ्छनं वाञ्छति अभिलषति। चन्द्रः कलङ्कित्वात् त्वन्मुखसादृश्यं न प्राप्तवान्, अधुना तु तल्लाभाय मदङ्गभस्मना तत् कलङ्कं परिमार्ष्टुमिच्छति तन्मिथ्यैवेत्यर्थः। यतस्तावतापि मदङ्गभस्मना कलङ्कप्रोञ्छनेनापि विधुस्त्वदास्यतां त्वन्मुखतुल्यतां किं यास्यति प्राप्स्यति अपितु नैव यास्यति। कुतः बधूबधेन मल्लक्षणस्त्रीहत्यया पुन कलङ्कित एव। यद्यपि मदङ्गभस्मना मार्जनया पूर्वसञ्चितः कलङ्को गमिष्यति, तथापि बधूबधजनितं पुनरपि कलङ्कान्तरं भविष्यतीति उक्तप्रयासो विफल इत्यर्थः। त्वद्विरहाच्चन्द्रो मामतितरां पीडयतीति भावः। अन्यमपि कलङ्कं भस्मना मार्जयति॥ १४५॥

प्रसीदेति। हे नल त्वं प्रसीद मयि प्रसन्नो भव। मनोभुवे कामाय स्वशरान् निजलौह-

---

अत्र प्रकृतयोरेव विधुस्मरयोर्जित इत्येकया क्रियया कर्मत्वेनाभिसम्बन्धात्तुल्ययोगिता, कारणाभावेऽपि बधे कृतप्रतिज्ञत्वरूपकार्य्योक्तेर्विभावना 'न मोघसङ्कल्पधराः किलामराः' इति वाक्यार्थस्य 'जितं मया' इत्यस्यार्थं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, "नलापकारासमर्थयोर्विधुस्मरयोस्तदीयजनापकारकथनात् प्रत्यनीकालङ्कारः" जी। छेकानुप्रासो वृत्त्यनुप्रासश्च॥ १४४॥ "अत्र विधोर्नलास्यसाम्याय भैम्यङ्गभस्मभिः स्वकलङ्कमार्जनाद्बधूबधकलङ्कप्राप्तिकथनादनर्थोत्पत्तिरूपो विषमालङ्कारः" जी। चन्द्रस्य तथाविधलाञ्छनोन्मृजावाञ्छासम्बन्धेऽपि

श्रुतिः सुराणां गुणगायनी यदि त्वदङ्घ्रिमग्नस्य जनस्य किन्ततः।
स्तवे रवेरप्सु कृताप्लवैः कृते न मुद्वती जातु भवेत् कुमुद्वती ॥ १४७ ॥
कथासु शिष्ये वरमद्य न ध्रिये ममावगन्तासि न भावमन्यथा।
त्वदर्थमुक्तासुतयाशु नाथ मां प्रतीहि जीवाभ्यधिक त्वदेकिकाम् ॥ १४८ ॥

मयवाणान् यच्छ देहि। किमर्थमित्याह,—धृताः कौसुमाशुगाः पुष्पमयवाणा येन तादृशः स मनोभूः तैस्त्वया दत्तैः शरैर्मां हन्तु मारयतु। कामस्य वाणाः पुष्पमयत्वात् मां केवलं पीडयन्ति, नतु झटिति मारयितुं शक्नुवन्ति, तव वाणास्तु लौहमयत्वात् झटिति मारयितुं शक्नुवन्ति, तस्मात् तान् कामाय देहि, स मां तैर्झटिति मारयत्वित्यर्थः। झटिति मरणे तव को लाभ इत्याह, त्वदेकचित्ता त्वन्मात्रचित्तवृत्तिरहं तच्छरपीडनात् असून् प्राणान् विमुञ्चती त्यजन्ती सती त्वमेव भूत्वा तं मनोभुवं तृणवत् अनायासेन जयानि। त्वयाहि सौन्दर्यादिना कामो जित एव, अहमपि मरणानन्तरं त्वं भूत्वा तं जेष्यामीत्यर्थः। 'मरणे यादृशी जन्तोर्भावना यस्य जायते। तादृशं लभते जन्म स भूयो हि स्वकर्मभिः' इति वचनात् 'यं यं वापि स्मरन् भावम्' इत्यादिवचनाच्च त्वदेकचित्ताया मम मरणोत्तरं त्वद्रूपप्राप्तिरिति भावः ॥ १४६ ॥

ननु देवा वेदैरपि प्रशंस्यन्ते, तत् कथं तान् परित्यज्य मदनुरक्ता भवसीत्याशङ्क्याह। श्रुतिरिति। श्रुतिर्वेदो यदि सुराणां देवानां गुणगायनी गुणवर्णनपरा भवति, ततस्तेन त्वदङ्घ्रिमग्नस्य तव चरणपरायणस्य त्वय्येवानुरक्तस्येत्यर्थः मल्लक्षणस्य जनस्य किम्, अपितु न किमपि। अत्रार्थान्तरमुपन्यस्यति,—अप्सु जले कृताप्लवैः कृतावगाहनैर्ब्राह्मणादिभिः रवेः सूर्यस्य स्तवे कृते सति जातु कदाचिदपि कुमुद्वती चन्द्रानुरक्ता कुमुदिनी मुद्वती हर्षवती सूर्यविषये अनुरागिणी न भवेत् तद्वदहमपीत्यर्थः ॥ १४७ ॥

कथास्विति। अद्याहं कथासु शिष्ये कथावशेषीभवामि म्रिये इत्यर्थः, एतद्वरं मनागिष्टं, न पुनर्ध्रिये तिष्ठामि न जीवामि। मरणप्रार्थनं कथमित्याह, अन्यथा मरणं विना त्वं मम भावम् अनुरागं नावगन्तासि न ज्ञास्यसि। तदपि कथमित्यत आह हे नाथ हे जीवाभ्यधिक प्राणाधिक आशु शीघ्रं त्वदर्थं मुक्तासुतया त्वामलब्ध्वा त्यक्तप्राणतया हेतुना मां त्वमेव एकः केवलो यस्याः तथाविधां त्वदेकशरणां प्रतीहि जानीहि। प्राणाधिकं त्वामलब्ध्वा प्राणास्त्यक्ता इति लोकमुखादाकर्ण्य स्वस्मिन् मदनुरागं ज्ञास्यसि। जीवनान्मम मरणमेव युक्तमिति भावः। सुनाथेति दन्त्यसकारवत् पाठे शोभनो नाथः सुनाथः तत्सम्बुद्धिः, यद्वा न सुनाथोऽसुनाथस्तत्सम्बुद्धिः हे

---

तत्सम्बन्धाभिधानादतिशयोक्तिः, छेकानुप्रासश्च ॥ १४५ ॥ अत्र तृतीयपादार्थस्य त्वद्भावभवनं प्रतिहेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, तृणवदित्युपमा च ॥ १४६ ॥ अत्र यथा चन्द्रप्रियायाः जलेषु कृतावगाहनैः जनैः रवेः स्तवे कृते प्रीतिर्न भवति तथा श्रुत्या देवानां गुणगाने कृतेऽपि नलानुरक्तायाः भैम्याः प्रीति र्न भवतीति वाक्ययोः सादृश्यस्य गम्यमानत्वात् दृष्टान्तालङ्कारः। छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ १४७ ॥

महेन्द्रहेतेरपि रक्षणं भया-यदर्थिसाधारणमस्त्रभृद्व्रतम् ।
न सूनवाणाशुगतोऽपि मामवन् क्षतं तदुच्चैरवकीर्णिनस्तव ॥ १४९ ॥
तवास्मि मां घातुकमप्युपेक्षसे मृषामरं हामरगौरवात् स्मरम् ।
अवेहि चाण्डालमनङ्गमङ्ग तं स्वकाण्डकारस्य मधोः सखा हि सः ॥ १५० ॥
लघौ लघावेव पुरः परे बुधै-र्विधेयमुत्तेजनमात्मतेजसः ।
तृणे तृणेढि ज्वलनः खलु ज्वलन् क्रमात् करीषद्रुमकाण्डमण्डलम् ॥ १५१ ॥

अतिकठिनेत्यर्थः । प्राणापगमेन विना न जानासीत्युपालम्भात् तथा सम्बोधनं कृतम् । असुनाथ प्राणनाथेत्यपि व्याचक्षते ॥ १४८ ॥

महेन्द्रेति । महेन्द्रस्य हेतिर्वज्रं तस्मात् यद्भयं तस्माद् रक्षणं पालनरूपं यत् अर्थिषु याचकेषु साधारणं स्त्रीपुरुषाविवेकेन सामान्यम् अस्त्रभृतां शूराणां व्रतं नियमः । हे सूनवाणस्य कामस्य आशुगतः पुष्पमयशरादपि मां न अवन् रक्षन् नल अवकीर्णिनः क्षतव्रतस्य तव तद्व्रतम् उच्चैरतिशयेन क्षतं नष्टम् । शूरा हि वज्रादपि शरणागतस्य रक्षणरूपव्रतं पालयितुं यतन्ते, त्वन्तु शूरोऽपि पुष्पमयवाणादपि शरणागताया मम रक्षणं न करोषीति तव शूरव्रतमतिशयेन नष्टमित्यर्थः । 'अवकीर्णी क्षतव्रतः' अ ॥ १४९ ॥

तवेति । हे नल अस्मि अहं तव त्वदीयैव । हा खेदे त्वन्तु मां घातुकमपकान्तमपि स्मरं कामम् अमरगौरवात् देवोऽयमिति गौरवात् अथच अविनाश्योऽयमिति गौरवात् उपेक्षसे त्यजसि न मारयसि । तस्मिन्नमरगौरवं न कर्त्तव्यमित्याह,- किम्भूतं, यतो मृषामरं कुत्सितदेवम् अथच भगवता शिवेन दग्धत्वात् अमरत्वशून्यम् । किञ्च अङ्ग हे नल तम् अनङ्गं चाण्डालमेव अवेहि जानीहि । हि यस्मात् सोऽनङ्गः स्वस्य काण्डाः पुष्पमयाः वाणास्तान् करोतीति तादृशस्य मधोर्वसन्तस्य सखा मित्रम्, चाण्डाल एव काण्डकारो भवतीति वसन्तश्चाण्डालस्तत्संसर्गित्वात् कामोऽपि चाण्डाल इत्यर्थः । तस्मात् अमरगौरवात् तस्मिन्नुपेक्षा तव नोचितेति भावः ॥ १५० ॥

ननु लघुत्वात् तमुपेक्षे ननु गौरवादित्याशङ्क्याह । लघाविति । बुधैः पण्डितैः लघौ लघौ अल्पे अल्प एव परे शत्रौ पुरः प्रथमम् आत्मतेजसः निजप्रतापस्य उत्तेजनं संधुक्षणं विधेयं कर्त्तव्यम् । अल्पतरशत्रुजयाभ्यासेन हि महान् शत्रुर्जीयते, तस्मादल्पमात्रोऽपि शत्रुः सर्वथा नोपेक्षणीय इति भावः । खलु यस्मात् ज्वलनो वह्निः तृणे निःसारे दाह्ये प्रथमं ज्वलन् सन् क्रमात् करीषाणां शुष्कगोमयचूर्णानां द्रुमकाण्डानां वृक्षस्कन्धानाञ्च मण्डलं राशिं तृणेढि दहति । तेजस्विनामवधिर्वह्निरपि प्रथमं निःसारं दग्ध्वा पुष्टतरो भूत्वा महान्तं दहति । तद्वत् त्वमपि अल्पमपि कामं विनाशयेति भावः ॥ १५१ ॥

---

अत्र व्रतक्षतिं प्रति प्रसूनवाणादपि मामरक्षत इति पदार्थानां हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १४९ ॥ अत्र अनङ्गस्वरूपतिरस्कारेण तत्र चाण्डालाभेदाध्यवसायादतिशयोक्ति श्छेकानुप्रासश्चेति संसृष्टिः ॥ १५० ॥ अत्र अग्निरूपविशेषतेजस उत्तेजनेन

सुरापराधस्तव वा कियानयं स्वयंवरायामनुकम्प्रता मयि ।
गिरापि वक्ष्यन्ति मखेषु तर्पणा-दिदं न देवा मुखलज्जयैव ते ॥ १५२ ॥
व्रजन्तु ते तेऽपि वरं स्वयंवरं प्रसाद्य तानेव मया वरिष्यसे ।
न सर्वथा तानपि न स्पृशेद्दया न तेऽपि तावन्मदनस्त्वमेव वा ॥ १५३ ॥
इतीयमालेख्यगतेऽपि वीक्षिते त्वयि स्मरव्रीडसमस्ययाऽनया ।
पदे पदे मौनमयान्तरीपिणी प्रवर्त्तिता सारघसारसाविनी ॥ १५४ ॥

अथ नलेन देवापराधमाशङ्क्य यद्विलपितं तदपनयन्त्याह । सुरेति । वा सम्भावनायां स्वयंवरायां स्वयमात्मबुद्ध्यैव वृणुते इति तादृश्यामपि मयि तव या अनुकम्प्रता स्वीकाररूपा दयालुता अयमेतल्लक्षणस्तव सुरेषु इन्द्रादिषु अपराधः कियान्, अपितु अतीवाल्पोऽयमपराध इत्यर्थः। यतो मखेषु यज्ञेषु तर्पणात् तृप्तेर्हेतोः देवा इन्द्रादयस्ते तव मुखलज्जया इदं कथमियमस्मदाकाङ्क्षिता त्वया स्वीकृतेत्येवंरूपं गिरापि का शङ्का दण्डे वाचापि न वक्ष्यन्ति न कथयिष्यन्ति। अन्योऽपि बहूपकारिणम् अपराधयुक्तमपि मुखलज्जया किमपि न कथयति। अहं तावत् स्वयमेव त्वां वृणे, देवाश्च यज्ञे हविर्भोजनेन तव वशगास्तत्कथमलीकापराधशङ्केत्यर्थः ॥ १५२ ॥

व्रजन्त्विति । वरमिति मनागङ्गीकारे ते तेऽपि इन्द्रादयो देवा वरं स्वयंवरं व्रजन्तु आगच्छन्तु तेन किमित्यत आह - मया तान् देवानेव प्रसाद्य प्रसन्नीकृत्य त्वं वरिष्यसे। ननु त्वद्वरणार्थमागतास्त्वया चास्वीकृताः कथं प्रसन्ना भवेयुरित्याशङ्क्याह,— सर्वथापि क्लेशेनापि तान् देवान् दया कृपा न स्पृशेत्, ते अल्पामपि दयां मयि न करिष्यन्ति अपितु करिष्यन्त्येवेत्यर्थः। यतस्तेऽपि देवास्तावत् मदनो न कामवन्निर्दया न भवन्ति, तथा त्वमेव वा त्वद्वन्निर्दया वा न भवन्ति। त्वं कामश्च द्वावेव जगति निर्दयौ, देवास्तु युवामिव निर्दया न भवन्ति। अवश्यमेव मयि ते दयां करिष्यन्तीत्यर्थः॥ १५३ ॥

इतीति । हे नल अनया भैम्या इति पूर्वोक्तप्रकारेण सख्या मम मुखेन सारघसारसाविनी सरघा मधुमक्षिका तत्कृतं मधु सारघं तस्य सारः श्रेष्ठभागस्तस्य साविनी नदी प्रवर्त्तिता जनिता, अनया मधुतुल्यं मधुरवचनमुक्तमित्यर्थः। किम्भूता,—पदे पदे स्थाने स्थाने मध्ये मध्ये मौनमयं अभाषणरूपं यत् अन्तरीपं द्वीपं तद् विद्यते यस्यां तादृशी। अनया किम्भूतया, आलेख्यगतेऽपि फलकादौ चित्रितेऽपि वीक्षिते दृष्टे त्वयि विषये स्मरव्रीडयोः कामलज्जयोः समस्या मिश्रीभावो यस्यां सा तथा तादृश्या कामलज्जावत्येत्यर्थः। चित्रितेऽपि त्वयि विषये या कामं लज्जाञ्च प्राप्तवती,

---

सामान्यात्मतेजस उत्तेजनस्य समर्थनरूपो अर्थान्तरन्यासः, तथा अप्रस्तुतात् तेजःसामान्यात् नलकर्तृककामजयरूपविशेषप्रतीतेरप्रस्तुतप्रशंसालङ्कार इछेकानुप्रासश्चेति संसृष्टिः ॥ १५१ ॥
अत्र स्वयंवरायामिति पदार्थस्य अपराधाल्पत्वे हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ १५२ ॥
अत्र तृतीयचरणार्थदयास्पर्शे चतुर्थचरणवाक्यार्थस्य देवानां नलकामरूपताभावरूपस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ १५३ ॥

चण्डालस्ते विषमविशिखः स्पृश्यते दृश्यते न
ख्यातोऽनङ्गस्त्वयि जयति यः किन्नु कृत्ताङ्गुलीकः।
कृत्वा मित्रं मधुमधिवनस्थानमन्तश्चरित्वा
सख्याः प्राणान् हरति हरितस्त्वद्यशस्तत् जुषन्ताम्॥ १५५ ॥

अथ भीमभुवैव रहोऽभिहितां नतमौलिरपत्रपया स निजाम्।
अमरैः सह राजसमाजगतिं जगतीपतिरभ्युपगत्य ययौ॥ १५६ ॥

साऽधुना साक्षात्कृते त्वयि अत्यर्थमेव कामलज्जे प्राप्नोति। अतो मन्मुखद्वारैव एतत् सर्वमुवाचेति भावः। 'स्रवन्ती साविनी धुनी' व॥ १५४ ॥

अथ भैम्याः कामपीडातिशयं ज्ञापयन्ती नलं प्रति सोल्लुण्ठनमाह। चण्डाल इति। विषमविशिखः काम एव निर्दयत्वात् कृत्ताङ्गुलीकश्छिन्नकनिष्ठाङ्गुलीकश्चण्डालस्त्वयि जयति सति जयशालिनि त्वयि वर्त्तमानेऽपि अधिवनस्थानं वनमधिकृत्य स्थानं वासो यस्य तादृशं मधुं वसन्तं मित्रं सखायं कृत्वा ते तव सख्या भैम्या अन्तर्मनसि चरित्वा प्रविश्य प्राणान् हरति। अत्र विषये हरितो दिशः स्वस्मिन् जयशालिनि वर्त्तमानेऽपि तत् चण्डालकर्तृकभार्य्याप्राणहरणरूपं तव यशः कीर्त्तिं जुषन्तां सेवन्ताम्। एतेन तव दिगन्तव्यापकं यशो भवत्वित्यर्थः। जयशालिनि त्वयि विद्यमानेऽपि तव प्रिया चण्डालेन हन्यत इति तवैव अकीर्त्तिर्दिगन्तगामिनी भविष्यतीति सोल्लुण्ठनम्। ननु भवतीभिरपि स कथं निवारयितुं न शक्यते इत्याशङ्क्याह, -किन्नु वितर्के यो विषमविशिखोऽनङ्ग इति ख्यातः प्रसिद्धः स न स्पृश्यते न च दृश्यते, स्पर्शनदर्शनाभावात् सोऽस्माभिर्निवारयितुमशक्य इत्यर्थः। देशविशेषे चण्डालानां कनिष्ठाङ्गुलीं छित्वा चिह्नं करोति। चण्डालोऽपि विषमविशिखोऽतितीक्ष्णवाणो भवति, तथा कृत्ताङ्गुलीकत्वात् अनङ्ग इति ख्यातो भवति, एवं वनवासिनं मधुं मद्यपं मित्रं कृत्वा अन्तर्वनाभ्यन्तरे प्रविश्य पथिकानां प्राणांश्च हरति। कामस्तव प्रियामतितरां पीडयति, तेन च तवैवाकीर्त्तिर्भवति, तस्माद् यथास्याः पीडा शाम्यति, तव च अकीर्त्तिर्न भवति तथाविधेयमिति भावः। मन्दाक्रान्तावृत्तमिदं 'मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्मम्' इति लक्षणात्॥ १५५ ॥

अथेति। अथानन्तरं स जगतीपतिर्भूपतिर्नलः अपत्रपया पूर्वश्लोकोक्तसखीसोल्लुण्ठनवाक्श्रवणात् लज्जया नतमौलिर्नम्रीकृतमस्तकः सन् भीमभुवैव भैम्यैव सखीद्वारा रहसि एकान्ते अभिहितां व्रजन्तु ते तेऽपीतिश्लोकेन उक्तां निजां स्वीयाम् अमरैरिन्द्रादिभिः सह राजसमाजगतिं राजसभारूपस्वयंवरस्थानागमनम् अभ्युपगत्य स्वीकृत्य ययौ गतवान्, इन्द्रादिसमीपमित्यर्थात्। 'लज्जा साप-

---

अत्र 'मौनमयान्तरीपिणी' इति रूपकम्, तथा "विषयस्य वाचोऽनुपादानेन विषयिण्याः सारघसारसाविन्या एवोपनिबन्धात् तयोर्भेदेऽप्यभेदोक्तेश्चातिशयोक्तिभेदः" जी। छेकानुप्रासश्चेत्येतेषां संसृष्टिः॥ १५४ ॥ अत्र कामस्य चण्डालधर्मयोग्यचण्डालत्वेनोत्प्रेक्षणादुत्प्रेक्षा, व्यञ्जकाप्रयोगाद् गम्या। "अतिशयोक्तिः" सा। छेकानुप्रासश्चेति संसृष्टिः॥ १५५ ॥

श्वस्तस्याः प्रियमाप्तुमुद्धुरधियो धाराः सृजन्त्या रया-
न्नम्रोन्नम्रकपोलपालिपुलकैर्वेतस्वतीरस्रुणः।
चत्वारः प्रहराः स्मरार्त्तिभिरभूत् सा यत् क्षपा दुःक्षपा
तत्तस्यां कृपयाखिलेव विधिना रात्रिस्त्रियामा कृता॥ १५७॥

तदखिलमिहभूतं भूतगत्या जगत्याः पतिरभिलपति स्म स्वात्मदूतत्वतत्त्वम्।
त्रिभुवनजनयावद्वृत्तवृत्तान्तसाक्षात्-कृतिकृतिषु निरस्तानन्दमिन्द्रादिषु द्राक्॥१५८॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।

लपान्यतः' अ। इदं तोटकवृत्तं -'इह तोटकमम्बुधिसैर्गदितम्' इति लक्षणात्॥ १५६॥

अथ नले गते भैम्या सा रात्रिर्दुःखेनातिवाहितेत्याह। श्व इति। यद्यस्मात् तस्या भैम्याश्चत्वारः प्रहराश्चतुर्यामरूपा सा क्षपा रात्रिः स्मरार्त्तिभिः कामपीडाभिः कृत्वा दुःक्षपा दुःखेनातिवाहनीया, तत्तस्मादिव विधिना ब्रह्मणा तस्यां भैम्यां कृपया दयया अखिला प्रतिदिनभाविनी सर्वा रात्रिस्त्रियामा त्रिप्रहरात्मिका कृता। इवोत्प्रेक्षायां, त्रियामेति रात्रेर्नामच्छलादिदमुत्प्रेक्षितम्। किम्भूतायाः श्वो भाविदिने प्रियं नलम् आप्तुं लब्धुम् उद्धुरा उत्कण्ठिता धीर्यस्याः सा, तथा तस्या अत्युत्सुकाया इत्यर्थः तथा अस्रुणो नयनजलस्य धाराः प्रवाहान् रयाद्वेगेन सृजन्त्यास्त्यजन्त्याः। किम्भूता धाराः नम्रोन्नम्रैर्नतोन्नतैः कपोलपाल्या गण्डतटस्य पुलकैरोमाञ्चैः कृत्वा वेतस्वतीर्बहुवेतसयुक्ता इव। अन्यत्रापि नदीधारायां पतितैर्वेतसवृक्षैर्नम्रोन्नम्रत्वं भवति। सा रात्रीस्तयातिदुःखेनातिवाहितेति भावः। रात्रेराद्यन्तयामार्द्धयोर्दिनव्यवहारात् त्रियामात्वम्। तथा च स्मृतिः, 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते' इति। शार्दूलविक्रीडितमिदं वृत्तम्॥ १५७॥

नलोऽपि इन्द्रादिसमीपं गत्वा यथावृत्तं सर्वमाख्यातवानित्याह। तदिति। जगत्याः पृथिव्याः पतिर्नलः इह भैमीसमीपे भूतं वृत्तम् अखिलं समस्तं ननु वचनयोग्यं किञ्चित् तत् स्वात्मदूतत्वस्य निजदौत्यस्य तत्त्वं याथार्थ्यं भूतस्य सत्यस्य गत्या प्रकारेण मया आदौ निष्कपटं दौत्यं कृतम्, अनन्तरमुन्मादवशादात्मप्रकाशनं कृतमिति यथार्थप्रकारेण निरस्तानन्दम् अकृतकार्यतया लज्जावशात् त्यक्तहर्षं यथा तथा इन्द्रादिषु द्राक् झटिति अभिलपति स्म उक्तवान्। भूतगत्या कथने इन्द्रादीनां हेतुगर्भविशेषणमाह, किम्भूतेषु इन्द्रादिषु - यतस्त्रिभुवनजनानां स्वर्गमर्त्यपातालवासिनामपि लोकानां यावन्ति वृत्तानि चरितानि तेषां वृत्तान्तस्य वार्त्तायाः साक्षात्कृतौ प्रत्यक्षीकरणे कृतिषु कुशलेषु। मालिनीवृत्तमिदम्॥ १५८॥

अत्र "सहोक्त्यलङ्कारः" सा॥ १५६॥ अत्र रोमाञ्चेषु वेतसत्वारोपात् रूपकं, कृपयेवेति प्रतीतेः गम्या हेतूत्प्रेक्षा, वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः। "अतिशयोक्तिः" सा॥ १५७॥ अत्र च्छेकानुप्रासोऽलङ्कारः॥ १५८॥ नवमः सर्गः समाप्तः।

संदृब्धार्णववर्णनस्य नवमस्तस्य व्यरंसीन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १५६ ॥

श्रीहर्षमिति। संदृब्धं ग्रथितम् अर्णवस्य समुद्रस्य वर्णनं येन तादृशस्य तस्य महाकाव्ये नवमः सर्गो व्यरंसीत् विरतः समाप्तिं गतः। अर्णववर्णनमपि अनेन कृतमिति भावः। अन्यत् सर्वं पूर्ववत्। व्यरंसीदिति 'पर्य्याङ्विभ्योरम' इत्यात्मनेपदनिषेधात् परस्मैपदं, 'यमरमनमादन्तात् सिङ् दरिद्रो वे'ति सिङ् ॥ १५९ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायां नवमः सर्गः समाप्तः।

## दशमः सर्गः।

रथैरथायुः कुलजाः कुमाराः शस्त्रेषु शास्त्रेषु च लब्धपाराः।
स्वयंवरं शम्बरवैरिकाय-व्यूहश्रियः श्रीजितयक्षराजः ॥ १ ॥

अथ स्वयंवरानुष्ठानवर्णनरूपं दशमं सर्गमारभमाणो भीमनिमन्त्रितानां राजपुत्राणामागमनं वर्णयति। रथेति। अथानन्तरं कुमारा राजबालका युवराजा वा कुत्सितो मारः कन्दर्पो येभ्यस्ते तथा अतिसुन्दरा युवान इति वा भीमनृपेण निमन्त्रिताः सन्तो रथैः स्वयंवरं स्वयं व्रियतेऽत्रेति स्वयंवरसमाजम् आयुः आगतवन्तः, किम्भूताः कुलजाः प्रशस्तकुले जाताः कुलीनाः, तथा शस्त्रेषु वाणादिषु शास्त्रेषु च वेदादिषु च लब्धपाराः पारगामिनः समस्तशस्त्रप्रयोगोपसंहारकुशलाः समस्तशास्त्रवेत्तारश्चेत्यर्थः, तथा शम्बरस्य दैत्यविशेषस्य वैरी कामस्तस्य कायव्यूहः शरीरसमूहस्तद्वत् श्रीः शोभा येषां तादृशाः नैते राजकुमाराः किन्तु शम्बरासुरविनाशाय कामेन गृहीतः शरीरसमूह एवेति सम्भाव्यमाना अतिसुन्दरा इत्यर्थः, तथा श्रिया सम्पत्त्या जितो यक्षराट् कुवेरो यैस्तादृशा अतिसम्पत्तिशालिन इत्यर्थः। कुलजा इत्यादिविशेषणैर्वरोचिता गुणाः कथिताः। यदुक्तं 'कन्या वरयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः' इति। क्षत्रियाणां शास्त्रापेक्षया शस्त्रस्याभ्यर्हितत्वात् आदावुपन्यासः। 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणद्रौ ना न द्वयोर्जात्यकाञ्चने' मे। अस्मिन् सर्गे उपेन्द्रवज्रेन्द्रवज्रा तदुपजातयश्च वृत्तानि एषां लक्षणमुक्तं प्राक् ॥ १ ॥

अत्र राजपुत्रेषु कुलजा इत्यादिविशेषणानां वरोचितगुणसम्पत्प्रदर्शनाभिप्रायेणोक्तत्वात् परिकरालङ्कारः। शम्बरवैरिकायव्यूहश्रिय इत्यत्र कायव्यूहशब्दस्य कायसंस्थानार्थत्वे कायव्यूहस्य श्रीरिव श्रीर्येषामिति समासात् उपमालङ्कारः, कायव्यूहशब्दस्य शरीरसमूहार्थकत्वे च

नाभूदभूमिः स्मरसायकानां नासीदगन्ता कुलजः कुमारः ।
नास्थादपन्था धरणेः कणोऽपि व्रजेषु राज्ञां युगपद् व्रजत्सु ॥ २ ॥
योग्यैर्व्रजद्भिर्नृपजां वरीतुं वीरैरनर्हैः प्रसभेन हर्तुम् ।
द्रष्टुं परैस्तानुपरोद्धुमन्यैः स्वमात्रशेषाः ककुभो बभूवुः ॥ ३ ॥
लोकैरशेषैरवनेः श्रियन्ता-मुद्दिश्य दिश्यैर्विहिते प्रयाणे ।
स्ववर्त्तितत्तज्जनयन्त्रणार्त्ति-विश्रान्तिमापुः ककुभां विभागाः ॥ ४ ॥

सर्व एव राजकुमाराः स्वयंवरमाजग्मुरित्याह । नाभूदिति । कुलजः प्रशस्तकुलजातः कुमारो राजबालकः स्मरसायकानां कामबाणानाम् अभूमिरगोचरो नाभून्, एवं स्वयंवरे अगन्ता नासीत्, अपितु सर्वएव कुलीना राजकुमाराः कामबाणपीडिताः स्वयंवरं जग्मुरित्यर्थः । प्रशस्तकुलजातानामेव भैमीलाभसम्भावनावत्त्वात् कुलज इत्युक्तम् । तथा राज्ञां व्रजेषु समूहेषु युगपत् एकदैव व्रजत्सु स्वयंवरमभिगच्छतसु सत्सु धरणेः पृथिव्याः कणोऽपि अल्पभागोऽपि अपन्था अमार्गो नास्थात् नासीत् । हर्षातिशयेन एकदैव गच्छतां तेषां पथिकानां बाहुल्यात् धरणिर्बहुमार्गीभूदित्यर्थः । अपन्था इति 'नञः पथोवे'ति समासान्तविधेर्वैकल्पिकत्वादत्र निषेधः ॥ २ ॥

तदानीं सर्वेषामेव स्वयंवरगमनात् दिशो जनशून्या अभूवन्नित्याह श्लोकद्वयेन । योग्यैरिति । नृपजां भैमीं वरीतुं व्रजद्भिर्गच्छद्भिः योग्यैः कुलसौन्दर्यादिशालिभिस्तथा तां प्रसभेन बलात्कारेण हर्त्तुं व्रजद्भिरनर्हैरयोग्यैः कुलसौन्दर्यादिरहितैर्वीरैः शूरैः तथा स्वयंवरकौतुकं द्रष्टुं व्रजद्भिः परैर्योग्यवीरभिन्नैरुदासीनैः तथा तान् योग्य-वीरोदासीनान् उपरोद्धुं सेवितुं व्रजद्भिरन्यैः पूर्वोक्तत्रितयभिन्नैः सेवकैः कृत्वा ककुभो दिशः स्वमात्रम् आत्मैव शेषोऽवशिष्टं यासां तादृश्यो बभूवुः जनशून्या बभूवुरित्यर्थः, सर्वेऽपि जनाः स्वयंवरं गता इति भावः ॥ ३ ॥

लोकैरिति । अशेषैः समस्तैर्दिश्यैर्दिग्भवैर्लोकैः अवनेः पृथिव्याः श्रियं लक्ष्मीभूतां तां भैमीम् उद्दिश्य प्रयाणे गमने विहिते कृते सति ककुभां दिशां विभागाः प्रदेशाः स्ववर्त्तिनः स्वस्मिन् वर्त्तमानास्ते ते जनास्तैः कृत्वा या यन्त्रणा सङ्कटता तया या आर्त्तिः पीडा तस्या विश्रान्तिं विश्रामम् आपुः प्राप्तवत्यः, भाराहित्यात् सुखावस्थानं प्रापुरित्यर्थः ॥ ४ ॥

---

कामस्य देवत्वेन शरीरसमूहधारणसम्भवात् उपमैव. सम्भावनार्थता तु पर्यवसानलभ्या । श्रीजितयक्षराज इत्यत्र च जितशब्देन इवादिवत् सादृश्यस्य सूचितत्वात् उपमा, तदुक्तं दण्डिना उपमाचक्रे 'स्पर्द्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति -- तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।' इति । वृत्त्यनुप्रासश्छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ १ ॥ "अत्र राज्ञां कार्त्स्न्येन स्मरेषुविषयत्वगन्तृत्वाभ्यां, भूमेः पथित्वेन चासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः" जी । छेकानुप्रासेन संसृज्यते ॥ २ ॥ अत्र व्रजद्भिरित्येकया क्रियया योग्यवीरादीनां प्रकृतानामनेकेषां सम्बन्धात्तुल्ययोगितालङ्कारः, "अत्रापि ककुभां स्वमात्रशेषत्वासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिभेदः" जी ॥ ३ ॥ अत्र भैम्यामवनिश्रीत्वाध्यवसायादतिशयोक्तिः, विश्रान्ति-

तलं यथेयुर्न तिला विकीर्णाः सैन्यैस्तता राजपथा बभूवुः।
भैमीं स लब्धामिव तत्र मेने यः प्राप भूभृद्भवितुं पुरस्तात्॥ ५॥
नृपः पुरःस्थैः प्रतिरुद्धवर्त्मा पश्चाज्जनैः कश्चन नुद्यमानः।
यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाप्यसिद्धार्थममन्यत स्वम्॥ ६॥
राज्ञां पथि स्त्यानतयानुपूर्वी-विलङ्घनाशक्तिविलम्बभाजाम्।
आह्वानसंज्ञानमिवाग्रकम्पै-र्ददुर्विदर्भेन्द्रपुरीपताकाः॥ ७॥
प्राग्भूय कर्कोटक आचकर्ष सकम्बलं नागबलं यदुच्चैः।
भुवस्तले कुण्डिनगामिराज्ञां तद्वासुकेश्चाश्वतरोऽन्वगच्छत्॥ ८॥

अथ तेषां गमनप्रकारमेवाह। तलमिति। विकीर्णा ऊर्ध्वं विक्षिप्तास्तिला अतिसूक्ष्माः शस्यविशेषा अपि यथा तलं भूतलं न ईयुर्न प्रापुः, तथा सैन्यैः कृत्वा राजपथा राजमार्गा बभूवुः, सैन्यबाहुल्यादतिसम्बाधा बभूवुरित्यर्थः। तत्र तादृशेष्वपि राजपथेषु यो भूभृद्राजा पुरस्तादग्रे भवितुं प्राप शशाक, स भूभृत् भैमीं लब्धामिव मेने मन्यते स्म। एते यावदागच्छन्ति तावत् पुरोगतं मामेव भैमी वरीष्यतीति मनसि निश्चितवानित्यर्थः। परस्परमहमिकया स्वसैन्यैस्तैर्गतमिति भावः॥ ५॥

नृप इति। पुरःस्थैरग्रेसरैर्जनैः प्रतिरुद्धवर्त्मा आवृतमार्गस्तथा पश्चात् स्थितैर्जनैर्नुद्यमानः किमिति विलम्बः क्रियते झटिति गन्तव्यमिति प्रेर्यमाणः कश्चन नृपः यन्त्रस्थास्तैलाकर्षणयन्त्रस्थिता ये सिद्धार्थाः सर्षपा स्तेषां पदे स्थानेऽभिषेकं लब्ध्वापि अपिरेवार्थे उभयपार्श्वस्थ-काष्ठद्वय-निष्पीडित-सर्षपावस्थां प्राप्यैव स्वमात्मानम् असिद्धार्थम् अकृतकार्यम् अमन्यत। अहो हस्ताद्यङ्गभङ्गलक्षणं स्वयंवरगमनप्रतिबन्धकमुपस्थितं, तत् सर्वथा भैमीलाभो मम न भविष्यतीत्याशङ्कितवानित्यर्थः। अथच सर्षपपदाभिषेकं लब्ध्वापि आत्मानम् असिद्धार्थं सर्षपभिन्नम् अमन्यतेति विरोधः,अत्रापिर्विरोधे; विरोधभञ्जनन्तु उक्तव्याख्यानेन। 'सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे' मे॥ ६॥

राज्ञामिति। विदर्भेन्द्रपुर्याः कुण्डिननगरस्य पताकाः अग्रकम्पैरग्रस्थचेलाञ्चलकम्पनैः कृत्वा राज्ञाम् आह्वानसंज्ञानमिव आकारणसंङ्केतमिव ददुः, अग्रकम्पसङ्केतेन राज्ञो आह्वयन्ति स्मेव। किम्भूतानां, यतः पथि स्त्यानतया निविडतया आनुपूर्व्यस्य अग्रपश्चाद्भावरूपक्रमस्य विलङ्घनेऽतिक्रमे या अशक्तिरसामर्थ्यं तया विलम्बभाजां कालक्षेपं कुर्वताम्। अन्योऽपि विलम्बेनागच्छतां हस्तकम्पसङ्केतेन आह्वानं करोति॥ ७॥

प्राग्भूयेति। भुवस्तले पृथिवीतले कुण्डिनगामिराज्ञाम् अटको धावनशीलः कर्कः श्वेताश्वः प्राग्-

---

मापुरिवालक्ष्यतेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, छेकानुप्रासश्चेत्येतेषां संसृष्टिः॥ ४॥ "अत्र राजपथानां तिलमात्रावकाशरहितत्वासम्बन्धेऽपि तत्सम्बन्धस्योक्तेरतिशयोक्तिभेदः" जी। छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः॥ ५॥ अत्र टीकोक्तविरोधाभास श्छेकानुप्रासश्चेति संसृष्टिः॥ ६॥ अत्र आह्वानसंज्ञानं ददुरिवेति वाच्या क्रियोत्प्रेक्षा॥ ७॥

आगच्छदुर्वीन्द्रचमूसमुत्थै-र्भूरेणुभिः पाण्डुरिता मुखश्रीः ।
विस्पष्टमाचष्ट दिशां जनेषु रूपं पतित्यागदशानुरूपम् ॥ ९ ॥
आखण्डलो दण्डधरः कृशानुः पाशीति नाथैः ककुभां चतुर्भिः ।
भैम्येव वव्र्ये स्वगुणेन कृष्टै-र्ययै तदुद्वाहरसान्न शेषैः ॥ १० ॥

भूय अग्रगामी भूत्वा यत्सकम्बलं कुथासहितं नागबलं हस्तिसैन्यम् उच्चैरतितराम् आचकर्ष स्वसन्निधिं नीतवान् । तत् नागबलम् अश्वतरः गर्द्दभाद् बडवाजातः उच्चैरन्वगच्छत् पश्चात् लगति स्म । अग्रगामिनं श्वेताश्वं दृष्ट्वा हस्तिबलं वेगेन तत्पश्चात् जगाम । हस्तिबलञ्च तादृशं दृष्ट्वा अश्वतरस्तथा तत्पश्चाज्जगामेत्यर्थः । सर्वत्र जात्याश्रयणादेकवचनम् । कुण्डिनगामिराज्ञामित्यस्य कर्कोदिवितये ऽप्यन्वयः समासान्तविधेरनित्यत्वादत्र टनिषेधः । कुण्डिनगामीति नागबलमित्यस्य विशेषणं वा । तथा वासुकेः सर्पराजस्य च भुवस्तले पाताले यत् कुण्डिनगामि सकम्बलं कम्बलनामकनागसहितं नागबलं सर्पसैन्यं कर्कोटकस्तन्नामा नागविशेषः प्राग्भूय उच्चैराचकर्ष । तन्नागबलम् अश्वतरस्तन्नामा नागविशेषोऽन्वगच्छत्, नागा अपि स्वयंवरं जग्मुरिति भावः। शब्दश्लेषमूलेयं तुल्ययोगिता । 'कर्कः कर्के तिले वह्नौ शुक्लाश्वे दर्पणे घटे' 'कर्कोटकः स्यान्मालूरकाद्रवेयप्रभेदयोः' 'कम्बलो नागभेदे स्यात् सास्नाप्रावरयोरपि' 'नागः पन्नगमातङ्गक्रूराचारिषु तोयदे' मे । 'गर्द्दभाद् बडवाजाते खराश्वतरवेशराः' व ॥ ८ ॥

आगच्छदिति । आगच्छन्तो ये उर्वीन्द्रा राजानस्तेषां चमूभ्यः सैन्येभ्यः समुत्थैः सम्यगुत्थितैर्भूरेणुभिर्धूलिभिः कृत्वा पाण्डरिता पाण्डरीकृता दिशां दिग्वधूनां मुखश्रीः कर्त्री पतित्यागेन या दशा अवस्था तस्या अनुरूपं सदृशं रूपं जनेषु विस्पष्टं स्फुटं यथा स्यात्तथा आचष्ट सूचयामास, पतित्यागेन स्त्रीणां विरहादेवं रूपं भवतीति सूचयामासेत्यर्थः । राजानो दिशां पतयः, दिशश्च वध्व इति समासोक्तिः । सर्वा अपि दिशो राजशून्याः सैन्यादिविमर्दोत्थितधूलिधूसराश्च जाता इति भावः ॥ ९ ॥

दिक्पालानां मध्ये केवलमिन्द्रादिचतुष्टयमेव तत्र गतमित्याह । आखण्डल इति । आख-

"अत्रोभयोरपि नागबलयोः प्रकृतत्वात् केवलः प्रकृतश्लेषः ।" जी । श्लेषोपस्थापितयोः प्रकृतयोः कर्कोऽटकशब्दवाच्ययोः कर्कोटकाख्यनागाग्रधावनशीलश्वेताश्वयोरुभययोरेकयाचकर्षेति क्रियया, तथाभूताश्वतराभिन्ननागाश्वगर्द्दभीजातपशुविशेषयोरन्वगच्छदित्येकक्रियाभिसम्बन्धात् केवलप्रकृतगोचरतुल्ययोगिताद्वयम्, तदुक्तं शब्दश्लेषमूलेयं तुल्ययोगितेति टीकायाम् ॥ ८ ॥

"अत्रान्यधर्मस्यान्यत्रासम्भवाद्दिशां प्रोषितभर्तृकारूपमिव रूपमिति सादृश्याक्षेपादसम्भवद्वस्तुसम्बन्धाख्यो निदर्शनाभेदः । हरिद्वधूनामिति देशान्तरपाठे रूपकं व्यक्तम् ।" जी । पुंस्त्वसाम्येन परित्यागरूपकार्यसाम्येन च राजसु विदेशगतपतिव्यवहारस्य तथा स्त्रीलिङ्गतासाम्येन भूरेणुपाण्डुरितमुखश्रीत्वरूपकार्यसाम्येन च दिक्षु प्रोषितभर्तृकपत्नीव्यवहारस्य समारोपात् समासोक्ति श्छेकानुप्रासश्चेति संसृष्टिः ॥ ९ ॥

मन्त्रैः पुरं भीमपुरोहितस्य तद्बद्धरक्षं विशति क्व रक्षः।
तत्रोद्यमं दिक्पतिराततान यातुं ततो जातु न यातुधानः॥ ११॥
कर्त्तुं शशाकाभिमुखं न भैम्या मृगं दृगम्भोरुहतर्जितं यत्।
अस्या विवाहाय ययौ विदर्भान् तद्वाहनस्तेन न गन्धवाहः॥ १२॥
जातौ न वित्ते न गुणे न कामः सौन्दर्य एव प्रवणः स वामः।
स्वच्छस्वशैलेक्षितकुत्सवेर-स्तां प्रत्यगान्न स्त्रितरां कुबेरः॥ १३॥

ण्डल इन्द्रः दण्डधरो यमः कृशानुर्वह्निः पाशी वरुणः इति चतुर्भिः ककुभां दिशां नाथैर्दिक्पालैस्तस्या भैम्या उद्वाहरसात् विवाहानुरागात् यये गतम्। शेषैश्चतुर्भ्य इतरैर्दिक्पालैर्वक्ष्यमाणकारणात् न यये। चतुर्भिः किम्भूतैः भैम्या स्वगुणेन निजसौन्दर्यादिना अथच सूत्रेण बद्ध्वा आकृष्टैरिव। अन्येऽपि सूत्रेण बद्ध्वा आकृष्यन्ते। यये इति यालगताविल्यस्य भावे लिट्॥ १०॥

शेषाणामगमने कारणमुत्प्रेक्षते। मन्त्रैरिति। रक्षो राक्षसः भीमपुरोहितस्य मन्त्रैः "भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपा" इत्यादिभिः बद्धरक्षं कृतरक्षणं तत् पुरं कुण्डिननगरं क्व कुतो विशति अपितु न कुतोऽपि प्रवेष्टुं शक्नोति। ततस्तस्मादिव हेतोर्यातुधानो नैर्ऋतो दिक्पतिर्जातु कथञ्चिदपि तत्र पुरे यातुं गन्तुम् उद्यमम् उद्योगं न आततान न कृतवान्। नैर्ऋतदिक्पालस्यापि तत्र जिगमिषा स्थिता, किन्तु एतदर्थमिव तेन न गतमित्यर्थः। 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' अ॥ ११॥

कर्त्तुमिति। गन्धवाहो वायुर्दिक्पालः दृगम्भोरुहेण भैम्या नयनपद्मेन तर्जितं चक्षुःसौन्दर्येण तिरस्कृतं मृगं वाहनं यत् भैम्या अभिमुखं सम्मुखं कर्त्तुं न शशाक, तेन हेतुनेव अस्या भैम्या विवाहाय भैमीं परिणेतुं विदर्भान् जनपदान् न ययौ न गतवान्। किम्भूतः – यतः स मृग एव वाहनं यस्य तादृशः। दैर्घसाम्येऽपि अम्भोरुहतुल्यत्वादेव भैमीनयनं मृगनयनादुत्कृष्टम्, अतस्तेन नयनसौन्दर्यविषये तर्ज्जितत्वाद्भीतस्य मृगस्य तदभिमुखगमनासामर्थ्यादन्यस्य च वाहनस्याभावात् वायुना तत्र न गतमित्यर्थः॥ १२॥

जाताविति। कुबेरो दिक्पालः स्त्रितरां रमणीश्रेष्ठां तां दमयन्तीं प्रति उद्दिश्य नागात् न गतवान्। किम्भूतः, यतः स्वच्छे स्फटिकमयत्वादतिनिर्मले स्वस्य शैले कैलासपर्वते ईक्षिता दृष्टा कुत्सा निन्दनीयता यस्य तादृशं वेर शरीरं यस्य तादृशः। स्वस्य निन्दितशरीरत्वादेव कुबेरस्तत्र न गतवानित्यर्थः। ननु जात्यादयः प्रशस्ताः सन्ति, ततः किमिति न गतवानित्यत आह,

---

अत्र प्रकृते उपमेयभूते भैम्याः सौन्दर्यादिगुणे गुणशब्दश्लेषादन्यस्योपमानभूतस्य सूत्रस्य तादात्म्येन रूपणात्, तस्य च अनुरञ्जने बन्धारोपहेतुत्वात् बद्ध्वा स्वगुणेनेति श्लिष्टपरम्परितरूपकं, तन्मूला च कृष्टैरिवेति वाच्योत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः॥ १०॥ अत्र भीमपुरोहितमन्त्रकरणबद्धरक्षत्वपदार्थस्य रक्षोवेशनाभावहेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः॥ ११॥ अत्र दृगम्भोरुहेति रूपकम्, "रूपकातिशयोक्तिकाव्यलिङ्गालङ्कारसङ्करः" सा॥ १२॥

भैमीविवाहं सहतेऽस्य कस्मा-दर्द्धं तनुर्या गिरिजात्मभर्त्तुः ।
तेनाव्रजन्त्या विदधे विदर्भा-नीशानयानाय तयान्तरायः ॥ १४ ॥
स्वयंवरं भीमनरेन्द्रजाया दिशः पतिर्न प्रविवेश शेषः ।
प्रयातु भारं स निवेश्य कस्मि-न्नहिर्म्महीगौरव-सासहिः कः ॥ १५ ॥
ययौ विमृश्योर्ध्वदिशः पतिर्न्न स्वयंवरं वीक्षितधर्म्मशास्त्रः ।
व्यलोकि लोके श्रुतिषु श्रुतो वा समं विवाहः क पितामहेन ॥ १६ ॥

कामः कन्याया अभिलाषः जातौ कौलिन्ये न प्रवणः नासक्तो भवति, तथा वित्ते धने न प्रवणस्तथा गुणे विद्यादौ न प्रवणः, यतो वामो वक्रोऽथच मनोहरः स कामः सौन्दर्य एव 'कन्या वरयते रूपम्' इति प्रागुक्तवचनात् रूप एव प्रवणो भवति। इत्थं विचार्यैव कुवेरः स्वयंवरं न गतवानिति भावः। कुवेर इति योगरूढं पदं, कुत्सितो वेरः शरीरं यस्येति व्युत्पत्तेः। 'वेरः कलेवरे क्लीवं वार्ताकौ कुङ्कुमेऽपि च' मे ॥ १३ ॥

भैमीति। आत्मभर्त्तुः शिवस्य अर्द्धं तनुः शरीरार्द्धरूपा या गिरिजा स्वस्वामिकर्तृकं भैमीविवाहं कस्मात् सहते स्म अपितु नैव असहत। तेन तत्सहनाभावेन हेतुना विदर्भान् देशान् अव्रजन्त्या तया गिरिजया ईशानस्य शिवस्य दिक्पालस्य यानाय स्वयंवरगमनाय अन्तरायो विघ्नो विदधे विहितः। शिवस्यापि तत्र गमनं मनसि स्थितं, किन्तु शरीरार्द्धभूतायाः पार्वत्या गमनाभावादिव तेन न गतमित्यर्थः। अर्द्धमित्यस्यांशिनि लाक्षणिकत्वान्न तनुरित्यनेन सामानाधिकरण्यहानिः ॥ १४ ॥

स्वयंवरमिति। शेषोऽनन्तो दिशः पतिर्दिक्पालः भीमनरेन्द्रजाया भैम्याः स्वयंवरं न प्रविवेश प्रविष्टवान्। कुत इत्याह स शेषः भारं पृथिवीलक्षणं कस्मिन् स्वसदृशे निवेश्य स्थापयित्वा प्रयातु स्वयंवरं गच्छतु। ननु पातालेऽपि सर्पान्तराणि सन्ति, तेष्वेकस्मिन् निवेश्य किमिति नागतवानित्यत आह कोऽहिः कः सर्पः महीगौरव सासहिः अभीक्ष्णं पृथ्वीभारसहनक्षमः, अपितु न कोऽपि। भूमिभारसहनक्षमसर्पान्तराभावादिव शेषो न गतवानित्यर्थः। सासहिरिति यङ्लुगन्तात् सहतेः 'सूत्रादेरिरि'ति इः ॥ १५ ॥

ययाविति। वीक्षितं पर्यालोचितं धर्म्मशास्त्रं येन तादृशः ऊर्ध्वदिशः पतिर्ब्रह्मा विमृश्य वक्ष्यमाणं विचार्यैव स्वयंवरं न ययौ न गतवान्। विचारमेवाह -- पितामहेन ब्रह्मणा अथच पितृपित्रा

अत्र न जातौ इत्यादौ शाब्दी परिसंख्या, वाम इति पदार्थस्य पूर्ववाक्यार्थे हेतुत्वात्, तथा कुवेरस्य गमनाभावं प्रति प्रथमपादत्रितयार्थस्य हेतुत्वात् काव्यलिङ्गद्वयम्, अव्रजन्त्येवेति प्रतीतेः प्रतीयमानोत्प्रेक्षा, प्रथमार्द्धे अन्त्यानुप्रासः, उत्तरत्र च च्छेकानुप्रासश्चेति संसृष्टिः। त्रितरामित्यत्र 'नद्याः शेषस्यान्यतरस्याम्' इति घादिपरो ह्रस्वः" जी ॥ १३ ॥ अत्र च्छेकानुप्रासः ॥ १४ ॥ अत्र स्वयंवराप्रवेशे तृतीयचरणवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १५ ॥

भैमीनिरस्तं स्वमवेत्य दूत्या मुखात् किलेन्द्रप्रमुखा दिगीन्द्राः।
स्पन्दे मुखेन्दौ च वितत्य मान्द्यं चित्तस्य ते राजसमाजमीयुः ॥ १७ ॥
नलभ्रमेणापि भजेत भैमी कदाचिदस्मानितिशेषिताशा।
अभून्महेन्द्रादिचतुष्टयी सा चतुर्नलो काचिदलीकरूपा ॥ १८ ॥
प्रयस्यतान्तद्भवितुं सुराणां दृष्टेन पृष्टेन परस्परेण।
तद्द्वैतसिद्धिर्न्न वतानुमेने स्वाभाविकात् कृत्रिममन्यदेव ॥ १९ ॥

सम सह विवाहः लोके भुवने जने वा क्व दृष्टः, तथा श्रुतिषु वेदेषु बहुवचनात् स्मृतिषु च क्व श्रुतः अपितु न दृष्टो न श्रुतः क्वापि। 'न समानार्षेयीं कन्यां वरयेत्' इत्यादिना पितामहेन विवाहस्य निषिद्धत्वात् तेन न गतमित्यर्थः। मन्वादिद्वारा धर्म्मशास्त्रं प्रणीय कथमेवं कुर्यादिति भावः। 'पितामहः पद्मयोनौ जनके जनकस्य च' हे ॥ १६ ॥

भैमीति। ते इन्द्रप्रमुखा इन्द्रादयो दिगीशा दिक्पाला दूत्या मुखात् दूतीमुखद्वारा स्वम् आत्मानं भैमीनिरस्तं भैम्या निराकृतं किल निश्चयेन अवेत्य ज्ञात्वा चित्तस्य मनसो मान्द्यं मन्दतां स्पन्दे गमने मुखेन्दौ मुखचन्द्रे च वितत्य विस्तार्य किमर्थमस्माभिस्तत्र गन्तव्यमित्युत्साहभङ्गात् चित्तस्य विषादं गमनमान्द्यमुखमालिन्याभ्यां प्रकटीकृत्य राजसमाजं स्वयंवरस्थलम् ईयुः गतवन्तः ॥ १७ ॥

नलरूपं धृत्वा इन्द्रादयस्तत्र जग्मुरित्याह। नलेति। भैमी नलभ्रमेणापि नलभ्रान्त्यापि कदाचिदस्मान् भजेत वृणीत इति इत्थं शेषिता अवशेषिता आशा यया तादृशी सा महेन्द्रादिचतुष्टयी काचिदनिर्वचनीया अलीकरूपा मिथ्यारूपा चतुर्नली अभूत्। दूतीमुखेनात्मानं भैमीनिराकृतं श्रुत्वापि नलभ्रान्त्यापि यद्यस्मान् भजेतेति एतावन्मात्रामाशामास्थाय नलरूपं गृहीत्वा इन्द्रादयस्तत्र जग्मुरित्यर्थः। कदाचिदिति सम्भावनायाम् ॥ १८ ॥

तथापि तैः सम्यक् नलरूपं न प्राप्तमित्याह। प्रयस्यतामिति। तद्भवितुं नलीभवितुं प्रयस्यतां प्रयासं कुर्वतां सुराणामिन्द्रादीनां दृष्टेन आलोकितेन पृष्टेन अहं नलतुल्यो जातो नवेति जिज्ञासितेन, पृष्टेन पृष्टेनेति पाठे पुनः पुनर्जिज्ञासितेन परस्परेण अन्योऽन्येन तद्द्वैतसिद्धिस्तस्य नलस्य द्वैतं द्वितीयत्वं तस्य सिद्धिर्निष्पत्तिर्वत कष्टं नानुमेने न स्वीकृता। त्वं नलतुल्यो नाभूस्त्वमपि नलतुल्यो नाभूरिति परस्परं ते कथयामासुरित्यर्थः। यतः स्वाभाविकात् सहजाद्वस्तुनः कृत्रिमं

---

अत्र सामान्येन पितामहेन साकं विवाहाभावेन विशेषब्रह्मरूपपितामहविवाहाभावस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः, ब्रह्मपितामहयोर्भेदेऽपि पितामहपदश्लेषेण तयोरभेदाध्यवसायादतिशयोक्तिश्छेकानुप्रासश्चेत्येतेषामङ्गाङ्गिभावरूपः सङ्करः ॥ १६ ॥ अत्र चित्तस्पन्दमुखेन्दुषु प्रकृतेषु एकेन मान्द्यधर्मेणाभिसम्बन्धात् तुल्ययोगिता, तेषु स्थितमान्द्यानां परस्परभेदेऽपि मान्द्यपदश्लेषेणाभेदाध्यवसायादतिशयोक्तिश्चेति सङ्करः, वृत्त्यनुप्रासेन च संसृष्टिः ॥ १७ ॥ "अत्रानुप्रासालङ्कारः" सा ॥ १८ ॥

पूर्णेन्दुमास्यं विदधुः पुनस्ते पुनर्म्मुखीचक्रुरनिद्रमब्जम् ।
स्ववक्त्रमादर्शतलेऽथ दर्शं दर्शं बभञ्जुर्न्न तथातिमञ्जु ॥ २० ॥
तेषां तदा लब्धुमनीश्वराणां श्रियं निजास्येन नलाननस्य ।
नालं तरीतुं पुनरुक्तिदोषं बर्हिर्म्मुखानामनलाननत्वम् ॥ २१ ॥
प्रियावियोगक्कथितात् किमैला-चन्द्राद् गृहीतैर्ग्रहपीडितात्ते ।
ध्मातादूभवेन स्मरतोऽपि सारैः स्वङ्कल्पयन्ति स्म नलानुकल्पम् ॥ २२ ॥

कृत्या निर्वृत्तं वस्तु अन्यदेव भवति । सहजकृत्रिमयोर्महदन्तरमित्यर्थः । तद्द्वैतसिद्धिरित्यत्र तत्साम्यसिद्धिरिति क्वचित् पाठः ॥ १९ ॥

तद्द्वैतसिद्ध्यभावमेव विवृणोति । पूर्णेन्दुमिति । ते इन्द्रादयः पुनः पूर्णेन्दुं पौर्णमासीचन्द्रम् आस्यं मुखं विदधुः, अनन्तरम् अयोग्यत्वात्तं विहाय पुनरनिद्रं प्रफुल्लम् अब्जं पद्मं मुखीचक्रुः, अथानन्तरम् आदर्शतले दर्पणमण्डले स्ववक्त्रं तादृशं निजवदनं दर्शं दर्शं पुनः पुनर्दृष्ट्वा बभञ्जुर्भग्नीचक्रुः । किम्भूत, यतस्तथा नलमुखवत् न अतिमञ्जु नातिशोभनम् । पूर्णचन्द्रप्रफुल्लकमलाभ्यामपि नलमुखमुत्कृष्टमिति भावः ॥ २० ॥

तेषामिति । तदा नलरूपधारणावसरे निजास्येन निजमुखेन नलाननस्य नलमुखस्य श्रियं शोभां लब्धुम् अनीश्वराणाम् असमर्थानां तेषां बर्हिर्मुखानां देवानाम् अनलाननत्वम् अग्निमुखत्वम् अथच नलमुखसदृशमुखराहित्यं कर्तृ पुनरुक्तिरूप दोषं तरीतुं परिहर्त्तुम् अलं समर्थं नाभूत् । तेषां पूर्वमपि स्वभावात् अनलाननत्वं स्थितम्, अधुनापि नलाननसदृशाननालाभात् पुनरप्यनलाननत्वं जातमिति शब्दच्छलात् पौनरुक्त्यम् । 'बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः' अ । 'बर्हिः कुशहुताशयोः' वि ॥ २१ ॥

प्रियेति । किमित्युत्प्रेक्षायां ते देवाः कि प्रियावियोगेन उर्वशीविरहेण क्वथितात् कर्शितात् ऐलात् पुरूरवसः, तथा राहुग्रहेण पीडिताच्चन्द्राच्च, तथा भवेन शिवेन ध्मातात् दग्धात् स्मरतोऽपि कामादपि गृहीतैः सारैः श्रेष्ठभागैः कृत्वा स्वमात्मानं नलस्य अनुकल्पं प्रतिनिधिं कल्पयन्ति स्म कृतवन्तः, अयमर्थः, भैम्याः पूर्वरागविप्रलम्भेनातितरां खिन्नो नलस्तदानीम् उर्वशीविरहपीडित-

अत्र कृत्रिमसामान्येन नलरूपविशेषस्य समर्थनादर्थान्तरन्यासश्छेकानुप्रासश्चेत्यनयोः संसृष्टिः ॥ १९ ॥ अत्र पूर्णेन्दुना विकसितकमलेन च मुखविधानासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, "अत्र पूर्णेन्द्वादिकारणसामग्र्येऽपि विवक्षितकार्यानुत्पत्तिकथनाद् विशेषोक्तिरलङ्कारः" जी, छेकानुप्रासश्च ॥ २० ॥ "द्वयोरप्यनलाननत्वयोर्भेदेऽपि श्लिष्टैकपदोपादानमहिम्ना एकत्वाभिमानात् ( अतएव भेदेप्यभेदाध्यवसायाद् अतिशयोक्तिरलङ्कारः ) पौनरुक्त्यव्यपदेशः (ततश्च प्रतीयमानोत्प्रेक्षा) । अत्र नलाननश्रीलिप्सूनां तेषां न केवलं तदलाभः प्रत्युत दुस्तरतरपुनरुक्तिदोषरूपानर्थोत्पत्तिश्चेति द्वितीयविषमप्रभेदः" जी । देवानामनलमुखत्वे श्रुतिः 'अग्निमुखाः वै देवाः' । 'बर्हिःशुष्मा कृष्णवर्त्मा' अ ॥ २१ ॥

नलस्य पश्यत्त्वियदन्तरं तै-र्भैमीति भूपान् विधिराहृतोऽस्यै ।
स्पर्द्धां दिगीशानपि कारयित्वा तस्यैव तेभ्यः प्रथिमानमाख्यत् ॥ २३ ॥

सभा नलश्रीयमकैर्यमाद्यै-र्नलं विनाभूद्धृतदिव्यरत्नैः ।
भामाङ्गनप्राघुणिके चतुर्भि-र्देवद्रुमैर्द्यौरिव पारिजाते ॥ २४ ॥

तत्रागमद्वासुकिरीशभूषा-भस्मोपदेहस्फुटगौरदेहः ।
फणीन्द्रवृन्दप्रणिगद्यमान-प्रसीद जीवाद्यनुजीविवादः ॥ २५ ॥

पुरूरवोराहुपीडितचन्द्रहरकोपानलदग्धकामैस्तुल्यः। तत्र तथाविधस्य नलस्यानुकरणे देवैः किं तथाविधेभ्यः पुरूरवःप्रभृतिभ्यः सारभागो गृहीत इत्युत्प्रेक्षा। अथच अन्यत्रापि कथनेन पीडनेन दाहेन च सार आकृष्यते ॥ २२ ॥

ननु भैमी नलमेव वरिष्यतीति यद्यपि राजानो देवाश्च पूर्वं ज्ञातवन्तस्तर्हि कथन्ते स्वयंवरमाजग्मुरित्याशङ्क्याह। नलस्येति। भैमी तैर्भूपैः सह नलस्य इयत् एतावत् अन्तरं विशेषं पश्यतु इति मनसि कृत्वा विधिर्भूपान् राज्ञोऽस्यै भैमीमुद्दिश्य आहृत आनीतवान्। तथा दिगीशानपि इन्द्रादिदिक्पालानपि नलरूपधारणद्वारा नलस्य स्पर्द्धां कारयित्वा तस्यैव नलस्यैव तेभ्यो देवेभ्यः सकाशात् प्रथिमानं महत्त्वम् अस्यै आख्यत् कथितवान्, तव पतिर्नल ईदृक् महान्, यस्य रूपं ग्रहीतुं देवा अपि प्रयासं कुर्वन्तीति आख्यदित्यर्थः। स्पर्द्धा हि अधिकेनैव सह भवति। राजानो देवाश्च स्वेच्छया स्वयंवरं नागताः, किन्तु भैम्यै नलस्य सर्वोत्कृष्टत्वं सूचयतो विधेरिच्छयैवागता इति भावः ॥ २३ ॥

अथ नलगमनात् प्राक् इन्द्रादयः सभायां गता इत्याह। सभेति। नलं विना नलश्रियो नलशोभाया यमकैः सदृशैर्यमाद्यैश्चतुर्भिर्यमवरुणाग्नीन्द्रैः कृत्वा सभा स्वयंवरसमाजः पारिजाते देवतरौ भामायाः सत्यभामाया अङ्गनस्य चत्वरस्य प्राघुणिके अतिथौ सति सत्यभामार्थं श्रीकृष्णेन पारिजातस्याहृतत्वात् तं विना चतुर्भिर्देवद्रुमैर्मन्दार-सन्तान-कल्पवृक्ष-हरिचन्दनैश्चतुर्भिर्देवतरुभिः कृत्वा द्यौरिव स्वर्ग इव अभूत्। यथा पञ्चसु मध्ये प्रधानं पारिजातं विना मन्दारादिभिर्द्यौर्नातिशोभनाभूत्, तथा नलं विना देवैः सा सभा नातिशोभनाभूदित्यर्थः। किम्भूतैर्यमाद्यैर्देवद्रुमैश्च, धृतानि दिव्यानि रत्नानि यैस्तादृशैः। देवानामङ्गेषु आभरणभूतानि रत्नानि स्थितानि, देवद्रुमाणाञ्च स्वभावत आमूलात् शिखरपर्यन्तं मुक्तादिरत्नानि स्थितानीत्यर्थः। देवा गता नलस्तु न गत इति भावः ॥ २४ ॥

'प्राग्भूय कर्कोटक' इति श्लोके श्लेषेण नागानां गमनमभिहितं, संप्रति व्यक्तमाह। तत्रेति।

---

ऐलादीनामप्रस्तुतानां साररूपैकगुणेन सह सम्बन्धात्तुल्ययोगितालङ्कारः, वाच्या क्रियोत्प्रेक्षा चेत्यनयोः सङ्करश्छेकानुप्रासश्च। 'मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः' अ ॥ २२ ॥ अत्र अन्तरं पश्यतु इति मनसि कृत्वेवेति तथा आख्यदिवेति सम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षाद्वयम् ॥ २३ ॥ 'प्राघुणिकः आगन्तुरतिथिः स्मृतः' हला। पञ्चैते देवतरवो

द्वीपान्तरेभ्यः पुटभेदनं तत् क्षणादवापे सुरभूमिभूपैः ।
तत्कालमालम्बि न केन यूना स्मरेषुपक्षानिलतूललीला ॥ २६ ॥
रम्येषु हर्म्येषु निवेशनेन सपर्य्यया कुण्डिननाकनाथः ।
प्रियोक्तिदानादरनम्रताद्यै-रुपाचरच्चारु स राजचक्रम् ॥ २७ ॥
चतुःसमुद्रीपरिखे नृपाणा-मन्तःपुरे वासितकीर्त्तिदारे ।
औदार्यदाक्षिण्यदयादमानां चतुष्टयी रक्षणसौविदल्ला ॥ २८ ॥

वासुकिः सर्पराजस्तत्र सभायां आगमदागतवान् । किम्भूतः, ईशस्य शिवस्य भूषायै यद्भस्म विभूतिस्तदेव उपदेहोऽङ्गरागस्तेन स्फुटः सुव्यक्तो गौरः शुभ्रो देहो यस्य तादृशः । स्वभावतः शुभ्रोऽपि शिवाङ्गभस्मसम्बन्धादतिशुभ्र इत्यर्थः । एतेन शिवाङ्गमपि परित्यज्यागत इति ध्वनिः । तथा फणीन्द्रवृन्दैः कर्कोटकादिनागश्रेष्ठसमूहैः प्रणिगद्यमान उच्चार्यमाणः प्रसीद जीव इत्यादि शब्दो यत्र स तथा तादृशोऽनुजीविनां सेवकानां वादः कोलाहलो यस्य सः। सपरिवार एव वासुकिस्तत्रागत इत्यर्थः ॥ २५ ॥

द्वीपान्तरीया राजानोऽपि तत्राजग्मुरित्याह । द्वीपेति । सुरभूमीनां द्वीपान्तरलक्षणानां भूपै राजभिर्द्वीपान्तरेभ्यः प्लक्षादिभ्यस्तत् पुटभेदनं कुण्डिनाख्यं पत्तनं क्षणात् झटिति अवापे प्राप्तम् । कथं द्वीपान्तरेभ्योऽपि झटित्यागतमित्याशङ्क्याह, तत्कालं तस्मिन् समये केन यूना स्मरेषूणां वेगेन पततां कामबाणानां ये पक्षास्तेषां योऽनिलो वायुस्तेन तूललीला तूलस्य विलासो नालम्बि न स्वीकृता, अपितु सर्वैरपि ब्रह्माण्डवासियुवभिरालम्बि । तूलो यथा वातनुन्नो झटिति देशान्तरं प्राप्नोति, तथा तेऽपि कामनुन्ना द्वीपान्तरेभ्योऽपि झटित्याजग्मुरित्यर्थः । प्लक्षादिद्वीपानां भोगमात्राधिकरणत्वेन देवभूमित्वम् ॥ २६ ॥

अथ भीमः समागतानां राज्ञां पूजां चकारेत्याह । रम्येष्विति । स कुण्डिननाकनाथः कुण्डिनेन्द्रो भीमः रम्येषु मनोहरेषु हर्म्येषु प्रासादेषु निवेशनेन स्थापनेन तथा सपर्यया पाद्यादिना पूजया प्रियोक्त्या प्रियवचनेन दानेन भक्षणीयादिवस्तुवितरणेन आदरेण सम्मानेन नम्रताद्यैर्विनयादिभिः कृत्वा चारु साधु यथा स्यात्तथा राज्ञां चक्रं समूहम् उपाचरत् सत्कृतवान् । प्रियोक्तिदानादरनम्रताद्यैरित्यत्र प्रियोक्तिदानादवनम्रताद्यैरिति पाठं कल्पयित्वा प्रियोक्तिदानात् अवनम्रताद्यैरिति व्याख्यानं भ्रमविलसितमेव अशोभनार्थत्वात् प्रक्रमभङ्गदोषापाताच्च ॥ २७ ॥

सार्वभौमोऽपि भीमः स्वस्य कीर्तिरक्षणार्थमेव तथा भूपान् सत्कृतवानित्याह । चतुरिति । चतुर्णां समुद्राणां समाहारश्चतुःसमुद्री सैव परिखा यत्र तादृशे, तथा वासिता स्थापिता

मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्' अ । उपमालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ २४ ॥ अत्र छेकानु-प्रासः ॥ २५ ॥ "अत्राखिलयूनां कामुकत्वेन कुण्डिनप्राप्तिसमर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः, सच तूललीलेति निदर्शनासंकीर्णः ।" जी ॥ २६ ॥ "अत्र च्छेकानुप्रासः" सा ॥ २७ ॥

अभ्यागतैः कुण्डिनवासवस्य परोक्षवृत्तेष्वपि तेषु तेषु ।
जिज्ञासितस्वेप्सितलाभलिङ्गं स्वल्पोऽपि नावापि नृपैर्विशेषः ॥ २९ ॥
अङ्के विदर्भेन्द्रपुरस्य शङ्के न सम्ममौ नैष तथा समाजः ।
यथा पयोराशिरगस्त्यहस्ते यथा जगद्वा जठरे मुरारेः ॥ ३० ॥

कीर्तिरेव दारा महिषी यत्र एवंविधे नृपाणामन्तःपुरे भूमण्डललक्षणे औदार्यं दातृत्वं दाक्षिण्यं परच्छन्दानुवर्तित्वं सारल्यं वा, दया निरुपाधिपरदुःखप्रहरणेच्छा दमो जितेन्द्रियता एषाञ्चतुष्टयी रक्षणाय कीर्तिरूपमहिषीरक्षणार्थं सौविदल्ला कञ्चुकिनी भवति। औदार्यादिचतुष्टयेन नृपाणां कीर्ती रक्ष्यते, नान्यथेति, तेन सार्वभौमेनापि कीर्तिरक्षणार्थं राजानस्तथा सत्कृता इति भावः। अन्यापि अन्तःपुरवर्तिनी महिषी कञ्चुकिभी रक्ष्यते। 'दक्षिणस्तु परच्छन्दानुवर्तिनि। दक्षेऽपसव्ये सरले' हे। 'सौविदल्लाः कञ्चुकिनः' अ ॥ २८ ॥

भीमेन समान एव सर्वेषां समादरः कृत इत्याह। अभ्यागतैरिति। अभ्यागतैरतिथिभूतैर्नृपैः कुण्डिनवासवस्य कुण्डिनेन्द्रस्य भीमस्य परोक्षवृत्तेष्वपि का कथा निजप्रत्यक्षवृत्तेषु भृत्यादिद्वारा क्रियमाणेषु अप्रत्यक्षनिष्पन्नेष्वपि तेषु तेषु प्रियोक्त्यादिषु विषये स्वल्पोऽपि किञ्चिदपि विशेषः अस्य महान् समादरः कृतः मम तु स्वल्पः कृतः इत्यादिरूपं तारतम्यं नावापि न प्राप्तः। किम्भूतः — जिज्ञासितो ज्ञातुमिष्टो यः स्वेप्सितस्य निजाभिलषितस्य भैमीलक्षणस्य लाभः प्राप्तिस्तस्य लिङ्गं सूचकम्। अनेनास्य महान् समादरः कृतस्तदस्मै एवासौ भैमीं दास्यतीति समादरतारतम्यमेव भैमीलाभसूचकं स्यात्। भीमेन पुनः सर्वेषां समान एव समादरः कृत इति कस्मै भैमीं दास्यतीति निश्चेतुमसमर्थास्ते जाता इत्यर्थः ॥ २९ ॥

बहूनामपि राज्ञां कुण्डिनपुरे समावेशो जात इत्याह। अङ्क इति। विदर्भेन्द्रपुरस्य भीमनगरस्य कुण्डिनस्य अङ्के क्रोडे एष समाजो राजसङ्घस्तथा न न सम्ममौ परिमाति स्म। अपितु पुरस्य महत्त्वात् तथैव सम्ममावित्यहं शङ्के मन्ये, यथा अगस्त्यस्य मुनेर्हस्ते पाणिपुटके पयोराशिः समुद्रः सम्ममौ, यथा वा मुरारेर्नारायणस्य जठरे उदरे जगत् विश्वं सम्ममौ। कुण्डिननगरमतिमहदासीदिति भावः ॥ ३० ॥

---

अत्र समुद्रादिष्वुपमेयेषु उपमानानां परिखादीनां साङ्गानामारोपात् समस्तवस्तुविषयं साङ्गरूपकमलङ्कारः, तथा अप्रकृतेन राजसाधारणेन प्रकृतस्य राजविशेषस्य भीमस्योपलब्धेरप्रस्तुतप्रशंसालङ्कारश्चेत्यनयोरङ्गाङ्गितया सङ्करः ॥२८॥ अत्र परोक्षवृत्तेष्वपीति का कथा प्रत्यक्षवृत्तेष्विति दण्डापूपिकयान्यार्थागमात् अर्थापत्तिः, कुण्डिने वासव इवेति उपमितसमासात् समासगतोपमा ॥ २९ ॥ अत्र "शङ्के इत्युत्प्रेक्षायां, मुनिहस्तहरिकुक्ष्यौपम्येन अल्पेऽपि पुरे समाजस्य महतः सम्माननोत्प्रेक्षणादुपमोत्प्रेक्षयोः सङ्करः, तेनाधाराधेययोरनानुरूप्यलक्षणाधिकालङ्कारः, तन्महत्त्वमत्यद्भुतं वस्तु च व्यज्यते" जी, एकस्योपमेयस्य भीमपुराङ्कस्य उपमानद्वयदर्शनादत्रोक्ता उपमा मालोपमेति बोध्यम्। छेकानुप्रासेन च एषां संसृष्टिः ॥ ३० ॥

पुरे पथिद्वारगृहाणि तत्र चित्रीकृतान्युत्सववाञ्छयैव ।
नभस्तु किर्मीरमकारि तेषां महीभुजामाभरणप्रभाभिः ॥ ३१ ॥
विलासवैदग्ध्यविभूषणश्री-स्तेषां तथाभूत् परिचारकेऽपि ।
अज्ञासिषुः स्त्रीशिशुबालिशास्तं यथागतं नायकमेव कञ्चित् ॥ ३२ ॥
अस्वेदगात्राश्चलचामरौघै-रमीलनेत्राः प्रतिवस्तुचित्रैः ।
अम्लानमाला विपुलातपत्रै-र्देवा नृदेवाश्च भिदां न भेजुः ॥ ३३ ॥

पुर इति । तत्र पुरे कुण्डिननगरे पथि राजमार्गे द्वाराणि येषां तादृशानि गृहाणि पन्थानश्च द्वाराणि गृहाणि चेति तानीति वा उत्सववाञ्छया विवाहोत्सवाभिलाषेण चित्रीकृतान्येव आलेपनादिना जनैर्विलेपितान्येव । न केवलमेतानि चित्रितानि, किन्तु नभस्तु तुरप्यर्थे आकाशमपि तेषामागच्छतां महीभुजां राज्ञाम् आभरणप्रभाभिर्भूषणकान्तिभिः किर्मीरं चित्रितम् अकारि कृतम् । आकाशमपि चित्रितं, गृहादीनि चित्रीकृतानीति किं वाच्यमित्यर्थः ॥ ३१ ॥

विलासेति । तेषां राज्ञां परिचारकेऽपि भृत्येऽपि विलासः कटाक्षविक्षेपादिश्टङ्गारचेष्टा वैदग्ध्यं वक्रोक्त्यादिभाषणचातुर्यं भूषणं सौवर्णकटकादि एषां श्रीः शोभा तथा अभूत् । यथा येन प्रकारेण तं परिचारकमपि स्त्रियः शिशवो बालिशा मूर्खाश्च कञ्चित् कमपि आगतं नायकमेव मुख्यं राजानमेव अज्ञासिषुः अमन्यन्त । विलासादिशोभया भृत्येऽपि स्त्र्यादीनां प्रधानराजभ्रान्तिरभूदित्यर्थः ॥ ३२ ॥

अस्वेदेति । तत्र देवा इन्द्रादयो नृदेवा राजानश्च भिदां परस्परभेदं न भेजुर्न पापुः, समाना एव बभूवुरित्यर्थः । अभेदमेव समानविशेषणैराह, देवाः किम्भूताः —अस्वेदं स्वभावतो घर्मजलरहितं गात्रं येषां ते, तथा चलानां चामराणामोघैः समूहैरुपलक्षिताः, तथा अमीलं स्वभावतो निर्निमेषं नेत्रं येषां ते, तथा प्रतिवस्तुचित्रैः सर्वेषु भूषणादिवस्तुषु आश्चर्यैरुपलक्षिताः, तथा स्वभावतोऽम्लाना माला पारिजातादिपुष्पमाल्यं येषां ते, तथा विपुलैरातपत्रैश्छत्रैरुपलक्षिताः नृदेवा अपि चलचामरौघैः कृत्वा अस्वेदगात्रास्तथा प्रतिवस्तुचित्रैः अतिमनोज्ञनगरीवस्तुसमूहदर्शनजनिताश्चर्यैः कृत्वा अमीलनेत्रास्तथा विपुलातपत्रैः कृत्वा अम्लानमालाः । सर्वथा राजानो देवतुल्या बभूवुरिति भावः ॥ ३३ ॥

---

"अत्र समृद्धिमद्वस्तुवर्णनादुदात्तालङ्कारः" जी ॥ ३१ ॥ अत्र भृत्येऽपि स्त्र्यादीनां प्रधानराजभ्रान्तेर्भ्रान्तिमान्, बालिशशब्दस्य 'शिशावज्ञे च बालिश' इत्यमरोक्तेरापाततः शिशुबालिशशब्दयोः पुनरुक्त्यावभासनात् परञ्च बालिशशब्दस्य अज्ञरूपार्थे पर्यवसानात् पुनरुक्तवदाभासोऽलङ्कारः "राजभृत्याश्च राजकल्पा इति राज्ञामैश्वर्योक्तेरतिशयोक्तिः" जी॥ ३२ ॥ अत्र देवनृदेवसमूहयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्ति स्तथा "अस्वेदगात्रादिपदार्थानां विशेषणगत्या देवनृदेवभेदाभावहेतुत्वात् पदार्थ हेतुकं काव्यलिङ्गमलङ्कारः ।" जी॥ ३३ ॥

अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु।
दिग्भ्यः समेतेषु नरेषु वाग्भिः सौवर्गवर्गो न नरैरचिह्नि॥ ३४॥
ते तत्र भैम्याश्चरितानि चित्रे चित्राणि पौरैः पुरि लेखितानि।
निरीक्ष्य निन्युर्दिवसं निशाञ्च तत्स्वप्नसम्भोगकलाविलासैः॥ ३५॥
सा विभ्रमं स्वप्नगतापि तस्यां निशि स्वलाभस्य ददे यदेभ्यः।
तदर्थिनां भूमिभुजां वदान्या सती सती पूरयति स्म कामम्॥ ३६॥

अन्यदप्यभेदकारणमाह। अन्योऽन्येति। नरैः कुण्डिनपुरवासिभिर्जनैर्दिग्भ्यः समेतेषु समागतेषु नरेषु मध्ये सौवर्गवर्गः स्वर्गे भवाः सौवर्गा देवास्तेषां वर्गः समूहो न अचिह्नि देवत्वेन न ज्ञातः। किम्भूतेषु, यतोऽन्योऽन्यभाषानवबोधे नानादिग्भवानां तेषां परस्परभाषाग्रहाभावे या भीतिर्भयं तस्या हेतोः संस्कृत्रिमाभिः संस्कृताभिर्वाग्भिः सर्वसाधारणीभिर्व्यवहारवत्सु परस्परं व्यवहारं कुर्वत्सु। संस्कृतभाषाया देवमनुष्यसाधारणत्वात् सर्वेषाञ्च तया व्यवहारदर्शनात् एते देवा मनुष्या वा इति विशिष्य निश्चेतुं जना न शक्नुवन्तीत्यर्थः। सौवर्गेत्यत्र स्वर्गीयेति क्वचित् पाठः॥ ३४॥

त इति। ते देवा नृदेवाश्च तत्र पुरि कुण्डिने पौरैः पुरवासिभिश्चित्रकरैश्चित्रे लेखितानि चित्रितानि चित्राणि नानाविधानि आश्चर्यजनकानि वा भैम्याश्चरितानि निरीक्ष्य दृष्ट्वा दिवसं निन्युर्गमयामासुः। तथा तस्या भैम्याः स्वप्ने यः सम्भोगः सुरतं तस्य कलाभिर्विलासैश्चुम्बनादिकलाकौशलैः कृत्वा निशाञ्च रात्रिमपि निन्युः। भैमीसम्पर्कियापारमात्रेणैव ते तमहोरात्रं गमयामासुरिति भावः। देवपक्षे अस्वप्नानां तेषां स्वप्नासम्भवात् स्वप्नसम्भोगेत्यस्य कामोन्मादजनितसम्भोगोऽर्थो बोद्धव्यः॥ ३५॥

सेति। सती पतिव्रतापि सा भैमी तस्यां स्वयंवरदिनपूर्वरात्रौ स्वप्नगता स्वप्नप्राप्ता सती एभ्यो भूमिभुग्भ्यः स्वलाभस्य निजप्राप्तेर्विभ्रमं विलासम् अथच विशेषेण भ्रान्तिं यत् ददे दत्तवती, तत् वदान्या बहुप्रदानशीला सती भवन्ती सा अर्थिनां याचकानां भूमिभुजां देवानां राज्ञाञ्च कामम् अभिलाषं पूरयति स्म, सत्यपि साध्वीत्वे वदान्यत्वात् तेषां कामं पूरितवतीत्यापाततः वस्तुतस्तु पतिव्रतायाः सर्वकामपूरणं विरुद्धं, किन्तु भ्रान्तिदशाया अलीकत्वात् सर्वकामपूरणेऽपि दोषाभावः। स्वप्नगतापीत्यत्रापिकारः सतीत्यनेन योजनीयः सङ्गतत्वात्। भूमिं भुञ्जन्ति पालयन्ति भुञ्जते उपभुक्तां कुर्वते चेति व्युत्पत्त्या भूमिभुक्पदेन देवा राजानश्च बोध्याः उभयोरेव प्राकरणिकत्वात्॥ ३६॥

अचिह्नीति "चिह्नवच्छब्दात् तत्करोतीति ण्यन्तात् कर्म्मणि लुङि णाविष्ठवद्भावात् 'विन्मतोर्लुक्' इति मतुपो लुक्" जी। अत्र नराणां सर्वेषामेव संस्कृतभाषाव्यवहारासम्बन्धेऽपि तत्सम्बन्धोक्तेः "भेदेऽप्यभेदलक्षणातिशयोक्तिः" जी॥ ३४॥ "अत्र च्छेकानुप्रासातिशयोक्त्यलङ्कारः" सा॥ ३५॥ अत्र विरोधाभासः, भूमिभुक्छब्दश्लेषेण प्रकृतानां राज्ञां देवानाञ्च एकधर्माभिसम्बन्धात् तुल्ययोगिता, छेकानुप्रासश्च॥ ३६॥

वैदर्भदूतानुनयोपहूतैः शृङ्गारभङ्गीष्वनुभाववद्भिः ।
स्वयंवरस्थानजनाश्रयस्तै-र्दिने परत्रालमकारि वीरैः ॥ ३७ ॥
भूषाभिरुच्चैरपि संस्कृते यं वीक्ष्याकृत प्राकृतबुद्धिमेव ।
प्रसूनबाणे विबुधाधिनाथ-स्तेनाथ साशोभि सभा नलेन ॥ ३८ ॥
धृताङ्गरागे कलितद्युशोभां तस्मिन् सभां चुम्बति राजचन्द्रे ।
गता वताक्ष्णोर्विषयं विलङ्घ्य क्व क्षत्रनक्षत्रकुलस्य कान्तिः ॥ ३९ ॥

अथ परदिने तेषां सभाप्रवेशमाह वैदर्भेति । तैर्वीरैः शूरैः परत्र परस्मिन् दिवसे स्वयंवरस्थानस्य स्वयंवरदेशस्य जनाश्रयो मण्डपोऽलमकारि अलङ्कृतः । किम्भूतैः— वैदर्भस्य भीमस्य दूतैः कर्तृभिरनुनयेन विनयेन उपहूतैराकारितैः, तथा शृङ्गारभङ्गीषु शृङ्गारविच्छित्तिषु अनुभाववद्भिर्निश्चयशालिभिर्निपुणैरित्यर्थः । सर्वेऽपि सभायामुपविष्टा इति भावः । 'अनुभावः प्रभावे स्यान्निश्चये भावबोधके' मे । 'मण्डपोऽस्त्री जनाश्रयः' अ ॥ ३७ ॥

नलोऽपि तत्रागतवानित्याह । भूषाभिरिति । विबुधानाम् देवानाम् अधिनाथ इन्द्रो यं नलं वीक्ष्य भूषाभिरलङ्कारैरुच्चैरतितरां संस्कृतेऽपि भूषितेऽपि प्रसूनबाणे कन्दर्पे प्राकृतबुद्धिमेव नीचबुद्धिमेव अकृत, सालङ्कृतो मदनोऽपि नलापेक्षया कुरूप इति बुद्धिं कृतवान् । अथानन्तर तेन नलेन सा सभा स्वयंवरसमाजोऽशोभि शोभिता, नलोऽपि तत्र सभायां प्रविष्ट इति भावः । *अथच विबुधानां पण्डितानामधिनाथः अतिपण्डितोऽपि संस्कृतेऽपि प्राकृतबुद्धिमकृतेति विरोधाभासः ।* 'प्राकृतश्च पृथग्जनः' अ ॥ ३८ ॥

नलं दृष्ट्वा सर्वेऽपि निःश्रीका जाता इत्याह । धृतेति । धृतोऽङ्गरागः कुङ्कुमाद्यनुलेपनं येन तादृशे, राजा चन्द्र इवेति राजचन्द्रे राजश्रेष्ठे तस्मिन् नले कलिता धृता दिवः स्वर्गस्य आकाशस्य च शोभा यया तादृशीं सभां चुम्बति प्रविशति सति क्षत्राणि नक्षत्राणीवेति तेषां कुलस्य समूहस्य कान्तिः शोभा वत खेदे अक्ष्णोश्चक्षुषोर्विषयं गोचरत्वं विलङ्घ्य परित्यज्य क्व कुत्र गता तन्न जाने इति शेषः । अतिसुन्दरं नलं दृष्ट्वा भैमी इममेव वरिष्यतीति निश्चित्य सर्वे राजानो निःश्रीका जाता इति भावः, अथच उदितमात्रत्वात् किञ्चिदारक्ते चन्द्रे आकाशमारूढे सति नक्षत्रसमूहस्य कान्तिर्नैव तिष्ठति ॥ ३९ ॥

"अत्र च्छेकानुप्रासोऽलङ्कारः" सा ॥ ३७ ॥ अत्र टीकोक्तविरोधाभासः, विबुधाधिनाथस्य प्रसूनबाणे प्राकृतबुद्धिकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, उपमानतया प्रसिद्धात् कामादपि नलस्याधिक्यप्रतीतेर्व्यतिरेकालङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्च ॥ ३८ ॥ "कलितद्युशोभामित्यत्र शोभेव शोभेति सादृश्याक्षेपात् निदर्शना, तथा अङ्गरागे श्लेषाद् बिम्बलौहित्यस्य, राजनि चन्द्रत्वस्य, क्षत्रे नक्षत्रत्वस्य आरोपात् रूपकाणि उक्तया निदर्शनया सङ्कीर्य्यन्ते" जी । टीकायान्तु राजचन्द्रे इत्यादौ उपमितसमासाश्रितत्वात् लुप्तोपमा, सभायां द्युसादृश्याक्षेपस्य उपमासाधकतया उपमैव टीकोक्ता ज्यायसी, च्छेकानुप्रासश्च ॥ ३९ ॥

द्राग् दृष्टयः क्षौणिभुजाममुष्मि-न्नाश्चर्यपर्युत्सुकिता निपेतुः।
अनन्तरं दन्तुरितभ्रु वान्तु नितान्तमीर्ष्याकलुषा दृगंशाः॥ ४० ॥
सुधांशुरेष प्रथमो भुवीति स्मरो द्वितीयः किमसावितीमम्।
दस्रस्तृतीयोऽयमिति क्षितीशाः स्तुतिच्छलान्मत्सरिणो निनिन्दुः॥ ४१ ॥
आद्यं विधोर्ज्जन्म स एष भूमौ द्वैतं युवासौ रतिवल्लभस्य।
नासत्ययोर्मूर्त्तिरियं तृतीया इति स्तुतस्तैः किल मत्सरैः सः॥ ४२ ॥

द्रागिति। क्षौणिभुजां राज्ञां दृष्टयश्चक्षूंषि आश्चर्येण अहो लोकातीतमस्य सौन्दर्यमिति विस्मयेन पर्युत्सुकिता दर्शनार्थमुत्कण्ठिताः सत्यः अमुष्मिन् नले द्राक् झटिति निपेतुः, साभिलाषं पतितवत्यः। अनन्तरं क्रोधवशात् दन्तुरिता कुटिलीकृता भ्रूर्यैस्तादृशां क्षौणिभुजां दृगंशा नेत्रप्रान्ताः नितान्तमत्यर्थम् ईर्ष्यया कलुषाः कषायिताः सन्तोऽमुष्मिन् निपेतुः। राजानः प्रथममदृष्टपूर्वसौन्दर्यं नलं साभिलाषं ददृशुरनन्तरञ्च भैमी अस्मान् विहाय अतिसुन्दरमिममेव वरिष्यतीति मत्वा क्रुद्धा बभूवुरिति भावः॥ ४० ॥

सुधांशुरिति। क्षितीशाः केचिद्राजानो मत्सरिण ईर्ष्यायुताः सन्त इति स्तुतिच्छलात् किंशब्दस्य प्रश्नकाकूभयार्थत्वात् स्तवव्याजेन इमं नलं निनिन्दुः। इति किं, भुवि पृथिव्याम् एष किं प्रथमो नवीनः सुधांशुश्चन्द्र इति, तथा भुवि असौ किं द्वितीयः स्मरः कन्दर्पः इति, तथा भुवि अयं किं तृतीयो दस्रोऽश्विनीकुमार इति स्तुतिच्छलात् निनिन्दुः। अत्र प्रश्नार्थकेन किं-शब्देन अभेदाध्यवसायरूपातिशयोक्त्युत्थानात् स्तुतिर्गम्यते,काक्वर्थेन तु तेन निन्दा,यथा एष किं भुवि नवीनः सुधांशुरपितु नैवेति। एवं सर्वत्र भुवीत्यस्य किमित्यस्य च वाक्यत्रयेऽप्यनुषङ्गः॥ ४१ ॥

उक्तमेवार्थं पुनरप्याह। आद्यमिति। मत्सरैः परद्वेषिभिः कैश्चित् तैर्नृपैः स नलः किल व्याजेन, इत्यनेन प्रकारेण स्तुतः, इति किं, स एष युवा भूमौ विधोश्चन्द्रस्य आद्यं जन्म, नवीन-श्चन्द्रः किं पृथिव्यामुत्पन्नः। तथा असौ युवा रतिवल्लभस्य कामस्य द्वैतं द्वितीयः कामः किम्। तथा इयं नासत्ययोरश्विनीकुमारयोस्तृतीया मूर्त्तिः, अयं तृतीयोऽश्विनीकुमारः किम्। अत्रापि अध्याहृतस्य किं शब्दस्य प्रश्नकाकूभयार्थकत्वात् स्तुतिनिन्दे बोध्ये। द्वैतमिति द्विता एव द्वैतमिति क्वचित् स्वार्थिकप्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिक्रम्य वर्त्तन्त इति क्लीवत्वम्। अत्रार्थाभेदेऽपि वक्तृभेदात् वाक्यभेदाच्च न पौनरुक्तमिति बोध्यम्॥ ४२ ॥

---

"अत्रौत्सुक्येर्ष्याप्रयुक्तानां पूर्णापूर्णदृष्टीनां द्वयीनां क्रमेणैकस्मिन् नले निपतनोक्ते द्वितीय-पर्यायभेदः, तथौत्सुक्येर्ष्यालक्षणविस्मयद्वेषसञ्चारिभावनिबन्धनाद्भावालङ्कारः प्रेयोऽपरपर्याय इति द्वयोः संसृष्टिः" जी। छेकानुप्रासश्च॥ ४० ॥ अत्र नले सुधांशुप्रभृतीनामभेदाध्य-वसायादतिशयोक्तित्रयम्। "अपह्नुतिसन्देहालङ्कारः" सा। "चन्द्रत्वाद्युत्प्रेक्षात्रयस्य संसृष्टिः" जी। नात्र व्याजस्तुतिः तदर्थस्य शब्दादेव स्फुटत्वात् वैचित्र्याभावेन तस्या अलङ्कारानर्हत्वात् ॥ ४१ ॥ 'मत्सरोऽन्यशुभद्वेषस्तद्वत्कृपणयोरपि' अ। अत्र स्तुतिच्छलेन निन्दाप्रतीतेर्व्याजस्तुतिः,

इहेदृशाः सन्ति कतीति दुष्टै-र्दृष्टान्तितालीकनलावली तैः।
आत्मापकर्षं किल मत्सराणां द्विषः परस्पर्द्धनया समाधिः ॥ ४३ ॥
गुणेन केनापि जनेऽनवद्ये दोषान्तरोक्तिः खलु तत् खलत्वम्।
रूपेण तत्संसददूषितस्य सुरैर्नरत्वं यददूषि तस्य ॥ ४४ ॥
नलानसत्यानवदत्स सत्यः कृतोपवेशान् सविधे सुरेशान्।
नोभाविलाभूः किमु दर्पकश्च भवन्ति नासत्ययुतौ भवन्तः ॥ ४५ ॥

केचित् व्यक्तमेव नलं निनिन्दुरित्याह। इहेति। इह सभायाम् ईदृशा एतत्सदृशाः कति बहवः सन्ति, इति अस्मिन् विषये दुष्टैर्दुरात्मभिस्तैः कैश्चित् राजभिः अलीकनलानां मिथ्यानलीभूतानामिन्द्रादीनाम् आवली समूहः दृष्टान्तिता दृष्टान्तीकृता, कथमेनं स्तुथ, एतत्सदृशा बहवो विद्यन्ते, संप्रति अस्यां सभायामप्येते दृश्यन्तामिति अलीकनलीभूता इन्द्रादयो दृष्टान्तत्वेन दर्शिता इत्यर्थः। नन्वलीकनलीभूता अपि ते न नलयोग्या, अयोग्यानाञ्च दृष्टान्तीकरणे दृष्टान्तयितुरेवापकर्षो भवति, तत्कथं तैः स्वापकर्षः स्वीकृत इत्यत्राह,- किल यतः मत्सराणामीर्ष्यावताम् आत्मापकर्षं अलापिकारी बोध्यः निजस्यापकर्षे भवत्यपि द्विषः शत्रोः परेण अयोग्येन सह स्पर्द्धनया तुल्यतया समाधिः समाधानम्। निजस्यापकर्षमविविच्यैव सादृश्यदाने व्यग्रता भवतीत्यर्थः ॥४३॥

गुणेनेति। केनापि अनिर्वचनीयेन गुणेन सौन्दर्यादिना अनवद्ये अनिन्दनीये जने यत् दोषान्तरस्य उक्तिर्दोषान्तरारोपणं, तत् खलु निश्चितं खलत्वं क्रूरत्वम्। यत् यस्मात् रूपेण सौन्दर्येण तस्यां संसदि अदूषितस्य अनिन्दितस्य तस्य नलस्य नरत्वं सुरैर्देवैरदूषि दूषितम्। अयमतिसुन्दरः सत्यं किन्तु नरोऽल्पायुरिति सुरैर्यत् निन्दितं, तदेव तेषां खलत्वमित्यर्थः। डलयोरैक्यात् नरत्वदूषणव्याजेन नलत्वमेव दूषितमिति ध्वनिः। देवा अपि नलं दृष्ट्वा दृष्र्योजाता इति भावः ॥ ४४ ॥

नलस्यापि अलीकनलीभूतान् इन्द्रादीन् दृष्ट्वा विस्मयो जात इति व्यञ्जयन्नाह। नलानिति। स सत्यो नलः सविधे समीपे कृतोपवेशान् अवस्थितान् असत्यान् नलान् अलीकनलीभूतान् सुरेशान् इन्द्रादीन् अवदत्, वक्ष्यमाणमुवाच। किमवददित्याह- उ भोः भवन्तः नासत्ययुतौ अश्विनीकुमाराभ्यां सहितौ इलाभूः पुरूरवा दर्पकः कामश्च एतौ उभौ किं न भवन्ति, अपितु पुरूरवःकन्दर्पाश्विनीकुमारा एव भवन्त इत्यर्थः। नलं दृष्ट्वा यथान्येषां विस्मयो जातस्तथा नलस्यापि अलीकनलचतुष्टयदर्शनेन विस्मयो जात इति भावः ॥ ४५ ॥

---

नले चन्द्रादीनामभेदाध्यवसायादतिशयोक्तिश्चेति सङ्करः ॥ ४२ ॥ अत्र मत्सरसामान्येन विशेषाणां दुष्टानां राज्ञां समर्थनाद् अर्थान्तरन्यासश्छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ४३ ॥ "अत्र सामान्येनोक्तस्य खलत्वस्य नरत्वदूषणेन समर्थनाद्विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः" जी। 'खलु तत् खलत्वम्' इति च्छेकानुप्रासः, द्वितीयार्द्धे यमकञ्चेति संसृष्टिः ॥४४॥ "नासत्यावश्विनौ दस्रौ" अ। अत्र च्छेकानुप्रासवृत्त्यनुप्रासालङ्कारौ ॥ ४५ ॥

अमी तमाहुः स्म यदत्र मध्ये कस्यापि नोत्पत्तिरभूदिलायाम् ।
अदर्पकाः स्मः सविधे स्थितास्ते नासत्यतां नापि बिभर्त्ति कश्चित् ॥ ४६ ॥
तेभ्यः परान्नः परिभावयस्व श्रिया विदूरीकृतकामदेवान् ।
अस्मिन्समाजे बहुषु भ्रमन्ती भैमी किलास्मासु घटिष्यतेऽसौ ॥ ४७ ॥
असाम यन्नाम तवेह रूपं स्वेनाधिगत्य श्रितमुग्धभावाः ।
तन्नो धिगाशापतितान्नरेन्द्र धिक् चेदमस्मद्विबुधत्वमस्तु ॥ ४८ ॥

अमी इति। अमी मिथ्यानलाः सुरेशास्तं सत्यं नलम् आहुः स्म, उक्तवन्तः। किमाहुः स्मेत्याह। अत्र सभायां यत् ये चत्वारो वयम्, एषां मध्ये कस्यापि इलायां पुरूरवोमातरि उत्पत्तिर्नाभूत्, अस्माकं कोऽपि पुरूरवा नेत्यर्थः। तथा ते तव सविधे समीपे स्थिता वयं अदर्पका दर्पकाद्भिन्नाः स्मः भवामः, वय कन्दर्पो नेत्यर्थः। तथा अत्र अस्मासु मध्ये कश्चित् कोऽपि नासत्यताम् अश्विनीकुमारतां न बिभर्त्ति न धारयति, अस्माकं मध्ये कोऽप्यश्विनीकुमारो नेत्यर्थः। त्वया पुरूरवःप्रभृतिचतुष्टयविषयकः प्रश्नः कृतस्तेषां मध्ये न कोऽपि वयमिति भावः। अथच इलायां भूम्याम् अस्माकं मध्ये कस्यापि उत्पत्तिर्नाभूत्, वयं न भूमिजाताः। किन्तु स्वर्गीया देवा इत्यर्थः। तथा तव समीपे स्थिताः सन्तोऽदर्पकास्त्वदीयसौन्दर्यतिरस्कृतत्वाद्दर्पशून्याः स्मः। तथा अस्माकं कश्चित् असत्यताम् अलीकनलरूपतां न बिभर्त्तीति न, अपितु त्वद्रूपधारणात् वयमसत्या एवेत्यर्थः। इत्थं तैस्तात्त्विको निजपरिचयो ध्वनितः। यदित्यव्ययं प्रथमाबहुवचनान्तम्। अत्र प्रश्नोत्तरभूतश्लोकद्वये वक्रोक्त्यलङ्कारो व्यङ्ग्यः। 'अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि। अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा' इति लक्षणात्। 'इलोर्वीवाग्बुधस्त्री गौः' हे ॥४६॥

तर्हि के यूयमित्याशङ्क्याह। तेभ्य इति। श्रिया शोभया विदूरीकृतस्तिरस्कृतः कामदेवो यैस्तादृशान्नोऽस्मान् तेभ्य एलादिभ्यः परानन्यान् परिभावयस्व जानीहि। वयं एलादिभ्यो भिन्नाः केऽपि जना इति सामान्यतो जानीहीत्यर्थः। अत्रागमने कारणमाह, --अस्मिन् समाजे सभायां बहुषु राजसु विषये भ्रमन्ती असौ भैमी किल सम्भावनायाम् अस्मासु घटिष्यते योगं यास्यतीति दुराशयाऽत्रागता वयमित्यर्थः। अथच हे श्रिया सौन्दर्येण विदूरीकृतकाम जितमन्मथ नल तेभ्यः परान् अस्मान् देवान् परिभावयस्व। तथा अस्मिन् समाजे बहुषु पञ्चसु सदृशेषु भ्रमन्ती मुह्यन्ती भैमी अस्मासु मध्ये कस्मिंश्चित् घटिष्यते। वयं देवा भैमीवरणार्थमागता इति ध्वनिः। घटिष्यत इति युजादित्वादत्र णिङभावः ॥ ४७ ॥

असामेति। हे नरेन्द्र नाम प्राकाश्ये वयं स्वेन साक्षादात्मनैव नतु परेण तव रूपं सौन्दर्यम् अधिगत्य ज्ञात्वा दृष्ट्वा श्रितो धृतो मुग्धभावो मूढता यैस्तादृशाः सन्तो यद्यस्मात् इह सभायाम् असाम तिष्ठाम, तत्तस्मात् नोऽस्माकम् आशया प्रत्याशामात्रेण पतितां भैमीपतित्वं धिक्, सा

---

'इला कलत्रे सौम्यस्य धरित्र्यां गवि वाचि च' मे। 'कन्दर्पो दर्पकोऽनङ्गः' अ ॥ ४६ ॥
"अत्रार्थद्वयस्यापि विवक्षितत्वात् केवलप्रकृतश्लेषः"। जी। छेकानुप्रासश्च ॥ ४७ ॥

सा वागवज्ञायितमां नलेन तेषामनाशङ्कितवाक्छलेन ।
स्त्रीरत्नलाभोचितयत्नमग्न-मेनं नहि स्म प्रतिभाति किञ्चित् ॥ ४९ ॥
यः स्पर्द्धया येन निजप्रतिष्ठां लिप्सुः स एवाह तदुन्नतत्वम् ।
कः स्पर्द्धितुः स्वाभिहितस्वहानेः स्थानेऽवहेलां बहुलां न कुर्य्यात् ॥ ५० ॥

निन्दनीया अस्तु । आशया भैमीप्राप्तिदुराशया आपतितान् आगतान् नोऽस्मान् धिगिति वा । तथा अस्माकम् इदं विबुधत्वं पण्डितत्वञ्च धिगस्तु । यतो वय तव सौन्दर्यमात्रदर्शनेनैव विमूढा जाता, अतोऽस्माकं दुराशया आगमनं पण्डितत्वञ्च वृथैवेत्यर्थः । अथच स्वेन आत्मशरीरेण तव रूपं स्वरूपम् अधिगत्य प्राप्यैव श्रितमुग्धभावा अङ्गीकृतसौन्दर्य्याः सन्तो यत इह असाम दीप्याम, तत्तस्मात् अस्माकम् आशापतितां दिक्पतित्वं धिक्, तथा विबुधत्वं देवत्वञ्च धिगस्तु । यतो वयं तव शरीरं गृहीत्वा सुन्दरा जाता, अतो वयं वृथैव दिक्पाला देवाश्चेत्यर्थः । स्वे आत्मनि तव रूपं नाधिगत्य श्रितमुग्धभावाः सन्तो यदिह असामेति वा । स्वेन तव रूपम् अधिगत्य श्रित-मुग्धभावाः सन्तो यदिह तव नाम एको नल एव भैमीवरणयोग्य इति प्रसिद्धिम् असाम नाशित-वन्त इत्यपि वा । हे स्वेन धनानां स्वामिन् नरेन्द्रेत्यपि व्याचक्षते । असामेति अस्भुवीत्यस्य असगतिकान्तिदीप्त्यादानेष्वित्यस्य च लोट उत्तमपुरुषबहुवचनेन रूपम्, पक्षे षोऽन्तकर्मणीत्यस्य लुङि रूपम् ॥ ४८ ॥

नलेन पुनस्तद्वचनानां यथाश्रुतो वाच्यार्थ एव गृहीतो, नतु व्यङ्ग्यार्थ इत्याह । सेति । अना-शङ्कितम् अनाकलितं देवानां वाक्छलं द्वितीयार्थलक्षण वाक्कापट्यं येन तादृशेन नलेन तेषां देवानां सा पूर्वोक्ता वाक् अवज्ञायितमाम् अतिशयेनावज्ञाता । द्वितीयार्थानुसन्धानाभावेन श्रुताप्य-श्रुतावत् विहितेत्यर्थः । हि यस्मात् स्त्रीरत्नस्य भैम्या लाभे उचितो योग्यो यो यत्न उपायस्तत्र मग्नं तत्परमेनं नलं प्रति लक्षीकृत्य किञ्चित् किमपि न भाति स्म न स्फुरति स्म । भैमीप्राप्त्युपायान्वे-षणव्यग्रतया तैः कथितमपि देवत्वं न ज्ञातमिति भावः ॥ ४९ ॥

अवज्ञायां कारणान्तरमप्याह । य इति । यो जनः येन जनेन सह स्पर्द्धया निजप्रतिष्ठां स्वस्य गौरव लिप्सुर्लब्धुमिच्छुर्भवति । स एव जनो यस्मात् तस्य उन्नतत्वं स्वस्मादाधिक्यं आह कथयति । तस्मात् स्वेनैव अभिहिता उक्ता स्वस्य हानिर्न्यूनता येन तादृशस्य स्पर्द्धितुः सम्बन्धे बहुलाम् अधिकतराम् अवहेलाम् अवज्ञां स्थाने युक्तं को जनो न कुर्य्यात्, अपितु सर्व एव करोति । प्रकृते भैम्यर्थ्यं नलरूपं धारयद्भिर्देवैर्नलस्यैवाधिकता, स्वेषां च न्यूनता व्यक्तीकृता तस्मात्तेनैव नलेन तेषामवज्ञा युक्तैव कृतेति भावः ॥ ५० ॥

---

'मुग्धः सुन्दरमूढयोः', 'विबुधः पण्डिते देवे' वि । अत्र "पूर्व एवालङ्कारः" जी ॥ ४८ ॥ अत्र तस्या वाचः अवज्ञां प्रति अनाशङ्कितवाक्छलेनेति विशेषणपदार्थस्य, तथा प्रतिभानाभावे स्त्रीरत्ने-त्यादिविशेषणपदार्थस्य हेतुत्वात् काव्यलिङ्गद्वयं, स्त्रीरत्नेतिरूपकं, नलेन छलेनेति अन्त्यानुप्रासः, अन्यत्र च्छेकानुप्रासश्चेति संसृष्टिः ॥ ४९ ॥ 'युक्ते द्वे साम्प्रतं स्थाने' अ । अत्र यत्तत् त-

गीर्देवतागीतयशःप्रशस्तिः श्रिया तडित्वल्ललिताभिनेता ।
मुदा तदावैक्षत केशवस्तं स्वयंवराडम्बरमम्बरस्थः ॥ ५१ ॥

अष्टौ तदाष्टासु हरित्सु दृष्टीः सदो दिदृक्षुर्निदिदेश देवः ।
लैङ्गीमदृष्ट्वापि शिरःश्रियं यो दृष्टौ मृषावादितकेतकीकः ॥ ५२ ॥

एकेन पर्य्यक्षिपदात्मनाद्रिं चक्षुर्मुरारेरभवत् परेण ।
तैर्द्वादशात्मा दशभिस्तु शेषै-र्दिशो दशालोकत लोकपूर्णाः ॥ ५३ ॥

अथ सभायां सरस्वत्यागमनं वर्णयितुं लक्ष्मीसरस्वतीसहितस्य नारायणस्योर्ध्वमागमनं वर्णयति । गीर्देवतेति । केशवो नारायणस्तदा तस्मिन् समये अम्बरस्थ आकाशमार्गस्थितः सन् मुदा हर्षेण तं स्वयंवरस्य आडम्बरं समारम्भम् अवैक्षत ददर्श । किम्भूतः—गीर्देवतया सरस्वत्या गीता यशसः प्रशस्तिरुत्कर्षो यस्य सः । तथा श्रिया लक्ष्म्या तडित्वतो विद्युत्सहितमेघस्य यत् ललितं विलासस्तस्य अभिनेता अभिनयं कुर्वाणः । स्वयंवरदर्शनार्थं कौतुकेन लक्ष्मीसरस्वती-सहितो नारायणस्तत्रागतवानिति भावः । 'आडम्बरः समारम्भे गजगर्जिततूर्ययोः' वि ॥ ५१ ॥

ब्रह्मापि तत्कौतुकदर्शनार्थं तत्रागतवानित्याह । अष्टाविति । स देवः सदः स्वयंवरसभां दिदृक्षुर्द्रष्टुमिच्छुः सन् तदा तस्मिन् समये सभाया अष्टासु हरित्सु दिक्षु अष्टौ दृष्टीः चतुर्मुखत्वात् अष्टौ चक्षूंषि निदिदेश प्रेरितवान् । अष्टाभिश्चक्षुर्भिरेकदैव समाजशोभां ददर्शेत्यर्थः । एकदैव स्वयंवरशोभादर्शनात् तस्याष्टौ चक्षूंषि सफलानि जातानीति भावः । स कः, यो देवः लैङ्गीं लिङ्गरूपशिवसम्बन्धिनीं शिरःश्रियं मस्तकशोभाम् अदृष्ट्वापि अविलोक्यापि दृष्टौ लिङ्गशिरोदर्शन-विषये मृषावादिता मिथ्याभाषणं कारिता कूटसाक्षिणी कृता केतकी येन तादृशः ब्रह्मेति भावः । पुरा किल महत्त्वे विवदमानौ विष्णुब्रह्माणौ शिवलिङ्गस्य पादौ शिरश्च विलोकयितुं पातालं सत्यलोकञ्च गतौ । अनन्तरं पातालं गत्वा चरणावदृष्ट्वा विष्णुर्मया चरणौ न दृष्टाविति सत्यमेव देवसभायामुक्तवान् । ब्रह्मापि शिरःसीमां नापश्यत्, किन्तु वायुना शिरसः पतन्तीं केतकीं गृहीत्वा शिरो दृष्टमिति देवसभायां मृषोक्तवान् । तत्र साक्षित्वेन इयमानीतेति ब्रह्मणा केतकी कूट-साक्षिणी कृतेति पुराणवार्त्ता ॥ ५२ ॥

निरन्तरं भ्रमन्तौ सूर्याचन्द्रमसावपि स्वयंवरशोभां ददृशतुरित्याह श्लोकद्वयेन । एकेनेति । द्वादश आत्मानो मूर्त्तयो यस्य स द्वादशात्मा सूर्य एकेनात्मना अद्रिं सुमेरुं पर्यक्षिपत् प्रदक्षिणी-चकार । परेण अन्येन आत्मना मुरारेः स्वयंवरशोभां पश्यतो नारायणस्य च दक्षिणनयनम्

---

किमूशब्दाभिहिताप्रस्तुतात् सामान्यात् प्रस्तुतनलदेवरूपविशेषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः, उत्तरार्द्धं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गं, छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ५० ॥ 'तडित्वल्ललिताभिनेता' इति उपमा, छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासश्चेति संसृष्टिः ॥ ५१ ॥ "शिवशिरःपारमिव स्वयंवरागतजनतासागरपारमपि अष्टाभिर्दृष्टिभिः पश्यन्नपि नापश्यदित्यर्थः" जी । "अत्रानुप्रासालङ्कारः" सा ॥ ५२ ॥

प्रदक्षिणं दैवतहर्म्यमद्रिं सदैव कुर्वन्नपि शर्वरीशः।
दृष्ट्या महेन्द्रानुजदृष्टिमूर्त्त्या न प्राप तद्दर्शनविघ्नतापम्॥ ५४॥
आलोकमाना वरलोकलक्ष्मी-न्तात्कालिकीमप्सरसो रसोत्काः।
जनाम्बुधौ तत्र निजाननानि वितेनुरम्भोरुहकाननानि॥ ५५॥
न यक्षलक्षैः किमलक्षि नो सा सिद्धैः किमध्यासि सभाप्तशोभा।
सा किन्नरैः किं न रसादसेवि नादर्शि हर्षेण महर्षिभिर्वा॥ ५६॥

अभवत्। शेषैरवशिष्टैस्तै र्दशभिरात्मभिस्तु लोकैर्जनैः पूर्णा दश दिश आलोकत। दशभि-र्मूर्त्तिभिः दशसु दिक्षु स्थितानां लोकानां धर्माधर्मकृत्यानि दृष्टवानित्यर्थः। नारायणस्य चक्षुर्भूत्वा स्वयंवरशोभां ददर्शेति प्रस्तुतम्, अपरद्वयं प्रासङ्गिकम्। निरन्तरभ्रमणशीलस्य मम कथं दश-दिग्भवजनवृत्तान्तपरिज्ञानं मेरुप्रदक्षिणं भाविभैमीस्वयंवरदर्शनञ्च भविष्यतीति पुरा विविच्यैव सूर्यः किं द्वादशात्मा एकेनात्मना नारायणचक्षुश्चाभवदित्युत्प्रेक्षात्र ध्वन्यते। 'सुरसूर्यार्यमादित्य-द्वादशात्मदिवाकराः' अ॥ ५३॥

प्रदक्षिणमिति। शर्वरीशश्चन्द्रः सदैव सर्वस्मिन् काल एव देवतानां हर्म्यं निवासस्थानम् अद्रिं सुमेरुं प्रदक्षिणं कुर्वन्नपि महेन्द्रानुजस्य नारायणस्य दृष्टिमूर्त्त्या वामनयनरूपेण देहेन कृत्वा दृष्ट्या पश्यन् सन् तस्य स्वयंवरस्य दर्शने यो विघ्नस्तेन तापं दुःखं न प्राप। चन्द्रोऽपि नारायणचक्षुर्भूत्वा स्वयंवरशोभां ददर्शेत्यर्थः॥ ५४॥

तद्दर्शनार्थं अप्सरसोऽपि सभायामाजग्मुरित्याह। आलोकेति। रसेनानुरागेण उत्का उत्-कण्ठिताः सत्यस्तात्कालिकीं स्वयंवरसमयजातां वरलोकानां विवाहार्थमुपस्थितानां राज्ञां लक्ष्मीं शोभाम् आलोकमानाः पश्यन्त्योऽप्सरसः स्वर्वेश्यास्तत्र जनाम्बुधौ जनसमूहरूपसमुद्रे निजाननानि स्वीयमुखानि अम्भोरुहकाननानि कमलवनानि वितेनुश्चक्रुः। अन्यत्रापि जलाशये कमलवनानि भवन्त्येव। अप्सरसोऽपि समाजमाजग्मुरिति भावः॥ ५५॥

नेति। आप्ता प्राप्ता शोभा यया तादृशी सा सभा यक्षलक्षैर्यक्षसमूहैः किं न अलक्षि न दृष्टा, अपितु अलक्ष्येव। तथा सिद्धैः सिद्धगणैर्वा सा किं नो अध्यासि नाधिष्ठिता, अपितु अध्यास्येव। तथा रसादनुरागात् सा किन्नरैः किं नासेवि न सेविता, अपितु असेव्येव। तथा महर्षिभिरृषि-श्रेष्ठैर्वा हर्षेण सा नादर्शि, न दृष्टा अपितु अदर्श्येव॥ ५६॥

---

अत्र छेकानुप्रासोऽलङ्कारः। दशानाम् आत्मनां क्रमेण दशसंख्यकदिग्भिः सम्बन्धात् "यथा-संख्यमलङ्कार" सा॥ ५३॥ अत्र चतुर्थपादार्थं प्रति विशेषणीभूततृतीयपादार्थस्य हेतुत्वात् काव्यलिङ्गम्। छेकानुप्रासश्च॥ ५४॥ अत्र रसोत्का इति पदार्थस्य आलोकनहेतुत्वात् काव्यलिङ्गम्, जने अम्बुधित्वारोपस्य निजाननेषु अम्भोरुहकाननत्वारोपे निमित्तत्वात् परम्परित-रूपकमलङ्कारः, पूर्वार्द्धे अनुप्रासः, उत्तरार्द्धे चान्त्ययमकमिति संसृष्टिः॥ ५५॥ "अत्र छेकानुप्रासोऽलङ्कारः" सा॥ ५६॥

वाल्मीकिरश्लाघत तामनेक-शाखत्रयीभूरुहराजिभाजा।
क्लेशं विना कण्ठपथेन यस्य दैवी दिवः प्राग्भुवमागमद् वाक् ॥ ५७ ॥
प्राशंसि संसद् गुरुणापि चार्वी चार्वाकतासर्वविदूषकेण।
आस्थानपट्टं रसनां यदीयां जानामि वाचामधिदेवतायाः ॥ ५८ ॥
नाकेऽपि दीव्यत्तमदिव्यवाचि वचःस्रगाचार्यकवित् कवियः।
दैतेयनीतेः पथि सार्थवाहः काव्यः स काव्येन सभामभाणीत् ॥ ५९ ॥

वाल्मीकिरिति। स वाल्मीकिस्तां सभाम् अश्लाघत स्तुतवान्। स कः, दैवी वाक् पद्यमयी संस्कृता वाणी यस्य कण्ठपथेन कण्ठमार्गेण क्लेशं विना अनायासेन दिवः स्वर्गात् प्राक् प्रथमं भुवं पृथ्वीम् आगमत् आगता। प्रथमं भूमौ यः पद्यमयसंस्कृतप्रवर्त्तक इत्यर्थः। किम्भूतेन कण्ठपथेन,—अनेकाः शाखा आश्वलायनादयो यस्यास्तादृशी या त्रयी त्रिवेदी सैव भूरुहराजिर्वृक्षश्रेणी तां भजत इति तादृशेन सशाखवेदत्रयपाठकेनेत्यर्थः। अन्योऽपि बहुस्कन्धवृक्षश्रेणीयुक्तमार्गेण दूरादप्यनायासेन आगच्छति। वाल्मीकिमुनिरपि तत्रागतवानिति भावः। 'शाखा द्रुमांशे वेदांशे भुजे पक्षान्तरेऽन्तिके' हे ॥ ५७ ॥

प्राशंसीति। चार्वाकतया नास्तिकतया सर्वेषां वेदादीनां विदूषकेणापि खण्डकेनापि तेन गुरुणा बृहस्पतिना चार्वी अतिमनोज्ञा सा संसत्सभा प्राशंसि स्तुता। यदीयां यत्सम्बन्धिनीं रसनां जिह्वां वाचामधिदेवतायाः सरस्वत्या आस्थानपट्टं सभासिंहासनम् अहं जानामि मन्ये तस्य जिह्वाग्रे सदा सरस्वती वसतीत्यर्थः। बृहस्पतिरपि तत्रागत इति भावः। पुरा किल असुरमोहनार्थं बृहस्पतिना चार्वाकशास्त्रं प्रणीय वेदादि दूषितम् ॥ ५८ ॥

नाकेऽपीति। स काव्यः शुक्रः काव्येन 'तददोषौ शब्दार्थौ' इत्यादिलक्षणाक्रान्तेन प्रबन्धविशेषेण सभाम् अभाणीत् अवर्णयत्। स कः, यः दीव्यत्तमा अतिशयेन दीव्यन्ती शोभमाना दिव्या संस्कृता वाक् यत्र तादृशेऽपि नाके स्वर्गे यः कविः कवित्वेन ख्यातः। यत्र स्वर्गे सर्वेऽपि कवयस्तत्रापि प्राधान्यात् कवित्वेन प्रसिद्ध इत्यर्थः। किम्भूतः यतो वचःस्रजि वचनमालागुम्फने विषये आचार्यकं कौशलं वेत्तीति तादृशः। तथा दैतेयनीतेर्दैत्यानां नीतिशास्त्रस्य पथि मार्गे सार्थवाहः मार्गप्रदर्शकः। दैत्यानां नीतिशास्त्रप्रवर्त्तक इत्यर्थः। सुरासुराणां मान्यः शुक्रोऽपि तत्रागत इति भावः ॥ ५९ ॥

अत्र शाखाशब्दश्लेषात् वेदांशे तरुशाखात्वारोपः त्रय्यां भूरुहत्वारोपे निमित्तमिति श्लिष्टपरम्परितरूपकम्, अनयोरारोपयोः कण्ठे पथित्वारोपस्य च शाब्दत्वात् वाचि स्त्रीत्वारोपस्य च आर्थत्वाद् एकदेशविवर्त्तिता, छेकानुप्रासश्च ॥ ५७ ॥ 'त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तनिशाचराः' इत्यादिरूपं वेदादिदूषणमिति। 'शासनान्तरपीठयोः पट्टम्' वि। आस्थानपट्टे रसनासम्भावनायाः जानामीति पदेनाभिधानाद् वाच्योत्प्रेक्षा, च्छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥ ५८ ॥ 'काव्यं ग्रन्थे ग्रहे काव्यः' वि। अत्र वचसि स्रक्त्वस्य, नीतेः पद्धतौ श्लेषात्

अमेलयद्भीमनृपः परं न नाकर्षदेतान् दमनस्वसैव ।
इदं विधातापि विचित्य यूनः स्वशिल्पसर्वस्वमदर्शयन्नः ॥ ६० ॥
एकाकिभावेन पुरा पुरारि-र्यः पञ्चतां पञ्चशरं निनाय ।
नद्भीसमाधानममुष्य काय-निकायलीलाः किममी युवानः ॥ ६१ ॥
पूर्णेन्दुबिम्बाननुमासभिन्ना-नस्थापयत् क्वापि निधाय वेधाः ।
तैरेव शिल्पी निरमादमीषां मुखानि लावण्यमयानि मन्ये ॥ ६२ ॥

शुक्रवर्णितं काव्यमेवाह। अमेलयदिति। भीमनृपः परं केवलं एतान् यूनो नामेलयत् भैमीस्वयंवरार्थं नानीतवान्। तथा दमनस्वसैव भैम्येव परं एतान् नाकर्षत्, स्वसौन्दर्यादि-गुणेन नाकृष्टवती किन्तु विधातापि एतान् यूनो विचित्य एकदेशस्थीकृत्य इदं स्वशिल्पसर्वस्वम् एतावन्मम विज्ञानकौशलमिति नोऽस्मान् अदर्शयत् दर्शितवान्। इदम् अत्यन्तमभोत्कर्षलक्षण-वस्तुध्वन्यात्मकं काव्यम् ॥ ६० ॥

एकाकीति। पुरा पूर्वं यः पुरारिः शिवः एकाकिभावेन एकाकित्वेन असहायत्वेन हेतुना पञ्चशरं कामं पञ्चतां मरणं निनाय, मारयति स्म। किमुतप्रेक्षे, अमुष्य पञ्चशरस्य कायनिकायलीलाः शरीरव्यूहविलसितरूपा अमी युवानः किम्। अतस्तस्मात् शिवा द्भियो भयस्य समाधानं प्रतीकारो जातः। पूर्वमेकत्वान्मम शिवेन तथाकृतम् इति विचिन्त्य कामेन राजसमूहरूपः कायव्यूहः कृतः। तस्मादधुना बहुत्वात्तद्भीतिर्नास्तीत्यर्थः। अत्र उत्प्रेक्षालङ्कारेण सभास्थिता राजानः कामसदृशा इत्युपमा ध्वन्यते, तस्मादिदमलङ्कारोत्थालङ्कारध्वन्यात्मकं काव्यम् ॥ ६१ ॥

पूर्णेन्दुबिम्बानिति। शिल्पी निर्माणकुशलो वेधा विधाता अनुमासं मासि मासि भिन्नान् पृथग्भूतान् पूर्णेन्दुबिम्बान् पूर्णचन्द्रमण्डलान् क्वापि कुत्रापि देशे निधाय तिरोहितीकृत्य अस्थापयत् रक्षितवान्। तैरेव रक्षितैः पूर्णेन्दुबिम्बैः कृत्वा अमीषां राज्ञां लावण्यमयानि सौन्दर्यवन्ति मुखानि निरमात् निर्मितवान्, इत्यहं मन्ये सम्भावयामि। अन्योऽपि शिल्पी सुन्दरवस्तूनि सञ्चित्य किमपि सुन्दरं वस्तु निर्माति। अत्रापि पूर्ववद्ध्वनिः ॥ ६२ ॥

पथिन्वस्य, काव्ये सार्थवाहत्वस्यारोपाद् रूपकालङ्कारः, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥ ५९ ॥ अत्र पूर्वार्द्धे भीमेन युवमेलनसम्बन्धेऽपि असम्बन्धोक्ते स्तथा भैम्याः आकर्षण-सम्बन्धेऽपि असम्बन्धोक्तेश्चातिशयोक्तिद्वयम्, उत्तरार्द्धे अदर्शयदिवेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः ॥ ६० ॥ अत्र निरमादित्यहं मन्ये इति सम्भावनाया मन्ये शब्देन उक्तत्वात् वाच्या क्रियोत्प्रेक्षालङ्कारः। तेन च राज्ञां मुखानि पूर्णचन्द्रतुल्यानीति उपमालङ्कारो ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः ॥ ६२ ॥

मुधार्पितं मूर्द्धसु रत्नमेतै-र्यन्नाम तानि स्वयमेत एव।
स्वतः-प्रकाशे परमात्मबोधे बोधान्तरं न स्फुरणार्थमर्थ्यम्॥ ६३॥
प्रवेक्ष्यतः सुन्दरवृन्दमुच्चै-रिदं मुदा चेदितरेतरं तत्।
न शक्ष्यतो लक्षयितुं विमिश्रौ दस्रौ सहस्रैरपि वत्सराणाम्॥ ६४॥
स्थितैरियद्भिर्युवभिर्विदग्धै-र्दग्धेऽपि कामे जगतः क्षतिः का।
एकाम्बुबिन्दुव्ययमम्बुराशेः पूर्णस्य कः शंसति शोषदोषम्॥ ६५॥

मुधेति। एतै राजभिर्मुधा मिथ्या मूर्द्धसु मस्तकेषु रत्नम् अर्पितं निहितम्। यद् यस्मात् एते राजान एव स्वयं तानि रत्नानि नाम प्रसिद्धानि। रत्नभूतानां तेषामुपरि रत्नान्तरधारणं व्यर्थमित्यर्थः। इदमर्थान्तरन्यासेन द्रढयति,—स्वतःप्रकाशे स्वप्रकाशे परमात्मबोधे ब्रह्मसाक्षात्कारे सति स्फुरणार्थं तत्प्रकाशार्थं बोधान्तरं ज्ञानान्तरम् अर्थ्यं सप्रयोजनं न भवति। यथा ब्रह्मतत्त्वबोधस्य स्वप्रकाशत्वात् तस्मिन् जाते सति तत्प्रकाशकज्ञानान्तरान्वेषणं व्यर्थं, तथा रत्नभूतानां तेषां शिरसि रत्नान्तरारोपणं व्यर्थमित्यर्थः। अतिसुन्दरा एते इति भावः। ब्रह्मबोधस्य स्वप्रकाशत्वं वेदान्तादिषु प्रसिद्धम्॥ ६३॥

प्रवेक्ष्यत इति। दस्रौ अश्विनीकुमारौ चेद्यदि उच्चैर्मुदा अतिहर्षेण इदं सुन्दराणां राज्ञां वृन्दं समूहं प्रवेक्ष्यतः, एषां मध्ये प्रविष्टौ भविष्यतः। तत्तदा विमिश्रौ मिलितौ सन्तौ तौ वत्सराणां सहस्रैरपि इतरेतरं परस्पर लक्षयितुं न शक्ष्यतः, शक्तौ न भविष्यतः। अयं मे भ्राता इति परस्परं ज्ञातुमसमर्थौ भविष्यत इत्यर्थः। अत्र स्थिताः सर्वे अश्विनीकुमारतुल्या इति भावः॥ ६४॥

स्थितैरिति। विदग्धैर्नागरैरथच दाहरहितैरियद्भिरेतावद्भिः स्थितैर्विद्यमानैर्युवभिर्हेतुभिः कामे एकस्मिन् कन्दर्पे दग्धेऽपि हरनयनानलेन भस्मीकृतेऽपि जगतो भुवनस्य का क्षतिः का हानिः, अपितु कामसदृशानामेतेषां बहूनां स्थितत्वात् न कापि हानिरित्यर्थः। एतदेव

---

अत्र राजसु रत्नत्वारोपात् रूपकम्, स्वप्रकाशब्रह्मबोधार्थज्ञानान्तराणां व्यर्थता इव रत्नभूतानां राज्ञां रत्नान्तरधारणं व्यर्थमिति सादृश्याक्षेपात् "दृष्टान्तालङ्कारः" जी। अत्र सामान्यविशेषकार्य्यकारणभावाभावादर्थान्तरन्यासालङ्कारो नवीनमतेनाशक्यसमर्थनतया, टीकाकृतामर्थान्तरन्यासोक्तिः प्राचीनमते समाधेया, तन्मते सामान्यविशेषभावादीनां लक्षणेऽप्रवेशात्। तदुक्तं लक्षणं श्रीमता वाग्भटेन'—'उक्तसिद्ध्यर्थमन्यार्थन्यासो व्याप्तिपुरःसरः। कथ्यतेऽर्थान्तरन्यासः श्लिष्टोऽश्लिष्टश्च स द्विधा'। एवमन्यत्रापि ज्ञेयः। आनर्थ्यं प्रति स्वतःप्रकाशपदार्थस्य हेतुत्वात् काव्यलिङ्गञ्च॥ ६३॥ "अत्र दस्रयोः सौन्दर्य्यगुणसाम्येन सुन्दरवृन्दैकतापत्त्या सामान्यालङ्कारः।" जी। न चात्र कैश्चिदुक्तं मीलितं सुसम्पादमुत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानाभावेन तल्लक्षणायोगात्, अपितु तुल्यैः सुन्दरवृन्दैः दस्रयोर्भेदाग्रहात् सामान्यालङ्कार एव समीचीनः॥ ६४॥

इति स्तुवन् हुंकृतिवन्दनाभि-र्गन्धर्ववर्गेण स गायतैव ।
ओङ्कारभूम्ना पठतैव वेदान् महर्षिवृन्देन तथान्वमानि ॥ ६६ ॥
न्यवीविशत्तानथ राजसिंहान् सिंहासनौघेषु विदर्भराजः ।
श्रृङ्गेषु यत्र त्रिदशैर्दिवैभि-रशोभि कार्त्तस्वरभूधरस्य ॥ ६७ ॥
विचिन्त्य नानाभुवनागतांस्ता-नमर्त्यसंकीर्त्यचरित्रगोत्रान् ।
कथ्याः कथङ्कारममी सुताया-मिति व्यषादि क्षितिपेन तेन ॥ ६८ ॥

अर्थान्तरन्यासेन समर्थयते,—को जनः पूर्णस्य अम्बुराशेः समुद्रस्य एकस्य अम्बुविन्दोर्जलकणस्य व्ययम् अपगमं शोपदोपं शोपरूपं दोपं शंसति कथयति, अपितु एकाम्बुविन्दुव्ययेऽपि समुद्रः शुष्क इति न कोऽपि वदतीत्यर्थः। अत्रस्थाः सर्वे कामसदृशा इति भावः ॥ ६५ ॥

इतीति। इति पूर्वोक्तप्रकारेण स्तुवन् सभां प्रशंसन् स काव्यः गायतैव गानं कुर्वतैव गन्धर्वाणां वर्गेण समूहेन हुङ्कृतिवन्दनाभिर्हुङ्कारोच्चारणैः कृत्वा अन्वमानि अनुमतः। गानमध्ये लयकाले हुमिति शब्दः क्रियते, तेनैव समीचीनं वदसीति गन्धर्वैः स शुक्राचार्योऽनुमतः इत्यर्थः। तथा वेदान् पठतैव वेदपाठं कुर्वतैव महर्षिवृन्देन महर्षिसमूहेन ओङ्कारस्य भूम्ना बाहुल्येन कृत्वा अन्वमानि। वेदमध्ये ओङ्काराः सन्ति, त एव क्वचित् स्वीकारार्था भवन्ति, तेषामुच्चारणेनैव महर्षिभिः शुक्रोऽनुमत इत्यर्थः। 'ओमित्यनुमतौ प्रोक्तं प्रणवे चाप्युपक्रमे'ध ॥६६॥

न्यवीविशदिति। अथानन्तरं विदर्भराजो भीमः सिंहासनौघेषु भद्रासनसमूहेषु तान् राजसिंहान् राजश्रेष्ठान् न्यवीविशत् निवेशयामास। यत्र सिंहासनौघेषु उपविष्टैरेभी राजसिंहैः कार्त्तस्वरभूधरस्य स्वर्णाचलस्य सुमेरोः श्रृङ्गेषु शिखरेषु उपविष्टैस्त्रिदशैर्देवैरिव अशोभि शोभितम्। एतेन सिंहासनानामत्युच्चत्वं स्वर्णमयत्वञ्च, राज्ञाञ्च देवतुल्यत्वं सूचितम्। 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' अ ॥ ६७ ॥

विचिन्त्येति। तेन क्षितिपेन भीमेन नानाभुवनेभ्य आगतान् तान् राजसिंहान् अमर्त्येन मर्त्यानां सर्वज्ञत्वाभावात् तद्भिन्नेन देवेन संकीर्त्यानि वर्णनीयानि चरित्रगोत्राणि कर्म्मकुलनामानि येषां तथाविधान् विचिन्त्य अमी राजसिंहाः सुतायां भैम्यां कथङ्कारं केन प्रकारेण कथ्याः अत्रत्यैः कथनीया इत्येवं मत्वा व्यषादि विषण्णम्। येषां चरित्रादीनि देवा एव जानन्ति, ते कथं मनुष्यैः कथनीयाः। चरित्राद्यज्ञाने च भैम्याः कथं वरणे प्रवृत्तिर्भवेदिति विचार्य्य भीमो विषण्णो जात

---

अत्र यथा जलपूर्णस्य समुद्रस्य एकविन्दुजलव्यये शोषदोषो न भवति तथा विदग्धैर्बहुभिर्युवभिः पूर्णस्य जगतः एकस्मिन् सुन्दरे कामे दग्धे न कापि क्षतिरिति सादृश्यबोधात् "दृष्टान्तालङ्कारः" जी। स च विदग्धशब्दश्लेषप्रतिभोत्थापितः। छेकानुप्रासश्च ॥ ६५ ॥
वन्दनाभिरित्यत्र वर्गणाभिरिति पाठे पुनःपुनरुच्चारणैरित्यर्थः। अत्र अन्वमानीवेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, श्लेषबलेन द्विप्रकारयोरेव हूङ्कृत्योरोङ्कारयोश्चाभेदाध्यवसायेनातिशयोक्तिद्वयञ्चेत्येतेषामङ्गाङ्गिरूपतया सङ्करः ॥ ६६ ॥ अत्र उपमालङ्कारश्छेकानुप्रासेन संसृज्यते ॥ ६७ ॥

श्रद्धालुसङ्कल्पितकल्पनायां कल्पद्रुमस्याथ रथाङ्गपाणेः।
तदाकुलोऽसौ कुलदैवतस्य स्मृतिं ततान क्षणमेकतानः ॥ ६९ ॥
तच्चिन्तनानन्तरमेव देवः सरस्वतीं सस्मितमाह स स्म।
स्वयंवरे राजकगोत्रवृत्त-वक्त्रीमिह त्वां करवाणि वाणि ॥ ७० ॥
कुलञ्च शीलञ्च बलञ्च राज्ञां जानासि नानाभुवनागतानाम्।
एषामतस्त्वं भव वावदूका मूकायितुं कः समयस्तवायम् ॥ ७१ ॥
जगत्त्रयीपण्डितमण्डितेयं सभा न भूता न च भाविनी वा।
राज्ञां गुणज्ञापनकैतवेन सङ्ख्यावतः श्रावय वाङ्मुखानि ॥ ७२ ॥

इत्यर्थः। कथङ्कारमिति 'गतार्थात् कथमित्थमेवमन्यथाभ्यः' इति त्वा णम्। 'गोत्रा भूगव्ययो-र्गोत्रः शैले गोत्रं कुलाख्ययोः' मे ॥ ६८ ॥

श्रद्धाल्विति। अथानन्तरं तदा तत्समये आकुल इतिकर्त्तव्यतामूढोऽसौ भीम एकतानोऽनन्यमनाः सन् कुलदैवतस्य वंशपरम्परोपासितस्य रथाङ्गपाणेश्चक्रपाणेर्नारायणस्य स्मृतिं स्मरणं क्षणं व्याप्य ततान चकार। किम्भूतस्य -यत श्रद्धालुना श्रद्धायुक्तेन भक्तेन यत्सङ्कल्पितम् अभिलषितं वस्तु तस्य कल्पनायां सिद्धौ कल्पद्रुमस्य कल्पवृक्षसदृशस्य। कल्पवृक्षो यथा याचकानां अभिलाषं पूरयति, अयमपि श्रद्धावतां भक्तानां तथेत्यर्थः। क्वचित् तदाकुलेत्यत्र तत्राकूलेति, कल्पनायामित्यत्र भावनायामिति च पाठः ॥ ६९ ॥

तच्चिन्तनेति। तच्चिन्तनस्य भीमकर्तृकस्मरणस्य अनन्तरमेव स देवो नारायणः सस्मितं सहास्यं यथा तथा सरस्वतीम् आह स्म वक्ष्यमाणमुवाच। किमाहस्मेत्याह, हे वाणि सरस्वति ताम् इह स्वयंवरे राजकस्य राजसमूहस्य गोत्रवृत्तानां कुलनामचरित्राणां वक्त्रीं वर्णयित्रीं करवाणि करोमि। भैम्या विज्ञानाय राजसमूहवर्णनार्थं त्वया स्वयंवरे गन्तव्यमिति त्वां प्रेरयामीत्यर्थः ॥ ७० ॥

कुलञ्चेति। हे सरस्वति त्वं नानाभुवनेभ्य आगतानां राज्ञां कुलञ्च शीलञ्च बलञ्च जानासि, अतो हेतोस्त्वं त्वमेव एषां राज्ञां कुलादीनां वा वावदूका अतिशयेन वक्त्री भव। तव मूकायितुं मूकीभवितुं तूष्णीं स्थातुम् अयं कः समयोऽवसरः, अपितु वक्तुमेवायं समय इत्यर्थः। कुलञ्चेत्यादौ चकाराः परस्परसमुच्चयार्थाः। राज्ञामित्यत्र यूनामिति क्वचित्पाठः ॥ ७१ ॥

जगत्त्रयीति। हे सरस्वति यतो जगत्त्रय्यास्त्रयाणां जगतां पण्डितैर्मण्डिता शोभिता, अत्र इयम् ईदृशी सभा न भूता पूर्वं कुत्रापि न जाता, न च न पुनर्भाविनी भविष्यति च। तस्मादत्र

"अत्र च्छेकानुप्रासः" सा ॥ ६८ ॥ अत्र कल्पद्रुमस्येति निरङ्गरूपकम्, छेकानुप्रास-वृत्त्यनुप्रासाभ्यां संसृज्यते ॥ ६९ ॥ "अत्र च्छेकानुप्रासः" सा ॥ ७० ॥ अत्र "वाग्मिनाम् अवसरे तूष्णीम्भावो न युक्त इत्यर्थान्तरन्यासः" जी। वावदूकाभवनं प्रति चतुर्थपादार्थस्य हेतुत्वात् "काव्यलिङ्गम्, छेकानुप्रासः" सा ॥ ७१ ॥

इतीरिता तच्चरणात् परागं गीर्वाणचूडामणिमृष्टशेषम् ।
तस्य प्रसादेन सहाज्ञयासा-चादाय मूर्ध्नादरिणी बभार ॥ ७३ ॥
मध्येसभं सावततार बाला गन्धर्वविद्यामयकण्ठनाला ।
त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्त्तितदृक्तरङ्गा ॥ ७४ ॥
आसीदथर्वा त्रिवलित्रिवेदी-मूलाद्विनिर्गत्य वितायमाना ।
नानाभिचारोचितमेचकश्रीः श्रुतिर्यदीयोदररोमलेखा ॥ ७५ ॥

राज्ञां गुणज्ञापनस्य गुणबोधनस्य कैतवेन च्छलेन संख्यावतः पण्डितान् वाङ्मुखानि उपन्यासान् श्रावय। 'संख्यावान् पण्डितः कविः' 'उपन्यासस्तु वाङ्मुखम्' अ ॥ ७२ ॥

इतीति। इति पूर्वोक्तप्रकारेण ईरिता नारायणेनोक्ता असौ सरस्वती आदरिणी तदुक्तौ आदरवती सती तस्य नारायणस्य चरणात् गीर्वाणानां देवानां चूडामणिभिः शिरोरत्नैर्मृष्टस्य प्रोञ्छितस्य शेषमवशिष्टं परागं धूलिम् अथच चरणस्य पद्मतुल्यत्वात् कौसुमं रजः तस्य आज्ञया त्वया स्वयंवरे गन्तव्यमिति निदेशरूपेण प्रसादेन सह आदाय गृहीत्वा मूर्ध्ना मस्तकेन बभार धृतवती। महानयं प्रसाद इति तदाज्ञामङ्गीचकारेत्यर्थः। 'परागश्चन्दने रेणौ गिरौ ख्यात्युपरागयोः स्नानीयपुष्परजसोः' हे ॥ ७३ ॥

मध्येसभमिति। सा सरस्वती बाला बालिका सती बालस्त्रीरूपं धारयन्ती सती मध्येसभं सभामध्ये अवततार अवतीर्णा बभूव। किम्भूता—गन्धर्वविद्या गीतकला तन्मयं तद्बहुलम् अथच तत्स्वरूपं कण्ठनालं यस्याः सा, गानप्रवीणकण्ठनालेत्यर्थः। तथा त्रयी त्रित्वसंख्या अथ च त्रिवेदी, अत्रयीमयस्त्रयीमयीभूतौ बलीविभङ्गौ बलीविन्यासो यस्याः सा। तथा साहित्येन शुक्लनीलरक्तवर्णमेलनेन अथ च काव्यशास्त्रेण निर्वर्तितो निष्पादितो दृक्तरङ्गः कटाक्षविक्षेपो यस्याः सा। साहित्येन यौगपद्येन निर्वर्तितो दृक्तरङ्गो यस्यास्तादृशी। सर्वेषां मातृभावेन सहैव निरीक्षणं, नतु कटाक्षेणेति भाव इति केचित्। कण्ठस्य नालत्वेन मुखस्य पद्मतुल्यत्वं ध्वनितम्। मध्येसभमिति 'पारेमध्ये षष्ठ्या वा' इति अव्ययीभावनिपातितम् ॥ ७४ ॥

चतुर्दशभिः श्लोकैर्वेदादिविद्यामयं सरस्वतीस्वरूपमेव वर्णयति। आसीदिति। अथर्वा श्रुतिरथर्ववेदः यदीया यत्सम्बन्धिनी उदररोमलेखा उदरवर्तिरोमावलिरासीत्। किम्भूता—

अत्र 'श्रावय' इति पदार्थं प्रति जगत्त्रयीतिश्लोकार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्, गुणज्ञापनकैतवेनेति अपह्नुति श्छेकानुप्रासश्चेति संसृष्टिः ॥ ७२ ॥ अत्र आज्ञायां प्रसादत्वारोपात् निरङ्गरूपकम्, परागशब्दश्लेषात् चरणरजसि पुष्परजस्त्वारोपस्य चरणे आर्थपद्मत्वारोपे हेतुत्वात् एकदेशविवर्तिश्लिष्टपरम्परितरूपकम्, आज्ञाप्रसादानन्तरं चरणपरागग्रहणेऽपि सहशब्दबलात् यौगपद्योक्तेः कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्तिमूला सहोक्तिः, अनुप्रासश्च ॥ ७३ ॥ अत्र गन्धर्वविद्यामयकण्ठनालेत्यादिरूपकचतुष्कम्, अन्त्यानुप्रासश्च ॥ ७४ ॥

शिक्षैव साक्षाच्चरितं यदीयं कल्पश्रिया कल्पविधिर्यदीयः ।
यस्याः समस्तार्थनिरुक्तिरूपै-निरुक्तविद्या खलु पर्यणंसीत् ॥ ७६ ॥
जात्या च वृत्तेन च भिद्यमानं छन्दोभुजद्वन्द्वमभूद्यदीयम् ।
श्लोकार्द्धविश्रान्तिमयीभविष्णु-पर्वद्वयीसन्धिसुचिह्नमध्यम् ॥ ७७ ॥
असंशयं सा गुणदीर्घभाव-कृतां दधाना विततिं यदीया ।
विधायिका शब्दपरम्पराणां किञ्चारचि व्याकरणेन काञ्ची ॥ ७८ ॥

त्रिवलिर्वलित्रयरूपा या त्रिवेदी ऋग्यजुःसामरूपा तल्लक्षणात् मूलात् विनिर्गत्य ब्रह्मणा विनिर्गमय्य वितायमाना विस्तार्यमाणा । ब्रह्मणा त्रिवेदीमध्यादाकृष्याऽथर्ववेदः पृथक्कृत इति प्रसिद्धिः । तथा नानाभिचारेषु षट्सु मारणोच्चाटनादिकर्मसु उचिता पापाधिक्यात् योग्या मेचका श्यामा श्रीः शोभा यस्यास्तादृशी, अथच अनाभिचारोचितमेचकश्रीर्न किन्तु नाभिगमनोचितमेचकश्रीरेव । अथर्ववेदे नानाभिचारविधयः सन्ति । तस्य च श्यामत्वं पुराणादौ वर्णितम् ॥ ७५ ॥

शिक्षैवेति । यदीयं चरितम् आचरणं साक्षात् शिक्षैव वेदाङ्गविशेष एव, अथच साक्षात् लोकानाम् उपदेश एव । तथा कल्पस्य वेदाङ्गविशेषस्य श्रिया शोभया कृत्वा यदीयः कल्पविधिः कल्पस्य विधिप्रतिपादकशास्त्रस्य विधिर्विधानं, कल्पवेदाङ्गस्य इति कर्तव्यताबोधकत्वात् विधिसङ्गमनमित्यर्थः । अथच कल्पस्य कल्पवृक्षस्य श्रिया सम्पत्त्या मणिमुक्तादिरूपया कृत्वा आकल्पविधिर्वेशकरणम् । तथा खलुत्प्रेक्षायां निश्चये वा यस्याः समस्तार्थानां सकलाभिधेयानां निरुक्तिरूपैर्निर्वचनरूपैः कृत्वा निरुक्तविद्या वेदाङ्गविशेषः पर्यणंसीत्परिणता । 'कल्पो विकल्पे कल्पादौ संवर्ते ब्रह्मवासरे । शास्त्रे न्याये विधौ' हे । 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः । छन्दसां विचितिश्चैव वेदाङ्गानि अमूनि षट्' ॥ ७६ ॥

जात्येति । जात्या च मात्रावृत्तेन आर्य्यादिना च वृत्तेन च अक्षरसंख्यातेन उक्थादिना च भिद्यमानं द्विधाभूतं छन्दः यदीयं भुजद्वन्द्वम् अभूत् । अथच जात्या जन्मना स्वभावेन वृत्तेन चरित्रेण च भिद्यमानम् अन्यतो भिन्नम् उत्कृष्टं भुजद्वन्द्वम् अभूत् । किम्भूतं, छन्दोरूपं भुजद्वन्द्वं श्लोकस्यार्धे या विश्रान्तिर्विश्रामस्तन्मयीभविष्णुस्तद्रूपीभवन् यः पर्वद्वयीसन्धिः कूर्पर-सन्धिः स एव सुचिह्नं शोभनचिह्नं तन्मध्ये यस्य तादृशम् । श्लोकार्द्धयोर्विश्राम एव यस्य पर्वद्वयीसन्धिरित्यर्थः । 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा । वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत्' इति च्छन्दोमञ्जरी ॥ ७७ ॥

असंशयमिति । किञ्च असंशयं निश्चितमेव सा अतिप्रसिद्धा यदीया मेखला काञ्ची व्याकर-

---

अत्र त्रिवलित्रिवेदी, श्रुतिरुदररोमरेखेति च रूपकम् ॥७५॥ अत्र चरिते साक्षात्शिक्षात्वाभेदाध्यवसायादतिशयोक्तिः, कल्पश्रिया कल्पविधिरित्यादिरूपकं, छेकानुप्रासश्चेति संसृष्टिः ॥ ७६ ॥ अत्र निरङ्गं श्लिष्टरूपकम् ॥ ७७ ॥

स्थितैव कण्ठे परिणम्य हार-लता बभूवोदिततारवृत्ता ।
ज्योतिर्मयी यद्भजनाय विद्या मध्येऽङ्गमङ्केन भृता विशङ्के ॥ ७९ ॥
अवैमि वादि-प्रतिवादिगाढ-स्वपक्षरागेण विराजमाने ।
ते पूर्वपक्षोत्तरपक्षशास्त्रे रदच्छदौ भूतवती यदीयौ ॥ ८० ॥
ब्रह्मार्थकर्मार्थकवेदभेदाद् द्विधा विधाय स्थितयात्मदेहम् ।
चक्रे पराच्छादनचारु यस्या मीमांसया मांसलमूरुयुग्मम् ॥ ८१ ॥

णेन वेदाङ्गविशेषेण अरचि रचिता । कीदृशी—गुणस्य ग्रन्थनसूत्रस्य दीर्घभावेन दीर्घत्वेन कृतां जनितां विततिं विस्तारं दधाना धारयन्ती, तथा शब्दपरम्पराणां शिञ्जितश्रेणीनां विधायिका जनिका । व्याकरणमपि गुणाः 'इक एङरलो गुणः' इत्यादिना विहिताः, दीर्घाः 'सवर्णेनाग्दीर्घः' इत्यादिना विहिताः, भावाः 'धात्वर्थः केवलो भावः' इत्यनेन कथिता धात्वर्थाः भावविहित-तिङ्कृत्तद्धितप्रत्ययाश्च; एतैः कृतां विततिं दधानम्, तथा शब्दपरम्पराणां हरिहरादीनां विधायकं साधकम् ॥ ७८ ॥

स्थितैवेति । ज्योतिर्मयी ज्योतिषशास्त्ररूपा विद्या यस्या भजनाय उपासनार्थं परिणम्य रूपान्तरं प्राप्य कण्ठे स्थिता हारलतैव बभूव, इत्यहं विशङ्के तर्कयामि । ज्योतिर्विद्यैव यस्या हारलता जातेत्यर्थः । किम्भूता ज्योतिर्मयी विद्या,—उदितमुक्तं तारं तारा नक्षत्रं तत्सम्बन्धिवृत्तं शुभाशुभफलकथनरूपं यस्यां सा, तथा मध्येऽङ्गम् अङ्गानां शिक्षादीनां मध्ये अङ्केन गणनया भृता धृता, षडङ्गमध्ये गणितेत्यर्थः । अङ्केन संख्याभिधायकेन भृता पूर्णेति वा । हारलतापि उदितः प्रकाशीभूतस्तारो मध्यमणिर्मुक्ताशुद्धिर्वा यस्यां सा चासौ वृत्ता वर्त्तुलमौक्तिका चेति तादृशी । तथा मध्येऽङ्गं शरीराणां मध्ये अङ्केन क्रोडेन भृता धृता । मध्येऽङ्गमिति 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः ॥ ७९ ॥

अवैमीति । ते प्रसिद्धे पूर्वपक्षोत्तरपक्षशास्त्रे पूर्वपक्षशास्त्रमुत्तरपक्षशास्त्रञ्च द्वे यदीयौ रदच्छदौ ओष्ठाधरौ भूतवती जाते इत्यहम् अवैमि सम्भावयामि । किम्भूते वादिप्रतिवादिनोर्यो गाढो दृढः स्वपक्षरागः स्वसिद्धान्तानुरागस्तेन विराजमाने शोभमाने ॥ ८० ॥

ब्रह्मार्थेति । मीमांसया शास्त्रेण यस्याः सरस्वत्या ऊरुयुग्मं चक्रे कृतम् । ननु एकेन मीमांसाशास्त्रेण कथमूरुद्वयं कृतमितिविशेषणेन तस्यापि द्वैविध्यमाह, किम्भूतया—ब्रह्मार्थ-कर्मार्थकयोर्ब्रह्मप्रतिपादक-कर्मप्रतिपादकयोर्वेदयोर्भेदात् ब्रह्मकाण्डत्वकर्मकाण्डत्वाभ्यां विभागात् आत्मदेहं द्विधा विधाय कृत्वा स्थितया । ब्रह्मकाण्डीयं कर्मकाण्डीयञ्च वेदद्वयमधिकृत्य जैमिनि-

अत्र असंशयमिति शब्दवाच्या श्लिष्टाक्रियोत्प्रेक्षा, छेकानुप्रासश्चेति संसृष्टिः ॥ ७८ ॥ अत्र विशङ्के इति शब्दवाच्या श्लेषानुप्राणिता उत्प्रेक्षा । "तारो निर्मलमौक्तिके । मुक्ताशुद्धावुच्चनादे नक्षत्रनेत्रमध्ययोः । तारं रूप्ये ताराबुद्धदेव्यां सुरगुरुस्त्रियाम् । सुग्रीवपत्न्याम्" हे ॥ ७९ ॥ अत्र अवैमिशब्दवाच्या श्लेषानुप्राणिता क्रियोत्प्रेक्षा ॥ ८० ॥

उद्देशपर्वण्यपि लक्षणेऽपि द्विधोदितैः षोडशभिः पदार्थैः।
आन्वीक्षिकीं यद्दशनद्विमालीं तां मुक्तिकामाकलितां प्रतीमः॥ ८२॥
तर्का रदा यद्वदनस्य तर्क्या वादेऽस्य शक्तिः क्व तथान्यथा तैः।
पत्रं क्व दातुं गुणशालीपूगं क्व वादतः खण्डयितुं प्रभुत्वम्॥ ८३॥

वादरायणाभ्यां प्रणीतत्वेन पूर्वोत्तररूपया द्विविधमीमांसया ऊरुद्वयं रचितमित्यर्थः। किम्भूतं ऊरुयुग्मं -परेण उत्कृष्टेन आच्छादनेन वस्त्रेण चारु मनोज्ञम्, तथा मांसलं स्थूलम्। मीमांसापि परेषां बौद्धादीनाम् आच्छादनेन निराकरणेन चारुः, तथा मांसला भट्टमिश्रादिभिः शङ्कराचार्यादिभिश्च कृतबहुविचारत्वेन परिपुष्टा॥ ८१॥

उद्देशेति॥ वयं यस्याः सरस्वत्या दशनद्विमालीं दन्तपङ्क्तिद्वयीं तां प्रसिद्धाम् आन्वीक्षिकीं तर्कविद्यां प्रतीमो जानीमः। किम्भूताम् आन्वीक्षिकीं,- नामतः कथनमुद्देशस्तस्य पर्वणि प्रस्तावेऽपि तथा समानासमानजातीयव्यवच्छेदो लक्षणं तस्मिन्नपि द्विधा उद्देशतया लक्षणतया च उदितैर्भगवता गोतमेन निर्दिष्टैः षोडशभिः पदार्थैः प्रमाणादिभिर्निग्रहस्थानान्तैरुपलक्षिताम्। तथा मुक्तिकामैः 'एतेषां तत्त्वज्ञानान्निःश्रेयसाधिगम' इत्युक्तत्वान्मुमुक्षुभिराकलिताम् अभ्यस्ताम् दन्तपङ्क्तिद्वयी च पर्वणि ग्रन्थौ उदिता उत्तेजिता, तथा लक्षणे सामुद्रकशास्त्रे उदिता उक्ता, षोडशसंख्यकास्तथाविधोदितत्वेन द्वात्रिंशत्संख्यका भवन्ति, दन्तपंक्तिद्वयी च द्वात्रिंशद्दन्तात्मिका भवति। तादृशीं दशनद्विमालीम् आकलितां ग्रथितां मुक्तिकां प्रतीमः, दन्तान् मौक्तिकान्येव जानीमः। 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति गोतमसूत्रम्। 'पर्व क्लीवं महे ग्रन्थौ प्रस्तावे लक्षणान्तरे। दर्शप्रतिपदोः सन्धौ विषुवत्प्रभृतिष्वपि' मे॥ ८२॥

तर्का इति। तर्को 'यद्ययं निर्वह्निः स्यात्तदा निर्धूमः स्यात् इत्येवंरूपा यद्वदनस्य यस्या मुखस्य रदा दन्तास्तर्क्याः सम्भावनीयाः। अत्रान्यथानुपपत्तिं प्रमाणयति,--तैस्तर्करूपरदैरन्यथा विना अस्य वदनस्य तथा तादृशे वादे वादिनिराकरणकथाविशेषे शक्तिः सामर्थ्यं क्व कुत्र, अपितु न क्वापि। तर्कैरेव विवादशक्तिर्भवतीति तर्का एव तद्दन्ता जाता इत्यर्थः। कथमन्यथेति क्वचित् पाठः। अथच रदैर्विना तथा वादे दन्त्यवर्णानामुच्चारणे अस्य शक्तिः क्व, तथा तैरन्यथा प्रतिवादिने पत्रं दातुं तस्योपरि पक्षावलम्बनं कर्तुं प्रतिवादिनः प्रतिज्ञापक्षं खण्डयितुं वा प्रभुत्वं शक्तिः क्व। तर्कं विना प्रतिवादिनि पत्रदाने तत्पक्षनिराकरणे वा प्रभुत्वं न भवतीत्यर्थः। अथ च रदैर्विना पत्रं पर्णं दातुं खण्डयितुं मुखस्य प्रभुत्वं क्व, दातुमिति पक्षे दोऽवखण्डने

---

अत्र चक्रे इवेति प्रतीतेः "गम्योत्प्रेक्षा" जी। छेकानुप्रासश्च॥ ८१॥ अत्र "आन्वीक्षिकीं द्विरावृत्तषोडशपदोदिततादृग्दन्तपङ्क्तियुगलत्वेन परिणतां प्रतीम इति उत्प्रेक्षार्थः। प्रतिपाद्यप्रतिपादकयोरभेदोपचारादान्वीक्षिक्येव तथा परिणतेत्युक्तम्। दशनद्विमालीमेवाकलितां मुक्तिकामिति श्लिष्टपदोपात्तेन रूपकेणोत्प्रेक्षायाः सङ्करः।" जी॥ ८२॥

सपल्लवं व्यासपराशराभ्यां प्रणीतभावादुभयीभविष्णु ।
तन्मत्स्यपद्माद्युपलक्ष्यमाणं यत्पाणियुग्मं ववृते पुराणम् ॥ ८४ ॥
आकल्पविच्छेदविवर्जितो यः स धर्मशास्त्रव्रज एव यस्याः ।
पश्यामि मूर्द्धा श्रुतिमूलशाली कण्ठे स्थितः कस्य मुदे न वृत्तः ॥ ८५ ॥

इत्यस्य रूपम् । तथा तैरन्यथा वादतो वादनिमित्तात् गुणशालिनां पाण्डित्यादिगुणयुक्तानां पूगं समूहं खण्डयितुं निराकर्तुं अस्य प्रभुत्वं क, तर्कं विना गुणशालिसमूहनिराकरणं न भवतीत्यर्थः । अथच अदतो भक्षयतोऽस्य रदैर्विना गुणैः सौरभादिभिः शालत इति तादृशं पूगं गुवाकफलं खण्डयितुं क वा प्रभुत्वम् । दन्तानां कर्कशत्वात् कर्कशैस्तर्कैर्निर्माणं युक्तम् । तैरन्यथेति 'पृथग्विना नाना' इत्यत्र विनापदेन विनार्थग्रहणात्तृतीया । 'पूगः क्रमुकवृन्दयोः' अ ॥८३॥

सपल्लवमिति । तत् प्रसिद्धं पुराणं यस्याः पाणियुग्मं ववृते जातम् । किम्भूतं पुराणम्, सपल्लवम् इतिहासादिभिः सविस्तरम्, तथा व्यासपराशराभ्यां मुनिभ्यां प्रणीतभावान्निर्मितत्वात् उभयीभविष्णु पुराणोपपुराणतां प्राप्तम्, तथा मत्स्यपद्मादिभिः आदिना कूर्मवराहादिभिश्च पदैरुपलक्ष्यमाणं निर्दिश्यमानं पुराणमेव यस्याः करयुगाकारेण परिणतमित्यर्थः । अथच पाणियुग्ममपि सपल्लवम् अलक्तरागसहितं किसलयस्य सदृशं वा, तथा व्यासेन विस्तारेण पराशः श्रेष्ठभक्ष्यद्रव्यं तस्य रा ग्रहणं तेन च सह प्रणीतभावं प्रणयम् अतति गच्छतीति तादृशं, सविस्तारं उत्तमभक्ष्यद्रव्यग्रहणतत्परञ्चेत्यर्थः । तथा उभयीभविष्णु दक्षिणत्ववामत्वाभ्यां द्विविधीभूतम्, तथा रेखारूपमत्स्यपद्मादिसामुद्रकलक्षणैरुपलक्ष्यमाणं युक्तम् । 'पल्लवोऽस्त्री किसलये विटपे विस्तरे वने । शृङ्गारेऽलक्तरागेऽस्त्री' 'व्यासो ना विस्तृते मुनौ' मे । पल्लवेन सदृशमिति, पक्षे सदृशब्देन सह सादृश्यार्थेऽव्ययीभावः ॥ ८४ ॥

आकल्पेति । स धर्मशास्त्राणां मन्वादिप्रणीतधर्मसंहितानां व्रजः समूह एव यस्या मूर्द्धा मस्तकीभूतः सन् कस्य जनस्य मुदे हर्षाय न वृत्तो न जातः । अपितु सर्वस्यापि, इत्यहं पश्यामि जाने । कस्य ब्रह्मणो मुदे इति वा । स कः, यः आकल्पं प्रलयकालपर्यन्तं यो विच्छेदोऽप्रचारस्तेन विवर्जितो रहितः, धर्मशास्त्रं प्रलयकालपर्यन्तमपि प्रचरिष्यतीति भावः । किम्भूतः, – श्रुतिर्वेद एव मूलं तेन शालते इति तादृशः, तथा कण्ठे स्थितः दृढतरमभ्यसनीय इत्यर्थः । अथच मूर्द्धापि आकल्पस्य नेपथ्यस्य विच्छेदेन विवर्जितः सदालङ्कृत इत्यर्थः, तथा श्रुत्योः कर्णयोर्मूले शालत इति तादृशः, तथा कण्ठे स्थितः कण्ठनालस्योपरि स्थितः, तथा वृत्तो वर्त्तुलः । धर्मशास्त्रमेव यदीयमस्तकाकारेण परिणतमित्यर्थः । 'श्रुतिः श्रोत्रे च तत्कर्मण्याम्नायवार्त्तयोः स्त्रियाम्' मे ॥ ८५ ॥

अत्र "श्लेषप्रतिभोत्थापितेयं दन्तानां तर्कपरिणतित्वेनोत्प्रेक्षेति सङ्करः" जी । सा च 'तर्क्या' इति शब्दवाच्या ॥ ८३ ॥ अत्र पाणियुग्मं पुराणं ववृते इवेति सम्भावनाप्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, सा च श्लेषप्रतिभोत्थापिता ॥ ८४ ॥ अत्र पश्यामीतिशब्देन मूर्ध्नः पुराणत्वेन

भ्रुवौ दलाभ्यां प्रणवस्य यस्या-स्तद्बिन्दुना भालतमालपत्रम्।
तदर्द्धचन्द्रेण विधिर्विपञ्ची-निक्वाणनाकोणधनुः प्रणिन्ये ॥ ८६ ॥
द्विकुण्डली वृत्तसमाप्तिलिप्याः कराङ्गुली काञ्चनलेखनीनाम्।
कैश्यं मसीनां स्मितभाः कठिन्याः काये यदीये निरमायि सारैः ॥ ८७ ॥
या सोमसिद्धान्तमयाननेव शून्यात्मतावादमयोदरेव।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धिमयाखिलेव ॥ ८८ ॥

भ्रुवाविति। विधिर्विधाता प्रणवस्य ओङ्कारस्य दलाभ्यां कृत्वा यस्याः सरस्वत्या भ्रुवौ प्रणिन्ये निर्ममे, तथा तस्य प्रणवस्य बिन्दुना अनुस्वारेण यस्या भालतमालपत्रं ललाटतिलकं प्रणिन्ये तथा तस्य प्रणवस्य अर्द्धचन्द्रेण अर्द्धचन्द्राकारावयवेन विपञ्च्या वीणाया निक्वाणनार्थं वादनार्थं यः कोणो वीणावादनसाधनद्रव्यं स एव धनुराकारत्वात् धनुस्तत्प्रणिन्ये। अत्र प्रणवो गौडलिप्या देवनागरलिप्या वा बोद्धव्यः। 'तमालपत्रतिलकचित्रकाणि विशेषकम्', 'वीणा तु वल्लकी विपञ्ची' 'कोणो वीणादिवादनम्' अ ॥ ८६ ॥

द्विकुण्डलीति। यदीये काये यस्याः शरीरे वृत्ता वर्त्तुला या समाप्तिज्ञापिका लिपिः समाप्तिलिपिर्विसर्गाकारा तस्याः सारैः श्रेष्ठांशैः कृत्वा द्विकुण्डली कुण्डलद्वयं निरमायि निर्मिता, विधिनेत्यर्थात्। तथा काञ्चनस्य स्वर्णस्य लेखनीनां सारैः कराङ्गुली निरमायि, तथा मसीनां सारैः कैश्यं केशवृन्दं निरमायि, तथा कठिन्याः खटिकायाः सारैः स्मितभाः हास्यस्य दीप्तिर्निरमायि। लेख्यशेषे समाप्तिसूचको विसर्गो लिख्यते, स एव कुण्डलद्वयत्वेन परिणत इत्यर्थः। विसर्गश्च यथा 'इटङ्गवद् बालवत्सस्य बालिकाकुचयुग्मवत्। नेत्रवत् कृष्णसर्पस्य स विसर्ग इति स्मृतः' इति। 'तद्वृन्दे कैशिकं कैश्यम्' अ। 'कठिनी खटिका' वि ॥ ८७ ॥

येति। या सरस्वती सोमसिद्धान्तः कापालिकदर्शनं तन्मयं तदेव आननं मुखं यस्यास्तादृशीव। अथ च सोमस्य चन्द्रस्य सिद्धान्तो याथार्थ्यं तन्मयम् आननं यस्याः सा। पूर्वपक्षभूतस्य सोमस्य सिद्धान्तमयं दूषकरूपमाननं यस्या इति वा सोमत्वेन सिद्धान्तितमाननं यस्या इति च व्याचक्षते। तथा शून्यात्मतावादो माध्यमिकबौद्धविशेषदर्शनं तन्मयं तदेव उदरं यस्यास्तादृशीव, अथ च शून्यतावादो नास्त्येवेति कथनं तन्मयं तद्विषयम् उदरं यस्याः सा अतिकृशोदरीत्यर्थः। तथा विज्ञानस्य सामस्त्यं साकल्यं विज्ञानमेव सकलगोघटादीति योगाचारबौद्धविशेषमतं तन्मयं तदेव अन्तरं यस्यास्तादृशीव। अथच विज्ञानस्य विशिष्टज्ञानस्य सामस्त्यं तन्मयं तत्प्रचुरम् अन्तरं चित्तं यस्यास्तादृशी। तथा साकारतासिद्धिः ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादरूप-सौत्रान्तिकमतं तन्मयं तत्प्रचुरम् अखिलं सकलं यस्यास्तादृशीव। अथच साकारतासिद्धिमयं

साध्यतया सम्भावनाप्रतीतेः श्लेषमूला वाच्योत्प्रेक्षा ॥ ८५ ॥ अत्र प्रणवदलादिना भ्रूप्रभृति-प्रणयनसम्भावनाप्रतीतेः प्रतीयमानोत्प्रेक्षा ॥ ८६ ॥ अत्रापि पूर्वश्लोकवदुत्प्रेक्षा ॥ ८७ ॥

भीमस्तयागद्यत मोदितुं ते वेला किलेयं तदलं विषद्य ।
मया निगाद्यं जगतीपतीनां गोत्रं चरित्रं च यथावदेषाम् ॥ ८९ ॥
विन्दत्यसव्ये मकरन्दलीलां मन्दाकिनी यच्चरणारविन्दे ।
अत्रावतीर्णा गुणवर्णनाय राज्ञां तदाज्ञावशगास्मि कापि ॥ ९० ॥
तत्कालवेद्यैः शकुनस्वराद्यै-राप्तामवाप्तां नृपतिः प्रतीत्य ।
तां लोकपालैकधुरीण एष तस्यै सपर्य्यामुचितां दिदेश ॥ ९१ ॥

सौन्दर्यलाभप्रचुरम् अखिलं यस्यास्तादृशी एवम्भूता मध्येसभमवततारेत्यादि कुलकम् । इवोत्प्रेक्षायाम् ॥ ८८ ॥

अथैवंरूपा सरस्वती सभायामवतीर्य चिन्तयन्तं भीममाश्वासयति स्मेत्याह,—भीम इति । तया सरस्वत्या भीमोऽगद्यत उक्तः, किमुक्त इत्याह,—हे भीम किल यस्मात्ते तव मोदितुं हर्षाय इयं वेला समयः, तत्तस्मात् विषद्य अलं विषादं मा कुरु । नन्वहं राज्ञां कुलनामपरिचायकजनाभावादेव विषादं करोमीत्यत आह,—एषां जगतीपतीनां राज्ञां विचित्रं नानाविधं गोत्रं चरित्रञ्च मया यथावत् निगाद्यं वक्तुमर्हम् । अहमेव सर्वं कथयिष्यामि, विषादं मा कुर्वित्यर्थः । विषद्येति 'निषेधार्थालंखल्वोः क्त्वा' इति अलं योगे क्त्वा ॥ ८९ ॥

ननु का त्वं, या नानादिगन्तवासिनामपि राज्ञां गोत्रचरित्रकथने प्रतिजानीषे, इत्याशङ्क्याह । विन्दतीति । मन्दाकिनी गङ्गा असव्ये दक्षिणे यस्य चरणारविन्दे पादपद्मे मकरन्दस्य पुष्परसस्य लीलां विलासं विन्दति लभते, अरविन्दे मकरन्दस्य स्थातुमुचितत्वात् तत्सदृशी भवतीत्यर्थः । तस्य नारायणस्य आज्ञावशगा निदेशकारिणी कापि अहं राज्ञां गुणवर्णनाय अत्र सभायाम् अवतीर्णास्मि । अहं हि भगवता नारायणेन प्रेषिता, तदाज्ञया च मम सामर्थ्यमपि युक्तमिति भावः । कापीत्यनेन मादृश्यस्तन्निदेशकारिण्यो बह्व्यः सन्तीति सूचितम् । विन्दत्यसव्य इत्यत्र अविन्दतासाविति क्वचित्पाठः ॥ ९० ॥

अथ भीमस्तां पूजयामासेत्याह । तत्कालेति । लोकपालैरिन्द्रादिभिः सह एकधुरं वहतीति, तादृशो लोकपालसदृशो नृपतिर्भीमः अवाप्ताम् अकस्मात्सभायां प्राप्तां तां देवीं तत्काले तदागमनसमय एव वेद्यैर्ज्ञेयैः शकुनस्वराद्यैः काकादिपक्षिशब्दादिभिः शकुनैः शुभसूचकैः स्वराद्यैर्नासानिलनयनस्पन्दादिभिश्चा कृत्वा आप्ताम् आत्मीयां प्रतीत्य ज्ञात्वा तस्यै उचितां योग्यां सपर्यां पूजां दिदेश आदिष्टवान् । आप्तागमनसमये हि भुजस्पन्दादयो जायन्ते । 'शकुनस्तु पुमान्

---

अत्र इवशब्दवाच्योत्प्रेक्षाचतुष्टयसंसृष्टिः ॥ ८८ ॥ अत्र पूर्वार्द्धवाक्यार्थे परार्द्धगतवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ८९ ॥ अत्र अरविन्दे एव मकरन्दलीलासम्भवात् चरणारविन्दे इति समस्तनिरङ्गरूपकम्, मकरन्दलीलामित्यत्र मन्दाकिन्यां मकरन्दलीला असम्भवन्ती तत्सादृश्ये पर्यवस्यतीति सादृश्याक्षेपान्निदर्शना, छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ९० ॥

दिगन्तरेभ्यः पृथिवीपतीना-माकर्षकौतूहलसिद्धविद्याम्।
ततः क्षितीशः स निजां तनूजां मध्ये महाराजकमाजुहाव ॥ ९२ ॥
दासीषु नासीरचरीषु जातं स्फीतं क्रमेणालिषु वीक्षितासु।
स्वाङ्गेषु रूपोत्थमथाद्भुताब्धि-मुद्वेलयन्तीमवलोककानाम् ॥ ९३ ॥
स्निग्धत्वमायाजललेपलोप-सपत्नरत्नांशुमृजांशुकाभाम्।
नेपथ्यहीरद्युतिवारिवीचि-स्वच्छायसच्छायनिजालिजालाम् ॥ ९४ ॥

पक्षिमात्रपक्षिविशेषयोः। शुभशंसिनिमित्ते च शकुनं स्यान्नपुंसकम्' मे, 'स्वरो नासासमीरणे, उदात्तादावकारादौ षड्जादौ च ध्वनौ पुमान्' मे ॥ ९१ ॥

अथ भीमः सभामध्ये भैमीमानेतुमादिदेशेत्याह। दिगन्तरेभ्य इति। ततो देवीसपर्यानन्तरं स क्षितीशो भीमः मध्येमहाराजकं महाराजसमूहमध्ये निजां तनूजां पुत्रीम् आजुहाव आकारितवान्। किम्भूतां दिगन्तरेभ्यः नानादिग्भ्यः पृथिवीपतीनां राज्ञां य आकर्षः आकर्षणं तत्र यत् कौतूहलं कौतुकं तत्र सिद्धविद्यां जपादिनात्मवशीकृतमन्त्ररूपां, सौन्दर्येण सर्वाकर्षणकारिणीम्। मध्येमहाराजकमिति 'पारेमध्ये षष्ठ्या वा' इत्यव्ययीभावः ॥ ९२ ॥

अथ सभां प्रविशन्तीं राजभिर्दृश्यमानां भैमीं षोडशभिः श्लोकैः कुलकेन विशिनष्टि। दासीष्विति। नासीरचरीषु अग्रसरीषु दासीषु भैम्याश्चेटीषु वीक्षितासु सतीषु जातं प्रथमं समुत्पन्नं क्रमेणानन्तरम् आलिषु भैम्याः सखीषु वीक्षितासु सतीषु स्फीतम् उपचितम्, अथानन्तरं स्वाङ्गेषु भैम्या अवयवेषु दृष्टेषु सत्सु रूपात् सौन्दर्यात् उत्थितम् उच्छलितुमारब्धम्, अवलोककानां प्रेक्षकाणाम् अद्भुताब्धिं विस्मयसमुद्रम् उद्वेलयन्तीम् अतिक्रान्तमर्यादं कुर्वतीं भैमीं, पपावपाङ्गैरथ राजराजिरिति इतः षोडशश्लोकेनान्वयः। दास्यादिषु क्रमेण अधिकसौन्दर्यदर्शनेन राजानोऽतितरां मुग्धा जाता इति भावः ॥ ९३ ॥

स्निग्धत्वेति। किम्भूताम्, स्निग्धत्वाय चैक्कण्यजनकौ यौ मायाजललेपौ, मायाजलं शुद्धिकारकं कृत्रिमोदक लेपो वर्णोत्कर्षकारी द्रव्यविशेषसंयोगस्तयो लोपे नाशे सपत्नाः शत्रुभूताः स्निग्धत्वजनकमायाजलाद्यनपेक्षिणो ये रत्नानाम् अंशवः किरणास्तैर्मृजा शुद्धिर्यस्यास्तादृशी अंशुकस्य वस्त्रस्य आभा दीप्तिर्यस्यास्तादृशीं, स्वभावतः परिष्कृतै रत्नैः खचितं वस्त्रं परिहितवतीमित्यर्थः। स्निग्धत्वं तैलविशेषादिना चैक्कण्य मायाजलं लेपश्च एषां लोपे इति वा। सपत्नेत्यत्र सयत्नेति पाश्चात्यानां पुस्तकेषु पाठः। तत्र स्निग्धत्वमायाजललेपलोपे सयत्नानि कृतप्रयासानि कथमपिताननङ्गीकुर्वाणानि यानि रत्नानीत्याद्यन्वयः। मायाजलादिकम् अनुज्ज्वलरत्नानामौज्ज्वल्यकारकं, भैमीवस्त्रप्रोतरत्नानि तु स्वभावादेवोज्ज्वलानीति भावः। तथा नेपथ्येषु भूषणेषु विद्यमाना

---

अत्र लोकपालैकधुरीण इत्युपमा छेकानुप्रासश्च ॥ ९१ ॥ अत्र सिद्धविद्यामिति रूपकमलङ्कारश्छेकानुप्रासश्चेति-संसृष्टिः ॥ ९२ ॥ "अत्र एकस्मिन्नद्भुताब्धौ क्रमेणानेकेषां जातत्वस्फीतत्वोद्वेलत्वादीनां वृत्तिकथनात् पर्यायालङ्कारभेदः" जी ॥ ९३ ॥

विलेपनामोदमुदागतेन तत्कर्णपूरोत्पलसर्पिणा च ।
रतीशदूतेन मधुव्रतेन कर्णेरहः किञ्चिदिवोच्यमानाम् ॥ ९५ ॥
विरोधिवर्णाभरणाश्मभासां मल्लाजिकौतूहलमीक्षमाणाम् ।
स्मरस्वचापभ्रमचालिते नु भ्रुवौ विलासाद्वलिते वहन्तीम् ॥ ९६ ॥
सामोदपुष्पाशुगवासिताङ्गीं किशोरशाखाग्रशयालिमालाम् ।
वसन्तलक्ष्मीमिव राजभिस्तैः कल्पद्रुमैरप्यभिलष्यमाणाम् ॥ ९७ ॥

ये हीरास्तेषां द्युतिरेव वारि जलं तत्र वर्तत इति तादृशं तदवस्थितं यत् स्वच्छायं भैम्या एव प्रतिबिम्बं तेन सच्छायं समानप्रभ सदृशम् आलिजालं सखीसमूहो यस्यास्तादृशीम्, हीरकादिजडितालङ्कारयुताम् । स्वापेक्षया किञ्चिन्न्यूनाभिः सखीभिर्युक्ताञ्चेत्यर्थः । अन्यत्रापि जले प्रतिबिम्बं जायते । आलिजालमित्यत्र आलिमालामिति क्वचित्पाठः ॥ ९४ ॥

विलेपनेति । पुनः किम्भूताम्, –विलेपनस्य चन्दनाद्यङ्गलेपस्य आमोदेन परिमलेन या मुद्धर्षस्तया हेतुना आगतेन अथानन्तरं तस्या भैम्याः कर्णपूर एव उत्पलं तत् सर्पिणा तत्समीपगतेन मधुव्रतेन भ्रमरेणैव रतीशस्य कामस्य दूतेन सन्देशहारकेण कर्णे किञ्चित् किमपि रहो गोपनीयम् एषां मध्ये नल एव सुन्दरः स एव वरणीय इत्यादिकम् उच्यमानामिव कथ्यमानामिव । अन्योऽपि दूतो गोपनीयं कर्णे कथयति ॥ ९५ ॥

विरोधीति । पुनः किम्भूताम्, विरोधिनः परस्परं विरुद्धा वर्णाः शुक्लपीतरक्तादयो येषां तथाविधा ये आभरणाश्मानो भूषणोपलास्तेषां या भासो दीप्तयस्तासां मल्लाजिकौतूहलं मल्लयुद्धकौतुकम् ईक्षमाणां नम्रमुखत्वात् परस्परोपमर्दं कुर्वतीं रत्नसकलदीप्तिमिव पश्यन्तीम् । तथा विलासात्कटाक्षविक्षेपवशात् बलिते वक्रिते भ्रुवौ वहन्तीं धारयन्तीम् । वक्रतायामुत्प्रेक्षते, किम्भूते –स्मरेण कामेन स्वचापभ्रमेण निजधनुर्भ्रान्त्या चालिते नु गुणारोपार्थमस्त्रीकृते इव, नूत्प्रेक्षायाम् ॥ ९६ ॥

सामोदेति । पुनः किम्भूताम्,–कल्पद्रुमैर्वसन्तलक्ष्मीमिव तैराजभिरभिलष्यमाणामपि लिप्स्यमानां च, यथा कल्पवृक्षैर्वसन्तश्रीरभिलष्यते तथा राजभिरभिलष्यमाणामित्यर्थः । उभयोः साधर्म्यं विशेषणेनाह,—किम्भूतां, सामोदोऽतिसुन्दरः तल्लोभेन सहर्षो यः पुष्पाशुगः कामस्तेन वासितमधिष्ठितमङ्गं यस्यास्तादृशीं, वसन्तलक्ष्मीमपि सामोदं सपरिमलं यत् पुष्पं तत्सम्बन्धिना

---

अत्र 'द्युतिवारि' इत्यत्र रूपकम्, वृत्त्यनुप्रास-छेकानुप्रासौ च । "अत्र भूषामणिप्रभाझरमग्ने सखीजने स्वप्रतिबिम्बत्वोत्प्रेक्षया तासामपि तत्समानसौन्दर्यं वस्तु व्यज्यते" जी ॥ ९४ ॥ अत्र मधुव्रतेन रतीशदूतेनेति रूपकम्, "उच्यमानामिवस्थितामिति क्रियोत्प्रेक्षा, तया च तस्यास्तदा किलकिञ्चितादिशृङ्गारचेष्टाविर्भावो व्यज्यते" जी । छेकानुप्रासश्चेति संसृष्टिः ॥ ९५ ॥ अत्र कौतूहलमीक्षमानामिवेतिप्रतीतेः प्रतीयमानोत्प्रेक्षा, 'चालिते नु' इति वाच्या क्रियोत्प्रेक्षा चानयोः निरपेक्षतया स्थितेः संसृष्टिः ॥ ९६ ॥

पीतावदातारुणनीलभासां देहोपदेहान् किरणैर्मणीनाम्।
गोरोचनाचन्दनकुङ्कुमैण-नाभीविलेपान् पुनरुक्तयन्तीम्॥ ९८॥
स्मरं प्रसूनेन शरासनेन जेतारमश्रद्दधतीं नलस्य।
तस्मै स्वभूषाद्दशदंशुशिल्पं बलद्विषः कार्म्मुकमर्पयन्तीम्॥ ९९॥
विभूषणेभ्यो वरमंशुकेषु ततो वरं सान्द्रमणिप्रभासु।
सम्यक् पुनः क्वापि न राजकस्य पातुं दृशां धातृधृतावकाशाम्॥ १००॥

आशुगेन वायुना वासितं सुरभीकृतम् अङ्गं स्वरूपं यस्यास्तादृशीम्, तथा किशोराणि कोमलानि सूक्ष्माणि वा शाखाग्राणि अङ्गुलयो येषाम् एवंविधाः शया हस्ता यस्यास्तादृशी आलिमाला सखीश्रेणी यस्यास्तादृशीं, किशोरं नवीनं यत् शाखाग्रं पल्लवस्तद्वत् शयो यस्या इति केचित्। वसन्तलक्ष्मीमपि किशोरशाखा किसलयस्तदग्रे शया शयाना स्थिता अलिमाला भ्रमरश्रेणी यस्यां तादृशीम्। शाखाग्रमिति अङ्गुल्या यौगिकी संज्ञा, शाखाया बाहोरग्रमिति व्युत्पत्तेः। 'आमोदो गन्धहर्षयोः' 'आशुगो मारुते वाणे', 'शाखा पक्षान्तरे बाहौ वेदभागद्रुमाङ्गयोः' मे॥ ९७॥

पीतेति। पुनः किम्भूताम्, पीता गौरा अवदाताः शुक्लाः अरुणा रक्ता नीलाः कृष्णाश्च भासो दीप्तयो येषां तादृशानां मणीनां किरणैः कृत्वा देहोपदेहाच्छरीरानुलेपनाद्धेतोः क्रमेण गोरोचनया चन्दनेन कुङ्कुमेन एणनाभ्या कस्तूर्या च कृत्वा विलेपान् अनुलेपनानि पुनरुक्तयन्तीं पुनरुक्तान् कुर्वतीं, विफलान् कुर्वतीमित्यर्थः॥ ९८॥

स्मरमिति। पुनः किम्भूताम्, स्मरं कामं प्रसूनेन पुष्पमयेण शरासनेन धनुषा कृत्वा नलस्य जेतारं जैत्रम् अश्रद्दधतीम् असम्भावयन्तीम्। अतएव तस्मै स्मराय स्वभूषादशदंशूनां निजालङ्काररत्नकिरणानां शिल्पं निर्माणरूपं बलद्विष इन्द्रस्य कार्मुकं कठिनं धनुरर्पयन्तीं ददानामिव। इन्द्रधनुर्हि नानाविधरत्नकिरणैरुदेतीति प्रसिद्धिः। इन्द्रधनुष इव यदीया रत्नशोभेति भावः॥ ९९॥

विभूषणेभ्य इति। पुनः किम्भूताम्, वरमिति मनागिष्टे। विभूषणेभ्यः स्वर्णालङ्कारेभ्यो वरमंशुकेषु वस्त्रेषु राजकस्य राजसमूहस्य दृशा चक्षुषा पातुं सादरमीक्षितुं धात्रा विधात्रा धृतः सम्पादितोऽवकाशः स्थानं यस्यां तादृशीम्। तथा ततोऽंशुकेभ्योऽपि वरं सान्द्रमणिप्रभासु उज्ज्वलमणिदीप्तिषु राजकस्य दृशा पातुं धातृधृतावकाशाम्। विभूषणानि प्रायेण वस्त्रैरावृतानि, अतस्तदपेक्षया तस्या वस्त्राणि वरं राजानः पश्यन्तु, किंवा वस्त्राणामपि मणिकिरणैराच्छादितत्वात् तदपेक्षया

---

अत्र शब्द-श्लेषोत्थापितपूर्णोपमा, यथा सर्वाभिलाषपूरकैरपि कल्पवृक्षैः वसन्तलक्ष्मीरपेक्ष्यते तद्वद्राजभिरपीति सात्त्विकोक्तिः" जी॥ ९७॥ "अत्र गोरोचनाद्यनुलेपचतुष्टयस्य यथासंख्यसम्बन्धेन पीतादिमणिकिरणैकतापत्तिकथनात् यथासंख्यसङ्कीर्णः सामान्यालङ्कारः" जी। पुनरुक्तयन्तीम् इवेति सम्भावनाप्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा, च्छेकानुप्रासश्च॥ ९८॥ अत्र अर्पयन्तीम् इव स्थितामितिप्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा॥ ९९॥

प्राक् पुष्पवर्षैर्वियतः पतद्भि-र्द्रष्टुं न दत्तामथ तद्द्विरेफैः ।
तद्भीतिभुग्नेन ततो मुखेन विधेरहो वाञ्छितविघ्नयत्नः ॥ १०१ ॥
एतद्वरं स्यामिति राजकेन मनोरथातिथ्यमवापिताय ।
सखीमुखायोत्सृजतीमपाङ्गात् कर्पूरकस्तुरिकयोः प्रवाहम् ॥ १०२ ॥

वरं तस्या मणिकिरणान् ते पश्यन्त्वित्यर्थः। किन्तु क्वापि मुखाद्यवयवेषु पुनः सम्यक् सामस्त्येन राजकस्य दृशा पातुं न धातृधृतावकाशाम्। कथञ्चिद्राजानोऽस्या वस्त्रादीनि पश्यन्तु, किन्तु भूषणादिभिराच्छादितत्वान्मुखाद्यवयवानां दर्शने विधिनैव तेभ्योऽवकाशो न दत्त इत्यर्थः। विभूषणांशुकमणिशून्यम् अस्याः किमप्यङ्गं नासीदिति भावः। 'मनागिष्टे वरं क्लीबे केचिदाहुस्तदव्ययम्' मे ॥ १०० ॥

प्रकारान्तरेणाप्यमुमर्थमेवाह, प्रागिति। पुनः किम्भूताम्, वियतो गगनात्पतद्भिः सन्तुष्टदेवगणप्रक्षिप्तैः पुष्पवर्षैः प्राक् प्रथमं राजकस्य द्रष्टुं न दत्ताम्, अथानन्तरं तद्द्विरेफैः सौरभलोभात् तत्पुष्पानुगामिभिर्भ्रमरैर्द्रष्टुं न दत्ताम्, ततोऽनन्तरं तेभ्यो द्विरेफेभ्यो या भीतिर्भयं तया भुग्नेन वक्रीकृतेन मुखेन द्रष्टुं न दत्ताम्। दत्तामित्यत्र विधिरेव कर्त्तेति व्यञ्जयति। विधेर्विधातुर्वाञ्छितविघ्नयत्नोऽभिलषितप्रतिबन्धकीभूतप्रयासः अहो आश्चर्यविषयः। विधिना येन केनापि प्रकारेण सर्वाभिलाषं नाशयितुं प्रयस्यते इत्यर्थः। राजानो भैम्या मुखाद्यवयवं द्रष्टुमत्यन्तमुत्कण्ठिता जाता इति भावः ॥ १०१ ॥

एतदिति। पुनः किम्भूताम्,--अपाङ्गात् नेत्रप्रान्तात् कर्पूरकस्तूरिकयोः प्रवाहं श्वेतश्यामकान्तिपूरं सखीमुखाय उत्सृजतीं ददतीं, कटाक्षैः सखीमुखमवलोकयन्तीमित्यर्थः। किम्भूताय सखीमुखाय, अहं एतत् सखीमुखं वरं मनागिष्टं स्यां भवेयम्, इत्येवं प्रकारेण राजकेन राजसमूहेन मनोरथातिथ्यम् अभिलाषविषयताम् अवापिताय प्रापिताय। सखीमुखत्वे भैमी कटाक्षलाभो भवेदित्यस्माकं सखीमुखत्वमेव वरं, नतु राजत्वमिति राजभिरभिलषितायेत्यर्थः। कर्पूरकस्तुरिकापदेन कटाक्षस्य सितासितत्वमुक्तम् ॥ १०२

"अत्र विभूषणानामुत्तरोत्तरोत्कर्षद्वारेण राजकदृष्टेः क्रमेण विभूषणाद्यनेकाधारसम्बन्धोक्तेः सारालङ्कारः तत्सङ्कीर्णपर्य्यायभेदश्च" जी। तयोर्लक्षणे च दर्पणे 'उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते' 'क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् भवति क्रियते वा चेत् तदा पर्य्याय इष्यते।' छेकानुप्रासश्च ॥ १०० ॥ अत्र विधेः सामान्येन वाञ्छितविघ्नयत्नेन विशेषस्य राज्ञां दर्शनविघ्नस्य समर्थनाद् "अर्थान्तरन्यासः, तत्र चैकस्या राजदृष्टेः क्रमेण भैमीदर्शनप्रतिबन्धकपुष्पवृष्ट्याद्यनेकाधारसम्बन्धोत्थेन पर्य्यायेण सङ्करः।" जी ॥ १०१ ॥ अत्र "दृष्टीनां सितासितत्वेन कर्पूरकस्तूरिकाप्रवाहत्वनिर्द्देशः, अतएव विषयनिगरणेन विषयिमात्रोपनिबन्धाद् भेदेऽभेदरूपातिशयोक्त्यलङ्कारः।" जी ॥ १०२ ॥

स्मितेच्छुदन्तच्छदकम्पकिञ्चि-द्दिगम्बरीभूतरदांशुवृन्दैः।
आनन्दितोर्वीन्द्रमुखारविन्दै-र्मदं नुदन्तीं हृदि कौमुदीनाम्॥ १०३॥
प्रत्यङ्गभूषाच्छमणिच्छलेन यल्लग्ननिश्चलविलोकनेत्राम्।
हाराग्रजाग्रद्गरुडाश्मरश्मि-पीनाभनाभीकुहरान्धकाराम्॥ १०४॥
तद्गौरसारस्मितविस्मितेन्दु-प्रभाशिरःकम्परुचोऽभिनेतुम्।
विपाण्डुता-मण्डित-चामराली-नानामरालीकृतलास्यलीलाम्॥ १०५॥

स्मितेच्छुदन्तेति। पुनः किम्भूताम्,—स्मितेच्छवोरीषद्धसनं चिकीर्षवोर्दन्तच्छदयोरोष्ठाधरयोः कम्पेन ईषच्चलनेन किञ्चिद्दिगम्बरीभूता विवस्त्रीभूता ईषद्व्यक्तीभूता ये रदा दन्तास्तेषाम् अंशुवृन्दैः किरणसमूहैः कृत्वा कौमुदीनां ज्योत्स्नानां हृदि स्थितं मदं गर्वं नुदन्तीम् खण्डयन्तीम्। मदखण्डने हेतुगर्भविशेषणमाह—किम्भूतैः, आनन्दितानि प्रफुल्लीकृतानि उर्वीन्द्राणां राज्ञां मुखान्येव अरविन्दानि यैस्तादृशैः। कौमुद्यो हि पद्मानि न प्रकाशयितुं शक्नुवन्ति, एतैस्तु पद्मान्यपि प्रकाशितानि। अतः कौमुदीगर्वखण्डनमेषां युक्तमित्यर्थः। सहास्यमुखामिति भावः॥ १०३॥

प्रत्यङ्गेति। पुनः किम्भूताम्, प्रत्यङ्गं प्रत्यवयवं भूषासु भूषणेषु वर्तमाना येऽच्छा निर्मला मणयस्तेषां छलेन येषु अङ्गेषु लग्नानि, तेष्वेवाङ्गेषु निश्चलानि लोकानां राज्ञां नेत्राणि यस्यास्तादृशीम्, नैते भूषणमणयः, किन्तु राज्ञां दर्शनोत्सुकानि अङ्गेषु लगित्वा निश्चलानि नयनान्येवेत्यर्थः। तथा हाराग्रे जाग्रत् स्फुरन् यो गरुडाश्मा मरकतमणिस्तस्य रश्मिभिः किरणैः पीना वर्द्धिता आभा यस्य तादृशो नाभीकुहरान्धकारो नाभीरूपदरीस्थिततिमिरं यस्यास्तादृशीम्॥ १०४॥

तद्गौरेति। पुनः किम्भूताम्,—तस्या भैम्या यद्गौरसारस्मितं शुक्लश्रेष्ठभूतमीषद्धसनं तेन विस्मिता प्राप्तविस्मया या इन्दुप्रभा चन्द्रकान्तिस्तस्या यः शिरःकम्पो विस्मयेन मस्तकचालनं तस्य रुचो विलासान् अभिनेतुं विस्मयवशाच्चन्द्रकान्तिरेवं शिरः कम्पयतीति प्रकाशयितुं विपाण्डुतया शुक्लाधिक्येन मण्डिता भूषिता या चामराली चामरश्रेणी सैव नानामराल्यः नानाहंस्यस्ताभिः कृता लास्यस्य नृत्यस्य लीला विलासो यस्यास्तादृशीम्। अतिशुभ्रचामरैर्वीज्यमानामित्यर्थः॥१०५॥

अत्र कौमुदीनां गर्वखण्डने 'आनन्दितोर्वीन्द्रमुखारविन्दैः' इति पदार्थो हेतुरिति काव्यलिङ्गम्, आनन्दितोर्वीन्द्र मुखारविन्दैरिति अधिकारूढवैशिष्ट्यरूपकम्, रदांशुवृन्दानां कौमुदीगर्वखण्डनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिश्छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः॥ १०३॥ अत्र भूषणमणिप्रतिषेधेन राजनेत्रस्थापनादपह्नुतिः, गरुडाश्मरश्मिनाभिकुहरान्धकारयोः समानकृष्णवर्णत्वेनाभेदोपलब्धेः सामान्यमलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः॥ १०४॥ अत्र इन्दुकिरणस्य विस्मितत्वसम्भावनया प्रतीयमानोत्प्रेक्षा, 'चामराल्येव नानामराली' इति रूपकम्, 'मराली मराली' इति यमकञ्चेत्येतेषां संसृष्टिः॥ १०५॥

तदङ्गभोगावलिगायनीनां मध्ये निरुक्तिक्रमकुण्ठितानाम्।
स्वयं धृतामप्सरसाम्प्रसादं ह्रियं हृदो मण्डनमर्पयन्तीम् ॥ १०६ ॥
तारा रदानां वदनस्य चन्द्रं रुचा कचानाञ्च नभो जयन्तीम्।
आकण्ठमक्ष्णोर्द्वितयं मधूनि महीभृतः कस्य न भोजयन्तीम् ॥ १०७ ॥
अलङ्कृताङ्गाद्भुतकेवलाङ्गीं स्तवाधिकाध्यक्षनिवेद्यलक्ष्मीम्।
इमां विमानेन सभां विशन्तीं पपावपाङ्गैरथ राजराजिः ॥ १०८ ॥ कुलकम् ॥

तदङ्गेति। पुनः किम्भूताम्,— अप्सरसां मेनकादीनां स्वयमात्मनैव धृतां हृदो मण्डनं स्त्रीणां हृदयभूषणरूपां ह्रियं लज्जामेव प्रसादं पारितोषिकम् अर्पयन्तीं ददतीम्। प्रसाददाने हेतुगर्भविशेषणमाह, किम्भूतानां – तस्या भैम्या अङ्गानां या भोगावलिरुपभोगवर्णनग्रन्थस्तस्या गायनीनां गानं कुर्वतीनाम्। लज्जादाने हेतुगर्भविशेषणमाह, पुनः किम्भूतानां स्तुतीनां मध्ये असमाप्तायामेव स्तुतौ निरुक्तिक्रमे निर्वचनपरिपाट्यां विषये कुण्ठितानां निष्प्रतिभानां,सम्यक् स्तोतुमशक्तानामित्यर्थः। अन्योऽपि भोगावलीपाठकानां स्वयं धृतं हारादिकं हृदयमण्डनं प्रसादमर्पयति। तस्याः सौन्दर्यस्तुतिकरणासामर्थ्यादप्सरसोऽपि लज्जिता जाता इति भावः। अप्सरसामिति सम्बन्धविवक्षायां षष्ठी ॥ १०६ ॥

तारा इति। पुनः किम्भूताम्– रदानां दन्तानां रुचा दीप्त्या तारा नक्षत्राणि जयन्तीं तिरस्कुर्वतीम्। तथा वदनस्य मुखस्य रुचा चन्द्रं जयन्तीम्। तथा कचानां केशानाञ्च रुचा नभ आकाशं जयन्तीम्। नीरूपस्याप्याकाशस्य कविभिः श्यामत्वेन वर्ण्यमानत्वात् आकाशापेक्षयाप्यतिश्यामकेशामित्यर्थः। तथा कस्य महीभृतो राज्ञोऽक्ष्णोर्द्वितयं चक्षुर्द्वयम् आकण्ठं कण्ठपर्यन्तम् अतितरामित्यर्थः, मधूनि न भोजयन्तीं न पाययन्तीम्, अपितु सर्वस्यापि। अतिसुन्दरतद्दर्शनेन राजनेत्राणाममृतेनेव तृप्तिर्जातेति भावः ॥ १०७ ॥

अलङ्कृतेति। पुनः किम्भूताम्,—अलङ्कृतात् भूषणैर्भूषितादपि अङ्गात् अन्यासामवयवात् अद्भुतमाश्चर्यं केवलमनलङ्कृतमपि अङ्गं यस्यास्तादृशीम्। यस्या अनलङ्कृतमप्यङ्गमाश्चर्यजनकम् अधुना सालङ्कृते तस्मिन् किं वक्तव्यमित्यर्थः। अत्याश्चर्यजनकभूषितावयवामिति भावः। तथा स्तवात् स्तुतेरधिका स्तुतिवचोऽगोचरा अध्यक्षनिवेद्या प्रत्यक्षदृश्या लक्ष्मीः शोभा यस्यास्तादृशीम्। स्तवो हि आरोपितगुणकथनं, तेनापि यस्य वास्तविकशोभां कथयितुं न शक्यत इत्यर्थः। अथ

---

अत्र ह्रियः मण्डनत्वं प्रति स्वयंधृतामिति विशेषणस्य, तथा प्रसाददानं प्रति तदङ्गभोगावलिगायनीनामिति विशेषणस्य हेतुत्वात् काव्यलिङ्गद्वयं, ह्रियां हृदः मण्डनत्वारोपाद् रूपकम्, ह्रियमर्पयन्तीमिवेति प्रतीतेः प्रतीयमाना क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावरूपः सङ्करः ॥१०६॥ अत्र उत्तरार्द्धं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्, तत्संसृष्टाश्च 'जयन्तीम्' इति सादृश्योपगमात् अर्थगतास्तिस्त्र उपमाः, जयन्तीमित्येकया क्रियया सह ताराचन्द्रनभसां कर्मत्वेनान्वयात्तुल्ययोगितालङ्कारः, सोऽपि पुनः 'नभो जयन्तीम् न भोजयन्तीम्' इति यमकेन संसृज्यते ॥१०७॥

आसीदसौ तत्र न कोऽपि भूप-स्तन्मूर्त्तिरूपोद्भवदद्भुतस्य।
उल्लेसुरङ्गानि मुदा न यस्य विनिद्ररोमाङ्कुरदन्तुराणि॥ १०९॥
अङ्गुष्ठमूर्ध्ना च निपीडिताग्रा मध्येन भागेन च मध्यमायाः।
आस्फोटि भैमीमवलोक्य तत्र न तर्ज्जनी केन जनेन नाम॥ ११०॥
अस्मिन् समाजे मनुजेश्वराणां तां खञ्जनाक्षीमवलोक्य केन।
पुनः पुनर्लोलितमौलिना न भ्रुवोरुदक्षेपितरां द्वयी वा॥ १११॥
स्वयंवरस्याजिरमाजिहानां विभाव्य भैमीमथ भूमीनाथैः।
इदं मुदा विह्वलचित्तभावा-दवादि खण्डाक्षरजिह्मजिह्मम्॥ ११२॥

एवविधां विमानेन नरवाह्येन चतुरङ्गयानेन सभां स्वयंवरसमाजं विशन्तीं प्रविशन्तीम् इमां भैमीं राजराजिर्नृपश्रेणी अपाङ्गैर्नेत्रप्रान्तैः पपौ साभिलाषं ददर्श॥ १०८॥

अथ भैम्यां सभाप्रविष्टायां राज्ञामनुभावानाह, श्लोकत्रयेण। आसीदिति। तस्या भैम्या मूर्तेः शरीरस्य रूपेण सौन्दर्येण उद्भवदुत्पद्यमानमद्भुतमाश्चर्यं यस्य तादृशस्य यस्य मुदा अनुरागेण विनिद्रैरुद्गतैः रोमभिरेव अङ्कुरैर्दन्तुराणि नतोन्नतानि अङ्गानि नोल्लेसुर्हर्षं न प्रापुः, असौ ईदृशः कोऽपि भूपो राजा तत्र सभायां नासीत्, नास्थात्। अपि तु तत्र सर्वेऽपि तद्रूपदर्शनाज्जातविस्मया रोमाञ्चिताङ्गाः सानुरागाश्च जाता इति भावः॥ १०९॥

अङ्गुष्ठेति। नाम सम्भावनायां तत्र सभायां भैमीम् अवलोक्य केन जनेन अङ्गुष्ठस्य मूर्ध्ना अग्रेण च मध्यमाया अङ्गुल्या मध्येन भागेन च निपीडितं नियन्त्रितं नम्रीकृतमग्रं यस्यास्तादृशी तर्जनी दक्षिणकरप्रदेशिनी नास्फोटि न वादिता, अपितु सर्वैरेवास्फोटि। मनोज्ञवस्तु दर्शने हर्षातिशयाज्जनैरेवं क्रियत इति लोकरीतिः॥ ११०॥

अस्मिन्निति। अस्मिन् समाजे सभायां मनुजेश्वराणां राज्ञां मध्ये केन वा जनेन खञ्जनाविव अक्षिणी यस्यास्तादृशीं तां भैमीम् अवलोक्य पुनः पुनः वारवारं लोलितमौलिना कम्पितशिरसा सता भ्रुवोर्द्वयी न उदक्षेपितराम्, अतिशयेनोत्क्षिप्ता। अपि तु सर्वैरेव मनुजेश्वरैराश्चर्यवशाच्छिरःकम्पो भ्रुवोरुत्क्षेपश्च कृत इत्यर्थः॥ १११॥

स्वयंवरस्येति। अथानन्तरं भूमिनाथै राजभिः स्वयंवरस्याजिरमङ्गनम् आजिहानाम् आयातां भैमीं विभाव्य दृष्ट्वा मुदा हर्षेण विह्वलचित्तभावात् विकलान्तःकरणत्वात् खण्डैरसम्पूर्णैरक्षरैर्वर्णैरर्द्धोक्तिरूपैर्हेतुभिर्जिह्मा कुटिला जिह्वा यत्र क्रियायां तद्यथा स्यात्तथा इदं वक्ष्यमाणप्रकार-

अत्र च्छेकानुप्रासः॥ १०८॥ अत्र राज्ञां दमयन्त्याम् अनुरागोदयस्य तज्जनितसात्त्विकभावोदयस्य च वर्णनाद् भावोदयालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः॥ १०९॥ अत्र स्वभावोक्तिरलङ्कारः॥११०॥ "अत्र शिरःकम्पभ्रूविकारौ अद्भुतानुभावौ उक्तौ" जी। खञ्जनाक्षीमिति समासगता लुप्तोपमा॥ १११॥

रम्भादिलोभात् कृतकर्मभिर्भूः शून्यैव मा भूत् सुरभूमिपान्थैः ।
इत्येतयालोपि दिवोऽपि पुंसां वैमत्यमत्यप्सरसा रसायाम् ॥ ११३ ॥
रूपं यदाकर्ण्य जनाननेभ्य-स्तत्तद्दिगन्ताद्वयमागमाम ।
सौन्दर्य्यसारादनुभूयमाना-दस्यास्तदस्माद् बहु नाकनीयः ॥ ११४ ॥
रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्त्ति महानुदन्वान् ।
कस्मादुदस्थादियमन्यथा श्री-र्लावण्यवैदग्ध्यनिधिः पयोधेः ॥ ११५ ॥

मवादि उक्तम्, भैमीदर्शनमात्रेण कामपरवशत्वात् वक्तुमशक्नुवन्तोऽपि हर्षवशाद्वर्णयाञ्चक्रुरित्यर्थः । आजिहानामिति ओहाङ् गतावित्यस्य जुहोत्यादे रूपम् ॥ ११२ ॥

यदवादि तदाह । रम्भादीति । रम्भादीनामप्सरसां लोभात् कृतं कर्म युद्धयज्ञादिकं यैस्तादृशैः सुरभूमेः स्वर्गस्य पान्थैः पथिकैः स्वर्गं जिगमिषुभिः पुरुषैर्भूः पृथिवी शून्यैव रिक्तैव मा भूत् न भवतु इति विचार्य अत्यप्सरसा अतिक्रान्ता अप्सरसो यया तादृश्या एतया भैम्या पुंसां पुरुषाणां दिवोऽपि स्वर्गमुद्दिश्यैव रसायां भूम्यां वैमत्यम् अरुचिरलोपि विनाशितम् । अतिसुन्दरीणामप्सरसामावासं स्वर्गमुद्दिश्य कृतकर्मणां पुरुषाणां भूम्यां पूर्वं वैमत्यं स्थितम्, अधुना त्वप्सरोभ्योऽप्यतिसुन्दर्या रसायामुत्पन्नया भैम्या तद्विनाशितमित्यर्थः । भैमी रम्भादिभ्योऽप्यतिसुन्दरीति भावः । दिव इति उद्दिश्येति यजन्तक्रियापेक्षया 'यजगर्भादेः' इति पञ्चमी । अपरे तु दिवः स्वर्गस्य पुंसाम् इन्द्रादीनां रसायां वैमत्यम् अनिच्छा एतया अलोपि लुप्तमिति व्याचक्षते ॥ ११३ ॥

रूपमिति । वयम् अस्या यद्रूपं सौन्दर्यं जनाननेभ्यो जनमुखेभ्य आकर्ण्य श्रुत्वा तत्तद्दिगन्तात् तस्मात् तस्मात् प्राच्यादिदिक्प्रान्तात् आगमाम आगतवन्तः । तदस्या रूपम् अनुभूयमानात् प्रत्यक्षं दृश्यमानात् अस्मात् सौन्दर्यसारात् लावण्यातिशयाद्धेतोर्बहु अतिशयेन अकनीयोऽनल्पतरं न, अपि तु अल्पतरमेव । अन्यदीयं स्वल्पमपि रूपं लोकमुखाद् बहु श्रूयते, अस्यास्तु यच्छ्रुतं ततोऽप्यधिकमनुभूतमिति भावः । आगमामेति लुङो ङम, लृदित्वादङ् ॥ ११४ ॥

रसस्येति । शृङ्गार इति नाम्ना श्रुतस्य नवरसमध्ये ख्यातस्य रसस्य महान् उदन्वान् समुद्रः क्व कुत्रापि देशे जागर्त्ति तिष्ठति, नाम सम्भाव्यते, नाम प्रश्ने वा क्व जागर्तीति पृच्छ्यते । तिष्ठतीति कथमवगतमित्यत आह,--अन्यथा शृङ्गारसमुद्रं विना लावण्यस्य सौन्दर्यस्य वैदग्ध्यस्य चातुर्यस्य च निधिराश्रय इयं भैमीरूपा श्रीर्लक्ष्मीः कस्मात् पयोधेः समुद्रात् उदस्थात् उत्पन्ना । लक्ष्मीः समुद्रादुत्पन्नेति प्रसिद्धम्, इयन्तु लावण्यवैदग्ध्याभ्यां

---

अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ ॥ ११२ ॥ "अत्र अन्त्यपादे मत्यमत्यमप्सरसारसेति व्यञ्जनयुग्मावृत्त्या च्छेकानुप्रासः, अन्यत्र वृत्त्यनुप्रासः, तयोः मा भूदितीव, अलोपि इवेति उत्प्रेक्षयोः व्यञ्जकाप्रयोगाद गम्ययोः संसृष्टिः" जी ॥ ११३ ॥

साक्षात् सुधांशुर्मुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्कः।
एतद्भ्रुवौ मुख्यमनङ्गचापं पुष्पं पुनस्तद्गुणमात्रवृत्त्या॥ ११६॥
लक्ष्ये धृतं कुण्डलिके सुदत्या ताडङ्कयुग्मं स्मरधन्विने किम्।
सव्यापसव्यं विशिखा विसृष्टा-स्तेनैतयोर्यान्ति किमन्तरेण॥ ११७॥
तनोत्यकीर्त्तिं कुसुमायुधस्य सैषा वतेन्दीवरकर्णपूरौ।
यतः श्रवःकुण्डलिकापराद्ध-शरं खलः ख्यापयिता तमाभ्याम्॥ ११८॥

श्रियोऽप्यधिका, तस्मात् श्रृङ्गाररससमुद्रादुत्पन्ना। स समुद्रः क्वापि देशे वर्त्तत इत्यर्थः॥ ११५॥

साक्षादिति। भैम्या मुखमेव साक्षात् प्रधानभूतः उपमानभूत इति यावत् सुधांशुश्चन्द्रः, दिव आकाशस्य शशाङ्कश्चन्द्रः पुनः स्फुटं सुव्यक्तं लाक्षणिकः लक्षणं कलङ्कमर्हतीति तादृशः, कलङ्कितत्वेन मुखापेक्षया हीनत्वादुपमेय इत्यर्थः। अथ च भैम्या मुखमेव साक्षादभिधावृत्त्या सुधांशुः, सुधांशुपदेन भैम्या मुखमेव मुख्यवृत्त्या अभिधेयमित्यर्थः। दिवो गगनसम्बन्धी शशाङ्कः पुनः स्फुटं निश्चितं लाक्षणिकः सुधांशुपदेन लक्षणया प्रतिपाद्यः, एतदीयकिञ्चिद्गुण-योगाद्गौण इत्यर्थः। चन्द्रापेक्षयाप्युत्कृष्टं भैमीमुखमिति भावः। तथा एतस्या भैम्या भ्रुवौ मुख्यं प्रधानम् अनङ्गचापं कामकार्मुकम्, अनङ्गचापपदेन एतद्भ्रुवावेव अभिधया प्रतिपाद्ये इत्यर्थः, अथ च मुख्यं मुखे भवं भ्रूरूपं कामचापम्। यत् पुनः पुष्पम् अनङ्गचापत्वेन व्यवह्रियते, तत्तयोर्भ्रुवोर्गुणमात्रवृत्त्या उद्दीपकत्वादिगुणसम्बन्धेन गौण्या वृत्त्या, पुष्पे अनङ्गचापपदं लाक्षणि-कमित्यर्थः। अथ च पुष्पं यत् कामचापमित्युच्यते, तद्गुणमात्रस्य मौर्वीमात्रस्य वृत्त्या अवस्थानेन। पुष्परूपकामचापापेक्षयापि भैमीभ्रुवावतिकामोद्दीपिके इति भावः। व्याख्यान्त-राणि तु कष्टकल्पनया सम्भाव्यानीत्युपेक्षितानि॥ ११६॥

लक्ष्ये इति। सुदत्या शोभनदन्तया भैम्या ताडङ्कयुग्मं कर्णभूषणीकृतताडङ्कयुगलं स्मर-धन्विने कामधानुष्काय कुण्डलिके कुण्डलाकारे लक्ष्ये कृत्वा किं धृतम्। तथा तेन कामेन सव्यापसव्यं दक्षिणवामहस्तक्षेपं यथा स्यात्तथा विसृष्टा विमुक्ता विशिखा बाणा एतयोः कुण्डलि-कयोरन्तरेण मध्ये किं यान्ति, कटाक्षबाणाः कर्णताडङ्ककुण्डलाभ्यन्तरेण निर्यान्तीति भावः। प्रवीणस्य धानुष्कस्य बाणा लक्ष्याभ्यन्तरेव यान्ति। सव्यापसव्यमिति कथञ्चित् क्रियाविशेषणं कर्त्तव्यम्॥ ११७॥

तनोतीति। वतेत्याश्चर्य्ये सैषा भैमी इन्दीवरकर्णपूरौ ताडङ्ककुण्डलिकाद्वयान्तर्निहित-नीलो-

---

"अत्र 'इयं श्रीः' इति विषयनिगरणेन विषयिमात्रनिबन्धनाद् भेदेऽप्यभेदरूपातिशयोक्तिः, एतन्मूला च श्रृङ्गाररससागरसद्भावोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करः" जी॥ ११५॥ पूर्व्वार्धे स्फुटशब्दप्रयोगाद् परार्द्धे च तदनुपङ्गात् वाच्योत्प्रेक्षाद्वयस्यान्योन्यानपेक्षस्य संसृष्टिः॥ ११६॥ धृतं किमिति एका वाच्योत्प्रेक्षा, तदुत्थापिता यान्ति किमिति अपरा वाच्योत्प्रेक्षेति

छद्मैव तच्छम्बरजं विसिन्या-स्तत्पद्ममस्यास्तु भुजाग्रसद्म।
उत्कण्टकादुद्गमनेन नाला-दुत्कण्टकं शातशिखैर्नखैर्यत्॥ १२४॥
जागर्त्ति मर्त्येषु तुलार्थमस्या योग्येति योग्यानुपलम्भनं नः।
यद्यस्ति नाके भुवनेऽथवाध-स्तदा न कौतस्कुतलोकबाधः॥ १२५॥

पृथक् प्रत्येकं तस्य विसस्य प्रसूनं पुष्पं कमललक्षणः करो राजग्राह्यभागोऽगृह्यत गृहीतः किम्, अथ च करः पाणिः। नैतौ पाणी, किन्तु विजितविसदत्तबलिरूपकमलद्वयमिति वितर्कः। कुत एतदित्याशङ्क्याह,—इह भुजद्वये तत्पाणिभूतं विसप्रसूनं श्रियः शोभाया अथ च लक्ष्म्या गृहा वसतिस्थानं श्रीगृहत्वेन कैर्लोकैर्न ईक्ष्यते, न दृश्यते, अपि तु सर्वैरेव ईक्ष्यते। तथा कैर्वा लोकैः कर एव करशब्देनैव न गीयते, न कीर्त्त्यते, अपि तु सर्वैरेव गीयते। प्रत्यक्षसिद्धस्यानपलपनीयत्वात्, जनप्रवादस्यामूलत्वाभावाच्च सत्यमेव तदित्यर्थः। भैम्या बाहुकरं विसकमलाभ्यामप्यतिरमणीयमिति भावः। 'गृहाः पुंसि च भूम्न्येव' अ॥ १२३॥

छद्मैवेति। तत् प्रसिद्धं शम्बरजं जलाज्जातं विसिन्याः पद्मिन्याः पद्मं छद्मैव अलीकमेव अथच शम्बराद्दैत्यविशेषात् जातं तत् छद्मैव मायारूपमेव। तर्हि तत् सत्यं किं तत्राह, अस्या भैम्यास्तु पुनर्भुजाग्रमेव सद्म यस्य तादृशं यत् पद्मं तदेव सत्यं पद्ममित्यर्थः। कुत एतदित्याशङ्क्याह, यद्यस्मात् उत्कण्टकात् उद्गतरोमाञ्चात् अथ च उद्गततीक्ष्णाग्रावयवविशेषात् नालात् भुजदण्डात् अथ च पद्मदण्डात् उद्गमनेन उद्भवेन हेतुना शातशिखैस्तीक्ष्णाग्रैर्नखैः कृत्वा भुजाग्रसद्मपद्ममेव उत्कण्टकम् उद्गतकण्टकम्। विसिनीपुष्पं यदि वास्तविकपद्ममेव स्यात्, तर्हि उत्कण्टकनालोत्पन्नत्वेन उत्कण्टकमेव स्यात्, कार्यकारणयोः समानगुणत्वस्यावश्यम्भावात्। एतद्भुजाग्रसद्मपद्मन्तु उत्कण्टकनालादुत्पन्नञ्च उत्कण्टकञ्च। तस्मादिदमेव वास्तविकपद्ममित्यर्थः। 'शम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे। नपुंसकन्तु सलिलबौद्धव्रतविशेषयोः' मे॥ १२४॥

जागर्त्तीति। मर्त्येषु मर्त्यलोकेषु अस्या भैम्यास्तुलार्थे सादृश्यार्थे योग्या उचिता कापि सुन्दरी जागर्ति तिष्ठति इति इत्थमाशङ्कायां नोऽस्माकं योग्यानुपलम्भनं योग्यायाः सदृश्या अनुपलम्भनं अनुपलब्धिः सदृश्यन्तरानुपलब्धेरेव सा शङ्का कर्तुं न युज्यत इत्यर्थः। यद्वा योग्यञ्च तदनुपलम्भनञ्चेति तत् अभावप्रतीतौ मीमांसकादिस्वीकृतं योग्यानुपलम्भनरूपं प्रमाणमेव तदाशङ्कानिवा-

---

अत्र करोऽगृह्यत किमिति सम्भावनोक्तेः वाच्या क्रियोत्प्रेक्षा, सा च करशब्दश्लेषोत्थापितया राजग्राह्यबलिहस्तयोरभेदाध्यवसायमूलयातिशयोक्त्यानुप्राणिता। पुनश्च श्रीशब्दश्लेषात् लक्ष्मीशोभयोरभेदाध्यवसायादपरातिशयोक्तिरित्यनया संसृष्टिः॥ १२३॥ शाम्बरोत्कण्टकशब्दश्लेषमूलकाभेदाध्यवसायरूपातिशयोक्त्यनुप्राणिता जलजपद्मे छद्मत्वस्य भुजाग्रसद्मपद्मे च सत्यपद्मत्वस्य सम्भावनयोरुत्प्रेक्षाद्वयी। शातशिखैः नखैरित्यनेन नखं प्रतिषिध्य पद्मस्य उत्कण्टकत्वस्थापनाद् अपह्नुतिः, भैमीपाणिपद्मस्य प्रसिद्धपद्मव्यतिरेकोक्त्या व्यतिरेकालङ्कारः, तदेतेषामङ्गाङ्गिभावेन सङ्करः, वृत्त्यनुप्रासश्चेति संसृष्टिः॥ १२४॥

नमः करेभ्योऽस्तु विधेर्न्न वास्तु स्पृष्टं धियाप्यस्य न किं पुनस्तैः ।
स्पर्शादिदं स्याल्लुलितं हि शिल्पं मनोभुवोऽनङ्गतयानुरूपम् ॥ १२६ ॥
इमां न मृद्वीमसृजत् कराभ्यां वेधाः कुशाध्यासनकर्कशाभ्याम् ।
शृङ्गारधारां मनसा न शान्ति-विश्रान्तिधन्वाध्वमहीरुहेण ॥ १२७ ॥

रकमित्यर्थः । तच्च प्रतियोगिसत्तापादकक्कापत्तिविषयोपलब्धिप्रतियोगिकत्वरूपम् । तथा हि मर्त्यलोकेषु यदि भैमीसदृशी विद्येत, तदा तद्वत्तया ते अस्माभिरुपलभ्येरन्, नचोपलभ्यन्ते, तस्मात् मर्त्येषु न क्वापि भैमीसदृशी विद्यत इत्यर्थः । तर्हि स्वर्गे पाताले वा स्यादित्याशङ्क्याह, यदि नाके स्वर्गे अथवा अधोभुवने पाताले एतद्योग्या अस्ति, तर्हि कौतस्कुतस्य कुतः कुत आगतस्य लोकस्य स्वर्गपातालाभ्यामपि समागतस्य देवलोकस्य नागलोकस्य च बाधः संमर्दो न स्यात् । यस्माज्जातस्तस्मात् स्वर्गपातालयोरप्येतत्सदृशी नास्ति, अन्यथा देवलोका नागलोकाश्चात्र नागच्छेयुरिति भावः । कौतस्कुत इति कुतः कुत आगत इति टण्, कस्कादित्वात् विसर्गाभावः ॥ १२५ ॥

नम इति । विधेर्ब्रह्मणः करेभ्यो भैमीनिर्माणकृद्धस्तेभ्यो नमोऽस्तु, वा अथवा तेभ्यो नमो नास्तु, यतोऽस्य ब्रह्मणो धियापि बुद्ध्यापि ईदृशं शिल्पं न स्पृष्टं, तैः करैः पुनः स्पृष्टमिति किं वाच्यम् । एतदपि कथमित्यत आह, हि यस्मात् इदमतिमृदु भैमीलक्षणं शिल्पं स्पर्शात् हस्तादिसंस्पर्शात् लुलितं मृदितं स्यात् । तर्हि केन निर्मितमित्याह, इदं शिल्पम् अनङ्गतया निरवयवत्वेन मनोभुवः कामस्य अनुरूपं योग्यम् । काम एवास्य निर्माता, न पुनर्विधिस्तस्मात् कामायैव नमोऽस्त्वित्यर्थः ॥ १२६ ॥

इमामिति । वेधा विधाता मृद्वीं कोमलाङ्गीम् इमां भैमीं कराभ्यां पाणिभ्यां न असृजत् न निर्मितवान् । किम्भूताभ्याम्, - यतः कुशस्य कुशाङ्गुरीयस्य अध्यासनेन अधिष्ठानेन कर्कशाभ्यां कठिनाभ्याम ; नहि कोमलं कठिनेन सृज्यते । तर्हि मनसो निरवयवत्वात् तेनैवासृजदित्याशङ्क्याह,—शृङ्गारधारां शृङ्गारप्रवाहमयीम् अनवच्छिन्नशृङ्गाररसामिमां मनसापि नासृजत् । किम्भूतेन, यतः शान्तेः शान्तरसस्य विश्रान्त्यै विश्रामाय धन्वाध्वनि मरुदेशमार्गे महीरुहेण वृक्षरूपेण, सदा शान्तरसयुक्तेनेत्यर्थः । न हि शान्तरसावलम्बिना शृङ्गाररसमयी स्रष्टुं शक्यते । तस्माद्विधिना कराभ्यां मनसा वा नेयं सृष्टेत्यर्थः ॥ १२७ ॥

अत्र "अहो एवमनुपलब्ध्यर्थापत्तिभ्यामस्यास्त्रिलोक्यामपि तुलाभावो निश्चित इत्यर्थः । अत एवोपमानलोपात् लुप्तोपमालङ्कारः" जी ॥ १२५ ॥ "अत्र भैमीशिल्पस्य विधिकरसम्बन्धेऽप्यसम्बन्धोक्तेरतिशयोक्ति स्तत्सापेक्षा चेयमनङ्गसृष्टित्वोत्प्रेक्षेति सङ्करः" जी । तैः करैः पुनःस्पृष्टमिति किं वाच्यमिति अर्थापत्तिः ॥ १२६ ॥ अत्र विधातुः अस्याः सृष्टिसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः, कराभ्यां सृष्ट्यभावे मृद्वीमिति कुशाध्यासनकर्कशाभ्यामिति च विशेषणपदार्थस्य हेतुत्वादेकं काव्यलिङ्गं, शृङ्गारधारामिति शान्तिविश्रान्तिधन्वाध्व-महीरुहेणेति पदार्थस्य च मनःकरणकसृष्ट्यभावे हेतुत्वात् अपरं काव्यलिङ्गम्, दमयन्त्यां शृङ्गार-धारात्वारोपाद् रूपकम् ॥१२७॥

उल्लास्य धातुस्तुलिता करेण श्रोणौ किमेषा स्तनयोर्गुरुर्वा ।
तेनान्तरालैस्त्रिभिरङ्गुलीना-मुदीतमध्यत्रिबलीविलासा ॥ १२८ ॥
निजामृतोद्यन्नवनीतजाङ्गी-मेतां क्रमोन्मीलितपीतिमानम् ।
कृत्वेन्दुरस्या मुखमात्मनाभू-न्निद्रालुना दुर्घटमम्बुजेन ॥ १२६ ॥
अस्याः स चारुर्मधुरेव कारुः श्वासं वितेने मलयानिलेन ।
अमूनि पुष्पैर्विदधेऽङ्गकानि चकार वाचं पिकपञ्चमेन ॥ १३० ॥

उल्लास्येति । एषा भैमी श्रोणौ नितम्बदेशावच्छेदेन किं गुरुः, किंवा कुचयोः स्तनद्वयावच्छेदेन गुरुरिति ज्ञातुं धातुर्विधातुः करेण उल्लास्य उत्तोल्य एषा तुलिता परिमिता, तेनैव हेतुना एषा चतसृणामङ्गुलीनां त्रिभिरन्तरालैरभ्यन्तरैः कृत्वा उदीत उद्गतो मध्ये मध्यदेशे त्रिवलीविलासो यस्यास्तादृशी किमिति । किं शब्दोऽत्र योज्यः । अतिपीवरश्रोणिरतिपीवरस्तनी चेयमिति भावः ॥ १२८ ॥

निजेति । इन्दुश्चन्द्र इमां भैमीं निजादात्मीयादमृतात् उद्यत् उत्पन्नं यन्नवनीतं तक्रसारभूतं तस्माज्जायत इति तादृशम् अङ्गं यस्यास्तादृशीं तथा क्रमेण उन्मीलितः प्रकटीभूतः पीतिमा यस्या एवम्भूतां च कृत्वा आत्मना स्वयमेव अस्या भैम्या मुखमभूत् । नवनीते हि क्रमेण पीतिमा जायते, तन्निर्मितत्वाच्चास्यापि पीतत्वं जातम् । ननु पद्ममपि तन्मुखीभवितुं शक्नोति, तत्कथं चन्द्र एव तज्जातमित्युक्तमित्यत आह, अम्बुजेन पद्मेन पुनर्भैमीमुखं दुर्घटं घटयितुमशक्यम् । किम्भूतेन—यतो निद्रालुना, रात्रौ निमीलनशीलेन । तन्मुखन्तु सदा प्रफुल्लम् । इदन्तु रात्रौ सङ्कुचितं भवतीति तेनैतद् दुर्घटमित्यर्थः । अन्योऽपि निद्रालुः सुन्दरवस्तु निर्म्मातुं न शक्नोति । अतिकोमलाङ्गी चन्द्रमुखी चेयमिति भावः ॥ १२९ ॥

अस्या इति । स प्रसिद्धश्चारुर्निर्माणकुशलो मधुर्वसन्त एव अस्याः कारुर्निर्माता । यतः स मलयानिलेन अस्याः श्वासं सुगन्धिनिश्वासं वितेने निर्ममे,तथा पुष्पैश्चम्पकादिभिरस्या अमूनि अतिगौराणि अङ्गकानि अतिकोमलानि शरीराणि विदधे, तथा पिकानां कोकिलानां पञ्चमेन स्वरेण अस्या वाचं मधुरं वचनं चकार । मलयानिलादि सर्वं वसन्तस्यैवाधीनम् । अतस्तैस्तैरुपकरणैर्वसन्त एवास्या निर्मातेत्यर्थः । सुगन्धिनिश्वासा गौरकोमलाङ्गी मधुरवचना चेयमिति भावः । कोकिलो वसन्ते पञ्चमस्वरेण राति, तथाहि 'षड्जं मयूरो वदति स चेन्मत्तस्तु पञ्चमम् । पुष्पसाधारणे काले पिकः कूजति पञ्चमम्' इति ॥ १३० ॥

अत्र तुलिता किमिति, उदीतमध्यत्रिवलिविलासा किमिति च वाच्यक्रियोत्प्रेक्षाद्वयम् ॥ १२८ ॥ अत्र निजामृतोद्यन्नवनीतजाङ्गीमिति असम्बन्धे सम्बन्धरूपातिशयोक्तिः, इन्दुरात्मना मुखमभूत् किमिति प्रतीतेः प्रतीयमानोत्प्रेक्षा च ॥ १२९ ॥ अत्र "चकार इत्युत्प्रेक्षा, अन्यथा कथमेषामीदृशानि सौरभमार्दवमाधुर्य्याणीति भावः" जी. ॥ १३० ॥

कृतिः स्मरस्यैव न धातुरेषा नास्या हि शिल्पीतरकारुजेयः।
रूपस्य शिल्पे वयसा च वेधा निर्जीयते स स्मरकिङ्करेण ॥ १३१ ॥
गुरोरपीमां भणदोष्ठकण्ठं निरुक्तिगर्वच्छिदया विनेतुम्।
श्रमः स्मरस्यैष भवं विहाय मुक्तिं गतानामनुतापनाय ॥ १३२ ॥
आख्यातुमक्षिव्रजसर्वपीतां भैमीं तदेकाङ्गनिखातदृक्षु।
गाथासुधाश्लेषकलाविलासै-रलञ्चकाराननचन्द्रमिन्द्रः ॥ १३३ ॥

कृतिरिति। एषा भैमीरूपा कृतिर्निर्मितिः स्मरस्यैव कामस्यैव, धातुर्ब्रह्मणो न। हि यस्मात् अस्या भैम्याः शिल्पी इतरैः कारुभिः शिल्पिभिर्जेयः पराभवणीयो न। नन्वेतेन धातुर्निर्मातृत्वं कथं निरस्तमित्यत आह, स वेधा विधाता स्मरस्य किङ्करेण सेवकेनापि वयसा यौवनेन रूपस्य शिल्पे निर्म्माणविषये निर्जीयते पराभूयते। विधाता प्रथमं यत् रूपं सृज्यते, ततोप्यधिकं यौवनेन सृज्यते। यतो वेधा यौवनेन पराभूतस्तस्माद्विधातुर्नयं सृष्टिरित्यर्थः॥ १३१ ॥

गुरोरिति। इमां भैमीं भणत् वर्णयत् गुरोरपि अतिस्तावकस्य बृहस्पतेरपि ओष्ठकण्ठं ओष्ठं कण्ठञ्च कर्म निरुक्तौ वर्णयितुमशक्यस्यापि निर्वचनविषये यो गर्वोऽहङ्कारस्तस्य च्छिदया निराकरणेन कृत्वा विनेतुं विनीतं कर्त्तुम् अद्यप्रभृति त्वया निर्वचनं न कर्तव्यमिति शिक्षयितुम्, तथा भवं संसारं विहाय त्यक्त्वा मुक्तिं गतानां जीवन्मुक्तानां नारदादीनाम् अनुतापनाय भैमीसद्भावात संसार एव मोक्षो वयं संसारं परित्यज्य किमिति मुक्ता जाता इति तेषाम् अनुतापं जनयितुञ्च भैमीनिर्माणरूपः श्रमः प्रयासः स्मरस्यैव कामस्यैव न तु विध्यादेः। ओष्ठकण्ठमिति प्राण्यङ्गत्वादेकवद्भावः ॥ १३२ ॥

आख्यातुमिति। इन्द्रस्तस्या भैम्या एकाङ्गे एकैकस्मिन्नप्यवयवे निखाता समारोपिता दृक् दृष्टिर्यैस्तादृशेषु द्विनयनत्वात् केवलमेकैकमेवाङ्गं साभिलाषं पश्यत्सु राजसु मध्ये अक्षिव्रजैः सहस्रसंख्यकैर्नयनैः सर्वेषु अङ्गेषु पीतां साभिलाषं दृष्टसर्वावयवां भैमीम् आख्यातुं वर्णयितुं गाथा श्लोक एव सुधा अमृतं तस्या या श्लेषकला श्लेषालङ्कारविद्या तस्या विलासैः श्लेषालङ्कारयुक्तश्लोकनिर्माणकौशलैः आननचन्द्रं मुखचन्द्रम् अलञ्चकार भूषितवान्। वक्ष्यमाणप्रकारेण श्लेषेण तां वर्णयामासेत्यर्थः। चन्द्रोऽपि सुधासम्पर्किषोड़शकलाविलासैरलङ्कृतो भवति ॥ १३३ ॥

---

अत्र यो ब्रह्मा स्मरकिङ्करेण यौवनेन निर्जीयते स स्मरेण जितः इति किमु वक्तव्यमिति दण्डापूपिकया अन्यार्थागमादर्थापत्तिः। अतः युक्ता स्मरकृतिरेषेति उत्प्रेक्षा। स्वभावरमणीयं तद्रूपं यौवनमदनाभ्यां जगन्मोहनं जातमिति तात्पर्यम् इति जीवातुहृदयम् ॥ १३१ ॥ अत्र "स्मरस्य एष श्रमः मुक्तिं गतानामनुतापाय भवतीति उत्प्रेक्षा, तया किमुतान्येषामिति अर्थापत्तिर्व्यज्यते। दमयन्तीबन्धरहितां मुक्तिं धिगिति भावः" जी ॥ १३२ ॥ 'गाथा एव सुधा' 'श्लेषकलाविद्या एव चन्द्रस्य कला' 'आननमेव चन्द्रः' इति च श्लिष्टाश्लिष्टरूपकत्रयमिति सङ्करः ॥ १३३ ॥

स्मितेन गौरी हरिणी दृशेयं वीणावती सुस्वरकण्ठभासा।
हेमैव कायप्रभयाङ्गशेषैस्तन्वी मतिं क्रामति मे न कापि ॥ १३४ ॥
इति स्तुवानः सविधे नलेन विलोकितः शङ्कितमानसेन।
व्याहृत्य मर्त्योचितमर्थमुक्ते-राखण्डलस्तस्य नुनोद शङ्काम् ॥ १३५ ॥
स्वं नैषधादेशमहो विधाय कार्यस्य हेतोरपि नानलः सन्।
किं स्थानिवद्भावमधत्त दुष्टं तादृक्कृतव्याकरणः पुनः सः ॥ १३६ ॥

इन्द्रप्रणीतां श्लिष्टगाथामेवाह। स्मितेनेति। इयं भैमी स्मितेन हास्येन गौरी शुक्ला, अथच अप्सरोविशेषः, पार्वती वा, वरुणवधूर्वा। तथा दृशा दीर्घचक्षुषा हरिणी कुरङ्गी, अथच अप्सरोविशेषः। तथा सुस्वरकण्ठभासा अतिमधुरकण्ठस्वरश्रिया वीणावती विपञ्चीवाद्ययुक्ता, अथ च अप्सरोविशेषः, सरस्वती वा। तथा कायप्रभया अङ्गकान्त्या हेमैव स्वर्णमय्येव, अथ च हेमा स्वर्णरेखाप्सरोविशेष एव। तथा अस्या अङ्गानाम् अवयवानां शेषैः कृत्वा अवशिष्टान्यङ्गानि दृष्ट्वेत्यर्थः, कापि तन्वी सुन्दरी मे मम मतिं बुद्धिं न क्रामति, न बुद्धिविषयिणी भवति। एतदवशिष्टाङ्गानां साम्यं न कुत्रापि सुन्दर्यां पश्यामीत्यर्थः। अथ च एतस्या अङ्गशेषैः कृत्वा तन्वी मेनका अप्सरोविशेषोऽपि मतिं क्रामति। एतस्या अङ्गानि दृष्ट्वा मेनकाऽप्सरा अपि स्मर्यत इत्यर्थः। साक्षान्मेनकेयमिति भावः ॥ १३४ ॥

इतीति। सविधे नलस्य समीपे इत्येवंप्रकारेण स्तुवानो गौर्याद्यप्सरस्त्वेन भैमीं वर्णयन् आखण्डल इन्द्रः शङ्कितमानसेन कथमयं भैमीमप्सरस्त्वेन स्तौति, नूनमयं मद्वेशधारी इन्द्रो भवेदिति संशयितान्तःकरणेन नलेन विलोकितः सोत्कण्ठमीक्षितः सन् उक्तेः स्मितेनेत्यादिगौर्याद्यप्सरःप्रतिपादकस्ववचनस्य मर्त्योचितम् अर्थं मनुष्ययोग्यं शुक्लेत्यादिप्रथमार्थं व्याहृत्य व्याख्याय तस्य नलस्य शङ्कां नुनोद अपनीतवान्। प्रथमार्थं श्रुत्वा ममैवान्यथा बुद्धिर्जाता, नत्वयमिन्द्रः, किन्तु कश्चन राजेति मत्वा नलः शङ्कां तत्याजेति भावः ॥ १३५ ॥

स्वमिति। अहो आश्चर्ये स इन्द्रः कार्यस्य भैमीप्राप्तिलक्षणस्य हेतोः स्वमात्मानं नैषधादेशं नलरूपमादेशं विधाय नलरूपं धृत्वेत्यर्थः अनलो न सन्नपि, नलभिन्नो न भवन्नपि, अपितु नल एव भवन्नपि, नलरूपो ना मनुष्यो भवन्नपि वा, स्थानिवत् अतिप्रतारणाचतुरेन्द्रविग्रहवत् दुष्टं निन्दितं भावम् आशयं किं किमर्थं अधत्त धृतवान्। कथमस्य दुष्टभावो ज्ञात इत्यत आह, किम्भूतः यतः स इन्द्रः पुनः तादृक् मर्त्योचितं कृतं व्याकरणं व्याख्यानं येन तादृशः। इन्द्ररूपत्वे त्वस्य दुष्टाशयत्वं युक्तं, तस्य

---

"अत्र एकस्यां भैम्यां गौरीत्यादिरूपेणानेकधोल्लेखनादुल्लेखालङ्कारः, स च मेनकेतिसभङ्गश्लेषेण, अन्यत्र तु अभङ्गश्लेषेण उत्थापितः। अस्य च ग्रहीतृभेदात् कारकभेदाच्चोत्थानादत्र स्मितादिकरणकारकभेदादुत्थानमिति सङ्क्षेपः"। जी ॥ १३४ ॥ अत्र पूर्वार्द्धे अन्त्यानुप्रासोऽलङ्कारः ॥ १३५ ॥

इयमियमधिरथ्यं याति नेपथ्यमञ्जु-र्विशति विशति वेदीमुर्वशी सेयमुर्व्याः।
इति जनजनितैः सानन्दवादैर्विजघ्ने नलहृदि परभैमीवर्णनाकर्णनाप्तिः ॥ १३७ ॥

परप्रतारणस्वभावात्। नलरूपत्वे तु तन्न युज्यते, नलस्य सर्वथाप्यदुष्टाशयत्वात्। नलरूपं धारयतोऽप्यस्य मर्त्योचितव्याख्यानरूपपरप्रतारणमयुक्तमेवेति भाव.। अथच सन् पण्डित एष ना पुरुष इन्द्रस्तादृक्कृतव्याकरणः विहिततथाविधैन्द्रव्याकरणः सन् स्वं स्वकर्तृकं धादेशं 'नहोध'-इत्यादिना हकारादीनां स्थाने धकारादेशं विधाय कृत्वा अनन्तरं अनलः अल्प्रत्ययशून्यस्य कार्यस्य उवादेर्हेतोर्दुष्टम् असर्वविषयत्वान्निन्दितं स्थानिवद्भावं भूप्रभृत्यादेशस्य असादिस्थानितुल्यत्वं किं न अधत्त कृतवान्, अपि तु अधत्तैव। अयमर्थः नद्ध इत्यादौ स्थानिवद्भावो नाङ्गीकृतः, यतस्तथात्वे धकारस्य हकारस्थानित्वेन तत्तुल्यत्वात् तदुत्तरस्य क्तादितकारस्य स्थाने 'धोऽधातुर्योदि'त्यादिना धकारो न स्यात् तुर्यपरत्वाभावात्, भुवौ भुव इत्यादौ तु उवादिकार्यार्थं स्थानिवद्भावोऽङ्गीकृतः। अन्यथा असादिधातोः स्थाने आदिष्टस्य भूप्रभृतेर्धातुत्वाभावात् 'नुद्धात्वि'त्यादिना उवादिकार्यं न स्यात्, अतएव क्वाचित्कत्वात् स दुष्ट इति। ङप्रत्ययस्य ऐन्द्रादिव्याकरणे अल् इति संज्ञा, तस्मिन् परे इयुवादेशौ न भवतः, तस्य 'कुटादिवर्ज्जमि'त्यादिना ग्वैक्यादित्वात्। अत्र अलित्युपलक्षणं यावन्ङित्तिङ्कृतां ग्रहणम्। व्याख्यान्तराणि तु कुसृष्टिकल्पनाकल्पितत्वादुपेक्षितानि ॥ १३६ ॥

अथ छन्दोऽन्तरेण सर्गशेषं सूचयति। इयमिति। नेपथ्येन भूषणेन मञ्जुरतिरुचिरा इयमियं भैमी अधिरथ्यं रथ्यायां सभाप्रान्तप्रतोल्यां याति गच्छति। तथा सेयमतिप्रसिद्धा उर्व्याः पृथिव्या उर्वशी देवाङ्गनाविशेषो भैमी वेदीं सभावेदिकां विशति विशति, इत्येवंप्रकारैर्जनजनितैर्लोककृतैः सानन्दवादैः सहर्षवचनैः कर्तृभिः नलहृदि नलान्तःकरणे वर्त्तमाना परा श्रेष्ठा परैः कृता वा या भैमीवर्णना तस्या यत् आकर्णनं श्रवणं तस्य आप्तिर्लाभो विजघ्ने विघ्निता भैमीदर्शनेन सम्भ्रान्तानां जनानां कोलाहलेन अन्यैः कृता भैमीवर्णना नलेन न श्रुतेत्यर्थः। इयमियमिति विशतिविशतीति च 'वाक्यञ्च यात्रदिच्छमाधिक्ये' इत्यनेन सम्भ्रमे द्विरुक्तिः ॥ १३७ ॥

---

अत्र तादृशसुप्रसिद्धमाहेन्द्रव्याकरणकारः सन् व्याकरणाभिज्ञः पण्डितः एष ना इन्द्रः नहेर्धातोःहस्य धादेशं विधाय नानलः कार्यस्य वर्णकार्य्यस्य क्तप्रत्ययस्य तकारस्य स्थाने धकारवर्ण-कार्य्यस्य हेतोः कथं 'स्थानिवदादेशोऽनल्विधौ' इत्यनेन निषिद्धस्य स्थानिवद्भावम् अधत्त, तथात्वे धकारस्य स्थानिवद्भावे तस्थाने धकारकार्य्यस्यासम्भवादिति विरोधस्य प्रकृतव्याख्यया समाधानाद् विरोधाभासोऽलंकारः, स च श्लेषप्रतिभोत्थापित इति सङ्करः। सः इत्यस्य स इत्ययं तच्छब्दस्य प्रथमाविभक्तौ पुंलिङ्गे सिद्धः शब्दः इत्येवं व्याख्याने विशेष्यस्यापि श्लिष्टत्वात् व्यङ्ग्यं सदपि वाच्यस्य विरोधाभासस्यैव साधकत्वाद् वाच्यसिद्धयङ्गमित्यनुसन्धेयम् इति जीवातुहृदयम् ॥ १३६ ॥ उर्व्यां उर्वश्याः अप्रसिद्धेः दमयन्त्यां तदभेदाध्यवसायाद् अतिशयोक्तिः उर्व्यां उर्व्वशीवेति प्रतीतेः प्रतीयमाणोत्प्रेक्षा वा, छेकानुप्रासेन संसृज्यते ॥ १३७ ॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
तर्केष्वप्यसमश्रमस्य दशमस्तस्य व्यरंसीन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥ १३८ ॥

श्रीहर्षमिति। न केवलं काव्यानुशीलने किन्तु तर्केष्वपि तर्कशास्त्रेष्वपि असमो निरुपमः श्रमोऽभ्यासायासो यस्य तादृशस्य तस्य नैषधीयचरिते महाकाव्ये दशमः सर्गो व्यरंसीत् विरतः समाप्तः ॥ १६८ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायां नैषधटीकायां दशमः सर्गः समाप्तः।

## एकादशः सर्गः।

तां देवतामिव मुखेन्दुवसत्प्रसादा-मक्ष्णा रसादनिमिषेण निभालयन्तीम्।
लाभाय चेतसि धृतस्य वरस्य भीमभूमीन्द्रजा तदनु राजसभां बभाज ॥ १ ॥
तन्निर्मलावयवभित्तिषु तद्विभूषा-रत्नेषु च प्रतिफलन्निजदेहदम्भात्।
दृष्ट्या परं न हृदयेन न केवलं तैः सर्वात्मनैव सुतनौ युवभिर्ममज्जे ॥ २ ॥

अथ सरस्वतीकर्तृकराजगणवर्णनरूपमेकादशसर्गमारभमाणः पूर्वसर्गसूचितसभाप्रवेशोपक्रमाया भैम्याः संप्रति सभाप्राप्तिं वर्णयति। तामिति। भीमभूमीन्द्रजा भैमी तदनु तत्पश्चात् 'इयमियमधिरथ्यमि'त्यादिराजगणसानन्दवादानन्तरं चेतसि मनसि धृतस्य वरणीयत्वेन निश्चितस्य वरस्य जामातुर्नलस्य, अथ च देवतादेरभीप्सितस्य लाभाय प्राप्त्यै देवतामिव तां राजसभां बभाज प्राप्तवती। यथा कश्चित् वरस्य अभीप्सितस्य लाभाय देवतां भजति तथेत्यर्थः। किम्भूतां राजसभां देवताञ्च,—मुखेन्दौ सभ्यानां मुखचन्द्रे वसन् प्रसादः प्रसन्नता पक्षे अभीप्सितं वरयेत्यादिप्रसादवचनं यस्यास्तादृशीम्। तथा रसादनुरागात् अनिमिषेण निमेषशून्येन अक्ष्णा चक्षुषा निभालयन्तीं पश्यन्तीं, अथच स्वभावतोऽनिमिषेण चक्षुषा रसात् भक्त्यतिशयेन प्रीतत्वात् भक्तं पश्यन्तीम्। अत्र देवतामिवेत्युपमया यथा प्रसन्नदेवताभजनेनावश्यमेव अभिलषितसिद्धिर्भवति, तथा राजसभाभजनेनास्या अवश्यमेव नललाभो भविष्यतीति सूचितम्। 'वरो वृतौ विटे जामातरि श्रेष्ठे देवतादेरभीप्सिते' हे। अस्मिन् सर्गे वसन्ततिलकावृत्तम्। 'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात् ॥ १ ॥

तन्निर्मलेति। तैर्युवभिः सुतनौ भैम्यां परं केवलं दृष्ट्या चक्षुषा न ममज्जे, तथा केवलं हृदयेन

---

अत्र श्लेषानुप्राणिता श्रौती पूर्णोपमालङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः ॥ १ ॥

द्यामन्तरा वसुमतीमपि गाधिजन्मा यद्यन्यमेव निरमास्यत नाकलोकम्।
चारुः स यादृगभविष्यदभूद्विमानै-स्तादृक् तदभ्रमवलोकितुमागतानाम्॥ ३॥
कुर्वद्भिरात्मभवसौरभसंप्रदानं भूपालचक्रचलचामरमारुतौघम्।
आलोकनाय दिवि सञ्चरतां सुराणां तत्रार्चनाविधिरभूदधिवासधूपैः॥ ४॥
तत्रावनीन्द्रचयचन्दनचन्द्रलेप-नेपथ्यगन्धमयगन्धवहप्रवाहम्।
आलीभिरापतदनङ्गशरानुकारी संरुध्य सौरभमगाहतभृङ्गवर्गः॥ ५॥

मनसा न ममज्जे, किन्तु तस्या भैम्या निर्म्मलासु स्वच्छासु अवयवभित्तिषु शरीरप्रदेशेषु तथा तस्या भूषारत्नेषु अलङ्कारमणिषु च प्रतिफलन् प्रतिविम्बतां गच्छन् यो निजदेहः स्वशरीरं तस्य दम्भाद् व्याजात् सर्वात्मनैव सर्वावयवेनैव ममज्जे मग्नीभूतम्। 'भित्तिः कुड्यप्रदेशयोः' मे॥ २॥

द्यामिति। गाधिजन्मा विश्वामित्रो द्यां स्वर्गं वसुमतीमपि पृथिवीञ्च अन्तरा स्वर्गमर्त्ययोर्मध्ये अन्यमेव नाकलोकं यदि निरमास्यत अकरिष्यत्। तदा स नाकलोकश्च यादृक् चारुः सुन्दरोऽभविष्यत्। तदभ्रं स्वयंवरसमाजोर्ध्वमाकाशम् अवलोकितुं स्वयंवरकौतुकं द्रष्टुमागतानां देवानां विमानैर्व्योमयानैः कृत्वा तादृक् चारु अभूत्। अन्तरीक्षनिर्मितस्वर्गतुल्यं स्वयंवरसमाजोर्ध्वमाकाशमभूदित्यर्थः। अवलोकितुमिति भौवादिकस्य लोकधातो रूपम्॥ ३॥

कुर्वद्भिरिति। तत्र स्वयंवरदेशे अधिवासधूपैः सभाधिवासनार्थविहितैर्धूपैः कृत्वा आलोकनाय स्वयंवरकौतुकं द्रष्टुं दिवि आकाशे सञ्चरतां सुराणाम् अर्चनाविधिः पूजाविधानं अभूत्। किम्भूतैः, भूपालचक्रस्य राजसमूहस्य चलानि चञ्चलानि यानि चामराणि तेषां मारुतौघं वायुसङ्घम्, आत्मभवस्य स्वोत्पन्नस्य सौरभस्य संप्रदानं दानपात्रं कुर्वद्भिः, चलचामरवायुवशात् गगनतलमुद्गच्छद्भिर्धूपैर्देवाः परितुष्टा जाता इत्यर्थः॥ ४॥

तत्रेति। तत्र स्वयंवरसमाजे भृङ्गवर्गो भ्रमरसमूहः अवनीन्द्रचयस्य राजसमूहस्य यश्चन्दनचन्द्रलेपश्चन्दनयुक्तकर्पूरेणाङ्गरागस्तद्रूपं यन्नेपथ्यं भूषणं तस्य गन्धमयः परिमलवाही यो गन्धवहो वायुस्तस्य प्रवाहं प्रकर्षेण वहनम् आलीभिः पंक्तिभिः संरुध्य आवृत्य सौरभं तत्परिमलम् अगाहत विलोड़ितवान्, किम्भूतः, आपतन्त आगच्छन्तो येऽनङ्गशराः कामबाणास्तान् अनुकरोतीत्येवंशीलः पतत्कामबाणसदृश इत्यर्थः। सौगन्ध्यबाहुल्यात् भ्रमराः श्रेणीबद्धा भूत्वा सर्वत्र प्रचरन्ति स्मेति भावः। अन्योऽपि वस्त्रादिना वायुं संरुध्य सौरभं गाहते। 'घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका' मे॥ ५॥

---

अत्र दृङ्मनोमज्जनन्तावदास्तां किन्तु प्रतिविम्बव्याजेन सर्वाङ्गमज्जनं जातमिति सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः॥ २॥ "अत्राभ्रस्यान्तराले नाकलोकासम्बन्धेऽपि सम्भावनया तत्सम्बन्धोक्ते रतिशयोक्तिभेदः। अभूतोपमेति केचित्" जी॥ ३॥ "अत्राधिवासधूपस्य सुरार्चनाऽसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिभेदः" जी। वृत्त्यनुप्रासश्चेति संसृष्टिः॥४॥ बद्धपङ्क्तीनां भ्रमराणां दैर्घ्यात् कामोद्दीपकत्वाच्च कामबाणतुल्यत्वम् अनुकारीति शब्देन सादृश्य-

उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गी-सर्वानुवादविधिबोधितसाधुमेधाः ।
सौधस्रजः प्लुतपताकतयाभिनिन्यु-र्मन्ये जनेषु निजताण्डवपण्डितत्वम् ॥ ६ ॥
सम्भाषणं भगवती सदृशं विधाय वाग्देवता विनयबन्धुरकन्धरायाः ।
ऊचे चतुर्दशजगज्जनतानमस्या तत्राश्रिता सदसि दक्षिणपक्षमस्याः ॥ ७ ॥
अभ्यागमन्मखभुजामिह कोटिरेषा येषां पृथक्कथनमब्दशतातिपाति ।
अस्यां वृणीष्व मनसा परिभाव्य कञ्चिद् यं चित्तवृत्तिरनुधावति तावकीना ॥८॥

उत्तुङ्गेति । सौधानां तत्रत्यसदनानां स्रजः पंक्तयः प्लुतपताकतया चञ्चलपताकतया जनेषु सभ्यनृपतिषु निजताण्डवपण्डितत्वं स्वीयनृत्यकौशलम् अभिनिन्युः, अभिनयेन दर्शयामासुः इत्यहं मन्ये सम्भावयामि । किम्भूताः, उत्तुङ्गोऽतितारो यो मङ्गलमृदङ्गनिनादो माङ्गलिकविवाहमुरजध्वनिस्तस्य या भङ्ग्यः प्रकारविशेषास्तासां यः सर्वानुवादविधिः सकलसंवादक्रिया सकलस्य मृदङ्गशब्दस्य प्रतिशब्दक्रियेति यावत् तेन बोधिता ज्ञापिता साध्वी उत्कृष्टा मेधा धारणशक्तिर्याभिस्तादृश्यः । अन्या अपि नर्त्तक्यो मृदङ्गनिनादभङ्गीनामनुवादेन स्वीयनृत्यकौशलं हस्ताद्यभिनयेन सभ्येषु दर्शयन्ति ॥ ६ ॥

अथ सरस्वतीकर्तृकवरवर्णनरूपं सर्गप्रस्तुतमुत्थापयति । सम्भाषणमिति । चतुर्दशजगतां चतुर्दशभुवनानां जनताभिर्जनसमूहैर्नमस्या पूज्या भगवती ऐश्वर्यसामग्र्यादिषड्गुणयुक्ता वाग्देवता सरस्वती विनयेन बन्धुरा नम्रा कन्धरा शिरोधिर्यस्यास्तथाविधाया अस्या भैम्याः सदृशं योग्यं सम्भाषणं विधाय कृत्वा, तत्र सदसि स्वयंवरसमाजे अस्या दक्षिणपक्षं दक्षिणपार्श्वम् अथ च अनुकूलपक्षम् आश्रिता सती ऊचे, वक्ष्यमाणमुवाच । भगवतीत्यादिविशेषणेन सरस्वत्या देवादिवर्णनसामर्थ्यं, दक्षिणपक्षमित्यनेन च भैमीपक्षपातित्वं सूचितम् ॥ ७ ॥

यदूचे तदाह । अभ्यागमदिति । हे दमयन्ति इह सभायां मखभुजां देवानाम् एषा कोटिरभ्यागमत् आगता, बहुसंख्यका देवा अत्रागता इत्यर्थः । येषां मखभुजां पृथक्कथनं पार्थक्येन वर्णनम् अब्दशतं वत्सरशतम् अतिपतति अतिक्रामतीति तादृशं, वत्सरशतेनापि वक्तुमशक्यमित्यर्थः । तस्मात् अस्यां मखभुजां कोटौ मध्ये यं कञ्चित् मखभुजं तावकीना त्वदीया चित्तवृत्तिर्बुद्धिरनुधावति, वरणीयत्वेन विषयीकरोति, तं मनसा परिभाव्य विचार्य त्वं वृणीष्व स्वीकुरु ॥ ८ ॥

---

स्योक्तत्वाद् उपमा, च्छेकानुप्रासवृत्त्यनुप्रासौ च ॥ ५ ॥ "अत्र मृदङ्गप्रतिध्वानात् पताकाचलनाच्च वाद्यानुगुणं हस्ताभिनयं चक्रुरिवेत्युत्प्रेक्षा" जी । सा च मन्ये इति व्यञ्जकप्रयोगाद् वाच्या, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः ॥ ६ ॥ छेकानुप्रासवृत्त्यनुप्रासावलङ्कारौ ॥ ७ ॥ अत्र यं चित्तवृत्तिरनुधावतीति वाक्यार्थस्य वरणं प्रति हेतुत्वात् काव्यलिङ्गं, वृत्त्यनुप्रासालङ्कारश्च ॥ ८ ॥

एषां त्वदीक्षणरसादनिमेषतैषा स्वाभाविकानिमिषतामिलिता यथाभूत्।
आस्ये तथैव तव नन्वधरोपभोगैर्मुग्धे विधावमृतपानमपि द्विधास्तु ॥ ९ ॥
एषां गिरेः सकलरत्नफलस्तरुः स प्राग्दुग्धभूमिसुरभेः खलु पञ्चशाखः।
मुक्ताफलं फलनसान्वयनाम तन्वन्नाभाति विन्दुभिरिव च्छुरितः पयोभिः ॥१०॥
वक्त्रेन्दु-सन्निधि-निमीलि-दलारविन्द द्वन्द्वभ्रमक्षममथाञ्जलिमात्ममौलौ।
कृत्वापराधभयचञ्चलमीक्षमाणा सान्यत्र गन्तुममरैः कृपयान्वमानि ॥ ११ ॥

एषामिति। ननु हे मुग्धे सुन्दरि एषां देवानां त्वदीक्षणे तव साभिनिवेशदर्शने रसादनुरागाद्धेतोरेषा प्रत्यक्षदृश्या अनिमेषता निमेषशून्यता स्वाभाविक्या सहजया अनिमिषतया मिलिता सती यथा द्विधा द्विप्रकारा अभूत्। तथैव तेषाम् अमृतपानमपि तव आस्ये विधौ मुखचन्द्रे अधरोपभोगैरधरचुम्बनैर्द्विधा द्विप्रकारमस्तु भवतु। यथा देवा देवत्वादनिमेषा अपि साभिनिवेशत्वदवलोकनात् पुनरप्यनिमेषा जातास्तथा देवत्वाच्चन्द्रामृतपायिनोऽपि त्वदधरपानात् पुनरपि तादृशा भवन्त्वित्यर्थः। मुग्धे सुन्दरे आस्ये इति वा ॥ ९ ॥

एषामिति। हे भैमि प्राक् प्रथमं दुग्धा भूमिरेव सुरभिर्धेनुर्येन तादृशस्य एषां देवानां गिरेः सुमेरोः पञ्चशाखः शाखापञ्चकविशिष्टः अथ च पाणिरिव स प्रसिद्धः सकलरत्नान्येव फलानि यस्य तादृशस्तरुः कल्पवृक्ष आभाति शोभते। किं कुर्वन्, मुक्ताफलं खलु निश्चयेन फलनेन प्रसवनेन सान्वयं सार्थकं नाम संज्ञा यस्य तादृशं तन्वन् कुर्वन्। यथा आम्रादयः फलशब्देन व्यपदिश्यन्ते, तथा मुक्तानामपि मुक्ताफलेति फलशब्देन व्यपदेशं कुर्वन्नित्यर्थः। मुक्ताफलमयत्वे उत्प्रेक्षते, किम्भूतः, पयोभिर्दुग्धमयैर्विन्दुभिश्छुरित इव सर्वतो व्याप्त इव। नैतानि मुक्ताफलानि, किन्तु गोरूपधरां पृथ्वीं दुग्धवतः सुमेरोर्हस्तभूते तस्मिन् उद्गत्य दुग्धविन्दव एव लग्ना इत्यर्थः। सुमेरुः कल्पवृक्षश्च देवानामेव, तस्मात् तानेव वृणीष्व, तथा सति तयोः स्वामिनी भविष्यसीति भावः ॥ १० ॥

वक्त्रेन्द्विति। अथ देवप्रशंसनरूपसरस्वतीवचनानन्तरम् अमरैर्देवैः कृपया सा भैमी अन्यत्र गन्तुम् अन्वमानि अनुमता। किम्भूता आत्ममौलौ निजमस्तके अवरणरूपो योऽपराधस्तज्जन्यं यद्भयं तेन चञ्चलम् अञ्जलिं कृत्वा ईक्षमाणा देवान् पश्यन्ती। अपराधभयचञ्चलमिति ईक्षणक्रियाविशेषणं वा। किम्भूतम् अञ्जलिम्, वक्त्रेन्दुसन्निधौ मुखचन्द्रसमीपे निमीलीनि सङ्कुचन्ति दलानि पत्राणि यस्य तादृशं यत् अरविन्दद्वन्द्वं कमलयुगलं तस्य भ्रमे भ्रान्तौ क्षमं समर्थं, सङ्कुचद्दलकमलयुगलतुल्यमित्यर्थः। तादृशीं तां दृष्ट्वा यत्र तेऽनुरागस्तं वृणुष्वेति देवैरनुज्ञातमित्यर्थः ॥११॥

---

"अत्रानिमिषत्वामृतपानयोर्द्वैविध्यासम्बन्धेऽपि सम्बन्धोक्तेरतिशयोक्तिः" जी। उपमा, आस्ये विधौ इति रूपकञ्च, एतेषामङ्गाङ्गिभावेन सङ्करः ॥ ९ ॥ अत्र विन्दुभिः छुरितः पञ्चशाख इवाभातीत्युत्प्रेक्षा, अत्र रत्नान्येव फलानि, भूमिरेव सुरभिः इति च रूपकं, छेकानुप्रासश्चेति संसृष्टिः ॥ १० ॥ "अत्राञ्जलौ वक्त्रेन्दुसन्निधिसंकुचितारविन्दयुगलभ्रान्तिवर्णनाद्रूपकानुप्राणितो

तत्तद्विरागमुदितं शिबिकाधरस्थाः साक्षाद्विदुः स्म न मनागपि यानधुर्य्याः ।
आसन्ननायकविषण्णमुखानुमेय-भैमीविरक्तचरितानुमया तु जज्ञुः ॥ १२ ॥
रक्षःस्वरक्षणमवेक्ष्य निजं निवृत्तो विद्याधरेष्वधरतां वपुषैव भैम्याः ।
गन्धर्वसंसदि न गन्धमपि स्वरस्य तस्या विमृष्य विमुखोऽजनि यानिवर्गः ॥१३॥
दीनेषु सत्स्वपि कृताफलवित्तरक्षैर्यक्षैरदर्शि न मुखं त्रपयैव तस्याः ।
ते जानते स्म सुरशाखिपतिव्रतां किं तां कल्पवीरुधमधिक्षिति नावतीर्णाम् ॥१४॥

तत्तदिति । यानधुर्य्याः शिविकावाहिन उदितम् उत्पन्नं तेषु तेषु देवेषु विरागं भैम्या वैरक्त्यं साक्षात् प्रत्यक्षेण मनागपि लेशतोऽपि न विदुः स्म, न ज्ञातवन्तः । किम्भूता, यतः शिविकाया यानस्य अधरस्था अधोदेशवर्त्तिनः नह्यधःस्थितैरूर्ध्वस्थितवृत्तान्तः प्रत्यक्षेण ज्ञातुं शक्यते । तु किन्तु आसन्ना निकटवर्त्तिनो ये नायका देवास्तेषां विषण्णानि म्लानानि यानि मुखानि तैः कृत्वा अनुमेयानि यानि भैम्या विरक्तचरितानि विरागचेष्टितानि नमस्कारादीनि तेषाम् अनुमया अनुमानेन जज्ञुस्तत्तद्विरागं ज्ञातवन्तः । एतेन च शिविकावाहकानां पण्डितत्वं सूचितम् ॥ १२ ॥

रक्षःस्विति । यानिनां यानवाहकानां वर्गः समूहः रक्षःसु राक्षसेषु निजं स्वीयम् अरक्षणं विनाशनम् अवेक्ष्य विमृश्य निवृत्तः, तेभ्यः पराङ्मुखोऽभूत् । यदि वयम् एतेषां समीपे गच्छामस्तदास्मान् भक्षयेयुरिति भयेन राक्षसानां समीपे न जगामेत्यर्थः । तथा विद्याधरेषु भैम्या वपुषैव शरीरेणैव कृत्वा अधरताम् अपकृष्टताम् अवेक्ष्य विचार्य्य निवृत्तः, अश्वमुखनराङ्गनरमुखाश्वाङ्गत्वात् तथाविधेषु अतिसुन्दरी भैमी अवश्यमेव विरक्ता भविष्यतीति निश्चित्य तेभ्यः परावृत्त इत्यर्थः । तथा गन्धर्वसंसदि गन्धर्ववर्गे तस्या भैम्याः स्वरस्य कण्ठमाधुर्य्यस्य गन्धमपि अल्पांशमपि न विमृष्य नावेक्ष्य विमुखोऽजनि, पराङ्मुखो जातः । अतिसुस्वरा भैमी स्वापेक्षया निकृष्टस्वरान् गन्धर्वान् कथं वरीष्यतीति विविच्य तेभ्यो निवृत्त इत्यर्थः ॥ १३ ॥

दीनेष्विति । दीनेषु दरिद्रेषु सत्स्वपि जगति विद्यमानेष्वपि कृता अफला निष्प्रयोजना वित्तानां धनानां रक्षा यैस्तादृशैरतिकृपणैरित्यर्थः । यक्षैस्त्रपयैव तस्या भैम्याः सकाशात् लज्जयैव मुखं नादर्शि न दर्शितं, सभायां वक्रीकृतवदनैः सद्भिः स्थितमित्यर्थः । त्रपा किमिति जातेत्याशङ्क्याह, ते यक्षास्तां भैमीम् अधिक्षिति पृथिव्याम् अवतीर्णां सुरशाखिनः पत्युः कल्पवृक्षस्य व्रतं बहुवदान्यत्वरूपो नियमो यस्यास्तादृशीं, अथच यज्ञादौ हविःप्रासरा उपजीव्यत्वात् सुराणां शाखी वृक्षसदृशो नलस्तस्य पतिव्रतां कल्पवीरुधं कल्पलताम् अतिवदान्यामित्यर्थः । किं न जानते स्म, न ज्ञातवन्तः अपितु जानते स्मैव । अतिवदान्यां तां दृष्ट्वा अतिकृपणैस्तैर्लज्जावशात् मुखं न दर्शितमिति भावः । अन्योऽपि कृपणो वदान्यसमीपे लज्जते ॥ १४ ॥

---

भ्रान्तिमदलङ्कार इति सङ्करः" जी । वक्त्रेन्दु इति रूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ११ ॥
अत्र विरक्तिज्ञानाभावं प्रति शिविकाधरस्थपदार्थो हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् ॥ १२ ॥
अत्र त्रपां प्रति दीनेषु सत्स्वपि कृताफलवित्तरक्षैरिति यक्षविशेषणस्य हेतुत्वात् वाक्यार्थहेतुकम्

यान्यास्ततः फणभृतामधिपं सुरौघा-न्माञ्जिष्ठमञ्जिमविगाहिपदौष्ठलक्ष्मीम् ।
तां मानसं निखिलवारिचयान्नवीना हंसावलीमिव घना गमयाम्बभूवुः ॥ १५ ॥
यस्या विभोरखिलवाङ्मयविस्तरोऽय-माख्यायते परिणतिर्मुनिभिः पुनः सा ।
उद्गत्वरामृतकरार्द्धपरार्द्ध्यभालां बालामभाषत सभासततप्रगल्भा ॥ १६ ॥
आश्लेषलग्नगिरिजाकुचकुङ्कुमेन यः पट्टसूत्रपरिरम्भणशोणशोभः ।
यज्ञोपवीतपदवीं भजते स शम्भोः सेवासु वासुकिरयं प्रसितः सितश्रीः ॥ १७ ॥

यान्या इति । ततोऽनन्तरं यान्या यानवाहकास्तां भैमीं सुरौघात् देवसमूहात् फणभृतां सर्पाणामधिपं प्रभुं वासुकिं गमयाम्बभूवुः प्रापयन्ति स्म । किम्भूतां,माञ्जिष्ठं मञ्जिष्ठया रक्तं यद्वस्तु तस्य मञ्जिमानं मनोज्ञत्वं विगाहितुं शीलं यस्यास्तादृशी पदौष्ठलक्ष्मीश्चरणाधरशोभा यस्यास्तादृशीम् । अत्रोपमिनोति, नवीना घना मेघा हंसावलीमिव । यथा हंसश्रेणी निखिलवारिचयात् नानाजलाधारसमूहात् मानसं सरोवरविशेषं गमयन्ति तथा गमयाम्बभूवुः । हसावल्यपि माञ्जिष्ठमञ्जिमविगाहिपदौष्ठलक्ष्मीर्भवति । यान्या अपि नवीना युवानः । वर्षाकाले राजहंसपंक्तयः सकलान् जलाधारान् परित्यज्य मानसं यान्तीति कवीनां प्रसिद्धिः ॥ १५ ॥

यस्या इति । मुनिभिर्वाल्मीकिप्रभृतिभिरयं वेदादिरूपोऽखिलवाङ्मयविस्तरः सकलशब्दविस्तरः विभोः सर्वव्यापिकाया यस्या देव्याः परिणतिः परिणाम आख्यायते कथ्यते, शब्दरूपेणैव या विश्वं व्याप्य स्थितेति कथ्यते । सभायां सततं प्रगल्भा सा सरस्वती तां बालां भैमीं पुनरभाषत उक्तवती । तां किम्भूताम्, उद्गत्वरं उद्यत् यत् अमृतकरस्य चन्द्रस्य अर्धं तद्वत् परार्घ्यं श्रेष्ठं तत्तुल्यं भालं ललाटं यस्यास्तादृशीम् । अर्द्धोदितचन्द्रसाम्येन भैम्या भालस्य कुङ्कुमाक्तत्वं ध्वनितम् ॥ १६ ॥

यदभाषत तदाह आश्लेषेति । हे भैमि, सिता शुक्ला श्रीः शोभा यस्य तादृशः सोऽयं वासुकिः । स कः, यः शम्भोः शिवस्य यज्ञोपवीतपदवीं यज्ञसूत्रस्थानं भजते आश्रयति । किम्भूतः, आश्लेषेण आलिङ्गनेन लग्नं यत् गिरिजायाः पार्वत्याः कुचयोः कुङ्कुमं तेन हेतुना पट्टसूत्रपरिरम्भणस्येव आरक्तपट्टसूत्रनिर्मितवेष्टनस्येव शोणा आरक्ता शोभा यस्य तादृशः । विहारसमयेऽपि यः शिवेन न त्यज्यत इत्यर्थः । तथा शम्भो सेवासु प्रसितः प्रसक्तः शम्भोरतिप्रियोऽयं, तस्मादयमेव

---

काव्यलिङ्गं, मुखदर्शनायाः सम्बन्धेऽपि तदसम्बन्धोक्तेः, तथा अधिक्षिति कल्पवृक्षस्याप्रसिद्धेः सम्भावनया दमयन्त्या तदभेदोक्तेश्च अतिशयोक्तिद्वयं, दमयन्त्याः क्षितिस्थकल्पवीरुत्त्वज्ञानरूपकारणेन त्रपया मुखादर्शनारूपकार्य्यस्य समर्थनात् "कारणात् कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। ततः तेषां निधिगोपपिशाचानां कुतो वरणवार्त्तापीति भावः ।" जी । वृत्त्यनुप्रासश्च ॥ १४ ॥ अत्र नवीना घनाः हंसावलीं मानसमिव तां फणभृतामधिपङ्गमयाम्बभूवुरित्युपमालङ्कारः, पदोष्ठलक्ष्म्याः माञ्जिष्ठमञ्जिमगाहनासम्भवेन तत्सादृश्ये पर्य्यवसानादसम्भवद्वस्तुसम्बन्धरूपा निदर्शना, च्छेकानुप्रासश्चेति संसृष्टिः ॥ १५ ॥ अत्र तृतीय पादे समासगतालुप्तोपमालङ्कारः ॥१६॥

पाणौ फणी भजति कङ्कणभूयमैशे सोऽयं मनोहरमणीरमणीयमूर्त्तिः ।
कोटीरबन्धनधनुर्गुणयोगपट्ट-व्यापारपारगममुं भज भूतभर्त्तुः ॥ १८ ॥
धृत्वैकया रसनयामृतमीश्वरेन्दो-रप्यन्यया त्वदधरस्य रसं द्विजिह्वः ।
आस्वादयन् युगपदेव परं विशेषं निर्णेतुमेतदुभयस्य यदि क्षमः स्यात् ॥ १९ ॥
आशीविषेण रदनच्छददंशदान-मेतेन ते पुनरनर्थतया न गण्यम् ।
बाधां विधातुमधरे हि न तावकीने पीयूषसारघटिते घटतेऽस्य शक्तिः ॥ २० ॥

तव वरणयोग्य इति भावः । अथच सेवासु प्रसित इत्यनेन सेवायामेवास्य कालो गच्छति । सम्भोगावकाशः कथं भवेदिति नायं वरणीय इति सूचितम् । यज्ञोपवीतमपि शुक्लं भवति ॥१७॥

पाणाविति । तथा मनोहराभिर्मणिभिः कृत्वा रमणीया मूर्तिर्यस्य तादृशः सोऽयं फणी वासुकिः ऐशे शिवसम्बन्धिनि पाणौ कङ्कणभूयं कङ्कणत्वं भजति प्राप्नोति । हे भैमि अमुं वासुकिं भज वृणुष्व । किम्भूतं, भूतभर्त्तुः शिवस्य कोटीरबन्धनस्य जटाजूटबन्धनस्य धनुर्गुणस्य योगपट्टस्य च व्यापारो भवनलक्षणस्तस्य पारगं पारदर्शिनम् । हरस्य कोटीरादिविशेषणेन वरणाभावः सूचितः । 'कोटीरः स्याज्जटाजूटः' व ॥ १८ ॥

धृत्वेति । एकया रसनया जिह्वया ईश्वरेन्दोः शिवललाटचन्द्रस्य अमृतं धृत्वा अन्यया द्वितीयया रसनया तव अधरस्य रसमपि धृत्वा चन्द्रामृतमोष्ठामृतञ्च युगपदेकदा आस्वादयन् पिबन् एतदुभयस्य चन्द्रामृतौष्ठामृतयोर्द्वयस्य विशेषं तारतम्यं निश्चेतुं यदि क्षमः समर्थः स्यात्, तर्हि एष परं वासुकिरेव नान्यः । यतोऽयं द्विजिह्वः, द्वे जिह्वे यस्य तादृशः । राज्ञां वरणयोग्यत्वेऽपि चन्द्रामृतसम्बन्धाभावात्, देवानां तत्सम्भवेऽपि द्विजिह्वत्वाभावेन द्वयोः समकालं पानासम्भवात्, सर्पान्तराणां द्विजिह्वत्वसम्भवेऽपि चन्द्रामृतसम्बन्धाभावात्, एतस्य तु तदुभयसम्भवात् द्वयोर्विशेषनिर्णयेऽयमेव योग्यो, नान्यस्तस्मादसाधारणक्षमताशाली एष त्वया वरणीय इत्यर्थः । अथच द्विजिह्वः खलोऽयं न वरणीय इति सूचितम् ॥ १९ ॥

अशीविषेणेति । हे भैमि आशीः तालुगता सर्पाणां दंष्ट्रा तस्यां विषं यस्य तादृशेन एतेन वासुकिना क्रियमाणं ते तव रदनच्छदस्य अधरस्य दंशदानं दंशकरणम् अधरखण्डनम् अनर्थतया मरणहेतुतया पुनर्न गण्यं त्वया न सम्भावनीयम्, एतस्य वरणे सुरते दन्तक्षतेन विषसञ्चारान्मरणं भवेत्तस्मान्नैनं वृणे इति नाशङ्कनीयमित्यर्थः । कथमित्याह, हि यस्मात् पीयूषस्य अमृतस्य सारेण घटिते निर्मिते तावकीने त्वदीये अधरे बाधां विषजन्यां पीडां विधातुं कर्तुम् अस्य तादृशदन्त-

अत्र द्वितीयचरण समासगतालुप्तोपमा, वृत्त्यनुप्रासश्छेकानुप्रासौ चेति संसृष्टिः 'तत्परे प्रसितासक्तौ' अ ।१७ ॥ अत्र एकस्य वासुकेरनेकेषु कोटीरादिषु क्रमेण वृत्तेः पर्य्यायभेदः, अथानुभावविशेषाद् यौगपद्यसम्भवे तु समुच्चयः" । जी । रमणी रमणीति यमकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १८ ॥ अत्र धृत्वा इति एकया क्रियया सह अमृतस्य रसस्य च कर्मतयान्वयात्तुल्ययोगिता, युगपदुभयोरमृतयोरास्वादनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चानयोः सङ्करः ॥१९॥

तद्विस्फुरत्फणविलोकनभूतभीतेः कम्पञ्च वीक्ष्य पुलकञ्च ततोऽनु तस्याः।
सञ्जातसात्त्विकविकारधियः स्वभृत्यान् नृत्यान्न्यषेधदुरगाधिपतिर्विलक्षः॥ २१॥
तद्दर्शिभिः स्ववरणे फणिभिर्निराशै-र्निश्वस्य तत्किमपि सृष्टमनात्मनीनम्।
यत्तान् प्रयातुमनसोऽपि विमानवाहा हाहा प्रतीपपवनाशकुनान्न जग्मुः॥ २२॥
ह्रीसंकुचत्फणगणादुरगप्रधाना-त्तां राजसङ्घमनयन्त विमानवाहाः।
सन्ध्यानमद्दलकुलात् कमलाद्द्वितीय कह्लारमिन्दुकिरणा इव हासभासम्॥ २३॥

च्छदंदशनस्य वासुकेर्वा शक्तिः सामर्थ्यं न घटते न युज्यते। अमृते हि विषं न प्रभवतीत्यर्थः। तस्मात्तादृशीं शङ्कां विहाय एनं वृणीष्वेति भावः॥ २०॥

तदिति। ततोऽनु तस्य पश्चात् तस्य वासुकेर्विस्फुरन्तो ये फणास्तेषां विलोकनेन भूता जाता भीतिर्यस्यास्तथाभूतायास्तस्या भैम्याः कम्पञ्च पुलकञ्च वीक्ष्य दृष्ट्वा संजाता सात्त्विकविकारे श्टङ्गारा-नुभावविशेषे धीः इयमस्मत्स्वामिनमेव वरीष्यति यत इयं कम्परोमाञ्चलक्षणं सात्त्विकविकारं भजत इति बुद्धिर्येषां तादृशान् स्वभृत्यान् निजदासान् उरगाधिपतिः सर्पाणां प्रभुर्वासुकिर्विलक्षः सलज्जः सन् नृत्यात् हर्षवशजनितनर्तनात् न्यषेधत् निवारयामास। फणदर्शनभीताया भैम्याः समुत्पन्नौ भयानकसात्त्विकभावौ कम्परोमाञ्चौ ऋजुबुद्धित्वात् श्टङ्गारीयत्वेन सम्भाव्य हर्षवशात् नर्तितुमुद्यतान् स्वभृत्यान् वासुकिः सलज्जो भूत्वा निवारयामासेत्यर्थः। सात्त्विकाश्च 'स्तम्भः स्वे-दश्च रोमाञ्चः स्वरभेदश्च वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः'। इति साहित्य-दर्पणोक्ताः श्टङ्गार इव भयानकेऽपि सम्भवन्ति, उक्तञ्च भयानकविवेके तत्रैव 'अनुभावोऽत्र वैवर्ण्य-गद्गदस्वरभाषणम्। प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः' इति॥ २१॥

तद्दर्शिभिरिति। तद्दर्शिभिस्तत्स्वप्रभुवासुकिवैलक्ष्यं पश्यद्भिरतएव स्ववरणे निराशैः प्रत्याशाशून्यैः फणिभिः अन्यसर्पैः कर्कोटकादिभिर्निश्वस्य अनात्मनीनम् आत्मनामहितं तत् किमपि अपूर्वं सृष्टं कृतम्, किं तदित्याह, यत् तान् सर्पान् उद्दिश्य प्रयातुमनसोऽपि गन्तुकामा अपि विमानवाहा भैमीशिविकावाहिनः प्रतीपः सम्मुखवाहित्वात् प्रतिकूलो यः पवनो निश्वासवायुस्तद्रूपं यदशकुनम् अयात्रिकं तस्माद्धेतोस्तान् प्रति हाहा अतिकष्टं न जग्मुर्न गतवन्तः। प्रतिकूलवायो-रशकुनत्वादिव इतरसर्पसम्मुखं नजग्मुरित्यर्थः। अयोग्यत्वात्तान् प्रति न गता इति भावः॥ २२॥

ह्रीति। विमानवाहास्तां भैमीं ह्रिया लज्जया सङ्कुचन् सङ्कोचं गच्छन् फणानां गणः समूहः

---

'आशीरुरगदंष्ट्रायाम्' अ। अत्र अधरस्यामृतसारनिर्मितत्वासम्बन्धेऽपि तत्सम्बन्धप्रति-पादनादतिशयोक्तिः, शक्तेरभावं प्रति पीयूषसारघटितपदार्थस्य हेतुत्वात् काव्यलिङ्गञ्चेत्यनयो-रङ्गाङ्गिभावरूपः सङ्करः। वृत्त्यनुप्रासच्छेकानुप्रासौ चेति॥ २०॥ "अत्र भृत्यानां भैमीभय-सात्त्विकेषु श्रृङ्गारभ्रान्त्या भ्रान्तिमदलङ्कारः। जी॥ २१॥ अत्र सत्यपि प्रयातुमनस्त्वरूपे हेतौ गमनरूपतत्कार्य्याभावाद् विशेषोक्तिरलङ्कारः। गमनाभावे प्रतीपपवनाशकुनानिति पदार्थस्य हेतुत्वात् काव्यलिङ्गं, छेकानुप्रासवृत्त्यनुप्रासौ च॥ २२॥

देव्याभ्यधायि भव भीरु धृतावधाना भूमीभुजस्त्यजत भीमभुवो निरीक्षाम्।
आलोकितामपि पुनः पिबतां दृशैता-मिच्छा विगच्छति न वत्सरकोटिभिर्वः ॥२४॥
लोकेशकेशवशिवानपि यश्चकार शृङ्गार-सान्तर-भृशान्तर-शान्तभावान्।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन संक्षोभयन् वितनुतां वितनुर्मुदं वः ॥ २५ ॥
पुष्पेषुणा ध्रुवममूनिषुवर्षजन्त-हुङ्कारमन्त्रबलभस्मितशान्तिशक्तीन्।
शृङ्गारसर्गरसिकद्व्यणुकोदरि त्वं द्वीपाधिपान्नयनयोर्न्नय गोचरत्वम् ॥ २६ ॥

यस्य तादृशात् उरगप्रधानात् सर्पराजाद्वासुकेरवनीय अपनीय राजसङ्घं नृपसमूहम् अनयन्त प्रापयामासुः। अत्रोपमिनोति, इन्दुकिरणा इव, यथा चन्द्रकिरणाः सन्ध्यायां नमत् सङ्कुचत् दलकुलं दलसमूहो यस्य तादृशात् कमलात् पद्मात् विनीय हासभासं प्रकाशदीप्तिं कह्लारं सौगन्धिकं नयन्ति, तथा अनयन्त। 'सौगन्धिकन्तु कह्लारम्' अ ॥ २३ ॥

देव्येति। देव्या सरस्वत्या अभ्यधायि उक्तम्। किमभ्यधायीत्याह हे भीरु सर्पफणदर्शनात् भयशीले भैमि, त्वं धृतावधाना सावधाना भव संप्रति भयं परित्यज्य राज्ञो विलोकयेति भावः। तथा हे भूमीभुजो राजानो यूय संप्रति भीमभुवो भैम्या निरीक्षां दर्शनं त्यजत, मा कुरुत। युष्मासु पश्यत्सु इयं लज्जावशान्न युष्मान् पश्यति, तस्मान्नैनां विलोकयतेत्यर्थः। ननु वरणे सन्देहात् दर्शनमपि कथं त्याज्यमित्यत आह, -आलोकितामपि दृष्टामपि एतां भैमीं पुनर्दृशा चक्षुषा पिबतां साभिलाषं पश्यतां वो युष्माकं इच्छा एतद्दर्शनलालसा वत्सरकोटिभिः कोटिसंख्यकवर्षैरपि न विगच्छति न शाम्यति। तस्मादेकवारं युष्माभिर्दृष्टेय पुनः पुनर्न द्रष्टव्येत्यर्थः। भीरु इत्यत्र सुभ्रु इति त्यजतेत्यत्र च भजतेति क्वचित् पाठः। इयं देवादीनां सान्निध्यं परित्यज्य अधुना युष्माकं सान्निध्यमायाता द्रष्टव्येति तत्रार्थः नन्वियं प्रथमं दृष्टैव किं पुनः पुनर्दर्शनेनेत्याशङ्क्याह अवलोकितामिति तत्पाठे अवतारणिका ॥ २४ ॥

लोकेशेति। हे राजानः स वितनुः कामो वो युष्माकं मुदं हर्षं वितनुतां विस्तारयतु। स कः, यः लोकेशकेशवशिवानपि ब्रह्मविष्णुशिवानपि शृङ्गारेण सान्तरो व्यवहितो भृशोऽतिशयित आन्तरो मानसः शान्तभावः शान्तरसो येषां तादृशान् चकार। किम्भूतः--जगतां पञ्चेन्द्रियाणि चक्षुरादीनि इषुपञ्चकेन पञ्चभिर्बाणैः संक्षोभयन् व्याकुलयन् यः सृष्टिस्थितिप्रलयकारिणोऽपि देवान् स्ववशीचकार। तस्य भवतां वशीकरणे कः प्रयास इति तदधीनाः सन्तो यूयं यथेच्छमेनां विलोकयतेति भावः ॥ २५ ॥

पुष्पेषुणेति। हे शृङ्गारसर्गरसिकद्व्यणुकोदरि शृङ्गारस्य रसस्य सर्गे निर्माणे रसिकं जातानुरागं योग्यमिति यावत् यत् द्व्यणुकं तद्वत् उदरं यस्या हे तथाविधे कामोद्दीपकातिकृशोदरीत्यर्थः, भैमि त्वं अमून् द्वीपाधिपान् पुष्करादिद्वीपस्थनृपान् नयनयोर्गोचरत्वं विषयत्वं नय प्रापय, अनुग्रह-

---

अत्र उपमालङ्कारः ॥ २३ ॥ अत्र निरीक्षात्यागं प्रति उत्तरार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ २४ ॥ अत्र छेकानुप्रासवृत्त्यनुप्रासौ ॥ २५ ॥

स्वादूदके जलनिधौ सवनेन सार्द्धं भव्या भवन्तु तव वारिविगाहलीलाः ।
द्वीपस्य तं पतिममुं भज पुष्करस्य निस्तन्द्रपुष्कर-तिरस्करण-क्षमाक्षि ॥ २७ ॥
सावर्तभावभवदद्भुतनाभिकूपे स्वर्भौममेतदुपवर्त्तनमात्मनैव ।
स्वाराज्यमर्जयसि न श्रियमेतदीया-मेतद्गृहे परिगृहाण शचीविलासम् ॥ २८ ॥
देवः स्वयं वसति तत्र किल स्वयम्भू-र्न्यग्रोधमण्डलतले हिमशीतले यः ।
स त्वां विलोक्य निजशिल्पमनन्यकल्पं सर्वेषु कारुषु करोतु करेण दर्पम् ॥ २९ ॥

बुद्ध्या विलोकयेत्यर्थः । किम्भूतान्, ध्रुवम् उत्प्रेक्षे निश्चितं वा पुष्पेषुणा कामेन इषुवर्षे वाणत्यागे जप्तो जपितो यो हुङ्काररूपो मन्त्रस्तस्य बलेन सामर्थ्येन भस्मिता विनाशिता शान्तिशक्तिरुपशमप्रभाव येषां तादृशान् । अन्योऽपि हुंफडादिमन्त्रोच्चारणेन वाणं प्रक्षिप्य शत्रूणां सामर्थ्यं नाशयति । जप्तइति पाठोऽसाधुः, सेड्जपधातुना सिद्धत्वात्, पाश्चात्यानां पुस्तके तु जप्तिरिति दृश्यते, तत्र कर्मणिक्तिप्रत्ययो बोध्यः ॥ २६ ॥

स्वादूदक इति । हे निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि निस्तन्द्रं प्रफुल्लं यत् पुष्करं पद्मं तस्य तिरस्करणे पराजये क्षमे योग्ये अक्षिणी चक्षुषी यस्याः हे तथाविधे कमलनयने भैमि स्वादु मधुरम् उदकं यत्र तादृशे जलनिधौ समुद्रे सवनेन सवननाम्ना अनेन राज्ञा सार्द्धं सह तव वारिविगाहलीला जलावगाहनक्रीडा भव्या रम्या भवन्तु । तस्मात् पुष्करस्य द्वीपस्य तं प्रसिद्धं पतिम् अमुं सवननामानं भज वृणुष्व । यदि स्वादूदकसमुद्रे जलक्रीडामिच्छसि, तदैतं पुष्करद्वीपपतिं पतिं कुर्वित्यर्थः ॥ २७ ॥

सावर्तेति । आवर्तेन दक्षिणावर्तेन सह वर्तमानः सावर्तस्तस्य भावस्तेन भवदुत्पद्यमानं अद्भुतमाश्चर्यं यस्मात् तादृशो नाभिरूपः कूपो यस्या हे तथाविधे सुलक्षणनाभिकूपे भैमि, एतस्य सवनस्य उपवर्तनं देशं भौमं भूमिभवं स्वः स्वर्गम् आत्मनैव स्वयमेव वरणमात्रेणैव नार्जयसि न करोषि, अपितु अर्जय । तथा एतदीयाम् एतद्देशसम्बन्धिनीं सवनसम्बन्धिनीं वा श्रियं सम्पत्तिं स्वाराज्यं स्वर्गाधिपत्यम् इन्द्रत्वं नार्जयसि, अपितु अर्जय । तस्मादेतस्य सवनस्य गृहे शच्या इन्द्रपत्न्या विलासं चेष्टितं परिगृहाण स्वीकुरु । इन्द्रतुल्यमिमं शचीव त्वं वृणुष्वेत्यर्थः । अन्यः कूपोऽपि आवर्तेन जलभ्रमेण आश्चर्य्यकारी भवति । 'देशविषयौ तूपवर्तनम्' अ॥ २८ ॥

देव इति । तत्र पुष्करद्वीपे हिमवत् शीतले न्यग्रोधमण्डलतले मण्डलाकारवटवृक्षाधःप्रदेशे किल प्रसिद्धं यः स्वयम्भूर्ब्रह्मा देवः स्वयं स्वरूपेण वसति । स ब्रह्मा त्वां त्वद्रूपम् अनन्यकल्पम् अनन्यसदृशं, कल्पप्रमिति पाठे अन्यैः कल्पयितुं निर्मातुमशक्यं, निजशिल्पं स्वीयनिर्मिति

---

अत्र ध्रुवमित्यनेन हुङ्कारमन्त्रबलभस्मितशान्तिशक्ति-सम्भावना प्रतीतेः वाच्या क्रियोत्प्रेक्षा, च्छेकानुप्रासश्चेति संसृष्टिः ॥ २६ ॥ 'निस्तन्द्रपुष्करतिरस्करणक्षमाक्षि' इत्युपमा, च्छेकानुप्रासश्च ॥ २७ ॥ अत्र नाभिकूप इति, उपवर्त्तनं स्वरिति च रूपकद्वयम्, शचीविलासमिति शच्याः विलासमिव विलासमिति सादृश्याक्षेपान्निदर्शना, च्छेकानुप्रासश्चेति संसृष्टिः ॥ २८ ॥

न्यग्रोधनादिव दिवःपतदातपादे-र्न्यग्रोधमात्मभरधारमिवावरोहैः ।
तं तस्य पाकिफलनीलदलद्युतिभ्यां द्वीपस्य पश्य शिखिपत्रजमातपत्रम् ॥ ३० ॥
न श्वेततां चरतु वा भुवनेषु राज-हंसस्य न प्रियतमा कथमस्य कीर्त्तिः ।
चित्रन्तु तद्विशदिमाद्वयमादिशन्ती क्षीरञ्च नाम्बु च मिथः पृथगातनोति ॥ ३१ ॥

विलोक्य सर्वेषु कारुषु शिल्पिषु विषये करेण हस्तेन दर्पं गर्वं करोतु। एतादृगतिसुन्दरनिर्माणं मम हस्तादेवेति मद्धस्तसदृशः केषामपि हस्तो नास्तीति हस्तावच्छेदेन गर्वं करोत्वित्यर्थः। पुष्करद्वीपे मूर्तिमान् ब्रह्मा वर्तते, एतद्वरणे तु ब्रह्मदर्शनमपि ते भविष्यतीति भावः। मण्डलेत्यत्र मण्डपेति क्वचित्पाठः ॥ २९ ॥

न्यग्रोधनादिति। हे भैमि त्वं पाकिफलानां पक्वफलानां नीलदलानाञ्च द्युतिभ्यां कान्तिभ्यां कृत्वा शिखिपत्रजं मयूरपक्षनिर्मितं तस्य द्वीपस्य पुष्करस्य आतपत्रं छत्रमिव तं वृक्षं पश्य। किम्भूतं दिव आकाशात्पतत आतपादेरुष्मवृष्ट्यादेर्न्यक् अधोदेशे रोधनात् निराकरणादिव न्यग्रोधं न्यग्रोध इति यौगिकनामानं तथा अवरोहैः शाखोत्पन्नमूलैः कृत्वा आत्मनो भरं भारं शरीरगौरवं धारयतीत्येवंभूतमिव। अन्योऽपि स्थूलो हस्तादिना निजशरीरगौरवं धारयति। समस्तमपि पुष्करद्वीप तस्य च्छायायां वर्तते इत्यर्थः ॥ ३० ॥

नेति। राजहंसस्य नृपश्रेष्ठस्य अस्य सत्रनस्य प्रियतमा अत्यन्तमभिमता कीर्तिः कथं न श्वेततां, श्वेता न भवतु, अपितु श्वेतैव भवतु। तथा भुवनेषु त्रिषु लोकेषु स्वर्गादिषु कथं न चरतु न गच्छतु, अपितु गच्छत्वेव। त्रिलोकान् कथं न व्याप्नोत्वित्यर्थः। एतद्द्वयमुचितमेव न चित्रम्। किन्तु तत्तु चित्रं विस्मयजनकं, यत् विशदिम्नः श्वेततायाः अद्वयम् ऐक्यम् आदिशन्ती, लोकत्रयमपि श्वेतीकुर्वती सती क्षीरं दुग्धञ्च अम्बु जलञ्च मिथः परस्पर पृथक् विभिन्नं नातनोति न करोति। अन्या तु राजहंसस्य प्रिया हंसी श्वेतापि भवति, भुवनेषु जलेषु च चरति, किन्तु क्षीरनीरे मिश्रिते अपि पृथक् करोति, इयं राजहंसप्रियापि यत्तन्न करोति तदाश्चर्यमित्यर्थः। अतिशुद्धा लोकत्रयव्यापिनी चास्यकीर्तिरिति भावः। 'पयः कीलालममृतं जीवनं भुवनं वनम्' अ ॥ ३१ ॥

अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ ॥ २९ ॥ अत्र न्यग्रोधनादिवेति हेतूत्प्रेक्षा, इयं च वक्ष्यमाणातपत्रत्वोत्प्रेक्षोपयोगिनीति तया सजातीयसङ्करः आत्मभरधारमिवेति क्रियोत्प्रेक्षा, अनया सजातीयसंसृष्टिः। आतपत्रमिवेति प्रतीयमानोत्प्रेक्षेति, जीवातुहृदयम्। न्यग्रोधन्यग्रोधेति यमकम्, वृत्त्यनुप्रासच्छेकानुप्रासौ चेति संसृष्टिः ॥ ३० ॥ "क्षीरं चाम्बु च मिथो पृथक् नातनोतीति यत् तत् चित्रं, हंसानां क्षीरनीरविवेकस्य जातिधर्मत्वात् तदभावो विरुद्ध इति भावः, स चाविवेको धावल्यगुणतः न स्वरूपतः इति विरोधसमाधानात् विरोधाभासोऽलङ्कारः, तथा विशदिमाद्वयमादिशन्तीत्यनेन सामान्यालङ्कारः। 'सामान्यं गुणसाम्येन यत्र वस्त्वन्तरैकता' इति लक्षणात्। तस्य विशेषणगत्या क्षीरनीराविवेकहेतुत्वात पदार्थहेतुकं काव्यलिङ्गं पूर्वार्धे च

शूरेऽपि सूरिपरिषत्प्रथमार्चितेऽपि श्रृङ्गारभङ्गिमधुरेऽपि कलाकरेऽपि।
तस्मिन्नवद्यमियमाप तदेव नाम यत्कोमलं न किल तस्य नलेति नाम ॥ ३२ ॥
भ्रूवल्लिवेल्लितमथाकृतिभङ्गमेषा लिङ्गं चकार तदनादरणस्य विज्ञा।
राज्ञोऽपि तस्य तदलाभजतापवह्नि-चिह्नीबभूव मलिनच्छविभूमधूमः ॥ ३३ ॥
राजान्तराभिमुखमिन्दुमुखीमथैनां यान्या जना हृदयवेदितयैव निन्युः।
अन्यानपेक्षितविधौ न खलु प्रधान-वाचां भवत्यवसरः सति भव्यभृत्ये ॥ ३४ ॥

शूरेऽपीति। इयं भैमी शूरेऽपि वीरेऽपि तथा सूरिपरिषदि पण्डितसभायां प्रथमम् आदौ अर्चितेऽपि पूजितेऽपि तथा श्टङ्गारभङ्गया श्टङ्गारचेष्टितेन मधुरेऽपि मनोज्ञेऽपि तथा कलानां गीतादिचतुःषष्टिविद्यानाम् आकरेऽपि आश्रयेऽपि तस्मिन् सवननामके राज्ञि नाम प्रसिद्धौ तदेव अवद्यं दोषम् आप प्राप्तवती। यत्तस्य राज्ञः किल प्रसिद्धौ नलेति कोमलं मधुराक्षरं नाम संज्ञा नासीत्। शौर्य्यादिगुणशालिनमपि तं नलानुरागान्न वृतवतीति भावः ॥ ३२ ॥

भ्रूवल्लीति। अथानन्तरं विज्ञा पण्डिता एषा भैमी भ्रूवल्लिर्भ्रूलता वेल्लिता चालिता यत्र तादृशम् आकृतिभङ्गं अङ्गमोटनमेव तस्य राज्ञः सवनस्य अनादरस्य अस्वीकारस्य लिङ्गं चिह्नं चकार। भ्रूद्वयवेल्लनेनाङ्गभङ्गेन च तस्यास्वीकारं सूचयामासेत्यर्थः। तथा तस्य राज्ञोऽपि मलिनच्छवेर्मलिन-कान्तेर्योभूमा बाहुल्यं स एव धूमः तस्या भैम्या अलाभाज्जातो यस्तापः स एव दाहकत्वाद्वह्निस्तस्य चिह्नीबभूव, अनुमापकोऽभूत्। अन्यत्रापि धूमो वह्नेरनुमापको भवति। श्यामच्छविं दृष्ट्वा जनेन तस्य विरहज्वरोऽनुमित इत्यर्थः ॥ ३३ ॥

राजेति। अथानन्तरं यान्या वाहका जना एनाम् इन्दुमुखीं भैमीं हृदयवेदितयैव भैम्या आश-याभिज्ञतयैव अग्रे गच्छतेत्यादि भैमीवचनमनपेक्ष्यैव राजान्तराभिमुखं निन्युः प्रापयामासुः। अत्रार्थान्तरमुपन्यस्यति, खलु यस्मात् अन्यस्य स्वामिनोऽनपेक्षितो विधिर्नियोगो येन तादृशे भव्यभृत्ये कुशलसेवके सति विद्यमाने प्रधानस्य स्वामिनो वाचां नियोगवचसाम् अवसरोऽवकाशो न भवति। भव्यभृत्यो भङ्गैव प्रभोराज्ञां बुद्ध्वा तन्नियोगमन्तरेणैव नियुज्यमानमाचरतीत्यर्थः। तस्माद्यान्या भैम्या आशयं ज्ञात्वैव तामन्यत्र निन्युरिति भावः ॥ ३४ ॥

श्चैत्यभुवनचारित्वराजहंसप्रियतमात्वाख्यश्लिष्टाश्लिष्टप्रस्तुतकीर्त्तिविशेषणसाम्यादप्रस्तुतराजहंसी-प्रतीतेः श्लेषसङ्कीर्णसमासोक्तिरित्येतैस्त्रिभिः सहाङ्गाङ्गिभावेन पूर्वोक्तस्य विरोधाभासस्य सङ्करः।" जी ॥ ३१ ॥ अत्र अवद्यप्राप्तिकारणाभावेऽपि तत्प्राप्तिकथनात् विभावनालङ्कारः, वृत्त्यनुप्रासश्च ॥ ३२ ॥ अत्र मलिनच्छविभूमधूम इति, तापवह्निरिति च रूपकद्वयम्, तथाविध-धूमेन वह्निज्ञानाद् "अनुमानालङ्कारः, किंत्विह धूमाग्न्यो रूपकलब्धात्मकयोरलङ्कारगर्भी-कारेण विच्छित्तिविशेषाश्रयणात् तर्कानुमानाद् भेदः" एषाञ्चाङ्गाङ्गिभावरूपः सङ्करः ॥ ३३ ॥ अत्र सामान्येन भव्यभृत्यकार्येण भैम्याः यानवाहकानां भव्यानां भृत्यविशेषाणां कार्यस्य

ऊचे पुनर्भगवती नृपमन्यमस्यै निर्दिश्य दृश्यतमतावमताश्विनेयम् ।
आलोक्यतामयमये कुलशीलशाली शालीनतानतमुदस्य निजास्यबिम्बम् ॥ ३५ ॥
एतत्पुरः पठदपश्रमवन्दिवृन्द-वाग्डम्बरैरनवकाशतराम्बरेऽस्मिन् ।
उत्पत्तुमस्ति पदमेव न मत्पदाना-मर्थोऽपि नार्थपुनरुक्तिषु पातुकानाम् ॥ ३६ ॥
नन्वत्र हव्य इति विश्रुतनाम्नि शाक- द्वीपप्रशासिनि सुधीषु सुधीभवन्त्या ।
एतद्भुजाविरुदवन्दिजयानयापि किं रागि राजनि गिराजनि नान्तरन्ते ॥ ३७ ॥

ऊच इति । भगवती सरस्वती दृश्यतमतया अतिसुन्दरतया अवमतौ अवज्ञातौ आश्विनेयौ अश्विनीकुमारौ येन तादृशम् अन्यं नृपम् अस्यै दमयन्त्यै निर्दिश्य दर्शयित्वा पुनरूचे, वक्ष्यमाणम् उक्तवती । अये भैमि, त्वया शालीनतया लज्जया नतं नम्रीभूतं निजं स्वीयम् आस्यबिम्बं मुखमण्डलम् उदस्य ऊर्ध्वीकृत्य कुलशीलाभ्यां शालत इत्येवंभूतोऽयं राजा आलोक्यताम् । लज्जां परित्यज्य अयं तावत् दृश्यतामित्यर्थः ॥ ३५ ॥

एतदिति । हे भैमि एतस्य राज्ञः पुरोऽग्रे पठत् स्तुवत् तथा अपश्रमं यथार्थगुणवर्णनात् प्रयासशून्यं यत् वन्दिवृन्दं स्तुतिपाठकसमूहस्तस्य वाग्डम्बरैर्वचनविलासैः कृत्वा अनवकाशतरे अत्यन्तनिरवकाशेऽस्मिन्नम्बरे आकाशे मत्पदानाम् एतद्वर्णनसम्बन्धिमदुच्चरितसुप्तिङन्तानां पदानाम् उत्पत्तुम् उदेतुं पदमेव अवकाश एव नास्ति । आकाशाश्रिता हि शब्दास्तैस्तस्य निरवकाशत्वात् मद्वचनानामवकाशाभावः । तथा अर्थपुनरुक्तिषु अभिधेयपौनरुक्त्येषु पातुकानां पतनशीलानां पुनरुक्तार्थप्रतिपादकानां मत्पदानाम् अर्थोऽपि नास्ति । एतस्य वन्दिवृन्देन यावानर्थ उच्यते, तावानर्थो मयापि वक्तव्यस्तस्मात् शब्दपौनरुक्त्यदोषो मद्वचनानामित्यर्थः । एतद्वन्दिवचनं ममापि सम्मतमित्येनं वृणीष्वेति भावः ॥ ३६ ॥

नन्वत्रेति । ननु हे भैमि ते तव आन्तरं चित्तम् अत्र अस्मिन् हव्य इति विश्रुतनाम्नि शाकद्वीपप्रशासिनि शाकद्वीपाधिपे राजनि एतद्भुजयोर्यद्विरुदं पौरुषप्रशस्तिस्तत्र ये वन्दिनः स्तुतिपाठकास्तेभ्यो जायत इति तादृशया अनया गिरापि वाचापि किं रागि अनुरक्तं नाजनि न जातम्, अपि तु अनुरक्तीभवितुं युज्यते । किम्भूतया गिरा सुधीषु पण्डितेषु सुधीभवन्त्या अमृतायमानया । वन्दिवर्णितामेतस्य प्रशस्तिं श्रुत्वा अस्मिन् राजनि तव अनुरागो युज्यत इति भावः । 'गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते' इति साहित्यदर्पणः ॥ ३७ ॥

---

समर्थनादर्थान्तरन्यासोऽलङ्कारः इन्दुमुखीमिति समासगता लुप्तोपमा, छेकानुप्रासश्रुत्यनुप्रासौ च ॥ ३४ ॥ अत्र अवमताश्विनेयमित्युपमा, आलोकनं प्रति कुलशीलशालीति विशेषणपदार्थस्य हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं च, छेकानुप्रासवृत्त्यनुप्रासाभ्यां संसृज्यते ॥ ३५ ॥ अत्र वाणीवाणीनाम् अवकाशसम्बन्धेऽपि तदसम्बन्धोक्तेरतिशयोक्तिः, पदोत्पत्तेरभावं प्रति अनवकाशतरेति पदार्थस्य हेतुत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ३६ ॥ अत्र सुधीभवन्त्या गिरेति रूपकम् सुधीति सुधीषु, छेकानुप्रासः, राजनि राजनीति यमकञ्चेत्येतेषां संसृष्टिः ॥ ३७ ॥

शाकः शुकच्छदसमच्छविपत्रमाल-भारी हरिष्यति तरुस्तव तत्र चित्तम्।
यत्पल्लवौघपरिरम्भविजृम्भितेन ख्याता जगत्सु हरितो हरितः स्फुरन्ति ॥ ३८॥
स्पर्शेन तत्र किल तत्तरुपत्रजन्मा यन्मारुतः कमपि सम्मदमादधाति।
कौतूहलं तदनुभूय विधेहि भूयः श्रद्धां पराशरपुराणकथान्तरेऽपि ॥३९॥
क्षीरार्णवस्तव कटाक्षरुचिच्छटाना-मन्वेतु तत्र विकटायितमायताक्षि।
वेलावनीवनततिप्रतिबिम्बचुम्ब-किर्मीरितोर्मिचयचारिमचापलाभ्याम् ॥ ४० ॥

शाक इति। तत्र द्वीपे शाकस्तरुस्तव चित्तं हरिष्यति, त्वामनुरञ्जयिष्यति। किम्भूतः, शुकस्य कीरस्य च्छदाः पक्षास्तेषां समा सदृशी च्छविर्दीप्तिर्यस्यास्तादृशी या पत्राणां पल्लवानां माला पङ्क्तिस्तां बिभर्त्तीति तादृशः। स कः, हरितो दिशः यस्य शाकवृक्षस्य पल्लवौघानां पत्रसमूहानां यत्परिरम्भणं सम्बन्धस्तस्य जृम्भितेन विलसितेन हरितो हरिद्वर्णाः सत्यः जगत्सु ख्याता, अर्थात् हरिदिति यौगिकनाम्ना विख्याता भूत्वा स्फुरन्ति। एतत्पत्रसम्बन्धेनैव दिशो हरित इति यौगिकनाम्न्यो जाता इत्यर्थः। मालभारीति 'ह्रस्वश्चितादाविष्टकादेरि'ति ह्रस्वः ॥ ३८ ॥

स्पर्शेनेति। तत्र द्वीपे तस्य तरोः शाकस्य पत्राज्जन्म उत्पत्तिर्यस्य तादृशो मारुतो वायुः स्पर्शेन कृत्वा किल प्रसिद्धौ कमपि अनिर्वचनीयं यत्सम्मदं हर्षम् आदधाति जनयति। हे भैमि त्वं तत्कौतूहलं सम्मदम् अनुभूय प्रत्यक्षीकृत्य पराशरपुराणस्य विष्णुपुराणस्य कथान्तरेऽपि आख्यानविशेषेऽपि भूयः पुनः श्रद्धाम् आस्थां विधेहि कुरु। 'शाकस्तत्र महान् वृक्षः सिद्धगन्धर्व-सेवितः। यत्पत्रवातसंस्पर्शादाह्लादो जायते परः' इति विष्णुपुराणवचनात्। तत्रत्यवायोस्तथा-विधत्वं त्वया पूर्वम् अनुभूतमेव, अधुना तत्र गत्वा पुनरपि तदनुभवनीयमिति भूयः शब्दार्थः, भूयसीं महतीं श्रद्धामिति वा ॥ ३९ ॥

क्षीरार्णव इति। हे आयताक्षि विशाललोचने भैमि तत्र शाकद्वीपे क्षीरार्णवः क्षीरसमुद्रः वेलावन्यां तीरभूमौ या वनततिः काननपरम्परा तस्याः प्रतिबिम्बस्य चुम्बः सम्बन्धस्तेन किर्मीरितो नानावर्णीकृतो य ऊर्म्मिचयस्तरङ्गसमूहस्तस्य चारिमा सौन्दर्यं चापलं चञ्चलत्वञ्च ताभ्यां कृत्वा तव कटाक्षस्य रुचिच्छटाः कान्तिपरम्परास्तासां विकटायितं महत्त्वं सौन्दर्यम् अन्वेतु अनु-करोतु क्षीरसमुद्रः स्वभावतः श्वेतः वनप्रतिबिम्बसम्बन्धान्मध्ये नीलः वायुवशाच्चञ्चलश्च, तव कटाक्षाधारश्चक्षुरपि परितः श्वेतं मध्ये नीलं चञ्चलञ्च ; तस्मात् तत्सदृशो भवत्वित्यर्थः। 'विकटा वजूवाराह्यां विपूरुविकरालयोः' मे ॥ ४० ॥

---

"अत्र दिक्षु हरिच्छब्दप्रवृत्तेर्हरिद्वर्णनिमित्तायाः शाकतरुपल्लवच्छायाच्छुरणनिमित्तत्वासम्बन्धेऽपि तत्सम्बन्धोक्तेस्तद्रूपातिशयोक्तिः, तयाच तस्य तरोस्तादृशविस्तारो व्यज्यते इत्यलङ्कारेण वस्तु-ध्वनिः।" जी। शुकच्छदसमच्छवीति आर्थी उपमा, च्छेकानुप्रासश्चेति संसृष्टिः ॥ ३८ ॥ अत्र च्छेकानुप्रासः ॥ ३९ ॥ अत्र क्षीरार्णवः कटाक्षरुचिच्छटानामन्वेतु इति आर्थी उपमा, च्छेकानु-प्रासवृत्त्यनुप्रासौ चेति संसृष्टिः। अन्वेतु इत्यत्र अध्येतु इति पाठे "अत्र किर्मीरितोर्मिचयस्य

बालातपैः कृतकगैरिकतां कृतांह्रि-स्तत्रोदयाचलशिलाः परिशीलयन्तु ।
त्वद्विभ्रमभ्रमणजश्रमवारिधारि-पादाङ्गुलीगलितया नखलाक्षयापि ॥ ४१

नृणां करम्बितमुदामुदयन्मृगाङ्क-शङ्कां सृजत्वनघजङ्घि परिभ्रमन्त्याः
तत्रोदयाद्रिशिखरे तव दृश्यमास्यं कश्मीरसम्भवसमालभनाभिरामम् ॥ ४२ ॥

बालातपैरिति । हे भैमि तत्र शाकद्वीपे उदयाचलशिला उदयपर्वतस्य प्रस्तरा बालातपैः उदयाचलस्थनवीनसूर्यकिरणैः तथा नखलाक्षयापि तव नखस्थितालक्तकेन च कृतां कृतकगैरिकतां कृत्रिमगैरिकधातुमत्तां द्विः प्रकारद्वयेन परिशीलयन्तु अनुभवन्तु । किम्भूतया नखलाक्षया, तव विभ्रमेण विलासेन यद्भ्रमणं वनविहारस्तस्माज्जायत इति तादृशं यत् श्रमवारि स्वेदजलं तद्धारिभ्यो याः पादाङ्गुल्यस्ताभ्यो गलितया क्षरितया । एतस्मिन् वृते उदयाचलकाननेऽपि विहरिष्यसीति भावः ॥ ४१ ॥

नृणामिति । हे अनघजङ्घि सुन्दरजङ्घाशालिनि भैमि तत्र शाकद्वीपे प्रसिद्धे वा उदयाद्रिशिखरे उदयाचलशृङ्गे परिभ्रमन्त्या इतस्ततो गच्छन्त्यास्तव कश्मीरसम्भवस्य कुङ्कुमस्य समा-

सितासितत्वसादृश्यात् तद्विलासस्य कटाक्षविलासस्मारकत्वात् स्मरणालङ्कारः" जी ॥ ४० ।
इतः परं मल्लिनाथनारायणाभ्यां व्याख्यातं श्लोकद्वयं दृश्यते, जीवातुव्याख्योपेतं तदत्रोद्धियते,—

कल्लोलजालचलनोपनतेन पीवा जीवातुनानवरतेन पयोरसेन ।
अस्मिन्नखण्डपरिमण्डलितोरुमूर्त्ति-रध्यास्यते मधुभिदा भुजगाधिराजः ॥ ४०क ॥

कल्लोलेति । कल्लोलजालस्य तरङ्गसमूहस्य चलनात् उपनतेन प्राप्तेन जीवातुना उज्जीवकेन अनवरतेन अविच्छिन्नेन पयोरसेन क्षीरास्वादेन पीवा पीवरः, 'पीनपीव्नीतु स्थूलपीवरे' अ । 'अन्येभ्योऽपि दृश्यन्ते' इति पीङः क्वनिप् । स प्रसिद्धः भुजगाधिराजः शेषः अस्मिन् क्षीरार्णवे अखण्डम् अनूनं यथा तथा परिमण्डलिता कुण्डलिता उरुमूर्त्तिः महाकायो यस्य स सन् मधुभिदा हरिणा अध्यास्यते अधिष्ठीयते ॥ ४०क ॥

त्वद्रूपसम्पदवलोकनजातशङ्का पादाब्जयोरिह कराङ्गुलिलालनेन ।
भूयाश्चिराय कमलाकलितावधाना निद्रानुबन्धमनुरोधयितुं धवस्य ॥ ४०ख ॥

त्वदिति । किञ्च इहात्र क्षीरोदे कमला लक्ष्मीः त्वद्रूपसम्पदवलोकनात् जातशङ्का तव सौन्दर्यं दृष्ट्वा सद्यः स्वभर्त्तरि शङ्कितचापला सतीत्यर्थः । धवस्य स्वप्रियस्य हरेः पादाब्जयोः मृदूनां कराङ्गुलीनां लालनेन चालनेन कराग्रेण संवाहनव्यापरेणेत्यर्थः । निद्रानुबन्धं निद्रानुवृत्तिम् अनुरोधयितुम् अनुवर्त्तयितुम् तद्दर्शनप्रतिबन्धाय निद्रासक्तमेव कर्त्तुम् इत्यर्थः । चिराय बहुकालं कलितावधाना अवहिता भूयात् । अन्यथा चञ्चलचित्ताः पुमांसः न विश्वसनीयाः इति भावः ॥ ४०ख ॥

अत्र श्रमवारिधारि पदार्थस्य गलितत्वं प्रति हेतुत्वात् पदार्थ हेतुकं काव्यलिङ्गम्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ४१ ॥

एतेन ते विरहपावकमेत्य तावत् कामं स्वनामकलितान्वयमन्वभावि।
अङ्गीकरोषि यदि तत्त्र नन्दनाद्यै-र्लब्धान्वयं स्वमपि नन्वयमातनोतु ॥ ४३ ॥
लक्ष्मीलतासमवलम्बभुजद्रुमेऽपि वाग्देवतायतनमञ्जुमुखाम्बुजेऽपि।
सामुत्र दूषणमजीगणदेकमेव नार्थी बभूव मघवा यदमुष्य देवः ॥ ४४ ॥
लक्ष्मीविलासवसतेः सुमनःसु मुख्या-दस्माद्विकृष्य भुवि लब्धगुणप्रसिद्धिम्।
स्थानान्तरं तदनु निन्युरिमां विमान-वाहाः पुनः सुरभितामिव गन्धवाहाः ॥४५॥

लभनेन विलेपनेन अभिरामम् आरक्ततया मनोज्ञम् आस्यं मुख इद्यं सत् करम्बितमुदां सञ्जात-हर्षाणां नृणाम् उदयन् यो मृगाङ्कश्चन्द्रस्तस्य शङ्कां भ्रमं सृजतु करोतु। कुङ्कुमविलेपनेनारक्तं तव मुखं दृष्ट्वा किमयं चन्द्र उदित इति सर्वेषां हर्षो भविष्यति। तस्मादेनं वृणीष्वेति भावः ॥४२॥

एतेनेति। हे भैमि एतेन राज्ञा काममत्यन्तं ते तव विरहपावकं विरहाग्निं तावत् प्रथमम् एत्य प्राप्य स्वनाम हव्य इति निजसंज्ञां कलितान्वयम् अनुगतार्थम् अन्वभावि अनुभूत्। हव्यं वस्तु यथा अग्निव्यथामनुभवति, तथायमपि कामाग्निव्यथामनुभूतवान्। तस्मात् हूयते अग्नौ प्रक्षिप्यत इति व्युत्पत्तियुक्तमस्य हव्येति नामेत्यर्थः। ननु भो भैमि अधुना त्वं यदि एनमङ्गीकरोषि वृणोषि, तत्तर्हि अयं राजा तव नन्दनाद्यः पुत्रपौत्रादिभिः कृत्वा स्वमपि आत्मानमपि लब्धान्वयं लब्ध-सन्तानम् आतनोतु करोतु। अस्य नाम पूर्वं सान्वयं जातम्, अधुना तव प्रसादा आत्मापि सान्वयो भवत्विति शब्दच्छलेन अपिः सार्थकः। अयं पूर्वावधि त्वय्यनुरक्तस्तस्मादेनं वृणीष्वेति भावः। यदि शब्देन च स्वीकारस्य पाक्षिकत्वमपि सूचितम् ॥ ४३ ॥

लक्ष्मीति। लक्ष्मीरेव लता वल्ली तस्याः समवलम्ब आश्रयो भुजरूपो द्रुमो यस्य तादृशेऽपि अतिसम्पत्तिशालिन्यपि तथा वाग्देवतायाः सरस्वत्या आयतनं गृहरूपं मञ्जु मनोज्ञं मुखाम्बुजं मुखपद्मं यस्य तादृशेऽपि अतिविद्याशालिन्यपि अमुत्र अस्मिन् हव्ये राजनि सा भैमी एकमेव दूषणम् अजीगणत् गणयामास। यत् मघवा इन्द्रो देवः अमुष्य राज्ञोऽर्थी याचको न बभूव। अयं धनेषु विद्यासु च नलस्य समान एव, किन्तु इन्द्रो नलस्य याचको जातः, अस्य तु न जात इतीदमेवास्य दूषणं गणयित्वा भैमी तं न वृतवतीत्यर्थः ॥ ४४ ॥

लक्ष्मीति। तदनु तदनन्तरं विमानवाहा यानवाहका लक्ष्म्या विलासवसतेः क्रीडागृहात् तथा सुमनःसु पण्डितेषु मुख्यात् श्रेष्ठात् अस्मात् हव्यात् विकृष्य आकृष्य भुवि पृथिव्यां लब्धा गुणैः सौन्दर्य्यादिभिः प्रसिद्धिः ख्यातिर्यया तादृशीम् इमां भैमीं पुनः स्थानान्तरं राजान्तरसमीपं निन्युः

---

अत्र शङ्काशब्दस्य भ्रमार्थत्वात् भ्रान्तिमानलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः। "उदय-मृगाङ्कशङ्काम् उदीयमानचन्द्रसन्देहं भ्रान्तिं वा सृजतु करोतु। अलङ्कारोऽपि सन्देहभ्रान्ति-मतोरन्यतरोऽस्तु।" जीं ॥ ४२ ॥ अत्र 'विरहपावकम्' इति रूपकमलङ्कार श्छेकानुप्रासा वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ४३ ॥ अत्र लक्ष्म्यां लतात्वारोपो भुजे द्रुमत्वारोपे कारणमिति परम्परितरूपकम्, 'मुखाम्बुज' इति केवलरूपकञ्चानयोः संसृष्टिः ॥ ४४ ॥

भूयस्ततो निखिलवाङ्मयदेवता सा हेमोपमेयतनुभासमभाषतैनाम् ।
एनं स्वबाहुबहुवारनिवारितारिं चित्ते कुरुष्व कुरुविन्दसकान्तिदन्ति ॥ ४६ ॥
द्वीपस्य पश्य दयितं द्युतिमन्तमेतं क्रौञ्चस्य चञ्चलदृगञ्चलविभ्रमेण ।
यन्मण्डले स किल मण्डलसन्निवेशः पाण्डुश्चकास्ति दधिमण्डपयोधिपूरः ॥४७॥
तत्राद्रिरस्ति भवदङ्घ्रिविहारयाची क्रौञ्चः स्फुरिष्यति गुणानिव यस्त्वदीयान् ।
हंसावलीकलकलप्रतिनादवाग्भिः स्कन्देषुवृन्दविवरैर्विवरीतुकामः ॥ ४८ ॥

प्रापयामासुः । उपमिनोति, गन्धवाहाः सुरभितामिव । यथा गन्धवाहा वायवः सुमनःसु पुष्पेषु मुख्यात् श्रेष्ठात् लक्ष्म्या विलासवसतेः पद्मात् आकृष्य भुवि लब्धा गुणेषु चतुर्विंशतिप्रकारेषु रूपादिषु मध्ये प्रसिद्धिर्यया तादृशीं सुरभितां सौरभं स्थानान्तरं नयन्ति, तथा निन्युः ।४५।

भूय इति । ततोऽनन्तरं निखिलवाङ्मयानां समस्तशास्त्राणां देवता अधिष्ठात्री देवी सा सरस्वती हेमा देवाङ्गनाविशेषस्तया हेम्ना सुवर्णेन वा उपमेया तत्सदृशी तनुभाः शरीरकान्तिर्यस्यास्तादृशीम् एनां भैमीं भूयः पुनरपि अभाषत उक्तवती । किमभाषतेत्याह, हे कुरुविन्दसकान्तिदन्ति कुरुविन्दानि रत्नविशेषास्तैः सकान्तयः सदृशच्छवयो दन्ता यस्यास्तादृशि अतिशुभ्रदन्तपंक्तिके भैमि स्वबाहुना निजभुजबलेन बहुवारं निवारिता अरयो येन तादृशम् एनं सम्मुखवर्त्तिनं राजानं चित्ते कुरुष्व एनं वृणुष्वेत्यर्थः । स्वबाह्वित्यनेन शत्रुनिग्रहे परानपेक्षणादतिवीरत्वं सूचितम् । 'कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्' मे ॥ ४६ ॥

द्वीपस्येति । हे भैमि त्वं क्रौञ्चस्य द्वीपस्य दयितं पतिं द्युतिमन्तं द्युतिमन्नामानम् अथच तेजस्विनम् एतं राजानं चञ्चलो यो दृगञ्चलश्चक्षुःप्रान्तस्तस्य विभ्रमेण विलासेन पश्य कटाक्षेण निरीक्षस्वेत्यर्थः । किल प्रसिद्धौ यस्य राज्ञो मण्डले राज्ये क्रौञ्चद्वीपं परितो मण्डलो वर्त्तुलः सन्निवेशोऽवस्थानं यस्य तादृशः पाण्डुः शुभ्रः स प्रसिद्धो दधिमण्डपयोधेर्दधिमण्डनामकसमुद्रस्य पूरः प्रवाहश्चकास्ति शोभते । एतस्मिन् वृते तव दधिमण्डोदसमुद्रदर्शनं भविष्यतीत्यर्थः ॥ ४७ ॥

तत्रेति । तत्र द्वीपे क्रौञ्चोऽद्रिः भवत्यास्तव अङ्घ्रिविहारयाची चरणविहरणं प्रार्थयमानोऽस्ति, यः हंसावलीनां हंसश्रेणीनां कलकलस्य कोलाहलस्य यः प्रतिनादः प्रतिध्वनिः स एव वाग् यत्र तादृशैर्मुखैरिव स्कन्देषुवृन्दानां कार्त्तिकेयवाणसमूहानां विवरैश्छिद्रैः कृत्वा त्वदीयान् गुणान् विवरीतुकाम इव वर्णयितुमना इव स्फुरिष्यति शोभिष्यते । पूर्वं कार्त्तिकेयेन क्रौञ्चपर्वते बाणैश्छिद्राणि कृतानीति पुराणवार्त्ता । अतएव क्रौञ्चदारण इति तस्य नाम ॥ ४८ ॥

---

अत्र गन्धवहः सुरभितामिव तां विमानवाहाः स्थानान्तरं निन्युरिति पूर्णोपमालङ्कारश्छेकानुप्रासेन संसृज्यते ॥ ४५ ॥ 'कुरुविन्दः पद्मरागः' वि । अत्र कुरुविन्दसकान्तिदन्ति इति समासगता आर्थी उपमा, च्छेकानुप्रासश्चेति संसृष्टिः ॥ ४६ ॥ 'मण्डं दधिभवं मस्तु' अ । अत्र वृत्त्यनुप्रासोऽलङ्कारः ॥ ४७ ॥ अत्र प्रतिनादेषु वागित्यारोपस्य प्रकृतगुणवर्णनोपयोगितया परिणामालङ्कारः, तत्र गुणान् विवरीतकाम इवेति वाच्या गुणोत्प्रेक्षा, च्छेकानुप्रासश्चेति

वैदर्भि दर्भदलपूजनयापि यस्य गर्भे जनः पुनरुदेति न जातु मातुः।
तस्यार्च्चनां रचय तत्र मृगाङ्कमौले-स्तन्मात्रदैवतजनाभिजनः स देशः ॥४९॥
चूडाग्रचुम्बिमिहिरोदयशैलशील-स्तेनाः स्तनन्धयसुधाकरशेखरस्य।
तस्मिन् सुवर्णरसरूषणरम्यहर्म्य-भूभृद्घटा घटय हेमघटावतंसाः॥ ५० ॥
तस्मिन्मलिम्लुच इव स्मरकेलिजन्म-घर्मोदविन्दुमयमौक्तिकमण्डनं ते।
जालैर्मिलन् दधिमहोदधिपूरलोल-कल्लोलचामरमरुत्तरुणि च्छिनत्तु ॥ ५१ ॥

वैदर्भीति। हे वैदर्भि भैमि यस्य दर्भदलेन कुशपत्रेण पूजनयापि जनो लोकः जातु कदाचिदपि मातुर्गर्भे पुनर्नोदेति नोत्पद्यते, मुक्तो भवतीत्यर्थः। त्वं तत्र क्रौञ्चद्वीपे तस्य मृगाङ्कमौलेः शिवस्य अर्च्चनां पूजनं रचय कुरु। तत्र गत्वा केवलं त्वमेव तस्य पूजां न करिष्यसीत्याह, यतः स देशः तन्मात्रं शिव एव दैवतं येषां तादृशा ये जनास्तेषामभिजन उत्पत्तिस्थानम्। तस्माद्बहुभिः सार्द्धं तं पूजयेत्यर्थः। यस्य कुशपत्रेण पूजनेऽपि मुक्तिर्जायते, तस्य पुष्पादिना पूजने किं वाच्यमित्यर्थः। 'कुलेऽप्यभिजनो जन्मभूम्यामपि' अ ४९ ॥

चूडाग्रेति। हे भैमि तस्मिन् द्वीपे स्तनन्धयो बालः सुधाकरश्चन्द्रः शेखरे मस्तके यस्य स तथा तस्य शिवस्य सुवर्णरसेन हेमद्रवेण यत् रूषणं विलेपनं तेन रम्याणि यानि हर्म्याणि तान्येव भूभृत पर्वतास्तेषां घटाः श्रेणीः घटय कारय। किम्भूताः, हेमघटाः स्वर्णकलसा अवतंसाः शिरोभूषणानि यासां ताः, तथा चूडाग्रचुम्बी शृङ्गाग्रस्थायी मिहिरः सूर्य्यो यस्य तादृशस्य उदयशैलस्य यत् शीलं स्वभावस्तस्य स्तेनाश्चौराः तत्तुल्या इत्यर्थः। तत्र शिवप्रीत्यर्थम् उदयाचलतुल्यान् प्रासादान् कारयेति भावः ॥ ५० ॥

तस्मिन्निति। हे तरुणि प्रादुर्भूतयौवने भैमि तस्मिन् द्वीपे दधिमहोदधेर्दधिमण्डसमुद्रस्य पूरे प्रवाहे लोलाश्चञ्चला ये कल्लोलास्तरङ्गास्त एव शुभ्रत्वाद्दीर्घत्वाच्च चामराणि तेषां मरुद्वायुर्जालैर्गवाक्षैर्मिलन् प्रविशन् सन् मलिम्लुच इव चौर इव ते तव स्मरकेलौ सुरते जन्म येषां तादृशा ये घर्मोदविन्दवः स्वेदजलकणास्तन्मयं मौक्तिकमण्डनं मुक्ताहारभूषणं छिनत्तु अपहरतु। चौरोऽपि जालमार्गेण गृहं प्रविश्य मुक्ताहारम अपहरति। अस्मिन् वृते दधिसमुद्रसम्पर्किशीतलवायुसम्पर्केण तव सुरतश्रमो न भविष्यतीत्यर्थः। 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः' अ ॥ ५१ ॥

---

संसृष्टिः ॥ ४८ ॥ अत्र तद्देशस्य शिवमात्रदैवताभिजनत्वेन कारणेन भैम्याः अपि शिवपूजाकरणरूपकार्यस्य समर्थनात् कारणेन कार्यसमर्थनरूपः "अर्थान्तरन्यासः।" जी। सच वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥ ४९ ॥ अत्र प्रासादानाम् उदयशैलशीलस्तेयासम्भवाद् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना, हेमघटावतंसा इति पदार्थस्य सुवर्णरसरम्यपदार्थस्य च उदयशैलसादृश्यं प्रति हेतुत्वात् काव्यलिङ्गम्, हर्म्यभूभृदिति रूपकम्, वृत्त्यनुप्रासः, छेकानुप्रासश्चेति संसृष्टिः ॥ ५० ॥ अत्र 'मलिम्लुच इव' इत्युपमालङ्कारः, घर्मोदविन्दुमयमौक्तिकेति लोलकल्लोल-

एतद्यशो नवनवं खलु हंसवेशं वेशन्तसन्तरणदूरगमक्रमेण ।
अभ्यासमर्जयति सन्तरितुं समुद्रान् गन्तुञ्च निःश्रममितः सकलान् दिगन्तान् ॥५२॥
तस्मिन् गुणैरपि वृते गणनादरिद्रै-स्तन्वी न सा हृदयबन्धमवाप भूपे ।
दैवे विरुन्धति निबन्धनतां वहन्ति हन्त प्रयासपरुषाणि न पौरुषाणि ॥ ५३ ॥
ते निन्यिरे नृपतिमन्यमिमाममुष्मा-दंसावतंसशिविकांशभृतः पुमांसः ।
रत्नाकरादिव तुषारमयूखलेखां लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम् ॥ ५४ ॥

एतदिति । हंसयो राजहंसतुरङ्गमविशेषयोरिव वेशो यस्य तादृशम् एतस्य राज्ञो यशः नवं नवं प्रतिदिनम् अपूर्वं सत् समुद्रान् सन्तरितुं तथा इतोऽस्मात् प्रदेशात् निःश्रमम् अनायासं यथा तथा सकलान् दिगन्तान् दिक्प्रान्तान् गन्तुं च वेशन्तेऽल्पसरसि यत् सन्तरणं प्लवनं दूरे योगमो गमनं च तयोः क्रमेण परिपाट्या खलु निश्चयेनाभ्यासम् अर्जयति करोति । यथा राजहंसो नद्यादिकं सन्तरितुं वेशन्तसन्तरणेनाभ्यासं करोति, यथाच तुरङ्गमविशेषो दिगन्तं गन्तुं किञ्चित् किञ्चित् दूरगमनेनाभ्यासं करोति, तथास्य यशो नवं नवं सत् अभ्यासं करोतीत्यर्थः । प्रतिदिनवर्द्धमान-यशोयुक्तोऽयमिति भावः । 'हंसः स्यान्मानसौकसि निर्लोभनृपविष्ण्वर्के परमात्मनि मत्सरे तुरङ्गम-प्रभेदे च' मे ॥ ५२ ॥

तस्मिन्निति । गणनादरिद्रैर्गणनाशून्यैरसंख्यैर्गुणैः सौन्दर्यादिभिर्वृतेऽपि पूर्णेऽपि तस्मिन् भूपे द्युतिमति सा तन्वी भैमी हृदयबन्धं मनोऽनुरागं नावाप न प्राप्तवती। गुणवत्यपि कथं नानुरक्तेत्यत आह, दैवे भाग्ये विरुन्धति प्रतिबन्धकतामाचरति सति हन्त खेदे पौरुषाणि पुरुष-कारा निबन्धनतां कारणतां न वहन्ति, तत्तत् कार्यं न जनयन्ति, अपितु दैवसहकारेणैव वहन्ती-त्यर्थः । किम्भूतानि, प्रयासेन प्रयत्नेन परुषाणि कर्कशानि । यथा यथा प्रयासः क्रियते, तथा तथा कार्यानुत्पत्त्या पुरुषकारा विरसा भवन्तीत्यर्थः । गुणवानपि दैवप्रतिबन्धकतया न वृत इति भावः । अथ च वागुरादिगुणसमूहभृते स्थाने हरिण्यादिर्बन्धनं प्राप्नोति, इयन्तु यन्न प्राप्नोति; तदाश्चर्यमिति ध्वनिः ॥ ५३ ॥

त इति । अंसयोः स्कन्धयोरवतंसा भूषणीभूता ये शिविकाया यानस्य अंशास्तान् बिभ्रति

---

चामरेति केवलरूपकद्वयेन संकीर्णः । छेकानुप्रासेन च संसृष्टिः ॥ ५१ ॥ अत्र "अर्जयतीति वर्त्तमानप्रयोगाद् यशसो अल्पत्वसूचनादस्मिन्ननादरः सूचितः" ना । "अभ्यासम् अर्जयति । खलु करोति किमित्यर्थः, जिज्ञासायां खलु शब्दः । तेन पुनः पुनरेवमभ्यस्यति किम् । अन्यथा कथमस्य सकललोकलङ्घित्वमित्युत्प्रेक्षा गम्यते ।" जी । हंसवेशमिति 'हंसयोरिव वेशो यस्य' इति लुप्तोपमा, च्छेकानुप्रासश्चेति संसृष्टिः ॥ ५२ ॥ अत्र सत्यपि शौर्यादिगुणभृतत्वरूपे कारणे चित्तासङ्गरूपतत्कार्यस्यानुत्पत्ते र्विशेषोक्तिः, सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽल-ङ्कारः, वृत्त्यनुप्रासच्छेकानुप्रासौ चेत्येतेषां संसृष्टिः ॥ ५३ ॥

एकैकमुन्नतगुणं च्युतदूषणञ्च हित्वान्यमन्यमुपगत्य परित्यजन्तीम्।
एतां जगाद जगदर्चितपादपद्मा पद्मामिवाच्युतभुजान्तरविच्युतांसाम्॥ ५५॥
ईशः कुशेशयसनाभिशये कुशेन द्वीपस्य लाञ्छिततनोर्यदि वाञ्छितस्ते।
ज्योतिष्मता सममनेन वनौघनासु तत्त्वं विनोदय घृतोदतटीषु चेतः॥ ५६॥
वातोर्मिदोलनचलद्दलमण्डलाग्र-भिन्नाभ्रमण्डलगलज्जलजातसेकः।
स्तम्बः कुशस्य भविताम्बरचुम्बिचूड-श्चित्राय तत्र तव नेत्रनिपीयमानः॥ ५७॥

धारयन्तीति तादृशास्ते पुमांसो यानवाहा इमां भैमीम् अमुष्मात् नृपतेः सकाशात् अन्यं नृपतिं निन्यिरे प्रापयामासुः। अत्रोपमिनोति, लेखानां देवानाम् अनुजीविपुरुषाः सेवका जनाः लेखा एवानुजीविपुरुषा वा तुषारमयूखस्य चन्द्रस्य लेखां कलां रत्नाकरादिव यथा रत्नाकरसकाशात् गिरिशस्य शिवस्य उत्तमाङ्गं मस्तकं निन्यिरे, तथेत्यर्थः। वाहकानां बहुत्वात् शिविकांशा इत्युक्तम्॥ ५४॥

एकैकमिति। जगदर्चिते त्रिलोकपूजिते पादपद्मे यस्यास्तादृशी सरस्वती उन्नताः प्रकाशमाना गुणा यस्य तादृशं तथा च्युतदूषणं दोषरहितञ्च एकैकम् एकमेकं राजानं हित्वा त्यक्त्वा अन्यम् अन्यम् राजानम् उपगत्य प्राप्य परित्यजन्तीम् एतां भैमीं जगाद, वक्ष्यमाणमुवाच। कामिव अच्युतस्य नारायणस्य भुजान्तरात् वक्षःस्थलात् विच्युतोऽंसो यस्यास्तादृशीं पद्मां लक्ष्मीमिव। सापि चापल्यात् गुणवन्तमपि दोषशून्यमपि जनं हित्वा अन्यम् अन्यं प्राप्य परित्यजति। अच्युतभुजान्तरेत्यनेन यथा लक्ष्मीर्नारायणं विना अन्यत्र स्थिरा न, तथा इयमपि नलं विना अन्यत्र स्थिरा नेति सूचितम्॥ ५५॥

ईश इति। कुशेशयस्य पद्मस्य सनाभिः समानः शयो हस्तो यस्याः सा तथा हे तादृशि भैमि कुशेन कुशस्तम्बेन लाञ्छिततनोश्चिह्नितशरीरस्य द्वीपस्य कुशद्वीपस्य ईशः प्रभुस्ते तव यदि वाञ्छितोऽभिलषितः, तत्तदा त्वं वनौघैर्वनैर्घनासु निविडासु घृतोदस्य समुद्रस्य तटीषु ज्योतिष्मता ज्योतिष्मन्नाम्ना अथ च कान्तिमता अनेन राज्ञा समं चेतो मनो विनोदय हर्षय, वनबाहुल्यात् निविडच्छायेषु घृतोदसमुद्रतटेषु अनेन सार्द्धं तव विहारे श्रमो न भविष्यति तदेनं वृणीष्वेति भावः। कुशेशयेति कौ पृथिव्यां शेते इति कुशं जलं तत्र शेते इति कुशेशयं पद्मम्, 'अकालवाचिनः शयवासवासिष्वि'ति सप्तम्या अलुक्। घृतोदेति 'क्षीरोदादिश्च'ति संज्ञायाम् उदकस्योदादेशः। 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' अ॥ ५६॥

वातोर्म्मीति। हे भैमि तत्र द्वीपे नेत्राभ्यां निपीयमानः सादरमालोक्यमानः कुशस्य स्तम्बो गुच्छस्तत्र चित्राय विस्मयाय भविता भविष्यति किम्भूतः, अम्बरचुम्बिनी गगनतललग्ना चूडा अग्रं

---

अत्र श्रौती पूर्णा उपमा॥ ५४॥ अत्र श्रौती पूर्णोपमा छेकानुप्रासश्चेत्यनयोः संसृष्टिः॥ ५५॥ अत्र कुशेशयसनाभिशये इति समासगता आर्थी उपमा। वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते॥ ५६॥

पाथोधिमाथसमयोत्थितसिन्धुपुत्री-पत्पङ्कजार्पणपवित्रशिलासु तत्र ।
पत्या सहावह विहारमयैर्विलासै-रानन्दमिन्दुमुखि मन्दरकन्दरासु ॥ ५८ ॥
आरोहणाय तव सज्ज इवास्ति तत्र सोपानशोभिवपुरश्मबलिच्छटाभिः ।
भोगीन्द्रवेष्टशतघृष्टिकृताभिरब्धि-क्षुब्धाचलः कनककेतकगात्रगात्रि ॥ ५९ ॥
मन्था नगः स भुजगप्रभुवेष्टघृष्टि-लेखावलञ्चवलनिर्झरवारिधारः ।
त्वन्नेत्रयोः स्वभरयन्त्रितशीर्षशेष-शेषाङ्गवेष्टिततनुभ्रममातनोतु ॥ ६० ॥

यस्य तादृशः, अतएव वातोर्म्मिभिर्वायुपरम्पराभिर्वातस्य उर्म्मिभिर्वेगैर्वा यद्दोलनं तेन चलन्ति चञ्चलानि यानि दलानि तान्येव मण्डलाग्राः खङ्गास्तैर्भिन्नं विदारितं यत् अभ्राणां मेघानां मण्डलं समूहस्तस्माद्गलद्भिः क्षरद्भिर्जलैर्जातः सेकः सेचनं यस्य तादृशः। अदृष्टपूर्वमेतादृशं कुशस्तम्बं दृष्ट्वा त्वं सविस्मया भविष्यसीत्यर्थः। दलमण्डलं दलसमूहस्तस्य अग्रेणेति वा। 'ऊर्मिः स्त्री-पुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः' मे। 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' अ ॥ ५७ ॥

पाथोधीति। हे इन्दुमुखि भैमि तत्र कुशद्वीपे मन्दरकन्दरासु मन्दरनामकपर्वतनदीषु पत्या सह विहारमयैर्विहारबहुलैर्विलासैः कामचेष्टितैः कृत्वा आनन्दम् आवह धारय। किम्भूतासु, पाथोधिमाथसमये समुद्रमन्थनकाले उत्थिता या सिन्धुपुत्री लक्ष्मीस्तस्याः पत्पङ्कजार्पणेन पादपद्मारोपणेन पवित्राः शिला यासु तास्तथा तादृशीषु। लक्ष्मीरिव त्वमपि अधुना तत्रत्याः शिला अलंकुर्वित्यर्थः। अस्मिन् वृते सति मन्दरपर्वतकन्दरायां तव विहारो भविष्यतीति भावः ॥ ५८ ॥

आरोहणायेति। हे कनककेतकगात्रगात्रि कनककेतकं स्वर्णकेतकं तस्य गात्रसदृशं गात्रं शरीरं यस्यास्तथाविधे अतिगौराङ्गि भैमि तत्र कुशद्वीपे अब्धेः समुद्रस्य क्षुब्धाचलो मन्थनपर्वतो मन्दरस्तव आरोहणाय सज्ज इव सन्नद्ध इव अस्ति। किम्भूतः यतो भोगीन्द्रो मन्थनरज्जुभूतो वासुकिस्तेन कृतं यद्वेष्टशतं वेष्टनशतं तेन या घृष्टयो घर्षणानि ताभिः कृताभिर्जनिताभिरश्मबलिच्छटाभिः शिलाभङ्गिपरम्पराभिः कृत्वा सोपानैरिव शोभि वपुः शरीरं यस्य तादृशः। वासुकिघर्षणजनित-शिलाभङ्गिपरम्परारूपसोपानैः कृत्वा त्वमनायासेन मन्दरमारुह्य विहर्तुं शक्ष्यसि। तस्मादत्युच्च-मन्दरारोहणाभावशङ्कां परित्यज्य एनं वृणीष्वेति भावः ॥ ५९ ॥

मन्था इति। हे भैमि स मन्था मन्थनकृत् नगः पर्वतो मन्दरस्त्वन्नेत्रयोस्तव चक्षुषोः स्वस्य मन्दरस्यैव भरेण भारेण यन्त्रितानि आक्रान्तानि शीर्षाणि मस्तकानि यस्य तादृशो यः शेषोऽनन्त-

---

अत्र दलमण्डलाग्रेति निरङ्गं रूपकम्, तथाविधेन कृपाणेण अभ्रमण्डलविदारणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिश्चानयोरङ्गाङ्गिभावरूपः सङ्करः ॥ ५७ ॥ अत्र पत्पङ्कजेति, इन्दुमुखि इति च उपमा, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥ ५८ ॥ अत्र कनककेतकगात्रगात्रीति समासगता लुप्तोपमा सोपानादिपदार्थस्य सन्नद्धत्वं प्रति हेतुत्वात् काव्यलिङ्गम्, सज्ज इवास्तीति वाच्योत्प्रेक्षा, वृत्त्यनुप्रासच्छेकानुप्रासौ चेत्येतेषां संसृष्टिः ॥ ५९ ॥

एतेन ते स्तनयुगेन सुरेभकुम्भौ पाणिद्वयेन दिविषद्द्रुमपल्लवानि।
आस्येन स स्मरतु नीरधिमन्थनोत्थं स्वच्छन्दमिन्दुमपि सुन्दरि मन्दराद्रिः ॥६१॥
वेदैर्वचोभिरखिलैः कृतकीर्त्तिरत्ने हेतुं विनैव धृतनित्यपरार्थयत्ने।
मीमांसयेव भगवत्यमृतांशुमौलौ तस्मिन् महीभुजि तयानुमतिर्न भेजे ॥ ६२ ॥

स्तस्य शेषाङ्गैर्मस्तकेतरावयवैर्वेष्टिता या तनुस्तस्या भ्रमं भ्रान्तिं आतनोतु जनयतु। किम्भूतः, भुजगप्रभुर्वासुकिस्तस्य वेष्टेन या घृष्टिर्घर्षणं तया कृतासु लेखासु वलयाकारप्रस्तरभङ्गिपरम्परासु वलन्त्यश्चलन्त्यो धवलाः शुभ्राः निर्झरवारीणां धाराः प्रवाहा यत्र तादृशः। शेषस्य शुभ्रत्वात् वारिधाराणामपि धवलत्वात् लेखासु वलयितत्वाच्च भ्रमो भवितुं युज्यते। शिरसि आक्रान्तः सर्पोऽवशिष्टेनाङ्गेन आक्रमणकर्तुरङ्गानि वेष्टयतीति सर्पस्वभावः। धवलेत्यत्र वहलेति क्वचित् पाठः ॥ ६० ॥

एतेनेति। हे सुन्दरि भैमि स मन्दराद्रिस्ते तव एतेन अतिमनोज्ञतया दृश्यमानेन स्तनयुगेन सुरेभस्य ऐरावतस्य कुम्भौ स्वच्छन्दं यथेच्छं स्मरतु, तथा एतेन ते पाणिद्वयेन दिविषद्द्रुमस्य कल्पवृक्षस्य पल्लवानि स्वच्छन्दं स्मरतु, तथा एतेन ते आस्येन मुखेन इन्दुमपि चन्द्रमपि स्वच्छन्दं स्मरतु किम्भूतमेतत्सर्वं, नीरधिमन्थनोत्थं समुद्रमन्थनादुत्थितं समुद्रमन्थनसमये एतत्सर्वमासीत्, अधुना तु तत्तत्सदृशं तव स्तनयुगादिकं दृष्ट्वा संस्कारोद्बोधात् तत्सर्वं स्मरत्वित्यर्थः। ऐरावतकुम्भादिवदतिसुन्दरं तस्याः स्तनाद्यङ्गमिति भावः। अतएव सुन्दरीति सम्बोधनम् ॥ ६१ ॥

वेदैरिति। तया भैम्या तस्मिन् ज्योतिष्मति महीभुजि राज्ञि अनुमतिः सम्मतिर्न भेजे न कृता। उपमिनोति, मीमांसयेव, यथा पूर्वमीमांसया अमृतांशुमौलौ चन्द्रकलायुतविग्रहवति भगवति ईश्वरे अनुमतिर्न भेजे। देवानां मन्त्रमयत्वेन शरीराभावात् चन्द्रकलालङ्कृतमस्तकः कश्चिदीश्वरो नास्तीति तन्मतम्। यद्वा भगवति जगत्कर्तृत्वे अनुमतिर्न भेजे। जगद्धि अनादित्वस्य ईश्वरः कर्तेति। उक्तञ्च तन्मतं पुष्पदन्तेन,- 'किमीहः किंकायः' इत्यादि। किम्भूते महीभुजि अखिलैर्वेदैर्वेदतुल्यैः सत्यैर्वचोभिः कृत्वा कृता कीर्तिर्यशो यैस्तेषां मध्ये रत्नमिवेति तादृशे सत्यवादिनामग्रगण्ये इत्यर्थः। तथा हेतुं कारणं विनैव धृतो नित्यं प्रतिदिनं परार्थे परकार्ये यत्नो येन तादृशे, स्वोपकारमनपेक्ष्यैव विहितपरोपकारे इत्यर्थः। किम्भूते ईश्वरे, अखिलैर्वेदरूपैर्वचोभिः कृतकीर्तिरत्न कृतकीर्त्तनोत्कर्षे सकलवेदबोधिते इत्यर्थः। तथा हेतुं विनैव धृत-

---

"अत्र कविसम्मतसादृश्यमूलभ्रान्तिवर्णनाद् भ्रान्तिमदलङ्कारः" जी। तथाविधभ्रान्तिं प्रति भुजगेत्यादिपदार्थस्य कारणत्वात् काव्यलिङ्गम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ६० ॥ "अत्र कविसम्मतसादृश्यमूलस्मृतिनिबन्धनात् स्मरणालङ्कारः" जी। तथा 'स्मरतु' इत्येकया क्रियया सह सुरेभकुम्भादीनां कर्मतयाऽन्वयात्तुल्ययोगिता चेत्यनयोरङ्गाङ्गिभावरूपः सङ्करः, वृत्त्यनुप्रासश्च ॥ ६१ ॥

तस्मादिमां नरपतेरपनीय तन्वीं राजन्यमन्यमथ यान्यजनः स निन्ये।
स्त्रीभावधावितपदामविमृश्य याञ्चा-मर्थी निवर्त्य विधनादिव वित्तवित्तम् ॥६३॥
देवी पवित्रितचतुर्भुजवामभागा वागालपत् पुनरिमां गरिमाभिरामाम्।
अस्यारिनिष्कृपकृपाणसनाथपाणेः पाणिग्रहादनुगृहाण गणं गुणानाम् ॥ ६४ ॥
द्वीपस्य शाल्मल इति प्रथितस्य नाथः पाथोधिना वलयितस्य सुराम्बुनायम्।
तस्मिन् वपुष्मति न विस्मयसे गुणाब्धौ रक्ता तिलप्रसवनासिकि नासि किंवा ६५

नित्यपरार्थयत्ने, परमकारुणिके इत्यर्थः। भगवति अनुमतिर्वेदकर्तृत्वविषये सम्मतिर्न भेजे। वेदस्य नित्यत्वादिति च व्याचक्षते ॥ ६२ ॥

तस्मादिति। अथानन्तरं स यान्यजनो वाहकलोकः स्त्रीभावेन स्त्रीस्वभावेन धावितपदां चालितचरणां गच्छतेति चरणचालनेन ज्ञापयन्तीम् इमां तन्वीं भैमीं तस्मात् ज्योतिष्मतो नरपतेरपनीय आकृष्य अन्यं राजन्यं क्षत्रिय निन्ये प्रापयामास। उपमिनोति,अर्थीव अर्थी याचको यथा अविमृश्य दातुर्निर्द्धनत्वमविवेच्य कृतां याच्ञां विधनाद्दरिद्रान्निवर्त्य आकृष्य वित्तेन धनेन वित्तं ख्यातं,वित्तं प्रसिद्धं वित्तं धनं यस्य तादृशं वा अतिधनिनं निन्ये, तथा किम्भूतां याच्ञां, स्त्रीभावेन स्त्रीलिङ्गतया धावितं शोधितं पदं वाचकसुबन्तं यस्यास्तादृशीम् ॥ ६३ ॥

देवीति। पवित्रितः शोभितश्चतुर्भुजस्य नारायणस्य वामभागो यया तादृशी वाग्रूपा देवी सरस्वती गरिम्णा कुलशीलसौन्दर्य्यादिगौरवेण अभिरामां मनोज्ञाम् इमां भैमीं पुनरालपत् उवाच। किमालपदित्याह,हे भैमि अरिषु शत्रुषु निष्कृपो निर्दयो यः कृपाणः खड्गस्तेन सनाथो युक्तः पाणिर्यस्य तादृशस्य अस्य नृपतेः पाणिग्रहात् परिणयात् स्वीयं गुणानां गणं समूहम् अनुगृहाण। समानगुणगणयुक्तस्यास्य लाभात् स्वीयं गुणगणं सफलयेत्यर्थः ॥ ६४ ॥

द्वीपस्येति। सुरैव मद्यमेव अम्बु जलं यस्य तादृशेन पाथोधिना समुद्रेण वलयितस्य वेष्टितस्य शाल्मल इति नाम्ना प्रथितस्य ख्यातस्य द्वीपस्य नाथः पतिरयम्। तस्मात् हे तिलप्रसवनासिकि तिलकुसुमसमाननासिके भैमि वपुष्मति वपुष्मन्नामके अथ च प्रशस्तशरीरशालिनि अस्मिन् गुणाब्धौ गुणसमुद्रे त्वं किं न विस्मयसे, अहो एतावद्गुणशाली सम्भवतीति विस्मयं न प्राप्नोषि। किंवा अस्मिन् रक्ता अनुरक्ता नासि न भवसि, अपितु अस्मिन् विस्मयोऽनुरागश्च त्वया कर्तुं युज्यते। अथ च वपुष्मति मूर्त्तिमति अब्धौ विस्मयो युज्यते ॥ ६५ ॥

---

अत्र श्लेषानुप्राणिता श्रौती पूर्णोपमा, रत्ने यत्ने इति अन्त्यानुप्रासः, भुजि भजे इति छेकानुप्रासश्चेति संसृष्टिः ॥ ६२ ॥ 'भावो लीला क्रिया चेष्टा भूत्यभिप्रायजन्तुषु'। वै। वित्तवित्तमिति,—'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। विन्देर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः' इति भाष्यात् वित्तो भोगप्रत्यययोरिति पाणिनिसूत्राच्च धनार्थे भोगार्थे च साधु। अत्र श्लेषानुप्राणिता श्रौती पूर्णोपमा, छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥६३॥ अत्र वृत्त्यनुप्रासच्छेकानुप्रासौ संसृष्टौ ॥ ६४ ॥ अत्र गुणाब्धौ इति पदार्थस्य विस्मयं प्रति

विप्रे धयत्युदधिमेकतमं त्रसत्सु यस्तेषु पञ्चसु बिभाय न सीधुसिन्धुः।
तस्मिन्ननेन च निजालिजनेन च त्वं सार्द्धं विधेहि मधुरा मधुपानकेलीः॥ ६६॥
द्रोणः स तत्र वितरिष्यति भाग्यलभ्य-सौभाग्यकार्मणमयीमुपदां गिरिस्ते।
तद्द्वीपदीप इव दीप्तिभिरोषधीनां चूडामिलज्जलदकज्जलदर्शनीयः॥ ६७॥
तद्द्वीपलक्ष्मपृथुशाल्मलितूलजालैः क्षौणीतले मृदुनि मारुतचारुकीर्णैः।
लीलाविहारसमये चरणार्पणानि यान्यानि ते सरससारसकोषमृद्वि॥ ६८॥

विप्रे इति। हे भैमि यः सीधुसिन्धुः सुरासमुद्रः विप्रे अगस्त्यमुनौ एकतमम् उदधिं जलसमुद्रं धयति पिबति सति तेषु पञ्चसु क्षीरोदादिषु त्रसत्सु अस्मानप्ययं पास्यतीति मत्वा बिभ्यत्सु सत्सु च न बिभाय, सुरामयत्वेन ब्राह्मणस्यापेयत्वात् भयं न प्राप्तवान्। तस्मिन् अक्षये सीधुसिन्धौ अनेन राज्ञा च निजस्य आलिजनेन सखीजनेन च सार्द्धं सह त्वं मधुरा रम्या मधुपानकेलीः सुरापानक्रीडा विधेहि कुरु। एतस्मिन् वृते मधुपानक्रीड़ा तव सुलभा भविष्यतीति भावः॥ ६६॥

द्रोण इति। हे भैमि तत्र शाल्मलद्वीपे स प्रसिद्धो द्रोणो द्रोणनामा गिरिः पर्वतस्ते तुभ्यं भाग्येन शुभादृष्टेन लभ्यं प्राप्यं यत्सौभाग्यजनकं कार्मणं वशीकरणादिसाधनं मन्त्रौषधादिकं प्रकृते स्वामिवशीकरणसाधनमौषधविशेषस्तन्मयीम् उपदां तद्रूपमुपढौकनं वितरिष्यति दास्यति। तथाविधानि औषधानि तत्र बहूनि विद्यन्ते इति विशेषणेनाह, किम्भूतः ओषधीनां वशीकरण्यादीनां दीप्तिभिः कृत्वा तस्य द्वीपस्य दीप इव स्थितः। ओषध्यो हि पर्वते रात्रौ ज्वलन्तीति प्रसिद्धिः। द्वीपसाधर्म्यमाह, पुनः किम्भूतः चूडायां शिखरे मिलन्तः संलग्ना जलदा मेघा एव कज्जलं तेन दर्शनीयः सुन्दरः। दीपोऽपि चूडास्थितकज्जलेन दर्शनीयो भवति। द्रोणपर्वते हि बहुविधमौषधं वर्त्तते, येन च पतिर्वशीभवति। तस्मादसौ औषधेन वशीकृतस्त्वय्येवानुरक्तो भविष्यति, तदेनं वृणीष्वेति भावः। 'कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च' मे। 'उपदा तूपढौकनम्' ब॥ ६७॥

तद्द्वीपेति। हे सरस नूतनं यत्सारसं पद्मं तस्य कोषो मुकुलं संघातो वा तद्वन्मृद्वि कोमलाङ्गि भैमि मारुतेन वायुना चारु सन्निवेशविशेषेण मनोहरं निविडं वा यथा स्यात्तथा कीर्णैर्विक्षिप्तैः पातितैः तस्य द्वीपस्य लक्ष्म चिह्नभूतो यः पृथुर्महान् शाल्मलिर्वृक्षस्तस्य तूलजालैः कार्पाससमूहैः कृत्वा मृदुनि कोमले क्षौणीतले ते तव लीलाविहारसमये सविलासगमनकाले चरणार्पणानि पादवि-

---

हेतुत्वात् काव्यलिङ्गं, नासि नासि इति यमकमलङ्कारः॥ ६५॥ 'मैरेयमासवः शीधुः' अ, अत्र भयकारणे सत्यपि भयाभावात् विशेषोक्तिः, शीधुपदार्थस्य भयाभावे हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गम्, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः॥ ६६॥ अत्र "कार्मणमयीमुपदाम् इति परिणामालङ्कारः, आरोप्यमाणोपदायास्तद्विषयक.मणाकारपरिणामेन प्रकृतप्रभुचित्तावर्जनोपयोगित्वात्, तस्य च दीप इवेत्युत्प्रेक्षया संसृष्टिः। तस्याश्च 'जलदकज्जल' इति रूपकेण सङ्करः।" जी॥ ६७॥

एतद्गुणश्रवणकालविजृम्भमाण-तल्लोचनाञ्चलनिकोचनसूचितस्य ।
भावस्य चक्रुरुचितं शिविकाभृतस्ते तामेकतः क्षितिपतेरपरं नयन्तः ॥ ६९ ॥
तां भारती पुनरभाषत नन्वमुष्मिन् काश्मीरपङ्कमिषलग्नजनानुरागे ।
श्रीखण्डलेपमयदिग्जयकीर्तिराजि-राजद्भुजे भज महीभुजि भैमि भावम् ॥ ७० ॥
द्वीपं द्विपाधिपतिमन्दपदे प्रशास्ति प्लक्षोपलक्षितमयं क्षितिपस्तदस्य ।
मेधातिथेस्त्वमुरसि स्फुर सृष्टसौख्या साक्षाद्यथैव कमला यमलार्जुनारेः ॥ ७१ ॥

न्यासा योग्यानि उचितानि भविष्यन्तीति शेषः। कोमलचरणस्यार्पणं हि कोमलवस्तुन्येव युक्तम् ॥ ६८ ॥

एतदिति। ते शिविकाभृतो यानवाहका एतस्य राज्ञो गुणश्रवणकाले विजृम्भमाणं जायमानं यत् तस्या भैम्या लोचनाञ्चलस्य नयनप्रान्तस्य निकोचनं स्तम्भस्थदर्पणादौ दृष्टं सङ्कोचनं तेन सूचितस्य बोधितस्य भावस्य भैम्या अभिप्रायस्य उचितं योग्यं चक्रुः। किम्भूता, यतस्तां भैमीम् एकत एकस्मादस्मात् क्षितिपतेरपरं क्षितिपतिं नयन्तः प्रापयन्तः इतोऽन्यत्र गच्छामीति तस्या योऽभिप्रायस्तत्फलमेवेदमिति भावः ॥ ६९ ॥

तामिति। भारती सरस्वती तां भैमीं पुनरभाषत उवाच। किमभाषतेत्याह, ननु हे भैमि अमुष्मिन् महीभुजि राज्ञि भावम् अनुरागं भज प्राप्नुहि। किम्भूते काश्मीरपङ्कस्य कुङ्कुमविलेपनस्य मिषेण व्याजेन वक्षसि लग्नो जनानामनुरागो यस्मिन् तादृशे, तथा श्रीखण्डलेपमयी चन्दनविलेपनरूपा या दिग्विजयकीर्त्तिराजिर्दिग्विजयजनितयशःपरम्परा तया राजन्तौ शोभमानौ भुजौ यस्य तादृशे। अयमतिजनानुरक्तो दिग्विजयी यशस्वी च। तदस्मिन्ननुरक्ता भवेत्यर्थः। अनुरागस्य लौहित्येन कीर्तेश्च शुभ्रत्वेन कविसमयख्यातत्वात् कुङ्कुमत्वं, चन्दनत्वञ्च युक्तम् ॥७०॥

द्वीपमिति। हे द्विपाधिपतिवत् मत्तमातङ्गवत् मन्दं मन्दगमनं पदं चरणं यस्यास्तादृशि अलसगमने भैमि अयं क्षितिपो राजा प्लक्षोपलक्षितं प्लक्षनामकवृक्षेण चिह्नितं द्वीपं प्रशास्ति पालयति। तत्तस्मात् त्वं मेधातिथेर्मेधातिथिनाम्नः अथ च धारणावद्बुद्धियुक्तस्य अस्य क्षितिपस्य उरसि वक्षसि साक्षात् प्रत्यक्षीभूय सृष्टसौख्या आलिङ्गनेन जनितसुखा सती तथैव स्फुर शोभस्व, यथैव कमला लक्ष्मीर्यमलार्जुनारेः कृष्णस्य उरसि साक्षात् सृष्टसौख्या सती स्फुरति। साक्षादित्यनेन सङ्कल्पवशात् पूर्वमसाक्षात् स्फुरिता, अधुना तु वरणेन साक्षात् स्फुरति सूचितम् ॥ ७१ ॥

---

"अत्रानुरूपयोः योगोक्तेः समालङ्कारः" जी ॥ ६८ ॥ अत्र वृत्त्यनुप्रासोऽलङ्कारः ॥ ६९ ॥ अत्र काश्मीरपङ्कमिषेति प्रतीयमाना सापह्नवोत्प्रेक्षा, श्रीखण्डेत्यादौ निरङ्गं रूपकम्, भुजे भुजि इति छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥ ७० ॥ अत्र द्वीपाधिपतिमन्दपदे इति समासगता लुप्तोपमा, साक्षात् यथैव कमलेति आर्थी पूर्णा उपमा, छेकानुप्रासश्चेति संसृष्टिः ॥ ७१ ॥

प्लक्षे महीयसि महीवलयातपत्रे तत्रेक्षिते खलु तवापि मतिर्भवित्री।
खेलां विधातुमधिशाखविलम्बिदोला-लोलाखिलाङ्गजनताजनितानुरागे ॥ ७२ ॥
पीत्वा तवाधरसुधां वसुधासुधांशु-र्न श्रद्दधातु रसमिक्षुरसोदवाराम्।
द्वीपस्य तस्य दधतां परिवेशवेशं सोऽयं चमत्कृतचकोरचलाचलाक्षि ॥ ७३ ॥
सूरं न सौर इव नेन्दुमवीक्ष्य तस्मि-न्नश्नाति यस्तदितरत्रिदशानभिज्ञः।
तस्यैन्दवस्य भवदास्यनिरीक्षयैव दर्शेऽश्नतोऽपि न भवत्ववकीर्णिभावः ॥७४ ॥

प्लक्ष इति। हे भैमि तत्र द्वीपे महीवलयस्य भूमण्डलस्य आतपत्रे छत्ररूपे अतिदीर्घलम्बमान-निविडशाखासमूहे महीयसि अतिबृहति प्लक्षे प्लक्षवृक्षे ईक्षिते दृष्टे सति खलु सम्भावनायां तवापि तत्र खेलां दोलाक्रीडां विधातुं कर्तुं मतिर्बुद्धिर्भवित्री भविष्यति। किम्भूते,--अधिशाखं शाखासु विलम्बिन्यो लम्बमाना या दोला हिन्दोलास्ताभिर्लोलानि चञ्चलानि अखिलानि समस्तानि अङ्गानि यस्यास्तादृशी या जनता जनसमूहस्तया जनितोऽनुरागः क्रीडाभिलाषो यस्मिन्, जनतया कृत्वा येन वा तादृशे। खेलायमानान् जनान् दृष्ट्वा तवापि तत्र खेलानुरागो भविष्यतीत्यर्थः ॥ ७२ ॥

पीत्वेति। हे चमत्कृतचकोरचलाचलाक्षि चमत्कृतश्चकितो यश्चकोरस्तद्वच्चलाचले चञ्चले अक्षिणी यस्या हे तादृशि भैमि, सोऽयं वसुधासुधांशुः पृथिवीचन्द्रो राजा मेधातिथिस्तव अधरसुधां ओष्ठामृतं पीत्वा तस्य द्वीपस्य परिवेशवेशं वेष्टनाकारं दधतां इक्षुरसोदवाराम् इक्षुरसोदसमुद्र-जलानां रसम् आस्वादं न श्रद्दधातु न बहु मन्यतां, तदपेक्षया त्वदधरामृतस्याधिकमधुरत्वात्। अन्यत्र चकोरश्चन्द्रस्यामृतं पिबति, अत्र तु चन्द्र एव चकोराक्ष्यास्तवाधरामृतं पिबतीत्याश्चर्यमिति चमत्कृतेत्यनेन सूचितम् ॥ ७३ ॥

सूरमिति। सौर इव सूर्यभक्तो यथा सूरं सूर्यम् अवीक्ष्य नाश्नाति, तथा तस्मिन् द्वीपे इतर-त्रिदशानभिज्ञश्चन्द्रेतरदेवानुपासकश्चन्द्रमात्रोपासको यो ना पुरुषः इन्दुं चन्द्रम् अवीक्ष्य अदृष्ट्वा नाश्नाति न भुङ्क्ते। तस्यैन्दवस्य चन्द्रभक्तस्य दर्शे अमावास्यायां चन्द्रमदृष्ट्वा अश्नतोऽपि भुञ्जा-नस्यापि भवत्यास्तव आस्यस्य मुखस्य निरीक्षयैव दर्शनेनैव अवकीर्णिभावः क्षतव्रतत्वं न भवतु चन्द्रतुल्यं भवत्या मुखं दृष्ट्वैव भोजनात् चन्द्रदर्शनपूर्वकभोजनरूपव्रतभङ्गदोषो न भवत्वित्यर्थः। प्लक्षद्वीपे सर्व एव लोकाश्चन्द्रमेवोपासते। सूर्यदर्शनपूर्वकमेव भोजनं सौराणां प्रसिद्धमित्युपमा-नम्। 'अवकीर्णी क्षतव्रतः' अ ॥ ७४ ॥

अत्र 'महीवलयातपत्र' इति रूपकमलङ्कारः, महीमहीति यमकेन वृत्त्यनुप्रासेन च संसृज्यते ॥ ७२ ॥ अत्र चमत्कृतचकोरचलाचलाक्षीति समासगता लुप्तोपमा, इक्षुरसादपि अधर-सुधायाः श्रेष्ठताप्रतिपादनाद् व्यतिरेकालङ्कारः, वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ७३ ॥ अत्र 'सौर इव' इत्यत्र श्रौती उपमा। "व्रतभङ्गदोषाभावेनैव दमयन्तीमुखे इन्दुभ्रमाद् भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनालङ्कारध्वनिः" जी ॥ ७४ ॥

उत्सर्पिणी न किल तस्य तरङ्गिणी या त्वन्नेत्रयोरहह तत्र विपाशि जाता।
नीराजनाय नवनीरजराजिरास्ता-मत्राञ्जसानुरज राजनि राजमाने ॥ ७५ ॥
एतद्यशोभिरखिलेऽम्बुनि सन्तु हंसा दुग्धीकृते तदुभयव्यतिभेदमुग्धाः।
क्षीरे पयस्यपि पदे द्वयवाच्चिभूयं नानार्थकोषविषयोऽद्य मृषोद्यमस्तु ॥ ७६ ॥
ब्रूमः किमस्य नलमप्यलमाजुहूषोः कीर्त्तीः स चैष च समादिशतः स्म कर्त्तुम्।
स्वद्वीपसीमसरिदीश्वरपूरपार-वेलाबलाक्रमणविक्रममक्रमेण ॥ ७७ ॥

उत्सर्पिणीति। किल प्रसिद्धौ तस्य द्वीपस्य या तरङ्गिणी विपाड्नाम्नी नदी नोत्सर्पिणी उद्धतप्रवाहा न। अतएव अहहाश्चर्यं तत्र तस्यां विपाशि विपाशायां नद्यां जाता नवा तत्काल-विकसिता नीरजानां पद्मानां राजिः श्रेणी त्वन्नेत्रयोस्तव चक्षुषोर्नीराजनाय निर्मञ्छनाय सुखातिशयजननाय आस्तां भवतु। तस्मात् अत्रास्मिन् राजमाने शोभमाने राजनि मेधातिथौ त्वं अञ्जसा अकपटम् अनुरज अनुरक्ता भव। विपाशानद्याम् उद्धतप्रवाहाभावादेव सदा कमलानि जायन्ते, ततश्च तव नयननीराजनमविच्छिन्नं भविष्यतीति नोत्सर्पिणीत्यनेन सूचितम्। द्वीपानधिकृत्य विष्णुपुराणं 'अवसर्पिणी नदी तेषु न चैवोत्सर्पिणी द्विज' इति। 'विपाशा तु विपाट् स्त्रियाम्' अ। अनुरजेति 'नोऌक् सनूज स्वनूज रनूज-दनूशामि'ति नोऌक् ॥ ७५ ॥

एतदिति। हे भैमि एतस्य राज्ञो यशोभिः त्वद्वरणजनितकीर्तिभिरखिले सकले अम्बुनि जले दुग्धीकृते सति हंसास्तदुभयस्य अम्बुदुग्धद्वयस्य व्यतिभेदे परस्परेण भिन्नत्वे मुग्धा मूढाः सन्तु भवन्तु। हंसा हि परस्परमिश्रितयोरेव दुग्धजलयोर्व्यतिभेदं जानन्ति, प्रकृते तु सर्वं जलं यशोभिर्दुग्धमेव जातं, तस्मात् कृत्रिमदुग्धतात्त्विकदुग्धयोः कथं भेदं ज्ञातुं शक्नुवन्तीत्यर्थः। तथा क्षीरे पदे पयस्यपि पयसि पदे च नानार्थकोषस्य मेदिन्यादेर्विषयः प्रतिपाद्यं द्वयवाचिभूयं जलदुग्धोभयवाचकत्वम् अद्य संप्रति एतद्यशोभिरखिलेऽम्बुनि दुग्धीकृते सति मृषोद्यं मिथ्यावाच्यम् अस्तु भवतु अस्य त्वद्वरणयशसा क्षीरनीरयोरेकत्वे कृते नीररूपैकतराभिधेयाभावात् कोषोक्तं क्षीरपयःपदयोर्द्व्यर्थवाचित्वमयुक्तमस्त्वित्यर्थः। तस्मादेनं वृणीष्वेति भावः। 'क्षीरं दुग्धे जले' 'पयः स्यात् क्षीरनीरयोः' मे ॥ ७६ ॥

ब्रूम इति। हे भैमि सर्वोत्कृष्टं नलमपि अलमत्यर्थम् आजुहूषोः स्पर्द्धमानस्यास्य मेधातिथेर्वयं किं ब्रूमश्चरित्रादिकं किं कथयामः। यतोऽयं नलमपि स्पर्द्धते, अतोऽस्य चरित्रादिकं वाक्पथातीतमित्यर्थः। स्पर्द्धामेवाह स नलश्च एष मेधातिथिश्च उभौ कीर्तीः स्वस्वयशांसि अक्रमेण युगपदेव स्वद्वीपयोर्जम्बुप्लक्षयोः सीमा मर्यादारूपो यः सरिदीश्वरो लवणसमुद्रस्तस्य यः पूरः प्रवाह-

अत्र अनुरागं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ७५ ॥ "अत्र अखिले अम्बुनि दुग्धीकृते इति सामान्यालङ्कारः, तदुपजीवनेन हंसानां क्षीरनीरविवेकसम्बन्धेऽपि, क्षीरपयःपदयोरप्यर्थद्वयसम्बन्धेऽपि तदसम्बन्धरूपातिशयोक्तिद्वयोत्थापनात् सङ्करः" जी ॥ ७६ ॥

अम्भोजगर्भरुचिराथ विदर्भसुभ्रू-स्तं गर्भरूपमपि रूपजितत्रिलोकम् ।
वैराग्यरूक्षमवलोकयति स्म भूपं दृष्टिः पुरत्रयरिपोरिव पुष्पचापम् ॥ ७८ ॥
ते तां ततोऽपि चकृषुर्जगदेकदीपा-दंशस्थलस्थितसमानविमानदण्डाः ।
चण्डद्युतेरुदयिनीमिव चन्द्रलेखां सोत्कण्ठकैरववनीसुकृतप्ररोहाः ॥ ७९ ॥

स्तस्य पारे या वेला तीरं तस्या बलेन यत् आक्रमणं तत्र विक्रमं पराक्रमं कर्तुं समादिशतः स्म आदिष्टवन्तौ । द्वयोरपि कीर्तयः समुद्रपारपर्यन्तं गता इत्यर्थः । नलस्य कीर्तयो यथा लवण-समुद्रस्य परपारपर्यन्तं गतास्तथा एतस्यापि एतत्पारपर्यन्तमागता इति तेनास्य स्पर्द्धा । तस्मान्नल-समानधर्माणमेनं वृणीष्वेति भावः । अथ च नलस्पर्द्धया तस्मान्न्यूनत्वमपि सूचितम् । आह्वातु-मिच्छति नत्वाहूयत इति सन्प्रत्ययस्यापि व्यञ्जकत्वं बोध्यम् ॥ ७७ ॥

अम्भोजेति । अम्भोजगर्भवत्पद्ममध्यवत् रुचिरा मनोज्ञा अम्भोजगर्भस्य रुचिं दीप्तिम् राति आदत्ते इति तादृशीति वा अतिगौराङ्गी विदर्भसुभ्रूर्भैमी अथानन्तरं रूपेण जितास्त्रिलोका येन तादृशं गर्भ-रूपमपि युवानमपि तं भूपं मेधातिथिं वैराग्येण अननुरागेण रूक्षं परुषं यथा स्यात्तथा अवलोकय-यति स्म दृष्टवती । स्वप्रियनलस्पर्द्धिनं ज्ञात्वा क्रोधवशात्तं परुषेणेक्षणेन ददर्शेत्यर्थः । उपमिनोति, पुरत्रयरिपोः शिवस्य दृष्टिश्चक्षुः पुष्पचापं काममिव । यथा अम्भोजगर्भरुचिरा क्रोधवशादा-रक्ता शिवस्य दृष्टिः रूपजितत्रिलोकं युवानं कामं वैराग्यरूक्षम् अवलोकयति स्म । अतिसुन्दरेऽपि तस्मिन्ननुरक्ता नाभूदिति भावः । 'गर्भरूपः शिशौ यूनि' ब ॥ ७८ ॥

त इति । अंशस्थलेषु स्कन्धदेशेषु स्थितः समानस्तुल्यो निम्नोन्नतत्वादिरहितो विमानदण्डो येषां तादृशास्ते यानवाहकास्तेजस्वित्वाज्जगदेकदीपाद्द्वितीयलोकप्रदीपरूपादपि ततो मेधातिथेः सका-शात् तां भैमीं चकृषुः अन्यं प्रापयामासुः । उपमिनोति,सोत्कण्ठा उत्सुका या कैरववनी कुमुद-वनी तस्याः सुकृतप्ररोहाः पुण्याङ्कुराश्चण्डद्युतेः सूर्यात् उदयिनीम् उदयोन्मुखां चन्द्रलेखामिव । यथा सोत्कण्ठकैरववनीसुकृतप्ररोहा दर्शे सूर्ये प्रविष्टां चन्द्रलेखां शुक्लपक्षे प्रतिपदादिक्रमेण सूर्यात् आकर्षन्ति तथेत्यर्थः । प्रकाशकत्वात् सूर्योऽपि जगदेकदीपरूपः, भैमी च उदयिनी सम्पत्ति-युक्ता ॥ ७९ ॥

---

अत्र चरित्रवर्णनासमर्थत्वं प्रति उत्तरवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारश्छेकानुप्रासो वृत्त्यनुप्रासश्चेत्येतेषां संसृष्टिः ॥ ७७ ॥ अत्र पुरत्रयरिपोरिवेति श्रौती पूर्णोपमा, अम्भोज-गर्भरुचिरेति समासगता लुप्तोपमा, पुररिपोः इति वृत्त्यनुप्रासः, परत्र च च्छेकानुप्रास इति संसृष्टिः ॥ ७८ ॥ अत्र श्रौती उपमा,—"सूर्यतेजस एव चन्द्ररूपेण कुमुदानन्दकरत्वे वराहमिहिरः—'यत्तेजः पितृधाम्नि शीतमहसः पाथोमये मण्डले संक्रान्तं कुमुदाकरस्य कुरुते कांश्चिद्विकाशश्रियम्' इति" जी । जगदेकदीपाद् इति रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ ७९ ॥

भूपेषु तेषु न मनागपि दत्तचित्ता विस्मेरया वचनदेवतया तयाथ।
वाणीगुणोदयतृणीकृतपाणिवीणा-निक्काणया पुनरभाणि मृगेक्षणा सा ॥ ८० ॥
यन्मौलिरत्नमुदितासि स एव जम्बु-द्वीपस्त्वदर्थमिलितैर्युवभिर्विभाति।
दोलायितेन बहुना भवभीतिकम्प्रः कन्दर्पलोक इव खात् पतितस्त्रुटित्वा ॥ ८१ ॥
विष्वग्वृतः परिजनैरयमन्तरीपै-स्तेषामधीश इव राजति राजपुत्रि।
हेमाद्रिणा कनकदण्डमयातपत्रः कैलासरश्मिचयचामरचक्रचिह्नः ॥ ८२ ॥

भूपेष्विति। अथानन्तरं तया वचनदेवतया सरस्वत्या सा मृगेक्षणा भैमी पुनरभाणि वक्ष्यमाणमुक्ता। किम्भूता सा, तेषु भूपेषु द्वीपाधिपतिषु मनागपि ईषदपि न दत्तचित्ता न जातानुरागा, किम्भूतया तया, अतएव विस्मेरया विस्मयवत्या सहास्यया वा, पुनः किम्भूतया, वाण्याः स्ववचनस्य गुणोदयेन माधुर्यादिगुणसम्बन्धेन तृणीकृतो जितः पाणिवीणायाः हस्तस्थितविपञ्च्या निक्काणो ध्वनिर्यया तथाभूतया ॥ ८० ॥

यन्मौलीति। हे भैमि यस्य मौलिरत्नं शिरोरत्नं भूत्वा त्वम् उदितासि उत्पन्नासि, स एष जम्बुद्वीपस्त्वदर्थं मिलितैरेकत्रावस्थितैर्युवभिः कृत्वा विभाति विशेषेण शोभते। उत्प्रेक्षते, नायं जम्बुद्वीपः किन्तु भवान्महादेवात् या भीतिर्भयं तया कम्प्रः कम्पनशीलः अतएव बहुना दोलायितेन दोलनेन कृत्वा त्रुटित्वा विच्छिद्य खात् आकाशात्पतितः कन्दर्पलोक इव कामलोक इव अत्रस्थाः सर्वेऽपि युवानः कन्दर्पतुल्या इति भावः। अन्यदपि कम्प्रं वस्तु बहुना दोलनेन त्रुटित्वा गगनात्पतति ॥ ८१ ॥

विष्वगिति। हे राजपुत्रि भैमि अयं जम्बुद्वीपस्तेषां शाकद्वीपादीनाम् अधीश इव राजेव राजति शोभते। राजचिह्नमेवाह — किम्भूतः, परिजनैः सेवकरूपैरन्तरीपैः सिंहलद्वीपादिभिर्विष्वक् चतुर्दिक्षु वृतः वेष्टितः, तथा हेमाद्रिणा सुमेरुणा कनकदण्डमयं स्वर्णदण्डमयमातपत्रं वृहच्छत्रं यस्य सः, तथा कैलासस्य कैलासपर्वतस्य रश्मिचयोऽतिधवलकिरणसमूह एव चामरचक्रचिह्नं चामरसमूहरूपं राजचिह्नं यस्य तादृशः। अन्योऽपि राजा परिजनैः सेव्यते, स्वर्णदण्डातपत्रश्चेतचामरचक्रचिह्नितश्च भवति ॥ ८२ ॥

अत्र मृगेक्षणेति समासगता लुप्तोपमा, विस्मेरत्वं प्रति प्रथमपादार्थस्य हेतुतया काव्यलिङ्गं, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥ ८० ॥ अत्र कन्दर्पलोक इवेति उत्प्रेक्षा, यन्मौलिरत्नम् इति रूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ८१ ॥ अत्र अधीश इव राजतीति वाच्योत्प्रेक्षा, अन्तरीपेषु परिजनरूपणं, हेमाद्रिणा कनकदण्डमयातपत्रः इत्यत्र मेरोः शिरसि विशालत्वाद् अन्यत्र तनुत्वात् एकस्यैव दण्डत्वेन आतपत्रत्वेन च रूपणं, कैलासरश्मिचये चामरचक्ररूपणम्' इति रूपकत्रयञ्चेत्यङ्गाङ्गिभावेन सङ्करः। छेकानुप्रासवृत्त्यनुप्राससंसृष्टिश्चेति ॥ ८२ ॥

एतत्तरुस्तरुणि राजति राजजम्बूः स्थूलोपलानिव फलानि विमृष्य यस्याः।
सिद्धस्त्रियः प्रियमिदं निगदन्ति दन्ति-यूथानि केन तरुमारुरुहुः पथेति ॥ ८३ ॥
जाम्बूनदं जगति विश्रुतिमेति मृत्स्ना कृत्स्नापि सा तव रुचा विजितश्रि यस्याः।
तज्जाम्बवद्रवभवास्य सुधाविधाम्बु-र्जम्बूः सरिद्वहति सीमनि कम्बुकण्ठि ॥८४॥
अस्मिन् जयन्ति जगतीपतयः सहस्र-मस्त्राश्रुसान्द्ररिपुतद्वनितेषु तेषु।
रम्भोरु चारु कतिचित्तव चित्तबन्धि-रूपान्निरूपय मुदाहमुदाहरामि ॥ ८५ ॥

एतदिति। हे तरुणि युवति भैमि एतद्द्वीपस्य तरुश्चिह्नरूपो वृक्षो राजजम्बूर्जम्बूश्रेष्ठो राजति शोभते। यस्या राजजम्ब्वाः स्थूलोपलानिव बृहत्प्रस्तरानिव फलानि विमृष्य दृष्ट्वा सिद्धस्त्रियः प्रियं स्वामिनं इदं निगदन्ति पृच्छन्ति। इदं किं हे प्रिय दन्तियूथानि हस्तिसमूहाः केन पथा तरुं जम्बूवृक्षम् आरुरुहुरिति। हस्तितुल्यानि यस्याः फलानीति भावः। राजजम्बूरिति जम्बूनां राजेति राजदन्तादित्वात् राजशब्दस्य प्राग्भावः ॥ ८३ ॥

जाम्बूनदमिति। हे कम्बुकण्ठि रेखात्रयाञ्चितग्रीवे भैमि यस्याः सा प्रसिद्धा कृत्स्नापि समस्तापि मृत्स्ना प्रशस्ता मृत्तिका जगति लोके तव रुचा विजितश्रि जितशोभं जम्बूनद्या इदं जाम्बूनदं सुवर्णं भूत्वा विश्रुतिं प्रसिद्धिम् एति प्राप्नोति। सा जम्बूर्जम्बूनाम्नी सरिन्नदी अस्य द्वीपस्य सीमनि वहति। किम्भूता, तस्या जम्ब्वा जाम्बवानि फलानि तेषां यो द्रवो रसस्तस्माद्भवो यस्या स्तादृशी, तथा सुधाविधं सुधातुल्यम् अम्बु जलं यस्यास्तादृशी। यन्मृत्तिका जाम्बूनदाख्यमुत्तमं सुवर्णं भवति, सा जम्बूनदी अत्रैव द्वीपे वर्त्तत इत्यर्थः। तथाच विष्णुपुराणं 'तीरभूस्तत्र संप्राप्य शुद्ध-वातविशोषिता जाम्बूनदाख्यं भवति सुवर्णं देवभूषणम्' इति। अत्र पूर्वार्द्धे यच्छब्दश्रवणादुत्तरार्द्धे तच्छब्दस्याथत्वम्। केचित्तु मृत्स्नाविशेषणीभूतं सेति उत्तरार्द्धे योजयन्ति, तन्न समीचीनम् अत्यन्तव्यवहितयोजनारूपक्लिष्टत्वदोषापातात्। 'रेखात्रयाञ्चितग्रीवा कम्बुग्रीवेति कथ्यते' इति हलायुधः ॥ ८४ ॥

अस्मिन्निति। हे रम्भोरु भैमि अस्मिन् जम्बू द्वीपे सहस्रम् अनेके जगतीपतयो राजानो जयन्ति सर्वोत्कर्षेण वर्तन्ते। अस्राश्रुभ्यां रुधिरनयनजलाभ्यां यथाक्रमं सान्द्रा अतिशयं सिक्ता रिपवः शत्रवस्तद्वनितास्तेषां पत्न्यश्च यैस्तादृशेषु अतिशूरेषु तेषु जगतीपतिषु मध्ये चित्तबन्धिरूपान् मनोहारिसौन्दर्यान् कतिचित्कांश्चित् जगतीपतीन् अहं मुदा हर्षेण तव उदाहरामि वर्णयामि। त्वं चारु यथा स्यात्तथा निरूपय अवधेहि, मुदा निरूपयेति वा। चित्तबन्धिरूपमिति पाठे क्रिया-विशेषणम् ॥ ८५ ॥

---

"अत्र जम्बूफलेषु दन्तियूथभ्रमोक्त्या भ्रान्तिमदलङ्कारः" जी। स्थूलोपलानिवेति उपमा, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ८३ ॥ 'जम्बूः स्त्री जम्बु जाम्बवम्' 'मृण्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका' अ। अत्र रुचा विजितश्रीति, सुधाविधाम्बु इति च उपमा, वृत्त्यनुप्रासच्छेकानुप्रासाभ्यां संसृज्यते ॥ ८४ ॥ अत्र 'मुदाह मुदाह' इति यमकं वृत्त्यनुप्रासश्रुत्यनुप्रासाभ्यां सं-

प्रत्यर्थियौवतवतंसतमालमालोन्मीलत्तमःप्रकरतस्करशौर्य्यसूर्य्ये ।
अस्मिन्नवन्तिनृपतौ गुणसन्ततीनां विश्रान्तिधामनि मनो दमयन्ति किन्ते॥ ८६ ॥
तत्रानुतीरवनवासितपस्विविप्रा सिप्रा तवोर्मिभुजया जलकेलिकाले ।
आलिङ्गनानि दधती भविता वयस्या हास्यानुबन्धिरमणीयसरोरुहास्या ॥ ८७ ॥
अस्याधिशय्य पुरमुज्जयिनीं भवानी जागर्त्ति या सुभगयौवतमौलिमाला ।
पत्यार्द्धकायघटनाय मृगाक्षि तस्याः शिष्या भविष्यसि चिरं वरिवस्ययापि ॥८८॥

प्रत्यर्थीति । हे दमयन्ति गुणसन्ततीनां सौन्दर्यादिगुणसमूहानां विश्रान्तिधामनि विश्रामस्थाने अस्मिन् अवन्तिदेशस्य नृपतौ ते तव मनः किं वर्त्तत इति शेषः । किम्भूते,—प्रत्यर्थिनां शत्रूणां यत् यौवतं युवतिसमूहस्तस्य वतंसः कर्णभूषणभूता या तमालमाला तमालदलसमूहः सैव उन्मीलताम् उदयतां तमसाम् अन्धकाराणां प्रकरः समूहस्तस्य तस्करश्चौरो निरासकः शौर्यसूर्यो वीरत्वरूपसूर्यो यस्य तादृशे । सूर्यो यथा उन्मीलत्तमःप्रकरम् अपनयति, तथास्य शौर्यमपि शत्रुपत्नीनां पतिविनाशनेन वैधव्यकरणात् कर्णभूषणतमालमालामपनयति । अतिवीरे इत्यर्थः। योषितो हि प्रायेण वीरानुरागिण्यो भवन्ति, तस्मादस्मिंस्त्वमनुरक्तासीति मे प्रतिभाति, तद्युक्तमिति भावः ॥ ८६ ॥

तत्रेति। हे भैमि तत्रावन्त्याम् अनुतीरं तीरसमीपे वने वसन्तीत्येवंभूतास्तपस्विविप्रास्तापसद्विजा यस्यास्तादृशी तपस्विनामधिष्ठानेन पवित्रतीरेत्यर्थः, सिप्रा सिप्रानाम्नी नदी तव वयस्या सखी भविता भविष्यति । सखीसाधर्म्यमेवाह, किम्भूता—जलकेलिकाले जलक्रीडासमये ऊर्म्मिभुजया तरङ्गरूपबाहुना तव आलिङ्गनानि दधती कुर्वती, तथा हास्यस्य विकाशस्यानुबन्धः सम्बन्धोऽस्यास्तीति तादृशं प्रफुल्लं यत् रमणीयं मनोज्ञं सरोरुहं पद्मं तदेव आस्यं मुखं यस्यास्तादृशी । वयस्यापि सहास्यवदना भूत्वा केलिसमये बाहुना आलिङ्गति । अस्मिन् वृते तव सिप्रानद्यां जलविहारो भविष्यतीति भावः ॥ ८७ ॥

अस्या इति । हे मृगाक्षि भैमि सुभगं सौभाग्ययुक्तं यत् यौवतं युवतिवृन्दं तस्य मौलिमाला शिरोमालारूपा या भवानी पार्व्वती अस्य राज्ञ उज्जयिनीम् उज्जयिनीनाम्नीं पुरं नगरीम् अधिशय्य अधिष्ठाय जागर्त्ति स्फुरद्रूपा वर्त्तते । त्वं तस्या भवान्याश्चिरं वरिवस्यया पूजया एतेन पत्या सह अर्द्धकायघटनाय शरीरार्द्धयोगाय शिष्यापि भविष्यसि । भवानी यथा स्वयं शिवशरीरार्द्धभागिनी, तथा चिरवरिवस्यया परितुष्टा सा शिष्यां त्वामपि त्वत्पतिशरीरार्द्धभागिनीं करिष्यति ।

---

सृज्यते ॥ ८५ ॥ अत्र तमालमालायाम् उन्मीलत्तमःप्रकरत्वारोपस्य शौर्ये सूर्यत्वारोपे निमित्तत्वात् परम्परितरूपकम् वृत्त्यनुप्रासश्छेकानुप्रासश्चेति संसृष्टिः ॥ ८६ ॥ आलिङ्गनहास्यशब्दयोरर्थश्लेषतः स्पर्शोपगूहनयोः हसितविकासयोश्च विषयतिरस्कारेणाभेदाध्यवसायाद् अतिशयोक्तिद्वयं, तदनुप्राणितं सिप्रायां वयस्यात्वस्य ऊर्मौ भुजात्वस्य तथा पद्मे आस्यत्वस्य आरोपात् साङ्गरूपकम् छेकानुप्रासो वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ ८७ ॥

निःशङ्कमङ्कुरिततां रतिवल्लभस्य देवः स्वचन्द्रकिरणामृतसेचनेन ।
तत्रावलोक्य सुदृशां हृदयेषु रुद्र-स्तद्देहदाहफलमाह स किं न विद्मः ॥ ८९ ॥
आगः शतं विदधतोऽपि समृद्धकामा नाधीयते परुषमक्षरमस्य वामाः ।
चान्द्री न तत्र हरमौलिशयालुरेका-नध्यायहेतुतिथिकेतुरपैति लेखा ॥ ९० ॥

तस्मादेतद्वरणे तव क्षणमपि वियोगो न भवेदिति भावः । अधिशय्येत्यत्र अधिगम्येति क्वचित् पाठः ॥ ८८ ॥

निःशङ्कमिति । तत्रोज्जयिन्यां स देवो रुद्रः महाकालः स्वचन्द्रस्य निजचूडामणिभूतस्य चन्द्रस्य यत् किरणामृतं तस्य सेचनेन वर्षणेनेव सुदृशां तत्रत्यानां स्त्रीणां हृदयेषु मनःसु रतिवल्लभस्य कामस्य निःशङ्कं निर्भयं यथा स्यात्तथा अङ्कुरिततां प्रादुर्भावम् अवलोक्य तस्य रतिवल्लभस्य यो देह-दाहः शरीरभस्मीकरणं तस्य फलं प्रयोजनं किम् आह कथयति, तत् वयं न विद्मो न जानीमः । तत्रत्यानां स्त्रीणां हृदयेषु कामप्रादुर्भावं दृष्ट्वा मया कामदेहदाहो व्यर्थ एव कृत इति तस्य बुद्धि-र्भवतीत्यर्थः । महाकालभीत्या उज्जयिन्यां कामप्रचारो विरल इत्याशङ्कां परित्यज्य एनं वृणीष्वेति भावः । अवन्तिजा अतिकामुका इति प्रसिद्धिः । आहेत्यत्र आपेति क्वचित्पाठः ॥ ८९ ॥

आग इति । आगःशतम् अपराधशतं विदधतोऽपि कुर्वतोऽपि अस्य राज्ञो वामाः स्त्रियः परुषं निष्ठुरमक्षरं नाधीयते न पठन्ति । किम्भूताः—यतः समृद्धकामा उन्मदमदनाः, समृद्धकामत्वादेव अस्यापराधं न गणयन्तीत्यर्थः । अनध्याये हेतुरुत्प्रेक्ष्यते तत्रोज्जयिन्याम् अनध्यायहेतुतिथिः प्रति-पत् तस्य केतुश्चिह्नं चान्द्री चन्द्रसम्बन्धिनी एका लेखा कला हरमौलौ शयालुः शयाना सती नापैति तस्मान्नापगच्छति, तत्रैव सदा वर्त्तते । एकस्यां चन्द्रकलायां प्रतिपद्व्यवहारात् तस्याश्च तत्र शिवशिरसि सर्वदा दर्शनात् प्रतिदिनं प्रतिपद्बुद्ध्या ताः किं परुषमक्षरं नाधीयत इत्युत्प्रेक्षा । अत्र प्रतिपत् शुक्ला बोध्या, एकचन्द्रकलात्मकत्वात् 'प्रतिपत्पाठशीलस्य' इति वचनात् सर्व्वानध्याया-पेक्षया प्रतिपदोमुख्यत्वात् सर्व्वास्वपि तिथिषु शुक्लप्रतिपद्बुद्ध्या अक्षरमपि न पठन्तीति युक्तमिति भावः । आगःशतकारित्वमेवास्य परित्यागे दोषः सूचितः ॥ ९० ॥

---

अत्र सुभगयौवतमौलिमाला इति रूपकम्, मृगाक्षीति समासगता लुप्तोपमा, अनयोः संसृष्टिः ॥ ८८ ॥ अत्र रुद्रकर्तृकरतिवल्लभदेहदाहव्यर्थत्वाभिधानात् पुनः तत्प्रादुर्भावरूपानर्थो-त्पत्तिकथनाच्च विषमालङ्कारभेदः, किरणामृतमिति रूपकम्, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ८९ ॥ अत्र सत्यपि अपराधशतरूपे कारणे परुषाक्षराध्ययनरूपतत्कार्याभावाद् विशेषोक्तिः, अपराधगणनाभावं प्रति च समृद्धकामत्वस्य हेतुत्वादेकं काव्यलिङ्गम्, तथा निष्ठुराक्षराध्ययनाभावं प्रति उत्तरार्द्धवाक्यार्थस्य हेतुत्वादपरं काव्यलिङ्गम्, सर्वासु तिथिषु प्रतिपद्बुद्ध्या किं नाधीयते इति प्रतीयमाना उत्प्रेक्षा, सर्वासु तिथिषु प्रतिपद्भ्रान्तेः भ्रान्ति-मदलङ्कारश्चेत्येतेषां सङ्करः, अन्त्यानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ९० ॥

भूपं व्यलोकत न दूरतरानुरक्तं सा कुण्डिनावनिपुरन्दरनन्दना तम्।
अन्यानुरागविरसेन विलोकनाद्वा जानामि सम्यगविलोकनमेव रम्यम् ॥ ९१ ॥
भैमीङ्गितानि शिबिकामधरे वहन्तः साक्षान्न यद्यपि कथञ्चन जानते स्म ।
ऊहुस्तथापि सविधस्थितसंमुखीन-भूपालभूषणमणिप्रतिबिम्बितेन ॥ ९२ ॥
भैमीमवापयत यान्यजनस्तदन्यं गङ्गामिव क्षितितलं रघुवंशदीपः ।
गाङ्गेयपीतकुचकुम्भयुगाञ्च हार-चूडासमागमवशेन विभूषिताञ्च ॥ ९३ ॥
तां मत्स्यलाञ्छनदराञ्चितचापभासा नीराजितभ्रुवमभाषत भाषितेशा ।
व्रीडाजडे किमपि सूचय चेतसा चेत् क्रीडारसं वहसि गौडविडौजसीह ॥ ९४ ॥

भूपमिति । सा कुण्डिनावनिपुरन्दरस्य भीमस्य नन्दना पुत्री भैमी दूरतरानुरक्तम् अत्यनुरागिणमपि तं भूपम् अवन्तिदेशाधिपं न व्यलोकत न ददर्श । नलानुरक्तत्वात्तस्मिन्नानुरक्ता बभूवेत्यर्थः । एतत् समीचीनमेव तया कृतमित्याह, अन्यानुरागेण अन्यस्मिन्ननुरक्ततया विरसेन अश्रद्धया विलोकनाद्दर्शनापेक्षया सर्वथा अविलोकनमेव अदर्शनमेव वा रम्यं श्रेष्ठं सम्यक् समीचीनं जानामि । यत्रानुरागो नास्ति, तद्विलोकनेनापि प्रयोजनं नास्तीत्यर्थः ॥ ९१ ॥

भैमीति । अधरे अधोभागे शिबिकां वहन्तो जना भैम्या इङ्गितानि अननुरागचिह्नानि कथञ्चन केनापि प्रकारेण साक्षात् प्रत्यक्षेण यद्यपि न जानते स्म न ज्ञातवन्तस्तथापि सविधस्थिताः स्वसमीपस्थिताः संमुखीनाः सम्मुखवर्त्तिनो ये भूपाला राजानस्तेषां भूषणमणिषु अलङ्काररत्नेषु प्रतिबिम्बितेन प्रतिबिम्बनेन हेतुना तानि ऊहुस्तर्कितवन्तः । अननुरागचिह्नानि प्रतिबिम्बवशाज्जानते स्मेत्यर्थः । प्रतिबिम्बितेनेत्यत्र प्रतिबिम्बितानीति क्वचित् पाठस्तदा हेतुगर्भविशेषणम् । ऊहुरित्यत्र च जज्ञुरिति क्वचित् पाठः ॥ ९२ ॥

भैमीमिति । यान्यजनो वाहकगणो भैमीं तस्मादवन्तीश्वरादन्यम् राजानम् अवापयत प्रापयामास । उपमिनोति, रघुवंशदीपो भगीरथो गङ्गां क्षितितलमिव । यथा भगीरथः स्वर्गाद्गङ्गां क्षितितलम् अवापयत, तथेत्यर्थः । किम्भूतां भैमीं गङ्गाञ्च गाङ्गेयवत्पीतं हरिद्राभं कुचकुम्भयुगं यस्यास्तादृशीं, पक्षे गाङ्गेयेन भीष्मेण पीतं पानकर्मीकृतं कुचकुम्भयुगं यस्यास्तादृशीम् । तथा हारो मुक्तावली चूडा शिरोभूषणं बाहुभूषणं वा तयोः समागमवशेन विन्यासविशेषेण विभूषितामलङ्कृतां । पक्षे हरस्येयं हारी या चूडा शिरोभागस्तस्यां समागमवशेन विभूषितां शोभमानाम् । चद्वयं शोभाधिक्यसूचकम् । 'गाङ्गेयः स्यात् पुमान् भीष्मे क्लीबं स्वर्णकशेरुणोः' मे । 'चूडा शिखायां वडभौ चूडा बाहुविभूषणे' वि ॥ ९३ ॥

तामिति । भाषितानां वाचाम् ईशा अधिष्ठात्री सरस्वती मत्स्यलाञ्छनेन कामेन दरमीषत्

---

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ९१ ॥ अत्र वाहकानाम् पुरःस्थितभूपालभूषणमणिषु प्रतिबिम्बदर्शनेन ततसमानधर्मवत्त्वात् बिम्बभूतभैमीमुखगतेङ्गितानुमानादनुमानालङ्कारः ॥९२॥ अत्र श्लेषाणुप्राणिता पूर्णोपमालङ्कारः ॥९३॥

एतद्यशोभिरमलानि कुलानि भासां तथ्यं तुषारकिरणस्य तृणीकृतानि।
स्थाने ततो वसति तत्र सुधाम्बुसिन्धौ रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥९५॥
आलिङ्गितः कमलवत्करकस्त्वयायं श्यामः सुमेरुशिखयेव नवः पयोदः।
कन्दर्पमूर्द्धरुहमण्डनचम्पकस्र-ग्दामत्वदङ्गरुचिकञ्चुकितश्चकास्तु ॥९६॥
एतेन सम्मुखमिलत्करिकुम्भमुक्ताः कौक्षेयकाभिहतिभिर्विबभुर्विमुक्ताः।
एतद्भुजोष्मभृशनिःसहया विकीर्णाः प्रस्वेदबिन्दव इवारिनरेन्द्रलक्ष्मया ॥९७॥

अञ्चितस्य आकृष्टस्य चापस्य धनुषो भासा दीप्त्या नीराजिते निर्मञ्छिते कामोद्दीपिके भ्रुवौ यस्यास्तादृशीं तां भैमीम् अभाषत उवाच। किमभाषतेत्याह, हे व्रीडाजडे लज्जया प्रागल्भ्यशून्ये भैमि त्वम् इह गौड़विड़ोजसि गौड़ेन्द्रे चेत् यदि चेतसा क्रीड़ारसम् उपभोगाभिलाषं वहसि धारयसि, तर्हि किमपि कथमपि कटाक्षादिना सूचय मां ज्ञापय। यदि लज्जावशात् कथयितुं न शक्नोषि, तर्हि कयापि भङ्ग्या सूचय, ततोऽहमेतं वर्णयिष्यामीत्यर्थः ॥९४॥

एतदिति। हे भैमि एतस्य गौड़ेन्द्रस्य यशोभिः कीर्त्तिभिस्तुषारकिरणस्य चन्द्रस्य भासां किरणानां अमलानि निर्मलानि कुलानि समूहास्तृणीकृतानीति तथ्यं सत्यम्। ततस्तस्मादेव हेतोः रङ्कुर्हरिणः सुधालक्षणं यत् अम्बु जलं तस्य सिन्धौ समुद्ररूपे तत्र तस्मिंश्चन्द्रे तेषां तृणानामङ्कुरवनी अङ्कुरवृन्दं तस्याः कवलाभिलाषात् ग्रासाभिलाषात् वसति, इदं स्थाने युक्तं, हरिणो हि स्वादुजलतृणाङ्कुरबहुले देशे वसति। अयमतितरां यशस्वीति भावः ॥९५॥

आलिङ्गित इति। हे भैमि त्वया आलिङ्गितोऽयं गौड़ेन्द्रः सुमेरोः शिखया श‍ृङ्गेण आलिङ्गितो नवः पयोदो नवीनो मेघ इव चकास्तु शोभताम्। किम्भूतोऽयं पयोदश्च, कमलं सौभाग्यसूचकं पद्माकारचिह्नं तद्वान् करो हस्तो यस्य कमलवत्पद्मसदृशः करो यस्येति वा तादृशः, पक्षे कमलवत्यः सजलाः करका वर्षोपला यस्य तादृशः, तथा स्वभावाच्छ्यामः, पक्षे सजलत्वाच्छ्यामः तथा कन्दर्पस्य ये मूर्द्धरुहाः केशास्तेषां मण्डनं भूषणभूतं यत् चम्पकस्रग्दाम चम्पकमालासमूहस्तद्वत् या तव अङ्गरुचिः शरीरकान्तिस्तया कञ्चुकितश्छुरितः, पक्षे तादृशस्रग्दामवत् यत्त्वदङ्गं तद्वत् रुचिर्दीप्तिर्यस्यास्तादृशी विद्युत् तया कञ्चुकितः। गौरश्यामयोः सम्बन्धो हि शोभाकरो भवतीत्येनं वृणीष्वेत्यर्थः 'कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे' मे, 'वर्षोपलस्तु करका' अ ॥९६॥

एतेनेति। हे भैमि एतेन राज्ञा कौक्षेयकस्य खड्गस्य अभिहतिभिः प्रहारैर्विमुक्ताः कुम्भस्थले-

---

अत्र मत्स्यलाञ्छितेत्यादि उपमा, वृत्त्यनुप्रासश्चालङ्कारः ॥९४॥ अत्र तथ्यमिति शब्देन भासां तृणीकरणसम्भावनायाः, तथा स्थानेशब्देन वाससम्भावनायाः उक्तत्वात् वाच्यक्रियोत्प्रेक्षाद्वयं, तुच्छीकरणतृणीकरणयोर्भेदेऽपि अर्थश्लेषमहिम्ना तयोरभेदाध्यवसायादतिशयोक्तिः, सुधायां जलत्वारोपश्चन्द्रे सुधाम्बुसिन्धुत्वारोपे निमित्तमिति परम्परितरूपकम्, छेकानुप्रासश्चेत्येतेषां संसृष्टिः ॥९५॥ अत्र कमलवत्करक इति शब्दश्लेषानुप्राणिता सुमेरुशिखयेव नवपयोद इति पूर्णोपमा, चम्पकस्रग्दाम इति रूपकं, तदनुप्राणिताचात्र समासगता लुप्तोपमा ।९६।

आश्चर्य्यमस्य ककुभामवधीनवाप-दाजानुगाद्‌ भुजयुगादुदितः प्रतापः ।
व्यापत्‌ सदाशयविसारितसप्ततन्तु-जन्मा चतुर्दशजगन्ति यशः पटश्च ॥ ९८ ॥
औदास्यसंविदवलम्बितशून्यमुद्रा-मस्मिन्‌ दृशोर्निपतितामवगम्य भैम्याः ।
स्वेनैव यान्यजनतान्यमजीगमत्तां सुज्ञं प्रतीङ्गितविभावनमेव वाचः ॥ ९९ ॥

भ्यो भूमौ पातिताः सम्मुखमिलतां युद्धार्थम्‌ अभिमुखमागच्छतां करिणां कुम्भमुक्ताः कुम्भस्थलस्थितानि मुक्ताफलानि एतस्य राज्ञो भुजोष्मणो बाहुप्रतापस्य भृशमतिशयेन? निःसहया सोढुमशक्तया अरिनरेन्द्राणां वैरिभूपानां लक्ष्मया विकीर्णा विक्षिप्ताः प्रस्वेदविन्दव इव घर्मकणा इव विबभुः शोभन्ते स्म । हस्तियोधित्वादतिशूरोऽयमिति भावः ॥ ९७ ॥

आश्चर्य्यमिति । अस्य राज्ञ आजानुगात्‌ जानुपर्य्यन्तगामिनो भुजयुगात्‌ उदित उत्पन्नः प्रतापः ककुभां दिशाम्‌ अवधीन्‌ प्रान्तान्‌ अवापत्‌ व्याप्तवान्‌, एतदाश्चर्य्यं, कार्य्याणां कारणगुणानुविधायित्वात्‌ जानुमात्रपर्य्यन्तगामिनोऽतिक्षुद्रादपि बाहुयुगादुत्पन्नः प्रतापो यद्दिगन्तपर्य्यन्तं गतवान्‌, तदाश्चर्य्यमित्यर्थः । तथा सदाशयेन विशुद्धचित्तेन विसारिताः कृता ये सप्ततन्तवो यज्ञास्तेभ्यो जन्म यस्य तादृशोऽस्य यशःपटश्च यश एव शुक्लत्वाद्‌ वस्त्रञ्च चतुर्दश जगन्ति भुवनानि व्यापत्‌ व्याप्नोति स्म, इदमपि आश्चर्य्यम्‌, अत्यन्तासम्भाव्यमानत्वात्‌, अथ च सदा सर्वदा शयेन हस्तेन विसारिता विस्तारिता ये सप्तसंख्यकास्तन्तवस्तज्जन्मापि पटो यच्चतुर्दशजगन्ति व्याप्तवान्‌ तदाश्चर्य्यमित्यर्थः । अतिप्रतापी यज्ञादिसत्कृत्यादिनातियशस्वी चायमिति भावः । 'सप्ततन्तुर्मखः क्रतुः' अ ॥ ९८ ॥

औदास्येति । यान्यजनता यानवाहकसमूहः अस्मिन्‌ राजनि औदास्यसंविदा उदासीनत्वबुद्ध्या अवलम्बिता धृता शून्यमुद्रा प्रेमराहित्यचिह्नं यत्र तादृशीं भैम्या दृशोश्चक्षुषोर्निपतितां निपतनं अवगम्य स्तम्भदर्पणादौ ज्ञात्वा स्वेनैव इतोऽन्यं प्रापयेति आज्ञां विना आत्मनैव तां भैमीं अन्यं राजानम्‌ अजीगमत्‌ प्रापयामास । आज्ञां विना कथमन्यत्र नीतेत्यत्रार्थान्तरमुपन्यस्यति, सुज्ञं चतुरं पति इङ्गितविभावनमेव भङ्ग्या चेष्टितप्रकाशनमेव वाचः नियोगवचनानि । चतुरो हि नियोगवचनं विनैव इङ्गितद्वारा सर्वं प्रभुचेष्टितं जानातीत्यर्थः ॥ ९९ ॥

"अत्र अरिनरेन्द्राणां लक्ष्म्या विकीर्णाः प्रस्वेदविन्दव इव विबभुरित्युत्प्रेक्षा" जी । छेकानुप्रासश्चेति संसृष्टिः ॥ ९७ ॥ "अत्र अत्यन्तादूरगामिनः कारणाद्‌ अतिदूरगामियशसः, तन्तुसप्तकात्‌ चतुर्दशभुवनव्यापियशःपटस्योत्पत्त्या विरुद्धकार्योत्पत्तिलक्षणः विषमालङ्कारः । क्रत्वन्तानुष्ठानं दिगन्तविश्रान्तकीर्त्तिसम्पत्तिश्चाजानु वाहुत्वस्य फलमिति भावः ।" जी । यशः पटः इति रूपकम्‌, सदाशयेत्यादिश्लेषमहिम्नोत्थापिता एतेऽलङ्कारा इति एषामङ्गाङ्गिभावरूपः सङ्करः ॥९८॥ अत्र सामान्येन सुज्ञं प्रति इङ्गितविभावनस्य आज्ञात्वकथनेन विशेषस्य भैमीङ्गितस्य आज्ञात्वस्य समर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ ९९ ॥

एतां कुमारनिपुणां पुनरप्यभाणी-द्वाणी सरोजमुखि निर्भरमारभस्व।
अस्मिन्नसंकुचितपङ्कजसख्यशिक्षा-निष्णातदृष्टिपरिरम्भविजृम्भणानि ॥ १०० ॥
प्रत्यर्थिपार्थिवपयोनिधिमाथमन्थ-पृथ्वीधरः पृथुरयं मथुराधिनाथः।
अश्मश्रुजातमनुयाति न शर्वरीशः श्यामाङ्ककर्बुरवपुर्वदनाब्जमस्य ॥ १०१ ॥
बालेऽधराधरितनैकविधप्रबाले पाणौ जगद्विजयकार्मणमस्य पश्य।
ज्याघातजेन रिपुराजकधूमकेतु-तारायमाणमुपरज्य मणिं किणेन ॥ १०२ ॥

एतामिति। वाणी सरस्वती कुमारी चासौ निपुणा चेति तां कोः पृथिव्या मारे पृथिवीकन्दर्प-रूपे नले निपुणाम् आसक्तां वा एतां भैमीं पुनरपि अभाणीत् उक्तवती। किमभाणीदित्याह, हे सरोजमुखि भैमि अस्मिन् राजनि असङ्कुचितस्य विकसितस्य पङ्कजस्य पद्मस्य सख्यशिक्षायाम् सादृश्याभ्यासे निष्णाता निपुणा या दृष्टिर्विकसितकमलतुल्यचक्षुरित्यर्थः तया परिरम्भविजृम्भणानि आलिङ्गनविलासान् निर्भरमतिशयेन आरभस्व कुरु एनं सादरमालोकयेत्यर्थः ॥ १०० ॥

प्रत्यर्थीति। हे भैमि अयं पृथुः पृथुनामा मथुरायाः अधिनाथः स्वामी किम्भूतः,— प्रत्यर्थिनः शत्रवो ये पार्थिवा राजानस्त एव पयोनिधयः समुद्रास्तेषां माथे मथने मन्थपृथ्वीधरः मन्थाचलो मन्दरस्तद्रूपः अतिशूर इत्यर्थः। सौन्दर्य्यमपि व्यनक्ति, शर्वरीशश्चन्द्रः अश्मश्रुजातम् अनुत्पन्नश्मश्रु केशरहितम् अस्य राज्ञो वदनाब्जं मुखपद्मं मुखचन्द्रं वा न अनुयाति नानुकरोति। किम्भूतः, यतः श्यामेन अङ्केन कलङ्केन कर्बुरं विचित्रं वपुर्यस्य तादृशः। सकलङ्कश्चन्द्रः श्मश्रुरहिततन्मुख-तुल्यो न भवतीत्यर्थः। अश्मश्रुजातमिति वयःसन्धौ वर्त्तमानस्तव वरणयोग्य इति भावः। न जातं श्मश्रु यस्मिन्निति 'आहितादिर्वाग्न्यादेः' इति जातस्य परभावः अश्मश्रुजातम् अनुत्पन्न-श्मश्रुसमूहमिति केचित् ॥ १०१ ॥

बाले इति। अधरेण दन्तच्छदेन अधरितौ निर्जितौ नेकविधौ द्विविधौ प्रबालौ विद्रुमनवपल्लवौ यया हे तथाविधे बाले भैमि अस्य मथुराधिनाथस्य पाणौ वर्त्तमानं जगद्विजयस्य कार्म्मणं महौषधं मणिं पश्य। किम्भूतं मणिं, ज्याघातजेन अनवरतधनुर्गुणाकर्षणजनितेन किणेन कल-ङ्कितचिह्नेन उपरज्य श्यामीभूय रिपुराजकस्य शत्रुनृपवृन्दस्य धूमकेतुतारायमाणं धूमकेतुनक्षत्रमि-वाचरन्तम्। यथा धूमकेतुनक्षत्रमुदितं सत् प्रजाक्षयसूचकं भवति, तथास्य हस्तस्थितमणिः शत्रूणां क्षयसूचको भवतीत्यर्थः। अतिशूरोऽयमिति भावः ॥ १०२ ॥

---

अत्र सरोजमुखीति, असंकुचितेत्यादि च समासगता लुप्तोपमा, छेकानुप्रासश्चेति संसृष्टिः ॥ १०० ॥ अत्र प्रत्यर्थिपार्थिवेषु पयोनिधित्वारोपः पृथावस्मिन् मन्थाचलत्वारोपे कारण-मिति परम्परितरूपकम्, वदनाब्जमिति निरङ्गं रूपकम्, अननुकरणं प्रति अश्मश्रुजात-पदार्थस्य, तथा श्यामाङ्केत्यादिपदार्थस्य च हेतुत्वात् काव्यलिङ्गम्, चन्द्रादुपमानादुपमेयस्य मुखस्य उत्कर्षकथनाद् व्यतिरेकः, छेकानुप्रासवृत्त्यनुप्रासौ चेत्येतेषां संसृष्टिः ॥ १०१ ॥ अत्र अधराधरितेत्यादि समासगतोपमा, 'धूमकेतुतारायमानम्' इति क्यङ् प्रत्ययगतोपमालङ्कारः,

एतद्भुजारणिसमुद्भवविक्रमाग्नि-चिह्नं धनुर्गुणकिणः खलु धूमलेखा ।
जातं ययारिपरिषन्मशकार्थयाश्रु-विश्राणनाय रिपुदारदृगम्बुजेभ्यः ॥ १०३ ॥
श्यामीकृतां मृगमदैरिव माथुरीणां धौतैः कलिन्दतनयामधिमध्यदेशम् ।
तत्राप्तकालियमहाह्रदनाभिशोभां रोमावलिमिव विलोकयितासि भूमेः ॥ १०४ ॥
गोवर्द्धनाचलकलापिचयप्रचार-निर्वासिताहिनि घने सुरभिप्रसूने ।
तस्मिन्ननेन सह निर्विश निर्विशङ्कं वृन्दावने वनविहारकुतूहलानि ॥ १०५ ॥

एतदिति । खलूत्प्रेक्षे धनुर्गुणकिणो धनुर्ज्यास्फालनजातकिण एव एतस्य राज्ञो भुजारणिर्बाहुरूपोऽग्निमन्थनदारु तस्मात् समुद्भव उत्पत्तिर्यस्य तादृशो यो विक्रमरूपोऽग्निस्तस्य चिह्नं ज्ञापिका धूमलेखा धूमराजिः नैष किणः किन्तु पराक्रमाग्निधूमलेखैवेत्युत्प्रेक्षा । धूमलेखात्वमेव द्रढयति अरिपरिषत् शत्रुसमूह एव मशकास्तेषामर्थो निवृत्तिर्यया तादृश्या यया धूमलेखया रिपुदारदृगम्बुजेभ्यः शत्रुपत्नीनयनपद्मेभ्योऽश्रुविश्राणनाय पतिवधात् वाष्पवितरणाय जातं भूतम् । अन्याऽपि धूमलेखा मशकान्निवर्तयति, नयनानि च साश्रूणि करोति पूर्वोक्त एव भावः । जातमिति भावे क्तः अत्रार्थशब्दो निवृत्तिवचनः । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' अ ॥ १०३ ॥

श्यामीकृतामिति । हे भैमि त्वं तत्र मथुरायां कलिन्दतनयां यमुनां भूमेः पृथिव्या रोमावलिमिव रोमराजिमिव विलोकयितासि द्रक्ष्यसि । किम्भूतां, माथुरीणां मथुरावासिनीनां स्त्रीणां धौतैः क्षालितैः मृगमदैरिव कस्तूरिकाभिरिव श्यामीकृताम्, नतु स्वतः श्यामामित्युत्प्रेक्षा । तथा अधिमध्यदेशं मध्यदेशे आप्ता लब्धा कालियस्य कालियनागस्य महाह्रदेन कृत्वा नाभिशोभा यया तादृशीम् । रोमावल्यपि स्वतः श्यामापि मृगमदैरतिश्यामा, तथा नाभ्या प्राप्तशोभा च भवति । अनेन सह यमुनायां जलविहारं कुर्विति भावः ॥ १०४ ॥

गोवर्द्धनेति । हे भैमि त्वं तस्मिन् प्रसिद्धे वृन्दं सुरतासक्तानां स्त्रीपुंसानां समूहं अवति वननैविड्यादृोपयतीति यौगिकनामनि वृन्दावने मथुराया उपवनविशेषे अनेन राज्ञा सह निर्विशङ्कं सर्पादिभयशून्यं यथा तथा वनविहारकुतूहलानि वनक्रीडाकौतुकानि निर्विश उपभुङ्क्ष्व । किम्भूते, गोवर्द्धनाचलस्य गोवर्द्धनपर्वतस्य ये कलापिचया मयूरसमूहास्तेषां प्रचारेण सञ्चरणेन निर्वासिता निष्कासिता अहयः सर्पा यस्मात्तादृशे, अतएव निर्विशङ्कं निर्विश। तथा घने निविडच्छाये, निविडत्वात् इतरजनकर्तृकदर्शनाशङ्कारहिते वा, तथा सुरभीणि सुगन्धीनि प्रसूनानि पुष्पाणि यत्र तादृशे

---

कङ्कणमणौ जगद्विजयकार्मणत्वारोपाद् रूपकम् छेकानुप्रासश्चेति संसृष्टिः ॥ १०२ ॥ अत्र धनुर्गुणकिणः धूमलेखा खलु इति खलुशब्दवाच्या उत्प्रेक्षा, विक्रमे अग्नित्वारोपः भुजयोररणित्वारोपे निमित्तमिति परम्परितरूपकम्, तथा अरिपरिषदि मशकत्वारोपाच्च निरङ्गं रूपकं, दृगम्बुजेभ्य इति उपमा, एतेषामङ्गाङ्गिभावरूपः सङ्करः ॥ १०३ ॥ अत्र मृगमदैरिवेति रोमावलीमिवेति च उत्प्रेक्षालङ्कारद्वयम्, महाह्रदनाभीति रूपकम्, वृत्त्यनुप्रासश्चेति संसृष्टिः ॥ १०४ ॥

भावी करः करुहाङ्कुरकोरकोऽपि तद्वल्लिपल्लवचये तव सौख्यलक्ष्यः।
अन्तस्त्वदास्यहृतसारतुषारभानु-शोभानुकारिकरिदन्तजकङ्कणाङ्कः ॥ १०६ ॥
तज्जः श्रमाम्बु सुरतान्तमुदा नितान्त-मुत्कण्टके स्तनयुगे तव सञ्चरिष्णुः।
खञ्जन् प्रभञ्जनजनः पथिकः पिपासुः पाता कुरङ्गमदपङ्किलमप्यशङ्कम् ॥ १०७॥
पूजाविधौ मखभुजामुपयोगिनो ये विद्रुत्कराः कमलकोमलकान्तिभाजः।
लक्ष्मीमनेन दधतेऽनुदिनवितीर्णै-स्ते हाटकैः स्फुटवराटकगौरगर्भाः ॥ १०८ ॥

कालियनागावासत्वात् सर्पबहुले तव कथं विहरिष्यामीति शङ्कां परित्यज्य एनं वृणीष्वेति भावः ॥ १०५ ॥

भावीति। हे भैमि तस्य वृन्दावनस्य वल्लिपल्लवचये लतापल्लवसमूहमध्ये तव करः करुहाङ्कुरा नखाग्राण्येव कोरकाः कलिका यत्र तादृशोऽपि रक्तत्वात् कोरकाकारनखयुक्तत्वाच्च किमयं कोरकयुक्तः पल्लवः किंवा भैमीकर इति संशयविषयत्वयोग्योऽपीत्यर्थः सौख्येन अनायासेन लक्ष्यो निश्चेयो भावी भविष्यति। किम्भूतः यतः अन्तर्मध्ये त्वदास्याय तव मुखनिर्म्माणार्थं विधात्रा हृतः सारो मध्यवर्त्तिश्रेष्ठभागो यस्य तादृशो यस्तुषारभानुश्चन्द्रस्तस्य शोभामनुकरोति सदृशीकरोतीत्येवंभूतं यत् करिदन्तजं कङ्कणं हस्तिदन्तनिर्मितं करभूषणं तदेव अङ्कोऽसाधारणचिह्नं यस्य तादृशः, सर्वथा पल्लवसदृशोऽपि तव करः कङ्कणरूपेणासाधारणचिह्नेन भैमीकर एवायमित्यनायासेन जनैर्ज्ञास्यत इत्यर्थः। वृन्दावने नवपल्लवांश्छित्त्वा अनेन सह विहरिष्यसीति भावः॥ १०६ ॥

तज्ज इति। हे भैमि तज्जो वृन्दावने जातः प्रभञ्जनजनो वायुलक्षणो जनः कुरङ्गमदेन मृगमदेन पङ्किलमपि कलुषमपि तव श्रमाम्बु सुरतायासजनितघर्मोदकम् अशङ्कं निर्विचारं पाता पास्यति। किम्भूतः, सुरतस्य अन्ते अवसाने या मुद्धर्षस्तया नितान्तमत्यर्थम् उत्कण्टके रोमाञ्चिते तव स्तनयुगे सञ्चरिष्णुर्भ्रमणशीलः, तथा खञ्जन् वृक्षनैविड्यात् मन्दीभवन्, तथा पथिकः सर्वदा मार्गे स्थितः, तथा पिपासुस्तृषितः। अन्योऽपि पान्थः कण्टकितदेशे सञ्चरित्वा कण्टकवेधादिना खञ्जो भूत्वा पिपासुः सन् पङ्किलमपि जलं निर्विचारं पिबति। अनेन सह विहारे कृतप्रयासां भवतीं वृन्दावनवायुः सुखयिष्यतीति भावः। यद्यपि स्तनयुगे उत्कण्टकत्ववर्णनं कामशास्त्रविरुद्धं, तथापि द्वितीयार्थानुकूलतया तन्नात्यन्तदूषणमावहतीति बोध्यम् ॥ १०७ ॥

पूजेति। हे भैमि कमलेन दानार्थजलेन कोमलां निर्मलां कान्तिं भजन्त इति तादृशाः अथ च

---

"अत्र साभिप्रायविशेषणत्वात् परिकरालङ्कारः" जी। तथा निर्विशङ्कत्वं प्रति 'घने' 'गोवर्द्धने'त्यादिविशेषणार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारश्चेति संसृष्टिः ॥ १०५ ॥ अत्र पल्लवावचयकाले तत्सादृश्यात् संदिग्धस्य भैमीकरस्य दन्तवलयेन निश्चयात् निश्चयान्तः सन्देहालङ्कारः, करुहेत्यादौ, कङ्कणाङ्क इत्यत्र च रूपकद्वयम्, तुषारभानुशोभानुकारीति समासगतोपमा चेत्येतेषां संसृष्टिः ॥ १०६ ॥ अत्र उत्कण्टकशब्दश्लेषात् सञ्जातरोमाञ्चे उद्गतसूक्ष्माग्रवृक्षावयवत्वारोपः, स्तनयुगे देशत्वारोपः आर्थः, मृदुगमने श्लेषात् विकलगमनारोपः,

वैरिश्रियं प्रति नियुद्धमनाप्नुवन् यः किञ्चिन्न तृप्यति धरावलयैकवीरः ।
स त्वामवाप्य निपतन्मदनेषुवृन्द-स्यन्दीनि तृप्यतु मधूनि पिबन्निवायम् ॥ १०९
तस्मादियं क्षितिपतिक्रमगम्यमान-मध्वानमैक्षत नृपादवतारिताक्षी ।
तद्भावबोधबुधतां निजचेष्टयैव व्याचक्षते स्म शिबिकानयने नियुक्ताः ॥ ११० ॥

पद्मसदृशा ये विदुषां पण्डितानां करा हस्ता मखभुजां देवानां पूजाविधौ उपयोगिनस्तत्पराः,विद्वांसो यैर्निरन्तरं देवान् पूजयन्तीत्यर्थः, ते करा अनेन राज्ञा अनुदिनं प्रतिदिनं वितीर्णैर्दत्तैर्हाटकैः सुवर्णैः कृत्वा लक्ष्मीम् अङ्गुरीयकादिभूषणसम्पत्तिं शोभां वा दधते धारयन्ति । किम्भूताः, स्फुट-वराटकवत् सुव्यक्तपद्मबीजकोषवत् गौरो गर्भो मध्यं येषां ते पद्मान्यपि देवपूजायामुपयोगं गच्छन्ति स्फुटेन बीजकोषेण गौरगर्भा भवन्ति, लक्ष्मीञ्च धारयन्ति । अतिवदान्योऽयमिति भावः ॥ १०८ ॥

वैरीति । हे भैमि धरावलये भूमण्डले एकवीरोऽद्वितीयशूरो यो राजा वैरिणां शत्रूणां श्रियं प्रति लक्ष्यीकृत्य नियुद्धं बाहुयुद्धं नितरां युद्धं वा नाप्नुवन् न प्राप्नुवन् किञ्चित् न तृप्यति, किमपि न तुष्यति, युद्धमकृत्वैव वैरिभिर्दत्तां श्रियं लब्ध्वा युद्धलालसत्वात् न किञ्चिदपि तुष्यतीत्यर्थः । स राजा त्वाम् अवाप्य प्राप्य निपतन्तो ये मदनेषवः कामबाणास्तेषां वृन्दं समूहस्तस्मात् स्यन्दन्ति पुष्पमयत्वात् क्षरन्तीत्येवंभूतानि मधूनि पुष्परसान् पिबन्निव तृप्यतु, स्वतुल्यमदनयुद्ध-लाभात् तुष्यतु । अन्योऽपि कथञ्चित् पूर्वमतुष्टो मधुपानेन तुष्यति । अतिसुरतक्षममेनं वृणीष्वेति भावः ॥ १०९ ॥

तस्मादिति । तस्मान्नृपात् मथुराधिपात् अवतारिते आकृष्टे अक्षिणी चक्षुषी यया तादृशी सती इयं भैमी क्षितिपतिषु राजसु क्रमेण गम्यमानम् अध्वानं पन्थानम् ऐक्षत दृष्टवती। अनन्तरञ्च शिबिकानयने नियुक्ताः शिबिकावाहका निजचेष्टयैव अन्यप्रापणरूपस्वव्यापारेणैव तस्या भैम्या भावस्य अभिप्रायस्य नैनं वरिष्यामीत्येवंरूपस्य बोधे ज्ञाने बुधतां पण्डिततां व्याचक्षते स्म प्रकाशयामासुः, तामन्यं प्रापयामासुरिति भावः । अन्योऽपि भावबोधेन निजपाण्डित्यं प्रकाशयति ॥ ११० ॥

---

प्रभञ्जने पथिकत्वस्य जनत्वस्य च आरोपः, कुङ्कुममदे पङ्कत्वारोपः, श्रमाम्बुनाशे जलपानारोपः, अतोऽत्र एकदेशविवर्त्ति साङ्गरूपकं, छेकानुप्रासेन संसृज्यते ॥ १०७ ॥ 'स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम्' अ । 'गौरोऽरुणे सिते पीते' वि । 'बीजकोषो वराटकः कर्णिका कर्णिकञ्च' वै । कमलकोमलेत्यत्र पद्मवत्कोमलेति उपमाध्वनिः स्फुटवराटकेत्यादौ समासगता लुप्तोपमा, च्छेकानुप्रासश्च ॥ १०८ ॥ अत्र 'पिबन्निव' इति वाच्या क्रियोत्प्रेक्षा, "अत्र मदनेषुमधुपानोत्प्रेक्षया तेषामेवेषूणां त्वत्समागमाद् रागानन्दकारित्वप्रतीतेरलङ्कारेण वस्तुध्वनिः" जी ॥ १०९ ॥ वृत्त्यनुप्रासच्छेकानुप्रासालङ्कारौ ॥ ११० ॥

भूयोऽपि भूपमपरं प्रति भारती तां त्रस्यच्चमूरुचलचक्षुषमाचचक्षे।
एतस्य काशिनृपतेस्त्वमवेक्ष्य लक्ष्मी-मक्ष्णोर्मुदं जनय खञ्जनमञ्जुनेत्रे ॥ १११ ॥
एतस्य सावनिभुजः कुलराजधानी काशी भवोत्तरणधर्मतरिः स्मरारेः।
यामागता दुरितपूरितचेतसोऽपि पापं निरस्य चिरजं विरजीभवन्ति ॥ ११२ ॥
आलोक्य भाविविधिकर्तृकलोकसृष्टि-कष्टानि रोदिति पुरा कृपयैव रुद्रः।
नामेच्छयेति मिषमात्रमधत्त यत्तां संसारतारणतरीमसृजत् पुरीं सः ॥ ११३ ॥

भूयोऽपीति। भारती सरस्वती अपरं भूपं राजानं प्रति लक्षीकृत्य त्रस्यन् बिभ्यत् यश्चमूरुर्मृगस्तद्वच्चलं चञ्चलं चक्षुर्यस्यास्तादृशीं तां भैमीं भूयोऽपि पुनरपि आचचक्षे उवाच। किं तदित्याह हे खञ्जनवन्मञ्जु मनोहरं नेत्रं यस्यास्तथाविधे भैमि त्वं एतस्य काशिनृपतेः काशिराजस्य लक्ष्मीं सौन्दर्य्यम् अवेक्ष्य दृष्ट्वा अक्ष्णोर्निजचक्षुषोर्मुदं हर्षं जनय कुरु। अतिसुन्दरोऽयं दृष्ट्वा व्रियतामिति भावः। ह्रस्वेकारान्तोऽपि काशिशब्दोऽस्ति ॥ १११ ॥

एतस्येति। हे भैमि स्मरारेः शिवस्य नाविकरूपस्य भवोत्तरणे संसारसमुद्रपारगमने धर्मतरिर्मूल्यानपेक्षणात् धर्मनौकारूपा सा काशी एतस्य अवनिभुजो राज्ञः कुलराजधानी वंशपरम्परावसतिस्थानम्। भवोत्तारणयोग्यत्वमेवास्या आह, यां काशीम् आगताः प्राप्ता जना दुरितपूरितचेतसोऽपि अतिपापात्मानोऽपि चिरजं चिरकालीनं पापं निरस्य परित्यज्य विरजीभवन्ति विगतरजोगुणाः सत्त्वनिष्ठा भवन्ति, मोक्षं प्राप्नुवन्तीत्यर्थः। अस्मिन् वृते मोक्षप्रदायां काश्यां तव वासो भविष्यतीति भावः ११२ ॥

आलोक्येति। रुद्रः भावीनि भविष्यन्ति विधिकर्तृकाया लोकसृष्टेः कष्टानि दुःखानि आलोक्य विचार्य कृपयैव दययैव पुरा पूर्वस्मिन् काले रोदिति अरोदीत्। लोकानां भाविदुःखं विचार्य्य दययैव रोदनात् तस्य रुद्र इति नाम जातमित्यर्थः। तर्हि नामेच्छया रोदनाद्रुद्र इति पुराणप्रसिद्धस्य का गतिरित्यत आह, नामेच्छयेति, किमिति, जातमात्रो रोदिषीति ब्रह्मणा पृष्टः सन् नामप्रार्थनया रोदिमीति यदुवाच इति एतत् मिषमात्रं व्याजमात्रम् अधत्त धृतवान्। वस्तुतो लोकानां भाविदुःखं विचार्य्य दययैव अरोदीत् नतु नामप्रार्थनयेत्यर्थः। कथमेतदनुमितमित्याह, यद्यस्मात्स

काशधातोरौणादिकेनेन्प्रत्ययेन सिद्धात् ह्रस्वेकारान्तकाशिशब्दात् कृदिकारात् ङीष्पक्षे दीर्घेकारान्तोऽपि काशीशब्दः सिध्यति। तथाच केशवः,- 'पुरीश्रेष्ठा तीर्थराजी जित्वरी च तपःस्थली। काशी वाराणसी काशि वरणासी वराणसी' इति। 'काशिः काशिधातुः सूर्यः वाराणसी च' संक्षिप्तसारवृत्तौ। अत्र त्रस्यच्चमूरुचलचक्षुषमिति खञ्जनमञ्जुनेत्रे इति च समासगता लुप्तोपमा, वृत्त्यनुप्रासच्छेकानुप्रासौ च ॥ १११ ॥ अत्र काश्यां धर्मतरित्वारोपः शाब्दः, तन्निमित्तश्च भवे अर्णवत्वारोपः स्मरारौ नाविकत्वारोप आर्थः ततश्च एकदेशविवर्त्तिपरम्परितरूपकमलङ्कारः छेकानुप्रासेन संसृज्यते ॥ ११२ ॥

वाराणसी निविशते न वसुन्धरायां तत्र स्थितिर्मखभुजां भुवने निवासः ।
तत्तीर्थमुक्तवपुषामतएव मुक्तिः स्वर्गात्परं पदमुदेतु मुदे तु कीदृक् ॥ ११४ ॥
सायुज्यमृच्छति भवस्य भवाब्धियाद-स्तां पत्युरेत्य नगरीं नगराजपुत्र्याः ।
भूताभिधानपटुमद्यतनीमवाप्य भीमोद्भवे भवतिभावमिवास्तिधातुः ॥ ११५ ॥
निविश्य निर्विरति काशिनिवासि भोगा-न्निर्माय नर्म च मिथो मिथुनं यथेच्छम्
गौरीगिरीशघटनाधिकमेकभावं शर्म्मोर्म्मिकञ्चुकितमञ्चतिपञ्चतायाम् ॥ ११६ ॥

रुद्रस्तां पुरीं काशीं संसारतारणतरीं भवसमुद्रतारणनौकां मुक्तिप्रदायिनीम् असृजत् निर्म्मितवान् । कार्य्येणैवेदमनुमितमिति भावः, रोदितीति 'स्मायुक्तपुरायोगे भूतानद्यतने वा लङ्चे'ति लट्॥११३॥

वाराणसीति । वाराणसी काशी वसुन्धरायां पृथिव्यां न निविशते न विद्यते । तत्र वाराणस्यां लोकानां या स्थितिः, सा मखभुजां देवानां भुवने स्वर्गे निवासः, काशीवासः स्वर्गवास एवेत्यर्थः । अतएव काश्याः स्वर्गरूपत्वादेव तस्या वाराणस्यास्तीर्थे मणिकर्णिकादौ वाराणसीरूपे तीर्थे वा मुक्तवपुषां परित्यक्तकलेवराणां मृतानां मुक्तिर्मोक्षः अन्यथा स्वर्गात् परमधिकं पदं कीदृक् मुक्तिभिन्नं मुदे आनन्दाय तु पुनरुदेतु उत्पद्यताम्, अपितु मुक्तिभिन्नमन्यत्परं पदं नास्तीति मोक्ष एव तत्र मृतानां परम्पदमित्यर्थः । भूम्यां तीर्थादौ मृतस्य यथा भूम्या अधिकं स्वर्गरूपपदं भवेत्तथा स्वर्गरूपायां तस्यां मृतस्य तु स्वर्गादधिकं सुतरां मुक्तिलक्षणं पदं भवितुं युज्यते इति वाचनिकमपि काश्या मुक्तिदातृत्वं युक्त्यापि दृढीकृतम् ॥ ११४ ॥

सायुज्यमिति । हे भीमोद्भवे भैमि भवः संसार एव अब्धिः समुद्रस्तस्य यादो जन्तुस्तां नगरीं काशीम् एत्य प्राप्य नगराजपुत्र्याः पार्वत्याः पत्युर्भवस्य शिवस्य सायुज्यम् ऐक्यं ऋच्छति प्राप्नोति । किम्भूतां नगरीं, भूतस्य सत्यस्य तारकब्रह्मणोऽभिधाने उपदेशे पटुं समर्थाम् । उपमिनोति अस्तिधातुरिव, यथा अस्तिधातुः असभुवीत्यस्धातुरद्यतनीं लुङ्प्रत्ययम् अवाप्य प्राप्य भवतिभावं 'भ्वादिर्यक्विचास्त्यादेः' इत्यनेन भूधातुत्वम् ऋच्छति । किम्भूताम् अद्यतनीं, भूतकालस्य अभिधाने पटुम् अतीतकालार्थाम् । कालापानां लुङ्प्रत्ययस्य अद्यतनीति संज्ञा ॥ ११५ ॥

निविश्येति । काश्यां साधु निवसतीत्येवंभूतं मिथुनं स्त्रीपुंसयुग्मं निर्विरति वैराग्यरहितं

---

अत्र काश्यां तरीत्वारोपः शाब्दः संसारे समुद्रत्वारोप आर्थ इत्येकदेशविवर्त्तिरूपकं,तदुत्थापिता च नामेच्छयेति मिषमालमयत्त इति नामेच्छां निषिध्य नूनं कृपयैवारोदीदिति सम्भावनाप्रतीतेरपह्नुत्यनुप्राणिता प्रतीयमानोत्प्रेक्षा, छेकानुप्रासवृत्त्यनुप्रासौ चेति संसृष्टिः ॥ ११३ ॥ अत्र प्रथम पादार्थस्य द्वितीयपादार्थं प्रति हेतुत्वात् तथा तृतीयपादार्थं प्रति चतुर्थपादार्थस्य हेतुत्वात् काव्यलिङ्गद्वयं, छेकानुप्रासश्च ॥ ११४ ॥ अत्र भवे अब्धित्वारोपस्य शाब्दत्वेन संसारिजने तन्निमित्तकयादस्त्वारोपस्य चार्थत्वादेकदेशविवर्त्तिपरम्परितरूपकमलङ्कारः । अस्तिधातुरिवेति श्रौती उपमा, छेकानुप्रासश्चेति संसृष्टिः । तथा च जलजन्तुवत् हिंस्रोऽपि लोकः सायुज्यमुक्तिं प्राप्नोतीति वस्तु व्यज्यते इति रूपकालङ्कारेण वस्तुध्वनिः ॥ ११५ ॥

न श्रद्दधासि यदि तन्मम मौनमस्तु कथ्या निजाप्ततमयैव तवानुभूत्या।
न स्यात्कनीयसितरा यदि नाम काश्या राजन्वती मुदिरमण्डनधन्वना भूः ॥११७॥
ज्ञानाधिकासि सुकृतान्यधिकाशि कुर्य्याः कार्य्यं किमन्यकथनैरपि यत्र मृत्योः
एकं जनाय सततमभयदानमन्य-द्धन्ये वहत्यमृतसत्रमवारितार्थि ॥ ११८ ॥

यथा तथा भोगान् स्रक्चन्दनादिविषयान् निर्विश्य उपभुज्य, तथा यथेच्छं यथाभिलाषं मिथो रहसि नर्म्मं च विहारञ्च निर्म्माय कृत्वा पञ्चतायां देहान्तसमये एकभावम् ऐक्यम् अञ्चति प्राप्नोति। किम्भूतम् एकभावं,गौरीगिरीशयोः पार्वतीपरमेश्वरयोर्घटना मेलनं ततोऽप्यधिकम् उत्कृष्टं, तयोर्देहद्वयं पृथगपि दृश्यते अस्य तु न तथा भवतीत्याधिक्यम्, तथा शर्म्मोर्मिभिः सुखपरम्पराभिः कञ्चुकितं व्याप्तं मोक्षस्य आनन्दमयत्वात्। पञ्चतायामित्यत्र निष्प्रपञ्चमिति क्वचित् पाठः, निष्प्रपञ्चं प्रपञ्चात् संसारात् वहिर्भूतम्। एतस्मिन् वृते तत्र भोगमोक्षौ द्वावपि भविष्यत इति भावः ॥ ११६ ॥

नेति। हे भैमि यदि त्वं न श्रद्दधासि, काश्याः स्वर्गादप्याधिक्यवर्णनरूपे मम वचने प्रत्ययं न करोषि. तर्त्ति मम मौनम् अभाषणम् अस्तु भवतु, इतः परं नाहं काशीविषयं किमपि कथयिष्यामीत्यर्थः। तर्हि तव मौनित्वे काशीमहिमानं का कथयिष्यतीत्यत आह, मुदिरस्य मेघस्य मण्डनम् अलङ्कारकं धनुर्यस्य स तथा तेन इन्द्रेण राजन्वती सौराज्यवती भूरमरावती यदि नाम काश्याः सकाशात् कनीयसितरा हीनतरा न स्यात् न भवेत्, तर्हि निजया आत्मीयया आप्ततमया अतितरां हितया तवैव अनुभूत्या अनुभवेन त्वं कथ्या कथनीया। काशी स्वर्गादधिकेत्यस्मिन् विषये तवैव अनुभवः प्रमाणमित्यर्थः। एतद्वरणम् इन्द्रवरणापेक्षयापि समीचीनमिति भावः। 'सुराज्ञि देशे राजन्वान्' 'घनजीमूतमुदिरजलमुग्धूमयोनयः' अ ॥ ११७ ॥

ज्ञानेति। हे धन्ये सौभाग्यवति भैमि त्वं ज्ञानेन अधिकासि उत्कृष्टासि अतिपण्डितासि, अतएव त्वम् अधिकाशि काश्यां सुकृतानि पुण्यानि कुर्य्याः कुरु अन्येषां काशीगुणानां कथनैः किम् कार्य्यम् अपितु न किमपि प्रयोजनमस्ति यत्र काश्यां मृत्योः सकाशात् जनाय सततं सर्वदा अभयदानम् इतः परं युष्माकं भवभयं न भविष्यतीति अभयं ददत् एकम् अमृतसत्रं मोक्षलक्षणं सत्रं यज्ञो वहति वर्त्तते। किम्भूतम्, अन्यत् अवारिता अधिकारिनियमाभावात् अनिषिद्धा अर्थिनो याचका यत्र तादृशम्। 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'इत्यादिवचनात् स्वर्गादावपि मरणभयं विद्यते,काश्यान्तु मरणोत्तरमुक्तिप्राप्तिनिश्चयात् 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इत्यादिवचनान्मृत्योरुपेक्षितत्वाद् भयाभावः। अमृतसत्रं जलसत्रं गङ्गारूपं वहतीति वा ॥ ११८ ॥

अत्र च्छेकानुप्रासवृत्त्यनुप्रासालङ्कारौ ॥ ११६ ॥ अत्र वृत्त्यनुप्रासालङ्कारः ॥ ११७ ॥ 'सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च' अ। अत्र शिवकर्तृकतारकनामोपदेशादौ कस्मिन् अपि अनिर्वचनीये वस्तुनि अमृतसत्रत्वमारोप्य तस्य च जीवमरणाभयदातृत्वाद्यनेकधोल्लेखात् रूपकोत्थापितोल्लेखालङ्कारः ॥ ११८ ॥

भूभर्त्तुरस्य रतिरेधि मृगाक्षि मूर्त्ता सोऽयं तवास्तु कुसुमायुध एव मूर्त्तः।
भातञ्च ताविव युवां गिरिशं विराद्ध-माराद्धुमाशु पुरि तत्र कृतावतारौ ॥ ११९ ॥
कामानुशासनशते सुतरामधीती सोऽयं रहोनखपदैर्महतु स्तनौ ते।
रुष्टाद्रिजाचरणकुङ्कुमपङ्कराग-संकीर्णशङ्करशशाङ्ककलाङ्ककारैः ॥ १२० ॥
पृथ्वीश एष नुदतु त्वदनङ्गताप-मालिङ्ग्य कीर्तिचयचामरचारुचापः।
संग्रामसङ्गतविरोधिशिरोधिदण्ड-खण्डक्षुरप्रशरसंप्रसरत्प्रतापः ॥ १२१ ॥

भूभर्तुरिति। हे मृगाक्षि भैमि त्वम् अस्य भूभर्त्तुराज्ञो मूर्त्ता साक्षाद्रतिः कामपत्नी एधि भव, अथच मूर्त्ता शरीरिणी रतिः प्रीतिरेधि। तथा सोऽयं राजा तव मूर्तः शरीरी कुसुमायुध एव कामदेव एव अस्तु भवतु, त्वय्यस्य रतिबुद्धिर्भवतु, अस्मिंश्च तव कामबुद्धिर्भवत्वित्यर्थः। अथच मूर्तः कुसुमायुधः कामोद्दीपकानुरागोऽस्तु तथा विराद्धं कोपितं गिरिशं शिवम् आराद्धुं सेवितुं सेवया तदीयं कोपमपाकर्तुम् आशु शीघ्रं तत्र पुरि काश्यां कृतावतारौ अवतीर्णौ तौ रतिकामदेवाविव युवां भातञ्च शोभेथाम्। यथा त्वं सुन्दरी,तथायमपि सुन्दर इति भावः ॥ ११९ ॥

कामेति। हे भैमि कामानुशासनानां कामशास्त्राणां वात्स्यायनादिप्रणीतानां शते समूहे सुतरामतितराम् अधीती कृताध्ययनः सोऽयं राजा रहो नखपदैर्विहारे दत्तैर्नखक्षतैः कृत्वा ते तव स्तनौ कुचौ महतु पूजयतु। किम्भूतैः रुष्टायाः प्रणयकुपिताया अद्रिजायाः पार्वत्याश्चरणयोः स्थितो यः कुङ्कमपङ्करागः कुङ्कुमविलेपलौहित्यं तेन सङ्कीर्णा व्याप्ता या चरणपतितस्य शङ्करस्य शशाङ्ककला चन्द्रकला तस्या अङ्ककारैः प्रतिमल्लैस्तत्सदृशैरित्यर्थः। सुरतपण्डितोऽयं त्वया सह नानाविधैर्बन्धैर्विहरिष्यतीति भावः। कामानुशासनशत इति अव्यवहितेना क्तेन कर्मण' इति अधीतीत्यस्य योगे कर्मणि सप्तमी। अङ्ककारैरिति अङ्कं युद्धं कुर्वन्तीति 'कर्मणो णडि'ति णट्। 'अङ्कोरूपकभेदागचिह्नरेखाजिभूषणे' मे ॥ १२० ॥

पृथ्वीश इति। हे भैमि एष पृथ्वीशो राजा आलिङ्ग्य त्वदनङ्गतापं तव कामज्वरं नुदतु अपनयतु। किम्भूतः, कीर्तिचय एव जनकतया धनुषि वर्तमानो यशःसमूह एव चामरं तेन चारु सुन्दरं चापं धनुर्यस्य तादृशः। अतिधनुर्द्धरस्य हि चापे चामरं तिष्ठति। तथा संग्रामे युद्धे सङ्गता मिलिता ये विरोधिनो वैरिणस्तेषां शिरोधिदण्डाः कन्धरादण्डास्तान् खण्डयितुं छेत्तुं शीलं येषां तादृशा ये क्षुरप्राः शराः क्षुरप्राख्या वाणास्तैः सम्यक् प्रसरन् अधिकं वर्द्धमानः प्रतापो यस्य तादृशः, अतिवीरोऽयमित्यर्थः। स्त्रियश्च प्रायेण वीरानुरागिण्यो भवन्ति। तस्मादेतदालिङ्गनेनैव

---

अत्र भैम्यां अप्रसिद्धायाः मूर्त्तरत्यास्तथा काशीराजे च अप्रसिद्धस्य मूर्त्तकुसुमायुधस्य सिद्धतयाभेदाध्यवसायादतिशयोक्तिद्वयम्, अधिकारूढवैशिष्ट्यरूपकं वा, ताविव इत्युत्प्रेक्षा, मृगाक्षीति समासगतोपमा चेति संसृष्टिः ॥ ११९ ॥ अत्र शशाङ्ककलङ्ककारैरिति उपमालङ्कारश्छेकानुप्रासश्चेति संसृष्टिः ॥ १२० ॥

वक्षस्त्वदुग्रविरहादपि नास्य दीर्णं वज्रायते पतनकुण्ठितशत्रुशस्त्रम्।
तत्कन्दकन्दलतया भुजयोर्न तेजो-वह्निर्नमत्यरिवधूनयनाम्बुनापि ॥ १२२ ॥
किं न द्रुमा जगति जाग्रति लक्षसंख्या-स्तुल्योपनीतपिककाकफलोपभोगाः।
स्तुत्यस्तु कल्पविटपी फलसंप्रदानं कुर्वन् स एष विबुधानमृतैकवृत्तीन् ॥ १२३ ॥

तवानङ्गतापः शाम्यतीति भावः। अथच विवृद्धप्रतापालिङ्गनेन तापशान्तिराश्चर्यकारिणीति विरोधाभासः ॥ १२१ ॥

वक्ष इति। हे भैमि अस्य राज्ञो वक्षः वज्रायते वज्रं कुलिशमिवाचरति। किम्भूतं यतस्तव उग्रो दुःसहो यो विरहो वियोगस्तस्मादपि न दीर्णं न स्फुटितम्। तथा पतनेन कुण्ठितानि भग्नानि शत्रूणां शस्त्राणि यत्र तादृशम्। कुलिशमपि दुःसहवह्नितापादितोऽपि दीर्णं न भवति, पतनकुण्ठितशत्रुशस्त्रञ्च भवति। अथच वज्रायते हीरकायते, हीरकोऽपि वह्नितापादिना न स्फुटति, शस्त्राणि च कुण्ठयति। तदुक्तम्, —'पृथिव्यां यानि रत्नानि ये चान्ये लोहजातयः, तानि वज्रेण लिख्यन्ते वज्रं नान्येन लिख्यते' इति। कर्कशमस्य वक्षःस्थलमिति भावः। तथास्य भुजयोस्तत्कन्दकन्दलतया तदेव वज्रभूतवक्ष एव कन्दोमूलं तस्य कन्दलौ नवाङ्कुरौ तयोर्भावस्तत्ता तया, तेजोवह्निर्जनितः प्रतापानलः अरिवधूनां शत्रुपत्नीनां नयनाम्बुनापि अस्रजलेनापि न नमति न शाम्यति वज्रमूलविद्युद्वह्निरपि जलेन न शाम्यति। अतिवीरोऽयमिति भावः। 'कन्दलन्तु कपाले स्यादुपरागे नवाङ्कुरे' इति ॥ १२२ ॥

किं नेति। तुल्यं समानं यथा तथा उपनीतो दत्तः पिकेभ्यः कोकिलेभ्यः काकेभ्यश्च फलैरुपभोगो यैस्तादृशा लक्षसंख्या बहवो द्रुमा वृक्षा आम्रादयो जगति भुवने किं न जाग्रति न विद्यन्ते, अपितु जाग्रत्येव। तु किन्तु अमृतैकवृत्तीन् सुधैकजीविनो विबुधान् देवान् फलानां संप्रदानं दानपात्रं कुर्वन् स एष कल्पविटपी कल्पवृक्षः स्तुत्यः स्तोतुमर्हः। आम्रादयो वृक्षा हि पात्रापात्रमविविच्य यस्मै कस्मैचिदपि सामान्येन फलं ददतीति न ते स्तुत्याः, कल्पवृक्षस्तु सुधाभोजिदेवेभ्य एव स्वफलं ददातीति स एव स्तुत्य इत्यर्थः। अथच समासोक्त्या पृथिव्यां बहवो दातारो राजानः सन्ति, किन्तु तेषां पात्रापात्रविवेचना नास्तीति न ते स्तुत्याः। एष काशीराजस्तु अमृतैकवृत्तीन् यज्ञैकवृत्तीन् अयाचितमात्रवृत्तीन् वा मोक्षकवृत्तीन् वा विबुधान् पण्डितान् दानपात्रं करोतीति एष एव

अत्र विवृद्धप्रतापालिङ्गनेन तापशान्ते र्विरोधस्य प्रतापपदस्य प्रभावपरतया समाधानात् विरोधाभासः, कीर्तिचयचामर इति निरङ्गं रूपकम्, छेकानुप्रासश्चेति संसृष्टिः ॥ १२१ ॥
अत्र 'वज्रायते' इति क्यङ्गतोपमा, वज्रवदाचरणं प्रति त्वदुग्रविरहादपि न दीर्णम् इति, पतनकुण्ठितशत्रुशस्त्रम् इति विशेषणद्वयार्थस्य हेतुत्वात् काव्यलिङ्गम्, तेजोवह्निः इति रूपकम्, 'अम्बुनापि वह्नि र्न नमति' इति विरोधस्य, वह्ने र्दिव्यतेजस्त्वोत्प्रेक्षणेन परिहारात् विरोधाभासश्चेति संसृष्टिः, "भुजतेजसोऽनम्बुहार्यत्वेन वज्रायितवक्षःकार्यताद्वारा दिव्यतेजस्त्वोत्प्रेक्षणादुत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या" जी ॥ १२२ ॥

अस्मै करं प्रवितरन्तु नृपा न कस्मा-दस्यैव तत्र यदभूत् प्रतिभूः कृपाणः।
दैवाद्यदा प्रवितरन्ति न ते तदैव नेदंकृपा निजकृपाणकरग्रहाय ॥ १२४ ॥
एतद्बलैः क्षणिकतामपि भूखुराग्र-स्पर्शायुषां रयवशादसमापयद्भिः।
दृक्पेयकेवलनभःक्रमणप्रवाहै-र्वाहैरलुप्यत सहस्रदृगर्वगर्वः ॥ १२५ ॥
तद्वर्णनासमय एव समेतलोक-शोभावलोकनपरा तमसौ निरासे।
मानी तया गुणविदा यदनादृतोऽसौ तद्भूभृतां सदसि दुर्यशसेव मम्लौ ॥१२६॥

कल्पवृक्षसदृशत्वात् स्तुत्यस्तस्मादयमेव त्वया वरणीय इति भावः। 'अमृतं यज्ञशेषे तु सुधामोक्षाप् स्वयाचिते' हे ॥ १२३ ॥

अस्मा इति। नृपाः सर्वे राजानः अस्मै काशीराजाय करं राजग्राह्यभागं कस्माद्धेतोर्न प्रवितरन्तु न ददतु, अपितु ददत्वेव। यद्यस्मात् अस्य राज्ञः कृपाण एव खड्ग एव तत्र करदाने प्रतिभूर्लग्नकोऽभूत्। अस्य कृपाणाद् भीताः सन्तः सर्व एव राजानोऽस्मै करं ददतीत्यर्थः। यदा ते नृपा दैवात् कस्माचित् प्रतिबन्धकाद्धेतोः करं न प्रवितरन्ति न ददति, तदैव तस्मिन् समय एव नतु विलम्बेन निजस्य कृपाणस्य करेण ग्रहाय धारणाय इदङ्कृपा अस्य राज्ञः कृपा दया न भवति, क्रुद्धः सन् स्वखड्गबलेनाभिहत्य बलेन करं गृह्णातीत्यर्थः। अथच निजादात्मीयादपि कृपाणात् तल्लक्षणात् प्रतिभुवः करस्य राजभिर्देयस्य बलेर्ग्रहाय अस्य कृपा न भवति। उत्तमर्णो हि अधमर्णेन दातुमशक्यम् ऋणं प्रतिभुवो बलात् गृह्णात्येव। अतितेजस्वी चक्रवर्ती चायमिति तव वरणयोग्य इति भावः। इदङ्कृपेति षष्ठीसमासः ॥ १२४ ॥

एतद्बलैरिति। एतस्य राज्ञो बलैः सैन्यरूपैर्वाहैरश्वैः सहस्रदृश इन्द्रस्य योऽर्वा घोटकः उच्चैःश्रवास्तस्य गर्वः अहमेव केवलमाकाशे गच्छामीत्यहङ्कारोऽलुप्यत विनाशितः। किम्भूतैः—भुवः पृथिव्याः खुराग्रेण ये स्पर्शास्तद्रूपाणि यानि आयूंषि स्थितयस्तेषां क्षणिकतामपि क्षणमात्रं भूम्यामवस्थितिमपि रयवशाद्वेगवशात् असमापयद्भिरसम्पूर्णां कुर्वद्भिः, क्षणमात्रमपि खुराग्रेण भूमीमस्पृशद्भिरित्यर्थः। तथा दृग्भिर्जनानां चक्षुर्भिः पेयाः सादरमवलोकनीयाः केवलं नभःक्रमणप्रवाहा आकाशगमनपरम्परा येषां तादृशैः, अतिवेगवत्तरैरित्यर्थः। एतेनेन्द्रतुल्योऽयमिति भावः ॥ १२५ ॥

तद्वर्णनेति। असौ दमयन्ती तस्य काशीराजस्य वर्णनासमय एव समेताः समागता ये लोका नूतना राजानस्तेषां शोभाया अवलोकनपरा दर्शनासक्ता सती तं काशीराजं निरासे निराचकार अन्यावलोकनेनैव तया तस्य निराकरणं कृतमित्यर्थः। मानी अभिमानवान् असौ काशीराजश्च यद्यस्मात् गुणविदा गुणज्ञया तया दमयन्त्या अनादृतोऽवज्ञातस्तत्तस्मात् भूभृतां राज्ञां सदसि

---

अत्र प्रस्तुतात् एतस्मात् नृपतेरप्रस्तुतानां विबुधानां राजान्तराणाञ्च प्रतीतेः समासोक्तिः टीकायां प्रपञ्चिता ॥१२३॥ अत्र कृपाणे प्रतिभूत्वारोपात् रूपकं, छेकानुप्रासश्च ॥ १२४ ॥ अत्र वाहानां केवलाकाशगमनपरम्परासम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्तिः ॥ १२५ ॥

सानन्तानाप्य तेजःसखनिखिलमरुत्पार्थिवान् दिष्टभाज-
श्चित्तेनाशाजुषस्तान् सममसमगुणान् मुञ्चती गूढभावा।
पारेवाग्वर्त्तिरूपं पुरुषमनु चिदम्भोधिमेकं शुभाङ्गी
निःसीमानन्दमासीदुपनिषदुपमा तत्परीभूय भूयः॥ १२७॥

सभायां स दुर्यशसेव अर्काचिर्षेव मग्नो म्लानो बभूव। अनादरकर्त्री भैमी तावद् गुणज्ञा, नतु मूर्खा, सोऽपि मानी, नतु मानापमानसमानो मूर्खः, अनादरश्च राजसभायां, नतु मूर्खसभायां, सुतरां तस्य म्लानिरुचिता। निरासे इति 'वोपसर्गाद्दूहास्यत्योरि'त्यात्मनेपदम्॥ १२६॥

अथ च्छन्दोऽन्तरेण सर्गशेषं सूचयति। सेति। शुभाङ्गी सुन्दरसुखाद्यवयवा सा भैमी एकं पुरुषं नलम् अनु लक्षीकृत्य भूयोऽतिशयेन तत्परीभूय तद्गतचित्ता भूत्वा उपनिषदो ब्रह्माद्वैतप्रतिपादकश्रुतेरुपमा सादृश्यं यस्यास्तादृशी आसीत्। भूयः पुनरपि वा। पूर्वं हंसादिभ्यः श्रुत्वा तत्परा जातैव, अधुना सर्वानपि राज्ञो नलादपकृष्टान् मत्वा पुनरपि तत्परा बभूवेत्यर्थः। किम्भूतं पुरुषं पारेवाग्वर्त्तिरूपं वाचां पारे वर्त्तनशीलं रूपं यस्य तादृशं, वचनागोचरसौन्दर्यवन्तमित्यर्थः। तथा चिदम्भोधिं ज्ञानसमुद्रम् अतिज्ञानिनमित्यर्थः, तथा निःसीमानन्दं भैमीलाभनिश्चयात् अपरिमितहर्षम्। सा किम्भूता। तान् पूर्वोक्तान् तेजःसखान् तेजस्विनो निखिलान् समस्तान् मरुतो देवान् पार्थिवान् राज्ञश्च आप्य प्राप्य तेषां समीपं गत्वा मुञ्चती, किमपि दूषणमुद्भाव्य परित्यजन्ती। यतो गूढभावा गूढाभिप्राया, नलविषयमनुरागं गोपयन्ती। तान् किम्भूतान्, अनन्तान् संख्यातुमशक्यान्, तथा दिष्टभाजो भाग्यवतः, यद्वा दिष्टं स्वयंवरकालं भजन्ते इति तादृशान् स्वयंवरकाले समागतान्, नतु विलम्बेनागतान्। तथा चित्तेन मनसा समं युगपत् आशाजुषः भैमीप्राप्त्यभिलाषिणः, तथा असमगुणान् निरुपमसौन्दर्यादिगुणान् परस्परमतुल्यगुणान् वा। उपनिषदपि सानन्तान् अनन्तैर्नित्यैः सामान्यविशेषसमवायैः सह वर्त्तमानान्, दिष्टभाजः कालसहितान् चित्तेन समं मनःसहितान् आशाजुषो दिक्सहितान्, तान् प्रसिद्धान् आप एव आप्यं जलं तच्च तेजश्च खेनाकाशेन सह वर्त्तमानो निखिलः समस्तो मरुद्वायुश्च पार्थिवाः पृथिवीसम्बन्धिनश्च ते तथा तान्, तथा असमं पञ्चसंख्यायोगित्वाद्विषमसंख्यं कर्म उत्क्षेपणादिकं तच्च गुणाश्च रूपादयस्ते तथा तांश्च मुञ्चती अद्वैतप्रतिपादनेन निराकुर्वती। तथा गूढभावा अतिगहनत्वाद्दुर्ज्ञेयाभिप्राया, तथा शुभानि अङ्गानि शिक्षाकल्पादीनि यस्यास्तादृशी, सा वाक्पथातीतस्वरूपं चिदम्भोधिं चिन्मयं निःसीमानन्दं परमानन्दस्वरूपम् एकम् अद्वितीयं पुरुषं परमात्मानं लक्षीकृत्य तत्परा तत्तात्पर्या भवति स्रग्धरा वृत्तमिदम्॥ १२७॥

---

अत्र विशेषणानां साभिप्रायत्वात् परिकरालङ्कारः दुर्यशसेव इति हेतूत्प्रेक्षा चेति संसृष्टिः॥ १२६॥ अत्र श्लेषोत्थापिता पूर्णोपमालङ्कारः॥ १२७॥

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा-
काव्येऽस्मिन् निषधेश्वरस्य चरिते सर्गो निसर्गोज्ज्वलः ॥ १२८ ॥

श्रीहर्षमिति । शृङ्गारः शृङ्गाराख्यो रस एव अमृतं सुधा तस्य शीतगौ चन्द्ररूपे अयम् एकादशः सर्गोऽगात् समाप्तः । अन्यत् सर्वं पूर्ववत् ॥ १२८ ॥

इति श्रीप्रेमचन्द्रतर्कवागीशविरचितायामन्वयबोधिकासमाख्यायाम् नैषधटीकायामेकादशः सर्गः समाप्तः ॥

राढे गाढप्रतिष्ठः प्रथितपृथुयशाः शाकराढानिवासी
विप्रः श्रीरामनारायण इतिविदितः सत्यवाक् संयतात्मा ।
तत्सूनुः सूनृतेनाखिलजनदयितः श्रीयुतः प्रेमचन्द्र-
श्चक्रे चक्रिप्रसादान्नलचरितमहाकाव्यपूर्वार्द्धटीकाम् ॥

समाप्तश्चायं पूर्वभागः ।

शुभमस्तु ॥

# पूर्वार्धे नैषधीयचरित श्लोकानां अकारादिक्रमेणानुक्रमणिका

## अनुक्रमणिका।



## अत्र पुस्तके व्यवहृतकोषादिग्रन्थानां सांकेतिकचिह्नानि

अ — अमरकोषः ।

जी जीवातुः ।

त्रि शे — त्रिकाण्डशेषः ।

ना — नारायणकृतटीका ।

भ — भरतमल्लिककृतटीका ।

मे मेदिनी कोषः ।

वि विश्वकोषः ।

वंशी वंशीवदनकृतटीका ।

सा साहित्यविद्याधरी ।

सा द = साहित्यदर्पणः ।

हे हेमचन्द्रः ।